essentially required, whereas for the *bhoga* of *Rasa*, expression is essential. Bhoja stands in this debate with Bhaṭṭanāyaka. This is the philosophical aspect of Bhoja's *ŚP*.

Bhoja has made grand preparation for establishing the above philosophical aspect of the rasa-theory. He takes into account the teachings of the *ācāryas* belonging to each *śāstra* in all the chapters on धर्मशृङ्गार to मोक्षशृङ्गार.

Lastly, one may say that in the field of poetics, *ŚP* possesses the height of Everest and the depth of pacific ocean.

Dr. Sheldon Pollock of Oxford says about Bhoja -

'if we are to grasp dominant tradition of literay theory and specially to understand how *kāvya* was held to differ from other language - uses and other kinds of texts, we need to look elsewhere. An irreplaceable guide here is the *Śṛṅgāraprakāśa* (illumination of passion) of King Bhoja who ruled over a fabled court in what is today Western Madhya Pradesh from 1011 to 1055 AD. In the illumination, Bhoja sought to summarize the whole of earlier thought at a time before the speculations of the later Kashmiris were widely diffused accross the subcontinent and, equally important, before the cosmopolitan literary order started to give way to the new literary vernacularity.

We get a good sense of Bhoja's understanding of *kāvya* from two passages, one where he sets out the organisation of the illumination as a whole and other where he provides a typology of genus 'things made of language' of which *kāvya* is only one species. In the first, he tells us about elements that make up *kāvya* or verse, meanings and the ways in which verse and meanings can be 'composed' (This is the three part framework that will structure his entire exposition)'.[1]

The above statement of the writer is welcome. Bhoja's *ŚP* is presented here under two heads : one Grammar and the other Philosophy. The theory of *Śṛṅgāra* falls into the category of philosophy useful for aesthetic experience.

***Kārikās***

There is a large number of *Kārikās* (1108) but it is very difficult to demarcate Bhoja's own *Kārikās*. They are, therefore, marked with a running number from beginning to the end.

1. Dr. Sheldon Pollock, *Sanskrit Literary Culture*, page 45.

**Chapter no. 26**

The chapter no. 26 is declared missing by all the investigators. Following their information here the portion of this chapter is left blank. If any manuscript of this chapter would be available that would be added there. Upto that period my own composition of this chapter (appendix - Part II) would do.

However, one may number the chapters 13-15 by the numbers 13-16 by which the 25th chapter will be 26th and the problem will be solved. There is a bright chance with the text on page 879. A footnote has already been given on the page.

So far as the subject matter of the missing portion is concerned that would also be arranged somehow from the existing text of other chapters.

I have tried to fill up some of the gaps. I hope they would be enjoyed by discerning readers of Sanskrit composition.

**Commentary needed**

Dr. Raghavan tried to write a commentary as mentioned above. I think this work should also be completed as the application of the theories is very much needed to judge the examples given. There would be raised some controversies also in this practice as in between the poeticians - Appayya Dīkṣita and Paṇḍitarāja. I hope sooner or later this desideratum would be fulfilled.

It is but a preliminary step towards the deeper study of Bhoja's stand in the field of India's literary culture or aesthetics. I am sure that scholars would like it and would come forward to promote Bhoja's studies and fill up the lacunas and gaps in this encyclopaedic work.

We are grateful to Prof. V.M. Kulkarni (90 yrs.), Mumbai for writing foreward, Prof. K.T. Pandurangi (90 yrs.), Bangalore and Dr. R.R. Mukherji (88 yrs.), Kolakata for giving their blessings.

We are grateful to Prof. Siniruddh Dash, HOD Sanskrit, Madras Universtiy, Dr. R.C. Gaur and Dr. Ranjana Ray of *Kalā-nidhi*, IGNCA, New Delhi, Prof. Kutumba Shastri, Vice-Chancellor, Rashtriya Sanskrit Sansthan, New Delhi, Dr. K.P. Prasanna, Principal, Govt. Sanskrit College, Tripunithura, Dr. P. Vishalakshy, Director-in-Charge, Oriental Research Institute Mss.

Library, Tiruvananthapuram, Prof. Balakrishna Sharma, Director, Sindhia Prāchya Vidyā Pratiṣhṭhāna, Ujjain and Dr. Vakanakar, Curator, Oriental Institute, Vadodara for their generous cooperation extended in providing Mss. of ŚP.

Over and above all, Ex. MP (Rājyasabhā) and Ex. Cabinet Minister of Industry, **Shri Kamal Morarka**, Mumbai has been pleased to bear the entire expenditure on the printing of this work. Kālidāsa Sansthāna is grateful towards him and his trust.

My sons Dr. Sarvajña (U.S.A.), Dr. Sadāśiva (B.H.U.), Varanasi and the Printer Śri Anup Nagar, are blessed with hearty admirations for their help in preparing of printing of this kind of large work successfully.

26 January, 2007

**Rewaprasad Dwivedi**
Prof. Emeritus (Sanskrit) &
Retd. Prof. of Sanskrit Sāhitya,
Sanskrit Vidya Dharma Vigyan Sankaya,
Banaras Hindu University
Varanasi - 5

Res. : Kālidāsa Sansthāna,
28, Mahamanapuri,
P.O. - BHU,
Varanasi 221 005
Tel : 0542-2570682




First folio No. 1

Last folio No. 93

Mss. No. 1079 of Sṛṅgāraprapāśa preserved in Sanskrit Grantha Library of Govt. Sanskrit College, Tripunithura, Cochin, Kerala, May 9, 1916



**The Tripunithura Manuscript Library (1914) Cochin, Kerala wherein the manuscripts of Śṛṅgāraprakāśa are preserved.**




Front page of folio No. 1

The last page of folio No. ൯൦

Mss. No. 1081 of *Sṛṅgāraprapāśa* preserved in Sanskrit Grantha Library of Govt. Sanskrit College, Tripunithura, Cochin, Kerala, May 9, 1916



श्रीरस्तु

शृङ्गारप्रकाशः

प्रथमः प्रकाशः

आनन्दिना निरवलम्बमलब्धदृष्टि
प्रचुम्बनमवीक्षितवक्त्रकान्ति ।
कान्तालिमिशालपुपाः कृतविप्रलम्भा
सम्भोगसख्यमिव पा ... वपुः पुरारेः ॥ १
यत्पादपङ्कजरजः परिमार्जितेषु
चेतस्सु दर्पणतलामलतां गतेषु ।
शब्दार्थसम्पद उदारतराः स्फुरन्ति
निष्प्रत्यूहोऽस्तु भगवान् स गणाधिनाथः ॥ २
आत्मस्थितं गुणविशेषमहंकृतस्य
शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वं
युक्तस्य येन रसिकोऽयमिति प्रवादः ॥ ३
सत्त्वात्मनाममलधर्मविशेषजन्मा
जन्मान्तरानुभवनिर्मितवासनोत्थः ।

**First Page of Mss. No. R 3252, Preserved in**
**Oriental Muscript Library & Research Centre, Chennai**

प्रथमः प्रकाशः

2

सर्वात्मसम्पदुदयातिशयैकहेतु

र्जागर्ति कोऽपि हृदि मानवतो विकारः॥ ४

तात्पर्यमेव वचसि ध्वनिरेव काव्ये

सौभाग्यमेव गुणसम्पदि वल्लभस्य।

लाव· · · · · ·वपुषि स्वदतेऽङ्गनाया

शृङ्गार· ··व हृदि म· · · तो जनस्य॥ ५

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य

बीभत्सवत्सलभयानकशान्तनाम्नः।

आम्नासिषुर्दश रसान् सुधियो वयन्तु

शृङ्गारमेव रसनाद्रसमामनामः॥ ६

वीराद्भुतादिषु च येह रसप्रसिद्धि

स्सिद्धा कुतोऽपि वटयक्षवदाविभाति।

लोके गतानुगतिकत्ववशादुपेता

मेतां निवर्तयितुमेष परिश्रमो नः॥ ७

आप्रातिकूलिततया मनसो मुदादे 3252

र्यस्संविदोऽनुभवहेतुरिहाभिमानः।

ज्ञेयो रसस्सरसनीयतया त्मरक्ते

रत्यादिभूमनि पुनर्वितथा रसोक्तिः॥ ८

रत्यादयोऽर्धशतमेकविवर्जितानि

भावाः पृथग्विधविभावभुवो भवन्ति।

Page 2 of Mss. No. R 3252, Chennai, Vol.-I

व्येकं हि तत्प्राप्यते ॥
तदेतत्काम सर्वस्वं तदेतत्काव्य जीवितम्।
य एषद्विप्रकारोपि रसः श्शृङ्गार संज्ञकः॥
- - - - - - - - - - - - - - तारकाऽविदग्धा यथा
गोष्ठी निश्शृङ्गारा (गाढा शृङ्गारा) ॥ यथांशुमाली पीतांशुर्यथानर्चि
हुताशनः यथा प्रतापो नृपतिरश्शृङ्गारस्तथा पुमान्।
यथेन्दुना निशाभाति निशाभिश्च - - - - - - - - - -
श्शृङ्गारेण तथाङ्गना। यथा तडिदनम्भोदा पयोदस्त
- - - श्शृङ्गाराः श्शृङ्गाराश्चानहंकृतिः। रसश्शृङ्गार
एवैको भावास्त्वादयो मताः।
...कर्षगामिनोपीह प्रेमग्लानि शमादिवत्॥
इति निगदित श्शृङ्गारस्य सर्वस्व मेत
द्विविधमलो - - वर्यं तोऽस्य भेदम्।
तदनु भवसमुत्थानन्द सम्मीलिताक्षः
परिषदि परितोषं हन्त सन्तः प्रयान्तु ॥
यावन्मूर्ध्नि हिमांशुकन्दल - - लितस्रवद्वाहिनी धूर्जटेः
यावद्वक्षसि कौस्तुभस्तबकिते पद्मा मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजय प्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम्॥

Page 917 of R 3252, Vol.-IV, Chennai

913

इति श्रीमहाराजाधिराजश्री
भोजदेवविरचिते शृङ्गार
प्रकाशे संभोगावस्था
प्रकाशो नाम षट्त्रिंशः
[illegible]
[illegible]
हरिः

K. Venkatachala...

Transcribed in 1920-21 from a MS of M.R. Ry Naraya...
nambudiri padu Pallipurandhalur mana, Kana...
village. Thiruppunathura Cochin State.

**Last Page No. 918 of R 3252, Vol.-IV, Chennai with the Statement of Transcription from Tripunithura (Cochin) Mss.**

२३०

कौशिकीवृत्तिहीनानि डिमादीन्येव लक्षयेत् ।
कथादिषु यथायोगं निर्देश्या वृत्तिकल्पना ॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत्[1] ।
अवस्कन्धाद्यपभ्रंशो नाटकादि तु मिश्रकम् ॥
इति संक्षेपतः प्रोक्तं महाकाव्यादिलक्षणम् ।
शेषं यच्चात्र निर्दिष्टं तत्तत्रैवोपलक्षयेत् ॥
तन्महाकाव्यमित्याहुर्महतां च महद्यतः ।
निरुक्तं भगवानर्थमित्थमेवापरे विदुः ॥
चतुर्वर्गफलत्वेऽपि यद्रसार्थोपदेशकम् ।
महाकाव्यं वदेत्काममप्रधानं तु कथ्यते ॥
वाक्यप्रबन्धानुगतोऽयमुक्तो
मया समासेन रसाभियोगः ।
अथेह येऽर्था न विवेचिताः पृथ-
ग्विवक्ष्यते केचिदुदाह्रियन्ते ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते
शृङ्गारप्रकाशे रसाभियोग
प्रकाशो नाम एकादशः
प्रकाशः

१. वै' र'प' क. त्रि' व'नास्तु क' एव पाठः

Last Page of Mss. No. T 454 K.U.M.L. Trivandrum, XI Prakāśa

## शृङ्गारप्रकाश—विषयानुक्रमः
**(Subject-Index)**

१—१४ प्रकाशाः

### { १. काव्याधिकरणम्/काव्यशरीराधिकरणम् }

(१—११ प्रकाशाः)

### { शब्दप्रकरणम् }

## { वाक्यप्रकरणम् }

## ३. तृतीयः प्रकाशः — प्रकृत्यादिशब्दप्रकाशः

*(साहित्यं द्वादशसम्बन्धात्मकम्)*

## {३. काव्यशारीरा/भावा/अध्यात्माधिकरणम्}

0000

## शृङ्गारप्रकाशे नामसंक्षेपा: (Abbreviations)

| संक्षेप: | ग्रन्थनाम | संक्षेप: | ग्रन्थनाम |
|---|---|---|---|
| **शाकु.** | अभिज्ञानशाकुन्तलम् (काग्र.) | **गास.** | गाथासप्तशती[10] |
| **अवृमा.** | अभिधावृत्तमातृका[1] | **गास. वे.** | गाथासप्तशती (बेवर) |
| **अमरु.** | अमरुशतकम्[2] | **गारको.** | गान्धाररत्नकोशः |
| **अष्टा.** | अष्टाध्यायी[3] | **गौव.** | गौडवहो |
| **उराच.** | उत्तररामचरितम्[4] | **चान्द्रव्या.** | चान्द्रव्याकरणम् |
| **उरा.** | उदात्तराघवम् | **छाउ.** | छान्दोग्योपनिषद् |
| **उदारा.** | उदारराघवम् | **जाह.** | जानकीहरणम् |
| **ऋवे.** | ऋग्वेदः | **तक.** | तन्त्रवार्तिकम् |
| **कम.** | कर्पूरमञ्जरी | **ताव.** | तापसवत्सराजम् |
| **काठकसं.** | काठकसंहिता | **तिम.** | तिलकमञ्जरी |
| **काद.** | कादम्बरी | **तैआ.** | तैत्तिरीय आरण्यकम् |
| **कादकसा.** | कादम्बरीकथासारः | **तैब्रा.** | तैत्तिरीय ब्राह्मणम् |
| **काग्र.** | कालिदासग्रन्थावली[5] | **तैसं.** | तैत्तिरीय संहिता |
| **कामन्दकः** | कामन्दकनीतिसारः | **दअ.** | दशरूपकावलोकः |
| **कासू.** | कामसूत्रम् | **देश.** | देवीशतकम् |
| **कामी.** | काव्यमीमांसा[6] | **ध्व.** | ध्वन्यालोकः |
| **काव्याद./का.आ.** | काव्यादर्शः[7] | **नच.** | नलचम्पू |
| **कासूवृ.** | काव्यालङ्कारसूत्रवृत्तिः[8] | **नागा.** | नागानन्दम् |
| **काशिका.** | काशिका[9] | **नाशा.** | नाट्यशास्त्रम् (बसं.)[11] |
| **किराता.** | किरातार्जुनीयम् | **नाशा.** | नाट्यशास्त्रम्[12] |
| **कीव.** | कीचकवधम् | **निरुक्त** | निरुक्तम् |
| **कुट्टनी.** | कुट्टनीमतम् | **नीति.** | नीतिशतकम् |
| **कुमा./कुन्द.** | कुन्दमाला | **न्यायमं.** | न्यायमञ्जरी |
| **कुसं. (काग्र.)** | कुमारसंभवम् | **न्यायवा.** | न्यायवार्तिकम् |
| **कु.** | वामनमहादेवकुलकर्णी | **न्यास.** | न्यासः |
| **गणरत्न.** | गणरत्नमहोदधिः | **पम.** | पदमञ्जरी |
| **गसू.** | गणसूत्रम् | **पा.** | पाणिनिः |

१. सं. रेवाप्रसादद्विवेदी, चौखंभा, वाराणसी। **२.** निर्णयसागरप्रेस । **३.** काशिकानुसार १९५२, चौखम्भा, वाराणसी। ४. निर्णयसागरप्रेस। ५. सं.रेवाप्रसादद्विवेदी, काशीहिन्दूविश्वविद्यालयः, वाराणसी, १९८६। **६.** सं. वनहट्टी, पूना १९८६। ७. दण्डी, रङ्गाचार्यरेड्डिकृतसंस्कृतटीकासहितः, पूना। ८. निर्णयसागरप्रेस। ९. सं.जयशङ्करलालत्रिपाठी, ताराप्रिन्टिंगवर्क्स, वाराणसी, १९८४ ।१०. सं. जगन्नाथपाठक, चौखम्भा, वाराणसी। **११.** ओरियण्टल इन्स्टीट्यूट, बडौदा, १९५४, २००३ **१२.** सं. रेवाप्रसादद्विवेदी, IIAS, शिमला,२००५

| | | | |
|---|---|---|---|
| **पूमी.** | पूर्वमीमांसा | **रामाभ्यु.** | रामाभ्युदयम् |
| **प्रप.** | प्रकरणपञ्चिका | **रामा./वारा.** | रामायणम् |
| **प्रपाभा.** | प्रशस्तपादभाष्यम् | **रुद्रटा.** | रुद्रटालङ्कारः |
| **प्रवा.** | प्रमाणवार्त्तिकम् | **रुद्रटटीका.** | रुद्रटकाव्यालङ्कारे नमिसाधोष्टीका |
| **बृहत्सं.** | बृहत्संहिता | **वल.** | वज्जालग्गम् |
| **बृउ.** | बृहदारण्यकोपनिषद् | **वाप.** | वाक्यपदीयम्[1] |
| **बाभा.** | बालभारतम् | **वार्ति.** | वार्तिकम् |
| **बारा.** | बालरामायणम् | **वामना.** | वामनाचार्यः |
| **ब्र.सू.** | ब्रह्मसूत्रम् | **वायुपु.** | वायुपुराणम् |
| **भट्टि.** | भट्टिकाव्यम् | **विक्रमो.** | विक्रमोर्वशीयम् (काग्र.) |
| **भमु.** | भरतमुनिः | **विसा.** | विद्धसालभञ्जिका |
| **भश.** | भल्लटशतकम् | **रा./राघवः** | वेङ्कटराम राघवन् |
| **भामहा.** | भामहालङ्कारः | **वेसं.** | वेणीसंहारम् |
| **भावि.** | भावनाविवेकः | **वैश.** | वैराग्यशतकम् |
| **मनु.** | मनुस्मृतिः | **लीलाव.** | लीलावई/ती |
| **महाभा.** | महाभारतम् | **शाभा.** | शाबरभाष्यम् |
| **मभा.** | महाभाष्यम् | **माघ.** | शिशुपालवधम् |
| **महावा.** | महावार्त्तिकम् | **शृप्र.** | शृङ्गारप्रकाशः[2] |
| **मवीच./वीच.** | महावीरचरितम्/वीरचरितम् | **शृश.** | शृङ्गारशतकम् |
| **मामा.** | मालतीमाधवम् | **शुय.** | शुक्लयजुर्वेदः |
| **मालविका.** | मालविकाग्निमित्रम् (काग्र.) | **श्लोवा.** | श्लोकवार्त्तिकम्[3] |
| **मीसू.** | मीमांसासूत्रम् | **सक.** | सरस्वतीकण्ठाभरणालङ्कारः[4] |
| **मुरा.** | मुद्राराक्षसम् | **सूश./मश.** | सूर्य/मयूरशतकम् |
| **मृच्छ.** | मृच्छकटिकम् | **सूमु.** | सूक्तिमुक्तावली |
| **मेघ.** | मेघदूतम्/मेघसन्देशम् (काग्र.) | **सेब.** | सेतुबन्धम् |
| **रघु.** | रघुवंशम् (काग्र.) | **स्फोट.** | स्फोटसिद्धिः |
| **रत्ना.** | रत्नावली | **हव.** | हयग्रीववधम् |
| **रत्ने.** | रत्नेश्वरः | **हवि.** | हरिविजयम् |
| **रान.** | राघवानन्दम् | **हच.** | हर्षचरितम् |
| **राज.** | राजशेखरः | **हेप्राव्या.** | हेमचन्द्रप्राकृतव्याकरणम् |
| **राच.** | रामचरितम् | **HOS.** | Harvard Oriental Series-53, 1998 (USA). |

१. सं. सुब्रह्मण्यम् अय्यर, डेकनकालेज, पूना, १९६३; सं. अभ्यंकर, लिमये, BORI पूना, १९६५; सं. रघुनाथशर्मा, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी । २. १–४ भागाः, सं. गोमठं रामानुजजोशेरः,मैसूर, १९५५–७४; सं. वी.राघवन, (Part-I) HOS-53, 1998; सं. रणजीतसिंहसैनी, नागपब्लिशर्स, दिल्ली, २००१ ३.सं रामनाथशास्त्री, मद्रासविश्वविद्यालयः,१९७१ ४. निर्णयसागरः,बम्बई; सं.विश्वनाथभट्टाचार्य,काहिविवि, १९६४

सरस्वतीकण्ठाभरणस्य भोजदेवस्य साहित्यप्रकाशो नाम

# शृङ्गारप्रकाशः

भाग-१

(१–१४ प्रकाशाः)



श्रीमद्भोजनरेन्द्रचन्द्रनगरीविद्याधरी वाग्देवी

[With the courtesy of the Vikram University, Ujjain]

।। श्रीः।।

सरस्वतीकण्ठाभरणस्य भोजदेवस्य

सनातनकवि-रेवाप्रसाद-द्विवेदिना संशोधितमूलपाठः

साहित्यप्रकाशो नाम

# शृङ्गारप्रकाशः

## प्रथमः प्रकाशः

प्रकृत्यादिप्रकाशात्मा

अच्छिन्नमेखल - मलब्धदृढोपगूढ - मप्राप्तचुम्बन-मवीक्षित-वक्त्रकान्ति ।
कान्ताविमिश्रवपुषः कृतविप्रलम्भसम्भोगसख्यमिव पातु वपुः पुरारेः ।। १ ।।

यत्पादपङ्कजरजःपरिमार्जितेषु चेतःसु दर्पणतलाऽमलतां गतेषु ।
शब्दार्थसंपद उदारतराः स्फुरन्ति विघ्नच्छिदेऽस्तु भगवान् स गणाधिनाथः ।। २ ।।

आत्मस्थितं गुणविशेषमहङ्कृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मरक्ति/शक्तिरसनीयतया रसत्वं युक्तस्य येन रसिकोऽयमिति प्रवादः ।। ३ ।।

सत्त्वात्मनाममलधर्म/जन्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः ।
सर्वात्मसंपदुदयातिशयैकहेतुर्ज्जागर्त्ति कोऽपि हृदि मानमयो/वतो विकारः ।। ४ ।।

---

१. स्मरारेरिति तु वक्तुमुचितमत्र। पद्यानामेषां भोजकृता स्वोपज्ञा व्याख्या द्र. सप्तमे प्रकाशे पृ. ३७३।

२. उच्यते चाभिनवेन 'येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते हृदयसंवादभाजः सहृदया' इति ध्वन्यालोकलोचने।

३. उक्तं रत्नेश्वरेण रूढाहङ्कारतौर्जित्यमित्यस्य व्याख्याने स.क.(१.१०९) तात्कालिकनिमित्तोपनिपाते वासनाविकासात् तमोनिर्भेदस्थानेषु सुप्तप्रबुद्ध इव स्थायिभिरसंसृज्यमानः प्रथम—प्रादुर्भूतोऽभिमानोऽहङ्कारः।। रक्तिरित्येव युक्तः पाठः, शृङ्गारादेः रत्यादिवासनावत्तैव सचेतसा अनुभूतेः ।

४. यथा चोच्यते सरस्वतीकण्ठाभरणालङ्कारे— विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु ।
आत्मसंपद्गुणोद्भूतेरेको हेतुः प्रकाशते ।। इति (५.२)

तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसंपदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य ॥ ५॥

शृङ्गार-वीर-करुणाद्‌भुत-रौद्र-हास्य-बीभत्स-वत्सल-भयानक-शान्त-नाम्नः ।
आम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद् रसमामनामः ॥ ६॥

वीराद्‌भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेतामेतां निवर्त्तयितुमेष परिश्रमो नः ॥ ७॥

अप्रातिकूलिकतया मनसो मुदादेर्यः संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयाऽऽत्मश/रक्ते रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥ ८॥

रत्यादयोऽर्धशतमेकविवर्जिता हि भावाः पृथग्विधविभावभुवो भवन्ति ।
शृङ्गारतत्त्वमभितः परिवारयन्तः सप्तार्च्चिषं द्युतिचया इव वर्धयन्ति ॥ ९॥

आ भावनोदयमनन्यधिया जनेन यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्त्तमानः साहङ्कृते हृदि परं स्वदते रसोऽसौ ॥१०॥

रत्यादयो यदि रसाः स्युरतिप्रकर्षे हर्षादिभिः किमपराद्धमतद्विभिन्नैः ।
अस्थायिनस्त इति चेद् भयहासशोकक्रोधादयो वद/बत कियच्चिरमुल्लसन्ति ॥११॥

स्थायित्वमत्र विषयातिशयान्मतं चेच्चिन्तादयः कुत उत प्रकृतेर्वशेन ।
तुल्यैव सात्मनि भवेदथ वासनायाः सन्दीपनात्, तदुभयत्र समानमेव ॥१२॥

अतः सिद्धमेतद् १. रत्यादयः शृङ्गारप्रभवा एकोनपञ्चाशद् भावाः,

२. वीरादयो मिथ्यारसप्रवादाः,

३. शृङ्गार एवैकश्चतुर्वर्गैककारणं रस इति। स चानुभवैकगम्यत्वाद् असर्वविषयत्वाच्च दुरवसेयः, सम्यगभिनयेषु वा विदग्धशैलूषैः प्रदर्श्यमानः सामाजिकैरव—धार्य्यते, प्रबन्धेषु वा महाकविभिर्यावदाख्यायमानो विदुषां मनीषाविषयमवतरति। तत्र

---

५. वचसीति वार्त्तालापो विवक्षितः। यथातथेतिवचनयोजनेन नेयोऽत्र वाक्यार्थः यथा विवक्षाविषयीभूतोऽर्थो वचसि तात्पर्यमिति परिभाष्यते, काव्ये ध्वनिरिति, वल्लभगुणसंपदि सौभाग्यमिति, उत्तमावयवविन्यासत एवाङ्गनापदवाच्यायां लावण्यमिति तथैव मानिनि जने शृङ्गार इति।

१०. साहङ्कृताविति रा., साहङ्कृतिनीति तदा युक्तं वचः।

न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते, यथा वाग्मिनां वचोभिरावेद्यमानाः।

तदाह— **अत्थणिवेसा ण हु तह चित्तविआसं कुणंति सच्चविआ**[१] ।
**जह उण ते उम्मिल्लंता सुकइवओहिं सुसीसंता**[२] ।। १३।। इति।

(अर्थनिवेशा न हि तथा चित्तविकासं कुर्वन्ति संदृष्टाः।
यथा पुनस्त उन्मिलन्तः सुकवि—वचोभिः सुकथ्यमानाः।।)

अतोऽभिनेतृभ्यः कवीनेव बहुमन्यामहे, अभिनयेभ्यश्च काव्यमेवेति।

## (काव्यलक्षणम्)

तत् (काव्यं) पुनः शब्दार्थयोः साहित्यमामनन्ति। तद् यथा 'शब्दार्थौ सहितौ काव्यमि'ति (भामहा. १.१६)।

**कः पुनः शब्दः?**

येनोच्चारितेनार्थः प्रतीयते (मभा. पस्पशा.)

स (शब्दः) द्वादशधा* **१. प्रकृतिः, २. प्रत्ययः, ३. उपस्कारः, ४. उपपदम्, ५. प्रातिपदिकम् , ६. विभक्तिः, ७. उपसर्जनम्, ८. समासः, ९. पदम्, १०. वाक्यम्, ११. प्रकरणम्, १२. प्रबन्ध** इति।

**कोऽर्थः** (कः पुनरर्थः)?

यः शब्देन प्रत्याय्यते।

स च (अर्थः) द्वादशधा **१. क्रिया, २. कालः, ३. कारकम्, ४. पुरुषः, ५. उपाधिः, ६. प्रधानम्, ७. उपस्कारार्थः, ८. प्रातिपदिकार्थः, ९. विभक्त्यर्थः, १०. वृत्त्यर्थः, ११. पदार्थः, १२. वाक्यार्थ** इति।

**किं साहित्यम्?**

यः शब्दार्थयोः सम्बन्धः।

स च (सम्बन्धः) द्वादशधा **१. अभिधा, २. विवक्षा, ३. तात्पर्यम्, ४. प्रविभागः, ५. व्यपेक्षा, ६. सामर्थ्यम्, ७. अन्वयः, ८. एकार्थीभावः, ९. दोषहानम्, १०. गुणोपादानम्, ११. अलङ्कारयोगः, १२. रसावियोग** इति।

---

१. प्राकृतं पदमेतत् तद्भवत्वेन नेयं 'सत्यापिता' इत्यस्य मूलस्य, सुसीसंता इति च कस्यचिदपरस्याऽप्रसिद्धस्य संस्कृतपदस्य, आदिगुरुणा भरतमुनिना प्राकृतस्य संस्कृतविकृतित्वेन गृहीतचरत्वात्। नाट्यशास्त्रे १७.०२

२. 'वामनाः पुनः सन्दर्भेषु दशरूपकं श्रेय' इति वदन्ति।

* १–४ शब्दभेदाः प्रथमप्रकाशे, ५–८ द्वितीयप्रकाशे, ९–१२ तृतीयप्रकाशे निरूपिताः।

तत्र यद्यपि 'न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्ययः' (मभा. १.२.६४) तथापि धर्मनियमाय शास्त्रक्रियाव्यवहारे प्रकृतिप्रत्ययविभागकल्पना। (तत्र)

## (१. प्रकृतिः)

**शब्दार्थभावनायां प्रत्ययात् प्रथममुपादानकारणमिव योपादीयते तां प्रकृतिरिति**[1] व्यपदिशन्ति।

सा (प्रकृतिः) त्रिधा — **(क) धातुरूपा, (ख) प्रत्ययरूपा, (ग) प्रातिपदिकरूपा** च।

### (क. धातुरूपा प्रकृतिः)

धातवः षोढा **१. परिपठिता, २. अपरिपठिताः, ३. परिपठिताऽपरिपठिताः, ४. प्रत्ययधातवः, ५. नामधातवः, ६. प्रत्ययनामधातव**श्चेति। तेषु—

**१. परिपठिता** भूवादयः। यथा—

**भूयात् तेषां कुले जन्म जायन्तां तेषु सम्पदः ।**
**येषां स्वमिति मन्वानाः स्वीकुर्वन्ति स्वमर्थिनः ॥ १४॥**
**कविः सृजति काव्यानि ह्वयादधति सज्जनाः ।**
**सूते मुक्ताः पयोराशिर्वहन्ति तरुणीस्तनाः ॥ १५॥**
**न रुणत्सीन्द्रियग्रामं न शृणोषि गुरोर्वचः ।**
**नो वर्णयसि मित्राणि कथं गृह्णास्यरिश्रियः ॥ १६॥**

**२. अपरिपठिता** आन्दोलयत्यादयः। यथा—

**नीपानान्दोलयन्नेष प्रेङ्खोलयति मे मनः ।**
**पवनो बीजयन्नाशा मानाशामुच्चुलुम्पति ॥ १७॥**[2]
**तडित्खचयतीवाशा नसन्ते**[3] **शर्म्म वर्हिणः ।**
**पान्थस्त्रीश्वासवेगौष्ण्यं विधमन्त्यब्दवायवः ॥ १८॥**
**मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः ।**
**तापं क्षपयति प्रावृट् क्षीयन्ते कामिविग्रहाः ॥ १९॥**

---

१. तथा च काशिका 'प्रकृतिरुपादानकारणम्' (सू० ५.१.१२)। अत्रत्या काशिकाऽवश्यमेव द्रष्टव्या।
२. उच्चुलुम्पति विलोपयति । ३. नसतिराप्नोतिकर्मा (निरुक्ते ७.१७)। जसन्ते यान्ति।

३. ये सूत्रेष्वेव पठ्यन्ते, न भूवादिषु, ते **परिपठिताऽपरिपाठिताः**, 'स्कु' इत्यादयः। यथा–

**अनुस्कुनुहि मा मन्तून्, वसन्तो मान–घस्मरः ।**
**दूति! द्रुतमृतीयस्य जिजावयिषति स्मरः ।। २०।।**[1]

**मुसलक्षेपहुङ्कारस्तोभैः कलम–कण्डिनि! ।**
**कुचविष्कम्भमुत्तभ्नन् निस्तुभ्नातीव ते स्मरः ।। २१।।**[2]

**पतयालूनि चेष्टासु मनांसि गृहयालवः ।**
**यूनामेकेन रूपेण योषितो दाह्यसातयः ।। २२।।**[3]

४. सनाद्यन्ताः **प्रत्ययधातवः**। यथा–

**मीमांससे न शास्त्रार्थान् कृतार्थयसि नार्थिनः ।**
**गोपायसि न सन्त्रस्तान् किमुद्धतमटाट्यसे ।। २३।।**

**सूर्यीयति सुधारश्मिं नरकीयति नन्दने ।**
**अकामं कामयाना त्वां सा जीवन्ती मृतायते ।। २४।।**

**कपोलौ लोहितायेते बाष्पायेते विलोचने ।**
**प्रियप्रणामकाम्यन्ती कृशाङ्गि! कलहायसे ।। २५।।**

५. कण्वादयो **नामधातवः**। यथा–

**कण्डूयति न यो मर्म नर्मणा यो हृणीयते ।**
**न कुष्यति रुषं यः स राजा राज्यं भिषज्यति ।। २६।।**[4]

---

१. मन्तूनपराधान् माऽनुस्कुनुहि मोदाहर। स्कुञ् उद्धरणे। ऋती घृणागत्योः। घृणा दया। ऋतीयस्व दयस्व। जिजाव/पयिषति। जु वेगितायां गतावित्यस्येति राघवः। जपतेस्तु ग्रहे जिजापयिषति साहसकौलीनश्वभ्रे पातयितुमिच्छतीत्यर्थः।

२. कण्डनं प्रतीतचरं गाहासु, न तु खण्डनम्। विष्कम्भः स्तूपः। उत्तम्भः उल्लासः। निस्तुभ्नाति गायति।

३. सातिः सुखम्। दाह्येभ्यः सातिः सुखम्। योषित्सु सातिपदार्थाऽऽरोपः।

४. कण्डूयति स्पृशति। हृणीयते लज्जते। कुष् प्रकाशे दैवादिकः, कुष्यति प्रकाशयति। भिषज्यति चिकित्सते। भिषज् चिकित्सायाम्। राघवोऽत्र तैमिरिकायते।

**वल्गूयति न योऽसाधुमसूयति न साधवे ।**
**मन्तूयति न मान्याय महत्सु न महीयते ।। २७।।**[1]

**कमिषुध्यन्तु यज्वानः कं मगध्यन्तु मागधाः ।**
**कमर्थिनः कुषुभ्यन्तु रामेऽरण्यं भुरण्यति ।। २८।।**[2]

धातुप्रकरणाद् धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ।।
(मभा. ३.१.२७ भाष्यम्)

**(६. प्रत्ययनामधातवः)**

येभ्यः परिपठितधातुभ्यो नामत्वसिद्धये, नामभ्यो वा धातुत्वसिद्धये क्विबादिप्रत्यया लुप्यन्ते ते प्रत्यये नामनि च धातव इ(श्चे)ति प्रत्ययनामधातवः। यथा होड–गल्भ–क्लीबप्रभृतयः। यथा–

**गिरो गौर्ब्रह्मकामाशीः श्रियः प्रतिभुवौ भ्रुवौ ।**
**शत्रुशीर्मित्रपूर्बाहुर्युधि ते बन्धुता सजूः ।। २९।।**

ब्रह्म ब्राह्मणाः, तेषां कामानाशास्ते इति ब्रह्मकामाशीः कामगवी। शत्रूँन् शास्तीति शत्रुशीः, मित्राणि पृणातीति मित्रपूः। सजूः सहजोषणः।

**होडसे नाभिजातेषु क्लीबसे नाभिमानिषु ।**
**विदग्धसि न मुग्धेषु नाऽप्रगल्भेषु गल्भसे ।। ३०।।**

होड़ृ अनादरे, क्लीब् अधाष्टर्ये, गल्भ धाष्टर्ये।

**सविता विधवति, विधुरपि सवितरति, तथा दिनन्ति यामिन्यः ।**
**यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि**[3] **।। ३१।।**

---

१. वल्गु मनोज्ञम्। वल्गूयति प्रियंमनुते। मन्तुः क्रुत्। मन्तूयति क्रुध्यति। महीयते मह पूजायामित्यस्य। महत्सु न महीयते पूज्यम्मन्यतां वृणुते।

२. इषुध अस्त्रधारणे, यज्वानः कं वीरम्, इषुध्यन्तु इषुधिमन्तं कुर्युः, मगध्यन्तु परिवेष्टयन्तु, मगध परिवेष्टन इत्यस्य। कुषुभ परोपमर्द्दनोपतिष्ठन्ताम्। भुरण्यति भुरण गतौ। भुरण्यति व्रजति। कण्वादिर्नामधातुश्च भवति।

३. साधारणधर्मस्य भिन्नत्वान्नात्रोपमेयोपमा, तृतीयसदृशव्यवच्छेदाऽघटनात्।

एवं १. 'कंसवधमाचष्टे कंसं घातयति',
२. 'आरात्रि विवासमाचष्टे रात्रिं विवासयति',
३. 'पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयति',
४. उज्जयिनीतः प्रस्थितो माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयती'–ति।

'आख्यानात् कृतस्तदाचष्ट इति णिच्' कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्', 'आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्', नक्षत्रयोगे ज्ञि', 'चित्रीकरणे प्रापी'–ति स्मर्य्यते।

**प्रकृतिः षट्प्रकारैषा धातुरूपा निरूपिता ।**
**अथ प्रत्ययरूपापि षट्प्रकारैव कथ्यते ।। ३२।।**

## (ख. प्रत्ययरूपा प्रकृतिः)

प्रत्यया हि [१]सुप्–[२]तिङ्–[३]कृत्–तद्धित[४]–धातुप्रत्यय[५]–स्त्रीप्रत्यय[६]–भेदात् षट् प्रकाराः। तदन्ता प्रकृतिरपि प्रत्ययरूपा षट्प्रकारैव भवति। सा (द्र. अष्टाध्याय्याः ३–६ अध्यायाः)

१. **सुप्प्रत्ययान्ता** यथा–
अहंयुः, शुभंयुः, सायन्तनम्, चिरन्तनम्, त्वयका, मयका, आमुष्यायणः अप्सव्यः (६.३.१८), प्राह्णेतराम्, प्रगेतराम्, पूर्वाह्णेतनम्, समांसमीना इति।

२. **तिङ्प्रत्ययान्ता** यथा–
पचतितराम्, गच्छतितमाम्, स्पृशतिरूपम्, जल्पतिकल्पम्, जिघ्रतिदेश्यम्, पश्यतिदेशीयम्, आस्तिकः, नास्तिकः, पचतकि, भिन्धकि, पचतभृज्जत, खादतमोदत इति।

३. **कृत्प्रत्ययान्ता** यथा–
कृत्रिमम्, हृत्रिमम् पाकिमम्, सेकिमम्, सांकूटिनम्, सांराविणम्, व्यावक्रोशी, व्यावहासी, श्यैनम्पाता, तैलम्पाता, जित्वरी, आढ्यङ्करणी इति।

४. **तद्धितप्रत्ययान्ता** यथा–
गार्ग्यायणः, दाक्षायणः, वार्ष्यायणिः, वार्ष्यायणीयः, फाण्टाहृतः, फाण्टाहृतायनिः, आभिजित्यः, कौञ्जायन्यः, कुतस्त्यः, तत्रत्यः, पचतितराम्, पचतितमाम् इति।

५. **धातुसंज्ञाप्रत्ययान्ता** यथा–
चिकीर्षा, कण्डूया, पुत्रीया, कारणा, मिश्रणा, मृगया, अटाट्या, सासहिः, यायावरः, यायजूकः, चिकीर्षुः, चङ्क्रमण इति।

**६. स्त्रीप्रत्ययान्ता** यथा–

गाङ्गेय:, सौदामेय:, कारीषगन्धेय:, द्रौपदेय:, गौरेय:, शार्ङ्गरवेय:, काद्रवेय:, कामण्डलेय:, यौवतेय:, सौरभेय:, बहुस्त्रीक:, सुवधूक इति।

अथ कथं यौवतेय इति प्रत्ययप्रकृतावुदाहृतम्, यावता 'यूनस्ति' (४.१.७७) इति एतस्य तद्धितसंज्ञया प्रातिपदिकत्वमेव।

सत्यमेतत्। स्त्रीसामान्यपर्यायो युवतिशब्द: प्रकृत्यन्तरमस्ति। यथाह 'धर्मार्थाङ्ग–विद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत, प्राग् यौवनाद् युवति:' इति। तस्य।

'यूनस्ति:' इत्येतस्यैव वा, 'एरक्तिन' इति विभाषितङीषो ढगुत्पत्ति:। यथा– आदितेय:, सौरभेय इति।

अथ काद्रवेय: कामण्डलेय इति कथम्? ङ्यापोरप्रातिपदिकत्वेऽपि हि 'ङ्याप्प्रातिपदिकाद्' (४.१.१) इति विशेषविधानात्। यूनस्तिरित्येतस्य तु तद्धितत्वात् अस्तु सुबुत्पत्ति:, ऊङस्तु प्रत्ययत्वेन सा न सिद्ध्यति, समर्थाच्च तद्धितेन भवितव्यम्। अन्तादिवद्भावाद् भविष्यति, तथाहि 'ब्रह्मबन्धूरि'–त्यादौ 'अक:सवर्णे दीर्घ:' (६.१.१०१) इति द्वयोरेकत्वं भवति।

यद्येवं 'स्त्रीभ्यो ढग्' (४.१.१२०) इति ढक् (ङ्) न सिध्यति, सोऽप्याद्यन्तवद्भावाद् भविष्यती'ति। 'साऽस्य देवता' (४.२.२४) इति ज्ञापकाद् ऊङुत्पत्ते: प्रागेव वा सुबुत्पत्तिरिति।

**उक्ता षोढैवमेषाऽपि प्रकृति: प्रत्ययात्मिका ।**
**अथात: प्रातिपदिकरूपा षोढैव कथ्यते ।। ३३।।**

## (ग. प्रातिपदिकरूपा प्रकृति:)

तत्र– **[१]नामाऽ[२]व्ययाऽनुकरण[३]–कृत्[४]–तद्धित[५]–समासा:[६]** प्रातिपदिकानि। तदाह–

१. 'अर्थवदधातुरप्रत्यय: प्रातिपदिकम्' (१.२.४५),

२. 'कृत्तद्धितसमासाश्च' (१.२.४६),

३. निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या। (१.२.४६ मभा. वार्त्तिकम्)

तत्रार्थवद्ग्रहणेन नामाव्ययानुकरणानि गृह्यन्ते। कृत्तद्धितसमासास्तु कण्ठोक्त्या। इति।

नन्वेतेऽप्यर्थवन्त एव।

सत्यमेतत्। किन्तु कृत्तद्धिताश्च प्रत्ययाः, तेषामप्रातिपदिकग्रहणात् प्रातिपदिकसंज्ञा न प्राप्नोतीति कृत्तद्धितग्रहणेन तदुपसंगृह्णाति।

समासग्रहणेन त्वर्थवत्समुदायस्य समासस्यैव प्रातिपदिकसंज्ञेति ज्ञापयन् तथाविधस्य वाक्यस्यैतां निवर्त्तयति। तत्र—

### (१. नामप्रातिपदिकम्)

अनपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि ।

तानि द्विधा— **१. आविष्टलिङ्गानि २. अनाविष्टलिङ्गानि** चेति। तेषु —

१. **जातिद्रव्यपरिमाणाभिधायीन्याविष्टलिङ्गानि**। तत्र —

**जाति**र्द्विधा १. आकृतिव्यङ्ग्या २. उपदेशव्यङ्ग्या च।

तयोराद्या यथा— गौः, मृगः, पक्षी, सर्पः, सिंहः, वृक्षः, कुमारी, कुण्डम्, स्त्री, पुमान्, नपुंसकम् इति ।

द्वितीया यथा— ब्राह्मणः, गार्ग्यः, कठः, क्षत्रियः, वैश्यः, शूद्रः, मूर्द्धाभिषिक्त अम्बष्ठः, पारशवः, सूतः, वैदेहकः, चण्डाल इति।

**द्रव्यं** द्विधा १. सापेक्षम् २. अनपेक्षं च।

तयोराद्यं गुरुः, पिता, पुत्रः, भ्राता, जामाता, मित्रम्, माता, स्वसा, दुहिता, याता, ननान्दा, भार्या इति।

द्वितीयं यथा— चैत्रः, मैत्रः, इन्द्रः, उपेन्द्रः, चन्द्रः, सूर्यः, कालः, आकाशः, प्राची, प्रतीची, शची, लक्ष्मीरिति।

**परिमाणं** द्विधा १. नियतम् २. अनियतञ्च।

तयोराद्यं यथा— द्रोणः, खारी, पलम्, भारः, क्रोशः, योजनम्, निवर्त्तनम्, नल्वः (तल्पः), पणः, पुराणः, गणः, अक्षौहिणी—ति।

द्वितीयं यथा— संघः, पूगः, सार्थः, समाजः, वर्गः, श्रेणिः, कुटुम्बम्, परिषत्, पङ्क्तिः, यूथम्, वनम्, सेना इति।

२. **गुणसंख्यावचनसर्वनामान्यनाविष्टलिङ्गानि**। तेषु

**गुणो** द्विधा १. अनुरञ्जकः २. अननुरञ्जकश्च।

तत्राऽनुरञ्जकयोगात् तदनुरक्तानि यथा श्वेता, स्वादु, शीघ्रं, मन्दं, दीर्घं, ह्रस्वम्,

ऋजु, वक्रम्, मृदु, कठिनं, युवा, वृद्ध इति।

अननुरञ्जकयोगात् तद्विपरीतानि यथा– दक्षः, जिह्म–जड–प्राज्ञ–खल–साधु–स्निग्ध–क्रूर–शूर–भीरु–लघु–गुरु–रिति।

**संख्या** द्विधा १. लिङ्गवती २. अलिङ्गा चेति। तयोः –

आद्या लिङ्गवती यथा– एकः, एका, एकम्, द्वौ, द्वे, उभौ, उभे, त्रयः, तिस्रः, त्रीणि, चत्वारः, चतस्रः, चत्वारीति।

द्वितीया (अलिङ्गवती) यथा– पञ्च प्रातिपदिकार्थाः (मभा.५.३.७४), पञ्च वृत्तयः, पञ्च पदजातानि, षड् विषयाः, षड् बुद्धयः, षडिन्द्रियाणि, अष्टौ वसवः, अष्टौ मूर्त्तयः,अष्टौ वर्णस्थानानि,दश दिशः, षोडश पदार्थाः, अष्टादश पुराणानि' इति।

**सर्वनामानि** द्विधा १. सर्वादीनि २. असर्वादीनि च। तेषु –

आद्यानि यथा – 'सर्व, विश्व, अन्य, इतर, कतम, यः, सः, एषः, अयं, त्वम् अहम्' इति।

द्वितीयानि यथा– 'प्रथम–चरम–अल्प–कतिपय–पूर्व–पर–अपर–दक्षिण–उत्तर–स्व–अन्तर–सकल–कृत्स्नम्' इति।

## (२. अव्ययप्रातिपदिकम् )

**प्रायेणाऽलिङ्गसंख्याशक्तीन्यव्ययानि**। तानि षोढा–

'[1]**अव्यय**–[2]**निपात**– [3]**गत्युपसर्ग**[4] –**कर्मप्रवचनीय**[5]–**विभक्तिप्रतिरूप**[6]भेदात्।

तेषु प्रायेण शक्तिसंख्याऽयोगात् स्वरादी**न्यव्ययानि**। यदाह (मभा. १.१.३८)

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।। ३४।। इति**

### (१. अव्ययप्रातिपदिकेषु अव्ययानि)

तानि **(अव्ययानि)** द्विधा १. सत्त्वगन्धीनि २. असत्त्वगन्धीनि च। तेषु–

**सत्त्वगन्धीनि** षोढा १. **द्रव्यरूपाणि**, २. **गुणरूपाणि**, ३. **क्रियारूपाणि**, ४. **जातिरूपाणि**, ५. **संज्ञारूपाणि**, ६. **सम्बन्धिरूपाणीति** ।

**असत्त्वगन्धीन्यपि** षोढैव

१. **क्रियापेक्षीणि**, २. **क्रियाद्रव्यापेक्षीणि**, ३. **क्रियाविशेषणानि**,
४. **क्रियाद्रव्यविशेषणानि**, ५. **क्रियाविशिष्टरूपाणि**,
६. **क्रियाद्रव्यविशिष्टरूपाणि** चेति। तत्र –

**सत्त्वगन्धिभेदेषु**

१. द्रव्यरूपाणि यथा– स्वः, दिवं, भुवः, विहायसा, रोदसी, आपः, भूः, ऋचः, शम्, महः, तपः, हाहा, हूहू, इति।

२. गुणरूपाणि यथा– शश्वत्, आपत्, नृपत्, कूपत्, कुवित्, सामि, साचि, द्राक्, स्राक्, ज्योक्, मनाक्, ईषद् इति।

३. क्रियारूपाणि यथा– नमः, स्वस्ति, स्वाहा, स्वधा, वषट्, वौषट्, श्रौषट्, हन्त, अच्छ, अवः, परिवः एव इति।

४. जातिरूपाणि यथा– कम्, शंयोः मयः, सायम्, प्रातः, अस्तम्, नक्तम्, दिवा, दोषा, ह्यः, श्वः' इति।

५. संज्ञारूपाणि यथा– क्विम्, सः, सोम्, स्वाहा, ह्राम्, ह्रीम्, ब्रूम्, दिङ्, ह्लेङ्, ऋङ्, दुङ् इति।

६. संबन्धिरूपाणि यथा–अन्तः, अन्तरा, ऊर्ध्वम्, बहिः, पारे, मध्ये, समया, निकषा, आरात्, विष्वक्, पुरः, पश्चात् इति।

**असत्त्वगन्धिभेदेषु**

१. क्रियापेक्षीणि यथा– द्वन्द्वम्, यथायथम्, मिथः, अन्योन्यम्, परस्परम्, इतरेतराम्, परोपराम्, उत्तराधरम्, अधरोत्तरमिति।

२. क्रियाद्रव्यापेक्षीणि यथा– साकम्, सार्धम्, सह, समम्, अमा, विना, ऋते, पृथक्, नाना, अपृथगिति।

३. क्रियाविशेषणानि यथा– अभीक्ष्णम्, मुहुः, पुनः, भूयः, युगपत्, अजस्रम्, अनिशम्, शनैः, उपांशु, मङ्क्षु, झटिति, प्राय इति।

४. क्रियाद्रव्यविशेषणानि यथा– अलम्, बलवत्, सुष्ठु, मृषा, वृथा, मिथ्या, मुधा, अद्धा, ऋधक्, उच्चैः, नीचैरिति।

५. क्रियाविशिष्टरूपाणि यथा– शश्वत्, सपदि, संप्रति, पुरा, असंप्रति, सनातनम्, साम्प्रतम्, जातु, बाढम्, फाण्टम्, स्वयम्, कामम् इति।

६. क्रियाद्रव्यविशिष्टरूपाणि यथा– आविः, प्रादुः, तिरस्, साक्षात्, अलम्, प्राध्वम्, सत्, असत्, धिक्, हिरुक्, तूष्णीम्, जोषम् इति।

**(२. अव्ययप्रातिपदिकेषु निपाताः)**

जात्यादिप्रवृत्तिनिमित्तानुपग्राहित्वेन असत्त्वभूतार्थाभिधायिनोऽलिङ्गसंख्याशक्तय उच्चावचेष्वर्थेषु निपतन्तीत्यव्ययविशेषा एव चादयो निपाताः। यदाह—'चादयोऽसत्त्वे' (१.४.५७) इति।

ते (निपाताः) खलु **१. विध्यर्थाः, २. अर्थवादार्थाः, ३. अनुवादार्थाः, ४. निषेधार्थाः, ५. विधिनिषेधार्थाः, ६. अविधिनिषेधार्था**श्चेति षोढा संभवन्ति। तेषु—

१. (विधिः) १. मङ्गलम्, २. अधिकारः, ३. संभ्रमः, ४. नियोगः, ५. समुच्चयः, ६. विकल्प इति विधिः।

२. (अर्थवादः) १. कुत्सा, २. प्रशंसा, ३. विषादः, ४. हर्षः, ५. ईर्ष्या, ६. विस्मय, इत्यर्थवादः।

३. (अनुवादः) १. स्मरणम्, २. उपमा, ३. अभ्युपगमः, ४. अनुप्रश्नः, ५. परकृतिः, ६. पुराकल्प इत्यनुवादः।

४. (निषेधः) १. प्रतिषेधः, २. निवारणम्, ३. अपाकरणम्, ४. असूया, ५. गर्हणा, ६. विनिग्रह इति निषेधः।

५. (विधिनिषेधः) १. संबोधनम्, २. अनुकम्पा, ३. वितर्कः, ४. प्रश्नः, ५. पक्षान्तरम्, ६. हेत्वपदेश इति विधिनिषेधः।

६. (अविधिनिषेधः) १. पदपूरणम्, २. पादपूरणम्, ३. वाक्यपूरणम्, ४. अलङ्कारपूरणम्, ५. वाक्यालङ्कारः, ६. पदसंस्कार इत्यविधिनिषेधः।

तेषु —

**(१. विध्यर्था निपाताः)**

**(१.१ मङ्गलार्थाः)** ओम्, अथ, स्वस्ति, दिष्ट्या, नह, स्म, शश्वत्, कच्चिदिति मङ्गलार्थाः। यथा —

'ओम् अग्निमीडे पुरोहितम्' (ऋवे. १.१.१),
'अथातो ब्रह्मजिज्ञासा' (ब्रसू. १.१.१),
स्वस्ति नो मिमीतामश्विना भगः' (ऋवे. ५.५१.११),
दिष्ट्या वर्धसे,

नह भोक्ष्यसे भोगान्, (काशिका ८.१.३१)
ऊर्ध्वं मुहूर्त्तात् कटं करोतु स्म भवान्, (काशिका ३.३.१६५)
शश्वदध्येष्यामहे, (सक. १.१.११८)
कच्चिदध्येष्यामहे । (सक. १.१.११८)

**(१.२ अधिकारार्थाः)** अथ, अथो, यावत्, तावत्, अनु, पुनः, पश्चाद्, भूय इत्यधिकारार्थाः। यथा—

अथ शब्दानुशासनम्, (मभा. १.१.१)।
अथो त्वमेष्यसि,
यावत् संभवस्तावद् विधिः,
मुनिः कणादमन्वतः, (पाभा.)
पुनः प्रभातं पुनरेव शर्वरी,
पश्चादावां विरहगुणितम्, (मेघ. १०८)
भूयश्चाह त्वमसि शयने, (मेघ. १०९)

**(१.३ संभ्रमार्थकाः)** यावत्, तावत्, ननु, पुरा, अङ्ग, हि, हन्त, सीम् इति संभ्रमार्थाः। यथा— 'यावत् स समयः सममेव तावत्' (काशिका ८.१.४२)।

'ननु गच्छामि भोः' (काशिका ८.१.४२)
'अधीष्व माणवक! पुरा विद्योतते विद्युत्', (काशिका ८.१.४२)
'अङ्ग पच, न हि पच', (काशिका ८.१.३४)
'हन्त प्रशाधि', (काशिका ८.१.३४)
'प्र सीमादित्योऽसृजत्, प्रासृजत् सर्वत्र आदित्य'इत्यर्थः।(ऋवे.२.२८.४)

**(१.४ नियोगार्थकाः)** परम्, वै, वाव, एव, ह, अह, तु, उ इति नियोगार्थाः। यथा—

धर्म्मः सखा परमहो परलोकयाने,
वेदो वै धर्म्ममूलम्,
द्वे वाव ब्रह्मणो रूपे, (बृप. ३.२.१)
आत्मैवेदमग्र आसीत्, (बृप. १.४.१)।
स होवाच, (काशिका ८.१.६१)।
त्वमह ग्रामं गच्छ, (काशिका ८.१.५६)।

आख्यास्यामि तु ते , (काशिका ८.१.५६)।
सत्यमु ते वदन्ति, (१.५.३)।

**(१.५ समुच्चयार्थकाः)**

च, वा, आ, अपि, उत, अथ, अथो, तथा इति समुच्चयार्थाः।

यथा—'अहं च त्वं च वृत्रहन्' , (ऋवे. ८.६२.११)
'वायुर्वा त्वा, मनुर्वा त्वा' , (१.७.७.२)
'देवेभ्यश्च पितृभ्य आ' , (ऋवे. १०.१६.११)
'दन्तैरपि नखैरपि' , (तैब्रा. ३.६.६)
'दैव्याः शमितार उत मनुष्याः', (तैब्रा. ३.६.६)
'देवानथ पितॄन् स्तुहि',
'अथो खल्वाहुः',
'हारीतोऽत्रिरहं तथा' इति।

**(१.६ विकल्पार्थकाः)**—

वा, अथ, अथो, यदि, चण्, चेत्, नेत्, मा इति विकल्पार्थाः

यथा—'राज्यं वा कर्त्तव्यं भाष्यं वा श्रोतव्यम्',
'ऋतौ व्यवेयादथाऽनृतौ पर्ववर्जम्',
'नदीषु स्नायादथो देवखाते',
'यदि शमः किं तपसा',
'त्वं च गन्ता किमत्र मे',
'उपाध्यायश्चेदागच्छेद् आशंसे युक्तोऽधीयीय', (मभा. ३.३.१३३)
'नेज्जिह्मयन्त्यो नरकं पताम', (निरुक्तम् १.११.१)
मा कदाचिदिदमपि स्यात्' इति। एवमन्येऽपि प्रयोगाऽनुसारतो द्रष्टव्याः।
एते च विधेरन्यत्रापि वेदितव्या इति।।

**(२. अर्थवादार्था निपाताः)** अर्थवादे —

**(२.१ कुत्सार्थाः)** हा, धिक्, चित्, नाम, किम्, ह, अपि, जात्विति कुत्सार्थाः।

यथा— हा किमेवं प्रवर्त्तसे, धिक् प्रमादः, (मवीच. ५.४६, ४७)
कुल्माषाँश्चिदाहर, (निरुक्तम् १.४.१२)

को नामायं सवितुरुदयो यत्र न स्वे स्फुरन्ति,
किमधीते देवदत्तः, (काशिका १.४.९६)
त्वं ह ब्राह्मणोऽसि, ( ,, ८.१.३९)
अपि सिञ्चेत् पलाण्डुम्, ( ,, ८.१.४०)
तत्र जातु गमिष्यसि, ( ,, ८.१.३७) इति।

**(२.२ प्रशंसार्थाः)**

तु, पश्य, पश्यत, अह, अहो, यथा, यावत्, चिद् इति प्रशंसार्थाः।

यथा यस्तु माणवको भुङ्क्ते,
पश्य माणवको भुङ्क्ते, (काशिका १.४.९६)
पश्यत माणवको भुङ्क्ते, ( ,, ८.१.३९)
अह माणवको भुङ्क्ते, ( ,, ८.१.४०)
अहो देवदत्तः पचति शोभनम्, ( ,, ८.१.३७)
यथा पचति शोभनम्,
यावत् करोति चारु,
आचार्यश्चिदिदं ब्रूयात् इति (निरुक्तम् १.४.१२)

**(२.३ विषादार्थकाः)**

ही, ई, हा, हन्त, बत, नाम, भोः, कष्टमिति विषादार्थाः।

यथा—ही महीशो दृश्यते,
ई ईदृशः संसारः, (गर. १.९ तिलकः)
हा प्रिये जानकि!, (उराच. ३.९)
निराश्रया हन्त हता मनस्विता, (किराता. १.४३)
अहो बत महत् कष्टम्, (मभार. वन. २.६४, गीता—१)
क्व नाम गमिष्यसि,
भोः श्रान्तोऽसि,
कष्टं भोः कष्टम्, (मवीच. ३.४१, मामा. ९.२०) इति।

**(२.४ हर्षार्थाः)**

दिष्ट्या, हन्त, बत, बट्, बाट्, कत्, कथम्, कच्चिदिति हर्षार्थाः।

यथा— दिष्ट्या न मृतोऽसि सखे!,

हन्त जीविताः स्मः,
सैवेयं बत मे प्रिया,
बङ् महान् असि सूर्य, (ऋवे. ८.१०१.१२)
बाट् ताभ्यः स्वाहा, (शुय. १८.४०)
कद् रुद्राय प्रचेतसे, (ऋवे. १.४३.१)
कथं वत्सो मे रामभद्रः,
कच्चिज्जीवति पार्वती इति (काशिका ८.१.६०, ६१, १०६)

**(२.५ ईर्ष्यार्थाः)**

ह, अह, प्रत्युत, परम, किन्तु 'अपि नाम' 'यदिनामे'—तीर्ष्यार्थाः।

यथा— स्वयं हौदनं भुङ्क्ते ३,
उपाध्यायं सक्तून् पाययति,
स्वयमह रथेन याति ३,
उपाध्यायं पदातिं गमयति,
प्रत्युत मामुपालभसे,
देवो भवान् परं भृङ्गिरिटिः,
विद्वानसि किन्तु कितवः,
मातर्यपि मृतायां दीव्यसि,
भवतु नाम कामचारी तथाप्यसौ पतिरेव,
असि तपस्वी यदि नाम मूर्खः इति।

**(२.६ विस्मयार्थाः)** ही, अहो, अहह, चन, नाम, पश्य, पश्यत, बतेति विस्मयार्थाः।

यथा— हतविधिललितानां ही विचित्रो विपाकः, (माघ. ११.६४)
अहो रूपमस्याः, (सक. (अलं) २)
अहह माहात्म्यं महीपतेः,
याचिता नैव कुप्यन्ति पुरुषाः केचनैव ते,
अन्धो नाम पर्वतमारोक्ष्यति,
पश्य माणवको ब्रूते,

पश्यताकाशेन याति,
कोऽयं बत दृश्यते इति ।
एवमन्येऽपि यथा प्रयोगमनुसर्त्तव्याः ।
एते चार्थवादादन्यत्रापि वेदितव्या इति।।

**(३. अनुवादार्था निपाताः)**

**(३.१ स्मरणार्थाः)**

आम्, आः, अये, नाम, नूनम्, हुम्, ओमिति स्मरणार्थाः ।

यथा— आम्, सैषा पञ्चवटी,
आः, स तस्याः संलापः,
आ ज्ञातं स जटायुरेषः, (उदात्तराघवे २.३१)
अये देवो दाशरथिः,
स नामाऽयं भविष्यति,
नूनमेषा जानकी,
हुं मअरंदो, (मामा. ७.१)
ओमेवमेतत् इति।

**(३.२ उपमानार्थाः)**

इव, वा, यथा, चित्, न, नकिः, नु, प्रति इत्युपमानार्थाः।

यथा— राजेव ब्रूयात्,
मणीवोष्ट्रस्य लम्बेते, (मभार. १७१.१२)
ज्येष्ठो भ्राता यथा पिता,
अग्निश्चिद् भायात्,
मृगो न भीमो कुचरो गिरिष्ठाः, (ऋवे. १.१५४.२)
पावको नकिर्माणवकः,
वृक्षस्य नु ते पुरुहूतवयाः, (ऋवे. ६.२४.३ निरुक्त १.४.१९)
अभिमन्युरर्जुनतः प्रति, (काशिका १.४.९२) इति।

**(३.३ अभ्युपगमार्थाः)**

ओम्, तथा, आम्, नाम, अथकिम्, श्रत्, सत्यम्, वाढमित्यभ्युपगमार्थाः

यथा— ओमिति होवाच,
स तथेति प्रतिज्ञाय, (कुसं. ६.३)

आम् यथा ब्रवीषि,

एवं नाम भवतु,

गमिष्यति भवान्? अथकिम्,

श्रद्दधे यथाऽऽत्थ,

सत्यमसारः संसारः,

वाढमेषोऽस्मि कामन्दकी संवृत्तः (मामा. १ प्रस्तावना) इति।

**(३.४ अनुप्रश्नार्थाः)**

ननु, ही, नु,अपि, हुम्, न, किल, ननु, किल, एवम्, शश्वदित्यनुप्रश्नार्थाः।

यथा— अकार्षीः कटं देवदत्त? ननु करोमि भोः, (काशिका ३.२.१२०)

अकार्षं ही ह्यः, (काशिका ८.२.९३)

कथं नु करिष्यामि, (निरुक्तम् १.४.१७)

अपि भवान् मकरन्दः? (मामा. ९.४१)

हुम् स एवास्मि, (निरुक्तम् १.५.७)

न किलैवम्, (निरुक्तम् १.५.७)

ननु किलैवम्, (निरुक्तम् १.५.७)

एवमेतत्? (निरुक्तम् १.५.११)

शश्वदेवम् इति। (निरुक्तम् १.५.११)

**३.५. (परकृत्यर्थाः)**

इति, एवं किल, खलु, ननु, स्म, अपि, नाम इति परकृत्यर्थाः।

यथा— नित्यः शब्द इति मीमांसकाः, अनित्य एवेति तार्किकाः,

एवं किलोपाध्यायः पठति, (काशिका ३.२.११९)

धन्याः खलु धर्ममाचरन्ति,

नन्वेतदकार्षीत् सर्वोऽपि,

इति स्मोपाध्यायः कथयति,

सोऽपि जानात्येव,

को नाम न मन्यत इति।

**३.६. (पुराकल्पार्थाः)**

पुरा, शश्वत्, इति ह, इति किल, इति स्म, इति हस्म, यत्किल शश्वत्किल इति पुराकल्पार्थाः।

यथा– नलेन स्म पुराधीयते, (काशिका ३.२.११८,१२२)
एवं शश्वदिति, (काशिका ३.२.११६)
इति ह चकार,
इति किल श्रूयते पुराणेषु,
इति स्म ब्रह्मवादिनः पूर्वे वदन्ति,
इति ह स्म तत्रभवान् भागुरायणः,
एवमिह गुरुभ्यः श्रूयते,
यत् किलेह तरुषण्डे पाण्डवा ऊषुः,
शश्वत् किलेदमित्थं बभूव,
एवमन्येऽपि यथा प्रयोगमनुसर्त्तव्याः,
एते चाऽनुवादतोऽन्यत्रापि वेदितव्या इति।

**(४. निषेधार्था निपाताः)**

**(४.१ प्रतिषेधार्थकाः)**

न, नञ्, अ, अन, ,नो नकिर्, किं, न हि इति प्रतिषेधार्थाः।

यथा– युगपन्न एकधर्माणाम्,
नेन्द्रं देवममंसत, (ऋवे. ८.३.४)
शश्वत् त्वम् अब्राह्मण इव भाषसे,
अनोपमा ते बुद्धिः,
तस्य तुल्योऽपि नो भवान्,
न किर्ग्रामं गमिष्यसि,
किं गतेन करिष्यसि,
न हि प्रेमा निमित्ते सति इति।

**(४.२. निवारणार्थकाः)**

मा, माङ्, मा स्म, माकिर्, अलम्, खलु कृतम्, पर्याप्तम् इति निवारणार्थाः।

यथा— मा करिष्यसि,
मा कार्षीः, (निरुक्तम् १.५.८)
मा स्म करोः,
माकिर्नेशन्माकीं रिषत्, (ऋवे. ६.५४.७)
अलं कृत्वा,
खलु कृत्वा,
कृतं साहसेन,
पर्याप्तं भयेन इति।

**(४.३ अपाकरणार्थाः)**

आः, ई, ओम्, हुम्, फट्, धिक्, खर्, अरे इत्यपाकरणार्थाः॥

यथा— आः पाप! प्रतिहतोऽसि,
ई इतो निष्पत,
ओम् किमेवं वदसि,
हुं णिल्लज्ज ओसर,
फट् अपख्याकरोऽसि,
धिक् त्वा जाल्म,
खर् दुष्टे पिशाचि,
अरे दुरात्मन् इति।

**(४.४ असूयार्थाः)**

अङ्ग, हि, अहो, हुं, हे, हये, आरे, अररे इत्यसूयार्थाः।

यथा— अङ्ग! कूज—३ इदानीं ज्ञास्यसि जाल्म,
स हि व्याहरतु कथं हि व्याकरिष्यति, (निरुक्तम् १.५.५)
वृषलग्राममहो गमिष्यसि,
हुं गमिष्यामि ग्रामम्,
हे देवदत्त!, (काशिका ८.२.८५)
हये जाये मनसा तिष्ठ घोरे, (ऋवे. १०.९५.१)
आरे नाहमुन्मत्तः,
अररे महाराजं प्रति कुतः क्षत्रियाः इति । (उराच. ४.२७/२८)

**(४.५ गर्हणार्थाः)**

कथम्, यत्, यदि, यदा, जातु, अपि, यच्च, यत्रेति गर्हणार्थाः।

यथा– कथं नामाऽत्रभवान् वृषलं याजयेत्,
यत् तत्रभवान् वृषलं याजयेत्,
यदि तत्रभवान् वृषलं याजयेत्,
यदा तत्रभवान् वृषलं याजयेत्,
जातु तत्रभवान् वृषलं याजयेत्,
अपि तत्रभवान् वृषलं याजयेत्,
यच्च तत्रभवान् वृषलमयाजयिष्यत्,
यत्र तत्रभवान् वृषलमयाजयिष्य इति ।

**(४.६ विनिग्रहार्थाः)**

ह, अह, तुवै, त्वै, वै, वाव, वरम्, ननु इति विनिग्रहार्थाः।

यथा– अयमिदं ह करिष्यति, (निरुक्तम् १.५.२)
अयमहेदं करोतु, (निरुक्तम् १.५.२)
अयं तुवै तत्र गन्ता,
अयं त्वै ते नियोगः,
बृहस्पतिर्वै देवानां पुरोहित आसीत्,
अयं वाव हस्त आसीत्, (काशिका ८.१.६४)
वरमद्यकपोतः श्वोमयूरात्, (कासू. १.२.२९)
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः (किराता.२) इति,
एवमन्येऽपि यथाप्रयोगमनुसर्त्तव्याः,
एते च निषेधतोऽन्यत्रापि द्रष्टव्या इति।

**(५. विधिनिषेधार्था निपाताः)**

**(५.१ संबोधनार्थाः)**

हे, है, अयि, अङ्ग, हो, अहो, हंहो, भोः इति संबोधनार्थाः।

यथा– हे देवदत्त,
है यज्ञदत्त, मभा. ८.२.८५)

अयि विष्णुमित्र,
अङ्ग माणवक,
हो अग्निहोत्रिन्,
अहो महाराज,
हं हो महाब्राह्मण,
भोः पान्थ! प्रवर्त्तस्व निवर्त्तस्व वा इति।

**(५.२ अनुकम्पार्थाः)**

'अ, इ, उ, ए, ओ, आ, ई, ऊ' इत्यनुकम्पार्थाः।

यथा— अ अवेहि,
इ इन्द्रं पश्य,
उ उत्तिष्ठ,
ए इत एहि,
ओ ओषति त्वां तरणिः,
आ आगतस्ते तातः,
ई ईक्षितोऽसि गच्छ,
ऊ ऊषरे बीजं वपसि इति।

**(५.३ वितर्कार्थाः)**

किम्, नु, नूनम्, आहो, उत, स्वित्, वा, इव इति वितर्कार्थाः।

यथा— किमयं स्थाणुः किं पुरुषः,
अहिर्नु रज्जुर्नु, (काशिका ८.२.९८)
न नूनमस्ति नो श्वः, (ऋवे. १.१७०.१, निरुक्तम् १.६.१)
स्थाणुरयमाहो पुरुषः,
धूमोऽयमुत कपोतः,
पद्ममेतन्मुखं स्विद् भाति,
हन्ताहं पृथिवीमिमां निदधानीह वेह वा, (ऋवे. १०.११९.९, निरुक्तम् १.४.२३)
ताम्यतीव मे वत्सो मकरन्दः (मामा ३.१८) इति।

(५.४ **प्रश्नार्था:**)

सत्यम्, किम्, हि, कच्चित्, एवम्, अपि, अथ, उत इति प्रश्नार्था:। यथा—

सत्यं भोक्ष्यसे?, (काशिका ८.१.३२)

किं देवदत्त: पचति?,

कटं करिष्यसि हि?, (काशिका ८.२.९३)

कच्चिज्जीवति मे माता?, (काशिका ३.३.१५३)

एवमेतद् देवदत्त?,

अपि क्रियार्थं सुलभं समित्कुशम्, (कुसं. ५.३३)

देवोऽयमथ मानुष:,

उत दण्ड: पतिष्यति? (काशिका ३.३.१५२) इति।

(५.५ **पक्षान्तरार्था:**)

ननु, पुन:, हि, तु, तर्हि, यावत्, यावता, अथो, चिद् इति पक्षान्तरार्था:।

यथा— नन्वरण्यमेतन्न गृहम्,

स पठति अयं शेते,

इदं हि करिष्यति,

यत् स रोदित्ययं तु हसति,

यद्येवं तर्हि गम्यते,

जानेऽन्योऽ(यम्) यावत् स एव,

जाने गतो भवान् यावताऽद्यापि न याति, (नायाति)

अथो शरस्तेन मदर्थमुज्झित:, (सक. पृ. ३३)

कश्—चिद् भुङ्क्ते, कश्—चिद् भोजयति, इति।

(५.६ **हेत्वपदेशार्था:**)

हि, नु, अत:, इति, यत्, तत्, येन, तेने'ति हेत्वपदेशार्था:।

यथा— इदं करिष्यति हि वत्सक एहि/इदं हि करिष्यति (सि वत्सक एहि)

किमिह नु धानका:,

अतस्त्वामर्थयामि,

हस्तीति पलायते,

यदयं ददाति तत् सुभगः,
येन लभते तेन स्तौति इति,
एवमन्येऽपि यथाप्रयोगमनुसर्त्तव्याः,
एते च विधिनिषेधादन्यत्रापि वेदितव्या इति।

**(६. अविधिनिषेधार्था निपाताः)**

**(६.१ पदपूरणार्थाः)**

उ, उत, आहो, वै, हि, वा, खलु, स्विदिति पदपूरणार्थाः ।

यथा— किमु, किमुत, उताहो, नवै, नहि, अथवा, नखलु, आहोस्विद् इति।

**(६.२ पादपूरणार्थाः)**

कम्, ईम्, सीम्, इत्, उ, तु, हि, च इति पादपूरणार्थाः।

यथा— शिशिरं जीवनाय कम्, (निरुक्त १.१०.१)
ए (आ+ई) मं सृजता सुते, (ऋवे. १.९.२, निरुक्तम् १.१०.२)
प्र सीमादित्यो ऋ सृजद् विधर्त्ता, (ऋवे.२.२८.४, निरुक्तम् १.७.३)
तमिद् (म् इ)द्वर्धन्तु नो गिरः , (ऋवे.८.९२.२१,निरुक्तम् १.१०.३)
अयम् उ ते समतसि, (ऋवे. १.३०.४; निरुक्त १.११.४)
देवः स तु, न मानुषः,
इन्दवो वामुशन्ति हि, (ऋवे. १.२.४)
विलोलदृष्टं हरिणाङ्गनासु च (कुसं. ५.१३) इति।

**(६.३ वाक्यपूरणार्थाः)**

एते च, अन्ये च, नूनम्, इव, एव इति खलु इत्यादयो वाक्यपूरणार्थाः।

यथा— वि सीम् अतः सुरुचो वेन आवः, (तैसं. ४.२.८.२ निरुक्त १.७.३)
नरं च नारायणमेव चेति,
नूनं सा ते प्रति वरं जरित्रे, (ऋवे. २.११.२१, निरुक्तम् १.७.१)
कथमिव एतद् भविष्यति,
एवा ह्येव एवा हीन्द्र, (तैआ. १.२०, काशिका ६.३.१३६)
अथो खल्वाहुः,

अभीषुणः सखीनाम्, (ऋवे.४.३१.३,काशिका६.३.१३४; ८.३.१०७, ८.४.२७)

आ एवं नु मन्यसे इति। (मभा. काशिका १.१.१४)

**(६.४. अलङ्कारपूरणार्थाः)**

भङ्गश्लेष–भाषाश्लेष–यमक–वक्रोक्ति–चित्र–अनुप्रास–पदावृत्ति–प्रश्नोत्तर–प्रभृतयोऽलङ्काराः। तदर्थाः यथा–

**(भङ्गश्लेषार्थाः)**

न वार्यन्ते, न चार्यन्ते, न स्मार्यन्ते, न हसन्ति, न हीयन्ते न वैरायते इति भङ्गश्लेषे,

**(भाषाश्लेषार्थाः)**

स हि अहो रणे कत्थतेपि योनराया इति भाषाश्लेषे,

**(यमकश्लोके)**

योषितां गात्रं न खलूनं नखलूनमिति यमकश्लोके,

**(वक्रोक्तौ)**

शस्त्रं न खलु वोढव्यमिति वक्रोक्तौ,

**(चित्रे)**

ननु हो मथना राघो घोरा नाथ महो नु न' इति चित्रे,

**(अनुप्रासे)**

'स हि महीशो वर्त्तत' इत्यनुप्रासे,

प्रासे प्रासेऽमुना रणे इति पदावृत्तौ,

का ननाद तिमिरादपि काली इति प्रश्नोत्तरे' इति।

**(६.५ वाक्यालङ्कारार्थाः)**

आर्षिक, आर्षिपुत्रक, आर्षीक, वैदिकादि–वाक्यानामलङ्कार–हेतवो वाक्यालङ्कारार्थाः यथा–

अथो, खलु, त्वयि, तर्हि, 'अथ खलु एतर्हि', 'अहो नु खलु भोः',

'इति ह स्म भगवान् पुनर्वसुरात्रेयः',

न ह वै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ति, (छाउ. ८.१२.१)

न वा अरे जायायै कामाय जाया प्रिया भवति, (बृउ. ४.५)

न वा उ एतन्म्रियसे न रिष्यसि इति। (ऋवे. १.१६२.२१)

**(६.६ पदसंस्कारार्था:)**

पदसंस्कारस्तु द्विधा विधिनिषेधरूपाभ्याम्। तयो: –

१. प्लुतविधि:, २. द्विर्वचनविधि:, ३. लडादिविधि:, ४. पररूपादिविधिरिति **विधिरूप:**।

१. पररूपादिप्रतिषेध:, २.संहितादिप्रतिषेध:, ३. पदादेशादिप्रतिषेध:, ४. निघातप्रतिषेध इति **निषेधरूप:**। तत्र –

**(६.६.१ विधिरूप: पदसंस्कारार्था:)**

**(१. प्लुतविधि:)**

है हे प्रयोगे हैहयो:,
ओमभ्यादाने,
ब्रूहि प्रेष्य श्रौषड् वौषडावहानामादे: (८.२.८५–८७–९१) इति प्लुतविधि:।

यथा– देवदत्त है ३,
हे ३ देवदत्त,
ओम् ३ अग्निमीडे पुरोहितम्,
अग्निमा ३ वह, (तैब्रा. ३.५.३.२)
अस्तु श्रौ ३ षट्, (तैसं. १.६.११.१,२)
वौ ३ षट् इति।

**(२. द्विर्वचनविधि:)**

परेर्वर्जन (८.१.५),
प्रसमुपोद: पादपूरणे (८.१.६),
उपर्यध्यस: सामीप्ये (८.१.७) इति द्विर्वचनविधि:।

यथा– परि परि त्रिगर्त्तेभ्यो वृष्टो देव:, (काशिका ८.१.५)
प्र प्रायमग्निर्भरतस्य शृण्वे, (ऋवे. ७.८.४)

स समिद्युवसे वृषन्, (ऋवे. १०.१९१.१)

उपोप मे परामृश, (ऋवे. १.१२६.७)

किं नो दुदु हर्षसे दातया उ, (ऋवे. ४.१.९)

उपर्युपरि ग्रामम्।

**(३. लडादिविधिः)**

यावत्पुरानिपातयोर्लट् (३.३.४),

जातुयदोर्लिङ् (३.३.१४७),

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा (३.४.१८) इति लडादिविधिः।

यथा— यावद् भुङ्क्ते,

पुरा व्रजति,

जातु तत्रभवान् वृषलं याजयेत्,

अलं कृत्वा,

खलु कृत्वा इति।

**(४. पररूपादिविधिः)**

ओमाङोश्च (६.१.९५),

अव्यक्तानुकरणस्यात इतौ (६.१.९८),

आङ्माङोश्च (६.१.७४) इति पररूपादिविधिः।

यथा— अद्योम्, आद्योढा, अद्येव, झडिति, आच्छादयति, माच्छिददिति।

**(६.६.२ निषेधरूपाः पदसंस्कारार्थाः)**

**(१. पररूपादिप्रतिषेधः)**

एवे चानियोगे,

नाम्रेडितस्य,

न माङ्योगे (६.१.९४ वा. ९९;) इति पररूपादिप्रतिषेधः।

यथा— अद्यैव गच्छ,

इहैव तिष्ठ,

'पटत् पटदि'—ति करोति

मा कार्षीत्,
मा स्म कार्षीत्,
मा स्म करोत् इति।

**(२. संहितादिप्रतिषेधः)**

निपात एकाजनाङ् (१.१.१४),
ओत् (१.१.१५),
संबुद्धौ शाकल्यास्येतावनार्षे (१.१.१६) इति संहिताप्रतिषेधः।

यथा— अ अवेहि,
इ इन्द्रं पश्य,
उ उत्तिष्ठ,
आ एवं नु मन्यसे,
अहो आश्चर्यम्,
भानो इति।

**(३. पदादेशादिप्रतिषेधः)**

न चवाहाहैवयुक्ते (७.१.२४),
नानोर्ज्ञः (१.३.५८),
समासेऽनञ्पूर्वे क्त्वो ल्यप् (७.१.३७) इति पदोदशादिप्रतिषेधः।

यथा— ग्रामो युष्माकं च ग्रामोऽस्माकं च
ग्रामो युष्माकमेव ग्रामोऽस्माकमेव
पुत्रमनुजिज्ञासति
अस्नात्वा भुङ्क्ते इति।

**(४. निघातप्रतिषेधः)**

निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् (८.१.३०),
चादिषु च (८.१.५८),
चवायोगे प्रथमा (८.१.५९) इति निघातप्रतिषेधः।

यथा— यद् देवदत्तः पचति,

यदि देवदत्तः पचति,

देवदत्तः पचति च खादति च

देवदत्तः पचति वा खादति वा,

गर्दभाँश्च कालयति वीणां च परिवादयति,

गर्दभान् वा कालयति वीणां वा परिवादयति इति।।

**(३. अव्ययप्रातिपदिकेषु गतिसंज्ञाः)**

समासार्हा निपाता एव कतिपयेऽपि गतयः।

तद्‌यथा—(अष्टाध्यायीसूत्राणि)

| | | |
|---|---|---|
| प्रादयः | १.४.५८ | प्रपचति, पराकरोति |
| क्रियायोगे | १.४.५९ | |
| गतिश्च | १.४.६० | |
| ऊर्यादिच्विडाचश्च | १.४.६१ | ऊरीकरोति |
| अनुकरणं चानितिपरम् | १.४.६२ | खाट्कृतम्, खाट्करोति |
| आदरानादरयोः सदसती | १.४.६३ | सत्कृत्य, सत्कृतम्, यत् सत्करोति, असत्कृतम्, यदसत्करोति |
| भूषणेऽलम् | १.४.६४ | अलङ्कृत्य, अलंकृतम्, यदलङ्करोति |
| अन्तरपरिग्रहे | १.४.६५ | अन्तर्हत्य, अन्तर्हतम्, यदन्तर्हन्ति |
| कणेमनसी श्रद्धाप्रतीघाते | १.४.६६ | कणेहत्य पयः पिबति, मनो हत्य पयः पिबति |
| पुरोऽव्ययम् | १.४.६७ | पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति |
| अस्तं च | १.४.६८ | अस्तङ्गत्य सविता पुनरुदेति, अस्तङ्गतानि धनानि, यदस्तङ्गच्छति |
| अच्छगत्यर्थवदेषु | १.४.६९ | अच्छगत्य, अच्छगतम्, यदच्छगच्छति, अच्छोद्य, अच्छोदितम्, यदच्छगच्छति |
| अदोऽनुपदेशे | १.४.७० | अदःकृत्य, अदः कृतम्, यददःकरोति। उपेदशो मध्यमा वाक् |
| तिरोऽन्तर्धौ | १.४.७१ | तिरोभूय, तिरोभूतम्, यत् तिरोभवति तिरः |
| विभाषाकृञि | १.४.७२ | तिरःकृत्य, तिरस्कृत्य, तिरस्कृतम्, यत्तिरस्करोति, तिरस्कृत्वा, तिरःकृत्वा |
| उपाजेऽन्वाजे | १.४.७३ | उपाजेकृत्य / कृत्वा, अन्वाजेकृत्य / कृत्वा |

| | | |
|---|---|---|
| साक्षात्प्रभृतीनि च | १.४.७४ | साक्षात्कृत्य, साक्षात्कृत्वा, मिथ्याकृत्य, मिथ्याकृत्वा (२१—शब्दाः) |
| अनत्याधान उरसिमनसी | १.४.७५ | उरसिकृत्य, उरसिकृत्वा, मनसिकृत्य, मनसिकृत्वा |
| मध्ये पदे निवचने च | १.४.७६ | मध्येकृत्य, मध्येकृत्वा, पदेकृत्य, पदेकृत्वा, निवचनेकृत्य/कृत्वा |
| नित्यं हस्तेपाणावुपयमने | १.४.७७ | हस्तेकृत्य, पाणौकृत्य। उपयमनं दारकर्म |
| प्राध्वं बन्धने | १.४.७८ | प्राध्वंकृत्य |
| जीविकोपनिषदावौपम्ये | १.४.७९ | जीविकाकृत्य, उपनिषत्कृत्य, उपनिषत्कृतम् |
| ते प्राग्धातोः | १.४.८० | (ते उपसर्गाः) |
| छन्दसि परेऽपि | १.४.८१ | याति नि हस्तिना, नियाति हस्तिना, हन्ति नि मुष्टिना, मुष्टिना निहन्ति |
| व्यवहिताश्च | १.४.८२ | आमन्द्रैरिन्द्र! हरिभिर्याहि। आयाहि। |

**(४. अव्ययप्रातिपदिकेषु उपसर्गाः)**

गतिविशेषा एव प्रादय उपसर्गाः।

**प्र—पराऽप—समन्वव—निर्दुर्व्याङ्न्यधयोऽप्यतिसूदभयश्च ।**
**प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥ ३५॥**
(न्यासे १.१.१४)

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ ३६॥** (६.२.३७)
**हितादिषु समो म्लोपं पाठं चाऽत्र श्रदन्तरोः ॥ ३७॥** (न्यासे ३.३.१०६)

एवमेते विंशतिर्वपिसश्रदन्तर्भिस्सह पञ्चविंशतिर्भवन्ति (व<अव, पि<अपि, स+श्रद्+अन्तर)
(निरुक्तम् १.३.३—२२)

ते खलु (उपसर्गाः) — **१. वाचकाः, २. द्योतकाः, ३. विशेषकाः, ४. सहाभिधायकाः, ५. कार्यार्थकाः, ६. निरर्थकाश्चेति** षोढा हि विप्रथन्ते। तेषु —

**(१. वाचकाः )**

**वाचका** यथा 'प्रगता ऋषभा अस्माद् वनात् प्रर्षभं वनम् (मभा. १.४.६०)
परागता असवोऽस्येति परासुः
अपगतो मन्युरस्य अपमन्युः
सङ्गतमक्षेण समक्षम् (काशिका ५.४.१०७)

अनुप्राप्तो नासिकामनुनासिक:,
अवक्रुष्ट: कोकिलया अवकोकिल: (मभा. १.४.७९),
मक्षिकाणामभावो निर्मक्षिकम् (मभा. २.१.६),
ऋद्ध्यभावो यवनानां दुर्यवनम्,
विरुद्ध: पक्षो विपक्ष:,
आदाय युध्यते तदिति आयुधम् (मभा. ३.३.५८),
अत्ययो वातस्य निवातम्,
अधिगतमक्षेण अध्यक्षम्,
अपिहित: शल: अपिशल:,
अतीत: श्वानमतिश्वो वराह: (काशिका ५.४.८६),
समृद्धिर्मद्राणां सुमद्रम् (काशिका २.१.६),
उद्भूतोऽत्यर्थमुत्तम:,
अभिलक्ष्यं मुखमस्याभिमुख:,
प्रतिनिधेय: काय: प्रतिकाय:,
परिम्लानोऽध्ययनाय पर्यध्ययन: (काशिका १.४.७९),
उपेत्याधीयतेऽस्मादित्युपाध्याय: (मभा. ३.३.२०) ।

एवम् अवगतवान् कोटम् अवकोट:,
अपिहित: कायतीति पिक:
संपन्नं ब्रह्म बाभ्रवाणां सब्रह्म (काशिका २.१.६),
श्रद्धीयत इति श्रद्धा (मभा १.४.५९),
अन्तर्धीयते (इति) अन्तर्धि: (मभा. १.४.६५),

**(२. द्योतका:)**

**द्योतका** यथा– प्रतिष्ठते, पराक्रमते, अपकरोति, संक्रीडति, अनुकम्पते, अवधत्ते, निर्विवेश, दुर्ललित:, व्याददाति, आह्वयते, निशमयति, अधिकुरुष्व, अपिदधाति, अतिशेते, सुरभि:, उत्पादयति, अभिधत्ते, प्रतीक्षते, परिणमते, उपायंस्त।

एवं वधत्ते, पिधत्ते श्रद्धत्ते, सहित:, अन्तर्दधाति इति।।

(३. **विशेषकाः)**

**विशेषका**स्तु द्विधा प्रकृत्यर्थविशेषकाः, प्रत्ययार्थविशेषकाश्च। तेषु –

**प्रकृत्यर्थविशेषका** यथा–

प्रवर्धते, पलायते, अपवदते, संसरति, अनुमन्यते, अवलोकते, निष्कर्षति, दुर्भवति, विलोकते, आलोकते, निषीदति, अधिवसति, अपिनह्यति, अतिवर्त्तत, सुभवति, उद्भवति, अभ्येति, प्रतिपद्यते, परिगणयति, उपदधाति एवं 'वतंसः पिनद्धवान् सततम् **श्रद्धनः** अन्तर्भवति।

**प्रत्ययार्थविशेषका** यथा–

मनस्वी, सुभवति, सुमनायते (३.१.१२), दुर्भवति, दुर्मनायते (३.१.१२) एवम् अतिमनायते। पुच्छमुदस्यति, उत्पुच्छयते, (३.१.२०) व्यस्यति, विपुच्छयते, पर्यस्यति, परिपुच्छयते, भाण्डं समारचयति संभाण्डयते, चीवरं सञ्चिनोति सञ्चीवरयते (३.१.२०), हस्तेनापक्षिपति अपहस्तयति, वर्मणा संनह्यति संवर्मयति, पाशेन संयच्छति संपाशयति, चूर्णैरवध्वंसयति अवचूर्णयति, तूलैरवकुष्णाति अवतूलयति, हस्तिनाऽतिक्रामति अतिहस्तयति, सेनयाभियाति अभिषेणयति, वीणयोपगायति उपवीणयति, वास्या परिच्छिनत्ति परिवासयति, श्लोकैरुपस्तौति उपश्लोकयति, लोमान्यनुमार्ष्टि अनुलोमयति, पाशान् विमोचयति विपाशयति, तूस्तानि विहन्ति वितूस्तयति, रूपं निरीक्षते निरूपयति वस्त्रं परिदधाति परिवस्त्रयति, पर्य्याणमुत्तानयति उत्पर्याणयति इति।।

ननु एतेऽपि क्रियाविशेषाणां वाचकाः कस्मान्न भवन्ति? यद्धि यत्प्रयोगादवगम्यते तत् तस्य वाच्यं भवति।

नैवम्, 'भृशादिभ्यो भुव्यच्वेः' (३.१.१२) इत्यादिभिर्भवत्याद्यर्थ एव प्रत्ययोत्पत्तेः।

मैवं वोचः, नाहं क्यङन्तं पृच्छामि।

किं तर्हि ?

ण्यन्तम्। तत्र 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे' (३.१.१७) इति वर्त्तते। ततश्च करोत्यर्थलक्षणे धात्वर्थसामान्ये णिङ्णिचोर्विधानात्, पुच्छस्योदसनं करोत्युत्पुच्छयते, सेनयाभियानं करोत्यभिषेणयति इति करोत्यर्थस्य प्रत्ययेन उदसनाभियानादेस्तूपसर्गेणाविधाने वाचकत्वमेषां भविष्यतीति।

उच्यते— नेह 'करणे' इत्यनेन सकलधात्वर्थानुयायिक्रियास्वमान्यं प्रतिनिर्दिश्यते, अपि त्वनवधारितात्मस्वरूपा उदसनाभियानादय: क्रियाविशेषा एव।

कथमिदं ज्ञायते इति चेत्,

आचार्यप्रवृत्तिर्ज्ञापयति—यदयं

(१) 'मुण्ड—मिश्र—श्लक्ष्ण—लवणेभ्य: करणमात्रे प्रत्ययमुदाहरति।
तद्यथा— मुण्डं करोति मुण्डयति, एवं मिश्रयति, श्लक्ष्णयति, लवणयति

(२) हलिकलिकृत तूस्तेभ्यो ग्रहणलक्षणे तद्विशेषे (प्रत्ययमुदाहरति)।
यथा— हलिमग्रहीत् अजहलत्, कलिमग्रहीद् अचकलत्, कृतं गृह्णाति कृतयति, त्वचं गृह्णाति त्वचयति,

(३) वर्णसत्यार्थवेदेभ्यस्तदाचष्टे (३.१.२५) इत्युपसर्गविशिष्टे धात्वर्थे।
यथा— वर्णमाचष्टे वर्णयति, सत्यमाचष्टे सत्यापयति, अर्थमाचष्टेऽ—र्थापयति, वेदमाचष्टे वेदापयति इति;

(४) व्रताद् भोजने तन्निवृत्तौ च। यथा पयो व्रतयति, वृषलान्नं व्रतयति—
अतोऽवगम्यते करण इत्यनेनाऽनवधारितविशेषो धात्वर्थ: प्रत्ययाभिधेयतयाऽधिक्रियत' इति।

एवं तर्हि 'सविशेषणस्यैव क्रियाविशेषस्य प्रत्ययेनोक्तत्वाद् अभिषेणयत्यादिषु उपसर्गप्रयोगो न प्राप्नोति, यथा श्येन इवाचरति श्येनायत बाष्पमुद्वमति बाष्पायते, हस्तेन निरस्यति हस्तयते एवं पादयते' इति

भवेदेतत् यत्रैक एव प्रत्ययार्थ:। यथा— उपमानादाचारे (३.१.१०), 'बाष्पोष्मभ्यामुद्वमने (३.१.१६), अङ्गान्निरसन इति।

इह तु बहव: प्रत्ययार्था:। यथा— 'पुच्छादुददसने व्यसने पर्यसने च', 'भाण्डात् समारचने विभजने च', 'चीबरादर्जने परिधाने च, मुण्डादिभ्य: 'तत्करोति, तदाचष्टे, तेनातिक्रामति' इत्यादाविति, तत्र उपात्तस्यापि क्रियाविशेषस्य प्रत्ययतो रूपसामान्यादनवधारणे तदवच्छेदायोपसर्गविशेष: प्रयुज्यते। यथा प्रत्ययार्थविशेषणपक्षे मन:शब्दादुत्पन्नेन क्यङैवोपसर्गार्थविशिष्टप्रत्ययाभिधाने 'सुमनायते,' 'दुर्मनायते,' 'अभिमनायत' इति सुदुरभय: प्रयुज्यन्ते।

एवं तर्हि 'हस्तिनातिक्रामत्यतिहस्तयती'—त्यादिवत् 'श्वेताश्वमाचष्टे श्वेतयति', 'अश्वतरमाचष्टे अश्वयति', 'गालोडितमाचष्टे गालोडयति' 'आह्वरकमाचष्टे

आह्वरयति' इत्यादावाङ्प्रयोगः प्राप्नोति।

नैवम्, अत्राङः सहाऽभिधायकत्वात्। न हि क्रामतीत्यादिवच् चष्टे इत्यस्यैकाकिनः स्वार्थाऽभिधाने सामर्थ्यमस्ति। अतो विशेषकत्वमेवैषाम्, न वाचकत्वमिति।।

**(४. सहाभिधायकाः)**

अथ सहाभिधायकाः, यथा– प्रस्नुते, प्राणिति, प्रञ्चते, प्राप्नोति, संग्रामयते, संचष्टे, संरम्भते, संधुक्षयति, अनुरुध्यते, विक्लबते, विलोकते, विश्राणयति, आचष्टे, आशास्ते, आचामति, आतङ्क्यति, निद्रायति, नियमयते, अधीते, अध्येति, अभिवादयते, परिष्वजते, उज्जासयति, उत्तंसयति' इति।

**(५. कार्यार्थाः)**

कार्यार्थाः। यथा– 'विजयते, पराजयते, न्यविक्षत, समगंस्त, अन्वकरोत्, पराकरोत्, विरराम, उपरराम, उदसिष्यति, उदसिष्यते, अपस्किरते, प्रतिचस्कार, उपस्कुरुते, प्लायते, प्रार्षभीयति, निष्टपति, अभिषेणयति, विषहते, परिष्वजते, विष्णवति, प्रहिणोति, प्रणश्यति, परिणेष्यति, अन्तर्णयति' (काशिका ८.३.६५)

**(६. निरर्थकाः)**

निरर्थकाः, यथा– प्रारभते, प्रलम्बते, प्रसूयते, प्रयच्छति, अपहरति, अपत्रपते, अपह्नुते, अभिषुणोति, निमीलति, निवार्यते, निष्ठीवति, निमज्जति, निखञ्जति, विगाहते, विराजते, विजानाति, विनश्यति, विकत्थते, विदीर्यते, आश्रयति, आश्लिष्यति, संयुज्यते, अध्यागच्छति, पर्यागच्छति इति।।

**(५. अव्ययप्रातिपदिकेषु कर्मप्रवचनीयाः –११)**

प्रादय एव क्रियाविशेषोपजनितसंबन्धावच्छेदहेतवः कर्म्मप्रवचनीयाः। यदाह–

**क्रियाविशेषजन्यानां संबन्धानां प्रकाशने ।**
**कर्म्मप्रवचनीयाः स्युर्निमित्तमवधारिताः ।। ३८।। इति।**

(संवादी चाऽत्र भर्तृहरिः वाक्यपदीये २.१९९, २.२०४ कारिकाभ्याम्)

किं पुनरमीषामवधारणम्?

कर्मप्रवचनीयसंज्ञाधिकारे 'अनुप्रभृतयः शब्दा एकादश, **लक्षणादयोऽर्था द्वाविंशति**। तद्यथा 'अनुर्लक्षणे, तृतीयार्थे, हीने (१.४.८४–८६), लक्षणेत्थंभूताख्यानभागवीप्सासु

प्रतिपर्यनवः (१.४.९०), अभिरभागे (१.४.९१), 'प्रतिः प्रतिनिधिप्रतिदानयोः (१.४.९२), अधिपरी अनर्थकौ (१.४.९३), सुः पूजायाम् (१.४.९), अतिरतिक्रमणे (१.४.९), अपिः पदार्थसंभावनाऽन्ववसर्ग–गर्हा–समुच्चयेषु (१.४.९६), अधिरीश्वरे (१.४.९७), विभाषा कृञि (१.४.९८)।

एवम् 'अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति अपि' **इत्येकादश शब्दाः।**

हेतु–[१]लक्षणम्, [२]सहार्थः, हीनता[३], [४]आधिक्यम्, [५]वर्जनम्, [६]मर्यादावचनम्, लक्षणम्[७], इत्थम्भूताख्यानम्[८], भागः[९], वीप्सा[१०], प्रतिनिधिः[११], प्रतिदानम्[१२], आनर्थक्यम्[१३], पूजा[१४], अतिक्रमणम्[१५], पदार्थः[१६], संभावना[१७], अन्ववसर्गः[१८], गर्हा[१९], समुच्चयः[२०], स्वाम्यम्[२१], अधिकारः[२२], इति **द्वाविंशतिरर्थाः।**

तत्राऽनुः सप्तार्थः, प्रतिपरी षडर्थौ, अपिः पञ्चार्थः, अध्यभी त्र्यर्थौ, उपाती द्व्यर्थौ, आङपसव एकार्थाः' इति। तेषु–

**(१. अनुः)**

अनुः हेतु[१]–लक्षण[२]–सहार्थ[३]–हीनता[४]–[५]लक्षणेत्थंभूताख्यान–भाग[६]–वीप्सासु[७] कर्मप्रवचनीयः। तद्योगे द्वितीया यथा– 'शाकल्यस्य संहितामनुप्रावर्षत्' पर्वतमन्ववसिता सेना, अनुशाकटायनं वैयाकरणाः, वृक्षमनु विद्योतते विद्युत्, साधुर्देवदत्तो मातरमनु, यदत्र मामनुस्यात्, वृक्षं वृक्षमनुतिष्ठति' इति।

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।

नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः।

तथाहि शाकल्यस्य संहितामनु प्रावर्षदिति संहिताप्रवर्षणयोर्हेतुफलभूतयोर्लक्ष्यलक्षणभावो निशमयतिक्रियोपजनित इत्यनुना प्रकाश्यते 'शाकल्यस्य संहितामनु निशम्य प्रावर्षत्' इति। एवमन्यत्राऽप्यवगन्तव्यम्। इत्यनुः सप्तार्थः।

**(२. प्रतिः)**

लक्षणेत्थम्भूताख्यान–भाग–वीप्सा–प्रतिनिधि–प्रतिदानेषु प्रतिः।

स चतुर्षु द्वितीयां, द्वयोः पञ्चमीमुत्पादयति। यथा–'वृक्षं प्रति विद्योतते, साधुर्देवदत्तो मातरं प्रति, यदत्र मां प्रति स्यात्, वृक्षं वृक्षं प्रति सेकः, अभिमन्युरर्जुनतः प्रति, माषानस्मै तिलेभ्यः प्रति प्रयच्छति।

**(३. परिः)**

लक्षणेत्थंभूताख्यानभागवीप्सावर्जनानर्थक्येषु परिः। सोऽपि चतुर्षु द्वितीयां द्वयोः पञ्चमीमुत्पादयति। यथा–'वृक्षं परि विद्योतते, साधुर्देवदत्तो मातरं परि, यदत्र मां परि स्यात्, वृक्षं वृक्षं परि सेकः, परि परि त्रिगर्त्तेभ्यो वृष्टो देवः, विश्वप्स्निया विश्वतस्परि इति प्रतिपरी षडर्थौ।

**(४. अपिः)**

[१]पदार्थ–संभावना[२]ऽन्ववसर्ग[३]–[४]गर्हा–[५]समुच्चयेष्वपिः।

तस्यैतेषूपसर्गसंज्ञा बाध्यते।

(१. पदार्थः)

पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः। सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्। मात्रा बिन्दुः स्तोकमित्यस्यार्थे अपिशब्दो वर्त्तते।

(२. संभावना)

अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणं संभावना। 'अपि सिञ्चेन्मूलकसहस्रम्', 'अपि स्तुयाद् राजानम्' इति।

(३. अन्ववसर्गः)

कामचारानुज्ञानमन्ववसर्गः। 'अपि सिञ्च', 'अपि स्तुहि' इति।

(४. निन्दा)

निन्दा गर्हा। अपि सिञ्चेत् पलाण्डुम्', 'अपि स्तुयाद् वृषलम्' इति।

(५. समुच्चयः)

अनेकक्रियोपनिपातः समुच्चयः। 'अपि सिञ्च', 'अपि स्तुहि', सिञ्च च स्तुहि चेत्यर्थः। उपसर्गबाधनात् षत्वं न भवति। इत्यपिः पञ्चार्थः।

**(५. अधिः)**

अधिरानर्थक्याऽधिकारस्वाम्येषु कर्मप्रवचनीयः।

स आद्ययोः 'गतिर्गतौ' (८.१.७०), 'तिङि नोदात्तवति (८.१.७१) इति गत्युपसर्गसंज्ञा– बाधनान् निघातादिकं नानुभवती'–ति। यथा–'कुतोऽध्यागच्छति, यदत्र मामधिकरिष्यति' इति

स्वाम्ये तु द्विधा १. अधियोगे सप्तमी भवति कदाचित् स्वामिनः

२. कदाचित् स्वात्। यथा –

अधि ब्रह्मदत्ते पञ्चाला:, अधि पञ्चालेषु ब्रह्मदत्त:' (इति)।

**(६. अभि:)**

अभिर्लक्षणेत्थंभूताख्यानवीप्सासु द्वितीयामुत्पादयति।

यथा– वृक्षमभि विद्योतते, साधुर्देवदत्तो मातरमभि, वृक्षं वृक्षमभि सिञ्चति।

इत्यध्यभी त्र्यर्थौ।

**(७. उप:)**

हीनाऽधिकार्थयो: उप:। तत्र यथासंख्यं द्वितीयासप्तम्यौ।

यथा– उपार्जुनं योद्धार:, उप खार्यां द्रोण:' इति

**(८. अति:)**

अति: पूजायामतिक्रमणे च। तत्र पूजा स्तुति:। निष्पन्नेऽपि फले क्रियाप्रवृत्तिरतिक्रमणम्। यथा–'शोभनं स्तुतम्', अति स्तुतं भवता, अति सिक्तमेतद् भवता' इति।

उपसर्गसंज्ञाबाधनात् षत्वं न भवति। इत्युपाती द्व्यर्थौ।

**(९. आङ्)**

आङ् मर्यादावचने पञ्चमीमुत्पादयति–'आ पाटलिपुत्राद् वृष्टो देव:।' वचनग्रहणादभि– विधिरपि गृह्यते। तत्रापीदमेवोदाहरणम्।

**(१०. अप:)**

अपो वर्जने पञ्चमीमुत्पादयति। 'अप त्रिगर्त्तेभ्यो वृष्टो देव:'।

**(११. सु:)**

सु: पूजायामुपसर्गसंज्ञांबाधते। 'सुस्तुतं भवता', 'सुसिक्तं भवता' इति षत्वं न भवती'ति। इत्याङपसव एकार्था इति।।

**(६. अव्ययप्रातिपदिकेषु विभक्तिप्रतिरूपाणि)**

अव्ययानि द्विधा –

**सुबन्ततिङन्तानुकारीणि** विभक्तिप्रतिरूपाणि चेति।

तानि प्रत्येकं षोढा। यथा– १. प्रकृत्यर्थानि, २. प्रत्ययार्थानि, ३. उभयार्थानि, ४. अनुभयार्थानि, ५. प्रकृत्यन्तरार्थानि, ६. प्रत्ययान्तरार्थानि चेति। तेषु –

**(१) सुबन्तानुकारीणि विभक्तिप्रतिरूपाणि** चेति –

प्रकृत्यर्थानि यथा– उच्चै:, नीचै:, चिराय, विहायसेति।

प्रत्ययार्थानि यथा— आरात्, अकस्मात्, एकपदे, प्रगे इति।

उभयार्थानि यथा— अहं शुभं पारे मध्ये इति।

अनुभयार्थानि यथा— ऋते दिष्ट्या साक्षात् अह्नाय इति।

प्रकृत्यन्तरार्थानि यथा— कृतं दिवा दोषा अन्तरेणेति।

प्रत्ययान्तरार्थानि यथा— सायं स्वयं चिरस्य परस्परस्येति।

**(२) तिङन्तानुकारीणि (विभक्तिप्रतिरूपाणि)** —

प्रकृत्यर्थानि यथा—'मन्ये शङ्के अये आम' इति।

प्रत्ययार्थानि यथा— एहि अपेहि पश्य पश्यत' इति।

उभयार्थानि यथा— 'अस्ति, असि, अस्मि, ब्रूहि' इति।

अनुभयार्थानि यथा— याति, नयाति, वर्त्तते नवर्त्तत इति।

प्रकृत्यन्तरार्थानि यथा— अस्तु, भवतु, पूर्यते, आस इति।

प्रत्ययान्तरार्थानि यथा— आह, स्यात्, ब्रूयात्, भूयात् इति।

**(अव्ययभेदाः)**

स्वरादिनिपातमव्ययम् (१.१.३७) इत्यव्ययप्रकरणे

१. कृन्मेजन्तः (१.१.३९) क्त्वातोसुन्कसुनः (१.१.४०)

२. तद्धितश्चासर्वविभक्तिः (१.१.३८)

३. अव्ययीभावश्च (१.१.४१) इति पठ्यते। तत्र —

(१) 'आम्, क्त्वा, ल्यप्, तुमुन्, णमुल्, खमुञ्' इति **कृतः षड् भाषायाम्।**

ते तु **कृतः** 'क्रियारूपाः, क्रियाफलरूपाः, क्रियाविशेषणरूपाः, क्रियावधिरूपाः, क्रियाकर्मरूपाः, क्रियावयवरूपाश्च' भवन्ति। तेषु—

१. क्रियारूपा यथा— चकासाञ्चकार, कारयामास, बिभराम्बभूव, विदाङ्कुर्वन्तु, अलंकृत्वा, खलु कृत्वा, अलमालप्य, खल्वालप्य, अलं भोक्तुम्, 'कालो भोक्तुम्, श्रोतुं श्रोत्रम्, द्रष्टुं चक्षुः' इति।

२. क्रियाफलरूपा यथा— भोक्तुं व्रजति, पक्तुमपतिष्ठते, भोक्तुं भुङ्क्ते पक्तुं पचति, भोक्तुं ग्लायति, भोक्तुं घटते, भोक्तुं क्षमते, भोक्तुं सहते, भोक्तुमस्ति, भोक्तुं विद्यते, भोक्तुमीष्टे, भोक्तुं प्रभवति' इति।

३. क्रियाविशेषणरूपा यथा— इत्थङ्कारम्, अन्यथाकारम्, यथाकारमृ, तथाकारम्,

उच्चैःकारम्, नीचैःकारम्, तिर्यक्कारम्, मुखतःकारम्, नानाभावम्, द्विधाभावम्, तूष्णींभावम्, अन्वग्भावम्' इति।

४. क्रियावधिरूपा यथा—

भुक्त्वा व्रजति, अपमित्य याचते, अग्रेभोजं व्रजति, द्व्यहात्यासं गाः पाययति, द्व्यङ्गुलोत्कर्ष खण्डिकाश्छिनत्ति, शय्योत्थायं राजद्वारमेति, कन्यादर्शं वरयति, ब्राह्मणवेदं भोजयति, यावज्जीवमधीते, चर्मपूरं स्तृणाति, गोष्पदपूरं वृष्टो देवः, चेलक्नोपं वृष्टो देव' इति।

५. क्रियाकर्मरूपा यथा—

शक्नोति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम्, आरभते भोक्तुम्, पारयति भोक्तुम्, प्रक्रमते भोक्तुम्, लभते भोक्तुम्, अर्हीत भोक्तुम्, इच्छति भोक्तुम्, कामयतेभोक्तुम्, एषितुमिच्छति, कमितुं कामयते' इति।

६. क्रियावयवरूपा यथा—

मूलकोपदंशं भुङ्क्ते, दण्डोपघातं गाः कालयति, पार्श्वोपपीडं शेते, व्रजोपरोधं गाः सादयति, पाण्युपकर्षमुत्थापयति, केशग्राहं युध्यन्ते, भ्रूविक्षेपं जल्पति, गेहानुप्रवेशमास्ते, नामग्राहमाकारयति, चोरङ्कारमाक्रोशति, स्वादुङ्कारं भुङ्क्ते, स्वाद्वकृत्य भुङ्क्ते' इति।

क्रियाकर्मावयवरूपाः खल्वपि संभवन्ति, यथा— स्वपोषं पुष्यति, आत्मपोषं पुष्णाति, गोपोषं पुष्यति, रैपोषं पुष्णाति, निमूलकाषं कषति, समूलकाषं कषति, समूलघातं हन्ति, पाणिघातं वेदिमाहन्ति, शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रूक्षपेशं पिनष्टि, उदपेषं पिनष्टि, अकृतकारं करोति, जीवग्राहं गृहणाति, हस्तग्राहं गृहणाति, हस्तवर्त्तं वर्त्तयति, चूडकनाशं नष्टः, सुवर्णनिधायं निहितः, ओदनपाकं पक्वः, क्रौञ्चबन्धं बद्धः, जीवनाशं नश्यति, पुरुषवाहं वहति, ऊर्ध्वशोषं शुष्कः, ऊध र्वपूरं पूर्ण' इति।

**शेषाश्छन्दसि चतुर्विंशतिर्भवन्ति।** तद् यथा—

'एश्, केन्, तवै, के, से, सेन्, असे, असेन्, क्स, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन्, तवेङ्, तवेन्, कै, इष्यै, णमुल्, तोसुन्, कसुन्' इति।

(१–२)　**एश्केनौ** तेषु कृत्यार्थे एशकेनौ। एश् अवचक्षे, केन् नावगाहे।

(३)　**तवै** कृत्यार्थे तुमर्थे च।

**कृत्यार्थे** परिधातवै, परिस्तरितवै।

**तुमर्थे** सोममिन्द्रपातवै, अन्वेतवै।

(४–२०) **(के – इष्यै)** कया(के आ)दयः **सप्तदश तुमर्थे**। तेषु–

(१) **के** दृशे विश्वाय सूर्यम्, विख्ये त्वा हरामि, (२) **से** वक्षे रायः, (३) **सेन्** ता वामेषे रथानाम्, (४) **असे** क्रत्वे दक्षाय जीवसे। (५) **असेन्** इह क्षयाय जीवसे, (६) **क्से**प्रेषे भगाय, श्रियसे, (७) **कसेन**प्येवंरूपः, स्वरे विशेषः, (८) **अध्यै**काममुपाचरध्यै, (९) **अध्यैन**प्येवंरूपः, स्वरे विशेषः, (१०) **कध्यै** इन्द्राग्नी आहुवध्यै, (११) कध्यैन्–श्रियध्यै, (१२) **शध्यै** पिबध्यै, (१३)**शध्यैन्** सह मादयध्यै, (१४) **तवेङ्** दशमे मासि सूतवे, (१५) **तवेन्** सोममिन्द्राय पातवे सुवर्देवेणु गन्तवे, कर्त्तवे, हर्त्तवे, (१६) **कै** प्रयै देवेभ्यः, (१७) **इष्यै** अपामोषधीनां रोहिष्यै, अव्यथिष्यै रोहणाय चाऽव्यथनाय चेत्यर्थः।

(२१)　तुमर्थ एव **'शकि णमुल्कमुलौ'** (३.४.१२) अग्निं देवा विभाजं नाशक्नुवन् अपलुपं नाशक्नुवन्।

(२२–२३)　ईश्वरे **तोसुन्कसुनौ** (३.४.१३)– ईश्वरोऽभिचरितोः, ईश्वरो विलिखः, ईश्वरो वितृदः। **तोसुन्कसुनौ** भावलक्षणे च।

तत्र 'स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् (३.४.१६), सृपितृदोः कसुन्' (४.३.१७)। यथा– आसंस्थातोर्वेद्यां सीदन्ति, पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्त्तोः, पुरा प्रवदितोरग्नौ होतव्यम्, पुरा प्रचरितोराग्नीध्रे होतव्यम्, आहोतोरप्रमत्तस्तिष्ठति, आतमितोरुपतिष्ठन्ते, आविजनितोः संभवाम, पुरा क्रूरस्य विसृपः, पुरा जत्रुभ्य आतृदः।

(२)　**तद्धितेष्वसर्वविभक्तिषु** (पा. १.१.३८ मभा., ५.३.१४६, ७.२.१०४, १०५, ५.४.४२, ४३, ४४, १.३.३८) तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, मान्तः, कृत्वोऽर्थाः, तसिवती, नानाञौ इति।

यथा – यतः, तत्र, इह, क्व, एकदा, एतर्हि, अधुना, इदानीम्, सद्यः, परुत्, परारि, ऐषमः, अद्य, परेद्यवि, पूर्वेद्युः, उभयेद्युः, सर्वथा, इत्थम्, पुरस्तात्, प्राक्, अधः, उपरि, उपरिष्टात्, पुरः, पश्चात्, दक्षिणात्, दक्षिणा, दक्षिणाहि, दक्षिणेन, दक्षिणतः, द्विधा, द्वेधा, द्वैधम्, एकध्यम्, बहुशो देहि, वासुदेवतः प्रति, शुक्लीभवति, अग्निसात् संपद्यते, देवत्रागच्छति पटपटाकरोति, पचतितराम्, बहुकृत्वो भुङ्क्ते, द्विर्भुङ्क्ते, सकृद् भुङ्क्ते, बहुधा भुङ्क्ते, आदितो भवति, ब्राह्मणवद् ब्रवीति, विना देवदत्तम्, नाना देवदत्तात्। (४९)

(३) **अव्ययीभावो** द्विधा (१) सत्त्वभूतार्थः,

(२) असत्त्वभूतार्थश्चे–ति। तयोः –

**सत्त्वभूतार्थो** यथा– उपकुम्भम्, सुमद्रम्, दुर्यवनम्, निर्मक्षिकम्, निःशीतम्, सब्रह्म, बहिर्ग्रामम्, सूपप्रति, मध्येसमुद्रम्, द्विमुनि, पञ्चनदम्, लोहितगङ्गम्' इति।

**असत्त्वभूतार्थो** यथा– अधिस्त्रि, प्रत्युरसम्, अनुरथम्, प्रत्यर्थम्, यथाशक्ति, सचक्रम्, यावदमत्रम्, परित्रिगर्त्तम्, आपाटलिपुत्रम्, अभ्यग्नि, द्विपरि, 'अनुगङ्गं वाराणसी' ति।

**(३. अनुकरणप्रातिपदिकम् –६)**

शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्।

यदाह व्यक्ताऽव्यक्त–वर्ण–पद–वाक्य–सादृश्योक्तयोऽनुकरणानि। तत्र –

१. व्यक्तवर्णसादृश्योक्तिर्यथा– (सक. २)

**छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते ।**
**स्वेति हेति हरेणोक्तेः स्वाहासीत् सैव रावणः ।। ३९।।**

२. व्यक्तपदसादृश्योक्तिर्यथा– (काद. २.१४७)

**गच्छेति वक्तुमिच्छामि मत्प्रिय! त्वत्प्रियैषिणी ।**
**निर्गच्छति मुखाद् वाणी मा गा इति करोमि किम् ।। ४०।।**

३. व्यक्तवाक्यसादृश्योक्तिर्यथा– (उराच. १)

**त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।**
**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण ।। ४१।।**

४. अव्यक्तवर्णसादृश्योक्तिर्यथा

**गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत् प्रावृषि कालमेघाः ।**
**अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति ।। ४२।।**

५. अव्यक्तपदसादृश्योक्तिर्यथा—

**चटच्चटिति चर्मणि च्छिमिति चोच्चलच्छोणिते**
**धगद्धगितिमेदसि स्फुटरवोऽस्थिषु ष्ठागिति ।**
**पुनातु भवतो हरेरमरवैरिराजोरसि**
**क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ।। ४३।।**

६. अव्यक्तवाक्यसादृश्योक्तिर्यथा—

**पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे**
**ततत्यज दुदुद्रुतं भभभाजनं काञ्चनम् ।**
**इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः**
**प्रगे हसितहेतवे सहचरीभिरध्यैयत ।। ४४।।**

एतेन यानि साधून्यर्थवन्ति पदानि, यानि च वाक्यानि, यच्चाशक्तिजम् असाधु शब्दरूपम्, ये चापभ्रंशाः, ये चानर्थका वर्णाः, याश्चाव्यक्तवर्ण— पदवाक्योक्तयः, तदनुकरणानां साधुत्वमुपपन्नं भवति, न प्रतिषिद्धस्य, यो ह्येवमसौ ब्राह्मणं हन्तीति तस्यानुकुर्वन् ब्राह्मणं हन्यात् सोऽपि मन्ये पतितः स्यात्।

नैवम्,

यश्च ब्राह्मणं हन्ति, यश्चानुहन्ति, उभौ तौ हतः, यस्तु खल्वेवमसौ ब्राह्मणं हन्तीति तस्याऽनुकुर्वन् कदलीस्तम्भं छिन्द्यान्न स मन्ये पतितः स्यादिति। न चानुकरणमपशब्दः। अन्यो ह्यसावपशब्दपदार्थकः साधुशब्दः, न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति, अपशब्द इत्येतस्याप्यपशब्दत्वप्रसङ्गात्। यः पुनरेवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दमभिधेयेषु प्रयुङ्क्ते सोऽपशब्दकार्येव भवतीति।।

**(४. कृत्प्रातिपदिकम् —६)**

भावकारकाभिधायिनो धातुप्रत्ययाः कृतः।

ते षोढा— **१. लिङ्गिनः २. अन्यलिङ्गिनः ३. स्वलिङ्गिनः ४. अलिङ्गिनः ५. शक्त्याद्यपेक्षिणः ६. अनुप्रयोगाद्यपेक्षिणश्च**। तेषु —

१. द्रव्यवचना अणादयो **लिङ्गिनः**। यथा– कुम्भकारः, पङ्कजम्, धात्री, दात्रम्, कारुः, कृकवाकुः इति।

२. गुणवचना ण्वुलादयोऽ**न्यलिङ्गिनः**। यथा– कारकः, कारिका, कारकम्, दर्शनीयः, दर्शनीया, दर्शनीयम् इति।

३. उत्पत्तावपेक्षितनियतलिङ्गाः 'स्त्रियां क्तिन् (३.३.९४) इत्येवमादयः **स्वलिङ्गिनः**। यथा– पक्तिः पचनम्, पाकः, व्रजः, शय्या, सुप्तम् इति।

४. असत्त्वभूतार्थत्वेनानुपगृहीत–लिङ्ग–संख्या–शक्तय–स्तुमुनादयो**ऽलिङ्गिनः**। यथा– कालो भोक्तुम्, अलं कृत्वा, खलु प्रहृत्य, नावगाहे, ईश्वरोऽभिचरितोः, ईश्वरो विलिखः इति।

५. शक्तिहेतुमल्लक्ष्यक्रियाद्यपेक्षाः शत्रादयः **शक्त्यापेक्षिणः**। यथा– व्रजता कृतम्, क्रियमाणं पश्य, आवर्जयन् वसति, चङ्क्रम्यमाणोऽधीते, पक्ष्यन् व्रजति, भोजको व्रजति इति।

६. अपेक्षितानुप्रयोगतद्धिताद्यनुषङ्गा णमुलादयो**ऽनुप्रयोगाद्यपेक्षिणः**। यथा– रैपोषं पुष्यति, चोरङ्कारमाक्रोशति, कारयाञ्चकार, कृत्रिमम्, व्यावक्रोशी, सांराविणम् इति।

(५. **तद्धितप्रातिपदिकम्** –६)

भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः। ते षोढा– १. **अलोपिनः**, २. **लोपिनः**, ३. **सर्वलोपिनः**, ४. **आदेशिनः**, ५. **प्रदेशिनः**, ६. **अप्रदेशिनश्चेति**।

तेषु –

१. निरनुबन्धा **अलोपिनः**। यथा 'अश्वत्वम्, अश्वकः, अश्वत्थामा, सभ्यः, सख्यम्, देवदत्तरूप्य इति।

२. सानुबन्धा **लोपिनः**। यथा ब्राह्मण्यम्, मृत्तिका, दाक्षिः, वैयाकरणः, स्तेयम्, कैदार्यम् इति।

३. (सर्वलोपिनः) येषां लुग्लुपादिभिः किमपि नावतिष्ठते ते सर्वलोपिनः। यथा–गर्गाः, चरकाः, पञ्चालाः, चञ्चा, गार्गी, सामग्री इति।

४. (आदेशिन:) येषामायन्नादय आदिश्यन्ते ते आदेशिन:। यथा–
ऐतिकायन:, कापेयम्, आत्मनीनम्, अश्वीयम्, क्षत्रिय: शाश्वतिकम् इति।

५. (प्रदेशिन:) प्रकृतेरादिमध्यविषया: प्रदेशिन:। यथा– बहुतृणम्, बहुराजा, सर्वक:, उच्चकै:, त्वयका, पचतकि इति।

६. (अप्रदेशिन:) तस्या एवान्त्यावयवभूता अप्रदेशिन:। यथा– वाक्त्वचम्, प्रत्युरसम्, केशाकेशि, युवजानि:, सरजसम्, निष्प्रवाणि: इति।।

**(६. समासप्रातिपदिकम् –६)**

**पृथगर्थानामेकार्थीभाव: समास:।**

स षोढा– **१. सुबन्ताभ्याम्, २. तिङन्ताभ्याम्, ३. सुप्तिङन्ताभ्याम्, ४. सुब्धातुभ्याम्, ५. सुबन्तनामभ्याम्, ६. नामभ्याञ्चेति**। तेषु–

**१. सुबन्ताभ्यां** यथा– उपकुम्भम्, राजपुरुष:, नीलोत्पलम्, अष्टाकपाल:, चित्रगु:, धवखदिरौ इति।

अत्र 'समर्थ: पदविधि:' (२.१.१) इति सामर्थ्ये सति समास:। सामर्थ्यं च सम्बन्ध:। स च द्वयोरुपसर्जनप्रधानभावे भवति। न हि प्रधानयोरुपसर्जनयोरेव वा मिथोऽनपेक्षयो: संबन्धो घटते।

प्रधानोपसर्जनभावश्च द्विधा (१) अभिधीयमान: (२) प्रतीयमानश्च।

**अभिधीयमानो व्यतिरेकविभक्ति:**, यदा वैयधिकरण्यम् 'कुम्भस्य समीपम्, राज्ञ: पुरुष' इति।

तत्रोपकुम्भमिति पूर्वपदप्रधानोऽव्ययीभाव: ।

राजपुरुष इत्युत्तरपदप्रधानस्तत्पुरुष:।

प्रधानमविचलितस्वार्थं प्रथमयैवाभिधीयते,

उपसर्जनं पुन: प्रधानाऽनुग्रहायाश्रितव्यतिरेकं षष्ठ्यादिभि:। इदं च सुबन्तत्व एव भवति।

**प्रतीयमानस्तुल्यविभक्ति:**, यदा सामानाधिकरण्यम्–'नीलं च तदुत्पलं च नीलोत्पलम्, अष्टसु कपालेषु संस्कृतोऽष्टाकपाल इति।

अयं च 'विशेषणं विशेष्येणे–(२.१.५७)–ति कर्मधारय:।

'संख्यापूर्व: (२.१.५२), 'तद्धितार्थोत्तरपदसमाहारे–च' (२.१.५१) इति च द्विगुत्वं विशेषण–विशेष्यभावेन प्रतीयमानोपसर्जनप्रधानभावयो: सामानाधिकरण्ये स्मर्यते। स च तुल्यविभक्तित्वे स्यादिति सुबन्त एव भवति।

अतश्च सर्वत्र सुबन्तेन सह सुबन्तं समस्यते इति स्मर्यते।

२. **तिङन्ताभ्यां** यथा–अश्नीतपिबता, खादतमोदता, पचतभृज्जता, उन्मृजावमृजा, आवपनिवपा 'एहि–रे–आहि रे(रा) इति।

अत्र 'आख्यातमाख्यातेन क्रियासातत्ये' (२.१.७२ गसू.) इति 'मयूरव्यंसका' दिपाठात् (२.१.७२) तिङन्तानां समास: स्मर्य्यते। 'अश्नीत' 'पिबते'त्यादि यासु क्रियासु सातत्येन विद्यते ता एवमुच्यन्ते। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति 'उदादीनां रे' इत्येतस्य चाख्यातत्वं भवति।।

३. **सुप्तिङन्ताभ्यां** यथा– अपचसि, प्रावर्षत्, अनुव्यचलत्, अस्तिक्षीरा, एहिवाणिजा, जहिस्तम्ब: इति। अत्र 'सह सुपा (२.१.४) इत्यत्र तृतीययैव सहार्थस्याक्षेपे सहग्रहणादतिरिक्ताद् योगविभागाश्रणेन सुबन्ततिङन्ताभ्यां। समास: क्रियते। स च नञो नलोपस्तिङ्यवक्षेपे (पा. ६.३.७३ वा.), इति उदात्तवता तिङा गतिमता च' (२.२.१८ भाष्ये) इति, 'सुबधिकारेऽस्तिक्षीरा' दिवचनम् (२.२.२४वा.) 'एहीडादयोऽन्यपदार्थे' (२.१.७२ गसू. १८.१), जहिकर्मणा बहुलमाभीक्ष्ण्ये समस्यते कर्त्तारं चाभिदधातीत्युपपन्नो (२.१.७२ गसू. १८.१) भवति। तेनायमर्थ: संगच्छते 'अवक्षिप्तोऽसि न पचसि त्वमभिहितोऽपि वृषल इति, प्रकर्षेणावर्षदिति, पश्चाद् विशिष्टं चलनमकरोदिति, अस्ति क्षीरमस्या' इति, एहि वाणिजेत्यामन्त्र्यमाण– वाणिजविशिष्टा क्रियेति, जहि जहि स्तम्बमिति कर्त्ता योऽभिधीयते स एवमुच्यत इति।

४. **सुब्धातुभ्यां** यथा– संग्रामयते, अनुरुध्यते, श्रद्धा, अन्तर्धि:, परमनियौ, प्रतिभुवौ इति। अत्र 'संग्राम युद्धे अनुरुध कामे इति समस्तयोरेव पाठ:। आतश्चोपसर्गे (३.३.१०६), उपसर्गे घो: कि: (३.३.९२) इति अङ्–किविधाने 'प्रादिषु श्रदन्तरोरुपसंख्यानम्' 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६.४.७७) इत्यादिकार्यसिद्धये क्विबन्तस्य प्रत्ययनामधातुत्वाद् धातुत्वमिति सुब्धातुभ्यां समासो भवति।।

५. **सुबन्तनामभ्यां** यथा— दधिसेक्, चर्मकार:, चर्मक्रीती, धनक्रीता, ब्राह्मणाच्छंसी, सरसिजम्' इति। अत्र 'कुगतिप्रादय: (२.२.१८), 'उपपदमतिङ्' (२.२.१९) इत्यत्र अतिङ्ग्रहणेनोभयसूत्रशेषतया व्याख्यायमानेन सुबित्येतस्य निवृत्तिः क्रियते; 'कर्त्तृकरणे कृता बहुलम् (२.१.३२), इत्यत्र च कर्त्तृकरणयो: समासविध ानादुत्तरपदस्य कृदन्ततायां लब्धायां कृद्ग्रहणादतिरिक्तात् तदन्तावस्थायामेव समासाभ्यनुज्ञाने सुपेत्येतदपि निवर्त्तते। ततश्च 'गतिकारकोपपदानां कृद्भि: सह समासवचनम् सुबुत्पत्तेः प्रागेव' भवतीत्याख्यातम्; बहुलग्रहणस्य चेष्टसिद्ध्यर्थत्वात्।

स क्वचिन्नामभ्यां, क्वचित् सुबन्ताभ्याम्, क्वचिन्नामसुबन्ताभ्यां निश्चीयते। तत्र 'दधिसेक्' इत्यत्र उत्तरपदस्य, 'सात्पदाद्यो: (८.३.१११) इति पदादिनिबन्धन—षत्व—प्रतिषेध—सिद्धये 'चर्मकार' इत्यत्र तु पूर्वपदस्य पदान्तलक्षणनलोपार्थ सुबन्तता क्रियते। चर्मक्रीतीत्यत्र पूर्वपदं नलोपार्थमेव सुबन्तम्, उत्तरपदं तु प्रातिपदिकं क्रियते; तेन 'क्रीतात् करणपूर्वात् (४.१.५०) अकारान्तात् इति ईकार: सिद्धो भवति। सुबुत्पत्तौ तु प्राक् सुबुत्पत्तेरन्तरङ्गलिङ्गसंस्करनिमित्त: टाबुत्पद्यमान: क्रीतस्य आकारान्तरङ्गत्वात् ङीषं प्रतिबध्नीयात्, धनक्रीतेत्यत्र तु 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति शिष्टप्रयोगदर्शनादुत्तरपदस्य सुबुत्पत्तौ टाबुत्पत्तेराकारान्तत्वान्न ङीष उत्पत्ति।

ब्राह्मणाच्छंसी सरसिजमित्यत्र पूर्वपदयो: साक्षात् सुप: श्रवणम्; उत्तरपदयोस्तु प्रयोजनाभावाद् विभक्तेरनुत्पत्तिरिति।

६. **नामभ्यां** यथा— अश्वक्रीती, धनक्रीती, प्रवापिणी, माषवापिणी, असूर्यपश्या, राजदारा:, कृतपूर्वी कटम् इति। अत्र अश्वक्रीती धनक्रीती इत्येतयो: प्राग्वदेव ङीषुत्पत्तौ विभक्त्युत्पत्तिमन्तरेणापि पञ्चकप्रातिपदिकार्थपक्षे करणत्वाऽविरोध:। प्रवापिणी माषवापिणी इत्यत्र तु प्राक् सुबुत्पत्ते: समासे प्रातिपदिकस्यान्तो नकार इति 'प्रातिपदिकान्तनुम्विभक्तिषु च' (८.४.११) इति णत्वं भवति, सुबन्ताभ्यां तु समासेऽन्तरङ्गत्वात् ङीबुत्पत्तौ ङीबत्र प्रातिपदिकान्त:, न नकार इति णत्वं न स्यात् यथा गर्गभगिनीति।

'असूर्यपश्या' इत्यत्र नञ्सूर्ययोर्दृशिक्रियया संबन्धात् परस्परमसम्बन्धे सामर्थ्याभावाद् विभक्त्यभाव:, अत्र हि सूर्यमपि न पश्यन्तीति नञ् सूर्यकर्मिकां

दृशिक्रियामपेक्षते, न सूर्यसत्ताम्, 'असूर्यललाटयोर्दृशितपो:' (३.२.३६) इति वचनादसामर्थ्येऽपि नाम्नोरेव समासो भवति। एतेन कृतपूर्वीत्यपि व्याख्यातम्। अत्रापि हि कृतं पूर्वं कटोऽनेनेति कृतशब्दस्य कटापेक्षायां पूर्वशब्देना– सम्बन्धादसामर्थ्येऽपि 'पूर्वादिनि:' (५.२.८६) 'सपूर्व्वाच्च' (५.२.८७) इति वचनात् कृतपूर्वयोस्सुबन्तयोरेव समासो भवतीति स्थितम्।

**(समासविचार:)** उपलक्षणं चेह सुबन्ताभ्यामित्यादिषु द्विवचनम्। तेन यथा द्वाभ्यां तथा त्रिभिर्बहुभिश्च समासो भवति। तत्र–

**अव्ययीभाव: कर्म्मधारयश्च द्वाभ्याम् ।**

यथा –अधिस्त्रि, शाकप्रति, पञ्चाम्रा:, पुरुषव्याघ्र इति।

**षष्ठीलक्षण: कालपरिमाणलक्षणश्च तत्पुरुषो द्वाभ्यां त्रिभिश्च।**

यथा– राजगवीक्षीरम्, राजगोक्षीरम्, द्व्यहजात:, द्व्यह्नजात: इति। अत्र यदा राज्ञो गौ: राजगवी तस्या: क्षीरमिति तदा द्वाभ्याम्, यदा तु राज्ञो गो: क्षीरं राजगोक्षीरमिति तदा त्रिभि:। तदुक्तं–'राजगवीक्षीरे द्विसमासप्रसङ्ग:, द्विषष्ठीभावात्; (२.१.१ वा. १४, १५), सिद्धं तु राजविशिष्टाया गो: क्षीरेणाभिसम्बन्धाद् राजगवीक्षीरम् राजगोक्षीरमिति च।

ननु च 'गो: क्षीरं गोक्षीरम्, राज्ञो गोक्षीरं राजगोक्षीरमिति द्वितीयपक्षे भविष्यति।

नैवम्। अर्थभेदात्। यथैवायं गवि यतते, न महिष्यादे: क्षीरमात्रेण तुष्यति, एवं राजन्यपि यतते 'राज्ञो या गौ:, तस्या यत् क्षीरमिति तच्चैवं न सिध्यति। एवं हि यत: कुतश्चिदागतं गोक्षीरमात्रं राज्ञ: सम्बन्धि प्रतीयते।

कथं पुनर्गो: क्षीरमप्यपेक्षमाणायाश्च राज्ञा राजानमप्यपेक्षमाणायाश्च क्षीरेण समास: (मभा. २.१.१ वा.)?

उच्यते– न गौ: प्रधानत्वात् तथा राजानमपेक्षते यथा उपसर्जनत्वेन गां राजा, क्षीरमप्यविचलितस्वार्थत्वादनौत्सुक्येन न तथा गामपेक्षते यथोद्भूतसम्बन्धव्यतिरे– कत्वादौत्सुक्येन गौ: क्षीरम्।

एवं चानुकूल्ये गमकत्वात् प्रधानसापेक्षत्वे सति समासो भवत्येव। यथा देवदत्तगुरुकुलम्, राजपुरुषभार्य्या इति। तदुक्तम्–'भवति वै प्रधानस्य सापेक्षस्यापि समास' इति (मभा. २.१.१)।

एवं द्वे अहनी समाहृते द्व्यह:। द्व्यहो जातस्येति यदा समासस्तदा द्वाभ्याम्, यदा

तु द्वे अहनी जातस्य द्व्यहजात इति तदा त्रिभिः। 'सुप् सुपा (२.१.४) इति वचनाद् द्वयोरेव समास इति चेत्, न, 'कालाः परिमाणिना (२.२.५) इति बहुवचननिर्देशात् 'सुप् सुपा' इत्येतस्मिन् गुणपदेऽपि संख्या न विवक्ष्यते; तेन त्रिष्वपि पदेषु समासाभ्यनुज्ञाने, द्विशब्दस्यापि कालसंख्यायकत्वेन कालाभिधायित्वे द्वे अहनी जातस्येति विगृह्य जातेन परिमाणिना द्विशब्दाहःशब्दौ कालाभिधायिनौ समस्येते। पूर्वस्य पदस्योत्तरपद–निमित्तायास्तत्पुरुषसंज्ञायाः प्रवर्त्तनात् 'न संख्यादेः समाहारे' (५.४.८९) इति प्रतिषेधाभावात् 'अह्नोऽह्न एतेभ्यः' (५.४.८८) इति समासान्तसिद्धौ द्व्यह्नजात इति विवक्षितरूपसिद्धिः।

अथ राजगोक्षीरमित्यत्रापि कथं न समासान्तः?

गोशब्दस्य युगपत् पूर्वोत्तरपदापेक्षायामसामर्थ्यात्।

द्व्यह्नजात इत्यत्रापि तुल्यमिति चेत्ब ।

तन्न 'उत्तरपदयोग एव द्विगोराम्नानात्।

अपि च 'द्वे अहनी' इति द्वे अपि प्रथमान्ते, राज्ञो गोरिति द्वे अपि षष्ठ्यन्ते। अस्ति च प्रथमान्तषष्ठ्यन्तयोर्विशेषः। प्रथमान्तं ह्यनुपजातव्यतिरेकत्वान्निरौत्सुक्यं नान्यदपेक्षते; षष्ठ्यन्तं पुनरुद्भूतव्यतिरेकत्वात् परोपकारायौत्सुक्येन प्रवर्त्तमानं नानवाप्योपकार्यं विरमति।

एवं च सापेक्षत्वादसामर्थ्ये समासः कथमिति चेत्? गमकत्वात्। यथा– सूर्यमपि न पश्यन्तीत्यसूर्यम्पश्या राजदाराः, न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मणः, अशूद्रान्नभोजी, एवम् अलवणभोजी, एकान्नविंशतिः; यथा अवतप्ते नकुलस्येव स्थितमवतप्तेनकुलस्थितं तवैतदिति।

**बहुव्रीहिद्वन्द्वौ द्वाभ्यां त्रिभिर्बहुभिश्च।** यथा– चित्रगुः, कण्ठेकालः, प्लक्षन्यग्रोधौ, पाणिपादम्, पञ्चगवधनः, मत्तबहुमातङ्गम्, शङ्खदुन्दुभिवीणाः, धवखदिरपलाशम् इति। अत्र 'अनेकमन्यपदार्थे' (२.२.२४) बहुब्रीहिः, 'चार्थे द्वन्द्वः' (२.२.२९) इति च स्मृतिः। उक्तं च (मभा. २.१.१)–

**सुसूक्ष्मजटकेशेन सुनताजिनवाससा ।**
**समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ।। ४५।।**

**द्वन्द्वो यावद्भिरारब्धः प्राधान्यं तत्र तावताम् ।**
**इतरेतरयोगे स्यात् समाहारे तु संहतेः ।। ४६।।**

ननु च शोभना: सूक्ष्मा जटा: केशा अस्य, शोभनं नतमजिनं वासोऽस्य, संजातान्यन्तेषु शितिरन्ध्राण्यस्येति कर्मधारयादिगर्भा एते बहुव्रीहय:। तत्र सुसूक्ष्मजटकेशेन सुनताजिनवाससा' इत्येतयो: मध्यपदस्योत्तरपदेन पूर्वपदेन वा कर्मधारयम्, अन्त्यस्य तूत्तरपदेनैव सप्तमीतत्पुरुषं विधाय द्वयोरपि वृत्तौ बहुव्रीहि: कस्मान्न क्रियते?

उच्यते

पूर्वयो: पूर्वपदेन कर्मधारयस्यानुपपत्ति: असमानाधिकरण्यात्; नहि द्वयोरपि विशेषणयो: सामानाधिकरण्यं भवति। उत्तरेण तु 'विशेषणं विशेष्येणे (२.१.५७)ति सामानाधिकरण्ये भवति कर्मधारय:; किन्तु न तदुत्तरकालमन्यपदार्थे विवक्षितार्थसिद्धि:। तथा हि सति सूक्ष्मजटासम्बन्धनिबन्धनमेव केशानां शोभनत्वमुपलभ्यते न तु स्वाभाविकम्, नतिनिमित्तमेव चाजिनवाससश्चारुत्वं गम्यते, न तु नैसर्गिकम्। अन्त्ये पुनरन्तेषु इत्येतस्य सापेक्षत्वादसामर्थ्ये सति नोत्तरपदेन सप्तमीतत्पुरुष:; अन्तेषु शितिरन्ध्राणीति ह्युक्ते, कस्यान्तेष्वित्यपेक्ष्यं स्यात्, तच्च शित्यर्थ उत्पद्यमाने बहुव्रीहावेवोपन्नं भवति 'संजातान्यन्तेषु सूक्ष्मच्छिद्राण्यस्येति, न पुनस्तत्पुरुषे।

ननु च 'दृश्यते द्वयोरपि विशेषणत्वे सापेक्षत्वे च समास:। तद् यथा 'खञ्जश्चासौ कुब्जश्च खञ्जकुब्ज:, भ्रातुर्भार्या भ्रातृभार्या देवदत्तस्ये–ति।

उक्तमत्राऽऽचार्यै:।

किमुक्तम्?

कस्यचित् खञ्जो निर्ज्ञात:, कस्यचित् कुब्ज इति प्रधानोपसर्जनभावाद् भवत्येव विशेष्य–विशेषणभाव:। अपि च– (वाक्यपदीये ३.१४.४७)

**सम्बन्धिशब्द: सापेक्षो नित्यं सर्व: प्रवर्त्तते ।**
**स्वार्थवत् सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ।। ४७।।** (इति)

यथा– पितु: पिता पितामहो देवदत्तस्येति। इह तु सूक्ष्मजट इत्येतदन्यपदार्थ एवाम्नायते। नतमित्येतदपि क्रियाभिधायित्वेन गुणवचनत्वादाश्रितमेव भवति। सु इत्येतत् पुनरव्यं शोभनार्थे वर्त्तमानं समस्यते। तस्य चास्तां द्रव्यवचनत्वम्, गुणवचनत्वेऽपि विप्रतिपत्ति:, अव्ययानां सत्त्वार्थवाचित्वात्।

केचित् पुनस्तत्रापि विवन्दन्ते– द्योतका हि किलैते, न वाचका इति। समासश्च 'सुप् सुपा' इति द्योतकानामपि भवति। मा भूत् पूर्वयो: कर्मधारय:, अन्त्ये पुनरन्तशब्दस्य सम्बन्धिशब्दत्वेन भ्रातृभार्यादिवत् कथं न तत्पुरुष?

उच्यते,

यद्यपि संबन्धिशब्दाः सापेक्षत्वेऽपि समस्यन्ते तथापि सन्देहविपर्य्यासादयो न जायन्ते तत्रैव तदुत्पत्तिः। अत्र तु अन्तशिति रन्ध्राणीत्युक्ते सन्देहः—'किमन्तेषु शितिरन्ध्राण्यस्य, उत 'अन्तशितीनि रन्ध्राणी'ति। अथ यदा 'सुष्ठु सूक्ष्मजटाः केशा अस्ये'—ति विग्रहः, तदा भवितव्यं पूर्वपदयोः कर्मधारयेण।

न भवितव्यम्।

किं कारणम्?

स्वरे दोषः स्यात्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा समासस्यान्त उदात्त इत्यन्तरङ्गत्वादवयवसमासस्वरः प्राप्नोति।

तदाह—(वाप. ३.१४.५७)

**सुसूक्ष्मजटकेशादौ समासोऽवयवे यदि ।**
**स्यात् स्यात् तत्राऽन्तरङ्गत्वाद् बाधकोऽवयवस्वरः ॥ ४८॥**

अतश्च यत्र द्वे अपि विशेषसंज्ञे तत्रोत्तरपदे नित्यमेव द्विगुर्द्वन्द्वश्च समासो भवति। तद् यथा— 'पञ्चगवप्रिय' इति 'छत्रोपानहप्रिय' इति। यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः तत्र विकल्पेन। यथा— राजगवीक्षीरम्, राजगोक्षीरम् इति। यत्रैकतः सामान्यम्, अन्यतो विशेषः तत्र न भवत्येव। यथा—'सुसूक्ष्मजटकेशेन सुनताजिनवाससा' इति। अत्र बहुव्रीहिरिति विशेषसंज्ञायामवयवयोः 'विशेषणं विशेष्येण बहुलम् (२.१.५७) इति या समाससंज्ञा सा 'सुप्सुपा' इति तत्पुरुषादिभेदाऽपरामर्शेन भवन्ती सामान्यसंज्ञेत्युच्येत।

ननु 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् इति **महावार्त्तिककारः**, अयमपि च तत्पुरुष एवेति कस्मादिहापि समासो न भवति?

उत्तरपदोपादानात्। य उत्तरपद एवाम्नायते सोऽत्र तत्पुरुषो ग्रहीतव्यः, यथा 'द्व्यह्नजातः', 'पञ्चगवधन' इति। द्वन्द्वः पुनरनुत्तरपद एवेति बहुव्रीहिविषयेणोत्तरपदेन सर्व एव गृह्यते। किमर्थं पुनरेवमुच्यते यावता बहुलग्रहणेनैव सिद्धम्, समुदायवृत्त्याववयवानां मा कदाचिद् वृत्तिर्भूदिति।

तथापि न वक्तव्यम्। इह द्वौ पक्षौ **(१) वृत्तिपक्षश्च (२) अवृत्तिपक्षश्च**। यदा वृत्तिः तदा सर्वेषां वृत्तिः, यदा तु न वृत्तिस्तदा सर्वेषामवृत्तिरिति।

नैवम्। अस्त्यत्र विशेषः। तथाहि पञ्चगवप्रिय इत्यादौ नास्य पञ्चसंख्यामात्रं प्रियं,

नापि गोमात्रम्, किं तर्हि पञ्चसंख्योपलक्षिताः काश्चिदेव गावः, यथा पञ्चाम्राः सप्तर्षय इति। तच्च द्विगौ पूर्वमसति दुरुपपादमेव भवति। एतेन छत्रोपानहप्रिय इत्येतदपि व्याख्यातम्, तत्रापि युगपदधिकरणवचनद्वन्द्वमन्तरेण नाभिवाञ्छितसिद्धिः। न ह्यस्योपनन्मात्रमेव प्रियम् अपितुछत्रमपि, उपानच्छब्दादेव च परः प्रियशब्दो निशम्यमानः न द्वन्द्वं विना छत्रमुपग्रहीतुं शक्नोति। तस्मादनाक्षेप इति।

'सुसूक्ष्मजटकेशादिना च मत्तबहुमात्तङ्गं वनम्' इत्यादावप्यनेकमेव पदमित्युक्तं भवति। अत्रापि मत्ता बहव एव मातङ्गा इत्यपि न भवति।

किं कारणम्?

'बहुगणवतुडति' संख्या (१.१.२३) इति बहुशब्दस्य संख्यावाचित्वात्, संख्यापूर्वस्य च कर्मधारयस्य, द्विगुत्वात्, द्विगोः पुनः 'तद्धितार्थोत्तरपदसमाहारे'– (२.१.५१) ष्वेव भावात्, यथा'पञ्चकपालः, त्रिलोकहर्म्यम्, पञ्चपूली' इति।

कथं तर्हि 'सप्तर्षयः पञ्चाम्रा' इति?

'दिक्संख्ये संज्ञायाम्' (२.१.५०) इति संज्ञायामेव तद् भवति।

ननु च मा भूत् तद्धितार्थ उपपदं वा, तथापि 'बहुमातङ्गमि'–ति समाहारे भविष्यति–बहवो मातङ्गाः समाहृताः बहुमातङ्गम्, ततश्च 'मत्तं बहुमातङ्गमस्मिन् वने तन्मत्तबहुमातङ्गं वनमिति बहुव्रीहिर्भविष्यति।

उच्यते।

अथ समाहार इति कः शब्दार्थः?

ननु समाङ्पूर्वाद्धरतेः कर्मणि घञ् 'समाह्रियत इति समाहार' इति।

यद्येवं पञ्च कुमार्यः समाहृताः पञ्चकुमारि, दशकुमारि इति

'गोस्त्रियोरुपसर्जनस्य' (२.१.४८) इति ह्रस्वत्वं न प्राप्नोति।

समाहारस्यैकत्वात् द्विगुरेकवचनम् (२.४.९) इत्येतदपि वक्तव्यं भवति।

एवं तर्हि भावसाधनो भविष्यति समाहरणं समाहार इति।

अथ भावसाधनेन किमभिधीयते?

यत् तदौत्तराध्र्यम्।

कः पुनः पञ्चगवं, पञ्चपूलीत्यादौ गवादीनां समाहारः?

यत् तद् आर्जनं, क्रयणं, भिक्षणम्, अपहरणम् वा।

यद्येवं विक्षिप्तेषु पूलेषु चरन्तीषु गोषु न सिध्यति।

तर्हि समभ्याशीकरणं समाहारः।

एवमपि पञ्चग्रामी, षण्णगरी इत्यादेरनुपपत्तिः।

किं कारणम्?

अभ्याशीकरणार्थे समाहारशब्दे समिति समन्तादित्यभिविधौ वर्त्तते, आङाभिमुख्ये, हरतिर्देशान्तरप्रापणे इति।

नावश्यं हरतिर्देशान्तरप्रापणे एव वर्त्तते। किं तर्हि? सादृश्येऽपि, मातुरनुहरति पितुरनुहरतीति।

अथवा—'पञ्चग्रामी, षण्णगरीति नेदमित्येवावतिष्ठते, अवश्ये ह्यसौ ततः किञ्चिदाकाङ्क्षति, क्रियां गुणं वा। यदाकाङ्क्षति तदेकं, स समाहार इति।

अयं तर्हि भावसाधने सति दोषः, पञ्चपूली आनीयतामिति द्रव्यस्यानयनं न प्राप्नोति।

नैष दोषः। तद् यथा 'गौरनुबन्ध्यः' 'अजोऽग्नीषोमीय' इति जातौ चोदितायां तत्राऽसंभवादालम्भनप्रोक्षणविशसनादीनि द्रव्ये भवन्ति इहापि भावानयनस्यासंभवाद् द्रव्यस्थानयनं भविष्यति।

अव्यतिरेकाद् वा। न हि समूहिभ्यः समाहारलक्षणः समूहो व्यतिरिक्तो भवति। एवं तर्हि बहुमातङ्गमिति समाहारे एष दोषो भवति—'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत' इति पञ्चपूलीतिवद् ईकारान्तत्वं प्राप्नोति। न वाऽयं पात्रादिषु पठ्यते, येन 'चतुष्पात्र—त्रिभुवनादिवत् तन्निषेधो भविष्यति; नाप्याबन्तो येन 'पञ्चखट्वी पञ्चखट्वम्' इत्यादिवद् विकल्पोऽवकल्पेत।

ननु द्विगावपीकारो न दृश्यते यथा एकपुत्रः एकभिक्षेति।

नायं द्विगुः।

किन्तर्हि? 'पूर्वकालैकसर्वजरत्पुराणे—(२.१.४९) त्यादिना कर्म्मधारयः।

किं च भोः। संख्यापूर्वोऽपि द्विगुर्न भवति?

वाढम्, तस्य तद्धितार्थोत्तरपदसमाहारेष्वेव भावात्। न चेह तद्धितार्थ उत्तरपदं वा विद्यते, न चैकस्य समाहारः संभवति।

यदा तु सामर्थ्यातिशयादेकस्मिन्नपि समूहारोपणम्, तदा, भवत्येव, यथा—'एकापूपी एकशाटीति। किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति? एवं तावत्। एतर्हीतरेतराश्रयत्वादप्रसिद्धिः।

कथमितरेतराश्रयत्वम्?

द्विगुनिमित्ते प्रत्ययोत्तरपदे, प्रत्ययोत्तरपदनिमित्ता च द्विगुसंज्ञेति।

एवं तर्हि 'अर्थ' इति वक्ष्यामि

अर्थे चेत् तद्धितानुत्पत्तिर्बहुव्रीहिवत्। तत्र यथा 'चित्रगुः शबलगुः' इति बहुव्रीहिणोक्त– त्वान्मत्वर्थस्य मत्वर्थीयो न भवति, एवं द्वैमातुरः पाञ्चनापितिः' इत्यादौ तद्धितार्थस्य द्विगुनोक्तत्वात् तद्धितोत्पत्तिर्न प्राप्नोति।

यथेच्छसि तथाऽस्तु। अस्तु तावत् प्रत्ययोत्तरपदयोरिति।

ननूक्तमितरेतराश्रयत्वादप्रसिद्धिरिति, नैष दोषः, नेदं तुल्यमन्यैरितरेतराश्रयैः, शब्दनित्यत्वात्।

ननु च न संज्ञा नित्या।

किं तर्हि? शब्दः।

यद्येवं भाविनी संज्ञा विधास्यते। तद्यथा–'कश्चित् तन्तुवायमाह अस्य सूत्रस्य शाटकं वयेति।

स पश्यति यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी तु खल्वस्य संज्ञाभिप्रेता; स मन्यते –'वातव्यम्, यस्मिन्नुते शाटक इत्येतद्भवती'–ति। एवमिहापि–'तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य प्रत्यय उत्तरपदमित्येते संज्ञे भविष्यतः इति।

अथवा पुनस्त्वर्थ इति।

ननु चोक्तम् 'अर्थे चेत् तद्धिताऽनुत्पत्तिर्बहुव्रीहिवदि'–ति।

नैष दोषः। नावश्यमर्थशब्दोऽभिधेय एव वर्त्तते, किं तर्हि, स्यादर्थेऽपि। तद् यथा–'दारार्थं भिक्षामहे, जनार्थं भिक्षामहे; दारा नः स्युः जना नः स्युरिति। एवमिहापि तद्धितार्थे द्विगुर्भवति तद्धितः स्यादिति। द्विगोर्वा लुग्वचनं ज्ञापकम् (वा.५); यदयं 'द्विगोर्लुगनपत्ये' (४.१.८८) इति द्विगोस्तद्धितस्य लुकं शास्ति, तज्ज्ञापयति–'उत्पद्यते द्विगोस्तद्धित' इति।

यद्येवम् समाहारसमूहयोरविशेषात् समाहारग्रहणमनर्थकम्, 'तस्य समूह' (४.२.३७) इति तद्धितार्थे/नैव कृतत्वात्। तथाहि 'समाहारः समूह' इत्यविशिष्टावेतावर्थौ। तत्र समूह इव समाहारेऽपि तद्धितार्थे द्विगुरित्येव भविष्यति। यदि तद्धितार्थे द्विगुर्भवतीत्युच्यते, तद्धितोत्पत्तिः प्राप्नोति। उत्पद्यताम् लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति। कानि पुनस्तानि? 'पञ्चपूली' 'दशपूली' इति।

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि (४.१.२२) ङीप्रतिषेधः प्राप्नोति; 'पञ्चगवं दशगवमिति 'गोरतद्धितलुकि (५.४.९२) इति टच् न प्राप्नोति।

नैष दोषः, अविशेषेण द्विगो ङीब्भवतीत्युक्त्वा 'अपरिमाणबिस्ताचितकम्बल्येभ्यः समाहारे इति वक्ष्यामि; अविशेषेण च गोष्टच् भवतीत्युक्त्वा द्विगोः समाहारे इति वक्ष्यामि; तदुभयमपि नियमार्थं भविष्यति 'समाहार एव नान्यत्रे'—ति।

एवं तर्हि अभिधानार्थं समाहारग्रहणम्; समाहारेणाभिधानं यथा स्यान्न तद्धितार्थेन।

यदि स्यात् को दोषः स्यात्?

तद्धितोत्पत्तिः प्रसज्येत।

प्रसज्यताम्, लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति।

सर्वाणि परिहृतानि।

न सर्वाणि परिहृतानि। 'पञ्चकुमारि, दशकुमारी'—ति लुक् तद्धितलुकि (१.२.४९) इति ङीपो लुक् प्रसज्यत इति।

ननु च यदि तद्धितार्थे द्विगुरित्युच्यते 'पञ्चखट्वः, दशखट्वः' इति मत्वर्थेऽपि द्विगुसंज्ञायां 'द्विगोः' (४.१.२१) इतिकारः प्राप्नोति। बहुव्रीहिसंज्ञया द्विगुसंज्ञाया बाधितत्वान्न भविष्यति; समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवति।

यद्युत्तरपदे द्विगुरित्युच्यते, उत्तरपदोक्तिर्वक्तव्या। इयमुच्यते — 'उत्तरपदेन परिमाणिना द्विगोः समासवचनम् (वा०९); 'द्वौ मासौ जातस्य द्विमासजातः', द्वे अहनी जातस्य द्व्यह्नजात' इति।

किमुच्यते परिमाणिनैवेति, न पुनरन्यत्रापि; तद् यथा 'पञ्चगवप्रियः पञ्चगवधन' इति। अन्यत्र समुदायस्य बहुव्रीहित्वादुत्तरपदं प्रसिद्धमेव (वा.१०); तथाहि— 'अनेकमन्यपदार्थे (२.२.२४) समस्यते, बहुव्रीहिश्च समासे। भवति।

अथ द्वन्द्वस्य का वार्त्ता? द्वन्द्वोऽग्रतो विशेषेण व्याकरिष्यत इति।

अथ बहुभिर्बहुव्रीहिः — (वेसं. १.२१)

**चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य'** इति।

तत्र चञ्चद्भ्यां भुजाभ्यां भ्रमितायाश्चण्डाया गदाया अभिघातेन सञ्चूर्णितमूरुयुगलमस्येति विग्रहः। न चैतद् वाच्यम्, समानाधिकरणानामेव बहुव्रीहि, 'सप्तमीविशेषणे बहुव्रीहौ (२.२.३५) इति ज्ञापकेन वैयधिकरण्येऽपि बहुव्रीहेः स्मरणात्।

एतेन सर्वपदप्रधानो द्वन्द्वोऽपि व्याख्यात:, यथा **'सूर्याऽनलाऽनिलहिमांशु–धनेशशक्रप्रेताधिनाथवरुणा: करुणास्पदं न:'** (मायुराजस्योदात्तराघवे २.२९) इति।

ननु चान्यपदार्थे बहुव्रीहि: स्मर्यते। तत्र 'चित्रगुर्देवदत्त' इति देवदत्तादेरनुप्रयोगो न प्राप्नोति; नहि चैत्रादिशब्दप्रयोगादवधृतेषु चैत्रादिषु पुनश्चैत्रादिश्रुतय: प्रयुज्यन्ते। नैवम्; चित्रगुशब्द: चित्रगवीनां स्वामिसामान्यमभिधत्ते। तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्य:।

चित्रगु: क:?

देवदत्त इति।

यत्र त्वसाधारणविशेषणादिभिर्विशेष एव समासस्तत्रानुप्रयोगो न भवत्येव; यथा त्रिलोचन: शूलपाणिरिति। एवं तर्हि, सामान्यवचनानामनुप्रयोगस्याऽप्राप्ति:। यथा– 'चित्रगु सर्वम्', 'चित्रगु विश्वम्' इति। सामान्यमपि यथा विशेष:, तथाहि यथा चित्रगुशब्दादिप्रयोगे विशेषान्तराणां निवृत्ति: तथा सर्वादिशब्दप्रयोगे विशेषाणां निवृत्ति: प्रतीयते।

यदि वा, 'चित्रा गावोऽस्य देवदत्तस्येति षष्ठ्यर्थस्य समासेनाऽभिधानात् षष्ठी नाऽनुप्रयुज्यते, सम्बन्धी तु न समासोपादान इत्यनुप्रयुज्यते।

एवं तर्हि विभक्त्यर्थाभिधायिनो बहुव्रीहिपदस्य देवदत्तादिभिर्द्रव्यवचनै: सामानाधिकरण्यं न प्राप्नोति।

मुब्लोपाद् भविष्यति।

मैवम्; मतुपोऽपि संबन्धार्थत्वात् द्रव्यवचनैरसामानाधिकरण्यमेव।

न च बहुव्रीहेर्विभक्त्यर्थाभिधायिनो मतुप्प्रत्ययो विधातुं शक्यते; स हि प्रथमासमर्थादस्त्युपाधिर्विधीयते; न च विभक्त्यर्थवृत्तेर्बहुव्रीहिपदस्यास्त्यादिक्रियाभि: सामानाधिकरण्येन सम्बन्धो भवति।

अथ अभिहित: सोऽर्थोऽन्तर्भूत: प्रातिपदिकार्थ: संपन्न इति सामानाधिकरण्यमुपपत्स्यते।

तन्न; अभिहितोऽप्यसौ यतो यत्रेत्यादिवन्न स्वरूपं हास्यति।

एवं तर्हि, यथा–'जातौ पदार्थे जाते: कार्यमुच्यमानमसंभवात् तत्सहचरितासु व्यक्तिषु निविशेत् तथा बहुव्रीह्यर्थे संबन्धे सामानाधिकरण्यक्रियायोगादिकार्यं प्रयुज्यमानं तदाश्रये भविष्यति; एवं च सोऽयमित्युपचरितसंबन्धेषु संबन्धिषु

बहुव्रीहिपदैरभिधीयमानेषु, शुक्लादिविशेषणानामिवाश्रयतो लिङ्गवचनान्यपि न विरोत्स्यन्ते।

यदिवा 'अन्यपदार्थ' इत्यर्थग्रहणसामर्थ्यात् सद्रव्यस्य सलिङ्गस्य ससंख्यस्य चोपादानं भविष्यति, न विभक्त्यर्थमात्रस्य।

कथं पुनरर्थशब्दोपादानादयमर्थो लभ्यते?

श्रूयताम्—'अन्यपद इतीयत्युच्यमाने पदे वृत्त्यसंभावात् पदसहचरितां यां काञ्चिदर्थमात्रां पदशब्दो लक्षयेत् पदत्वस्य वा निमित्तत्वेन प्रत्यासन्नोपकारिणं विभक्त्यर्थं प्रत्याययेत्; सोऽयमेवं सिद्धे समीहिते यदर्थग्रहणं करोति तेनैतत् ज्ञापयति 'यावानर्थश्रुतेः पदविषयोऽर्थः प्रतीयते, तावान् सर्वोऽपि त्यागनिमित्ताऽभावादुपादीयत इति।

अपि च, पदमर्थस्य परिच्छेदायोपादीयते; अर्था हि प्रकृत्यादीनां सामान्येन प्रसक्ताः पदेनावच्छिद्यन्ते पदावधिकोऽर्थ उपादेय इति; तत्र यथा वाक्यार्थस्यानाश्रयण—माधिक्यात् तथा पदार्थैकदेशस्यापि, न्यूनत्वात्। तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः ससंख्यः सद्रव्यश्च समर्थः पदार्थ उपादीयते।

ननु च बहुव्रीहिणा समस्तपदार्थाभिधाने यथा सम्बन्धाभिधायिका षष्ठी न प्रयुज्यते तथा संख्याभिधायिनः स्वादयः, लिङ्गाभिधायिनष्टावादयो वा न प्रयुज्येरन्?

उच्यते— एकादिपदैरिव वृत्तिपदैरभिहिताऽपि न संख्या संख्याकार्यं विघ्नयिष्यति; न हि षष्ठ्यादिविधान इव वचनविधावनभिहिताधिकारो विद्यते, कर्मादयश्च कारकविशेषाः प्रत्याययितव्या इत्यवश्यविधेया द्वितीयादयः; प्रथमा तु वचनग्रहण—सामर्थ्यात् 'न केवला प्रकृतिः प्रयोक्तव्या' इति समयाद् वा प्राथमिककल्पिकी भविष्यति।

स्यादेतत्,

यथा अभिहिता एकत्वादयो वचनव्यवस्थानिमित्तं तथाऽभिहितः सम्बन्धोऽपि षष्ठीनिमित्तं भवति। तदयुक्तमनभिहिताधिकारात्। अपि च, सम्बन्धोपसर्जनं प्रातिपदिकार्थो वृत्तिशब्दे— नाभिधीयते; न चायं षष्ठीविषयः, तस्याः प्रातिपदिकार्थोपसर्जने संबन्धे विधानात्। टाबादयस्तु स्वार्थिकत्वादभिहितेऽपि लिङ्गोभवन्ति, तदुक्तम्—'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादय, इति (मभा. ४.१.१ वार्त्ति. २१)।

यदि वाऽन्य एव वाक्यार्थो वृत्त्यर्थात्। तथाहि— 'चित्रा गावोऽस्येति

अन्यपदार्थोपसर्जनाश्चित्रगव्यो वाक्येनाभिधीयन्ते, चित्रगुरिति पुनर्वृत्तौ गवार्थोपसर्जनः स्वामी प्रतीयते; तत्र यदा निर्ज्ञातपराधीनतानां चित्रगवीनां स्वामिविशेषा–ऽवच्छेदायाऽन्यपदार्थ उपादीयत 'अस्यैता गाव' इति तदा बहुव्रीहिर्न भवति। यदा तु ताश्चित्रा गावः स्वामिनो विशेषाभिधानाय प्रत्यवमृश्यन्ते गवीनामासामयं स्वामी'–ति तदा बहुव्रीहिर्भवति चित्रगुः, शबलगुरिति। तामेव च स्वामिविशेषणतां स्फुटमुपदर्शयन्तो निदर्शयन्ति–'यस्य चित्रा गावः स चित्रगुः, यस्य शबलाः स शबलगुरिति।

उपलक्षणं चाऽत्र षष्ठी। तेन कर्मकर्तृप्रवचनेनाऽप्रथमाया अपि बहुव्रीहिर्वक्तव्यः–'ऊढो रथोऽनेन ऊढरथोऽनड्वान्, उद्धृत ओदनः अस्या उद्धृतौदना स्थाली, उपहृतः पशुरस्मै उपहृतपशू रुद्रः, आरूढो वानरोऽमुम् आरूढवानरो वृक्षः, प्राप्ता अतिथयोऽस्मिन् प्राप्तातिथिर्ग्रामः, सिद्धः साधकोऽनया सिद्धसाधका विद्ये–'ति।

अथ अप्रथमाया इति किमर्थम्?

इह मा भूद्–'वृष्टे देवे गत' इति।

अथ इह कस्मान्न भवति–'वृष्टे देवे गतं पश्ये'–ति?

बहिरङ्गाऽत्र प्रथमा।

यद्येवं षष्ठ्याद्यन्तरङ्गत्वे 'चित्रगोर्देवदत्तस्ये'–त्यादौ पुनः षष्ठ्यादयो न स्युः। बाह्यं सम्बन्धिनमपेक्ष्य भविष्यन्ति।

अथ यथा चित्रगुप्रभृतिभ्यः षष्ठ्यादयः तथा 'यतो यत्रे'–त्यादिभ्यः पञ्चमीसप्तम्यादयोऽपि कस्मान्न भवन्ति?

उच्यते–'तसिलू–त्रलादिभिः पञ्चमीसप्तम्यादीनामभिहितोऽर्थोऽनन्तर्भूतः। चित्रगुप्रभृतिषु तु बहुव्रीहिणाऽभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नः इति।

अथेह बहुव्रीहिः कस्मान्न भवति 'पञ्चभिर्भुक्तमस्य'?

बहुव्रीहिः समानाधिकरणानामेवेति स्मरणात्।

यद्येवम्–'अस्तिक्षीरा, उच्चैर्मुखः, अभार्यः, प्रपर्णः, उष्ट्रमुखः, चन्द्रवदना, केशचूडः, सुवर्णाऽलङ्कारः, चन्द्रशेखरः, शूलपाणिः, कण्ठेकालः, उरसिलोमेति बहुव्रहिसंज्ञा न प्राप्नोति। तथाहि– आद्येषु चतुर्षु पूर्वपदमव्ययम्, तस्याऽसत्त्ववाचित्वात् सत्त्वभूतैः क्षीरादिभिः सह सामानाधिकरण्यं नास्ति; मध्यमेष्वपि विशेषणविशेष्य–भावानुपपत्तेर्न सामानाधिकरण्यं घटते; अन्त्येषु तु सप्तम्यन्त–प्रथमान्तयो–रसामानाधिकरण्यं व्यक्तमेनेति।

नैवम्।

एतेष्वपि सामानाधिकरण्योपपत्तेः। तत्र

अस्तीति निपातो विभक्तिप्रतिरूप इति कालं पुरुषं संख्यां साधनं च न व्यभिचरति। उच्चैःशब्दस्यापि सत्त्ववचनत्वं दृश्यते 'किं पुनर्यस्तथोच्चैः' (मेघ. १७) इति। अतएव एताभ्यामस्तितोच्चस्त्वमिति भावप्रत्यया अपि। अभार्य इत्यादिषु दध्यो दनादिवन्मध्यमपदलोपो व्यवस्थितविभाषया वृत्तिविषये द्रष्टव्यः। तेनायमर्थः सम्पद्यते—

अस्ति क्षीरमस्याः अस्तिक्षीरा गौः,

उच्चैर्मुखमस्य उच्चैर्मुखो मैत्रेयः,

अविद्यमाना भार्या अस्य अभार्यः, अविद्यमानभार्यो वा,

प्रपतितानि पर्णानि अस्य प्रपर्णः, प्रपतितपर्णो वा।

'उष्ट्रमुखः चन्द्रवदने—'त्येतयोस्तु उष्ट्रचन्द्रशब्दौ भूयोऽवयवसामान्ययोगातिशया— दभेदोपचारेण मुखविशेषणं भवन्तौ गौणी वृत्तिमनुभवतः।

ननु किमुष्ट्रमुखयोर्मिथः सादृश्यम्?

उष्ट्रशब्देनेह उष्ट्रमुखमभिधीयते, अवयवेऽप्यवयविवद् उपचारो द्रष्टव्य इति। केशचूडः, सुवर्णालङ्कारः' इत्येतयोस्तु केशसंघाते केशशब्दो वर्त्तते, सुवर्णविकारे तु सुवर्णशब्द, कारणे कार्योपचारात्।

'चन्द्रशेखरः, शूलपाणिः' इत्यत्र चन्द्रशूलोपलक्षितौ शेखरपाणी चन्द्रशूल— शब्दाभिधेयौ। यथा 'कुन्तान् प्रवेशय यष्टीः प्रवेशये'ति।

'कण्ठेकाल उरसिलोमा' इत्येतयोस्तु कण्ठे स्थितः काल अस्य, उरसि जातानि लोमान्यस्ये—ति पदान्तरम् अध्याह्रियते; यथा द्वारं द्वारमित्युक्ते अपाव्रियतां संव्रियतां वेति। एतेन सुबधिकारेऽस्तिक्षीरेत्युपसंख्यानम् (२.२.२४ वा., मभा.)

अव्ययानां बहुव्रीहिर्वक्तव्यः, ( ,, )

सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च ( ,, )

समुदायविकारषष्ठ्याश्च ( ,, )

प्रादिभ्यो धातुजस्य वा ( ,, )

इत्यपि न भवति।

ननु परिगणनार्थमप्येतदवश्यं वक्तव्यम्,

नैवम्, क्रियमाणेऽपि हि परिगणने यत्राभिधानं नास्ति न तत्र समानाधिकरणानामपि बहुव्रीहिः, तद्यथा पञ्च भुक्तवन्तोऽस्येति। (मभा. २.२.२४ वा. १०, १६)

एवं तर्हि मत्वर्थग्रहणं करिष्यते—'समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवतीति; तथाऽपि ऊढो रथोऽनेन ऊढरथोऽनड्वान्, दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा, पुत्रेण सह सपुत्रः, केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि, त्रिर्दशैते त्रिदशाः, इत्येवमादिभिरव्याप्तिरेव।

तस्मात् सुदूरमपि गत्वाऽभिधानमेवाश्रयितव्यम्। अभिधानलक्षणा हि कृत्तद्धितसमासा इति कृतं परिगणनेन।

अथ त्रिदशा इति कोऽस्य विग्रहः?

त्रिर्दशैते त्रिदशा इति। संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिः' इति (२.२.२५ वार्त्तिक—१); न हि अत्कारान्ता संख्याऽस्ति।

अस्तु तर्हि अयमेव विग्रहः—'त्रिर्दशैते त्रिदशा' इति। ननु चोक्तं संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिरिति, नैष दोषः, सुजन्तस्य संख्येत्यप्रसिद्धिः, न चाऽत्र समासे सुजन्तं पश्यामः।

किं तर्हि?

वाक्ये सुच् दृश्यते, समासे तु न दृश्यते?

अभिहितत्वात्,

अभिहितः सुजर्थः।

केन?

समासेन। किं च भोः सुजर्थे समास उच्यते?

नैवम्; सामर्थ्यादिह सुजर्थो गम्यते।

कथम्?

यावता संख्या संख्यया संख्यायते, स च क्रियाभ्यावृत्त्यर्थ उक्तः समासेनेति कृत्वा सुज् न भविष्यति।

**प्रकृतिः प्रातिपदिकरूपाऽप्येषोपदर्शिता ।**
**स्वरूपं प्रत्ययादीनां पृथक् पृथगथोच्यते ।। ४९।।**

## (२. प्रत्ययः)

तत्र **प्रतीयतेऽनेनार्थ इति प्रत्ययः**।

स त्रिधा **१. धातुप्रत्ययः २. प्रत्ययप्रत्ययः ३. प्रातिपदिकप्रत्यय** इति। तेषु—

**(१. धातुप्रत्ययाः –६)**

**सनादयः, तिबादयः, तुमुनादयः, तव्यादयः, ण्वुलादयः, उणादय**श्चेति धातुप्रत्ययभेदाः। तत्र—

**(सनादयः)**

इच्छाप्रयोजकव्यापारादिक्रियासु क्रियासमभिहारादिषु च ये विधीयमानाः क्रियावचनत्वाद् भूवादिवदेव प्रत्ययान्तरमपेक्षन्ते ते सनादयः। यथा— चिकीर्षति, अध्यापयति, पापच्यते, गोपायति, ऋतीयते, कामयते इति।

**(तिबादयः)**

क्रियाप्रधानाः कर्तृकर्मणोः क्रियायां च ये विहिताः साध्यरूपापन्नक्रियाभिधायित्वेन प्रत्ययान्तरं नापेक्षन्ते ते तिबादयः। यथा 'व्रजति देवदत्तः, पच्यते ओदनः, रज्यति वस्त्रम्, लूयते केदारः, चोरस्य रुजति, आस्यते युष्माभिः' इति।

**(तुमुनादयः)**

अनुपातिक्रिया— क्रियाभिधायिनोऽसत्त्वभूतार्थाः साध्यभावे ये विधीयन्ते ते तुमुनादयः। यथा—'पक्तुमिच्छति, भुक्त्वा व्रजति, अधीत्य स्नाति, पायंपायमास्ते, चोरङ्कारमाक्रोशति, चकासाञ्चकार इति।

**(तव्यादयः)**

प्रायेण भावकर्म्मणोः कर्त्रादिषु च ये विधीयन्ते ते तव्यादयः। यथा— गन्तव्यं भवता, करणीयः कटः, कृतं भवता, लूयमानः केदारः, दुर्गमो मार्गः, वास्तव्यो लोक' इति।

**(ण्वुलादयः)**

प्रायेण कर्त्तरि कर्मादिषु च ये विधीयन्ते ते ण्वुलादयः। यथा— पाचकः पुमान्, सोमं पवमानम्, पचन्यवागूम्, कन्यामलङ्करिष्णुः, पादहारकः पङ्कः, प्रियङ्करणं शीलम् इति।

**(उणादयः)**

सर्वकारकेषु सिद्धभावे च ये विधीयमानाः प्रायेण द्रव्यवचनत्वं लभन्ते ते उणादयः। यथा— शीतो वायुः, वत्सला धात्री, तीक्ष्णं दात्रम्, वृद्ध उपाध्यायः, रम्यः प्रासादः, पाको वर्त्तत इति।

(२. प्रत्ययप्रत्ययाः –६)

**यदादयः, घादयः, मबादयः, फगादयः, युजादयः, ढगादयश्च प्रत्ययप्रत्यय**भेदाः।

**(यदादयः)**

तेषु भवापत्यस्वार्थमत्वर्थादिषु सुबन्तेभ्यो य उत्पद्यन्ते ते यदादयः। यथा– अप्सव्यः, पूर्वाह्णेतनम्, चिरन्तनम्, आमुष्यायणः, त्वयका, शुभंयुः इति।

**(घादयः)**

प्रकर्षाऽपकर्ष–कुत्सा–प्रशंसादिषु तिङन्तेभ्यो य उत्पद्यन्ते ते घादयः। यथा– पचतितराम्, गच्छतितमाम्, जल्पतिकल्पम्, स्पृशतिदेश्यम्, पचतकि, पचतिरूपम् इति।

**(मबादयः)**

निर्वृत्तस्वार्थमत्वर्थादिषु कृद्भ्यो उत्पद्यन्ते ते मबादयः यथा– कृत्रिमम्, पाकिमम्, सांराविणम्, व्यावक्रोशी, जित्वरी, श्यैनंपाता इति।

**(फगादयः)**

जीवद्वंश्य–प्रशस्तकुत्सितस्वार्थादिषु अपत्यादितद्धितान्तेभ्यो य उत्पद्यन्ते ते फगादयः। यथा– गार्ग्यायणः, दाक्षायणः वार्ष्यायणिकः आभिजित्यः, कौञ्जायन्य इति।

**(युजादयः)**

सिद्धभाव–ताच्छील्योपाधिकर्त्रादिषु णिजादिधातुप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते युजादयः। यथा– कारणा, अटाट्या, यायजूकः, सासहिः, यायावरः, चिकीर्षुः इति।

**(ढगादयः)**

अपत्याद्यर्थ–स्वार्थ–शक्ति–संख्यादिषु स्त्रीप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते ढगादयः। यथा– गाङ्गेयः, यौवतेयः, वाराणसेयः, सुवधूकः, नद्याम्, खट्वायां, युवतयः इति।

(३. प्रातिपदिकप्रत्ययाः –६)

**टाबादयः, स्वादयः, तसिलादयः, कादयः, अणादयः, क्यजादय**श्चेति प्रातिपदिकप्रत्ययभेदाः। तेषु –

**(टाबादय:)**

प्रकृतिलिङ्गाभिधायिन: प्रातिपदिकाद्य उत्पद्यन्ते ते टाबादय:। यथा— खट्वा, सुदामा, कारीषगन्ध्या, ब्रह्मबन्धू:, कुमारी, युवति: इति।

**(स्वादय:)**

प्रकृत्यर्थसंख्याभिधायिन: प्रातिपदिकादेव य उत्पद्यन्ते ते स्वादय:। यथा— कुण्डम्, कुण्डे, कुण्डाभ्याम्, कुण्डेभ्य:, कुण्डयो:, कुण्डेषु इति।

**(तसिलादय:)**

शक्तिमात्राभिधायिन: सोपाधिशक्त्यभिधायिनो वा सुबन्तप्रातिपदिकात् स्वार्थादिषु य उत्पद्यन्ते ते तसिलादय:। यथा— यत:, यत्र, कदा, पुरस्तात्, बहुश:, पुरुत्रावसति इति।

**(कादय:)**

कुत्सा—प्रशंसाऽतिशयाऽनतिशयाद्युपाधेरनुपाधेश्च सुबन्तादेव प्रातिपदिकात् स्वार्थादिषु य उत्पद्यन्ते ते कादय:। यथा— अश्वक:, युष्मकाभि:, वैयाकरणरूप:, पटुतर: कुटीर:, तार्तीयीकम् इति।

**(अणादय:)**

समर्थप्रातिपदिकात् सम्बन्धिकारकभावेषु य उत्पद्यन्ते ते अणादय:। यथा— औपगव:, तावकीन:, आक्षिक:, वामदेव्यम्, ब्राह्मणत्वम्, पौरोहित्यम् इति।

**(क्यजादय:)**

कर्मादिकारकोपहित—क्रियेच्छाचार—च्व्यर्थादिषु समर्थादेव प्रातिपदिकाद् य उत्पद्यन्ते ते क्यजादय:। यथा— चित्रीयते, पुत्रकाम्यति, श्येनायते, लोहितायति, कण्डूयते, मुण्डयति' इति।

## *(३. उपस्कार:)*

**प्रकृतिप्रत्ययानामुपसर्गोपग्रहागमलोपवर्णविकारविकरणादिरूप: संस्कार उपस्कार:।**

स च त्रिधा **(१) प्रकृत्युपस्कार:, (२) प्रत्ययोपस्कार:, (३) उभयोपस्कारश्चेति।**

ते पुनर्भूषण—समवायाऽ—ध्याहार—वैकृत—यत्न—प्रतियत्नभेदात् प्रत्येकं षट्प्रकारा भवन्ति। तत्र—

(१. प्रकृत्युपस्काराः –६)

१. **प्रकृतेर्भूषणरूपा** निरर्थकोपसर्गस्वार्थक–वैकल्पिकादयः। यथा–
अध्यागच्छति, पर्यागच्छति, प्रलम्बते, निखञ्जति इति; यावकः, षाड्गुण्यम्, औपयिकम्, मानसम् इति; आली, मृदवी, कमण्डलूः, चञ्चूः इति।

२. **समवायरूपाः** सार्थकोपसर्गसन्क्यङादयः। यथा–आशास्ते, प्रतिष्ठते, सुमनायते, दुर्मनायते, इति। जुगुप्सते, गोपायते, ऋतीयते, कामयते इति। पुत्रीयति, पुत्रकाम्यति, श्येनायते, मुण्डयति इति।

३. **अध्याहाररूपाः** सहाभिधायकोपसर्गद्विर्वचनसुडागमादयः। यथा–अधीते, अध्येति, अनुरुध्यते, संग्रामयते इति; जञ्जप्यते, संपनीपद्यते, अरार्यते, उन्दिदिषति इति। उपस्कुरुते, अपप्तत्, आस्थत्, मध्वस्यति इति।

४. **वैकृतरूपा** वर्णव्यत्यय–विपर्ययापायादयः। यथा–निषिञ्चति, प्रणयति, यन्ति, उशन्ति इति; तरुः, सिंहः, सिकता, सक्तव इति; सन्ति, घ्नन्ति, द्यन्ति, समगत इति।

५. **यत्नरूपा** उपचय–प्रसव–संवृत्यादयः। यथा–यौति, मेद्यति, दीव्यति, निगूहति इति; कीर्यते, पूर्यते, सौधातकिः, स्वायम्भुवम् इति; आस्त, आस्ते, अवोचत्, घटयति इति।

६. **प्रतियत्नरूपाः** विशेषादेशविधिनिषेधादयः। यथा–आह, अघसत्, वध्यात्, अध्यगीष्महि इति; जप्यः, पित्र्यम्, सनम्, गव्यम्, नाव्यम् इति; तितउः, प्रउगम्, कोकूयते, कथयति इति।

(२. प्रत्ययोपस्काराः –६)

१. **प्रत्ययस्य भूषणरूपा इडसुगीकगादयः**। यथा सहिता, वारिता भ्रुवै, भ्रूणाम् इति; देवासः, पारयामसि, तारिषत्, भवाति इति; तार्तीयीकम्, पीत्वाय, त्वयका, पचतकि इति।

२. **समवायरूपाः** स्यसिच्सीयुडादयः। यथा करिष्यति, अकरिष्यत्, वक्ता, ब्रवीति इति, अपाक्षीत् अपीपचत्, अशिषत्, अलिक्षत् इति; कृषीष्ट, कुर्यात्, कुर्वीत, करवामहै इति।

३. **अध्याहाररूपाः** प्रत्ययार्थविशेषकोपसर्गमप्तरबादयः। यथा– सुमनायते, दुर्मनायते, अभिमनायते, अभिषेणयति इति। कृत्रिमं सांराविणम्, व्यावहासी, कौञ्जायन्यः इति; पचतितरां, पचमानः, सर्वेषाम्, वृक्षाणामिति।

४. **वैकृतरूपाः** आदेश—सर्वादेशप्रत्ययादेशादयः। यथा—गार्ग्यायणः, चान्द्रमसायनिः, कौबेरकः, गौधेरः, कौलेयक इति, पवनः, पावकः, वृक्षस्य, वृक्षैः इति; वेद, विवेद, विद्वान्, विद्धि इति।

५. **यत्नरूपा** लुग्लुम्पनविलुम्पनादयः। यथा—पचत्, जुहोति, पञ्चालाः, दधि इति। ददृशे, अद्राक्षीत्, कारकः, कामण्डलेय इति। अग्निचित्, शुभंयाः, मूलखाः, अश्वति' इति।

६. **प्रतियत्नरूपाः** विशेषादेशविधिनिषेधादयः। यथा—तस्थौ, वेद, प्रशाधि, जीवतात्, इति; उदपादि, राष्ट्रियः, आग्नेयः, स्त्रैणम् इति; सुभ्रूः, सुप्रेयसी, व्यतिहसन्ति, व्यतिगच्छन्ति, इति।

**(३. उभयोपस्काराः –६)**

१. **उभयोर्भूषणरूपा** युष्मत्प्रभृतिप्रयोगादयः। यथा— त्वं पचसि, युवां पचथः, यूयं पचथ, अहं पचामि, आवां पचावः, वयं पचामः, वायुर्वाति, देवो वर्षति, भज्यते शाखा स्वयमेव, अवकिरते हस्ती स्वयमेव, भूषयते कन्या स्वयमेव, ब्रूते कथा स्वयमेवेति।

२. **समवायरूपा** विकरणादयः। यथा— भवति, चोरयति, दीव्यति, सुनोति, तुदति, तनोति, रुणद्धि, क्रीणाति, स्वयं नमते, दुग्धे, तप्यते तपः लूयते केदारः, इति।

३. **अध्याहाररूपा** द्विरुक्त्यादयः। यथा— पायंपायम् पचतिपचति, ग्रामो ग्रामो रमणीयः, मूले मूले स्थूलाः, अग्रे अग्रे सूक्ष्माः, पूर्वं पूर्वं पुष्यति, प्रथमं प्रथमं पच्यते, ज्येष्ठं ज्येष्ठमुपवेशय, माषं माषं देहि, उपर्युपर्यास्ते, अहिरहिः, बुध्यस्व बुध्यस्वेति।

४. **वैकृतरूपा** वांनावादयः। यथा— ग्रामो वाम्, ग्रामो नौ, ग्रामो वः, ग्रामो नः, ग्रामस्ते, ग्रामो मे, ग्रामस्त्वा रक्षत्, ग्रामो मा रक्षत्, हैयङ्गवीनम्, मातुलः, क्षत्रियः, श्रोत्रियः इति।

५. **यत्नरूपा** अनुप्रयोगादयः। यथा— अग्निसात् संपद्यते, भस्मसाद् भवति, ब्राह्मणसात् स्यात्, देवत्राकरोति, मर्त्यत्रागच्छति, मनुष्यत्रावसति, शुक्लीभवति, पटपटाकरोति, चकासांचकार कारयामास, बिभराम्बभूव, विदांकुर्वन्तु इति।

६. **प्रतिपयत्नरूपा** विध्यनुप्रयोगादयः। यथा— रैपोषं पुष्णाति, समूलकाषं कषति, जीवग्राहं गृह्णाति, पुरुषवाहं वहति, ऊर्ध्वशोषं शुष्कः, चूडकनाशं नष्टः,

ओदनपाकं पक्वः, सुवर्णनिधायं निहितः, लुनीहि लुनीहित्येवायं लुनाति, अधीष्वाधीष्वे– त्येवायमधीते, भ्राष्टमट मठमट, खदूरमटेत्येवायमटति, 'सक्तून् पिब, धानाः खाद ओदनं भुङ्क्ष्वेत्येवायमभ्यवहरति इति।

## (४. उपपदम्)

**उपस्कारविशेष एव प्रकृतिसमीपोच्चारितं पदमुपपदम्।**

तत् त्रिधा **१. तिङुपपदम्, २. कृदुपपदम्, ३. सुबुपपदं** च।

### (१. तिङुपपदम् –६)

तेषु प्रथमं क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम् उपसर्गरूपं च। तेषु–

**क्रियारूपं** यथा– एहि मन्ये रथेन यास्यति न मर्षयामि यत् तत्रभवान् वृषलं याजयेत्।

**कारकरूपं** यथा– अश्वेन संचरते, दास्या संप्रयच्छते।

**नामरूपं** यथा– कालो यद् भुञ्जीत भवान्।

**अव्ययरूपं** यथा– कथं नाम तत्रभवान् वृषलं याजयेत्, नमते दण्डः स्वयमेव।

**निपातरूपं** यथा– यावद् भुङ्क्ते, पुरा व्रजति

**उपसर्गरूपं** यथा– पराक्रमते पराजयते इति।

### (२. कृदुपपदम् –६)

द्वितीयमपि क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम् उपसर्गरूपं च। तेषु –

**क्रियारूपं** यथा– भोक्तुं व्रजति, भोजको व्रजति, गोदायो व्रजति, कर्त्तुमिच्छति इति।

**कारकरूपं** यथा– कुम्भकारः, उत्तानशयः, शय्योत्थायम्, मूलकोपदंशम् इति।

**नामरूपं** यथा– कालो भोक्तुम्, समयो भोक्तुम्, ब्रह्मभूयम्, ब्रह्मोद्यम् इति।

**अव्ययरूपं** यथा– दिवाकरः, दोषाकरः, मृषोद्यम्, ईषत्पानः इति।

**निपातरूपं** यथा– अलंकृत्वा, खलु कृत्वा, यावद्वेदम् अन्यथाकारमिति।

**उपसर्गरूपं** यथा– प्रजयी, प्रसवी, विकत्थी, निराकरिष्णुः इति।

### (३. सुबुपपदम् –६)

तृतीयं क्रियारूपम् कारकरूपं नामरूपम् अव्ययरूपम्, निपातरूपम् कर्मप्रवचनीयरूपं चेति। तेषु –

**क्रियारूपं** यथा– न त्वां तृणाय मन्ये, संतापाय प्रभवति, गोषु दुह्यमानासु गतः, क्रोशतः प्राव्राजीदिति।

**कारकरूपं** यथा— चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्, केशेषु प्रसितः, ब्राह्मणेषु भुञ्जानेषु वृषला आसते, वृषलेष्वासीनेषु ब्राह्मणा भुञ्जते इति।

**नामरूपं** यथा— गवां स्वामी, अन्नस्य हेतोर्वसति, पित्रा सदृशः, शिवं प्रजाभ्य इति।

**अव्ययरूपं** यथा— समया ग्रामम्, सहच्छात्रेण, नमो देवेभ्यः, दक्षिणाहि ग्रामात् इति।

**निपातरूपं** यथा— हे देवदत्त? हा देवदत्तम्, विना विष्णुमित्रेण, ऋते यज्ञदत्तादिति।

**कर्मप्रवचनीयरूपं** यथा— वृक्षमनु विद्योतते, उपार्जुनं योद्धारः, अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति॥

**प्रकृतिप्रत्ययावेवमुपस्कारश्च दर्शितः ।**
**क्रमादुपपदस्यापि स्वरूपमुपवर्णितम् ॥ ५०॥**

**अव्ययानि निपाताश्च गतयश्च निरूपिताः ।**
**कर्मप्रवचनीयाश्च सोपसर्गाः प्रकाशिताः ॥ ५१॥**

**न केवलेह प्रकृतिः प्रयुज्यते न केवलाः सुप्तिङजण्क्यजादयः ।**
**भवत्युपस्कार इहाऽपृथग्द्वयोर्द्वयार्थमेवोपपदं प्रयुज्यते ॥ ५२॥**

## इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रकृत्यादिप्रकाशो नाम ॥ प्रथमः प्रकाशः ॥ १ ॥*

प्रकाश एषोऽद्य सनातनेन व्यधायि नूनं विततप्रकाशः ।
प्रश्लेषबन्धादुपमुच्य तत्तत्प्रघट्टराजत्प्रविभक्तगात्रः ॥



* एवमत्र प्रथमप्रकाशे द्वादशसु शब्दभेदेषु प्रथमे चत्वारो भेदा निरूपिताः । मध्यवर्तिनश्चत्वारो द्वितीये द्रष्टव्याः । अन्तिमाश्चत्वारो पुनस्तृतीये। एवं शब्दभेदाय प्रकाशत्रयमधिक्रियते ।

अथ

## **शृङ्गारप्रकाशे द्वितीयः प्रकाशः**

प्रातिपदिकप्रकाशः

### ***(५. प्रातिपदिकम्)***

**प्रातिपदिकं त्रिधा** —

१. **विभक्तावयवम्,**

२. **अविभक्तावयवम्** [1]

३. **अनुकरणं** च। तत्र [2] —

### **(१. विभक्तावयवप्रातिपदिकम्)**

**१. विभक्तावयं त्रिधा— १. कृद्रूपम्, २. तद्धितरूपम्, ३. समासरूपं** च। तेषु —

**(१. कृद्रूपम् विभक्तावयम्)**

**भाव—कारकाऽभिधायिनो धातुप्रत्ययाः कृतः**। तत्र —

**(क. भावः —६)**

**धात्वर्थ एवाऽपूर्वापरीभूतो भावः**। यदाह— (वाप. ३.८.१२)

**कालानुपाति यद् रूपं धात्वर्थस्य क्रियेति तत् ।**
**परितो यत् परिच्छिन्नं तद्भाव इति कथ्यते ॥ १॥**

स (भाव) इह षोढा संभवति— **१. सिद्धः, २. साध्यः, ३. सिद्धासमाप्तः, ४. साध्याऽसमाप्तः, ५. सिद्धसाध्यः, ६. साध्यसिद्धश्चे**ति। तेषु —

**(१. सिद्धः)**

उद्भूतप्रत्ययांशत्वेन क्रियाऽनुद्रेकात् सत्त्वभूतत्वे लिङ्गसंख्याद्युपग्राही 'कर्तृकर्मणोः कृति' (२.३.६५) इति सम्बन्धविभक्तेर्निमित्तं **सिद्धः**। यथा— 'आश्चर्यमिदमोदनस्य च पाको ब्राह्मणानां च प्रादुर्भावः, भेदिका काष्ठानां देवदत्तस्य, चिकीर्षा यज्ञदत्तस्य कटस्य' इति। अत्र 'उभयप्राप्तौ कर्मणि (२.३.६६) एवेति नियमे उभयोः प्राप्तिर्यस्मिन् कृति' इति व्याख्यानात् (मभा. २.३.६६) अकाकारयोश्च नियमप्रतिषेधात् कर्त्तर्यपि षष्ठ्येव भवन्ती भावस्य सिद्धतां द्योतयति।

---

१. द्र. पृ० ११९ ।   २. द्र. पृ० १२० ।

**(२. साध्य:)**

उद्भूतप्रकृत्यंशत्वेन क्रियोद्रेकादसत्त्वभूतत्वे लिङ्गसंख्याद्यनुपग्राही कर्तृकर्मणो: कारकविभक्तेरेव निमित्तं **साध्य:**। यथा– ओदनं भोक्तुं याति, स्वाध्यायमधीत्य स्नाति, पय: पायंपायमास्ते इति। अतएव 'न लोकाव्ययखलर्थतृनाम्' (२.३.६९) इत्यादिना षष्ठी निषिध्यते।

**(३. सिद्धासमाप्त:)**

सिद्ध एव तद्धितानुबन्धी **सिद्धासमाप्त:**। यथा – व्यावक्रोशी, सांकूटिनम्, कृत्रिमम् इति। अत्र

यथा 'आभिजित्य:, कौञ्जायन्य:' इत्यादावणाद्यभिहितोऽप्यपत्यार्थ:, तैत्तिरीया: छागलेयिन: इत्यादौ छणाद्यभिहितोऽपि प्रोक्तार्थ:, स्वार्थिकाध्येतृवेदितृविषय– तद्धितोत्पत्तिमन्तरेण न समाप्यते, तथा व्यतिहाराभिविध्युपाधिको णजिनुणुक्त: शुद्धश्च क्त्यभिहित सिद्धोऽपि भाव: स्वार्थिकनिर्वृत्ताथीयितद्धितोत्पत्तिमन्तरेण न समाप्यत इति सिद्धासमाप्तो भवति।

**(४. साध्यासमाप्त:)**

साध्य एवानुप्रयोगानुबन्धी **साध्यासमाप्त:**। यथा चकासाञ्चकार विदाङ्कुर्वन्तु, रैपोषं पुष्यति इति। अत्र

यथा शुक्लीभवति, पटपटाकरोति इत्यादावभूततद्भावादिषु च्व्याद्यन्तम्, लुनीहि लुनीहि इत्येवायं लुनाति, भ्राष्ट्रमट मठमट खदूरमटेत्येवायमटति इत्यादिषु क्रियासमभिहारादिषु लोडन्तम् अनभिव्यक्त पदार्थकत्वादसमाप्तं स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं चापेक्षते तथा आमन्तं णमुलन्तं चाऽनभिव्यक्त– पदार्थकत्वादसमाप्तं साध्यरूपमेव स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं चापेक्षते इत्येतदुक्तो भाव: साध्याऽसमाप्ते। भवति। तदाह – आम इव णमुलोऽप्यसमाप्तार्थत्वाच्चादिवदनुप्रयोग: सिद्ध एवं। यथाविध्यर्थं तु वचनं 'कषादिषु यथाविध्यनुप्रयोग:' (३.४.४६) इति। तेन चकासाञ्चकार इतयादिनाऽयमर्थो भवति चकास्ति स्म, विदन्तु, राय: पुष्यन्नमुं पुष्यति इति। अतएव क्रियाविशेषणेनैव सिद्धमिति न केचित् णमुल्प्रकरणमारभन्ते।

ननु च,

क्रियाविशेषणानां कर्मता नपुंसकता च; कथं च पुषेरेव पुषिः कर्म भवति। न ह्यात्मनैवात्मा व्याप्यते, न हि सुशिक्षितोऽपि वटुः स्वं स्कन्धमारोढुं शक्नोति।

नैवम्।

'नागरकवृत्तं वर्त्तेत, विश्वजिता यजेते'—त्यादौ सामान्यविशेषयोरनैकात्म्येन व्याप्त्यवच्छेदयोरुपलम्भात् सामान्यपुषेरेवाऽवयवपुषिः कर्म भवति। न च क्रियाविशेषणानां कर्मतैवेति नियमः; क्रिया हि यथा साध्यायमानत्वात् कर्म, तथोत्पद्यमानत्वात् कर्त्र्यपि भवति। ततश्चोभयथाऽपि क्रियाविशेषणानियोज्यन्तेरैपोषं कृत्वा पुष्यति, रैपोषं यथा भवत्येवं पुष्यतीति।

**(५. सिद्धसाध्यः)**

सिद्ध एव साध्यधर्मयोगी **सिद्धसाध्यः**। यथा— आश्चर्यो गवां दोहोऽशिक्षितेनाऽगोपालेन, साधु खलु पयसः पानं यज्ञदत्तेन, विचित्रा हि सूत्रस्य कृतिः पाणिनिना इति। अत्र उभयप्राप्तौ कर्मण्येव षष्ठीति (३.२.८) कर्त्तरि तृतीयाम्नानात् सिद्धोऽप्ययं विवक्षातः साध्योऽपि भवतीति ज्ञायते।

अन्ये त्वन्यथा सिद्धसाध्यं वर्णयन्ति—उष्ट्रासिकामास्ते, पञ्च वारान् भुङ्क्ते पञ्च प्रयोगान् पचति इति। तत्रोष्ट्रासिकावारप्रयोगाणां क्रियाविशेषावृत्त्यनुष्ठान—रूपत्वेनापृथग्भावात् क्रियाभिख्याप्यानां द्वितीयादर्शनादभेदविवक्षातः सिद्धानामपि क्रियावदेव साध्यत्वमवगम्यते। तदाह—

**तत्स्वभावविशेषत्वाद् व्याप्या नोष्ट्रासिकाऽनया ।**
**साध्यत्वे त्वासनैकात्म्यात् फलतः कर्म कथ्यते ।। २।।**

**सोऽयमित्यभिसंबन्धादभेदे धर्मधर्मिणोः ।**
**क्रियाया इव साध्यत्वं वारादीनां न दुष्यति ।। ३।।**

तेन उष्ट्रासिकामास्त इत्यादीनामयमर्थो भवति— 'उष्ट्रवदास्ते, पञ्चावृत्तिं भुजिक्रियां करोति, पञ्च पाकान्निर्वर्तयति' इति।

**(६. साध्यसिद्धः)**

साध्य एव सिद्धधर्मयोगी **साध्यसिद्धः**। यथा— कर्त्तव्यं भवतः, कार्यं भवतः, कृतं भवत इति। अत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२.३.६९) इति लादीनां

साध्यार्थाभिधायित्वात् कर्तृकर्मणोः षष्ठीनिषेधे, 'कृत्यानां कर्त्तरि वा' (२.३.७१), 'क्तस्य च वर्त्तमाने' (२.३६७), 'नपुंसके भावे क्त उपसंख्यानम्' (२.३६७ वार्त्तिक), इत्यादिभिः पुनः षष्ठीविधानात् पक्षे विवक्षातः सिद्धार्थाभिधायित्वमवगम्यत इत्येतदुक्तो भावः साध्यसिद्धो भवति। न चाऽत्र कृत्यानां निषेधो न श्रूयते, यतः – 'खलर्थतृनाम्' इत्यत्र खलर्थेत्यनेन कृत्य–क्त–खलर्थाः शतृ–शानच्चानशश्च संगृह्यन्ते; तृन्नित्यनेन पुनस्तृन्नेवेति। अत एव निष्ठादिभावस्येव कृत्यभावस्य कर्मण्यपि षष्ठी न भवति। यथा–

**गतमस्तं यथाऽर्केण यथाऽभ्युदितमिन्दुना ।**
**तथा मानेन शैथिल्यमागन्तव्यं मृगीदृशः ।। ४।।**

कथं पुनः सकर्मकाद् भावप्रत्ययः?

तेन ह्यकर्मकाद् भवितव्यम्; यदाह 'लः कर्मणि च भावे चाऽकर्मकेभ्यः' (३.४.६९), 'तयोरेव कृत्य–क्त–खलर्थाः' (३.४.७०); न हि भवति कृतं कटं देवदत्तेनेति।

उच्यते– नैतदन्तरङ्गं द्रव्यकर्म, अपितु 'कालाध्वभावगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' (मभा. १४.५१) इति बहिरङ्गेषु कालादिकर्मसु गन्तव्यलक्षणं गत्यर्थकर्म; बहिरङ्गता च 'कालाध्वनोरत्यन्तसंयोगे' (२.३.५) इत्यनेन द्वितीयाविधानेन, भावस्य च कालादभेदेन, गन्तव्यस्य तु 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ–(२.३.१२) इति पुनर्द्वितीयाग्रहणेन ज्ञायते; अन्यथा हि कर्मणि द्वितीयायाः सिद्धत्वात् गत्यर्थकर्मणि चतुर्थी चेत्येव ब्रूयात्।

यस्यैव च द्रव्यकर्मणोरन्तरङ्गस्याभावेनाकर्मकः तस्यैव भावेन सकर्मको भवति अतो विद्यमानमपि कालादिकर्म नाकर्मकव्यपदेशं विघ्नयति।

अन्ये त्वन्यथा साध्यसिद्धं वर्णयन्ति– 'उष्ट्रासिका आस्यन्ते' हतशायिकाः शय्यन्ते, यवाग्वाः पाकाय व्रजति इति। अत्र आसिकाशायिकयोगख्याताभिहित– क्रियात्मकत्वात् पाकस्य व्रजिक्रियासाध्यत्वात्, सत्यपि साध्यत्वे लिङ्ग संख्यासम्बन्धि विभक्तियोगाद् विवक्षातः सिद्धत्वमपि गम्यत इत्ययं साध्यसिद्धो भवति। तथापि 'उष्ट्रासिका आस्यन्ते, हतशादिकाः शय्यन्त' इत्यमूभ्यां सामान्यविशेषोपचरित रूपो भावात्मैव प्रत्याय्यते। स आख्याताभ्यां सामान्यरूपेण, ण्वुलन्ताभ्यां विशेषरूपेण। बहुवचनं तु कुत्सातिशयार्थम्; या हि नाम उष्ट्रस्य कुत्सावत्यो बहुप्रकारजुषो बह्व्य

आसिका; याश्च हतानामतिशयवत्यस्तथाभूता एव भूयस्य: शायिका: प्रतीता:, ताभिर्विशेषरूपाभिरियमासिका शायिका चोपमानोपमेयसम्बन्धजनितभेदाऽभेद–परिग्रहाल्लकारेणापि सामान्यविशेषभावेन कुत्सातिशयार्थं बहुत्वेनैव प्रत्याय्यते, बहुत्वेन विना सामान्यविशेषभावानुपपत्तेः, तेनोष्ट्रासिका इवासनानि, हतशाविका इव शयनानि क्रियन्ते भवन्तीति वा वाक्यार्थो भवति।

नन्वेवमुष्ट्रासिकादीनां वारप्रयोगादानाञ्च कर्मतेव नपुंसकतापि प्राप्नोति; यथा–'मृदु पचति, प्रशस्तं पचतीति। उच्यते–

त्रिधा खलु **क्रियाविशेषणं** भवति –

**१. बाह्यम्, २. आभ्यन्तरम् ३. बाह्याभ्यन्तरं** च। तत्र–

**बाह्यं** धर्मरूपं वारादि;

**आभ्यन्तरं** विशेषरूपमुष्ट्रासिकादि,

**बाह्याभ्यन्तरं** गुणरूपं मृद्वादि। तेषु –

**बाह्यम्** 'सोऽयमित्यभिसम्बन्धाद्', अभेदोपचारेणाविचलितस्वरूपमेव प्रधानं विशिंषत् कथमिव स्वलिङ्गं जह्यात्?

**आभ्यन्तरं** तु विशेषांशपरिग्रहादाविष्टलिङ्गसंख्यं कथमिवान्यलिङ्गं गृह्णीयात्?

**बाह्याभ्यन्तरं** तु गुणत्वात् स्वलिङ्गविरहे 'गुणवचनानामाश्रयतो लिङ्गवचनानी'–ति विशेष्यलिङ्गग्राह्येव भवति; तत्र साध्यैकस्वभावत्वादलिङ्गसंख्याया: क्रियाया विशेषणत्वे मृद्वादीनां नपुंसकत्वमेव न्याय्यम्। उष्ट्रासिका–वारादीनां तु नित्यमाविष्टलिङ्गत्वाद् विशेषांक शपरिग्रहात् क्रियाविशेषणत्वेऽपि न नपुंसकलिङ्गता।

अथ 'पाकाय व्रजति, एधेभ्यो व्रजति' इति क्रियाया रन्धनाय स्थालीतिवत् तादर्थ्यचतुर्थ्यन्त: सिद्ध एव कस्मान्न विज्ञायते? नैवम्, 'भाववचनाश्च' (३.३.११) इति तादर्थ्य एव प्रत्ययोत्पत्तेः, 'तुमर्थाच्च भाववचनात्' (२.३.१५) इति स्वार्थ एव चतुर्थीविधानात्। किमर्थं पुनरिदम्?

भावेहि घञादय: सिद्धा एव, तादर्थ्ये चतुर्थी। क्रियार्थोपपदेन तुमुनाऽस्मिन् विषये घञादयो मा बाधिषत:; वासरूपविधिश्चाऽत्र 'तुमुन्ण्वुलौ' (३.३.१०) इति ण्वुल्ग्रहणान्नावतरति।

अथ यथैधानाहर्त्तुं व्रजति एधेभ्यो व्रजतीति क्रियार्थोपपदस्य च कर्मणि स्थानिन: (२.३.१४) इति चतुर्थी, तथा पाकं कर्त्तुं व्रजति पाकाय व्रजतीति यदि भवेत् को दोष:

स्यात्? न कश्चित्। किं त्वेतत् पृच्छामि – स पाकः सिद्धः साध्यो वा? यदि सिद्धः किं कर्त्तुं व्रजति? अथ साध्यः क्रियार्थोपपदेषु तुमुना घञादयो बाध्यन्ते।

अथ तुमर्थत्वेन साध्याभिधायिनश्चतुर्थ्यन्तत्वेन चासत्त्वभूतार्थाः पाकायेत्यादिषु घञादयः, कथं यवाग्वा इत्यादेः संबन्धविभक्तेर्निमित्तं भवति?

शब्दशक्तिरेषा यत् कस्यचिदेव केनचित् केनचिदेव कस्यचित् सम्बन्धः। तद्यथा अभिन्नेऽप्यर्थे 'प्रजागरिताऽपररात्रानि'–ति तृनो बाह्य कर्मोपसर्गकर्मयोगाज् ज्ञायते 'न जागरूक इति' उक्तस्य; 'ऊरीकरोति पाकादिकमि'–त्यूर्यादीना मेकानेक विशेषस्थया करोतिक्रियया भवति संबन्धः, न तदर्थविषयैः पचादिभिः, सूर्यमपि न पश्यन्त्यसूर्यपश्या राजदारा इति व्यवहितामपि सूर्यकर्मिकां दृशिक्रियां नञ् निषेधति, न सूर्यसत्ताम्; एवं न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण इति, तथा लवणं न भुङ्क्ते अलवणभोजी भिक्षुः इत्यसूर्यपश्यादिवदसामर्थ्येऽपि नञ्समासो दृश्यते;न त्वकिञ्चित्कुर्वाण इति,एवम् 'अमाषं हरमाणः, अगाधादुत्सृप्त' इति।

अपि च 'पयः पायं पायं', पयः पीत्वा पीत्वा, ग्रहमनु प्रवेशमनु प्रवेशम्, गेहमनुप्रविश्यानुप्रविश्य इत्याभीक्ष्ण्यवीप्सयोः पदद्विर्वचनं प्रयोजयन्ति णमुलादयः, न पाच्यते द्विशो देहीति यङ्शसादयः लोलूयत इति द्विर्वचनमन्तरेणापि क्रियासमभिहारमवगमयति यङन्तम् न लुनीहि लुनीहीति लोडन्तम्; कृतपूर्वी कटम्, अधीती व्याकरणम् इति वृत्तिवशेनोज्झितकर्माभिधानशक्तयः कर्मविभक्तिं न विघ्नयन्ति निष्ठादयः; ग्रामं गन्तुमनाः, कटं कर्त्तुकाम इति निवृत्तिच्छिन्ना अपि कर्मणि द्वितीया मेव प्रयोजयन्ति तुमुनादयः उभयप्राप्तौ कर्मण्येवेति नियमेऽपि विचित्रा सूत्रस्य कृतिः पाणिनेः इति शब्दानामनुशासनमाचार्यस्य इति समासस्य कर्त्तरि सम्बन्धविभक्तिमप्यु पाददते क्तिनादयः, साध्यार्थाभिधायिनोऽसत्त्वभूतार्था अपि यवाग्वाः पाकायेति कर्मणि सम्बन्धविभक्त्येव संबध्यन्ते घञादयः इति तदुक्तभावः साध्यसिद्धो भवति। (इति भावविमर्शः। अथ कारकविमर्शः।

(ख. **कारकाभिधायिनो धातुप्रत्ययाः)**

**क्रियानिमित्तं कारकम्।** तदपि षोढा –

**१. कर्त्ता, २. कर्म, ३. करणम्, ४. संप्रदानम्, ५. अपादानम्, ६. अधिकरणं** चेति। तत्र–

(१) **कर्त्ता — स्वतन्त्र:, हेतु:, कर्मकर्त्ता** च। तेषु —

**(स्वतन्त्र:)** क्रियाया: स्वेच्छया करणादीनि य: प्रयुङ्क्ते, न तु तै: प्रयुज्यते, स स्वतन्त्र:। यथा— पुत्रणेत्रस्य दर्शक:, पुरां भेत्तेति।

**(हेतु:)** तमेव क्रियाप्रयुक्तं य: प्रयुङ्क्ते स हेतु:। यथा— राजानं योधितवान् राजयुध्वा धनुष्मान्, नखानि मोचयन्ति नखमुचानि धनूंषीति।

**(कर्मकर्त्ता)** कर्मैव स्वातन्त्र्येण विवक्षितं कर्मकर्त्ता। यथा— स्वयमेव पच्यन्ते पचेलिमा माषा:, स्वयमेव भज्यन्ते भङ्गुराणि काष्ठानि इति।

(२) **कर्म — निर्वर्त्यं, विकार्यं, प्राप्यं** च। तेषु —

**(निर्वर्त्यम्)** यदसज्जन्यते सद्वा प्रकाश्यते तन्निर्वर्त्यम्। यथा— कर्त्तव्य: कट:, उच्चार्य: शब्द: इति।

**(विकार्यम्)** यस्य प्रकृत्युच्छेदो गुणान्तरं वोत्पद्यते तद् विकार्यम्। यथा—भुक्त ओदन:, लूयमान: केदार: इति।

**(प्राप्यम्)** क्रियाकृतविशेषाऽनवगतौ कर्त्तु: क्रिययाऽनास्थितमास्थितं वा यदाप्यते तत् प्राप्यम्। यथा—'दुर्दर्श: प्रभु:, सुयानो मार्ग इति।

(३) **करणं — बाह्यम्, आभ्यन्तरं, बाह्याभ्यन्तरं** च। तेषु—

**(बाह्यम्)** कर्त्तु: शरीराद् बहिरुपलभ्यमानं बाह्यम्। यथा— आशितं भवं भक्तम्, धृतोदक: करक: इति।

**(आभ्यन्तरम्)** तद्विपरीतमाभ्यन्तरम् । यथा— प्रियंकरणं शीलम्, वशीकरणं प्रेम, इति।

**(बाह्याभ्यन्तरम्)** उभयगुणयोगि बाह्याभ्यन्तरम्। यथा— दर्शनं चक्षु:, संवननं साम इति।

(४) **संप्रदानं— ददातिकर्माप्यम्, कर्ममात्राप्यं, क्रियाप्यं** च। तेषु

**(ददातिकर्माप्यम्)** सम्यक् प्रदीयतेऽस्मै इत्यन्वर्थसंज्ञाया विषयो ददातिकर्माप्यम्। यथा— दीयतेऽस्मै दानीयो ब्राह्मण:, देवा देयासुरस्मै देवदायो डिम्भ इति।

**(कर्ममात्राप्यम्)** 'कर्मणा यमभिप्रैति संप्रदानम्' (१.४.३२) इति पारिभाषिक— संज्ञामात्रविषय: कर्ममात्राप्यम्। यथा—दाश्यतेऽस्मै देयमिति दाश: कैवर्त्त:, गां हन्ति तस्मै आगतायेति गोघ्नोऽतिथि: इति।

**(क्रियाप्यम्)** कर्मशब्देन क्रियाया अप्युपादानात् क्रियया यदाप्यते तत् क्रियाप्यम्।

यथा— श्लाघन्तेऽस्मै जना इति श्लाघ्यो राजा, स्पृहयन्त्यस्मै लोकाः स्पृहणीयो विभव इति।

(५) अपादानम् — **निर्दिष्टविषयम्, उपात्तविषयम् अपेक्षितक्रियं** च। तत्र —

**(निर्दिष्टविषयम्)** 'ध्रुवमपायेऽपादानम्' (१.४.२४) इति निर्दिष्टविषयम्।

यथा— प्रपतनो गिरिः, प्रस्रवणः शैलः इति।

**(उपात्तविषयम्)** भीत्रार्था(१.४.२५)दियोगोक्तमुपात्तविषयम्।

यथा— 'भयानको द्विषाम्, प्रभवः संपदाम्' इति।

**(अपेक्षितक्रियम्)** अवधिमात्रार्थमपेक्षितक्रियम्।

यथा— अवधिः पर्वतः, मर्यादा समुद्रः, इति।

(६) **अधिकरणं — वैषयिकम्, औपश्लेषिकम्, नैमित्तिकं** च। तेषु —

**(वैषयिकम्)** विविधमनेकप्रकारं जातिगुणक्रियाद्रव्यादिभिः सिनोतीति । विषयो देशकालादिः, विषय एव वैषयिकम्। यथा— निपिबन्त्यस्मिन् गवादय इति निपानं जलाशयः, राजानो धीयन्तेऽस्यां राजधानीनगरम् इति।

**(औपश्लेषिकम्)** उपश्लेषोऽवष्टम्भः, तस्मै प्रभवत्यौपश्लेषिकम्। यथा— इषवो धीयन्तेऽस्मिन् इषुधिः उपासङ्गम्, शेरतेऽस्यां शय्या पर्यङ्कः।

**(नैमित्तिकम्)** निमित्तमेव नैमित्तिकम्। यथा— रज्यन्तेऽस्मिन् सामाजिकमनांसीति रङ्गः प्रेक्षा, प्रसीदन्त्यस्मिन् नयनमनांसीति प्रासादः सौधम् इति।

तदतेदुभयमपि[१] — **१. शुद्धम्, २. संकीर्णम्, ३. उपाधिमत्, ४. रूढिमत्, ५. संबन्धि, ६. अनुबन्धि** चेति **षोढा** विप्रथते। तत्र—

**(१. शुद्धम्)** अर्थान्तरैरसंस्पर्शः शुद्धिः।

सा भावानां यथा— ओदनस्य पाकः, अलं कृत्वा, खलु स्थित्वा इति।

कारकाणां यथा— अपां स्रष्टा, वर्षशतस्य पूरकः, सोमे पवमान इति।

**(२. संकीर्णम्)** संपर्कः संकरः।

स भावानां यथा— कालो भोक्तुम्, अलं भोक्तुम्, भोजं भोजं व्रजतीति।

कारकाणां यथा— गमनमर्हति गम्या योषित्, जेतुं शक्यते जय्यः शत्रुः, पक्तुं व्रजति, पाचको व्रजति इति।

---

१. 'भाव—कारकाऽभिधायिनो धातुप्रत्ययाः' द्र. पृ. ६७

**(३. उपाधिमत्)** बाह्यम्, आभ्यन्तरम्, उभयं वा शास्त्रोपात्तं विशेषणमुपाधिः।

स भावानां यथा— भवतः शायिका, उपसरो गवाम्, समजः पशूनामिति।

कारकाणां यथा— तुन्दपरिमृजोऽलसः, स्तम्बेरमो हस्ती, दृतिहरिः पशुः इति।

**(४. रूढिः)** गुणवचनत्वे द्रव्यवचनत्वं रूढिः। सा

भावानां यथा— मृगया, वासना, परिव्रज्येति ।

कारकाणां यथा— कुम्भकारः, पङ्कजम्, अमावास्येति।

**(५. संबन्धः)** नियोगतः प्रतियोग्यपेक्षः संबन्धः। स

भावानां यथा— भुक्त्वा व्रजति, भोक्तुमिच्छति, अप्राप्य नदीं पर्वत इति।

कारकाणां यथा— चङ्क्रम्यमाणोऽधीते, अधीयानो वसति, गोदायो व्रजति।

**(६. अनुबन्धः)** अनुषङ्गोऽनुबन्धः। स

भावानां यथा— साराविणं वर्त्तते, रैपोषं पुष्यति, चकासाञ्चकार इति।

कारकाणां यथा— अग्निष्टोमयाजी, उष्ट्रकोशी, शतदायी—ति।

**(कृतः)** अथैतदभिधाने त्रिप्रकाराः **कृतो** भवन्ति —

**१. भाववचनाः, २. कारकवचनाः, ३. भावकारकवचना**श्च। तेषु —

(१) अथुजादयः, ण्वुलादयः, णजादयः, तुमुनादयः, सयादयः, णमुलादयश्च **भाववचनाः,**

(२) ण्वुलादयः, अणादयः, उणादयः, क्विनादयः, शत्रादयः, तृनादयश्च **कारकवचनाः**

(३) तव्यादयः, तवायादयः, क्तादयः, खलादयः, ल्युडादयः, घञादयश्च **भावकारकवचनाः**। तत्र—

**(१. भाववचनाः —६)**

भाववचनेष्वनुपाधौ सिद्धभावे **अथुजादयः**। यथा— नन्दथुः, यज्ञः, स्वप्नः, क्रिया, कण्डूया, व्रज्या इति।

अत्रैव रोगाद्युपाधिमति **ण्वुलादयः।** यथा— अरोचको बाधते, प्रवाहिकातः करोति, भवत आसिका, इक्षुभक्षिकां मे धारयसि,कां त्वं कारिमकार्षीः,अकरणिस्ते वृषलः इति।

सिद्धासमाप्ते **णजादयः**। यथा— व्यावक्रोशी वर्त्तते, व्यावहासीं कुर्वन्ति, साङ्कूटिनं वर्त्तते, सांराविणं कुर्वन्ति, करणेन निर्वृत्तं कृत्रिमम्, पाकेन निर्वृत्तं पक्त्रिमम् इति।

साध्यरूपे **तुमुनादयः**। यथा— भोक्तुं व्रजति, भोक्तुं जानाति, भुक्त्वा व्रजति,

अपमित्य याचते, स्वादुङ्कारं भुङ्क्ते, चोरङ्कारमाक्रोशति।

तुमर्थ एव छन्दोविषये **सयादयः**। यथा— वक्षे रायस्त्वा, दृशे विश्वाय सूर्यम्, अग्निं देवा विभाजं नाशक्नुवन्, विलुपं नाशक्नुवन्, ईश्वरोऽभिचरतोः, ईश्वरो विलिखः इति।

साध्याऽसमाप्ते **णमुलादयः।** यथा— समूलकाषं कषति, रैपोषं पुष्यति, चकासाञ्चकार, बिभराम्बभूव, चकासामास, विदाङ्कुर्वन्तु इति।

(२. **कारकवचनाः** —६)

कारकवचनेष्वनुद्रिक्तक्रियांशाः कर्त्तर्येव **ण्वुलादयः**। यथा— कारकः, स्रष्टा, नन्दनः, प्रियः, यज्वा जरन्निति।

सोपपदाः कर्त्रादि**ष्वणादयः**। यथा— काण्डलावः, पादहारकः, सुभङ्करणम्, गोघ्नः, शम्भुः, गोष्ठः इति।

निरुपपदा रूढिमन्त **उणादयः**। यथा— कारुः, दात्रम्, धात्री, दासः, भीष्म इति।

उभयेऽपि लोपवन्तः **क्विनादयः**। यथा— धृतस्पृक्, सदृक्, अर्थभाक्, शुभंयुः, प्राङ्, युङ् इति।

कर्त्तर्येवोद्रिक्तक्रियांशाः **शत्रादयः।** यथा— यवागूं पचन्, सोमं पवमानः, आशिषं दाश्वान्, वेदमनूचानः, भुक्तवानोदनम्, ग्रामं गमी' इति। त एव ताच्छील्याद्युपाधिमन्त**स्तृनादयः**। यथा— जागरितानपररात्रान्, मुण्डयितारः श्राविष्ठायनाः वधूमूढाम्, अलङ्करिष्णुः, कतीह कवचमुद्वहमानाः, शतं दायी, एधानाहारको व्रजति इति।

(३. **भावकारकवचनाः** —६)

भावकारकवचनेषूद्रिक्तानुद्रिक्तक्रियांशाः **तव्यादयः**। यथा— कर्त्तव्यं भवता, करणीयं भवता, कार्यः कटोभवतः, कृत्यःकटो भवतः, वास्तव्यो भवान्, ब्रह्मभूयं भवत इति।

त एवच्छन्दोविषयास्**तवायादयः**। यथा—परिधातवै, परिस्तरितवै, अवचक्षे, अवगाहे, दिदृक्षेण्यः, कर्त्वं हविः इति।

उद्रिक्तक्रियांशाः **क्तादयः**। यथा— भुक्तं भवता, भुज्यमानं भवता, भोक्ष्यमाणं भवता, भुङ्क्त ओदनं भवान्, भुक्त ओदनो भवता, एवं भोक्ष्यमाण इति। त एव व्यक्तकालाः **खलादयः**। यथा— स्वाढ्यंभवं भवता, सूत्थानं भवता, प्राशितंभवं भवता, दुराढ्ययंभवं भवता, ईषत्पानः सोमो भवतः, आशितम्भवं भक्तम् इति।

अनुद्रिक्तक्रियांशाः प्रायो गुणवचना **ल्युडादयः**। यथा— व्यासस्य वचनम्,

पाणिनेरुक्ति:, छात्रस्य हसितम्, इध्मानां व्रश्चनं जनानां भक्ति:, राज्ञां मत इति। त एव प्रायोद्रव्यवचना **घञादय:**। यथा– पर्याय: क्रियाणाम्, विपर्याय: कालस्य, संग्रह: शास्त्राणाम्, अधीत: स्वाध्याय:, अधिगत उपाय:, श्रेयानुपाध्याय इति।।

**(२. तद्धितरूपं विभक्तावयम्)**

**भाव–कारक–सम्बन्धि–स्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिता:।**

**(१. भावस्तद्धिता:)** तत्र **भावो** द्विधा– **अन्तरङ्गो बहिरङ्गश्चेति**। तयो: –

**(अन्तरङ्ग:)** **शब्दस्यार्थे प्रवृत्तिनिमित्तमन्तरङ्ग:**। यदाह 'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश: स तस्य भाव:, तदभिधाने त्वतलौ'।

तस्योपसंग्रहाय संग्रहकार: पठति–

**शब्दे तां जातिं शब्दमेवाऽर्थजातौ**
**जाति: शुक्लादौ द्रव्यशब्दे गुणं तम् ।**
**कृत्तत्संयोगं योगि चाभिन्नरूपं**
**वाच्यं वाच्येषु त्वादयो बोधयन्ति ।। ५।।** (वाप. ५, ५.१.११९)

तत: स षोढाऽभिव्यज्यते १.जाति:, २. गुण:, ३. स्वरूपम्, ४. संबन्ध:, ५. संहति:, ६. अभिन्नरूपमिति। तेषु –

**जातिर्**यथा– गोत्वम्, शुक्लत्वम्, मानुष्यकम्, स्त्रैणम्, पौंस्नम्, ब्राह्मण्यम् इति।

**गुणो** यथा– शुक्लत्वम्, शीघ्रता, म्रदिमा, माधुर्यम्, आर्जवम्, वैदग्ध्यमिति।

**स्वरूपं** यथा– डित्थत्वम्, आकाशत्वम्, चन्द्रत्वम्, सूर्यत्वम्, दिक्त्वम्, तदात्वमिति।

**संबन्धो** यथा– पाचकत्वम्, काण्डलावत्वम्, दण्डित्वम्, औपगवत्वम्, राजपुरुषत्वम्, पुरुषव्याघ्रत्वम् इति।

**संहतिर्**यथा– धवरवदिरत्वम्, नरसिंहत्वम्, शुक्लकृष्णत्वम्, कृष्णशारत्वम्, नीलोत्पलत्वम्, गौरखदिरत्वम् इति।

**अभिन्नरूपं** यथा– सत्त्वम्, विद्यमानत्वम्, गर्गत्वम्, पञ्चालत्वम्, पदार्थत्वम्, पङ्कजत्वम् इति।

ननु च **जातिगुणाज्जातिगुणे धवखदिरादौ स्वजातिसंघाते ।**
**डित्थादौ च स्व (स्वे) रूपे कृत्तत्संयोगे तु संबन्धे ।। ६।।**

(दौ च स्व = दौ स्वे'–इति तूत्प्रेक्ष्येत)

त्वादय इति स्मृतिः।

कथमभिन्नरूपादावपि भवति?

उच्यते— कृत्तद्धितसमासेषु सम्बन्धाभिधानम्, अन्यत्र रूढ्यभिन्नरूपाऽव्यभिचरित— संबन्धेभ्यः। अत एवोक्तम् **'कृत् तत्संयोगं योगि चाभिन्नरूपम्'** इति।।

**अवधेरपि वाच्यत्वं त्वादीनामिष्यते बुधैः ।**
**गोत्वाद्धि गौरितिज्ञानमभिधानं च जायते ।। ७।।**

ते ह्येवमाहुः 'तस्य भावस्त्वतलौ' (५.१.११९),भवतोऽस्मादभिधानप्रत्ययाविति भावः।

तदसत्, न हि गोत्वं गौरिति ज्ञानस्योत्पत्तावपादानतां जनयत् 'जनिकर्त्तुः प्रकृतिः' (१.४.३०), 'भुवः प्रभवो' (१.४.३१) वा भवति; यथा— शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवतीति। ज्ञानं त्वात्मन एव जायते, मनसैवोद्भवति। तदाह— 'व्यापकत्वादप्यात्मनो युगपज्ज्ञानानुत्पत्तिर्मनसो (ऽणुत्वस्य) लिङ्गम्, नाहमद्राक्षम्, नाहमश्रौषम्, नाहमज्ञासिषम्, अन्यत्र मे मनोऽभूदिति। निमित्तत्वं तु गौरिति ज्ञानोत्पत्तौ शब्दस्येव गोत्वादेरपीष्यत एव। तत्र यथा समवायिनः श्वैत्यात् श्वैत्यबुद्धेः श्वेते श्वैत्यबुद्धिः, तथा समवायिनो गोत्वाद् गोबुद्धेर्गवि गोत्वबुद्धिः, ते परस्परं कारणभूता इति।

अभिधानं तु **शब्दः।** स च येनोच्चारितेनार्थः प्रतीयते। तस्यापि न गोत्वमवधिर्भवति। शब्दो हि आकाशादेव जायते, मुखादेव प्रभवति, न गोत्वादेः। तदाहुः **'मुखे हि शब्दमुपलभामहे भूमावर्थम्'** (शाबरभाष्यम् १.१.५) इति। यदापि नित्यः शब्द इति मतं तदापि शब्दस्य गोत्वादयो वाच्या विशेष्याः प्रत्याय्या एव भवन्ति। तत्र च शब्दस्य गोत्वादीनां वाच्यत्वे विशेष्यत्वे वा कर्मतैव, नावधित्वम्। प्रत्याय्यत्वे तु विपरिणामविपरिवर्त्तपक्षयोर्वक्ष्यमाणन्यायेन प्रत्युत शब्दस्यैवाऽवधित्वम्। अध्यासस्तु सादृश्यादुपाधेरुपाधिसादृश्याभ्यां वा संभवति; यथा— शुक्तिकादौ रजतादेः, स्फटिकादौ रक्तादेः, प्रतिबिम्बादौ मुखादेरिति। तत्र यो यदध्यास्यते, यो यदध्यास्ते वा, स तस्याधिकरणं कर्म वा स्यान्न त्ववधिः; गोत्वं निमित्तमुपादाय गोशब्दो गामध्यास्ते गवि वाऽध्यास्यते। तदिष्यत एव 'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ' इति।।

**(बहिरङ्ग:)** धात्वर्थरूप:, कृदभिधेयो **बहिरङ्ग:**। सोऽपि षोढा–

**१. भावरूप:, २. कारकरूप:, ३. संबन्धिरूप:, ४. भावविशिष्ट:, ५. कारकविशिष्ट:, ६. संबन्धिविशिष्ट**श्चेति। तत्र –

**(१. भावरूप:)**

प्रवृत्तिनिमित्ततुल्यो भावरूप: – ब्राह्मणस्य कर्म ब्राह्मण्यम्, पुरोहितस्य पौरोहित्यम्, स्तेनस्य स्तेयम्, सख्यु: सख्यम्, दूतस्य दूत्यम्, वणिजो वाणिज्यमिति।

**(२. कारकरूप:)**

कारकैस्तुल्यकक्ष्य: कारकरूप:। यथा– राजानमर्हति राजवद् वृत्तम्। आप्रयोजनकालं भवति आकालिकी प्रवृत्ति:, श्येनस्येव पातोऽस्यां वर्त्तते श्यैनंपाता क्रियां, दण्ड: प्रहरणमस्यां क्रीडायां दाण्डा, (४.२.५७) महिमास्त्यस्यां महिमिनी समस्या, वटकं प्रकृतमस्यां वटकमयी यात्रेति (मभा. ५.२.८२)।

**(३. सम्बन्धिरूप:)**

रूढे द्रव्यभूत: सम्बन्धिरूप:। यथा– चाषाणां समूह: चाषम्, नाट्यानामाम्नायो नाट्यम्, भृग्वङ्गिरसां विवाहो भृग्वङ्गिरसिका, काकोलूकस्य वैरं काकोलूकिका, अवीनां संघातोऽविकट:, तेषामेव विस्तारोऽविपट: इति।

**(४. भावविशिष्ट:)**

अतर्कितोपनतचित्रीकरणादिसदृशो भावविशिष्ट:। यथा– काकस्य चागमनं यादृच्छिकम्, तालस्य च पात:। तेन तालेन पतता काकस्य वध:। एवमेव देवदत्तस्य चागमनं दस्यूनां चोपनिपात:, तैश्च तस्य वध:। तत्र यो देवदत्तस्य दस्यूनां च समागम: स काकतालसमागम इवेत्येक उपमार्थ:, यश्च देवदत्तवध: स काकवध इवेति द्वितीय उपमार्थ:।

तत्र प्रथम: समासार्थ: काकतालमिति, द्वितीय: प्रत्ययार्थ: काकतालीयमिति। समासश्चायमस्मादेव ज्ञापकाद् यदाह 'समासाच्च तद्विषयाद् (५.३.१०६) आकस्मिक इवार्थे छो भवति। तद्विषयादित्यत्र हि तदित्यनेन 'इवे प्रतिकृतौ' (५.३.९६) इति इवार्थ:। एवम्

अजाकृपाणीयम् (काशिका ५.३.१०६), अन्धकवर्त्तकीयम् (काशिका ५.३.१०६), घुणाक्षरीयम्, अर्धजरतीयम्, गोमयपा/वा–यसीयम् (गणरत्न. ३.३.१९६) इति।

**(५. कारकविशिष्ट:)**

कारकावच्छिन्न: कारकविशिष्ट:। यथा— मतस्य करणं मत्यम्, पीलूनां पाक: पीलुकुण:, जनस्य जल्पो जन्य:, शिवस्य भवनं शिवताति:, नासाया अवनति: अवटीट: (५.२.३१), धने काम: धनक इति।

**(६. संबन्धिविशिष्ट:)**

सम्बन्धिनाऽवच्छिन्न: संबन्धिविशिष्ट:। यथा— हल्य:, कर्ष:, सौध: संकोच:, पौरुषेयो वध:, आथर्वण आम्नाय:, वैदो घोष:, छान्दोग्यो धर्म: इति।

उपाधिरपि संबन्ध्येव भवति। यथा— गार्गिकया विकत्थते, काठिकया अधिक्षिपति, गार्गिकामन्ववेत:, गार्गिकामवगतवान्, काठिकामवगतवान् इति। धात्वर्थोऽपिभाव एव।

**क्रियापि** ह्युपमानेन परीता परिच्छिन्ना साध्यसिद्धभावो भवति।

स त्रिधा— **१.भावविशिष्ट:, २.कारकविशिष्ट:, ३.संबन्धिविशिष्ट**श्चेति। तेषु—

१. **भावविशिष्टो** यथा— ब्राह्मणेन तुल्यमधीते ब्राह्मणवत्, राज्ञा सदृशं वर्त्तते राजवत्, जडस्य तुल्यं ब्रूते जडवत्, सूर्य इव प्रकाते सूर्यवत्, पिता यथा पालयति पितृवत्, गुरुरिवानुशास्ति गुरुवदिति।

अत्र ब्राह्मणादिस्थासु अध्ययनक्रियासु साहचर्याद् वृत्ति:, जातिद्रव्ययोरन्यतरेण क्रियाया: सादृश्यानुपपत्ते:। यदाह—'तेन तुल्यं क्रिया चेद् वति:' (५.१.११५); तेनेति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिप्रत्ययो भवति तत्तुल्यं क्रिया चेत् सा भवति। अर्थपरं चैतत्; तेन सदृशेत्यादिप्रयोगेष्वतृतीयान्तादपि भवति।

२. **कारकविशिष्टो** यथा— राज्ञेव व्यवहृतमनेन राजवत्, देवमिव भवन्तं पश्यामि देववत्, असिनेव दात्रेण च्छिनत्ति असिवत्, ब्राह्मणायेव यदा देवदत्ताय ददाति ब्राह्मणवत्, पर्वतादिवासनादवरोहति पर्वतवत्, पितरीव गुरावाचरते पितृवत्।

अत्र पुनरिदमेव सूत्रमन्यथा व्याख्यायते—'तेन कारकविशेषेण तुल्यं यथा भवति। एवं चेत् क्रिया भवति भावोत्पन्नेऽपि हि प्रत्यये कदाचित् प्रत्ययमुखेन क्रियाविशेषणं भवति, कदाचित् प्रकृतिमुखेन। यथा— तीव्र: पाक:, तीव्रं पाकम् इति।

३. **सम्बन्धिविशिष्टो** यथा— ब्राह्मणस्येवाऽध्ययनमस्य ब्राह्मणवत्, राजवद् रौद्रं वृत्तमस्य राजवत्, जडस्य सदृशं वचनमस्य जडवत्, सूर्यस्येव प्रकाशोऽस्य

सूर्यवत्, पितुर्यथा पालनमस्य पितृवत्, गुरोस्तुल्यमनुशासनमस्य गुरुवत् इति। अत्र तु 'तत्र तस्येव' (५.१.११६) इत्यनेन वतिः। ननु च 'तेन तुल्यमि'– (५.१.११५) त्यनेनैव सिद्धे किमर्थं 'तत्र तस्येव' इति सूत्रस्यारम्भः?

द्रव्यगुणयोतुल्ययोः प्रत्ययो न लभ्य इति। यथा– मथुरायामिव पाटलिपुत्रे प्रासादा मधुरावत्, ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ता ब्राह्मणवत् इति।

यद्येवं पूर्वसूत्रे क्रियाग्रहणं न करिष्यते। साहचर्याच्च क्रियायामिव द्रव्यगुणयोः प्रातिपदिकं वर्त्तिष्यते। ततश्च मैत्रेयतुल्या गावश्चैत्रस्य, ब्राह्मणेन तुल्या दन्ताः क्षत्रियस्य इति विगृह्य पूर्वसूत्रेणैव वतिः सेत्स्यतीति।

तदसत्।

एवं हि गवयेन तुल्योऽनड्वान् इत्यत्रापि प्रत्ययः प्रसजेत्, इवार्थे तु प्रत्यये सप्तमीषष्ठ्यन्ताभ्यामेव विधीयमाने गवय इवाऽनड्वानित्यत्र प्रत्ययप्रसङ्गो न स्यात्; सप्तम्यन्तषष्ठ्यन्तयोर्हि बाह्यं सम्बन्धिनमपेक्ष्य इवशब्दप्रयोगो भवति, न पुनरिवार्थापेक्षयेव; इवशब्दो ह्युपमानोपमेयलक्षणसंबन्धद्योतकः, न तु सम्बन्धि– रूपाभिधायी। तस्माद् गवयेन तुल्योऽनड्वानित्यत्रापि मा भूत् प्रत्ययप्रसङ्ग इति पूर्वसूत्रे क्रियाग्रहणम्। तस्मिंश्च कृते द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न स्यादिति सप्तमीषष्ठ्यन्ताभ्यामिवार्थे 'तत्र तस्येव' इति वतिर्विधीयते।

अथ 'तदर्हम्' (५.१.११७) इति किमर्थम्?

**अर्हतो या क्रिया कर्त्तुस्तत्रापि वतिरिष्यते ।**
**उपमानाविवक्षायां तद्विधानं न लभ्यते ।। ८।।**
**उपमानोपमेयत्वमन्यस्यान्येन वा सह ।**
**अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनैव वा ।। ९।।** (वाप. ३ वृत्तिः।)

तत्रान्यस्यान्येन यथा– अवैयाकरणोऽप्ययं वैयाकरणवद् ब्रूते; योषिदप्येषा पुंवद्वक्तीति; अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनो यथा– वैयाकरणः केनचिदुच्यते वैयाकरणवद् ब्रूहीति; योषिदप्युच्यते स्त्रीवद् वदेति। वैयाकरणोऽप्यवज्ञया कदाचिद् – वैयाकरणवद् ब्रूते। श्रूयते हि– यर्वाणस्तर्वाणो नाम साक्षात्कृतधर्म्माण ऋषयो बभूवुः। ते हि 'अन्तर्वेद्यामेव न म्लेच्छितव्यम्, अतोऽन्यत्रावज्ञया' इति 'यद्वा नस्तद्वा न' इति वक्तव्ये यर्वाणस्तर्वाण इत्यूचुः {मभा.१.१.१ (९)}। योषिदपि कदाचिदाश्रितप्रागल्भ्यात् पुंवद्वक्ति यथोच्यते–

**सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ ।**
**या वैदर्भगिरां भूमिः कालिदासादनन्तरम् ।। १० ।।**
**अस्यौपम्यद्वयस्यापि विवक्षातोऽपरिग्रहे ।**
**वतिः कथमिवार्थीय इति मत्वायमुच्यते ।। ११ ।।** (वाप. ३ वृत्तिः)

तत्र 'राजवद् वृत्तमित्यत्र यदा एवंविधा अर्थविवक्षा—'पृथ्वादिना राज्ञा तुल्यं वृत्तम् अनेन राज्ञा राजवद् वृत्तं राज्ञे'—ति तदाऽऽद्येनैव सूत्रेण सिद्धः प्रत्ययः; यदा त्वेतादृशी विवक्षा—'राज्ञ इव पृथोरस्य वृत्तं राजवद्वृत्तं राज्ञ इति तदा द्वितीयसूत्रेण। यदा त्विदं वृत्तं राजानमेवाऽर्हति नान्यमित्युपमानोपमेयभावाभावे राजवद् वृत्तमिति प्रयोगस्तदा 'तदर्हम्' इत्यनेन वतिर्विधीयत इति नानर्थकः सूत्रारम्भः।।

अन्ये तु 'तेन तुल्यं क्रिया चेद् वतिः' इत्यत्र द्वितीयव्याख्यानपक्षे क्रियायाः क्रिया विशेषणं न संभवतीति कारकविशिष्टभावपक्षं 'तदर्हम्' इत्यनेन संवाहयति, राजानमर्हति यद् व्यवहरणम्, देवमर्हति यद् दर्शनम्, असिमर्हति यच्छेदनम्, ब्राह्मणमर्हति यद्दानम्, पर्वतमर्हति यदवरोहणम्, पितरमर्हति यत् पारतन्त्र्यम् तदुच्यते राजवत्, देववत्, असिवत्, ब्राह्मणवत्, पर्वतवत्, पितृवदिति। राज्ञेव व्यवहृतमित्यादिभिस्तु तस्यार्थः प्रदर्शित' इति।।

(२. **कारकस्तद्धिताः**)

**कारक**मपि भाववदेवाऽन्तरङ्गं बहिरङ्गं च।

तयोराख्याताभिधेय**मन्तरङ्गम्**, अनाख्याताभिधेयं **बहिरङ्गम्**।

**(अन्तरङ्गभेदेषु)** **कर्त्ता, हेतुकर्त्ता, कर्मकर्त्ता, कर्म** चेति;

**(बहिरङ्गभेदेषु)** **करणं संप्रदानमपादानमधिकरणं** चेति। (द्र. पृ० ८४)

**(कर्त्ता)** तत्राऽन्तरङ्गभेदेषु **कर्त्ता १. शुद्धः २. मिश्रः ३. संकीर्ण**श्च। तेषु —

१. क्रियाकारकान्तरासंपृक्तः **शुद्धः**। यथा इष्टमनेन इष्टी यज्ञे, कृतः पूर्वं कटोऽनेन कृतपूर्वी कटमिति।

२. क्रियान्तरसंपृक्तो **मिश्रः**। यथा— व्याकरणं वेत्ति अधीते वा वैयाकरणः, शश्वद् भवः शाश्वतिकः इति।

३. क्रियाकारकान्तरसंपृक्तः **संकीर्णः**। यथा— शालायां प्रवेशमर्हति शालीनः अधृष्टः, कूपे प्रक्षेपणमर्हति इति कौपीनमकार्यम्।

**(हेतुकर्त्ता) हेतु:** १. आत्मस्थक्रिय:, २. परस्थक्रिय:, ३. परात्मस्थक्रियश्चेति। तेषु –

**१. आत्मस्थक्रियो** यथा– पारायणं वर्त्तयति पारायणिक:, चान्द्रायणं वर्त्तयति चान्द्रायणिक: इति।

**२. परस्थक्रियो** यथा– वातं शमयति वातिकं तैलम्, पित्तं कोपयति पैत्तिकमिति।

**३. परात्मस्थ**क्रियो यथा– यथामुखं दर्शयते यथामुखीन आदर्श:, संमुखं दर्शयते संमुखीन: प्रेयानिति।

**कर्मकर्त्ता** १. अनुद्रिक्तकर्मांश: २. उद्रिक्तकर्मांश:, ३. अनुद्रिक्तोद्रिक्तकर्मांशश्च।

**१. अनुद्रिक्तकर्मांशो** यथा– अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं धनम्, पाकेन निर्वृत्तं पाकिमम्,

माणिकम् (५.४.२९) इति। (माणिक इति राघव:)

**२. उद्रिक्तकर्मांशो** यथा– वसन्ते पुष्यन्ति वासन्त्य: कुन्दलता:, षष्टिरात्रेण पच्यन्ते

षष्टिका: शालय इति।

**३. अनुद्रिक्तो**द्रिक्तकर्मांशो यथा– वशं गतो वश्य:, शीर्षच्छेदमर्हति शीर्षच्छेद्य इति।

**कर्म** १. निर्वर्त्त्यम् २. विकार्यम् ३. प्राप्यं च। तत्र –

**१. (निर्वर्त्त्यम्)** यद् असज्जन्यते, सद् वा प्रकाश्यते तन्निर्वर्त्त्यम्। यथा– उरसा निर्मित औरस: पुत्र:, पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम् इति।

**२. (विकार्यम्)** यस्य प्रकृत्युच्छेदो गुणान्तरं वा विधीयते तद् विकार्यम्। यथा विषेण वध्यो विष्य: शत्रु:, कुसुम्भेन रक्तं कौसुम्भं वस्त्रमिति।

**३. (प्राप्यम्)** आस्थितमनास्थितं वा क्रियया यदाप्तुमिष्यते तत् प्राप्यम्। यथा नावा तार्यो नाव्यो ह्रद:, अयानयं नेय: अयानयीन: शार (५.२.९ न्यास.) इति।

ननु शारोऽप्यास्थित: कस्मान्न भवति?

**त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम् ।**
**आस्थितं कर्म यत् तत्र द्वैरूप्यं भजति क्रिया ॥१२॥** (वाप. ३.१३५)

यथा पन्थानं गच्छति गर्त्तमुत्तरतीति।

शारस्तु प्राप्य एव। यथा अजां नयति ग्रामम्, वहति भारमिति।

नन्वेवं ग्रामस्य प्राप्यता प्राप्नोति, नाजादे:।

कः पुनराह न प्राप्नोतीति; किन्तु अकथितत्वेन तत्र क्रियाव्याप्यत्वाद् द्वितीयैव, न प्रत्ययान्तरम् 'गां दोग्धि पयः, पौरवं गां याचत' इति।

**(बहिरङ्गम्)** बहिरङ्गभेदेषु **करणम्** बाह्यमाभ्यन्तरं, बाह्याभ्यन्तरं च। तेषु –

१. **बाह्यम्** यथा— सुपां व्याख्यानः सौपः, ललाटस्य भूषणं ललाटिका।

२. **आभ्यन्तरं** यथा— मतस्य करणं मत्यम्, चतुर्णां पूरणश्चतुर्थः इति।

३. **बाह्याभ्यन्तरं** यथा— समिध आधीयन्तेऽनेन सामिधेन्यो मन्त्रः, स एव हृदयस्य बन्धनो हृद्य प्रति।

**संप्रदानम्** – ददातिकर्माप्यं, कर्ममात्राप्यं क्रियाप्यं च।

**(ददातिकर्माप्यम्)**

संप्रदीयते भोजनादिकमस्मै इत्यन्वर्थसंज्ञकं ददातिकर्माप्यम्। यथा— अग्रभोजनं नियुक्तमस्मै दीयते आग्रभोजनिकः, पञ्चास्मै वृद्धिर्वा, आयो वा, लाभो वा, शुल्कं वा, उपदा वा दीयन्ते पञ्चकः पुरुष इति।

**(कर्ममात्राप्यम्)**

कर्मणा यमभिप्रैति स संप्रदानम् (१.४.३३) इति पारिभाषिकसंज्ञकं कर्ममात्राप्यम्। यथा—'राष्ट्रमस्मै निर्दिश्यते राष्ट्रियो राजन्यः, कलिं कुर्वन्त्यस्मै कालेयं गन्धद्रव्यम् इति।

**(क्रियाप्यम्)**

कर्मशब्देन क्रियाया अप्यभिधानात् क्रिययापि यमभिप्रैति स संप्रदानमिति क्रियाऽऽप्यम्। यथा—'अलं कर्मास्मै निर्दिश्यते अलङ्कर्मीणः अन्यूनः, न षडक्षाणि अस्मै भवन्ति अषडक्षीणो मन्त्र' इति।

**अपादानम्**— निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियं च। तेषु

**(निर्दिष्टविषयम्)**

ध्रुवमपायेऽपादानम् (१.४.२४) इति निर्दिष्टविषयम्। यथा—अग्निः पतत्यस्माद् आग्नेयो ग्रावा, नद्यः स्यन्दन्ते अस्मान्नादेयः शैल इति।

**(उपात्तविषयम्)**

भीत्रार्थादियोगोक्तमुपात्तविषयम्। यथा—कुक्षिं रक्षन्ति अस्मात् कौक्षेयकः कृपाणः,

मुद्गा भवन्त्यस्मान्मौद्गीनं क्षेत्रम् इति। यथा—

अवधिमात्रार्थमपेक्षितक्रियम्। यथा कर्णस्य मूलं कर्णजाहम्, पक्षस्य मूलं पक्षति'—रिति

**अधिकरणम्**—वैषयिकम्, औपश्लेषिकम्, नैमित्तिकं च। तेषु

**(वैषयिकम्)**

विविधमनेकप्रकारं जाति—क्रिया गुण द्रव्यादिभिः सिनोतीति विषयो देशकालादिः। विषय एव वैषयिकः, यथा—गावः सन्त्यस्मिन् गोमान् देशः, पौषी पौर्णमास्यस्मिन् पौषो मास इति।

**(औपश्लेषिकम्)**

उपश्लेषोऽवष्टम्भः, तस्मै प्रभवति औपश्लेषिकम्। यथा— दण्डिनोऽस्यां सन्ति दण्डिमती शाला, विंशतिरिहाधिका विंशं शतम् इति।

**(नैमित्तिकम्)**

निमित्तमेव नैमित्तिकम्। यथा—पूर्णो मासोऽस्यां पौर्णमासी रात्रिः, परिखाऽत्र स्यात् परिखेयो देशः इति।

(कारकस्तद्धिताः)

**कारकं** चान्तरङ्गबहिरङ्गभेदाद् द्विरूपमपि प्रकृत्युपाधेः

**१. कारकविशिष्टम्, २. अकारकविशिष्टम्, ३. संबन्धविशिष्टम्,**

**४. निपातविशिष्ट**ञ्चेति चतुर्धा निर्धार्यते। तेषु —

कर्म **कर्मविशिष्टं** यथा— अयानयं नेयः अयानयीनः शारः,

**करणविशिष्टं** यथा— चक्षुषा गृह्यते चाक्षुषं रूपम्,

**अधिकरणविशिष्टं** यथा— स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा स्रौघ्नः,

**अपादान**विशिष्टं यथा— तन्त्रादचिरापहृतस्तन्त्रकः पटः इति।

**कर्तृविशिष्टं** यथा— अश्वैरुह्यत आश्वो रथः। कर्तृविशेषणमपि कर्त्तेव चतुर्भिरुह्यते चातुरं शकटम्। अपि च— (काशिका ४.२.१३)

**कौमारी सा भवेद् भार्या यां कुमारः प्रपत्स्यते ।**
**प्रपद्यते कुमारी यं स कौमारो मतः पतिः ।।१३।।**

**संप्रदानविशिष्टं** तु कारकं नास्ति।

कर्त्ता **कर्मविशिष्टो** यथा— श्राद्धमनेनाऽद्य भुक्तं श्राद्धिकः। क्रियाविशेषणमिति— शब्दोपसंहारं च कर्मैव। तद्विशिष्टो यथा— प्रतिकूलं वर्त्तते प्रातिकूलिकम्, माशब्द इत्याह माशब्दिक इति;

**करणविशिष्टो** यथा—अक्षैर्दीव्यति आक्षिकः।

**अधिकरणविशिष्टो** यथा—प्रावृषिकः, प्रावृषि भवः प्रावृषेण्यः।

**अपादानविशिष्टो** यथा—पितुरागतं पित्र्यं धनम् इति।

**कर्त्तृविशिष्टः** कर्त्ता नास्ति।

करणं **कर्मविशिष्टं** यथा— ग्रीवायां भूषणं ग्रैवेयं रुक्मदाम। एवं

**सम्प्रदानमपि** यथा— मांसमेभ्यो नियुक्तं दीयते मांसिकाः पितरः।

**अपादानं कर्त्तृविशिष्टं** यथा— ब्रीह्यो भवन्त्यस्माद् ब्रैहेयं क्षेत्रम्। एवम्

**अधिकरणमपि** यथा— शर्कराः सन्त्यस्मिन् शर्करिलो देशः। तदेव

**कर्मविशिष्टं** यथा— पदमस्मिन् दृश्यं पद्यः कर्दमः।

**करणविशिष्टम**पि यथा— दण्डः प्रहरणमस्यां दाण्डा क्रीडा इति।

करणादयोऽस्य विशिष्टा न विद्यन्ते।।

कर्मकर्त्रोरेव **अकारकसंबन्धिनिपातैर्विशेषणयोगः**। स

**कर्मणोऽकारकेण** यथा— मासाय भूतो मासिकः, संवत्सरमधीष्टः सांवत्सरिक इति। **कर्त्तु**र्यथा— संतापाय प्रभवति सांतापिकः, वर्षं भूतो भावी वा वार्षिक इति।

**कर्मणः सम्बन्धिनो** यथा— वाक्यपदे अधिकृत्य कृतो ग्रन्थो वाक्यपदीयः, कलापिषु उद्भिद्यमानकलापेषु देयमृणं कालापकम् इति।

**कर्त्तु**र्यथा तित्तिरिणा प्रोक्तं विदन्ति अधीयते वा तैत्तिरीयाः, पूर्वं कृतं भुक्तं पीतं वा एभिः पूर्विणः इति।

**कर्मणो निपातेन** यथा— यथाकथाचं क्रियते याथाकथ्यमिदम् (काशिका ५.१.९८), बहिर्दृश्यते बाह्यम् इति।

**कर्त्तु**र्यथा आराद् भव आरातीयः, साक्षाद् द्रष्टा साक्षी इति।

ननु, क्रिययाऽपि कर्मणः कर्त्तुर्वा विशेषणयोगः संभवति। तद् यथा— पाकेन निर्वृत्तं पाकिमम्; अपमित्या (निर्वृत्तम्) आपमित्यकम्, याचितेन (निर्वृत्तं) याचितकम्

इति; यथा च सुस्नातं पृच्छति (४.४.१ वाप.३) सौस्नातिक:, प्रभूतमाह प्राभूतिक:, कृतं(त:) पूर्वमनेन कट: कृतपूर्वी कटम् इति (५.२.८७ काशिका)।

उच्यते क्रियाऽपि प्राकृतं कर्मैव। अतस्तद्विशिष्टयोरपि कर्मकर्त्रो: कर्मविशिष्टत्वमेव भवति।

ननु च 'निर्वृत्तमि'त्येतस्य कथं कर्मता?

इदं ह्यनुद्रिक्ते कर्मांशे कर्त्तरि वा प्रयुज्यमानं दृश्यते।

नैवम्

अन्तर्भूत–ण्यर्थत्वेनास्य सकर्मकत्वमपि मन्यन्ते। तथा च **कात्यायन:** – (वररुचि:) **उत्तारणाय जगत: प्रपितामहेन**

**तस्मात् पदात् त्वमसि रज्जुरिव प्रवृत्ता ।। १४।।**

**मल्लनागोऽ**(कामसूत्रकृद् **वात्स्यायनोऽ**)प्याह 'नागरकवृत्त्या वर्त्तेते'–ति (कामसू. १.४.१)।

अथ 'कृतपूर्वी कटम्' इति कथम्? न ह्यनेनाऽपि प्रयोगेण भवितव्यम्।

किं कारणम्?

द्वितीयया तावन्नोत्पत्तव्यम्।

तत् कुत:?

क्तेनाऽभिहितम्।

प्रत्ययेनापि नोत्पत्तव्यम्।

किं कारणम्?

असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति।

उच्यते– नायं कर्मणि क्त:, अपितु भावे। भावसाधनेन च कृतशब्देन योच्यते क्रिया तयेप्सितं कटादि कर्म अनभिहितमेवेति।

तत्र यथा 'ग्रामं गतो देवदत्त' इति धातु–निष्ठाभ्यामभिधीयमानयो: क्रियाकर्त्रोर्ग्रामादिकर्मभिरभिसम्बन्धो भवति, एवं कृतपूर्वीति कृतशब्देन तद्धितेन वाऽभिधीयमानयो: क्रियाकर्त्रो: कटादिकर्मभिरभिसम्बन्धो भवति; तथाहि– कृतं पूर्वमनेनेत्यस्मिन्नर्थे कृतपूर्वीशब्दस्तद्धितान्तो वर्तते; तेन च पूर्वं कृतवानित्ययमर्थ: संपद्यते। एवं च सापेक्षत्वाभावान्नास्त्यसामर्थ्यम्। अस्ति च करोतिवाच्यक्रियापेक्षं कटस्य कर्मत्वमिति तद्धितद्वितीयोत्पत्त्योर्नानुपपत्ति:। तदुक्तम्– (वाप.वृत्ति–६७) इति।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।**

**संबध्यते क्रिया तद्वत् कृतपूर्व्यादिषु स्थिता ।। १५।।**

यदा तु कृतः पूर्वं कटोऽनेनेति विग्रहः, तदापि न दोषः, यतो यद्यपि कृतादिशब्दाः कर्मणि व्युत्पद्यमानाः सामानाधिकरण्यात् कटादिकर्मविशेषं निर्भुञ्जते, तथापि नेत्थम्भूता एव प्रत्ययमुत्पादयन्ति, वृत्तीनां विशेषप्रत्यायनासामर्थ्यात्; अतो वृत्तिविषयेऽनपेक्षितविशेष– कर्मान्तर्भूतकर्मसामान्योऽन्य एव कृतशब्दो भवति।

अविवक्षितकर्माणोऽन्तर्भूतकर्माणश्चाऽकर्मका एव जायन्ते, यथा– तस्माद् दीक्षितो न ददाति न पचति न जुहोति इति। एवमकर्मकत्वेऽन्तर्भावाभिधाय्येव, तच्चानपेक्षत्वात् सामर्थ्ये सति प्रत्ययमुत्पादयति। प्रत्ययार्थश्च कर्त्ता क्रियया प्रकृत्यर्थेन यदीप्सति तत् कर्म अनभिहितं प्रत्ययेन, ततो द्वितीया भवति। तदुक्तं भाष्ये (२.३.६५)--'योऽसौ कृतकटयोः संबन्धः स उत्पन्ने प्रत्यये निवर्त्तते; अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यति कृतपूर्वी कटमिति'। **हरिर**प्याह–

**विशेषकर्मसम्बन्धे विनिर्भुक्ते कटादिभिः ।**

**विशेषनिरपेक्षोऽन्यः कृतशब्दोऽवकल्पते ।। १६।।**

**अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि यत् ।**

**तेन क्रियावता कर्त्रा योगो भवति कर्मणाम् ।। १७।।**

(वाप. ३.६५–६६ वृत्तिः) इति।

यदि वा शास्त्रप्रक्रियाभ्यासबाधितमतीनामेवायमभिमानः वाक्यार्थे वृत्तयो भवन्ती–ति। परमार्थतस्तु वृत्तिवाक्ययोरन्यत्वमेव मन्यन्ते, अर्थविप्रकर्षात्। यथाहि– वाक्ये यः कटादिसम्बन्धः स वृत्तौ नास्ति, तस्यान्तर्भूतकर्मणः कृतशब्दस्य भावाभिधायित्वात्। तदुक्तम्– (वाप. ३.६४ वृत्तिः)

**विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा ।**

**शब्दान्तरत्वाद् वाक्येषु वृत्तौ नित्यं न विद्यते ।। १८।।**

भाष्यकारोऽप्याह (२.३.६५)–'नेदमुभयं युगपद् भवति वाक्यं च प्रत्ययश्च; यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिः। तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः 'कृतपूर्वी कटमि'–ति। एवमधीतमनेन, अधीतं व्याकरणमनेन' इति वा अधीती व्याकरणे इत्यपि व्याख्यातम्।

(३. **सम्बन्धितद्धिताः** (षष्ठी))

सम्बन्धी द्विधा– **प्रधानं गुणभूतश्च**।

तयोः प्रथमान्ताभिधेय **प्रधानम्।**

स त्रिधा– **१. द्रव्यरूपः, २. गुणरूपः ३. अभिन्नरूपश्च**। तेषु –

(**१. द्रव्यरूपः**) 'तस्याऽपत्यम्' (४.१.९२) इत्यादिराश्रयवचनो **द्रव्यरूपः**।

स द्विधा **निरपेक्षः सापेक्षश्च**। तयोः –

**निरपेक्षो** यथा– वसिष्ठस्यापत्यं वासिष्ठः, पाणिनेः शिष्यः पाणिनीयः, पञ्चालानां राजा पाञ्चालः, पृथिव्या ईश्वरः पार्थिवः, पाटलायाः पुष्पं पाटलम्, जम्ब्याः फलं जाम्बवम् इति।

**सापेक्षो** यथा– पितुः पिता पितामहः, पितुर्भ्राता पितृव्यः, मातुर्मातुलः, भ्रातुरपत्यं भ्रातृव्यः, स्वसुः स्वस्रीयः इति।

(**२. गुणरूपः**) 'तस्येदम्' (४.३.१२०) इत्यादिराश्रितवचनो गुणवचनो गुणरूपः।

स द्विधा **षष्ठीविशेष्यः अषष्ठीविशेष्यश्च**। तयोः –

**षष्ठीविशेष्यो** यथा– युष्माकमियं गौः यौष्माकी गौः, देवदत्तस्य भूतपूर्वो देवदत्तरूप्यो राजा, पुत्रस्य निमित्तं पुत्रीयः संयोगः, विदिशाया अदूरभवं वैदिशं नगरम्, मूर्वायाः विकारो मौर्वं भस्म (४.३.१३५), दूर्वाया अवयवो दौर्वः काण्डः इति।

**अषष्ठीविशेष्यो** यथा– वत्सेभ्यो हितो वत्सीयो गोधुक् (५.१.५), अङ्गारेभ्य इमानि अङ्गारीयाणि काष्ठानि (५.१.१२), शरणे साधु शरण्यो राजा (४.४.९८, ५.३.१०३), आकर्षे कुशल आकर्षको धूर्त्तः (५.२.६४), पुष्पैर्वित्तः पुष्पचणश्चम्पकः, (५.२.२६), सूर्येणैकदृक् सौरी बलाका (४.३.११२, तैसं. ५.५.१६)

(**३. अभिन्नरूपश्च**) प्रकृत्यैकच्छायोऽभिन्नरूपः।

स द्विधा– **लिङ्गसंख्यानुपग्राही लिङ्गसंख्योपग्राही** च। तयोः–

लुगभिधेयो **लिङ्गसंख्यानुपग्राही**। यथा– गर्गस्यापत्यानि गर्गाः (२.४.६४), पञ्चालस्य राजानः पञ्चालाः (४.१.१८०), अत्रेरपत्यानि अत्रयः (२.४.६५), कुसुम्भ्याः पुष्पं कुसुम्भम्, बदर्याः फलं बदरम् (३.४.१६३), लवणेन संसृष्टो लवणः सूप इति।

लुबभिधेयो **लिङ्गसंख्योपग्राही**। यथा— पञ्चालानां निवासः पञ्चाला जनपदः (१.२.५२, ४.२.८) वरणाः सन्त्यस्मिन् वरणा नगरी (४.२.८२), शिरीषाणामदूरभवः शिरीषो:[१] ग्रामः (१.२.५१), किञ्च गोदौनाम ह्रदौ, तयोरदूरभवो ग्रामो गोदौ (१.२.५२)। हरीतक्यादिषु पुनर्व्यक्तिमेवोपगृह्णाति, न वचनम्, हरीतक्या फलानि हरीतक्यः।

खलतिकादिषु वचनमेव न व्यक्तिम्— खलतिको नामाद्रिः तस्यादूरभवानि खलतिकं वनानि (१.२.५१) इति।

ननु च वसिष्ठस्यापत्यमित्यादौ भिन्नाधिकरणत्वाद् द्वयमेवाश्रयते पितरं पुत्रं च। तथाहि उभयमपि संबन्धादभ्यधिकं प्रतीयाते— पितुश्चामी पुत्राः स्वमिति, तत् कस्मात् एकस्मादेव षष्ठी तद्धितो वा?

उच्यते— यद्यप्ययमुभयाधिकरणः, तथाप्येक एव, भेदे हि नोभयाधिकरण एकः स्यात्, सम्बन्धद्वयप्रसङ्गात्।

सोऽयमेकोऽनेकाश्रयः, एकश्चैव विभक्त्योच्यते, एकस्मादेव च तद्धितोत्पत्तिर्भवति।

एवमपि पितुरेव षष्ठीति नियमो न स्यात्।

कः पुनराह नियम इति, यावता मातुः पिता मातामह इत्यपि भवति।

कुतः पुनरिदं यदेकदा तु स्वामिनः, अन्यदा तु स्वस्माद् विभक्तिः तद्धितो वेति?

संबन्धस्य पदन्यासातिरेकात्। नियोगतो हि पितापुत्रयोरेकस्य प्राधान्यमन्यस्यो–पसर्जनत्वम्, तुल्यत्वे सम्बन्धाऽभावात्। तत्र न प्रधानं पुत्रादि गुणानुरोधेन प्रवर्त्तितुमर्हति; उपसर्जनं तु पित्रादि यथा प्रधानाऽनुग्रहस्तथाऽऽत्मनं निर्वर्त्तयति, स्वरूपावस्थितौ प्रधानार्थाऽसिद्धेः।

अतोऽप्रधाने संबन्धस्याधिकः पदन्यासः। तत्र षष्ठी तद्धितोत्पत्तिर्वा भवति। सा चैकत्वात् संबन्धस्य पुत्रगतमप्येनमभिधत्ते। यदा तु मातुः पिता मातामह इति विवक्षातः प्राधान्यविपर्ययः तदा अपत्याद्युत्पन्नया षष्ठ्या द्विष्ठोऽप्यसावभिहित इति न सा, तद्धितो वा पितृशब्दात्। तदुक्तम्— (वाप. ३.७.१५७)

**द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।**
**तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥ १९॥** इति

---

१. 'शिरीषा' इत्येव बहुवचनान्तः पाठः सर्वत्र।

एवं 'तेनैकदिक्' (४.३.११२), 'तदर्थं विकृतेः प्रकृतौ (५.१.१२),

'तस्य निमित्तम्' (५.१.३८), तेन वित्तश्चुञ्चुप्चणपौ (५.२.२६),

'तस्मै हितम्' (५.१.५), वपुप्प्रकरणे 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' (५.२.३९ वार्त्ति. काशिका), इत्यादिषु षष्ठ्यन्ता अपि द्विष्ठत्वादेकविभक्तिवाच्यत्वेनावगन्तव्याः।

ननु च तृतीयादीनां व्यतिरेकविभक्तित्वात् षष्ठीवदेव भवतु सम्बन्धाभिधान– सामर्थ्यात्, प्रथमायाः पुनरव्यतिरिक्तप्रातिपदिकार्थाभिधायिन्याः कथमिवैतदुपपद्यते– 'त्वमिव त्वावान्' अहमिव मावान्' इति। अत्रैके वर्णयन्ति–'त्वावतः पुरूरवसः', 'यज्ञं विप्रस्य मावतः', 'न त्वावाँ अन्यो दिव्यो न पार्थिवः' (ऋवे. ८.४६.१, १.१४२.२, ७.३२.२३) इति प्रथमान्तायाः प्रकृतेः प्रधानभूतेऽपि संबन्धिनि प्रयोगदर्शनात् प्रत्ययोऽवगम्यते।

अन्ये त्वाहुः (वाप. ३, वृत्तिः, कैयटो हेलाराजादयः)–त्वमिव त्वावान्, अहमिव मावान् इत्युपमानमत्र प्रथमान्तं प्रकृत्यर्थः, उपमेयं प्रत्ययार्थः। न तत्र तावदवच्छेदकत्वादुपमानं प्रधानम्। अवच्छेदकादप्युपमानात् षष्ठी नोत्पद्यते, व्यतिरेकहेतोरसंभवात्; इवशब्दो ह्यसत्त्वभूताभिधायित्वान्न व्यतिरेकाधायकः, सादृश्यद्योतको ह्यसौ। अन्यश्च न कश्चिदिह व्यतिरेकहेतुः श्रूयते। अतश्च गौरिव गवय इत्यादाविवाऽत्र षष्ठ्या अभावः, व्यतिरेकहेतौ तु सति इवशब्दप्रयोगे उपमानात् षष्ठ्युत्पद्यते–'देवदत्तस्येव यज्ञदत्तस्य दन्ता' इति। तदुक्तम्–

**इवशब्दप्रयोगे तु बाह्यात् संबन्धिनो विना ।**
**नाधिक्यमुपमानेऽस्ति द्योतकः स प्रयुज्यते ॥ २०॥**

(वाप. ३.१४.५४५वृत्तिः )

मा भूत् षष्ठी, प्रथमयाऽपि न भवितव्यमेव, उपमानस्यावच्छेदकत्वेना– प्याधिक्यात् कः पुनराह–'अनधिक एव प्रातिपदिकार्थे प्रथमे'–ति; पाटलिपुत्राद् राजकं सप्त योजनानि, सप्तसु वा योजनेषु इति अध्वनः प्रथमा सप्तमी च स्मर्यते, संबोधने च प्रथमैव विधीयते; धिक् देवदत्तम्, हा देवदत्तम् इति च द्वितीयाविषये प्रथमाप्रयोगो दृश्यते। यथा– 'हा धिक् कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः' (मामा. ५.२४) 'कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः' (मवीच. २.२०) इति।

**षष्ठ्यन्ताभिधेयो गुणभूतः।**

स त्रिधा **१. भावविशिष्टः, २. कारकविशिष्टः, ३. सम्बन्धिविशिष्टश्च**। तेषु–

(१) भावेनावच्छिन्नो **भावविशिष्टः।**

स द्विधा **मुख्येन उपाधिना** च। तयोः –

**मुख्येन** यथा– कृषिरस्यास्तीति कृषीवलः (५.२.११२), मायावी (५.२.१२१) आमयावी (५.२.१२२), दयालुः (५.२.१२२), श्रद्धालुः (३.२.१५८) इति।

**उपाधिना** यथा– मृदङ्गो वाद्यते इति शिल्पमस्य मार्दङ्गिकः (४.४.५५), अपूपाः क्रियन्त इति शिल्पमस्य आपूपिकः, मासं ब्रह्मचर्यमस्य भिक्षोः मासिकः, अस्ति परलोक इति मतिरस्य साधोरास्तिकः, नास्ति नरकादिकमिति मतिरस्यासाधोः स नास्तिकः, दिष्टमेव प्रभवतीति मतिरस्य जिगीषोः दैष्टिक इति।

(२) कारकेणावच्छिन्नः **कारकविशिष्टः।**

स द्विधा– **स्वतन्त्रेण अस्वतन्त्रेण** च। तयोः –

**स्वतन्त्रेण** यथा– धनमस्यास्तीति धनवान् वदान्यः (५.२.१३०), पञ्चमोऽस्य मासो जातस्य वर्त्तते पञ्चमी बालकः (५.१.१६), तारकाः सञ्जाता अस्य तारकितं नभः (५.२.३६), समयः प्राप्तोऽस्य सामयिकं कर्म (५.१.१०४), 'एकमन्यत् कर्माध्ययने वृत्तमस्य ऐकान्यिकः (४.४.६४) इति।

**अस्वतन्त्रेण** यथा– लवणं पण्यमस्य लावणिकः (४.४.५२), वासुदेवे भक्तिरस्य वासुदेवकः (४.३.९८), धनुः प्रहरणमस्य धानुष्कः (४.४.५७), प्रस्थः परिमाणमस्य प्रास्थिकः (५.१.५७), सलातुरोऽस्याभिजनः सालातुरीयः (४.३.९४), ग्रामो निवासोऽस्य ग्रामीण (४.२.९४) इति।

(३) सम्बन्धिनाऽवच्छिन्नः **सम्बन्धिविशिष्टः।**

स द्विधा विशेष्येण विशेषणेन च। तयोः –

**विशेष्येण** यथा–अपूपा हिता एषा आपूपिका अवन्तयः (४.४.६५), मूलमाबर्हि एषां मूल्या माषाः (४.४.८८), बृहती आदिरस्य बार्हतः प्रगाथः (४.२.५५), कालः प्रकृष्टोऽस्य कालिकमृणम् (५.१.१०८), किञ्च निशासम्बन्धादययनपि निशा। तदस्य सोढं (४.३.५२) नैशः, एवं प्रादोषिक (४.३.५१) इति।

**विशेषणेन** यथा– इन्द्रो देवताऽस्य ऐन्द्रं हवि: (४.२.२४), संशप्तका योद्धारोऽस्य सांशप्तक: संग्राम: (४.२.५६), विनय: प्रयोजनमस्यां वैनयिकी विद्या (५.१.१७१?), देवदत्तो ग्रामणीरस्य देवदत्तक: सङ्घ: (५.२.७८), पञ्चावयवा अस्यां पञ्चतयी गति: (५.२.४२), पञ्चास्य भृतिर्वस्नो वा पञ्चक: पदार्थ (५.१.५६) इति।

ननु च 'तस्यापत्यम्' (४.१.९२) इत्यादौ उपगोरपत्यम् औपगव: इति 'समर्थानां प्रथमाद् वा'(४.१.८२) इत्यधिकारात् षष्ठ्यन्ता प्रकृतिरपत्यवतो गुणभूतस्य वाचिका, प्रथमान्तं तु प्रधानभूतमपत्यं प्रत्ययार्थ एव। 'तस्येदम्' (४.३.१२०) इत्यादावपि प्रधानं संबन्धि तद्धितवाच्यमित्युपपद्यते। 'साऽस्य देवता' (४.२.२४) इत्यादौ तु इन्द्रो देवता अस्य ऐन्द्रं हविरिति पूर्वोक्तादेवाधिकारात् सेति प्रथमान्ता प्रकृतिरिन्द्रादिदेवतावाचिका प्रधानम्। गुणभूतस्तु संबन्धी पुरोडाशादिरस्येत्यनेनाप्रधानीभूतसंबन्धि वाचकत्वेन निर्दिष्ट: प्रत्ययार्थ:। तत्कथमिवायं विपर्यस्त: प्रधानगुणभाव उपपन्नो भवति?

उच्यते– गुणभूतोऽपि संबन्धी बुद्ध्यन्तरेणाऽप्रधानभावात् प्रच्याव्य आसादित–प्रधानभाव: प्रत्ययार्थत्वेन प्रदर्श्यते। अत एवेन्द्रो देवताऽस्येत्येतावानेव विग्रहो न कार्य:; वृत्तिसमानार्थेन हि तेन भवितव्यम्। न चैतावतो वृत्तिसमानार्थता। वृत्तौ हि इन्द्रादिदेवतावच्छिन्नं पुरोडाशादि अवगम्यते,

वाक्ये तु पुरोडाशाद्यवच्छिन्नेन्द्रादिदेवतेति।

अयं तु विग्रहो वृत्त्या समानार्थ: – 'इन्द्रो देवता अस्य तदिदमिन्द्रस्वाम्य–वच्छिन्नमैन्द्रं हवि'रिति। तदिदमुक्तम्–

**अनन्तरोक्त: संबन्धी प्रतिपद्य प्रधानताम् ।**
**बुद्ध्यन्तरपरामर्शाद् वाच्यतां प्रतिपद्यते ।। २१ ।।**
**प्रकृत्यर्थविशिष्टो हि प्रत्ययार्थोऽभिधानभाक् ।**
**न्याय: स, न म त: सास्येत्यधिकारसमाश्रयात् ।। २२।।**

एवं 'सोऽस्यादिरितिच्छन्दस: प्रगाथेषु' (४.२.५५) इत्यादावपि गुणभूत: सम्बन्धी तद्धिताभिधेयो बोद्धव्य:। यत्र तु गुणभूत: सम्बन्धी प्रत्ययार्थ: तत्र न प्रधानम्, यत्र प्रधानं तत्र न गुणभूत:।

कुत: पुनरिदं ज्ञायते?

आचार्यप्रवृत्तिर्ज्ञापयति–यदयं निवास–निवासवत्–संबन्धे उभयमाह–'तस्य निवास:' (४.२.६९) 'सोऽस्य निवास:' (४.३.८९) इति।

ननु च अपत्यापत्यवत्संबन्धेऽप्युभयं संभाव्यते—'माता अपत्यमस्य मातामहः, पिताऽपत्यमस्य पितामह' इति।

नैवम्, पितुः पिता पितामहः, मातुः पिता मातामह इति करिष्यते।

तथापि हृदयस्य बन्धनं 'शृङ्खलमस्य बन्धनं करभे' (५.२.७९) इति कथम्?

नान्योऽत्र बन्धनशब्दः संबन्धिवचनः, यथा हि बन्धनमित्यनेन दामोच्यते।

नैवम्, बन्धनमित्यनेन संज्ञाशब्दोपाश्रयः शृङ्खलकः करभः इति।

एवं च निवासतद्वतोरपि शेषषष्ठ्यभ्युपगमत्वे कर्तृविशिष्टमधिकरणं वाच्यम्—शिबीनां निवासः शैब इति (४.२.६९), अपरत्राधिकरणविशिष्टः कर्त्ता— ग्रामे निवासोऽस्य सोऽयं ग्राम्य इति।

ननु च ग्रामशब्दोऽयं समूहवचनः, तद् यथा 'अश्व/स्त्रग्रामविधौ कृती स समरेष्वस्यास्ति तुल्यः पुमान्' 'न रुणत्सीन्द्रियग्रामम्' इति।

किञ्चातः?

समूहश्च समूह्यपेक्षः इति सापेक्षत्वादसामर्थ्ये तद्धितोत्पत्तिर्न भवति।

नापि सामान्येन समूहाद् भविष्यतीति वाच्यम्, तावत्येवार्थे तस्यापरिसमाप्ते— दुरधिगमाभिधाने च सामर्थ्याभावात्।

न च यथा देवदत्तस्य मातुः पिता मातामहो देवदत्तस्य, विष्णुमित्रस्य गुरोः कुलं गुरुकुलं विष्णुमित्रस्येति सापेक्षस्यापि तद्धितः समासो वा भवति, एवमस्यापि भविष्यतीति वाच्यम्, न ह्ययं संबन्धिशब्दः। सम्बन्धिशब्दानामेव च सापेक्षाणां वृत्तयो भवन्ति। यदाह— (वाप. ३.१४.४७ वृत्तिः)

**संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्त्तते ।**
**स्वार्थवत् सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ।। २३।।**

अन्येषां तु विशेषणानां न वृत्तिः, वृत्तानां वा न विशेषणमित्येव। न हि भवति ऋद्धस्य राज्ञः पुरुष ऋद्धराजपुरुष इति, नापि ब्राह्मणानां ग्रामो निवासोऽस्य ब्राह्मणानां ग्राम्योऽयमिति। (मभा. २.१.१)।

कथं तर्हि (मभा. २.१.१) राज्ञः पुरुषः शोभनो राजपुरुष इति?

भवति वै प्रधानस्य सापेक्षस्यापि वृत्तिः।

कथं तर्हि ग्रामो निवासोऽस्येति ग्रामस्य विशेष्यत्वात् प्राधान्ये सापेक्षस्यापि वृत्तिर्न भवति?

अनन्तरोक्तन्यायेनात्र षष्ठ्यर्थस्य प्राधान्यात्।

नन्वयमपि संबन्धिशब्दः कस्मान्न भवति?

समूहार्थमात्र एव वृत्त्यपरिसमाप्तेः।

तर्हि न भवितव्यमेव ग्रामशब्दान्निवास–निवासवत्सम्बन्धे तद्धितेन?

न भवितव्यम्, यथा अव्युत्पन्नजनसमूहार्थकोऽयमुपचारवृत्त्या भवति।

दृश्यते च तात्स्थात् तद्वदुपचारः, यथा मञ्चाः क्रोशन्तीति।

यदि वा ग्रामशब्दोऽयं बह्वर्थः (मभा. १.१.७), यथा– अस्ति शालासमुदाये ग्रामो दग्ध इति; जनपद(जन)समुदाये ग्राम आगत इति। अस्ति वाटपरिक्षेपे ग्रामं प्रविष्ट इति, अस्ति सारण्यके ससीमके संस्थिण्डिलके च भूप्रदेशे ग्रामो लब्ध इति, अस्ति अव्युत्पन्नजनसमूहास्पदे 'शूद्रकर्षकप्राये जनपदं निवेशयेत्, तत्र अष्टशतग्राममध्ये प्रधानं स्थापनीयम्, स नागराणां निवासो नगरमिति। तत्राऽव्युत्पन्नजनसमूहास्पदे यो ग्रामशब्दो वर्त्तते ततो भवितव्यं तद्धितेन– ग्रामो निवासोऽस्येति सोऽयं ग्राम्यो ग्रामीण इति।।

**(४. स्वार्थाभिधायिनोऽधातुप्रत्ययाः)**

अथ **स्वार्थिकाः**। तेऽपि द्विधा– **१. असत्त्वभूतार्थाः, २. सत्त्वभूतार्था**श्च।

उभयेऽपि प्रत्येकं षोढा– १. वाचकाः, २. द्योतकाः, ३. विशेषकाः, ४. सहाभिधायकाः, ५. सार्थकाः, ६. निरर्थकाश्चेति। तत्र –

**(१. असत्त्वभूतार्थाः स्वार्थिकाः)**

१. **असत्त्वभूतार्थेषु** शक्तिमात्राभिधायिनो **वाचकाः**।

यथा– तत आगतः, तत्र वसति, पुरस्तादागतः, पुरस्ताद् वसति, देवत्रा गच्छति, मनुष्यत्रा तिष्ठति इति।

२. पदार्थगत–कुत्सा–प्रशंसाद्यभिव्यञ्जका **द्योतकाः**।

यथा– कुत्सितं पचति पचतकि, प्रशस्तं पचति पचतिरूपम्, ईषदसमाप्तं पचति पचतिकल्पम्, प्रकृष्टं पचति पचतितराम् एवं नितराम्, अतीवतराम् इति।

३. वाचकत्वे द्योतकत्वे वा मङ्गलवीप्साद्यधिकार्थाभिधायिनो **विशेषकाः**।

यथा– बहुभ्यो देहि बहुशो देहीति, अल्पं देहि अल्पशो देहीति, द्वाभ्यां द्वाभ्यां देहि द्विशो देहि, माषं माषं देहि माषशो देहि। एवं कस्मिन् काले कदा केन प्रकारेण कथमिति।

४. अनुप्रयोगाद्यपेक्षिणः **सहाभिधायकाः**। यथा— अनग्निरग्निः संपद्यते अग्निसात्संपद्यते, देवाय देयं करोति देवत्राकरोति। एवं तं भवन्तं ततो भवन्तम्, एतेन दीर्घायुषा, अत्र दीर्घायुषा, अस्मै आयुष्मते इहायुष्मते, कस्य देवानां प्रियस्य, क्व देवानां प्रियस्य इति।

५. गतिसंज्ञादिकार्यनिमित्तभूताः **सार्थकाः**। यथा— शुक्लीकृत्य, पटपटायते, द्वेधाकारम्, अभितो ग्रामम्, विना देवदत्तेन, दक्षिणाहि ग्रामादि(२.३.२९)ति।

६. शब्दोपचयादिमात्रहेतवो **निरर्थकाः**। यथा— उरसि प्रत्येव प्रत्युरसम्, आत्मन्यध्येव अध्यात्मम्, गिरिमन्वेव अनुगिरम्, उच्चैरेव उच्चकैः, त्वयैव त्वयका, अस्माभिरेवास्माकाभिः इति। एवमन्येऽपि— देवाः अर्जुनतोऽभवन्, पूर्वतो ग्रामस्य, ग्रामं पूर्वेण, पुरस्ताद् रमणीयम्, ऐकध्यं करोति, पञ्चकृत्वः पचति, इत्यादयः असत्त्वभूतार्थाः स्वार्थिकेषु यथायोगमवगन्तव्याः।

अन्ये तु वतिमपि शक्त्यभिधायिषु विशेषकस्वार्थिकेषु वर्णयन्ति। यथा—राज्ञेव व्यवहृतमनेन राजवत्, देवमिव भवन्तं पश्यामि देववदित्युदाहृतं पुरस्तात्। एवं च सूत्रं व्याचक्षते—'तेन तुल्यम्' इत्येतस्मिन्नर्थे वतिर्भवति, यत् तत्तुल्यं क्रिया चेत् सा भवति। क्रियेत्येनेन क्रियानिमित्तभूताः शक्तय उच्यन्ते।

न चैतद् वाच्यम्—'एवं सति क्रिया न संगृहीता भवति' यतः क्रियापि कारकमेव। यथोच्यते— (वाक्यपदीये क्रियासमुद्देशे ८.३७—३९)—

**क्रियामन्ये तु मन्यन्त क्वचिदप्यनपाश्रिताम् ।**
**साधनैकार्थभावित्वे प्रवृत्तिमनपायिनीम् ॥ २४॥**
**सामान्यभूता सा पूर्वं धात्वर्थैः प्रविभज्यते ।**
**ततो व्यापाररूपेण साध्ये च व्यवतिष्ठते ॥ २५॥**
**प्रकृतिः साधनानां सा प्रथमं तच्च कारकम् ।**
**शक्तिरेकाधिकरणे स्रोतोवदुपकर्षति ॥ २६॥**
**अपूर्वं, कालशक्तिं वा, क्रियां वा, कालमेव वा ।**
**तमेवंलक्षणं भावं केचिदाहुः कथंचन ॥ २७॥ इति।**

'तत्र तस्येवे'—त्यस्य च प्रयोजनमुपन्यस्तं पुरस्ताद् द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न लभ्यते इति।

नन्वेवं सति 'देवदत्त इव स्थूलः, यज्ञदत्त इव गोमान्' इत्यत्र प्रत्ययो न प्राप्नोति सप्तमीषष्ठ्यन्तत्वयोरभावात्।

अत्रापि क्रियाग्रहणाद् भविष्यति।

कथं पुनः क्रियाशब्देन गुण उच्यते?

क्रियापूर्वकत्वात्। स्थूलगुणयोगाद्धि स्थूलो भवति, गोसंबन्धाच्च गोमानिति।

नन्वेवं सति क्रियाग्रहणमपि न कर्त्तव्यम्। प्रवर्त्ततामविशेषेणैव तेन इत्येतस्मिन्नर्थे वतिः 'तत्र तस्येव' इत्यनेन च नार्थः सूत्राऽऽरम्भेण। तदर्हमित्येतदपि उपमानान्न व्यतिरिच्यते, यद्धि राजानमर्हति तद् राजसदृशमेव भवति। एवं च 'तेन तुल्यमि'त्येवावतिष्ठते। तथा चाह **चन्द्रगोमी** (चान्द्रव्या. ४.१.१३५)– 'इवे वतिः' इति। नन्वेवं सति गौरिव गवय इत्यत्रापि वतिः प्राप्नोति।

नैवम्, उपमायां वतिः, नोपमाने।

यद्यपि वतिशब्देनोभयमपि द्योत्यते तथाप्यदन्यदेवौपम्यम्, अन्येदवोपमानम्। भूयोऽवयवसादृश्यस्य योगो ह्युपमा; यथा चन्द्र इव मुखम्। सदृशात् सदृशप्रतिपत्तिरुपमानम्, यथा गौरिव गवय इति।।

**(२. सत्त्वभूतार्थाः स्वार्थिकाः)**

१. **सत्त्वभूतार्थभेदेषु** लिङ्गविशेषाद्यभिधायिनो **वाचकाः**। यथा– देव एव देवता (५.४.२७), देवतैव दैवतम् (५.४.३८), उपाधिरेव औपधेयम् (५.१.१३), भाग एव भागधेयम् (५.४.२५ वा), 'उपाय एवौपयिकम्' (५.४.३४ वा), चत्वार एव वर्णाश्चातुर्वर्ण्यम् (७.३.३१)।

२. कुत्साप्रशंसाद्यभिव्यञ्जका **द्योतकाः**। यथा– कुत्सितो वैयाकरणो वैयाकरणपाशः (५.३.४७), प्रशस्ता मृत् मृत्स्ना (५.४.४०), तनुः उक्षा उक्षतरः (५.३.९१), लघुः कुटी कुटीरः (५.३.८८), ईषदसमाप्त आढ्य आढ्यकल्पः (५.३.६७), भूतपूर्वो राजा राजचरः (५.३.५३) इति।

३. वाचकत्वे द्योतकत्वे वा व्याहतत्वाद्यर्थविशेषव्यक्तिहेतवो **विशेषकाः**। यथा– व्याहतार्था वागेव वाचिकम्' (५.४.३५), उपदेशरूपं कर्मैव कार्मणम् (५.४.३६), असहाय एक एवैकाकी (५.३.५२), अश्व इवायमश्वकः (५.३.९६), कुशाग्रमिव कुशाग्रीया बुद्धिः (५.३.१०५), शिलेव शैलेयं दधि (५.३.१०२) इति।

४. प्रकृतिविशेषेभ्यो नित्यमुपजायमानाः **सहाभिधायिकाः**। यथा– करीषगन्धेरपत्यं कारीषगन्ध्या (४.१.७४), अभिजितोऽपत्यमाभिजित्यः (५.३.११८),

कुञ्जस्याऽपत्यं कौञ्जायन्यः (५.३.११३), परस्परं विविध आक्रोशो व्यावक्रोशी (व्याक्रोशी), समन्ताद् रावः सांराविणम्, राज्ञामायत्तं राजाधीनम् (५.४.७) इति।

५. 'लुपि युक्तवद् व्यक्तिवचने' (१.२.५१), इति कार्यार्थाः **सार्थकाः**। यथा– चञ्चा रमणी इयम्, वर्धिका दर्शनीयः, वासुदेवः प्रतिमा, बलदेवश्चित्रम्, देवपथ आकाशरेखा, हंसपथः क्रौञ्चम् (१.२.५२), वर्धिका दर्शनीयः (५.३.९८), वासुदेवः प्रतिमा (५.३.९९), बलदेवश्चित्रम् (५.३.१००), हंसपथः कौञ्चम् (५.३.१००) इति।

६. शब्दोपचयादिहेतवो **निरर्थकाः**। यथा–प्रज्ञ एव प्राज्ञः (५.४.३८), विनय एव वैनयिकः (५.४.३४), मृदेव मृत्तिका (५.४.३९) सूर एव सूर्यः (५.४.२५), नामैव नामधेयम् (५.४.५४/५५), देवानां राजैव देवराजः (५.४.३८) इति। एवं कतरः (५.३.९२), कतमः (५.३.९३), पटुतरः पटुतमः (५.३.५८), पटिष्ठः (५.३.५५), पटीयान् (५.३.५७) इत्यादयोऽपि सत्त्वभूताः स्वार्थाः स्वार्थिकेषु यथायोगमवगन्तव्याः।

किं पुनरमी पदप्रकृतयः प्रातिपदिकप्रकृतयो वा?

कुतस्ते संशयः?

उभयथोपलम्भात्। तथा ह्येषां 'युष्मकाभिः, कदा, तर्हीत्यादौ प्रातिपदिकप्रकृतित्वम्; भिन्धकि, त्वयकि, मयकीत्यादौ पदप्रकृतित्वमुपलभ्यते। ततश्च यावकः अश्वकः, उच्चकैरित्यादौ संदेहः।

न सन्देहः, स्वार्थद्रव्यलिङ्गसंख्याशक्तिमात्राभिधानेन प्रातिपदिकात् स्वार्थादि–निमित्तकुत्साप्रशंसाऽनुकम्पातिशयापरिसमाप्तियाद्यधिकार्थद्योतनेन पदादेव स्वार्थिको–त्पत्तिर्भवतीति। स्वार्थाद्यभिधानेन हि परिसमाप्तार्थं पदं स्वार्थादिनिमित्तकैः कुत्सादिभिः सम्बन्धमुत्सहते। तदाह– (वाप. ३. १४. १)

**कुत्साप्रशंसातिशयैः समाप्तार्थं तु युज्यते ।**
**पदं स्वार्थादयः सर्वे यस्मात् कुत्सादिहेतवः ।। २८।।**

यद्यपि स्वार्थाद्यन्यतमनिबन्धनाः क्वचित् कुत्सादयो भवेयुः, तथापि तत्साकल्यार्थं पदादेव कादय उत्पाद्याः तत्र–

**अन्यतमनिबन्धनाः** कुत्सादयो यथा–

**किं द्वारि दैवहतिके ! सहकारकेण**
**संवर्धितेन विषवृक्षक एष पापः ।**
**यस्मिन् मनागपि विकासविकारभाजि**
**भीमा भवन्ति मदनज्वरसन्निपाताः ।। २९।।**

अत्र हि दैवहतशब्देन लब्धायां नीत्युपाधौ (५.३.७७) सर्वथैवानुकम्प्यमानतायाम्, सहकारसंवर्धननिबन्धनत्वमेवास्याः कपा द्योत्यते— एवं नाम त्वं दैवोपहतासि, यत्सहकारच्छद्मानं विषपादपं द्वारि संवर्धयसि इति। विषपादपशब्देन लब्धायां सहकारस्य सर्वथैव कुत्सायां पादपविकासकाले कामिनामसह्यस्मरज्वरसन्निपातहेतुकत्वमेवास्याः कप्रत्ययेन प्रत्याय्यते। तदुक्तम्—(वाप. ३.१४.४—५)

**कुत्सितत्वेन कुत्स्यो वा न सम्यग् वा विकुत्सितः।**
**स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते।। ३०।।**
**न च साम्प्रतिकी कुत्सा शब्दाऽभेदे प्रतीयते।। ३१।।** (शब्दभेद)
**पूज्यते कुत्सितत्वेऽपि प्रशस्तत्वेऽपि कुत्स्यते ।। ३२।।**

इयमेकैव कारिका तद्यथा—

**एक इह जीवलोके जीवतिरूपं नृरूपपशुरूपः ।**
**यः प्रेमपाशपाशे मृग इव न मृगीदृशां पतति ।। ३३।।**

**स्वार्थादिसाकल्यनिबन्धनाः कुत्सानुकम्पातिशयप्रशंसादयो** यथा— कुत्सिकुत्सितकः, अनुकम्पितकः, प्रकृष्टतरः, प्रशस्यरूप इति। अत्र हि— (वाप. ३.१४.२—३)

**देवदत्तादिकुत्सायां वर्त्तते कुत्सितश्रुतिः ।**
**कुत्सितस्था तु या कुत्सा तदर्थे 'को' विधीयते ।।३४।।**
**प्रकृष्ट इति शुक्लादिप्रकर्षस्याभिधायकः ।**
**प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते ।। ३५।।**

एवमनुकम्पाप्रशंसयोरपि वाच्यमिति।

'अनुक—अभिक—अभीकः कमिता' (५.२.७४) इत्यत्राऽनुकामयतेऽसावित्यनुकः, अभिकामयतेऽसावित्यभिकः, अभीको वेति वृत्तिसमानार्थवाक्यकल्पनायां धातोः पूर्वमुपसर्गेण सम्बन्धः, साधनेन वा?

किंचातः?

यद्युपसर्गेण, प्रकृत्यर्थो वक्तव्यः अनुकामयते, अभिकामयत इत्यर्थे

प्रत्ययस्यैवोत्पादात्। अथ साधनेन, पश्चादुपसर्गयोगो न घटते। न ह्यसत्त्ववचना अन्वादयः (पम. ३.१.१२) सत्त्वभूतार्थवचनैः सम्बन्धमुत्सहन्ते।

यथेच्छसि तथाऽस्तु।

अस्तु तावत् कमेः प्रथममुपसर्गेणैव सम्बन्धः।

ननु चोक्तं प्रकृत्यर्थो वक्तव्य इति।

स नास्ति पृथक्, प्रत्ययार्थविशेषणभूतस्यैवान्वादेः प्रकृतिभावात्। यथा 'भृशादिभ्यो भुव्यच्वेः' (३.१.१२) इत्यत्र मनस्वी सुष्ठु भवति सुमनायते, दुर्मनायते, अभिमनायते इति सुदुरभीनां प्रत्ययार्थस्य भवने विशेषणत्वेऽपि प्रकृतिभावः।

ननु असुमनाः सुमना भवतीति प्रकृत्यर्थविशेषणत्वमपि सुदुरभीनां कस्मान्न भवति?

तथा सति स्वमनायत, दुरमनायत इत्यडागमः स्वादीनां पूर्वतः प्राप्नोति; यथा असङ्ग्रामयतेति। तत्र सङ्ग्रामयतेः सोपसर्गस्यैव चुरादिषु पाठ इति चेत्, इहापि च तत् समानम्; भृशादिषु हि सुमनस्, दुर्मनस्, अभिमनस् इति प्रकृतयः पठ्यन्ते।

यद्येवम् अन्वरुध्यतेतिवत् स भविष्यति। नैवम्—

नैवम्, यद्यपि 'अनो रुध कामे' इति दिवादिषु पठ्यते, तथापि यथा अरुध्यतेति दृश्यते। नैवम् अमनायतेति। तर्हिप्रत्ययार्थ विशेषणपक्षे, यथा श्येन इवाचरति श्येनायते इत्यत्र आङः प्रयोग उक्तार्थत्वान्न भवति, एवं सुमनायत इत्यादौ स्वादीनामपि न भवेत्। नैवम्, तत्र हि आङर्थ एव प्रत्ययार्थविशेषणम्, इह तु तत्र स्वादीनामर्थाः। ततश्च मनायत इत्युक्ते न ज्ञायते सुष्ठु, दुष्ठु अभि वा मनस्वी भवतीति स्वादयः प्रयुज्यन्ते; यथा—'पुच्छभाण्डचीवराण्णिङ्' (३.१.२०) इत्यत्र 'पुच्छादुदसने व्यसने पर्यसने च' इति पुच्छमुदस्यत्युत्पुच्छयते पर्यस्यति परिपुच्छयते इति, एवमनुकामयते अनुकः, अभिकामयतेऽभिकः, अभीको वेति।

अस्तु वा कमेः पूर्वं साधनेन संबन्धः।

ननु चोक्तम् पश्चादुपसर्गयोगो न घटते इति। निपाता अन्वादयो भविष्यन्ति—अनुरूपः कमिता अनुकः, अभिरूपः अभिकः, अभीको वेति। तथापि

अनुकोऽनुकमिता, अभिकोऽभिकमिता इति वक्तव्यं स्यात् यथा 'उत्क उन्मना' इति।

नैवम्, सामान्येनापि विशेषाभिधानं दृश्यते; तद्यथा—'गम्लृ सृप्लृ गतौ' इत्यत्र हि गच्छतीति गौः, सर्पतीति सर्प इति गमनसर्पणयोर्यद्यपि महान् विशेषः, तथापि गतावित्यविशेषेण निर्दिश्यते। एतेन 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटच'

(५.२.३१) इत्याद्यपि •व्याख्यातम्; अत्र हि नासिकाया अवटीटनम्, अवनमनम्, अवभ्रंश इति नतिविशेषा नते इत्यनेन सामान्यशब्देनैवाभिधीयन्ते इति।

उपसर्गतो वा न दोष:। अनुरूपं कामयते, अभिरूपं कामयते इति क्रियाभागमात्रेणैव सम्बन्धादन्वादय: प्रत्ययार्थं विशिंषन्त: प्रकृतिभावं लप्स्यन्ते; यथा सुमनायते, विपुच्छयते इति। विषम उपन्यास:। तत्र हि मन:पुच्छादिकाया: प्रकृते: श्रवणं विद्यते; इह तु तद्गन्धोऽपि नास्ति, यत: पर: प्रत्यय उत्पद्यते।

नैवम्, इयान्, इयत्, अधुना, इत्यादावपि प्रकृतेरश्रवणात् तत्र प्रत्ययनिमित्ता प्रकृतेर्निर्वृत्ति: इति चेत्, इहापि निपातननिमित्ता भविष्यति।

कश्चैवमाह प्रकृते: पर एव प्रत्ययो भवतीति? अव्ययसर्वनामामकच् प्राक्टे:' (५.३.७१) 'विभाषा सुपो बहुच् पुरस्तात् तु' (५.३.६८) पूर्वस्य समासान्ताश्च सर्वे टजादयो भवन्ति। अपि च, प्रकृति: प्रत्यय इति रूपसिद्धिमात्रमेतत्। इदं त्वर्थवत्त्वम् अयं शब्दोऽस्मिन्नर्थे साधुर्भवतीति। स च

क्वचिदेवमुच्यते 'अनुकाभिकाभीककमिता' इति;

क्वचिद् वा 'नते नासिकाया: संज्ञायां टीटञ्नाटज्भ्रटच्' (५.२.३१) इति;

क्वचिदुत्कर्ष: अनुपद्यन्वेष्टा (५.२.९०) इति;

क्वचित् 'श्रोत्रियंश्छन्दोऽधीते' (५.२.८४) 'क्षेत्रियच् परक्षेत्रे चिकित्स्य (५.२.९) इति;

क्वचिद् 'उपाधिभ्यां त्यकन्नासन्नारूढयो:' (५.२.३४) 'अकाबूतिलोमाभङ्गाभ्यो रजसि कटच्' (५.२.२९ वा);

क्वचिद् 'अवे: संघाते कटच् (५.२.२९ वा), दुग्धे सोढदूसमरीसच(४.२.३६वा) इति;

क्वचित् पशुनाभ्य: स्थाने गोष्ठच् (५.२.२९ वा), द्वित्वे गोयुगच् (५.२.२९ वा), 'षट्त्वे षड्गच्' (५.२.२९ वा), इति;

क्वचिद् 'भवने क्षेत्रे शाकटशाकिनौ'(५.२.२९ वा.), स्नेहे तैलच्'(५.२.२९ वा.);

क्वचिद् 'निष्फलतिलात् पिञ्जपेजौ'(४.२.३६ वा. ४.२.८६), 'वाचो व्याहृतार्थायां ठक्' (५.४.३५), इति;

क्वचिद् रूढितोऽर्थमनिर्दिश्यैव 'वे: शालच्छङ्कटचौ(५.२.२८), 'संप्रोदश्च कटच्' (५.२.२९), 'अवान् कुटारच्च'(५.२.३०), 'नेर्बिडज्—बिरीसचौ'(५.२.३२), 'इनच्पिटच्चिकचि च' (५.२.३३), कचिकादेशश्च इति।

**ननु च धातु: प्रथमं साधनेन सम्बध्यते, पश्चादुपसर्गेण।**

तत्कथमुच्यते?

यथेच्छसि तथास्तु। विशेष्यं हि पूर्वसिद्धं विशेषणसम्बन्धमनुभवति। विशेष्यश्च धात्वर्थः, क्रियारूप उपसर्गाणाम्। उक्तं च 'क्रियावचनो धातुः' (मभा १.३.१) इति। क्रिया च साध्यमुच्यते, साध्यं च साधनसम्बन्धमन्तरेण न स्यात्। तदुक्तम् –

**प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशिष्यते ।**
**प्राक् तु साधनसम्बन्धात् क्रिया नैवोपजायते ॥ ३६॥** (वाप. २.१८३) इति।

तन्न, भाविसम्बन्धयोग्यता समाश्रयणात्। इदंचावश्यमुपगन्तव्यम्, अन्यथा हि क्रियावचनो धातुररित्यपि न स्यात्। न च 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३.१.७) इति सन उत्पत्तिः। तदाह–

**धातोः साधनयोगस्य भाविनः प्रक्रमाद् यथा ।**
**धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥ ३७॥** (वाप. २.१८४)

यदि च धातोः पूर्वमुपसर्गेण सम्बन्धो न स्यात् कथमुच्यते 'विपराभ्यां जेः' (१.३.१९), अधिशीङ्स्थासां कर्म (१.४.४६) इति?

ननु पूर्वमुपसर्गसंबन्धः क्वोपयुज्यते? साधनमन्तरेण तद्विशेषानभिव्यक्तेः।

नैवम्। फलकाले बीजसंस्कारस्येव तस्योपयोगात्। तदुक्तम्

**बीजकालेषु संबद्धा यथा लाक्षारसादयः ।**
**वर्णादिपरिणामेन फलानामुपकुर्वते ॥ ३८॥** (वाप. २.१८५)
**बुद्धिस्थादभिसम्बन्धात् तथा धातूपसर्गयोः ।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ ३९॥** (वाप. २.१८६)
**अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।**
**धातूपसर्गयोः शास्त्रे, धातुरेव हि तादृशः ॥ ४०॥** (वाप. २.१८०)
**क्रियाविशेषाः संघातैः प्रक्रम्यन्ते क्वचित् तयोः ।**
**तथाहि संग्रामयतेः सोपसर्गादटो विधिः ॥ ४१॥** (वाप. २.१८१)

अतः अनुकामयत इत्यादौ धातोः प्रथममुपसर्गेण साधनेन वा सम्बन्धे न दोषः इति।

**उपसर्गाणां क्रियाविशेषणत्वे** त्रयी गतिः–

(१) **वाचकत्वं**, (२) **द्योतकत्वम्** (३) **सहाभिधायकत्व**ञ्च। यथोच्यते–

**स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा ।**
**शक्त्याधानाय धातोर्वा सहकारी प्रयुजयते ॥ ४२॥** वाप. २.१८९ तत्र–

यदा **वाचकत्वं** तदा धातोः प्रथममुपसर्गेण संबन्धः। यथा– प्रतिष्ठते,

निराकरोति इति। यदा **द्योतकत्वं** तदा साधनेन। यथा— प्रपचति, निकर्षति इति। यदा **सहाभिधायकत्वं** तदा धातूपसर्गयोस्तुल्यकालं साधनेन संबन्धः। यथा—'अधीते', 'अध्येति' इति। तदुक्तम्—

**स्थादिभिः केवलैर्यत्र गमनादि न गम्यते ।**
**तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते** ।। ४३।। (वाप. २.१८७)
**क्वचित् संभविनो भेदाः केवलैरभिदर्शिताः ।**
**उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना** ।। ४४।। (वाप. २.१८९)
**यदाभिधानसामर्थ्यं धातोर्नैकाकिनस्तदा ।**
**धातूपसर्गौ संभूय समर्थावर्थमाहतुः** ।। ४५।। (वाप.२.१९०वृत्तिः)

ननु च प्रथमतः साधनसम्बन्धे प्रपचतीत्यत्र प्रकृष्टः पचतीति स्यात्, न तु प्रकृष्टं पचतीति?

तन्न, साधु पचतीत्यादावपि समानदोषत्वात्। क्रियामात्रेणैव सम्बन्ध इति चेद् इहापि स एवार्थः।

कथञ्च प्रादयश्चादिवदसत्त्ववचनाः क्रियाविशेषकाः कर्तृविशेषणं भवेयुः?

उपसर्गाः क्रियायोग (१.४.५९) इति वचनात्।

कथं पुनरसत्त्ववचनाश्चादयो भवन्ति?

उच्यते—

**तेषामुच्चावचार्थत्वात् सर्वसंबन्धदर्शनात् ।**
**अन्यतन्त्रतयोद्भूतेरसत्त्वार्थत्वमुच्यते** ।। ४६।।

अथ किममी वाचका उत द्योतका इति?

तत्रैके वर्णयन्ति—

**तत्प्रयोगाऽवसेयत्वाद् वाच्यस्तेषां स गम्यते ।**
**समुच्चयादिरर्थात्मा यथाऽन्येषां गवादिकः** ।। ४७।।

अन्ये त्वाहुः—

**षष्ठ्यभावादसत्त्वोक्तेरेकानुक्तेः परस्थितेः ।**
**गुणभावात् स्मृतेश्चैषां द्योतकत्वं सुनिश्चितम्** ।। ४८।।

तदेतदग्रतः प्रातिपदिकार्थनिर्णये निश्चेष्यत इति नेह प्रतन्यते।

**(३. समासरूपं विभक्तावयवम्)**

अथ **पृथगर्थानामेकार्थीभावः समासः।**

स त्रिधा– **१. प्राकृतः, २ वैकृतः ३. शेषश्च।** तेषु –

**(१. प्राकृतः)**

समस्तपदानामव्ययीभावादिसंज्ञानिमित्तं पूर्वपदप्रधानादिका प्रकृतिः; तत्र भवः **प्राकृतः।** स चतुर्धा– **(१) अव्ययीभावः, (२) तत्पुरुषः, (३) बहुव्रीहिः, (४) द्वन्द्व** इति। तेषु–

**(१. अव्ययीभावः)**

**पूर्वपद(ार्थ)प्रधानोऽव्ययीभावः।**

स त्रिधा– अव्ययानाम्, अनव्ययानाम्, कर्मप्रवचनीयानां च। तत्र –

**अव्ययानां** यथा– 'अधिस्त्रि' (२.१.६), उपकुम्भम् (२.१.६), [१]अतितैसृकम् (२.१.६), [२]सकिखि (२.१.६), यावदमत्रम् (२.१.८), बहिर्ग्रामम् (२.१.१२) इति।

**अनव्ययानां** यथा– अग्रेवणम् (८.४.४), मध्यन्दिनम्, चतुर्दश, द्विमुनि (२.१.१९), पारेगङ्गम् (२.१.१८), मध्येसमुद्रम् (२.१.१८) इति।

**कर्मप्रवचनीयानां** यथा– अप–त्रिगर्त्तम् (२.१.१२), आप्रपदम्, आपटलिपुत्रम् (२.१.१३), अनुवनम् (२.१.१५), अनुगङ्गम् (२.१.१६) इति।

**(२. तत्पुरुषः)**

**उत्तरपदार्थप्रधानस्तत्पुरुषः।**

सोऽपि त्रिधा– व्यधिकरणः, समानाधिकरणः, द्विगुश्चेति। तत्र –

**व्यधिकरणो** यथा– राजपुरुषः कष्टश्रितः, शङ्कुलाखण्डः, धान्यार्थः, यूपदारु, वृकभयम्, कुम्भीपाकः (२.१.४१), इति,

**समानाधिकरणो** यथा– नीलोत्पलम्, एकपुरुषः, केवलान्नम् (२.१.४९), पालकुलालः (२.१.५४), अब्राह्मणः, ईषत्कडार इति।

**द्विगुः** द्विगुर्यथा– द्वैमातुरः, पाञ्चनापितिः, पञ्चगवधनः, त्रिलोकहर्म्यम्, पञ्चपूली (२.४.१७), चतुःपात्रम् इति।

---

१. तिसृका, ग्रामविशेषः, तैसृकं तत्र भवम् आच्छादनम्, तच्च कालविशेष एव भोग्यं भवति शैत्ये वा ग्रीष्मे वा। यच्च सार्वकालं तदतिक्रान्तमित्यतितैसृकम् (काशिका २.१.६)।

२. सकिखि, किखी अपचितपरिमाणः शृगालः – पदमञ्जरी। सदृशः किख्येति सकिखिः।

(३. बहुव्रीहिः)

**अन्यपदार्थप्रधानो बहुव्रीहिः।**

स त्रिधा— प्रधानसम्बन्ध्यर्थः, अप्रधानसम्बन्ध्यर्थः, कारकार्थश्चेति। तेषु —

**प्रधानसम्बन्ध्यर्थो** यथा— दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा (२.२.२६)। एवं दक्षिणापरा, सहाग्निना वर्त्तते साग्निः, सवंशपुत्रः, केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्त्तते केशाकेशि (३.३.१९), दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि। प्रथमान्तमिह प्रधानमन्यपदार्थः।

**अप्रधानसम्बन्ध्यर्थो** यथा— चित्रा गावोऽस्य चित्रगुः, अर्धं तृतीयमेषामर्धतृतीयाः, अविद्यमाना भार्या अस्य अभार्यः (२.२.२४), उष्ट्रस्येव मुखमस्य उष्ट्रमुखः (२.२.२४), कण्ठे स्थिताः काला अस्य कण्ठेकालः (२.२.२४), केशसंहारः चूडा अस्य केशचूडः (२.२.२४) इति। षष्ठ्यन्तमिहाप्रधानमन्यपदार्थः।

**कारकार्थो** यथा— आरूढो वानरो यं स आरूढवानरो वृक्षः (२.१.६), ऊढो रथो येन स ऊढरथोऽनड्वान् (२.२.२४)। एवं क्षुण्णब्रीहि मुसलम्, उपहृतपशू रुद्रः (२.२.२४), उद्धृतौदना स्थाली (२.२.२४), मत्तबहुमातङ्गं वनम् इति। अत्र द्वितीयादिवाच्यं कर्मादिकारकं समासार्थः।

(४. द्वन्द्वः)

**उभयपदार्थप्रधानो द्वन्द्वः।**

स त्रिधा — इतरेतरविषयः, समाहारविषयः, उभयविषयश्च। तत्र —

**भेदविवक्षायाम् इतरेतरयोगः**। यथा— धवखदिरौ, मातापितरौ, दधिपयसी, शिववैश्रवणौ (२.४.१४), गोऽश्वौ (२.४.११), दशेमे मार्दङ्गिकपाणविकाः (२.४.१५) इति।

**अभेदविवक्षायां समाहारः**। यथा— पाणिपादम् (२.४.२), रथिकाश्वारोहम् (२.४.२), तक्षाऽयस्कारम् (२.४.१०), गवाश्वम् (२.४.११), प्रत्यष्ठात् कठकौथुमम् (म.भा. २.४.३), उदगात् कठकालापम् (मभा. २.४.३) इति।

विभाषितैकवद्भाव **उभयविषयः**। यथा— अश्वबडबौ, अश्वबडबम् (२.४.१२), हंसचक्रवाकाः, हंसचक्रवाकम् (मभा. २.४.१२)। धवखदिरपलाशा धवखदिरपलाशम् (२.२.२९) इति॥

(२. वैकृत:)

प्रकृतेरन्यथात्वं **विकृति**:, तत्र भवो वैकृत:।

सोऽपि चतुर्धा– **(१) प्राधान्यविपरीत:, (२) सामर्थ्यविपरीत:, (३) वाक्याधिकारार्थ:, (४) अर्थान्तरगामी** च। तेषु –

(१. प्राधान्यविपरीत:)

प्रधान्यविपर्ययस्त्रिधा– पूर्वपदार्थप्राधान्यविपर्यय:, उत्तरपदार्थप्राधान्यविपर्यय:, अन्यपदार्थप्राधान्यविपर्ययश्चेति। तत्र–

**पूर्वपदार्थप्राधान्यविपर्ययोऽव्ययीभावो** यथा– शाकप्रति (२.१.९), अक्षपरि (२.१.१०), तिष्ठद्गु (२.१.१७), उन्मत्तगङ्गम् (२.१.२१), पञ्चनदम् (२.१.२०पा.), सप्तगोदावरम् (२.१.२० पा.) इति।

**उत्तरपदार्थप्राधान्यविपर्ययस्तत्पुरुषो** यथा– राजदन्त: (२.२.३१), पूर्वकाय: (२.२.१), प्राप्तजीविक: (२.२.४), गोगर्भिणी (२.१.७१), अश्वमतल्लिका (२.१.६६), गोवृन्दारक (२.१.६२) इति।

**अन्यपदार्थप्राधान्यविपर्ययो बहुव्रीहिर्यथा**–'द्वौ वा त्रयो वा' द्वित्रा: (५.४.७३), एवं पञ्चषा: (५.४.७३), आसन्नो दशानामासन्नदश: (२.१.१ वा ३), एवम् अदूरदश: (२.१.१), एवं द्विर्दश द्विदशा:, एवं त्रिदशा: (२.१.१) इति।

(२. सामर्थ्यविपरीत:)

सामर्थ्यविपर्ययस्त्रिधा पदाऽसामर्थ्यात्,वाक्यासामर्थ्यात्, वृत्त्यसामर्थ्यात्। तत्र–

**पदाऽसामर्थ्यं** सापेक्षत्वे यथा– देवदत्तस्य गुरुकुलम् (२.१.१ वाप.), ग्रामं गन्तुकाम:, ज्ञातचित्त: कान्तया, निवेदितात्मा गुरुभ्य:, कृतप्रस्थानो नगरात्, निष्पन्नबुद्धि: शास्त्रेषु इति।

**वाक्याऽसामर्थ्यमस्वपदविग्रहे** यथा– ब्राह्मणेभ्योऽयं ब्राह्मणार्थ: सूप: (२.१.३६ मभा.), ब्राह्मणार्था यवागू: (२.१.३६ मभा.), मासो जातस्य मासजात: (२.२.५)। एवं संवत्सरजात: (२.२.५), द्वे अहनी जातस्य द्व्यहजात:, एवं द्व्यह्नजात इति।

**वृत्त्यसामर्थ्यं** सम्बन्धे यथा– सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदारा:, पुनर्न गीयन्ते अपुनर्गेया: श्लोका:, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण:।

एवम् अलवणभोजी भिक्षुरिति, तीर्थे ध्वाङ्क्ष इव तिष्ठतीति तीर्थध्वाङ्क्षः (२.१.४२)। एवं तीर्थकाक (२.१.४२) इति।

**(३. वाक्याधिकारार्थ:)**

**अर्थाधिक्यं त्रिधा**— विशेषणस्य, विशेष्यस्य, समुदायस्य च।

**विशेषणस्य** यथा— वर्षशतमायुरस्य शतायु: (तै.सं. २.३.११.५), जनसहस्रं बिभर्त्ति सहस्रंभर: (तैसं. ३.४.११.२), अश्रेणय: श्रेणय: कृता: श्रेणीकृता: (२.१.५९), अपण्डित: पण्डित उक्त: पण्डितोक्त:, शस्त्रीव श्यामा शस्त्रीश्यामा (२.१.५५), पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्र इति।

**विशेष्यस्य** यथा—घृतेन पूर्णो घट: घृतघट: (मभा. २.१.१), अश्वैर्युक्तो रथोऽश्वरथ: (मभा. २.१.१), दध्नोपसिक्त ओदनो दध्योदन: (म.भा. २.१.१), गुडेन मिश्रा धाना गुडधाना: (मभा. २.१.१), अक्षेषु प्रसक्तो धूर्त: अक्षधूर्त्त: (मभा. २.१.४०), शाकप्रधान: पार्थिव: शाकपार्थिव इति।

**समुदायस्य** यथा— श्वभिर्लेह्य: कूप: श्वलेह्य: कूप: (२.१.३३ काशिका), काकै: पेया नदी काकपेया नदी (२.१.३३ काशिका), खट्वायामारूढ: खट्वाऽऽरूढो जाल्म:, पात्र एव समिता: पात्रेसमिता:, एवं किंराजा यो न रक्षति (२.१.६४ काशिका), किंगौ: यो न वहति (२.१.६४ काशिका) इति। अत्र पूर्वयोरतिशय:, शेषेषु क्षेप: समुदायस्य प्रतीयते।

**(४. अर्थान्तरगमनम्)**

**अर्थान्तरगमनं** त्रिधा— पूर्वार्थत्यागात्, अत्यागात्, त्यागात्यागाभ्यां च। तत्र—

**पूर्वार्थस्य त्यागो यथा**— तैलपायिका, शक्रगोप:, अश्वकर्ण:, पञ्चाङ्गुल:, करवीर:, पुंनाग इति।

**अत्यागो यथा**— कृष्णसर्प:, लोहितशाली, कालशाक:, गौरखर:, नरसिंह:, दन्तलेख(क) (२.२.१७) इति।

**त्यागात्यागौ** यथा— सप्त पर्णान्यस्य पर्वणि पर्वणि इति सप्तपर्ण: (वाप. वृत्ति: ५५), अष्ट पदान्यस्य पङ्क्तौ पङ्क्तौ इत्यष्टापदम्, शतं पत्राणामस्या: पुष्पे पुष्पे इति शतपत्रिका, दर्शने दर्शने नवैव मालिका अस्या नवमालिका, नक्तमिव मालायामस्य नक्तमाल:, कृता माला अस्य पुष्पैरिति कृतमाल इति।।

(३. शेषः)

**उदाहृतप्रकाराभ्यामन्यः शेषः**। स चतुर्धा **१. सूत्रशेषः, २. असूत्रशेषः, ३. ज्ञापकशेषः, ४. एकशेषश्चेति**। तेषु

**(१) सूत्रशेषस्त्रिधा** – गणोक्तः, वार्त्तिकोक्तः सामान्योक्तश्च। तत्र –

**(गणोक्तः)** तिष्ठद्गुप्रभृतीनि (२.१.१७), पात्रे समितादयः (२.१.४८) मयूरव्यंसकादयः (२.१.७२) इति गणोक्तः। यथा– 'आयतीगवम्, समभूमि, उदुम्बरमशकम्, पिण्डीशूरः, अहंपूर्विका, आहोपुरुषिका इति।

**(वार्त्तिकोक्तः)** निरादयः क्रान्ताद्यर्थे पञ्चम्या (२.२.१८ वाप. ६), गमिगाम्यादि कृतापकृतानामुपसंख्यानम् (२.१.२४, ६०) अव्ययानां बहुव्रीहिर्विवक्तव्यः {२.२.२४ (२)}, इति वार्त्तिकोक्तः। यथा निष्कौशाम्बिः, ओदनबुभुक्षुः, क्रयाक्रयिका, पुटापुटिका, उच्चैर्मुखः, अस्तिक्षीरा इति।

**(सामान्योक्तः)** सुप्सुपा (२.१.४), पूर्वादिनिः, सपूर्वाच्च (५.२.८६, ८७), कुशाग्राच्छः, समासाच्च तद्विषयात् (५.३.१०५, १०६), इति सामान्योक्तः। यथा परःशता राजानः, परःसहस्राः शरदः, पुनरुत्सूतं वासः, पुनर्नवं पयः, कृतपूर्वी कटम्, काकतालीयो न्यायोऽयम्।

**२. असूत्रशेषस्त्रिधा**– नामविषयः , कृद्विषयः, तद्धितविषयश्च। तत्र–

**(नामशेषः)** अपरस्पराः क्रियासातत्ये (६.१.१४४), 'पारस्करप्रभृतीनि च संज्ञायाम् (६.१.१५७), पृषोदरादीनि यथोपदिष्टम् (६.३.१०९) इत्यादिर्नामविषयः। यथा– अपरस्पराः सार्थाः गच्छन्ति, आश्चर्यं वर्त्तते, पारस्करो मुनिः, कास्तीरं नगरम्, पृषोदरः कश्चिन्मयूरः पक्षी–ति।

**(कृद्विषयः)** उपपदमतिङ् (२.२.१९), कुगतिप्रादयः (२.२.१८), कर्त्तृकरणे कृता बहुलम् (२.१.३२) इत्यादिः कृद्विषयः। यथा– कुम्भकारः, पङ्कजम्, ऊरीकृत्य, प्रजवी, अश्वक्रीती।

**(तद्धितविषयः)** द्विगोर्लुगनपत्ये (१.४.८८), 'तिक–कितवादिभ्यो द्वन्द्वे' (२.४.६८), समासान्ताः (५.४.६८), इत्यादिस्तद्धितविषयः। यथा पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, तैकायनश्च कैतवानयश्च तिककतवाः, उपशरदम्, देवराजः, महोक्षः, मृगनेत्रा रात्रयः इति।

**३. ज्ञापकशेषस्त्रिधा– विधिज्ञापित:, निषेधज्ञापित: प्रयोगज्ञापितश्च।** तत्र –

**(विधिज्ञापित:)** को: कत् तत्पुरुषे (६.३.१०१), ईषदर्थेऽपि (६.३.१०५), नञो नलोप: (६.३.७३), तिङ्यवक्षेपे च (वा. १), कारकेऽन्यस्य दुक् (६.३.९९), व्यतिहारे सर्वादीनां सुब्बहुलम् (८.१.१२), संख्याविसायपूर्वस्या– ह्नस्याहन्नन्यतरस्यां ङौ' (६.३.११०), दायाद्यं दायाद (६.२.५), इत्यादिको विधिज्ञापित:। यथा कदुष्णम्, अपचसि, अन्यत्कारक:, अन्योन्यम् सायाह्न:, विद्यादायाद: इति।

**(अलुग्ज्ञापित:)** अलुगुत्तरपदे (६.३.१), पञ्चम्या: स्तोकादिभ्य: (६.३.२), आत्मन: पूरणे तृतीयाया (६.३.६), वैयाकरणाख्यायां पराच्चतुर्थ्या: (६.३.७), 'वाग्–दिग्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग् वक्तव्य: (६.३.२१ वा. १), षष्ठ्या अदस: फक्वुञो: (६.३.२१,वा.२), अपो योनियन्मन्तुषु सप्तम्या: (६.३.२१ वा) इत्यादिर्निषेधज्ञापित:। – ब्राह्मणाच्छंसी (६.३.२), आत्मनातृतीय: (६.३.६), परस्मैपदम् (६.३.७), पश्यतोहर: (६.३.२१ वा. १), आमुष्यकुलिका (६.३.२१ वा.२), अप्सुयोनि: (६.३.२१) इति।

**(प्रयोगज्ञापित:)** जनिकर्त्तु: प्रकृति: (१.४.३०), तत्प्रयोजको हेतु: (१.४.४५), अपोनप्त्रपान्नप्तृभ्यां घ: (४.२.२७), यथा–तथाचाऽन्त: (णण:) (७.३.३१ मभा.), वर्त्तमानसामीप्ये वर्त्तमानवद् वा (३.३.१३१), अपरस्परा: क्रियासातत्ये (६.१.१४४), इत्यादि: प्रयोगज्ञापित:। यथा– भूतहर्त्ता, दण्डनायक:, तनूनपात्, याथातथ्यम्, यत्नगौरवम्, क्रियासाफल्यम् (सातत्यम्) इति।

**४. एकशेषस्त्रिधा – सरूपाणाम्, असरूपाणाम् सरूपासरूपाणां** । तत्र –

**सरूपाणां** भिन्नार्थानामभिन्नार्थानां भिन्नाभिन्नार्थानां च।[१]

**भिन्नार्थानां** यथा– अक्षौ, माषौ, पक्षौ, पादौ, गावौ इति।

**अभिन्नार्थानां** यथा– वृक्षौ, प्लक्षौ इति।

---

१. सरूपत्वमभिन्नप्रयत्नोच्चार्यत्वम्। यथा 'राम:, रामौ, रामा:' इति। अत्र रामाविति, रामा इति च 'राम: राम:' इत्येवं 'राम:, राम:, रामश्चे'–त्येवम्। एवं च प्रतीतावेकत्वं, किन्तु गर्भे बहुत्वम्। उच्चारणे त्वभिन्नप्रयत्नत्वमिति स्वाभाविक एष एकशेष:।

**भिन्नाऽभिन्नार्थानां** यथा—'अश्विनौ, पुष्पवन्तौ, गावौ, सारस्वतौ युवाम्, यूयम् इति।

**असरूपाणां** सर्वनाम्नां, सम्बन्धिनां सहचारिणां च।

**सर्वनाम्नां** यथा— स च देवदत्तश्च तौ, एतौ च यज्ञदत्तश्च एते, अयं च त्वं च युवाम्, अमू च त्वं च यूयम्, त्वं चाहं च आवाम्, स च आवां च वयम् इति।

**सम्बन्धिनां** यथा— माता च पिता च पितरौ, स्वसा च भ्राता च भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ, पिता च मातामहादयश्च पितरः, भ्रातरौ च स्वसारश्च भ्रातरः, पुत्राश्च दुहितरौ च पुत्राः इति।

**सहचारिणां** यथा— दस्रश्च नासत्यश्च दस्रौ, देवदत्तश्च विष्णुमित्रश्च विष्णुमित्रौ, शौण्डश्च धूर्त्तादयश्च शौण्डाः, अर्धर्चश्च गोमादयश्च अर्धर्चाः, पुरोडाशश्च धानादयश्च पुरोडाशाः, छत्रिणः।

**सरूपासरूपाणां** भिन्नशब्दानां, भिन्नवचनानां, भिन्नलिङ्गानां च।

**भिन्नशब्दानां** यथा— गार्ग्यश्च गार्ग्यायणी च गार्ग्यौ, वात्स्यश्च वात्स्यायनश्च वात्स्यौ, प्रथमश्च प्रथमानन्तरश्च प्रथमौ, भीमश्च भीमसेनश्च भीमौ, वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ, श्रीमांश्च लक्ष्मीवां(मां)श्च श्रीमन्तौ इति।

**भिन्नवचनानां** यथा— देवश्च दत्तश्च देवदत्तौ, तौ च देवदत्तश्च देवदत्ताः। एवं विष्णुमित्राः। कृष्णश्च सा(शा)रश्च कृष्णसा(शा)रौ, तौ च सारश्च कृष्णसा(शा)राः/एवं नीललोहिताः। अपारश्च पारश्च अपारपारौ, तौ च पारपारश्च पारपाराः। एवमपारपारा इति।

**भिन्नलिङ्गानां** यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ, श्वशुरश्च श्वश्रूश्च श्वशुरौ, गावश्च गावश्च गाव इमाः, वत्सकाश्च वत्सिकाश्च वत्सका इमे, अश्वाश्च अश्वाश्च अश्वा एते, शुक्लश्च शुक्ला च शुक्लं च तदिदं शुक्लम्, तानीमानि शुक्लानीति। (१.२.६९ काशिका)

कथं पुनरेकशेषः समासविशेषो भवति?

संक्षेपाभिधाने सति द्वन्द्वसमानार्थत्वात्। तथाहि— असरूपाणां द्वन्द्वः, सरूपासरूपाणाम् एकशेषः इति।

कोऽनयोः समानोऽर्थः?

येयं युगपदधिकरणवचनता पदार्थानां सहविवक्षेत्यर्थः। तदाह– (वाप. ३.१४.२८)

**अनुस्यूतेव भेदाभ्यामेका प्रख्योपजायते ।**
**यस्यां सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः ।। ४९।।** इति।

तत्र यदा प्रयोगैकतया बुद्ध्याऽनेकमर्थमवगत्य यथावगतमेवाऽभिधातुमध्यवस्यते तदैकज्ञानावच्छेदानिरूपितभेदस्यास्य भागशोऽभिधानासंभवादवयवशब्दाः संघातविषया विज्ञायन्ते। तद्यथा–'धवखदिरौ वृक्षौ इति।

यद्येवं, यथा धवखदिरपलाशमिति द्वन्द्वस्य समूहार्थत्वादेकवचनम्, एकशेषस्यापि प्राप्नोति। नैवम्, द्वन्द्वः समाहारेतरेतरयोगयोः, एकशेषः पुनरितरेतरयोग एव; तस्य हि समाहारपक्षे भिन्नार्थप्रतिपादकानेकशब्दनिवृत्तौ वचनमपि यद्यनेकार्थं न भवेत् केनाऽनेकार्थः प्रतीयेत? न हि वृक्ष इत्युक्ते वृक्षश्च वृक्षश्च वृक्षश्चेति कश्चिदप्यवैति? तस्मादाम्नातोऽपि द्वन्द्वसमानार्थतया समाहार एकशेषोऽनभिधानादप्रयोगार्ह एवेति विज्ञायते। द्वन्द्वे तु यद्यपि एकवचनान्नानेकार्थावगतिः, तथाहि अनेकश्रुतिनिबन्धनासौ भविष्यतीति समाहारेऽपि न दोषः। एकशेषेऽपि च यत्राऽनेकार्थाभिधानसामर्थ्यं कथंचिद् भवति, भवत्येव तत्र समाहारैकवचनम्, यथा शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः पट इति तदिदं शुक्लमिति।

यथा तर्ह्येकस्यैव शब्दस्यानेकार्थाभिधानसामर्थ्यादेकशेषे शब्दान्तराणां निवृत्तिः एवं द्वन्द्वेऽपि कस्मान्न भवति?

यदि भवेदेकशेषादविशेषः प्रसज्येत।

समाहार एकवचनं विशेष इति चेत्, अनेकार्थो न गम्येत। न हि पलाशमित्युक्त धवश्च खदिरश्च पलाशश्चेति कश्चिदप्यवैति।

अथ यथा पितरौ भ्रातरावित्यादिषु शब्दान्तरनिवृत्तावपि तदर्थोऽवगम्यते तथा प्लक्षन्यग्रोधौ धवखदिरावित्यादिषु द्वन्द्वेष्वपि कस्मान्न भवति?

उच्यते शब्दशक्तिरेषा। भवति हि कश्चिदेकोऽपि शब्दो द्वयोरप्यभिधायकः। यथा रोदसीशब्दो द्यावापृथिव्योः। कौचित् पुनर्द्वावेवैकमर्थमभिदधाते, यथा अधीते अध्येति इति। अत एव शब्दशक्तिदर्शी मुनिः केषुचिदेवं विरूपेष्वेकशेषमारभते भ्रातृपुत्रौ 'स्वसृदुहितृभ्याम्' (१.२.६८), 'पिता मात्रा' (१.२.७०) इति। अन्येषु तु द्वन्द्वमेवाऽभ्यनुजानाति।।

ननु च 'चार्थे द्वन्द्वः' (२.२.२९) स्मर्यते; स यथा –

समाहारेतरेतरयोगयोः तथा समुच्चयान्वाचययोरपि प्राप्नोति ।

नैवम्, समुच्चयान्वाचययोः पदानामसामर्थ्यात् ।

कथमसामर्थ्यम्?

सापेक्षमसमर्थं भवतीति। तथाहि– गौश्चाश्वश्च गच्छतीत्यादिरेकक्रियापेक्षः समुच्चयः; भिक्षामट गां चाऽऽनयेत्यादिरनेकक्रियापेक्षः अन्वाचयः। एवं च बाह्यार्थापेक्षया पदानां परस्परमसामर्थ्यम्। समर्थश्च पदविधिर्भवति। समाहारेतरेतरयोगयोस्तु समूहत्वात्, समूहस्य च समूहिरूपत्वादवयवानां सति सामर्थ्ये समासो भवत्यैव। यथा धवखदिरपलाशम्, धवखदिरपलाशा इति।

एवं तर्हि समूहस्यैकत्वात् समाहारवदितरेतरयोगेऽप्येकवचनमेव प्राप्नोति।

नैवम्। समाहार एव परस्परानुप्रवेशादिव समधिगताभेदानामुपसर्जनीकृतावयवः समुदायोऽभ्यनुज्ञायते, यस्यानभिव्यक्तावयवत्वादेकवचनमिव नपुंसकत्वमपि प्राप्नोति; इतरेतरयोगः पुनरवयवभेदानुगतः सङ्घातः, तस्य [1]प्रत्येकवर्त्तिपदैरभिधीयमानत्वात् समुदायसंख्यानिबन्धनैकवचनमवयेभ्यः प्रस्तूयते। तत्र

यथा पचतीत्यादौ अधिश्रयणादिक्रियाकलापः प्रत्यवयवं परिसमाप्यते तथा समुदायोऽपि प्रतिपदं साकल्येन परिसमाप्यते। तत एकैकस्य पदस्य समुदायनिबन्धनः संस्कारो भवति।

कथं पुनर्धवादयो निर्धारितार्थभेदाः पदान्तरस्यार्थमभिधातुं क्षमन्ते?

प्रवृत्तिनिवृत्तिसमारोपात्। यथोक्तम् – 'यदि प्रक्षरतीति प्लक्षः, न्यग्रोधोऽप्येवम्। यदि न्यग् रोहतीति न्यग्रोधः प्लक्षोऽप्येवम्' इति।

साहचर्यादिवशेन वा परस्पररूपापत्तिः। यथा 'सप्तमी शौण्डैः (२.१.४०), 'अर्धर्चाः पुंसि (२.४.३१), ते विष्णुमित्राः छत्रिणो गच्छन्तीति।

तत्र यथा शौण्डार्धर्चादयः बहुवचनान्यथानुपपत्तिसमभिगम्यान् सहचारिणो भिन्नरूपान् धूर्त्तगोमयादीनुपाददते तथा धवादिशब्दाः प्रतीतार्थभेदाः साहचर्यादि–निमित्तानुरोधेन खदिरादीनुपाददते। तथाहि एकवृत्तिपदावरोधप्रतीतसाहचर्यौ धवखदिरौ; अत एव तयोरेव प्रत्यवयवनिवेशाद् बहुवचनं न भवति।

---

१. अधिकरणं वर्त्तिपदार्थः, स हि समासस्यार्थस्याधारः (काशिका २.२.२९)। पदमञ्जरी वृत्तिर्वर्त्तः समासः, न्यासश्च वर्त्तनं वर्त्तः समासः, भावे घञ्। वर्तोऽस्यास्तीति वर्त्ति।

कथं पुनर्धवादीनामर्थान्तराभिधानं शक्यमध्यवसातुम्?

यावता लोकः पदसमुदायादर्थसमुदायमवैति, नावयवात्।

यदप्युक्तं प्रवृत्तिनिवृत्तिसमारोपादिति, तदप्यसारम्, न हि प्रक्षरतीति व्युत्पत्त्या न्यग्रोधः प्लक्षः, नापि न्यङ्रोहतीति व्युत्पत्त्या प्लक्षो न्यग्रोधो भवति; रूढानां हि धर्मनियमाय यथाकथञ्चिद् व्युत्पत्तिः क्रियते, न तु व्युत्पत्तिवशेन रूढयोऽवतिष्ठन्ते।

नापि प्रकृतिप्रत्ययवदन्वयव्यतिरेकसमधिगम्या धवादीनां समुदायार्थता।

यदप्युच्यते शौण्डार्धार्चादिवत् धवशब्दः साहचर्यादिलक्षणया खदिरमुपादत्त इति तदपि न सम्यक्, सति श्रुत्यर्थसंभवे लक्षणाया अयोगात्। न च खदिरार्थो धूर्त्तगोमयावल्लक्षयितव्यः, तस्य खदिरशब्देनैव साक्षादभिधानात्।

एवं तर्हि, यदा धवखदिरादयः समुदायाः प्रविभागेनान्वाचिख्यासिताः, तदा तमेव समुदायं प्रत्याय्यतयाऽभिसंधायावयवा उपादीयन्ते, न त्ववयवार्थप्रतिपादनाभिप्रायेण। अतस्तस्यां युगपदधिकरणवचनतायां समीहितायां समुदायपरत्वादवयवप्रयोगस्य, तेषामवयवानां प्रत्येकमनेकार्थत्वमुच्यते।

किं पुनः प्रयोक्तुरभिप्रायमनुरुध्यन्ते शब्दाः? येन तदभिसन्धानात् समुदायमभिदध्युः।

नेत्याह। अन्यत्राप्यवयवाभिधायिनां शब्दानामवयवमुखेन समुदायाभिधानसामर्थ्यं दृश्यते; यथा सुरभि कुक्लयम्, यन्मधुरं राजादनम् इति। यदि हि सुरभिमधुरशब्दौ गन्धरसमात्राभिधायिनावपि गन्धरसादिसमुदायान् कुसुमफलविशेषादीन् अवयवमुखेन नाचक्षाते, कुवलयादिभिः सामानाधिकरण्यं विरुध्येत।

सत्यमेतत्। अस्ति समुदायाभिधानसामर्थ्यमवयवशब्दानाम्, सुरभि कुवलयमित्यादौ सामानाधिकरण्येन तदवधार्यते; द्वन्द्वे तु निबन्धनमशक्य–मवधारयितुमिति तस्यानुपपत्तिः।

नैवम्। समुदायाभिधानस्य प्रक्रान्तत्वात्।

यद्येवं पद्वीमृद्वा(द्व्या)विति समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति।

उच्यते। अथेह कस्मान्न भवति दर्शनीयाया(:) माता दर्शनीयामाता?

अथ मतमेतत् प्राक् समासाद् यत्र सामानाधिकरण्यम्, इहापि न दोषो भवति; न हि प्राक् समासात् सामानाधिकरण्यमत्र विद्यते।

ननु च वाक्येऽपि समुदायप्रक्रमेणैवावयवपदानां प्रयोगात् कथमुच्यते प्राक् समासात् सामानाधिकरण्यं नास्तीति?

समुदायप्रक्रमस्य निर्निबन्धनत्वेनाप्रतीयमानत्वात्। कुवलयादिशब्दसामानाधिकरण्यं हि सुरभिप्रभृतीनामसमासेऽपि समुदायतानिबन्धनम्; इह त्वेकार्थीभावः समुदायाभिधाने निमित्तमिति वाक्ये सामानाधिकरण्यप्रसिद्धिः।

एवमपि, विप्रतिषिद्धेषु युगपदधिकरणवचनताया अनुपपत्तिः, यथा सुखदुःखे जननमरणे, शीतोष्णे इति। सुखादिप्रतिघातेन हि दुःखादयः, दुःखादिप्रतिघातेन च सुखादय इति।

नैवम्। सर्व एव शब्दा विप्रतिषिद्धाः, प्लक्षन्यग्रोधावित्यत्रापि, हि प्लक्षशब्दः प्रयुज्यमानः प्लक्षार्थं संप्रत्याययति, न्यग्रोधार्थं निवर्त्तयति; न्यग्रोधशब्दः प्रयुज्यमानो न्यग्रोधार्थं प्रत्याययति प्लक्षार्थं निवर्त्तयति। तत्र चेद् युक्ता युगपदधिकरणवचनता दृश्यते, इहापि युक्तं दृश्यताम्।

एवमपि शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानं प्राप्नोति।

ततः किम्? युगपदधिकरणवचनताया अनुपपत्तिः—'प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा' इति; यथैव हि शब्दानां पौर्वापर्यं तद्वदर्थानामपि स्यात्।

नैवम्। एवं सति द्विवचनबहुवचनयोरप्यनुपपत्तिः; प्लक्षशब्दो हि सार्थको निवृत्तः; न्यग्रोधशब्द उपस्थितः; स चैक एकार्थ इति तस्मादेकवचनमेव प्राप्नोति। विग्रहे खल्वपि युगपदधिकरणवचनता दृश्यते, किं पुनः समासे। तद्यथा 'द्यावा ह क्षामा' 'द्यावा चिदस्मै पृथिवी सन्नमेते' इति (ऋवे. १०.१२.१, २.१२.१३)

समुदायात् सिद्धमिति चेत्, तन्न, समुदायस्यैकार्थत्वात्; एकार्था हि समुदाया भवन्ति। तद्यथा शतम्, यूथम्, वनमिति। नायमेकार्थः। किंतर्हि। द्व्यर्थो बह्वर्थश्च। प्लक्षोऽपि द्व्यर्थः, न्यग्रोधोऽपि द्व्यर्थः।

यद्येवम् अनेकार्थत्वाद् 'बहुषु बहुवचनमि'(१.४.२१)—ति बहुवचनं प्राप्नोति?

तन्न, बहुत्वाऽभावात् (मभा. २.२.२९); याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवाऽपरोऽपि।

यद्येवमन्यवाचकेन शब्देनान्यस्य वचनं नोपपद्यते।

एवं तर्हि प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य च प्लक्षत्वात् स्वशब्देनैवाभिधानं भविष्यतीति (मभा. २.२.२९)।

कथं पुनः प्लक्षोऽपि न्यग्रोधो न्यग्रोधोऽपि प्लक्षः स्यात्?

यावता कारणाद् द्रव्ये शब्दसन्निवेशो भवति।

कारणाद्द्रव्ये शब्दसन्निवेश इति चेत् कारणमुक्तं पुरस्तात् यदि प्रक्षरतीति प्लक्षः

न्यग्रोधेऽप्येतद् भवति, यदि न्यङ् रोहतीति न्यग्रोधः, प्लक्षेऽप्येतद् भविष्यतीति।

दर्शनं वै हेतुः। न च न्यग्रोधे प्लक्षशब्दो दृश्यते। दर्शनं हेतुरिति चेत् तुल्यमेतद् भवति प्लक्षेऽपि न्यग्रोधशब्दो दृश्यते।

नन्वेतद् ब्रवीमि– 'नैष लोके संप्रत्ययोऽस्ति, न हि प्लक्ष आनीयतामित्युक्ते न्यग्रोध आनीयते।'

द्वन्द्वविषयमेवैतद् द्रष्टव्यम्।

युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः?

वाढं युक्तम्, अन्यत्रापि दर्शनात्; तद् यथा समानेऽपि रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोणित इति। समाने शुक्ले वर्णे गौः श्वेत इति भवति अश्वः कर्क इति।

यदि तर्हि प्लक्षोऽपि न्यग्रोधः, न्यग्रोधोऽपि प्लक्षः, एकेनैवोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः। अनुक्तः प्लक्षेण न्यग्रोध इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते।

कथमनुक्तः? यदिदानीमेवोक्तं प्लक्षोऽपि न्यग्रोधः, न्यग्रोधोऽपि प्लक्ष इति। सहभूतावन्योन्यस्यार्थमाहतुः, न पृथग् भूतौ।

किं पुनः कारणम्?

**शब्दशक्तेः स्वभावः**। प्रतिनियता हि वृत्तिवाक्ययोः शब्दानामभिधानशक्तिः, तद्यथा शस्त्रीश्यामा देवदत्ता' इति। 'उपमानानि सामान्यवचनैः' (२.१.५५) इति समासे शस्त्रीशब्देनावच्छिद्यमानविशेषावरुद्धः श्यामाशब्दो यद्यपि न सामान्यवचनः तथाप्यसौ देवदत्तायामुपमीयमानायां वर्त्तते शस्त्रीव श्यामा देवदत्तेति, तदिदमुक्तं 'प्रागभिसम्बन्धाद् यः सामान्यवचन' (मभा. २.१.५५ वा–२) इति। समाससमभिसम्बन्धवचनेन दर्शयति; यतस्तत्र विनिवृत्तविशेषान्तराकाङ्क्षाणि यथासमीहितविशेषाऽवरुद्धानि पदानि। सोऽयं वृत्तिवाक्ययोर्विशेषः।

किञ्च, निष्कौशाम्बिः, निर्वाराणसिरिति भेदे सति निरादीनां न क्रान्ताद्यर्थसंभवः (मभा. २.४.२६)। अपि च 'गौर–खर–वदरण्यम्' (मभा. २.१.६९), 'लोहितशालिमान् ग्रामः' इति।

**प्राग्वृत्तेर्जातिवाचित्वं न च गौर–खरादिषु ।। ५० ।।** (वाप. ३ वृत्तिः ३९)
**यथा स्निग्धकिसलयमरण्यं मत्तमातङ्गं वनमिति ।**
**वृत्तिरन्यपदार्थे या तस्या वाक्येष्वसंभवः ।। ५१ ।।**(वाप.३ वृत्तिः ३८)

एवं च प्लक्षन्यग्रोधौ प्राथमकल्पिकौ कौचित्, क्रियया गुणेन वा प्लक्ष इवायं प्लक्षः, न्यग्रोध इवायं न्यग्रोध इति। तत्र प्लक्षावित्युक्ते संदेहः स्यात्—'किमिमौ प्लक्षावेव आहोस्वित् न्यग्रोधावेव, अथवा प्लक्षन्यग्रोधाविति। तत्राऽसन्देहार्थो न्यग्रोधशब्दः प्रयुज्यते। सेयं युगपदधिकरणवचनता दुःखा दुरुपपादा च (मभा. २.२.२९)।

यदपि चास्या ज्ञापकं 'द्यावा च क्षामा' इति, तदपि छान्दसम्। इदं तर्हि ज्ञापकमस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२.४.२६), पूर्ववदश्वबडवौ (२.४.२७)। यदि ह्यत्र 'कुक्कुटमयूर्या'—(२.४.२६ वा.२ मभा. काशिके)— वित्यादिषु सहविवक्षा न स्यात् अनर्थकः सूत्रारम्भः स्यात्।

ननु च तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् तत्र परवल्लिङ्गतातिदेशोऽनर्थकः।

नानर्थकः, तत्पुरुषस्य क्वचित् पूर्वपदार्थप्रधानत्वात्, यथा 'अर्धं' पिप्पल्या अर्धपिप्पली (२.४.२६ मभा.), पूर्वं कायस्य पूर्वकायः, उत्तरं शरीरस्योत्तरशरीरम् इति। यद्येवं 'प्राप्तो जीविकां प्राप्तजीविकः, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः, अलंकुमार्यै अलंकुमारिः' इत्यत्रापि परवल्लिङ्गता प्राप्नोति।

एवं तर्हि, द्वन्द्वेन सह निर्देशाच्चार्थविषयोऽत्र तत्पुरुषो गृह्यते; यथा [1]'क्रयाक्रयिका, पुटापुटिका, फलाफलिकेति, [2]अश्वमतल्लिका कुमारीतल्लजकः, गोप्रकाण्डम्' इति। अत्र हि, यथा धवश्च खदिरश्चेति युगपदधिकरणवचनतायां तथा समानाधिकरणतायामपि विशेषणविशेष्यभावेन संमूर्च्छन्ताविवान्योन्यमर्थौ भवतः। तथाहि प्रयोजनवत्तया महत्त्वाश्रयश्चासावल्पमूल्यत्वेन लघुत्वात् क्रयिका चेत्युपपद्यते नीलोत्पलादिवद् विशेषणविशेष्यभावः। एवं फलाफलिका, पुटापुटिकेति। अश्वमतल्लिकेत्यत्राश्वशब्दः प्रवर्त्तमानः सर्वाश्वावग्रहरूपेण प्रवर्त्तते; मतल्लिकाशब्दः प्रशंसावचनः प्रवर्त्तमानो विशिष्टावग्रहरूपेणावच्छिनत्ति। यदि वा— मतल्लिकेत्येतत् प्रशंसावचनं न्यूनाधिकभावमनपेक्ष्य प्रवर्त्तमानमनेनैव धर्म्मेण सर्वयोग्यं सत् अश्व इत्यनेन विशिष्टायां योग्यतायां नियम्यते। ततो यथा शुक्लः कृष्णश्चायं मृगः सारङ्गः शबल इति वा तथा ऽश्वमतल्लिकेत्येतदुभयरूपोऽर्थ इत्युभयमुभयेन सन्निवेश्यते। एवं कुमारीतल्लजकः गोप्रकाण्डमिति।

---

१. 'महान् क्रयः क्रयः, अल्पीयाँस्तु क्रयिका' इति न्यासः। मभा. २.१.६० वा.५।

२. काशिका २.१.६६।

यद्येवम् अर्धपिप्पलीत्यादिषु षष्ठीसमासापवादेषु परवल्लिङ्गता न प्राप्नोति।

नैवम्। तत्रापि अर्धं च तत् पिप्पलीति चार्धपिप्पलीति, पूर्वश्चासौ कार्यश्च पूर्वकाय इति सामानाधिकरण्यमेव परमार्थः। अत एव यत्र सामानाधिकरण्यस्यासम्भवः तत्र षष्ठीसमास एव भवति, यथा— वेद्यर्धं दाक्षिणं मेरोः (?), स्वरार्धम्, चूडिकार्धम्, पणार्धम् इति। न चार्धादीनामेवैष नियमः, यतोऽन्यत्रापि सामानाधिकरण्यस्य विवक्षाऽविवक्षाभ्यामुभयथा तत्पुरुषो भवति, तद्यथा 'अग्रहस्तः, हस्ताग्रम्, [1]तलपादः, पादतलम्' इति (मभा. २.१.६९, न्यासश्च)।।

ननु च 'चार्थे द्वन्द्वः' (२.२.२९) इत्युच्यते [2]चश्चाव्ययं तेन समासस्याव्ययसंज्ञा प्राप्नोति।

नैष दोषः। [3]पाठेनाव्ययसंज्ञा क्रियते। न च समासस्तत्र पठ्यते।

मा भूदपाठे संज्ञा तथाप्यभिधेयवल्लिङ्गवचनानि भवन्ति, यश्चेहार्थोऽभिधीयते, न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति। नेदं वाचनिकम् अलिङ्गता असंख्यता च। किं तर्हि? स्वाभाविकमेतत्। तद्यथा समानमीहमानानामधीयानानां केचिदर्थेन युज्यन्ते, अपरे न; चेदानीं कश्चिदर्थवानित्यतः सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद् वाऽनर्थक इति सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं वक्तुम्, यत् प्राक् समासात् लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति।

अथवा आश्रयतो लिङ्गवचनानि भविष्यन्ति। गुणवचनानां हि शब्दानामाश्रयता लिङ्गवचनानि भवन्ति। तद्यथा शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्याश्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च

---

१. २.२.३—अष्टाध्याय्यां 'तलाग्रादयश्चे'ति भोजस्य योगः। स च वामनस्यानुकारः। तथाहि काव्यालङ्कारसूत्रवृत्तिः— ५.२.२०— हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्। हस्ताग्रमग्रहस्तः पुष्पाग्रमग्रपुष्पम् इत्यादयः प्रयोगाः कथम् 'आहिताग्न्यादिषु अपाठात्, पाठे वा तदनियमः स्यात्।' आह गुणगुणिनोर्भेदाऽभेदात्। तत्र भेदात् हस्ताग्रादयः, अभेदाद् अग्रहस्तादय' इति।

२. मभा. २.२.२९।

३. पाठेन— 'सूत्रगतेने'ति भावः

वस्तुतस्तु व्याहारमात्रगत एष भेदो, न तु व्यवहारेऽपि। अत एव पत्नीति वक्तव्ये 'दारा' इत्युच्यमानं न दोषाय। व्याहार एव हि परायणं शिष्टानां व्यवहारनियमने।

राघवेणाऽत्र नाङ्गीकृतः पाण्डुलेखनिगडः, अर्थसङ्गतिं पश्यता। धन्य एष।

तद् गुणस्यापि; यदसौ द्रव्यं श्रितो भवति समासः, लिङ्गं वचनं च तत् समासस्यापि भविष्यति।

अथेह कस्मान्न भवति— याज्ञिकश्चायं वैयाकरणश्च, कठश्चायं बह्वचश्च, औक्थिकश्चायं मीमांसकश्चेति? शेष इति वर्त्तते—

**उपास्नातं स्थूलसिक्तं तूष्णींगङ्गं महाह्रदम् ।**
**द्रोणं चेदशको गन्तुं मा त्वा ताप्तां कृताकृते ।। ५२।।**

इत्येतन्न सिद्ध्यति।

नैष दोषः। अन्यद्धि कृतमन्यदकृतम्। चार्थे द्वन्द्ववचने असमासेऽपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति।

**अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।**
**वैवस्वतो न तृप्यति सुराया इव दुर्मदी ।। ५३।।** (मभा. २.२.२९)

इन्द्रस्त्वष्टा वरुणो वायुरादित्य (तैआ. ६.५.३; मभा. २.२.२९) इति।

नैष दोषः। इह 'चे द्वन्द्व' इतीयता सिद्धम्।

कथं पुनश्चे नामवृत्तिः स्यात्?

शब्दो ह्येष शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते। सोऽयमेवं सिद्धे सिद्धे सति यदर्थग्रहणं करोति तस्यैतत् प्रयोजनम्। यथैवं विज्ञायेत 'चकृतेऽर्थे चार्थ' इति। (न चकृतेऽर्थे चार्थः)

कः पुनश्चकृतोऽर्थः?

**समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहार** इति।

तत्र द्वयोः सापेक्षत्वात् समासो न भवति (समासो भवति)।

द्वयोस्तु भवतीति प्रतिपादितं पुरस्तात्।

ननु चैवं 'चकृतोऽर्थश्चार्थ' इति पक्षे प्लक्षन्यग्रोधावित्यत्र प्लक्षश्च न्यग्रोधश्चेति विग्रहः प्राप्नोति; यावता प्लक्षश्च न्यग्रोधश्चेत्यप्युक्ते गम्यत एतत् प्लक्षोऽपि न्यग्रोधसहायः, न्यग्रोधोपि प्लक्षसहाय इति।

तत्र को दोषः स्यात्?

प्लक्षौ च न्यग्रोधौ चेति यदुक्तं तन्न घटते। युगपदधिकरणवचनता— प्रदर्शनमात्रपरमेतत्, न त्वयमेव परमार्थः।

एवं हि क्रियमाणे एकश्च विंशतिश्च एकविंशतिः, द्वौ च दश च द्वादशेति

द्विवचनं बहुवचनं च प्राप्नोति।

किं पुनरेकविंशतिरित्यादयो द्वन्द्वाः?

बाढम्। एकाधिका विंशतिरिति पक्षे हि संख्यास्वरो न प्राप्नोति। स हि शतसहस्रमिति षष्ठीसमासे मा भूदिति द्वन्द्व एवाभ्यनुज्ञायते।

यद्येवमितरेतरयोगपक्षे द्विवचनम्, समाहारपक्षे च नपुंसकत्वं प्राप्नोति।

नैवम्, 'लिङ्गमशिष्यं लोकाश्रयत्वा'–दिति समाहारेऽपि नपुंसकत्वं न भविष्यति। अथ द्वादशेत्यत्रापि समाहारः कस्मान्न भवति आ दशभ्यः संख्याः संख्येय एव वर्त्तते; अत उद्भूताऽवयवसमुदायतायामितरेतरयोग एव प्राप्नोति; यथा 'अधिकरणैतावत्त्वे च (२.४.१५), दशेमे मार्दङ्गिकपाणविका (काशिका २.४.१५) इति।।

तदेतत् कृत्तद्धितसमासभेदाद् विभक्तावयवं त्रिधा प्रातिपदिकमभिहितम्।

## (२. अविभक्तावयवं प्रातिपदिकम्)

अथाविभक्तावयवमुच्यते। तदपि (अविभक्तावयवमपि) प्रातिपदिकं त्रिधा –

**१. नामरूपम्, २. अव्ययरूपम् ३. निपातरूपं** च। तत्र –

### (१. नामरूपम्)

**अनपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि।**

तानि त्रिधा– **१. एकार्थानि, २. अनेकार्थानि ३. एकानेकार्थानि** चेति। तत्र–

**एकार्थानि** यथा– वृक्षः, कुण्डम्, कुमारी, डित्थः, शुक्लः, शीघ्रः, इन्द्रः, शक्रः, पुरन्दरः, कोष्ठः, कुसूल इति।

**अनेकार्थानि** यथा– अक्षाः, माषाः, पादाः, अवयः, हरयः, गावः, भूतयः, पुण्डरीकम्, पुष्करम्, साम, ललाम इति।

**एकानेकार्थानि** यथा– दस्रौ, नासत्यौ, पुष्पवन्तौ, उभौ, रोदसी, रोदस्यौ, दाराः, वर्षाः, आपः, वनम्, पङ्क्तिः, सेना इति।

### (२. अव्ययरूपम्)

**प्रायेणालिङ्गसंख्याशक्तीनि अव्ययानि।**

तान्यपि त्रिधा **१. द्रव्यवचनानि, २. गुणवचनानि ३. संबन्धवचनानि** चेति। तेषु

**द्रव्यवचनानि** यथा– स्वः, प्रातर्, दिवा, दोषा, नक्तम्, सायम्, विहायसा, भूः, कम्, शम्, शंयो, मय इति।

**गुणवचनानि** यथा— उच्चैः, नीचैः, सुष्ठु, अपष्ठु, मुधा, अद्धा, मृषा, मिथ्या, अलम्, बलवत्, पृथक्, विष्वक् इति।

**संबन्धवचनानि** यथा— समया, निकषा, बहिः, अन्तः, अन्तरेण, ऋते, आरात्, युगवत्, साकम्, सार्धम्, अमा, सह इति।

**(३. निपातरूपम्)**

**असत्त्ववचनाश्चादयो निपाताः**। तेऽपि त्रिधैव —

**१. स्वतन्त्राः, २. परतन्त्राः ३. विशेषपरतन्त्राश्च**। तेषु —

**(स्वतन्त्राः)** अस्त्यादयः स्वतन्त्राः। यथा— अस्ति, असि, अस्मि, एहि, ब्रूहि, मृदु (द्नु) हि, मन्ये, जाने, पश्य, पश्यत, स्यात् इति।

**(परतन्त्राः)** कर्मप्रवचनीयाश्चादयः परतन्त्राः। वृक्षमनु विद्योतते, उपार्जुनं योद्धारः, अप त्रिगर्त्तेभ्यो वृष्टो देवः, अभिमन्युरर्जुनतः प्रति, यदत्र मां प्रतिस्यात्, अधिब्रह्मदत्ते पञ्चालाः, अहं च त्वं च वृत्रहन्, वायुर्वा त्वा मनुर्वा त्वा, अहमेव पशूनामीशे, सरोजमिव ते मुखम्, न नूनमस्ति नोश्वः, कः स्विदेकाकी चरति इति; (तैसं.७.४.१८.१)।

**(विशेषपरतन्त्राः)** गतिप्रादयो **विशेषपरतन्त्राः**। यथा— प्रकरोति, पराकरोति, ऊरीकरोति, [1]गुलुगुधाकरोति (काठकसं. २५.१), कारिकाकरोति, खाट्करोति, पटपटाकरोति, तिरस्करोति, पुरस्करोति, श्रद्धा, अन्तर्धिः इति।।

## (३. अनुकरणप्रातिपदिकम्)

अथानुकरणम्। तदपि त्रिधैव —

**१. साध्वनुकरणम्, २. असाध्वनुकरणम् ३. अव्यक्तानुकरणं** च।

**(१. साध्वनुकरणम्)**

(तत्र[2] **साध्वनुकरणं** द्वेधा सार्थकं निरर्थकं च)। तयोः —

**सार्थकं** यथा— 'द्विःपचत्वित्याह' अग्नी इत्याह, पचतीत्याह। अत्र सार्थकत्वात् 'तिङ्ङतिङः (८.१.२८) इति निघातः, 'ईदूदेद्द्विवचनं प्रगृह्यम् (१.१.११) इति प्रगृह्यत्वम्, तिङन्तत्वादप्रातिपादिककार्यत्वे सुबुत्पत्तिश्च न भवतीति।

---

१. 'गुलुगुधा पीडार्थे' १.४.६१ काशिका।

२. कोष्ठकगता पङ्क्तिरस्माभिरुपकल्पिता याथापूर्व्य प्रमाणीकृत्य। राघवः पुनरे वं (तत्र प्रथमं सार्थकं, निरर्थकं च)। अत्र याथापूर्व्यं नान्वापालीतिं विमृश्यम्।

**निरर्थकं** यथा– 'सुः पूजायाम्'(१.४.९४)'अपिः पदार्थसंभावनान्ववसर्ग–गर्हासमुच्चयेषु' (१.४.९६) 'चः समुच्चये' (?)[१]। अत्रार्थस्यानुकरणात् स्वस्वरूपत्वाच्च प्रातिपदिकत्वे सुपः श्रवणं भवतीति।

**(२. असाध्वनुकरणम्)** द्वितीयम् अशक्तिजम् अपभ्रंशश्च। तत्र –

**अशक्तिजं** यथा– अहो ऋतक इति वक्तव्ये शक्तिवैकल्याद् 'अहो लृतक' इत्याह।

**अपभ्रंशो** यथा– 'हेरयो हेरय' इति वक्तव्ये असुरा 'हेलयो हेलय' इति वदन्तः पराबभूवुः।

**(३. अव्यक्तानुकरणं)** तृतीयम् निरुल्लेखं सोल्लेखं च। तयोः –

**निरुल्लेखं** यथा– पटत्पटदिति करोति पटपटायते।

**सोल्लेखं** यथा– तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति। दाम्यत, दत्त, दयध्वमिति तदेतत्त्रयं शिक्षेद् दमं दानं दयामि'–ति।।

## *(६. विभक्तिः)*

**प्रत्ययविशेष एव शक्ति–संख्या–विभागकृद् विभक्तिः**। सा त्रिधा –

**१. तिङ्विभक्तिः, २. सुब्विभक्तिः, ३. अव्ययविभक्तिश्च**। तासु –

**(१) तिङ्विभक्तिः** षोढा –

१. परस्मैपदविभक्तिः, २. आत्मनेपदविभक्तिः, ३. सार्वधातुकविभक्तिः, ४. आर्धधातुकविभक्तिः, ५.व्यक्तकालविभक्तिः, ६. अव्यक्तकालविभक्तिश्च।

तासु–

परस्मैपदविभक्तिर्यथा पचति, पचतः, पचन्ति;

आत्मनेपदविभक्तिर्यथा पच्यते, पच्येते, पच्यन्ते;

सार्वधातुकविभक्तिर्यथा व्यपच्यत, व्यपच्येतां, व्यपच्यन्त;

आर्धधातुकविभक्तिर्यथा पपाच, पक्ता, पक्षीष्ट;

व्यक्तकालविभक्तिर्यथा अपाक्षीत्, अपचत्, पक्ष्यते;

अव्यक्तकालविभक्तिर्यथा पचतु, पचेत्, अपक्ष्यत इति।

**(२) सुब्विभक्तिरपि** षोढा –

१. कारकविभक्तिः, २. सम्बन्धविभक्तिः, ३. शेषविभक्तिः, ४. उपपदविभक्तिः, ५. प्रधानविभक्तिः, ६. संबोधनविभक्तिश्च। तासु –

---

१. नेदं सूत्रमिति राघवः।

**कारकविभक्ति**र्यथा कटं करोति, दात्रेण लुनाति, ब्राह्मणाय ददाति,
**सम्बन्धविभक्ति**र्यथा विद्यया यशः, यूपाय दारु गवां कृष्णा संपन्नक्षीरतमा इति
**शेषविभक्ति**र्यथा मातुः स्मरति, वृक्षस्य पंर्ण पतति, माणवकस्य पितरं पन्थानं पृच्छति,
**उपपदविभक्ति**र्यथा वृक्षं प्रति विद्योतते विद्युत्, नमो देवेभ्यः, ऋते देवदत्तात्।
**प्रधानविभक्ति**र्यथा देवदत्तः पचति, चैत्रेण पच्यते, वीरः पुरुष इति।
**संबोधनविभक्ति**र्यथा हे देवदत्त, आगच्छ देवदत्त इति।

(३) **तद्धितप्रत्ययविशेषोऽव्ययविभक्तिः।**

सा द्विधा— **१. विभक्तिकार्यवती, २. अविभक्तिकार्यवती** च। (तत्र) —

१. **विभक्तिकार्यवती**—'प्राग्दिशो विभक्तिः' (५.३.१), इति। सा त्रिधा—

१. विभक्त्यादेशरूपा, २. प्रत्ययादेशरूपा ३. प्रत्ययरूपा च। तासु—

**(विभक्त्यादेशरूपा)** यथा— पञ्चम्यास्तसिल् (५.३.७), सप्तम्यास्तल् (५.३.१०), इदमो सः (५.३.११), किमोत् (५.३.१२), भवान्, दीर्घायुः, आयुष्मान्, देवानां प्रियः (५.३.१४ मभा.), तेऽन्यासां चेति। यथा— सर्वस्मात् सर्वतः, यस्मिन् यत्र, तं भवन्तं ततो भवन्तं, एतेन दीर्घायुषा अत्र दीर्घायुषा, इहायुष्मते, कस्य देवानां प्रियस्य क्व देवानां प्रियस्य इति।

**(प्रत्ययादेशरूपा)**—'तसेश्च' (५.३.८) तसि। स च प्रतियोगे पञ्चम्यास्तसिः (५.४.४४), 'अपादाने चाहीयरुहोः' (५.४.४५), 'अतिग्रहा व्यथनक्षेपेष्वकर्त्तरि तृतीयायाः' (५.४.४६), षष्ठ्या व्याश्रये (५.४.४८), 'आद्यादिभ्यश्च सर्वविभक्तिः', इति। यथा—'अभिमन्युरर्जुनतः प्रति', शैलतोऽवतरति, शीलतोऽविगृह्यते, देवा अर्जुनतोऽभवम्, आदौ आदितः, प्रमाणेन प्रमाणतः इति।

**(प्रत्ययरूपा)**— सर्वैकान्यकिंयत्तदः काले दा' (५.३.१५), इदमोर्हिल् (५.३.१६), प्रकारवचने थाल् (५.३.२३), था हे तौ च च्छन्दसि (५.३.२६), 'इदमस्थमुः' (५.३.२४), 'किमश्च' (५.३.२५) इति। यथा— सर्वदा, एतर्हि, सर्वथा प्रकथा, इत्थं, कथम् इति।

२. **अविभक्तिकार्यापि** त्रिधा —

१. **शब्दोक्ता** २. **अर्थोक्ता** ३. **प्रयोगोक्ता** च। तासु —

**शब्दोक्ता** यथा— सप्तमीपञ्चमीप्रथमाभ्योऽस्तातिः (५.३.२७), देवमनुष्यपुरुष—

पुरु—मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (५.४.५६), इति। यथा— पुरस्ताद् वसति (५.३.२७, ५.४.५६ काशिका), पुरस्तादागतः, पुरस्ताद् रमणीयम्, देवत्रा गच्छति, मनुष्यत्रा वसति, पुरुषत्राऽभिनिविशते इति।

**अर्थोक्ता** 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' (५.४.४२), संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् (५.४.१७) इति। यथा— बहु देहि बहुशो देहि, द्वौ द्वौ देहि द्विशो देहि, द्वाभ्यां द्वाभ्यां देहि द्विशो देहि, माषं माषं देहि माषशो देहि, पञ्च वारान् देहि पञ्चकृत्वो देहि इति।

**प्रयोगोक्ता**—'तेन तुल्यं क्रिया चेद् वतिः' (५.१.११५), 'तत्र तस्येव' (५.१.११६) इति। यथा— अग्निना तुल्यमयं वर्त्तते अग्निवत्, दैवमिव भवन्तं पश्यामि देववत्, ब्राह्मणेन तुल्यमस्मै दीयते ब्राह्मणवत्, व्याघ्रेण तुल्यमस्माद् बिभेति व्याघ्रवत्, मथुरायामिव पाटलिपुत्रे प्रासादाः मधुरावत्, श्रोत्रियस्येवास्य शुक्ला दन्ताः श्रोत्रियवत्। तद्धितविभक्तिरिति वक्तव्ये अव्ययग्रहणम्। अधिस्त्रि, प्रत्युरसम्, पारेगङ्गम्, पुरा, स्वयं, साक्षात्, इत्येवमादीनामुप—संग्रहणार्थमिति।।

## (७. उपसर्जनम्)

**प्रथमानिर्दिष्टं समास उपसर्जनम्** (१.२.४३), **'एकविभक्ति चापूर्वनिपाते'** (१.२.४४)।

तत् त्रिधा — **१. विशेष्यरूपम्, २.विशेषणरूपम्, ३. तुल्यरूपं** च।

### (१. विशेष्यरूपम्)

तत्र विशेष्यरूपं यथा— पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः, पूजितोऽश्वः अश्वकुञ्जरः, गर्भिणी गौर्गोगर्भिणी, स्तोकोऽग्निरग्निस्तोकः, कायस्य पूर्वं पूर्वकायः, अर्धं पिप्पल्या अर्धपिप्पली इति।

### (२. विशेषणरूपम्)

विशेषणरूपं यथा— राज्ञः पुरुषो राजपुरुषः, दन्तानां राजा राजदन्तः, कष्टं श्रितः कष्टश्रितः, जीविकामापन्न आपन्नजीविकः, नीलमुत्पलं नीलोत्पलम्, उत्तमः पुरुषः पुरुषोत्तम इति।

**(३. तुल्यरूपम्)** तुल्यरूपं यथा— शस्त्रीव श्यामा शस्त्रीश्यामा, खञ्जश्चासौ कुब्जश्चेति खञ्जकुब्जः, निर्गतः कौशाम्ब्या निष्कौशाम्बिः, चित्रा गावोऽस्य चित्रगुः, अर्धं तृतीयमेषाम् अर्धतृतीयाः (मभा.२.२.२४(वा.२२)), के सब्रह्मचारिणोऽस्य 'किंसब्रह्मचारी' (मभा.२.२.२४ (वा. २२)) इति।

ननु च अर्धं तृतीयमेषामिति अन्यपदार्थो नोपपद्यते, स हि तत्र स्यात्, यत्र येषां पदानां समासः ततोऽन्यस्य पदस्यार्थो भवति।

नैष दोषः। अवयवेन विग्रहः समुदायः समासार्थः।

नन्वेवं सति, **'असि–द्वितीयोऽनुससार पाण्डवम्'** (मभा.), **'संकर्षणद्वितीयस्य बलं कृष्णस्य वर्धतामि'**–त्यादिषु द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति।

नैवम्। असिर्द्वितीयो यस्येत्यन्यपदार्थेनैक एवोच्यते। यथा–**'जनार्दनस्त्वात्मचतुर्थ एव'** {६.३.५ (२) मभा.} इति। यदि वा द्वितीयशब्दोऽयमस्ति तृतीयान्तः संख्यापूरणः। अस्ति चाव्युत्पन्नः सहायवाची, तस्येह ग्रहणम् असिद्वितीयोऽसिसहाय इत्यर्थः।

आत्मचतुर्थ इति कोऽयं समासः?

नन्वन्यपदार्थ 'आत्मा चतुर्थः अस्ये'–ति। आत्मना चतुर्थ इति तत्पुरुषः कस्मान्न भवति? 'आत्मनः पूरणे' (६.३.६) इति तृतीयाया अलुक्प्रसङ्गात्।

यद्येवम् अलुक् न वक्तव्यः–'आत्मना चतुर्थ इति वाक्यं भविष्यति, आत्मचतुर्थ इति च वृत्तिः।

न चात्मचतुर्थ इत्युक्ते बहुव्रीहौ तत्पुरुषे वाऽर्थभेदो विद्यते, उभयथाऽपि चतुःसंख्योपलक्षित– समुदायः प्रतीयते।

नैवम्। एवं सति, 'राज्ञः सखा' राजसख इत्यप्युक्ते संबन्धादेतद् गन्तव्यम्–नूनं राजा अस्य सखा; राजसखेति चोक्ते गन्तव्यमेतत् 'राज्ञः सखाऽयम्' इति। ततश्च बहुव्रीहितत्पुरुषयोरन्यतरो न प्राप्नोति।

मैवम्। अस्त्यत्र विशेषः– तत्पुरुषे समासान्तो भवति 'यथा स्वस्ति [१]सोमसखाय ते' {तैसं. १.२.४.२, मभा. २.१.२४(५)}, बहुव्रीहौ न भवति। यथा– 'वृत्रं जहि मरुत्सखे!'[२] इति।

इहापि तर्ह्यस्ति विशेषः– तत्पुरुषे [३]आत्मनाचतुर्थसाध्यमेतत्, बहुव्रीहौ 'आत्मचतुर्थ– साध्यमेतदि'ति। अपि च

---

१. स्वयं भोज एव वेदमन्त्रानन्यथयते। तथाहि अत्र संहिता–'स्वस्ति सोमसखा पुनरेहीति पाठः, स एव च महाभाष्ये–रा।

२. कुत्रत्यमिदं वचनमिति प्रश्ने राघवोऽब्रूत आकरो नैव ज्ञायत इति। वयं तु मन्यामहे तदिदं भोजवचनमेवेति।

३. अलुगापत्तिरियम्।

अन्यथाजातीयः प्रत्यक्षेणार्थसंप्रत्ययः, अन्यथाजातीयः खल्वनुमानेन भवति। तत्रायं राज्ञः सखा, आत्मना चतुर्थ इति प्रत्यक्षेण, सम्बन्धस्य उभयनिष्ठत्वान्नूनं राजाऽप्यस्य सखा, आत्माऽप्यस्य चतुर्थ इत्यनुमानेन। एवं बहुव्रीहावपि द्रष्टव्यम्।

अथ यथात्मचतुर्थ इति समुदायस्यैकार्थत्वादेकवचनम् एवम् अर्धतृतीया इत्यत्रापि कस्मान्न भवति?

अन्येऽप्येकार्थाः समुदाया भवन्ति। तद्यथा— शतम्, यूथम्, वनमिति।

विषम उपन्यासः। आत्मचतुर्थ इत्यत्र हि बहुव्रीहिणोपसर्जनीकृतप्रतीयमाना— परसंख्येयसमानाधिकरणात्मचतुर्थशब्दशक्त्यभिधेयो जनार्दन एकोऽस्येत्यन्यपदार्थः प्रतिपाद्यते; इह तु अर्धतृतीयशब्दशक्त्यभिधेयास्त्रयः संख्येयाः।

तत्र यद्येकवचनं वाक्ये वृत्तौ वा भवति केषां तदर्धं तृतीयं भवति?

नन्वेवमपि अर्धतृतीया द्रोणा इति द्रोणशब्दः समुदाये वृत्तो नार्धे वर्त्तते।

नैष दोषः। समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते। तद्यथा पूर्वे पञ्चालाः, उत्तराः कुरवः {मभा. २.२.२४(५)},

अथ द्वौ द्रोणावर्धाढकं च कर्त्तव्यमर्धतृतीयद्रोणा इति।

न कर्त्तव्यम्।

समुदाये शब्दाः प्रवृत्ताः तेष्ववयवेषु वर्त्तन्ते, योऽवयवस्तं समुदायं न व्यभिचरति (मभा. २.२.२४), यथा द्रोणार्धं द्रोणम्। आढकार्धमाढकमिति।

यद्यर्धं तृतीयमनयोरिति विग्रहः क्रियते को दोषः स्यात्? षष्ठ्यर्थो नोपपद्यते।

किं हि द्वयोस्तृतीयमर्धं भवति? भवानपि पृष्टो व्याचष्टाम्।

अथेह देवदत्तस्य भ्रातेति कः सम्बन्धार्थः?

एकस्मात् प्रादुर्भाव इति चेत्, वार्त्तं तत्, तद्यथा आर्थिकानामेकप्रतिश्रयद्विजानां प्रातरुत्थाय विप्रतिष्ठमानानां न कश्चित् परस्परमभिसम्बन्धो भवति एवंजातीयं भ्रातृत्वं नाम, तत्र चेद् युक्तः षष्ठ्यर्थो दृश्यते इहापि युक्तो दृश्यताम्। द्वयोर्ह्यनुजन्मा तृतीयो भवति। दृश्यते चान्यत्रापि द्वयोस्तृतीयेन संबन्धः। तद्यथा— (रघुवंशे ६.२९)

**निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च ।**
**कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि! तयोस्तृतीया ।।५४।।** इति।

नन्वेवम् अर्धतृतीया आनीयन्तामित्यर्धानयनं न प्राप्नोति, बहुवचनं च नोपपद्यते।

नैष दोषः। भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा– 'शुक्लवाससमानय,' लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति। बहुवचनं तु द्वित्रादिवदुपपद्यते इति। तत्र यथा आनीयन्तामिति त्रयाणामिव द्वयोरप्यानयनपक्षे बहुवचनमुपपन्नं भवति, तथेहापि भविष्यति।

विषम उपन्यासः। तत्र हि द्वौ वेत्युक्ते त्रयो वेति गम्यते, त्रयो वेत्युक्ते द्वौ वेति गम्यते; सैषा समानाधिकरणपदार्थपञ्चकाधिष्ठाना वाक्। तत्र युक्तं बहुवचनम्, इह त्वर्ध तृतीयमनयोरित्युक्तं, यद्यपि गम्यते त्रयाणां पूरणस्तृतीयो भवतीति तथापि समासेऽन्यपदार्थपरतया द्वयोरेवाभिधानाद् बहुवचनस्य नोत्पत्तिः। तद्गुणसंविज्ञानमपि समासाभिधानपक्ष एवोपपद्यते, समासश्च सामर्थ्ये सति भवति, **सामर्थ्यं च वृत्तिवाक्ययोरैकार्थ्यम्**, तच्च तदोपजायते, यदि वृत्ताविव वाक्येऽपि समासार्थस्य बहुवचनं भवति॥

अथ 'किंसब्रह्मचारी'–ति कोऽयं समासः? के सब्रह्मचारिणोऽस्येति।

कः सब्रह्मचारीति कर्मधारयः कस्मान्न भवति?

भवति, यदि क्षेपो गम्यते, यथा किंराजा यो न रक्षति, किंगौः यो न वहति।

केषां सब्रह्मचारीति तत्पुरुषस्तर्हि भवतु कठ इति प्रतिवचनं नोपपद्यते। न ह्यन्यत् पृष्टेनान्यदाख्येयम्, अतः कठानामिति प्रतिवक्तव्यं भवति।

बहुव्रीहावप्येतत् तुल्यमेव, तत्राऽपि के सब्रह्मचारिणोऽस्येति बहुवचनप्रश्ने कठ इति नैकवचनेनोत्तरं भवति।

बहुव्रीहावप्येतत् तुल्यमेव, तत्राऽपि के सब्रह्मचारिणोऽस्येति बहुवचनप्रश्ने कठ इति नैकवचनेनोत्तरं भवति।

नैष दोषः। 'अग्नौ करवाणी'– (मभा. २.२.२४)–ति न्यायेन भविष्यति। तद्यथा कश्चिदाह–'अग्नो करवाणीति, तत्र कुर्विति तत्कर्त्तर्यनुज्ञाते कर्माप्यनुज्ञातं भवति, अपर आह 'अग्नौ करिष्ये, तत्र क्रियतामिति कर्मण्यनुज्ञाते कर्त्ताप्यनुज्ञातो भवति। एवं यथैव के सब्रह्मचारिणोऽस्येत्युक्ते कठा इति प्रत्युक्ते सम्बन्धादेतद् गम्यते अयमपि कठः, तथा कठ इत्यप्युक्ते संबन्धादेतदवगन्तव्यं तेऽपि कठाः। समासेन तु प्रतिनिर्देष्टुमशक्यम्, उपसर्जनं हि तत्र ते भवन्तीति॥

## (८. समासः)

**ऐकपद्यं समासः।**

स त्रिधा– १. उपश्लिष्टक्रियः, २. गमितक्रियः, ३. अक्रियश्च। तेषु –

(१) **उपश्लिष्टक्रियो** द्विधा १. उभयस्थक्रियः २. अन्यतरस्थक्रियश्च। तयोः

**उभयस्थक्रियो** यथा– कृताकृतम्, क्लिष्टाक्लिशितः, स्नातानुलिप्तः, भ्रष्टलुञ्चितः (काशिका २.२.३१) कृष्टाऽतिकृष्टम्, क्रयाक्रयिका इति।

**अन्यतरस्थक्रियो** यथा– भोज्योष्णम्, प्राप्तजीविकः, आहिताग्निः, कष्टश्रितः, काकपेया, इध्मप्रव्रश्चन इति।

(२) **गमितक्रियो** द्विधा १. उभयकारकः, २. अन्यतरकारकश्च। तयोः–

**उभयकारको** यथा– दध्नोपश्लिष्ट ओदनो दध्योदनः, गुडेन मिश्रा धाना गुडधानाः, शङ्कुलया कृतः खण्डः शङ्कुलाखण्डः, अक्षेषु प्रसक्तः शौण्डः अक्षशौण्डः, कण्ठे स्थितः कालो यस्य कण्ठेकालः, पञ्चसु कपालेषु संस्कृतः पञ्चकपाल इति।

**अन्यतरकारको** यथा– 'प्रगत आचार्यः प्राचार्यः', 'अतिक्रान्तो मालामतिमालः, अवक्रुष्टः कोकिलया अवकोकिलः, परिग्लानोऽध्ययनात् पर्यध्ययनः, निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः, प्रपतितानि पलाशान्यस्य प्रपलाश इति।

(३) **अक्रियो** द्विधा १. वस्तुरूपः २. अवस्तुरूपश्च। तयोः

**वस्तुरूपो** यथा– उपकुम्भम्, त्रिभुवनम्, नीलोत्पलम्, राजपुरुषः, चित्रगुः, धवखदिरौ इति।

**अवस्तुरूपो** यथा– अधिस्त्रि, प्रत्युरसम्, यथाशक्ति, यावदमत्रम्, पारेगङ्गम्, मध्येसमुद्रम् इति।

अयं तूपश्लिष्टक्रियो गमितक्रियश्च भवति। यथा–

**आयतीगवमागच्छत्यातिष्ठद्गूपतिष्ठते ।**
**निकुच्यकर्णि शार्दूलोऽपोह्यपुच्छि प्रधावति ॥५५॥** (५.४.१२८ काशिका),

यथा च –

**[1]शलाकापर्यभिद्यूनं चतुष्पर्यक्षपर्यपि ।**
**विपर्यस्ते विधौ यश्च नलादेरपि जायते ।। ५६।।** (२.१.१०)

केशाकेशि, बाहूबाहवि, दण्डादण्डि, मुष्टीमुष्टि, इत्यपि गमितक्रियमसत्त्वरूपं केचित्। यथा— (माघ. १८.१२)

**रोषावेशादाभिमुख्येन कौचिन्नामग्राहं रंहसैवोपजातौ ।**
**भित्त्वा हेती मल्लवन्मुष्टिघातैर्घ्नन्तौ बाहूबाहवि व्यासजेताम् ।। ५७।।**

केचित् पुनरस्य वस्तुरूपत्वं ब्रुवते। यथा—

**दण्डादण्डि न कुर्वन्ति न कचाकचि कोकिलाः ।**
**तथापि जितमेवाभिर्वाग्भिरेव जगत्त्रयम् ।। ५८।।** इति।

कुतः पुनरेतद् यदेकदा दण्डादण्ड्यादयः सत्त्वरूपाः, अन्यदा त्वसत्त्वरूपा इति?

'तत्र तेनेदमिति सरूपे' (२.२.२७) सूत्रस्य व्याख्यानभेदात्। तत्रास्य सूत्रस्यायमर्थः—द्वे समानाकृती शब्दरूपे अन्यपदार्थे समस्येते तत्रेति तेनेति च।

कः पुनरिहान्यपदार्थः?

केचिदाहुः — इतिशब्दस्य प्रकारवाचकत्वादित्थमिति, केचित् पुनः इदमित्थमिति। तत्र पूर्वस्मिन् पक्षेऽसत्त्वरूपता, इतिशब्दस्यासत्त्ववाचित्वात्। उत्तरस्मिन् सत्त्वरूपता, इदमिति सर्वनाम्ना वस्तुरूपपरामर्शात्।

कः पुनरिहेतिशब्दार्थः?

योऽसौ तत्रेत्यधिकरणे तेनेति करणे वा इदमर्थानुयायिनी इतिकर्त्तव्यतारूपा क्रिया, 'तत्र गृहीत्वा', 'तेन प्रहृत्य' इत्यादिकः सर्वनामार्थो यत्तदिति, तदिति व्यपदेशार्थग्रहण—प्रहरणादिकायाः क्रियायाः साध्यं युद्धादि।

तदाह **चन्द्रगोमी** 'तत्र गृहीत्वा तेन प्रहृत्य युद्धे सरूपम्, सुप्सुपैकार्थं भवति' (चान्द्रव्या. २.२.४७, २.२.१) इति।

---

१. अत्र 'शलाकापरि, चतुष्परि, अक्षपरीति द्यूतपरिभाषाः। ततश्चोत्तरार्धे नलादेरित्येव युज्यते पठितुम् न तु 'तलादे'रिति। तत एव उत्तरार्धमस्पष्टमिति राघवाचार्यः। न च 'पाण्डुलेखो न परिवर्त्तनीय' इति मर्यादाया नलपाठे नास्ति रक्षेति राघवार्यैरपि न रक्षिता सा 'सर्वत्र' पाठान्तरं पश्यद्भिरेभिरारम्भत एव स्वैरं पठितान्यथामूलपाठत्वस्य दृष्टचरत्वात्। नस्य तत्वेनावबोधो लिपिभ्रम एव।

किमेतद् वक्तव्यम्?

(न वक्तव्यम्)[१]।

कथमनुच्यमानं गम्यते?

'सरूप' इत्येकशेषापवादने द्वयोरधिकरणयोः करणयोश्च तुल्यकालनिर्देशात्। तर्हि द्वयोस्तुल्यबलयोः प्रतियोगिनोर्व्यापारमन्तरेण द्वयोरधिकरणयोः करणयोर्वा तुल्यकालनिर्देशो भवति, तथापि युद्धादिनियमो (न) लभ्यते।

कः पुनराह नियम इति?

युद्धग्रहणादेरन्यत्रापि प्रयोगात्। हस्ते हस्ते च गृहीत्वा मित्राय पुत्रं समर्पयति हस्ताहस्ति, गालिभिश्च गालिभिश्च निर्भर्त्स्य प्रवृत्तः परिहासो गालागालि इति।।

ननु चान्यपदार्थे बहुव्रीहिरित्युच्यमाने–

विस्पष्टपटुर्वटुः, (६.२.२४), पुनरुत्स्यूतं वासः, परश्शताः शरद' (सक. ३.२.५५) इति **सामान्य**समासानां;

स्वयंधौतौ पादौ (२.१.२५), सामिभुक्तमन्नम् (सक. ३.२.५५), श्रेणीकृताः पत्तयः (सक. ३.२.५५) इति **विशेष**समासानाम्;

विनिकृत्तप्ररूढो वृक्षः (२.१.४९), कृष्णपिङ्गलो ग्रावा, ईषत्कडारोऽश्मेति **विशेषण**समासानाम्;

अवकोकिलं वनम् {२.२.१८(३)}, पर्यध्ययनश्छात्र {२.२.१८(४)}, निष्कौशाम्बिः सार्थः {२.२.१८(५)} इति **प्रादि**समासानाम्;

शस्त्रीश्यामा देवदत्ता, अवतप्तेनकुलस्थितं तवैतत्, कूपमण्डूको माणवक इति **उपमान**समासानाम्;

राजवल्लभा वलभी, वरप्रदेया कन्या (स.क. ३.२.४७), मासो जातोऽस्येति (२.२.५) **षष्ठी**समासानाम्;

कष्टश्रितो रिपुः (२.१.२४), वृकभीतो न्यङ्कुः (२.१.३७), शङ्कुलाखण्डः (२.१.३०), पोगण्ड इति **कारक**समासानाम् (शृ.प्र. ८);

अश्राद्धभोजी ब्राह्मणः, पुमान् (अभार्यः), अनेकः पदार्थः (शृप्र. ८, सक. ३.२.१२८), इति **नञ्**समासानां च **बहुव्रीहिसंज्ञा** प्राप्नोति।

नैवम्, नैषामन्यपदार्थत्वं समासेन क्रियते, अपितु गुणवचनेन। यदसौ द्रव्यं श्रितो

१. इदमत्र राघवाचार्येणायोजि 'सर्वत्र लुप्तमि'–ति टिप्पणं ददता।

भवति गुणस्तस्य यल्लिङ्गं वचनमर्थो वा स तस्यापि भवति। तद्यथा शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ पटौ, शुक्लाः पटा इति {मभा. १.२.६४(५४)}।

कथं पुनः विस्पष्टपटुप्रभृतीनां सामान्यसमासता?

विस्पष्टादीनि गुणवचनेषु (६.२.२४) इति ज्ञापकैः समासावगमे विशेषणसमास—संज्ञाभावे 'सह सुपा' (२.१.४) इति समासाभ्युपगमे न 'प्राक्कडारात् समासः' (२.१.३) इति समासस्य समाससंज्ञाश्रवणात्।

कथं स्वयंधौतादीनां विशेषणसमासता?

'स्वयं क्तेन' (२.१.२५), 'सामि' (२.१.२७), इति 'स्वयंसामी'—ति शब्दयोर्वृत्तिवाक्याविशेषेऽपि स्वरैकपद्यार्थमेव (२.१.२७ काशिका) समासारम्भात्। श्रेण्यादयः कृतादिभिः(२.१.५९), चव्यर्थे(२.१.५९ वा) इति वृत्तावर्थविशेषात्।

कथं छिन्नप्ररूढादीनां विशेषणसमासता?

छिन्नश्चासौ प्ररूढश्चेत्यादिप्रकारेण विशेषणविशेष्यभावात्।

ननु च यदा छिन्नो न तदा प्रारूढः, यदा प्ररूढो न तदा छिन्नः। तत् कथमर्थयोः परस्परमसंमूर्च्छनायां समानाधिकरणलक्षणो विशेषणविशेष्यभावो भवति?

य एव छिन्नः स एवायं प्ररूढ इत्यनुसन्धानात्।

अथेह कथं कृष्णपिङ्गल इति?

यो ह्यस्य कृष्णो भागः न स पिङ्गलः, यस्तु पिङ्गलः स न कृष्ण इति।

समुदायेषु वृत्ताः शब्दा अवयवेषु वर्त्तन्ते, यथा पूर्वे पाञ्चालाः, 'उत्तरा कुरव' इति। यदि वा कृष्णावयवयोगात् स एव कृष्णः, पिङ्गलावयवयोगात् स पिङ्गल इत्युपपद्यते सामानाधिकरण्यम्।

अथ ईषदित्यनेन किं विशेष्यम्?

कडारगुणयुक्तः पदार्थः।

कथं पुनरव्ययानामसत्त्ववचनत्वे सत्त्वभूतार्थविशेषणत्वं भवति?

क्रियाविशेषणत्वात्।

का पुनरत्र क्रिया?

कडारेण गुणेन योगः। यदि वाऽव्ययानां केषाञ्चित् सत्त्वगन्धित्वेन शक्तियोगादिः सत्त्वधर्मो दृश्यते। तद्यथा दोषामन्यम् अहः, दिवामन्या रात्रिः (मभा. १.१.४१)।

*(ग्रन्थपातोऽत्र—रा.)*

'दिवाकराद् रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्' (कुसं. १.१२) इति; 'ग्रहवति? मित्रहारिणि? न त्वं योषाऽसि, दोषाऽसि' इति। एवमयमपि सत्त्वगन्धित्वेन गुणं विशिंषन् द्रव्यं विशेषयिष्यति।

ननु कडारं द्रव्यमेव कस्मान्न विशेषयति? यथा ईषत्तन्त्रं कातन्त्रमिति।

तथा सति गुणस्येषद्भावो न लभ्यते, तदुक्तम् 'ईषद्गुणवचनेन' (२.२.७) इति।

अथ कथं प्रादीनां द्रव्यवचनैः समासः?

यत्र हि कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्रैव प्रादीनां प्रयोगो भवति।

उच्यते, प्रयोगादेवैतद् गन्तव्यम् नूनमत्र प्रयोगार्हः शब्दो न प्रयुज्यते, येन प्रादेः सामर्थ्यमिति। तद्यथा धूमं दृष्ट्वाऽग्निरत्रेति गम्यते, [1]त्रिविष्टब्धकं दृष्ट्वा 'परिव्राजक' इति।

के पुनरत्र प्रयोगार्हाः शब्दाः?

ये कृदन्ताः कर्मकर्तृवाचिनः, तद्यथा अवक्रुष्टं कोकिलया अवकोकिलम्, परिग्लानोऽध्ययनात् पर्यध्ययनः, निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः' इति।

अथ कथं शस्त्रीश्यामादय उपमानसमासा उपपद्यन्ते?

उपमानानि सामान्यवचनैः (२.१.५५) इत्यादिभिः।

यद्येवम्, 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' (२.१.४) इति न वक्तव्यम्, 'वाससी इव, कन्ये इव' इत्यादिप्रयोगाणाम्, उपमानानि सामान्यवचनैरित्यनेनैव सिद्धेः, विभक्त्यलोपमात्रं पुनरलुक्प्रकरणे वक्तव्यं भवति।

उच्यते नायमिवशब्दः सामान्यवाची, अपि तु सामान्यद्योतकः। तद्यथा—नेत्रे नीलोत्पले इत्युक्ते तदाकार—कान्त्यादयः प्रतीयन्ते। शस्त्रीश्यामेत्यादिषु साक्षात् सामान्यवचनः श्यामाशब्दः प्रयुज्यते।

अथ अवतप्तेनकुलस्थितमित्यत्र कथम्?

न ह्ययमुपमायाम्, अपितु क्षेपे। उपमानेनाऽत्र क्षेपो गम्यते—अवतप्ते नकुलस्येव स्थितं तवैतच्चापलमिति यथाऽवतप्ते नकुलश्चिरस्थाता न भवति तद्वत् कार्यमारभ्य यश्चिरं तत्र नावतिष्ठते स एवमुच्यते 'अवतप्ते—नकुल—स्थितं तवैतदिति।

एतेन कूपमण्डूक इत्यपि व्याख्यातम्। यथा कूपमण्डूकः कूपाद् बहिरनिःसरन् न देशान्तरव्यवहारवेदी, स एवमेवमुच्यते कूपमण्डूकोऽयमिति।

१. त्रिविष्टब्धकं त्रिदण्डमिति राघवाचार्यः।

अथ राजवल्लभेत्यादय: कथं षष्ठीसमासा:? यतो राजवल्लभेत्ययं बहुव्रीहि: कस्मान्न भवति राजा वल्लभोऽस्या इति?

अचेतनत्वेन वलभ्या वाल्लभ्यायोगात्। राज्ञस्तु वल्लभेति भवति। तत्र राजा निर्ज्ञातस्यार्थ:, स्वभावत: सामान्यात् प्रच्युत:, सामान्ये व्यवस्थितस्योपकर्त्तुमशक्ते:, सम्बन्धिसामान्यापेक्ष: संबन्धिविशेषापेक्षो वा, सम्बन्ध्यन्तरस्य व्यवच्छेदार्थं प्रवृत्ते:, उभयाधिष्ठानत्वे सत्यपि संबन्धस्य परार्थमुपादानादुद्भूतसंबन्धप्रवृत्ति, उपजात–प्रातिपदिकार्थव्यतिरेक:, आत्मनि सम्बन्धोपभोगात् प्रधानेऽप्युपयुजयमानसम्बन्धषष्ठ्यन्त उपादीयते। प्रधानानि चानिर्ज्ञातार्थानि प्रथमयैव विभक्त्या युज्यन्ते। तद्यथा– क्व पुनरिदं पठितम्,भ्राजा नाम श्लोका (मभा.पृ.३कील्हार्न)। ततश्च वल्लभा–शब्दोऽनिर्ज्ञातार्थत्वादात्मव्यपदेशाय स्वार्थविशेषे नियम्यमान उपरतौत्सुक्य औदासीन्येन प्रवर्त्तते। तत्र भेदाधिष्ठानस्य सम्बन्धस्य वाचिका षष्ठी, पदान्तराभिधेये सम्बन्धिन्याकाङ्क्षावता गुणपदेन विशेष्यमाणा गुणपदस्था श्रूयते, विशेषविषयत्वात् समासस्य। गुणाश्च स्वार्थोपसर्जनप्रधानार्थोपपादिनो भेदे निवर्त्तमाने भेदाधिष्ठानं सम्बन्धमभ्यन्तरीकृत्य प्रवर्त्तन्ते। तत्र राजवल्लभेति सम्बन्धे प्रातिपदिकार्थतामापाद्यमाने तद्विषया षष्ठी, स्वभावतो निवृत्ता कार्यार्थं सामान्येन प्रसक्ता 'सुपो धातुप्रातिपदिकयो:' (२.४.७१) इति शास्त्राद् विनिवर्त्तमाने वान्वाख्यायते।

अथ 'वरप्रदेया कन्ये'–ति कोऽयं समास:?

षष्ठीतत्पुरुष एव यथा देवदेयं पुष्पम्, ब्राह्मणदेयं धनम् इति।

नन्वेवमेते चतुर्थीसमासा: कस्मान्न भवन्ति?

'चतुर्थी तदर्थार्थबलिहितसुखरक्षितै:' (२.१.३६) इति तदर्थादिष्वेव तत्समाम्नानात्।

तादर्थ्य एव हि तर्हि समासा भवन्तु, तद्धि यस्मै प्रदीयते तदर्थमेव तद् भवति।

नैवम्, न तादर्थ्यमात्रे चतुर्थी समस्यते, यथाऽवहननायोलूखलम्, अपि तु प्रकृति–विकारतादर्थ्ये, यथा यूपरूपाया विकृते: प्रकृतिभूतं दारु यूपदार्विति (२.१.३६ काशिका)।

ननु च नाऽत्र प्रकृतिविकारग्रहणमस्ति, दृश्यते चाप्रकृतिविकारभावेऽपि अश्वघास:, अश्वसुरम्, 'अथातो धर्मजिज्ञासा' (पूर्वमीमांसादर्शनं १.१.१), इति चतुर्थीसमास:। तत्कथमुच्यते प्रकृतिविकारतादर्थ्य एव चतुर्थ्या: सामर्थ्यमिति?

आचार्यप्रवृत्तिर्ज्ञापयति यदयं बलिरक्षितग्रहणं करोति। यथाजातीयकानां च समासे बलिरक्षितग्रहणमपुनरुक्तं भवति, तथाजातीयकानां समासः। विकृतीनामेव चतुर्थ्यन्तानां प्रकृतिभिः सह समासे बलिरक्षितग्रहणमपुनरुक्तं भवति, न तादर्थ्यमात्रे। अश्वघासादयस्तु षष्ठीसमासा भविष्यन्ति। यद्धि यदर्थं भवति अयमपि तत्राभिसम्बन्धः, तस्येदमिति तद्यथा गुरोरिदं यद्गुर्वर्थमिति। तादर्थ्यं हि सम्बन्धविशेषः। विशेषे चावश्यमेव सामान्यं संभवति। न चैतत् कर्मादिष्वपि न दृश्यते, न माषाणामश्नीयात्, श्रुतं ते सर्वमेवैतदिति।

ननु च वरप्रदेया कन्येति यदि ददातिप्रयोगेऽपि न संप्रदानम्, सम्प्रदानेऽपि न चतुर्थी, कोऽन्यस्तयोर्विशेषो भविष्यति?

कः पुनराह नात्र संप्रदानम्? संप्रदान एवैषा चतुर्थ्यर्थे षष्ठी। दृश्यते हि संप्रदानादौ षष्ठीचतुर्थ्योरविशेषेण प्रयोगः, तद्यथा 'हिमवतो हस्ती' 'पुरुषमृगश्चन्द्रमसे', 'न वा अरे जायायै कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति, चिराय दृष्टः चिररात्राय दृष्टः', 'रोचते मम घृतं सह मुद्गैः शालयो दधिशरं क्रमुकाश्च', घृतमेव ममापि रोचते शृतशीतं च सशर्करं पयः इति।

अथ मासजातोऽयमिति किंप्रधानोऽयं समासः?

उत्तरपदार्थप्रधानः। सधर्मणाऽनेनान्यैरुत्तरपदार्थप्रधानैर्भवितव्यम्। अन्येषु चोत्तर–पदार्थप्रधानेषु यैवासावन्तर्वर्त्तिनी विभक्तिस्तस्याः समासेऽपि श्रवणं भवति। तद्यथा– राज्ञः पुरुषो राजपुरुषः इति। इह पुनर्वाक्ये षष्ठी, समासे प्रथमा। केनैतदेवं भवति? योऽसौ मासजातयोः अभिसंबन्धः स समासे निवर्त्तते, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति, तत्र 'प्रातिपदिकार्थे प्रथमा' (२.३.४६) इति प्रथमा भवति।

न तर्हीदानीमिदं भवति मासजातस्येति।

बाह्यं सम्बन्धिनमपेक्ष्य भविष्यति।

ननु च 'कालाः परिमाणिना' (२.२.५) इत्यनेनायं समासः। न च जातस्य मासः परिमाणम्, अपितु त्रिंशद्रात्रस्य, यथा द्रोणो बदराणां देवदत्तस्येति न देवदत्तस्य द्रोणः परिमाणम्, अपितु बदराणाम्। तदाह 'कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देश' (मभा. २.२.५ वा–१) इति।

## (कालपदार्थः)

किं पुनर्भवान् कालं मन्यते?

**येन मूर्त्तीनामुपचया अपचयाश्च लक्ष्यन्ते।**

तस्यैव तर्हि कयाचित् क्रियया युक्तस्याहरिति (नाम) भवति, रात्रिरिति च।

कया क्रियया?

आदित्यगत्या। तयैवासकृदावृत्तया मास इति च भवति, संवत्सर इति च भवति। यद्येवं भवति जातस्य मासः परिमाणम्, किं नु मासौ जातस्येतिवत् मासो जातस्य, मासा जातस्येति प्राप्नोति।

नैवम्। मासजात इत्युक्ते द्वित्वादिसंख्याविशेषस्यानुपलम्भात्। यत्र तूपलब्धे–र्निमित्तमस्ति तत्र भवत्येव, यथा–द्वौ मासौ जातस्य द्विमासजातः, एवं त्रिमासजात इति।

कथं पुनः कारकाणां समास इत्युपपन्नं भवति? तेषां हि क्रिययैवाभिसंबन्धः। न च क्रियावाचिनः सुबन्तत्वमस्ति; सुबन्तयोरेवान्तर्भूतक्रियाविशेषयोर्भविष्यतीति चेत्, नैवम्, द्रव्याणां क्रियोपजनितः सम्बन्धः शेषविषयो भवति, न कारकविषयः। स्वभावसिद्धं हि द्रव्यं सिद्धवदभिधीयमानं द्रव्यान्तरं प्रति आत्मप्रतिलम्भे निराकाङ्क्षं, न कर्मादिभावं भजते। न च समासप्रकरणे कारकाणि समस्यन्त इति वचनमस्ति।

उच्यते– मा भूद् वचनम्, अर्थतस्तु गम्यते, यदाह 'द्वितीया श्रिता'–दिभिः समस्यते कष्टं श्रितः कष्टश्रित इति। तत्र श्रित इत्युपात्तक्रियाविशेषपरिच्छिन्नः कर्त्ता, अभ्यन्तरीकृत–साध्यसाधन–संबन्ध–क्रियान्तरसम्बन्धार्हः स्वाश्रयविषयासु बाह्यासु क्रियासु शक्त्यन्तरैरपि विरुद्धैकार्थसमवायः कष्टादीन्युपसर्जनीभूतया श्रयतिक्रिययाऽपेक्षते। ततश्च श्रयतिक्रियया संबन्धात् कष्टे कर्मत्वमिति श्रयणक्रियापूर्वकः कष्टश्रितयोरभिसंबन्धो भवति। तस्मिन् स्ववृत्त्यवयवार्थशक्त्य–नुगृहीतेऽर्थान्तिरे प्रादुर्भूते तदभिधायी शब्दः समाससंज्ञां लभते। एवं 'वृकाद् भीतो वृकभीत' इत्यत्रापि 'पञ्चमी भयेन' (२.१.३७) इति वृकस्य भये 'भीत्रार्थानां भयहेतुः' (१.४.२५) इत्यपादानत्वात् सति सामर्थ्ये, अभ्यन्तरीकृतक्रियाकारकसंबन्धः समुदायः समाससंज्ञां लभते।

ननु च, न वृकस्य भीतं प्रति अपादानत्वम्, अपितु भयं भीतिः इत्येतानि।

उच्यते– यथा मासो जातस्येति मासाख्यः क्रियाकलापः प्रथमकुक्षिगर्भ–वियोगाख्यस्य जन्मनोऽवधिभावेन परिच्छेदको भवति, जन्म प्रतिलब्धां वा सत्तां

समावृत्त्या परिमितेन जातमपेक्षते तथेहापि वृकादित्ययमपादानशब्दो भयमात्रस्यैवावच्छेदको भविष्यति, न भीतस्य।

यदि वा यथा कष्टश्रित इत्यत्रोपात्त–श्रयति–क्रियासंबन्धात् कष्टे कर्मत्वमिति श्रयणक्रियापूर्वकं कष्टेन संबध्यते, तथेहाप्युपात्तभयक्रियावच्छिन्नः कर्त्ता भयक्रियासंबन्धाद् वृकस्यापादानत्वमिति भयक्रियापूर्वकं वृकेन संभन्त्स्यत इति।

भवतु यत्रोपसर्जनीभूताया अपि क्रियायाः श्रवणं, यत्र तु क्रिया न श्रूयते तत्र कथं शङ्कुलाखण्ड इति?

प्रतीयमाना भविष्यति। तथाहि शङ्कुलाखण्ड इत्युक्ते कृत इति प्रतीयते। तदेतद् द्योतयन्नाह 'तृतीया तत्कृतेन[1] गुणवचनेन' (२.१.३०) इति।

न्याससिद्धत्वाद् वचनानर्थक्यमिति चेत्, न, वचनस्य नियमार्थत्वात्–'यत्रैव कृत इत्यादि गम्यते तत्रैव समासः, अन्यत्र मा भूदि'ति।

एवं च गम्यमान–करोतिक्रियोपगृहीतकरणकर्तृकं तृतीयान्तेन शङ्कुलादिना खण्डादीनां गुणमुक्तवतां मतुब्लोपादिना द्रव्यवचनानां तृतीयान्तार्थकृतत्वे सति सामर्थ्यमवसीयते, न तूक्तवैपरीत्ये, यथा आक्ष्णा काणः, पादेन खञ्जः इति। तदेवमाक्षिप्त करोतिक्रियाऽवच्छिन्नः क्रियान्तरसम्बन्धार्हः खण्डशब्दार्थो गम्यमानोपसर्जनीभूतया करोतिक्रियया शङ्कुलादीनपेक्षमाणः करणभूतैः कर्तृभूतैर्वा शङ्कुलादिभिः सम्बध्यते। तद्वचनश्च समुदायोऽभ्यन्तरीभूतक्रियाकारकसंबन्धः समाससंज्ञो भवति।

अथेह कस्मान्न भवति 'दध्ना पटुः' 'घृतेन पटुः' इति?

असामर्थ्यात्।

कथमसामर्थ्यम्?

सापेक्षमसमर्थं भवति। न हि दध्नः पटुना सामर्थ्यम्।

किंतर्हि! भुजिना, दध्ना भुङ्क्ते पटुरिति।

इहापि तर्हि न प्राप्नोति शङ्कुलया खण्ड इति, अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् किं तर्हि? करोतिना, शङ्कुलया कृतः खण्ड इति।

तत्कृतेनेति वचनाद् भविष्यति।

वचनादिति चेद्, अथेह गुणवचनेत्युच्यमाने कथं मतुब्लोपाद् द्रव्यवचनेन खण्डादिना प्रतीयते?

---

१. मभा. २.१.३० तत्कृतार्थेनेति सूत्रपाठः।

इह तृतीया तत्कृतेन गुणेनेति सिद्धे यद्वचनग्रहणं करोति तस्यैतत् प्रयोजनम्। एवं यथा विज्ञायेत गुणमुक्तवान् गुणवचनः, खण्डगुणवान् खण्डः, पाण्डुगुणवान् पाण्डुः (मभा. २.१.३०) इति।

यद्येवम्— नार्थस्तत्कृतग्रहणेन भवति, भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम्। असामर्थ्यादिह न भविष्यति दध्ना पटुरि— (मभा. २.१.३०)—ति।

इदं तर्हि तत्कृतस्य प्रयोजनम्— द्रव्यवचनैः कारकसमासे तदनुरूपा क्रियाऽध्याहर्त्तव्येति। तद्यथा अक्षेषु प्रसक्तः शौण्डः अक्षशौण्ड इति।

अथ द्रव्यवचनैस्तत्कृतसमासे गुणवचनेनेत्यपि किमर्थम्?

इह मा भूद्—धान्येन धनवान्, गोभिर्वपावानिति।।

अथ अश्राद्धभोजीति कोऽयं समासः?

असमर्थनञ्तत्पुरुषः। (मभा. २.१.१)।

किं पुनरिहाऽसामर्थ्यम्?

पूर्वोत्तरपदयोर्मिथोऽनपेक्षा। तथाहि अश्राद्धभोजीति भुजिक्रियया नञः सम्बन्धः, न श्राद्धेन। न हि तस्यायं नियमो न श्राद्धं भोक्तव्यमिति, अपितु श्राद्धं न भोक्तव्यमिति। यत्र हि वर्त्तिपदार्थसमवायिनी क्रियाऽभिधीयमाना प्रतीयमाना वा स्वभावतो निवृत्ता नञा द्योत्यते 'अपाचकः, अब्राह्मण' इति, तत्रैव सामर्थ्यम्। यत्र तु बाह्यक्रियया नञः संबन्धस्तत्राऽसामर्थ्यमेव। यथा सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदाराः, न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, लवणं न भुङ्क्ते अवलणभोजी भिक्षुरिति।

नन्वेवम्— अवयवार्थव्यतिरिक्तसमुदायार्थाभावेऽर्थवत्त्वाभावात् कथं प्रातिपदिकसंज्ञा?

समासग्रहणादिति चेद् अनर्थके कृतार्थत्वान्नियमाऽनुपपत्तिः। ततश्चार्थवतो वाक्यस्यापि प्रातिपदिकत्वप्रसङ्गः।

ननु च असूर्यललाटयोर्दृशितपोः (३.२.३६), इत्यनेनासमर्थनञ्समासानां साधुत्वे ज्ञापिते 'अकिञ्चित्कुर्वाण', 'अमाषंहरमाणः', अगाधादुत्सृप्त/ष्टम् (मभा. २.१.१) इत्यादीनामपि मा भूत् समास इत्यसूर्यंपश्यादयश्चत्वार एवाऽसमर्थसमासाः परिगण्यन्ते, (मभा.२.१.१)परिगणनसामर्थ्यादेव प्रातिपदिकसंज्ञापि भविष्यति, तथाप्यनर्थकत्वादा—श्रयाऽभावे, संख्याकर्माद्यभावे तेषां वाचिका द्योतिका वापि विभक्तयो नोत्पद्येरन्?

नैवम्, समुदायस्तावदानर्थक्येऽपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमादवश्यमेवाव्ययादिवद् विभक्तिमात्रमपेक्षते, अवयवस्त्वर्थवत्त्वात् संख्याकर्मा– देराश्रयत्वेन तां विशिष्टामेवाङ्गीकरोति। ततश्च यथाऽऽतुरानातुरयोरेकभोजन– प्रतिपत्तावातुराणां भोजनमनातुरोऽपि प्रतिपद्यते तथाऽवयवार्थाऽनुग्रहार्थकोऽपि समुदायो विभक्तिविशेषमेव प्रतिपत्स्यत इति न कश्चिद् दोषः।

ननु 'असत्येकार्थीभावे व्यपेक्षाधर्माः कथं न निवर्त्तन्ते?

के पुनस्ते? **'विशेषणयोगः, समुच्चयः, संख्याविशेष'** इति (शृ.प्र. ८)। तत्र–

ब्राह्मणस्य शोभनं 'श्राद्धं न भुङ्क्त' इति **विशेषणयोगः**,

श्राद्धं न भुङ्क्ते बलिमामन्त्रणं चेति **समुच्चयः**,

श्राद्धं श्राद्धानि वा भुङ्क्ते इति **संख्याविशेषयोगः।**

ते च वाक्य एवोपलभ्यन्ते, न त्वश्राद्धभोजीति वृत्तौ, न ह्यश्राद्धभोजी(जो)ब्राह्मणस्य शोभनमित्यादि। तत् कथमुच्यते नास्त्यत्रैकार्थीभाव इति?

नैवम्। अश्राद्धशब्दो ह्यत्राऽसमर्थः, न त्वश्राद्धभोजिशब्दः। अश्राद्धभोजि– विषयाश्चैते विशेषणयोगादयः प्रतीयन्ते, नाश्राद्धविषया इति।

ननु च यद्यश्राद्धशब्दः समुदायार्थाभावादनर्थकः, अश्राद्धभोजिशब्दोऽप्यर्थवद– नर्थकसंघातत्वादनर्थकः प्राप्नोति।

अस्त्वानर्थक्यम्। वाक्यविषयास्तु धर्मा भविष्यन्ति तच्चानर्थक्यमपि परिहर्त्तव्यम् इदं च परिह्रियते, शब्दशक्तिरेषा यदभिन्नेऽप्यर्थे केनचिच्छब्देनाभिधीयमाने विशेषणादियोगो भवति, केनचिन्न भवति। तत्र वाक्येऽसमर्थसमासपदानामविद्यमानमपि वृत्तौ शब्दान्तरत्वा– दस्त्येकार्थाभिधायित्वमिति।

ननु च, यद्यसामर्थ्येऽपि वचनात् समासः, 'किमद्य मे वस्त्रं नीलमुत्पलमालि कर्णे, नेह कश्चित् पुरुषो व्याघ्रः सरति पल्लीम्, पश्य सखि। कष्टं श्रितः प्रियो मे गुरुकुलम्; किं ते शङ्कुलया खण्डो देवदत्त उत्पलेन; गच्छ त्वं यूपाय दारु शोभनं शैले, निवर्त्तस्व वृकाद् भयं देवदत्तस्य यज्ञदत्तात्, भार्या राज्ञः पुरुषो देवदत्तस्य; सक्तस्त्वमक्षेषु शौण्डः पिबति पानागारे' इत्यादावपि समासः प्राप्नोति; स तर्ह्यत्रापि वचनाद् 'विशेषणं विशेष्येण', 'द्वितीया श्रितादिभिः', 'तृतीया तत्कृतेन', चतुर्थी तदर्थेन', पञ्चमी भयेन', 'षष्ठी सुबन्तेन', 'सप्तमी शौण्डादिभिः' समस्यत इति।

विषम उपन्यासः; परिगणनादीन्यसामर्थ्य एव समासार्थमारभ्यन्ते। यथा 'कृतपूर्वी कटमि'त्याद्यर्थं 'पूर्वादिनिः' (५.२.८६), सपूर्वाच्च (५.२.८७) इति। 'विशेषणं विशेष्येण' इत्येवमादीनि तु 'समर्थः पदविधिः' (२.१.१) इति सामर्थ्ये सत्युपादीयन्ते। सामर्थ्यविषयप्रदर्शनार्थमेव च 'विशेषणं विशेष्येण' इति प्रथमायां सामानाधिकरण्यं द्वितीयायां च श्रितादिनियमः, तृतीयायां तत्कृतादिवचनम्, चतुर्थ्यां प्रकृतिविकारभावः, पञ्चम्यां भयादिपरिगणनम्, षष्ठ्यां पूरणादिनिषेधः, सप्तम्यां शौण्डादिनिर्देश इत्युपपद्यते। तेन यत्र विशेषणादिषु सामानाधिकरण्यादेरभावस्तत्रासामर्थ्यात् समासो न भवति॥

अब्राह्मणोऽयमिति कोऽयं समासः? समर्थनञ्तत्पुरुषः।

किं प्रधानोऽयम्?

उत्तरपदार्थप्रधानः। अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति।

नैष दोषः। इदं तावदयं प्रष्टव्यः—अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कथं न भवति राजाऽत्र विशेषकः प्रयुज्यते तेन राजविशिष्टस्याऽऽनयनं भवष्यिति।

इहापि नञ्—विशेषकः प्रयुज्यते, तेन नञ्विशिष्टस्यानयनं भविष्यति।

कः पुनरसौ?

निवृत्तपदार्थकः। यदा पुनरस्य पदार्थो निवर्त्तते तदा किं स्वाभाविकी निवृत्तिः? आहोस्विद् वाचनिकी?

किं चाप्तः? यदि स्वाभाविकी किं नञ् प्रयुज्यमानः करोति?

तर्हि वाचनिकी भविष्यति; किं च प्रतिकीलवत्। तत्र यथा कील आहन्यमानः प्रतिकीलं निवर्त्तयति, एवं नञ् प्रयुज्यमानः पदार्थं निवर्त्तयति।

यद्येतन्नञो माहात्म्यं स्यात्, न जातुचिद् राजानो हस्त्यश्वं बिभृयुः, नेत्येव ब्रूयुः।

एवं तर्हि स्वाभाविकी निवृत्तिः, नञ्निमित्ता तूपलब्धिः, तद्यथा सन्तमसान्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनम्, न च तेषां प्रदीपो निवर्त्तको भवति। यदि पुनरयं निवृत्तिपदार्थको नञ्, किमर्थं ब्राह्मणशब्दः प्रयुज्यते?

एवं यथा विज्ञायेत 'अस्य पदस्यार्थो निवृत्त' इति,

नेति ह्युक्ते संदेहः स्यात् कस्य पदार्थो निवर्त्तत इति; तत्रासंदेहार्थं ब्राह्मणशब्दः प्रयुज्यते। यदि वा सर्व एते शब्दाः अवयवेष्वपि वर्त्तन्ते ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्र इति।

**तपः श्रुतं च योनिश्च तत्र ब्राह्मणकारणम् ।**
**तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥५९॥**

तथा गौरः, कपिलः, पिङ्गलकेशः इत्येतानप्यान्तरान् ब्राह्मण्ये गुणान् ब्रुवन्ति। समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते। तद्यथा पूर्वे पञ्चालाः, उत्तराः कुरव इति। एवमयं समुदाये ब्राह्मणशब्दो वृत्तोऽवयवेऽपि वर्त्तते गुणे जातौ च। गुणे तावद् अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयतीति, अब्राह्मणोऽयं गच्छन् भक्षयतीति।

अपि च कालं कल्माषं माषराशिवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति नायं ब्राह्मणः, अब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति, गुणकृता चार्थस्य निवृत्तिः। अथ जातौ जातिहीने संदेहाद् दुरुपदेशाद्वाऽन्यो ब्राह्मणशब्दः प्रवर्त्तते। संदेहात् तावद् गौरमयं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति। ततः पश्चादुपलभ्यते नायं ब्राह्मणः अब्राह्मणोऽयमिति। तत्र दुरुपदेशो ब्राह्मणशब्दो वर्त्तते। जातिकृता चार्थस्य निवृत्तिः।

ननु च –नञ्व्यवच्छेदाय ब्राह्मणादिशब्दप्रयोगे समासस्य पूर्वपदप्रधानता प्राप्नोति?

नैवम्। अव्ययसंज्ञाप्रसङ्गात् अव्ययं ह्यस्य पूर्वपदम्।

नैष दोषः। पाठेनाव्ययसंज्ञा क्रियते, न च नञ्समासस्तत्र पठ्यते। मा भूदव्ययेषु पाठः; तथाप्यभिधेयवल्लिङ्गवचनानि भवन्ति; यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति। नेदं वाचनिकम्– अलिङ्गता, असंख्यता वा। किं तर्हि? स्वाभाविकमेतत्। तत्र किमस्माभिः शक्यं वक्तुम्, यन्नञः प्राक् समासाल्लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति।

यदि वा गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति। यदसौ द्रव्यं श्रितो भवति गुणः समासो वा, तस्य यल्लिङ्गं वचनं च तद् गुणस्येव समासस्यापि भवति।

उच्यते इह त्रयी गतिः १. कदाचिन्नञर्थेनोत्तरपदार्थो विशेष्यते,

२. कदाचिन्नञर्थ उत्तरपदार्थेन,

३. कदाचिन्नञर्थोत्तरपदार्थाभ्यामन्यः पदार्थ इति। तत्र–

(१) यदा नञर्थोत्तरपदार्थाभ्यामन्यपदार्थो विशेष्यते तदा 'समानाधिकरणानां बहुव्रीहिः', 'नञर्थश्च विशेष्यो भवती'ति **षट् समासार्थभेदा** जायन्ते – १. अत्यन्ताभावः, २. अनत्यन्ताभावः, ३. अन्यतराभावः, ४. तादात्म्याभावः, ५. संबन्धाऽभावः, ६. प्रध्वंसाभाव इति। यथा– अरूपो वायुः, अनुदारा कन्या, अकिञ्चनः पुमान्, अपिशाचः कुड्यः, अघटं भूतलम्, अनङ्गः काम इति।

(२) यदा तूत्तरपदार्थेन नञर्थो विशेष्यते तदा पूर्वपदार्थप्रधानस्तत्पुरुषः। नञर्थोपाधेश्च षट् समासार्थभेदा जायन्ते– **१.प्रागभावः, २. सामर्थ्याभावः, ३. आवश्यकताऽभावः, ४. इतरेतराभावः, ५. सत्ताऽभावः, ६. भावाभाव** इति। यथा– अनुत्पन्नो घटः, अप्रधृष्यः सुभटः, अभूषितः कान्तः, अवर्षा (मभा.२.२.६) हेमन्तः, असच्छशविषाणम्, अनुद्भिन्नः प्रवाल इति।

(३) यदा तु नञर्थेनोत्तरपदार्थो विशेष्यते तदोत्तरपदार्थप्रधानस्तत्पुरुषः, पदार्थस्य च नञर्थोपाधे षट् समासभेदा जायन्ते, यथा– १. तदभावः, २. तदन्यः, ३. तत्सदृशः, ४. तद्विरुद्धः, ५. तदपकृष्टः, ६. तदुत्कृष्ट इति। यथा– अनन्यः, अनत्रिः, अब्राह्मणः, असितः, अमनुष्यः, अमानुषः इति।

ननु च, अन्यपदार्थतत्पुरुषयोरन्यत्रापि नञ्समासो दृश्यते। यथा मक्षिकाणामभावोऽमक्षिकमिति।

नायं नञ्समासः, किन्तर्हि 'अव्ययं विभक्ति' (२.१.६) इत्यादिना अव्ययमभावार्थे समस्यते, अव्ययीभावश्च समासो भवति। यथा निवातं निशीतम् इति।

किं पुनरमी नञ्समासार्था अन्यपदार्थादिषु व्यवतिष्ठन्ते उत सप्लवन्ते?

केचिद् व्यवतिष्ठन्ते प्रध्वंसाभावादयः। तद्यथा–

**भवेदभीष्ममद्रोणं धृतराष्ट्रबलं कथम् ।**
**यदि तत्तुल्यकक्षोऽत्र भवान् धुर्यो न युज्यते ॥ ६० ॥** (वेसं. ३.२५)

यथा च अनुदरा कन्या, अलोमिका एडकेति।

केचित् तु संप्लवन्ते प्रागभावादयः। तद्यथा–

**अजन्मा पुरुषस्तावदपुमान् पशुरेव वा ।**
**यावल्लीलावतीवक्रप्रेक्षितार्थं न बुध्यते ॥ ६१ ॥** (इति)।

यथा च – अनेके, अनेक इति।

ननु च – एकशब्दो बह्वर्थः। तद्यथा–

(१) एकः कोऽपि स कुम्भसंभवमुनिः इत्युत्कर्षार्थः। तत्र–
(२) एके तावदाहुरिति पक्षान्तरार्थः,
(३) एक एवायमावयोः स्वभाव इति तुल्यार्थः,
(४) नैकः शयीतेत्यसहायार्थः,
(५) एकमेवेदं शब्दब्रह्मेत्यभेदार्थः,
(६) एकः द्वौ बहव इति संख्यार्थः।

तत्कस्येह ग्रहणम्?

संख्यार्थस्य।

उत्कर्षादीनां कस्मान्न भवति?

अनभिधानात्। तद्यथा अमित्र इत्युक्ते पूर्वपदार्थप्रधानतत्पुरुषे शत्रुरेव प्रतीयते, न त्वसूर्यः, एवमनेक इत्युक्ते बहव एव प्रतीयन्ते, न पुनरनुत्कर्षादिमन्तः। एतेन तत्पुरुषस्योत्तरपदप्राधान्ये सत्यनेक इत्यपि व्याख्यातम्।

कथं पुनरेकस्य प्रतिषेधे बहूनां सम्प्रत्ययः स्यात्?

प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति। तद् यथा— आसय, भोजय, शायय अनेकमिति।

स्यादेतत्, यत्र क्रियागुणौ प्रसज्येते, यत्र तु खलु न प्रसज्येते तत्र तु कथमनेकस्तिष्ठति इति?

भवत्येवंजातीयकेष्वपि एकस्य प्रतिषेधे बहूनां सम्प्रत्ययः। तद् यथा— न न एकं प्रियम्, न न एकं सुखमिति।

**प्रकृतिप्रत्ययौ त्रेधा त्रिधोपस्कारभक्तयः ।**
**त्रिधैवोपपदप्रातिपदिकानां विभक्तयः ॥ ६२॥**

**त्रिधोपसर्जनं त्रेधा समास इति कीर्त्तितः ।**
**प्रातिपादकशब्दोऽयमथान्वाख्येय उच्यते ॥ ६३॥**

**पदमिह त्रिविधं प्रतिपाद्यते त्रिविधमेव च वाक्यमथ त्रिधा ।**
**व्यवहृतिः खलु शब्दनिबन्धना यदनयोरुभयोः प्रतितिष्ठति ॥ ६४॥**

**इति महाराजाधिराजभोजदेवविरचिते शृङ्गारप्रकाशे प्रातिपदिकादिप्रकाशो नाम**
**॥ द्वितीयः प्रकाशः ॥ २॥**

रेवाप्रसादेन सनातनेन भोजादृतेनैष प्रकाश—लेखः ।
स्वयं स्वहस्ताद् विहितोऽत्र मूलं कृपा महाकालमहेश्वरस्य ॥



अथ

## श‍ृङ्गारप्रकाशे तृतीयः प्रकाशः

प्रकृत्यादिशब्दप्रकाशः

## (१. पदम्)

**तत्र पद्यतेऽनेनार्थ इति पदम्।**

तत् त्रिधा १. क्रियारूपम्, २. कारकरूपम्, ३. उपस्कारारूपञ्च। तेषु –

साध्यार्थाभिधायि **क्रियारूपम्।**

साधनार्थाभिधायि **कारकरूपम्।**

साध्यसाधनयोर्भूषणादिभूत**मुपस्कारम्।**

तेषां प्रत्येकं षड्भेदत्वात् पदस्याष्टादश भेदा भवन्ति। तेषु –

### (१. क्रियारूपं पदम्)

(१) भावपदम्, (२) कर्मपदम्, (३) कर्त्तृपदम्, (४) भावकर्मपदम्, (५) भावकर्त्तृपदम्, (६) कर्मकर्त्तृपदं चेति **क्रियारूप**–पदभेदाः। तेषु –

**(१) भावपदं** यथा –

पच्यते, अपाचि, पक्ष्यते देवदत्तेन; आस्यते, आसि, आसिष्यते भवता; भिद्यते, अभेदि, भेत्स्यते कुसूलेन; श्रायते, अश्रायि श्रायिष्यते यवाग्वा;

एवं श्रायिषीष्ट, शश्रे, अश्रायिष्यतौदनेन; घानिषीष्ट, जघ्ने, अघानिष्यत हस्तिना; ग्राहिषीष्ट, जगृहे, अग्राहिष्यत ग्राहेण; दर्शिषीष्ट, ददृशे, अदर्शिष्यत प्रेयसेति।

**(२) कर्मपदं** यथा –

पच्यते ओदनः सूदेन, आस्यते मासो भृतकेन, गम्यते ग्रामः पान्थेन, सुप्यते क्रोशः शिशुना, अकारि कटः कुशलेन, अरोधि गौर्गोपालेन, अदोहि धेनुर्वल्लवेन, अतापि पृथिवी राज्ञा, अन्वतातप्त कितवः कर्मणा, अनुबभूवे कम्बलः करेण, पक्ष्यते यवागूर्भिषजा, लप्सीष्ट भिक्षा तापसेन।

एवं करिष्यते कारिता कारिषीष्ट कटः, घानिष्यते घानिता घानिषीष्ट शत्रुः, ग्राहिष्यते ग्राहिता ग्राहिषीष्ट ग्रन्थः, दर्शिष्यते दर्शिता दर्शिषीष्ट प्रेयानिति।

(३) **कर्तृपदं** यथा—

पचति चैत्रः, आस्ते मैत्रः, तपति सुवर्णं सुवर्णकारः, तप्यते तपस्तापसः, सृजति मालां मालिकः, सृजते धर्मं धार्मिकः, उदसर्जि स्वं वदान्यः, उदपादि सस्यं भूमिः, परिवारयन्ते वृक्षं कण्टकाः, शोषयते व्रीहीनातपः, संयुज्यते गृहमेधी भार्यया, पच्यते सलोहितं फलमुदुम्बरः, तथा अदीपि, अदीपिष्ट वह्निः, अजनि अजनिष्ट धूमः, अबोधि अबुद्ध प्रसुप्तः, अपूरि अपूरिष्ट कामः, अतायि अतायिष्ट धर्मः, आप्यायि, आप्यायिष्ट लोक इति।

(४) **भावकर्म्मपदं** यथा—

इच्छामि भुञ्जीत भवान्, इच्छामि भुङ्क्तां भवान्, कामये यत् स भुञ्जीत, प्रार्थये यदि स भुञ्जीत, संभावयामि भुञ्जीत भवान्, समर्थयामि भोक्ष्यते भवान्, श्रद्दधे नाभुङ्क्त भवान्, अवकल्पयामि नाभोक्ष्यत भवान्, न श्रद्धधे ननु भवान् वृषलं याजयेत्, नावकल्पयामि तत्रभवान् वृषलं याजयिष्यति, न मर्षयामि तत्रभवान् वृषलमयाजयिष्यत्, विगर्हे अपि तत्रभवान् वृषलं याजयति, स्मरसि देवदत्त कश्मीरेषु वत्स्यामः, अभिजानासि कलिङ्गेषु यदवसाम, अभिजानासि कलिङ्गेषु शश्वदवसाम, स्मरसि कश्मीरेषु वत्स्याम, तत्रौदनं भोक्ष्यामहे, अभिजानासि यत् कलिङ्गेष्ववसाम यत् तत्रौदनमभुञ्ज्महि; एहि मन्ये रथेन यास्यसि, जाने सुप्तो विहायसा गच्छामि, पश्य मृगो धावति, इह पश्यामः कर्मणि द्विवचन—बहुवचनान्युदाह्रियन्ते इति।

(५) **भावकर्त्तृपदं** यथा—

चोरस्य रुजति, चोरस्यामयति, चोरस्य बाधते, चोरस्य पीडयति, चोरस्य दहति, चोरस्यातङ्कयति, चोरस्य स्पृशति, चोरस्य शोषयति, चोरस्य मर्दयति, चोरस्य मोटयति, चोरं ज्वरयति, चोरं संतापयति। तथा—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यात्, नास्ति रमे, अयूयुजस्त्वमसि, असि त्वमीशिषे, अस्ति गच्छामो वयम्, अस्त्यत्र काञ्चिद् गां पश्यति, असि भवतु गम्यते, भवतु साधयाम इति।

(६) **कर्मकर्त्तृपदम्** यथा—

रज्यति वस्त्रं स्वयमेव, कुष्यति पादस्स्वयमेव, अवकिरते हस्ती, अवाकीर्ष्ट वा

स्वयमेव, ग्रथ्नीते माला, अग्रथिष्ट वा स्वयमेव, चिकीर्षते कटः, अचिकीर्षत वा स्वयमेव, नमते दण्डः अनंस्त वा स्वयमेव, उच्छ्रयते दण्डः, उदशिश्रियत वा स्वयमेव, ब्रूते कथा, अवोचत वा स्वयमेव; प्रस्नुते गौः प्रास्नोष्ट वा स्वयमेव; आहते गौः (३.१.८९ काशिका), आवधिष्ट वा स्वयमेव। अनुरुन्धे गौः अन्वरुद्ध वा स्वयमेव, अकृत कटः स्वयमेव (३.१.६२ काशिका) इति।

अन्ये पुनरमीषामपि कर्मकर्त्तृत्वं मन्यन्ते—

भिद्यते कुसूलः स्वयमेव, भिद्यते रज्जुः स्वयमेव, लूयते केदारः स्वयमेव, पच्यते फलं स्वयमेव, भज्यते काष्ठं स्वयमेव, कुष्यते पादः स्वयमेव, अदोहि गौः स्वयमेव, अरोधि गौः स्वयमेव, अहावि हविः स्वयमेव, अकारि कटः स्वयमेव, तथा भूषयते कन्या स्वयमेव, मण्डयते कन्या स्वयमेव, दोहयते गौः स्वयमेव, आरोहयते हस्ती स्वयमेव, दर्शयते राजा स्वयमेव, अभिवादयते गुरुः स्वयमेव, लावयते केदारः स्वयमेव, पाचयते ओदनः स्वयमेव, भेदयते कुसूलः स्वयमेव, कारयते कटः स्वयमेव, गणयति गणः स्वयमेव, स्मरयति वनगुल्मः स्वयमेव' इति। आहुश्च—

कर्मवत् कर्म्मणा तुल्यक्रियः (३.१.८७), कर्मवद्भावे यगात्मनेपदचिण्(वद्)भावाः प्रयोजनम् (३.१.८७ काशिका) अचः कर्मकर्त्तरि (३.१.६२), दुहश्च (३.१.६३), न रुधः (३.१.६४), न दुहस्नुनमां यक्चिणौ (३.१.८९), यक्चिणोः प्रतिषेधो हेतुमण्णिश्रिब्रूञामुपसंख्यानम् (३.१.८९ वा.१), भूषाकर्मकिरादि (३.१.८७), णि—श्रन्थ—ग्रन्थ—ब्रूञात्मनेपदा—कर्मकाणामुपसंख्यानम् (३.१.८९ वा)।

तत् तु सम्यक्। तथाहि 'भिद्यते कुसूलस्स्वयमेव, अकारि कटः स्वयमेवेत्यादिषु कर्मण्येव यक्चिणौ, स्वयंशब्दात्तु कर्मकर्त्तृकत्वप्रतीतिः। अरोधि गौस्स्वयमेवेति रुधेरपि कर्मविवक्षायां चिण् भवत्येव अरोधि गौर्गोपालेनेति। यदा तु गोरात्मनेपद एव कर्मकर्त्तृत्वं तदा अरोधि गौर्गोपालेनेति। यदा तु गोरात्मनेपद एव कर्मकर्त्तृत्वं तदाऽरोधि गौरात्मनैवेति भवति। य एवार्थ आत्मनैवेति स स्वयमेवेति। अरोधीति चोक्ते नाश्रुते कर्त्तृवाचिनि पदान्तरे कर्मकर्त्तृत्वं गम्यते। तस्मादिहापि कर्मण्येव णिच्। भूषयते कन्या स्वयमेवेत्यादिषु तु 'णेरणौ यत् कर्म णौ चेत् स कर्त्ताऽनाध्याने' (१.३.६७) इति फलवति कर्त्तर्येवात्मनेपदम्। कुतस्त्या तर्ह्येतेषु कर्मकर्तृताप्रसिद्धिः?

श्रूयताम्— कर्मपदेषु तावत् —

**क्रियमाणं तु यत् कर्म स्वयमेव प्रसिद्ध्यति ।**
**सुकरं स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तं विदुः ।। १ ।।**

कर्त्तृपदेषु भूतपूर्वकत्वात् तद्वदुपचार इति। तथाहि कन्यादयो लावण्यातिशयादिभि-रात्मभूषायै प्रसाधनादीन् प्रयुञ्जते। प्रयुञ्जते च माघादयो महाकवयः—

**आकुञ्चितप्रोहनिरूपितक्रमं**
**करेणुरारोहयते निषादिनम् ।। २ ।।** (माघ. १२.५)
**स सन्ततं दर्शयते गतस्मयः**
**कृताधिपत्यामिव साधु बन्धुताम् ।। ३ ।।** (किराता. १.१०) इति

फलमनयोः सुखासिका लोकरञ्जनं च। अन्यथैको हस्तिपकैः पीड्येत, द्वितीयो दुदर्शे इति नाभिगम्येत।

अचेतनेष्वपि क्रियाफलविवक्षायां तु दृश्यते 'परिवारयन्ते वृक्षं कण्टकाः, शोषयते व्रीहीनातप' इति। एतेन करणेन तुल्यक्रियः कर्त्ता कर्मवद् भवतीत्यपि न वक्तव्यं भवति। परिवारयन्ति कण्टकैर्वृक्षं मनुष्याः, परिवारयन्ते कण्टकाः स्वयमेवेति। तथा 'दुहिपच्योः सकर्मकयोः कर्त्ता बहुलं कर्मवद् भवतीति न वक्तव्यम्। दुग्धे गौः पयः स्वयमेव, पयो मुञ्चतीति गम्यते। तस्मादुदुम्बरस्सलोहितं फलं पच्यत इति कर्मतैव क्रियाविशेषणविवक्षिता। उदुम्बरशब्दोऽत्र फलवृत्तिः, उदुम्बरं तत् कालेन पच्यते सलोहितगुणं यथा भवति लोहितेन पाकेन सम्बध्यत इति यावत् कर्त्तृत्वविवक्षायां च पचत्यात्मानमिति। तथा युजेः श्यन् कर्त्तरि वक्तव्यम्, मासं युज्यते ब्रह्मचारीति। कर्त्तृत्वविवक्षायां तु दैवादिकत्वं न सेत्स्यति, कर्मत्वविवक्षायां तु कर्मत्वं यथा; कर्त्तृत्वं तु स्वयं शब्देन गम्यत इत्यलमतिप्रसङ्गेन।।

कृदन्तमपि खलु क्रियारूपं विद्यते। तत्र —

**भावो** यथा— इह तैर्यातम्, इह तैरासितम्, इह तैर्भुक्तम्, इह तैः पीतम्; कृतं भवता, प्रसुप्तं भवता, सुकृतं भवता, सुसिक्तं भवता, भूतं भवता, प्रभूतं भवता, भविष्यमाणं भवता, भूयमानं भवता, भवितव्यं भवता, भवनीयं भवता, भव्यं भवता, अवश्यं भाव्यं भवता, आशितंभवं भवता, ईषदाढ्यम्भवं भवता, दुराढ्यंभवं भवता, स्वाढयंभवं भवता, ईषदुत्थानं भवता, सूत्थानं भवता इति।

**कर्म** यथा— प्रकृत: कटो भवता, कृत: क्रियमाण: करिष्यमाणो भवता, खलु कट: कर्त्तव्य:, कृत्य:, करणीय:, कार्य:; ईषत्कार्य:, ईषत्कर: क्रियार्थो भवता, ईषदाढ्यंकर: स्वाढ्यंकर:, ईषत्पान: सोमो भवता, सुपान:, दुष्पान:; दुश्शासनोऽरिभिर्भवान् सुयोधन:, दुर्योधन:, दुर्दर्शन:, दुर्धर्षण:, दुर्मर्षण:, ईषल्लभ्यो जनैर्भवान्, सुलभ:, दुर्दर्श: इति।

**कर्त्ता** यथा— कृतवान् कटम्, उपेयिवान् ग्रामम्, विद्वान् व्याकरणम्, अधीयन् पारायणम्, धारयन्नुपनिषदम्, द्विषन्नितिहासम्, कुर्वन् कटम्, कटं कुर्वाण:; विदिता जनापवादान् प्रजागरितापरत्रान्, कन्यामलङ्करिष्णु:, दिवमुत्पतिष्णु:, ग्राममागामुक:, योषामभिलाषुक:, ओदनं बुभुक्षु:, श्रियमाशंसु:, ददिर्गा:, पपिस्सोमम्, अवश्यंदायी, शतंदायी, ग्रामङ्गामी, ग्राममागामी, कटं कारको व्रजति, ओदनं पाचको व्रजतीति।

**भावकर्म** यथा— क्रिया: क्रियन्ते, विधयो विधीयन्ते, उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्ते, अर्हति भवानिक्षुभक्षिकाम्, इक्षुभक्षिकां मे धारयसि, व्यावहासीं विदधते (३.३.४३ काशिका), सांकूटिनं कुर्वन्ति, उत्सवमामन्त्रयै, समाजमामन्त्रयै, आमन्त्रणमामन्त्रयै, मन्त्रणं निमन्त्रयै, कां त्वं कारिमकार्षी: (३.३.११०), कां कारिकाम् कां कृतिम् कां क्रियाम्, का कृत्याम्; किं कृतम्, सर्वां कारिमकार्षम्, सर्वां कारिकाम्, सर्वां कृतिम्, सर्वां क्रियां, सर्वां कृत्याम्, सर्वं कृतमिति।

**भावकर्त्ता** यथा— ब्रह्मभूयं वर्त्तते, ब्रह्महत्या न भवति, पाको वर्त्तते, त्यागो भवति, सांराविणं वर्त्तते, आखूत्थो भवति (३.२.४ मभा.), अन्वेषणा वर्त्तते, व्यावभाषी भवति, समज: पशूनाम्, उदज: पशूनाम्, गवामुपसर: (३.३.७१), ऋतूनां पर्याय:, भवत आसिका, भवत: शायिका, अभ्यूषखादिका वर्त्तते, इक्षुभक्षिका उदपादि, शिरोर्त्तिर्वर्त्तते (३.३.१०८), प्रवाहिका न भवति, शिरोरोग: शिरोबाध् ाते, अरोचको न भवति, निग्राहस्ते वृषल (३.३.४५ काशिका), अवग्राहस्ते वृषल, अजननिस्ते वृषल (३.३.११२), अभवनिस्ते वृषल भूयादिति।

**कर्मकर्त्ता** यथा—स्वयं धौतो पादौ, स्वयं विलीनमाज्यम्, अकृष्टपच्याश्शालय: (३.१.११४), पचेलिमा माषा: {३.१.९६(१)}, भिदेलिमानि काष्ठानि, भिदुरा भू:, छिदुरा रज्जु:, भङ्गुरं काष्ठम्, आरोहयमाणो हस्ती, लूयमान: केदार:,

ब्रुवाणा कथा, भूषमाणा कन्या, ग्रथ्नाना स्रक्, श्रथ्नाना स्रक्, चिकीर्षमाणः कटः, अवकिरमाणो हस्ती, नयमानो दण्डः, उच्छ्रायमाणो दण्डः, दुहाना धेनुः, प्रस्नुवाना धेनुः, रुन्धाना गौः आघ्नाना गौः, रज्यद् वस्त्रम्, कुष्यन् पाद इति।

अन्ये पुनरमीषामपि **कर्मकर्त्तृत्वं** मन्यन्ते– प्रकृतः कटं भवान्, प्रकृतः कटो भवता, यातः पन्थानं भवान्, यातः पन्था भवता, आसीनो मासं भवान्, आसीनो मासो भवता, भुङ्क्ते ओदनं भवान्, भुक्त ओदनो भवता, अधिशयितः खट्वां भवान्, अधिशयिता खट्वा भवता, आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आश्लिष्टः प्रियां भवान्, आश्लिष्टा प्रिया भवता, उपस्थितः सूर्यं भवान्, उपस्थितः सूर्यो भवता, उपासितोऽग्निं भवान्, उपासितोऽग्निर्भवता, अनूषितो गुरुं भवान् (३.४.७२ काशिका), अनूषितो गुरुर्भवता, अनुजातो माणवको माणविकाम्, अनुजाता माणविका माणवकेन, अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन इति। तन्न सम्यग् वाक्यभेदात्।।

ननु च भावनाक्षेपलब्धः कर्त्ता न तिङ्वाच्यः।

तत् कथमुच्यते कर्त्तृपदं, भावकर्त्तृपदं, कर्मकर्त्तृपदं चेति।

तथाहि– अन्वयव्यतिरेकाभ्यां शब्दस्याभिधानशक्तिः कल्प्यते। भावनाक्षेपेण च प्रतीयते; कर्त्तरि न तत्र प्रत्ययस्यान्वयव्यतिरेकौ कल्प्येते, यथा जात्याक्षेपेण व्यक्तेः प्रतीतौ न तां प्रति शब्दस्य वाचकशक्तिकल्पनोपपत्तिमती।

कथं पुनः कर्त्तुरनभिधाने प्रत्ययस्य वचनपुरुषभेदो युज्यते?

यथैव नात्मनेपदेषु।

जात्यभिधानपक्षे जातेरलिङ्गसंख्याया अपि तदाधारव्यक्त्याश्रयाणि लिङ्गवचनानि प्रवर्त्तन्ते, तथैव भावनाया अभेदेऽपि। तथा कर्त्राश्रयो वचनपुरुषभेदः प्रपत्स्यतीति।

न च कर्त्तरि लकारः स्मर्यत इति वाच्यम्, यतः 'कर्त्तरि कृत् (३.४.६७), 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९), 'वर्त्तमाने लट्' (३.२.१२३), 'लस्य' (३.४.७७, ७८) 'तिबादयः (१.४.१०१), तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः, तान्येकवचनद्विवचनबहुचनान्येकशः युष्मदि XXX मध्यमः, अस्मद्युत्तमः, शेषे प्रथमः (१.४.१०२–१०८), भावकर्मणोरात्मनेपदम् (१.३.१३), शेषात् कर्त्तरि परस्मैपदम् (१.३.७८) इत्यादिवाक्यानां 'द्व्येकयोर्द्विवचनैकवचने (१.४.२२), 'बहुषु बहुवचनम्' (१.४.२१) इति संख्याविधानेन सहैकार्थविषयत्वादेकवाक्यता व्याख्याता। एको हि

पचतीत्यादिशब्दस्तैर्व्याक्रियते। तत्रैष वाक्यार्थो भवति— कर्त्तुरेकत्वे एकवचनं तिबित्यादि, कर्त्तुर्द्वित्वे द्विवचनं तसित्यादि, कर्त्तुर्बहुत्वे बहुवचनं झीत्यादि। एवं च भावनाक्षिप्त-कर्त्तृसंख्यायामेव लकार: स्मर्यते न कर्त्तरि।

उच्यते, यदि भावनाक्षिप्तकर्त्तृसंख्या लकारेणोच्यते, देवदत्तेनास्यत इति भावाभिधायिनोऽपि कर्त्तृसंख्यायामेवाभिधानं प्राप्नोति, उभयत्रापि कर्त्तृसद्भावात्। येनैव हि निमित्तेन पचतीत्यादौ कर्म संख्याभिधानमासादयति तेनैव प्रयोगान्तरेऽप्यासादयेत्। कथं च कर्त्तर्यभिधीयमाने तद्विशिष्टसंख्याभिधानं युक्तम्?

अथ संख्यामात्रमभिधीयते न विशेष:; तर्हि पुरुषादिभेदप्रतीतेरनुपपत्ति:। तद्विशिष्टा-भिधानं च तदभिधानपुरस्सरेण न्याय्यम्, नाऽगृहीतविशेषणा विशेष्यबुद्धिर्वर्त्तत इति न्यायात् न च शब्देनासंस्पृश्यमानोऽपि कर्त्ता सन्निधिमात्रेण संख्यां विशेषयितुमुत्सहते, संख्याया धर्मरूपत्वाद् धर्मिणा कर्त्तुरवच्छेदकत्वेन संस्पर्शो युज्यते। करणादीनामपि सान्निध्य-धर्मित्वात् तथात्वोपपत्ते:। किञ्च लकारेणाभिहितयोर्भावनासंख्ययोरुत्तरकालो भावनाक्षिप्त: कर्त्ता लभ्यते। ततोऽस्य पूर्वभावाद् भावनासमकालमभिहितया संख्यया अविशेषात् सर्वकारकाणामवच्छेद: प्राप्नोति। पश्चाच्च कर्त्ताक्षिप्त: कथं भावनासमकालमभिहितां संख्यामात्मनि निरुन्ध्यात्?

अथ संख्यावद्भावनाप्रतीतिसमकालमेव कर्त्ता प्रतीयते; न तर्ह्याक्षेपलभ्य:, अपितु संख्यावल्लकारेणाभिधीयत एवेति।

किञ्च देवदत्तादिपदेन पचतीत्यादेस्सामानाधिकरण्यदर्शनात् संख्यावान् कर्त्तैव लकारेणाभिधीयते। यदि पुन: कर्त्तुस्संख्यानमेकत्वादिकं लकारो ब्रूयात् तदा देवदत्तस्य पचतीत्येवं प्रयोग: स्यात् यथा देवदत्तस्यैकत्वमिति। अथ न संख्यानमुच्यते लकारेण, किन्तु संख्येय एव देवदत्तादिरभिधीयते। देवदत्त: पचतीत्येकत्वसंख्यावच्छिन्न: पाकं करोतित्यर्थ:। एवं च, संख्येयेऽभिधीयमाने कर्त्तैवाभिहितो भवति।

न च कर्त्रभिधानेऽपि शक्ते: कारकत्वात् समानाधिकरणाऽनुपपत्तिरिति वाच्यम्, शक्तिर्हि लकारेणाप्यभिधीयमाना गुणद्रव्यपरतन्त्रैवाभिधीयते। यथा—'शुक्ल: पट:, शुक्ला शाटी'—ति।

अपि च भवन्तोऽपि कर्म लकारवाच्यं मन्यन्ते, तदनुपपन्नम्। यथैव हि भावनाक्षेपलभ्यत्वात् कर्त्तुरवाच्यत्वं तथा कर्मणोऽपि भवितुमर्हति।

अथानाक्षेपात् कर्मणो वाच्यत्वम्। एवं च सति कर्त्तुरपि तथात्वोपपत्तिः। न हि क्रियाक्षेपे कर्तृकर्मणोर्विशेषमुपलभामहे। यथैव हि कर्त्रा विना क्रिया न प्रतीयते एवं कर्मणापि। न सर्वत्र कर्मसम्बन्ध इति चेत्, यत्राऽस्ति तत्र कथम्? अथ कर्मणोऽपि क्रियाक्षेपलभ्यत्वात् तद्गताऽपि संख्यैवोच्यते लकारेण। कथमिदानीं कर्तृकर्माऽनभिधायको लकारः क्वचित् कर्तृगतां संख्यामभिधत्ते; क्वचित् कर्मगतामिति विशेषो भवति? न च विशेषणं नास्तीति वाच्यम्, यतः पचतीत्यत्र उल्लसितेन कर्तृरूपत्वेन पच्यत इत्यत्र रूपगृहीतकर्मनिष्ठत्वेन प्रतीतिरुत्पद्यते। किं च लकारेण कर्तृकर्मणोरनभिधाने देवदत्तः पचतीत्यनभिहिते कर्त्तरि तृतीया, ओदनः पच्यत इति कर्मणि द्वितीया प्राप्नोति।

अथैवमुच्यते कर्त्तृकर्म्मसंख्ययोरभिहितत्वान्न भविष्यतो विभक्ती। कृदन्तेषु तर्ह्यनिष्टप्राप्तिः संख्यायाः कृत्यभिधानात्। तत्र पक्व ओदन इति द्वितीया, पक्ता देवदत्त इति तृतीया प्राप्नोति।

ननु चोभयं विभक्त्यर्थः संख्या कर्म्मादयश्च। तत्र यथाऽऽख्यातेषु संख्याया अभिहितत्वात् कर्त्तृकर्म्मणोर्द्वितीयातृतीये न भवतः, तथा कृदन्तेषु कारकस्याऽभिहितत्वात् संख्या, संख्याया द्वितीयादयो न भविष्यन्ति।

स्यादेतत्। यद्यभिहिते प्रतिषेधः स्यात्, अनभिहिते त्वयं विधिः सामर्थ्यैकवाक्यताभ्यां पर्युदासाश्रयणात्। तत्र तिङन्तेषु संख्याभिधानेऽप्यनभिहितत्वात् कर्तृकर्मणोः कारकविभक्तिः प्राप्नोति। कृदन्तेषु कारकाभिधानेऽपि अनभिहितत्वात् संख्यायाः कारकविभक्तयः प्राप्नुवन्ति। अपि च 'देवदत्तः पचन्, देवदत्तः पचमान' इति शतृशानचोः कर्त्तरि च संख्याया अप्यनभिधानात् तृतीया न प्राप्नोति? अथ शतृशानचोः कर्त्तुनभिधानमाश्रीयते तिङः किमपराद्धम्? तस्यापि लादेशत्वात् शतृशानचोः कृत्त्वात्, 'कर्त्तरि च कृत्' (३.४.६७) इति वचनात्; कर्त्तुरभिधानादिति चेत् कर्मणः कथमोदनं पच्यमान इति। अथ स्थानिनो लकारस्य कर्मणि विधानात् तदादेशत्वाच्च शानचः कर्माभिधानं भविष्यति। तथाहि 'लः कर्मणि च भावे चाकर्मकेभ्य' (३.४.६९) इति, 'भावकर्मणोः' (१.३.१३), 'आत्मनेपदम्' (१.३.१२) इति वा कर्मणि लकारो विधीयते। एवं सति यत्रापि तिङोऽपि विधीयन्ते तत्रापि कर्मणि प्राप्नोति। ततश्च कर्त्तर्यपि केनापवार्यते?

तत्रापि 'कर्त्तरि कृत्' (३.४.६७), 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८) इति कर्त्तरि लकारोऽपि विधीयते। तदुक्तम्—

**आत्मनेपदरूपेण सर्वत्रैव हि कर्मणि ।**
**लकारस्स्यात् तथैवायं कर्त्तर्यपि भवेन्न किम् ।। ४।।**

न च कर्त्तरि या कर्मणि या संख्या तत्र तिङो भवन्तीत्याश्रयितुमुचितम्। न हि 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९) इत्यस्य 'द्व्येकयोर्द्विवचनैकवचने' (१.४.२२) 'बहुषु बहुवचनम्' (१.४.२१) इत्यनेनैकवाक्यत्वं विद्यते, भावेऽपि लकारस्य विधानात्। न च भावस्य साध्यत्वेन संख्यायोगोऽस्ति। नापि 'स्वौजस' (४.१.२) इत्यादेर्विधानस्य संख्याविभक्तिविधानेन सहैकवाक्यत्वम् असंख्येभ्योऽप्यव्ययेभ्यस्सुबुत्पत्तेः। आह च **महावार्त्तिककारः** 'सुप्तिङोरविशेषविधानाद् दृष्टविप्रयोगाच्च नियमार्थं वचनम् {१.४.२१(१)} इति। **महाभाष्यकारो**ऽप्याह– 'सुप्तिङोऽविशेषेणोत्पद्यन्ते, उत्पन्नानां नियमः' इति। तस्मान्न कर्तृकर्मसंख्यायां लकारविधिः, अपितु कर्त्तृकर्मणोरेवेत्यभ्युपगन्तव्यम्।

कथं पुनस्सर्वकारकसन्निधाने लकारेण कर्त्तृकर्मणोरेवाभिधानम्?

उच्यते, तयोरेव प्राधान्यात्। तत्र कर्त्तुः प्राधान्यम्, करणादीनां तदधीनवृत्तित्वात् कर्मणस्तु तदर्थत्वमेव तत्प्रवृत्तेः। यदि वा कर्त्तृकर्मव्यापाराभिधायिनो धातोः पर उपजायमानो लकारः कर्त्तृकर्मणी एवाभिदधाति।

अथ कथं कर्त्तृकर्मवत् कालादिकमपि नाभिदधाति? विषयभेदात्।

तथाहि **षडर्थास्तिङन्तेन प्रतीयन्ते** – (३.१.६७ मभा.)

**१. क्रिया, २. कालः, ३. उपग्रहः, ४. कारकं, ५. पुरुषः, ६. संख्येति ।**

तेषु 'क्रियाकालात्मनेपदनिमित्तानि प्रकृतिरभिधत्ते, प्रत्ययः साधनं संख्यां पुरुषं च। तत्र प्रकृत्यभिधेयेषु क्रिया प्रधानम्, कालोपग्रहौ विशेषणम्। प्रत्ययाभिधेयेषु साधनं प्रधानं, संख्यापुरुषौ विशेषणम्।

कथं पुनः संख्या कारकस्यैव विशेषणम्, न क्रियाकालोपग्रहपुरुषाणाम्?

उच्यते, क्रियायाः साध्यत्वेनापरिनिष्पन्नत्वात् कालस्य च क्रियातोऽव्यतिरेकात्, व्यतिरेकेऽपि वा क्रियावच्छेदकत्वेनोपसर्जनत्वात्। उपग्रहस्यापि गन्धनादेः क्रियाधर्मत्वे–नाऽपरिनिष्ठितत्वे अनिदन्तानिर्देश्यत्वादसंबन्धः संख्यायाः। पुरुषस्तु प्रथमादिः साधनमेव, नान्यः कश्चित्। अतः कारकेणैव संख्याभिसंबध्यते, न क्रियादिभिरिति। तदेवं तिङ्वाच्यत्वेन कर्त्तुः कर्त्तृपदं, भावकर्त्तृपदं, कर्मकर्त्तृपदं चेति यदुक्तं तदुपपन्नमेवेति।

*(२. कारकरूपं पदम्)*

**कर्त्तृपदं, कर्मपदं, करणपदं, संप्रदानपदम्, अपादानपदम् अधिकरणपदं** चेति कारकरूपभेदाः। तत्र कर्त्रादयः कारकप्रस्तावेऽग्रतः प्रपञ्चयिष्यन्ते; इह तु संबन्धाविच्छेदाय लेशत उदाह्रियन्ते। तेषां —

**(कर्त्तृपदम्)**

**कर्त्ता** त्रिधा **१. स्वतन्त्रः २. अस्वतन्त्रः ३. कर्मकर्त्ता** चेति।

**(१. स्वतन्त्रः)** तत्र (स्वतन्त्रः) क्रियायां स्वेच्छया करणादिकारकाणि यः प्रयुङ्क्ते, न तु तैः प्रयुज्यते सः स्वतन्त्रः। स द्विधा **१. स्वविभक्तिवाच्यः, २. परविभक्तिवाच्य**श्चेति।

तयोः स्वविभक्तिवाच्यो यथा—(माघ. १०.२५)

**मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् ।**
**लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥ ५॥**

परविभक्तिवाच्यो यथा—(माघ. १०.३३)

**चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।**
**तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥ ६॥**

**(२. अस्वतन्त्रः)** योऽन्यप्रयुक्तः क्रियासु व्याप्रियते सोऽस्वतन्त्रः। सोऽपि द्विधा—

**१. उद्भूतव्यापारः, २. अनुद्भूतव्यापार**श्च।

तयोरुद्भूतव्यापारो यथा—(किराता. १.३१)

**गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां जनाधिपः ।**
**परैस्त्वदन्यः क इवाऽपहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ ७॥**

अनुद्भूतव्यापारो यथा—(किराता ९.७१)

**चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदश्शशिभासः ।**
**सङ्गतं च दयितैः स्म नयन्ति प्रेम कामपि भुवं प्रमदानाम् ॥ ८॥**

**(३. कर्मकर्त्ता )** कर्मकर्त्तापि द्विधैव—

**१. उद्रिक्तकर्मांशः, २. अनुद्रिक्तकर्मांशश्च।**

तयोरुद्रिक्तकर्मांशो यथा—

**एतदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् ।**
**मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमानिबन्धनात् ॥ ९॥** (कुसं. ८.७०)

अनुद्रिक्तकर्मांशो यथा—(किराता. १.१८)

**उदारकीर्त्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।**
**स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥१०॥**

**(कर्मपदम्)**

कर्तुः क्रिययाऽनन्यार्थया यदाप्यते तत् **कर्म**। तदपि त्रिधा—

**१. निर्वर्त्त्यम् २. विकार्यम् ३. प्राप्यं** च। तेषु—

**(१) निर्वर्त्यम् —'यदसज्जायते सद् वा जन्मना तत् प्रकाशते'।॥११॥**(वाप.३.७.४९)

तयोः प्रथमं यथा—(काव्याद. २.२३६)

**अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।**
**उत्पादयति लोकस्य प्रीतिं मलयमारुतः ॥१२॥**

द्वितीयं यथा—(माघ. १०.१५)

**सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।**
**विभ्रमो मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥१३॥**

**(२) विकार्यमपि** द्विधा प्रकृत्युच्छेदात् गुणान्तराधानाच्च।

तत्र प्रथमं यथा—(कुसं. ३.७२)

**क्रोधं प्रभो! संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥१४॥**

द्वितीयं यथा—(कुसं. ८.२७)

**तां पुलोमतनयाऽलकोचितैः पारिजातकुसुमैः प्रसाधयन् ।**
**नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरैक्ष्यत ॥१५॥**

**(३) प्राप्यमपि** द्विधैव कथितम् अकथितं च।

तत्र यत् कृत्य–क्त–खल–र्थादिभिर–भिधीयते तत् **कथितम्**।

यत् तैर्नाभिधीयते **तदकथितम्**। तयोराद्यं यथा— (किराता. ८.६)

**निपीयमानस्तबका शिलीमुखैरशोकयष्टिश्चलबालपल्लवा ।**
**विडम्बयन्ती ददृशे वधूजनैरमन्ददष्टोष्ठकरावधूननम् ॥१६॥**

द्वितीयं यथा—(कुसं. ६.२९)

**तामस्मदर्थे युष्माभिर्याचितव्यो हिमाचलः ।**
**विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥१७॥**

**(करणपदम्)**

क्रियासिद्धौ साधकतमत्वेन यदव्यवहितं व्याप्रियते तत् **करणम्**। तदपि त्रिधा –

**१. बाह्यम् २. आभ्यन्तरं ३. बाह्याभ्यन्तरं** च।

(१) तेषु **बाह्यं** द्विधा– **व्यवधायकम् अव्यवधायकं च।**

तयोराद्यं यथा–(कुसं. ७.१४)

**धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।**
**पर्यक्षिपत् काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १८॥**

द्वितीयं यथा–(रघु. ६.३)

**वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।**
**शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ १९॥**

(२) **अभ्यन्तरमपि** द्विधा कर्त्तुर्भिन्नमभिन्नं च।

तयोर्भिन्नं यथा–(किराता. ८.३२)

**शिलाघनैर्नाकसदामुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः ।**
**तटान्तनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥२०॥**

द्वितीयं यथा–(कुसं. ५.३९)

**प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।**
**यतस्सतां सन्नतगात्रि! सङ्गतं मनीषिभिः साप्तपदीनमुच्यते ॥ २१॥**

(३) **बाह्याभ्यन्तरमपि** द्विधा बहिर्मुखम् अन्तर्मुखं च।

तयोराद्यं यथा–(माघ. ५.२)

**गतया पुरः प्रतिगवाक्षमुखिं दधती रतेन भृशमुत्सुकताम् ।**
**मुहुरन्तरालभवमस्तगिरेस्सवितुश्च योषिदमिमीत दृशा ॥ २२॥**

द्वितीयं यथा–(माघ. ५.२)

**बिभ्रतौ मधुरतामतिमात्रं रागिभिर्युगपदेव पपाते ।**
**आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ २३॥**

**(संप्रदानपदम्)**

क्रियाकार्यत्वेनावधारितं कर्मणा क्रियया वा संयोगं यदनुभवति तत् **सम्प्रदानम्**। तत् त्रिधा **१.ददातिकर्मव्याप्यम्, २.कर्ममात्रव्याप्यम्, ३.क्रियाव्याप्यञ्चेति**। तेषु–

(१) **ददातिकर्मव्याप्यं** द्विधा १.स्वत्वस्याऽनिवृत्तौ २.निवृत्तौ च

तयोराद्यं यथा—(कुसं. ८.१९)

**चुम्बनादलकचूर्णदूषितं शङ्करोऽपि नयनं ललाटजम् ।**
**उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥ २४॥**

द्वितीयं यथा—(विक्रमो. ३.१४)

**दातुं वा प्रभवसि मामन्यस्यै कर्त्तुमेव वा दासम् ।**
**नाहं पुनस्तथा त्वं यथा हि मां मन्यसे भीरु ॥ २५॥**

(२) **क्रियाकर्मव्याप्यं** द्विधा ददात्यर्थविषयम् अददात्यर्थविषयं च।

तत्र प्रथमं यथा—(किराता. ५.२८)

**श्रीमल्लताभवनमोषधयः प्रदीपाः शय्या नवानि हरिचन्दनपल्लवानि ।**
**अस्मिन् रतिश्रमनुदश्च सरोजवाताः स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः॥ २६॥**

द्वितीयं यथा—(कुसं. ३.६०)

**शशंस तस्मै प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ २७॥**

(३) **क्रियाव्याप्यमपि** द्विधैव, पारिभाषिकमपारिभाषिकं च।

तयोः प्रथमं यथा—(किराता. ९.३५)

**न स्रजो रुरुचिरे रमणीभ्यश्चन्दनानि विरहे मदिरा वा ।**
**साधनेष्वपि रतेरुपधत्ते रम्यतां प्रियसमागम एव ॥ २८॥**

द्वितीयं यथा-(कुसं. ७.८६)

**इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।**
**प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ २९॥**

**(अपादानपदम्)**

तत्र कर्त्रा कर्मणा वा क्रियाजन्यमेव ध्रौव्येण यद्विभागमवगाहते **तदपादानम्।**

तत्त्रिधा – **१. निर्दिष्टविषयम् २. उपात्तविषयम् ३. अपेक्षितक्रियं** चेति।

(१) तेषु **निर्दिष्टविषयं** द्विधा– **उज्झितम् अनुज्झितं** च।

तयोराद्यं यथा—(रघु. १६.४८)

**स्वेदानुविद्धार्द्रनखक्षताङ्के सन्दष्टभूयिष्ठशिख कपोले ।**
**च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ॥ ३०॥**

द्वितीयं यथा—(किराता. ९.११)

**औषसातपभयादपलीनं वासरच्छविविरामपटीयः ।**
**सन्निपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ३१॥**

(२) **उपात्तविषयम**पि द्विधा— **हेयमुपादेयं** च।

तयोराद्यं यथा—(किराता. ८.७)

**करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम् ।**
**उपेयुषी कल्पलताभिशङ्कया कथं नु वित्रस्यति षट्पदावली ॥ ३२॥**

द्वितीयं यथा—(रघु. १७.१)

**अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।**
**पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना ॥ ३३॥**

(३) अपेक्षितक्रियमपि द्विधैव— सामान्यापेक्षं विशेषापेक्षं च।

तयोराद्यं यथा—(माघ. १०.२१)

**मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचित्ता ।**
**योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः ॥ ३४॥**

द्वितीयं यथा—

**कुतो भवानध्वग! चित्रकूटाद् दृष्टस्त्वया श्रीललितस्वभावः ।**
**किं तेन मुग्धे मदनोत्सवेऽस्मिन् कामं त्वया वेश्मनि लेखयामि ॥ ३५॥**

**(अधिकरणपदम्)**

कर्त्रा कर्मणा व्यवहितं **क्रियाधारोऽधिकरणम्।**

तत्त्रिधा—**१. वैषयिकं, २. औपश्लेषिकं, ३.नैमित्तिकं** च। तेषु —

(१) **वैषयिकं** द्विधा — द्रव्यवैषयिकं गुणवैषयिकं च।

तयोराद्यं यथा— (माघ. ९.४५)

**कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महती (ति)।**
**रशनाकलापकगुणेन वधूर्मकरध्वजद्विरदमाकलयत् ॥ ३६॥**

द्वितीयं यथा— (नीति.५२)

**विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।**
**यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ३७॥**

(२) **औपश्लेषिकमपि** द्विधा– एकदेशिकमभिव्यापकं च।

तयोराद्यं यथा– (माघ. १०.३९)

**स्पर्शभाजि विशदच्छविचारौ कल्पिते मृगदृशां सुरताय ।**
**सन्नतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥ ३८॥**

द्वितीयं यथा–(किराता. ९.६३)

**रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु ।**
**सर्वथापि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥ ३९॥**

(३) **नैमित्तिकमपि** द्विधैव– **शुद्धं सङ्कीर्णं** च।

तयोराद्यं यथा–(गास. वे. ७३४)

**कडुए/कह दे धूमंधारे अब्भुत्तणमग्गिणो समप्पिहिइ ।**
**मुहकमल–चुबणालेहडम्मि पासट्ठिए दिअरे ॥ ४०॥**

(कटुके/कथं सखि धूमान्धकारेऽभ्युत्तेजनमग्नेः समाप्स्यते।
मुखकमलचुम्बनलम्पटे पार्श्वस्थिते देवरे॥)

द्वितीयं यथा–

**इहाधीती पूर्वे धृतधरणिभारः कमठरा–**
**डपां नाथेनास्माद्गिरिशितशरण्येन पठिताः ।**
**ततः प्राप्ता दूरीकृतभुवनतापैर्जलधरै–**
**स्सतां तु स्वोपज्ञ सततमुपकारोपनिषदः ॥ ४१॥**

**(कर्त्ता)**

प्रवृत्तप्रयोजकस्तु निमित्तविशेषो हेतुः **कर्ता** च भवति।

सोऽपि त्रिधा– **१. प्रेरकः, २.अनुकूलः, ३. प्रत्यायकश्च।**

(१) तत्र प्रेरको द्विधा– व्यवहितोऽव्यवहितश्च।

तयो**र्व्यवहितो** यथा– (रघु. ६.८३)

**सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।**
**आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ ४२॥**

**अव्यवहितो** यथा– (माघ. १०.१६)

**सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ।**
**गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ ४३॥**

(२) **अनुकूलो**ऽपि द्विधा– सिद्धः, साध्यश्च।

**सिद्धो** यथा–

**गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।**
**आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूट्यः ।। ४४।।**

**साध्यो** यथा–

**सुण्णम्मि गिरिग्गामे वणमहिस–विसाण–भग्ग–वइ–वेढे ।**
**गहवइ–धूआ दंसण–मणोरहा/हरा मं पसाएई ।। ४५।।**

(शून्ये गिरिग्रामे वनमहिषविषाणभग्नवृतिवेष्टे।
गृहपतिदुहिता दर्शनमनोरथा/हरा मां प्रसादयति।।)

(३) **प्रत्यायको** द्विधा– अदृष्टप्रयोज्यक्रियो, दृष्टप्रयोज्यक्रियश्च।

तयोः कंसं घातयति, पुष्येण चन्द्रं योजयतीत्यादिर**दृष्टप्रयोज्यक्रियः**।

स यथा – **शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं**
**व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।**
**वागर्थौ च तुलाधृताविव तथाप्यस्मत्प्रबन्धानयं**
**लोको दूषयितुं प्रसारितमुखस्तुभ्यं प्रतिष्ठे! नमः ।। ४६।।**

आरात्रि विवासमाचष्टे रात्रीर्विवासयति, माहिष्मत्यां सूर्यमुद्गमयति, इत्यादिर्दृष्ट–प्रयोज्यक्रियः। स यथा–(माघ. ११.५)

**विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छञ् जीवितेशोऽवकाशम् ।**
**रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चिद् गमयति शयनीये शर्वरीं किं करोतु ।। ४७।।**

कथं पुनः कंसं घातयति कथकः, बलिं बन्धयति गाथक इत्यादौ प्रयोजकव्यापारेण णिजुत्पत्तिः? उच्यते–

**शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ।। ४८।।** (वाप. ३.७.५)

तेषां चोत्पत्तिप्रभृति आविनाशात् समृद्धिमाचक्षाणः परानपि तथैव प्रत्याययति। तथा हि वक्तारो भवन्ति 'गच्छ हन्यते कंसः, किं गतेन हतः कंस' इति। एवं रात्रिं विवासयतीत्यादावपि तथा प्रत्यायनमवगन्तव्यम्। अयं च सूत्रानारम्भपक्षे न्यायः। सूत्रारम्भपक्षे तु आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् इत्युदाहृतं पुरस्तात्।

अथायं णिजर्थो धात्वर्थत्वेनावच्छिद्यमानः किं साक्षादवच्छिद्यते? एवं भवितुमर्हति; न ह्यन्यदिहोपलभ्यते। तदनुपपन्नम्। क्रिययोः साध्यत्वेन स्वसाधनापेक्षया परस्परेण सम्बन्धः। अस्तु तर्हि कर्तुर्व्यवधानेन। अयुक्तं चैतत्। धात्वर्थो हि कर्तृव्यापाररूपः, सोऽनुपलभ्यमानमपि कर्तारमाक्षिप्य तद्द्वारेण प्रत्ययार्थं विशेषयति।

न चैवं सति प्रेरणानर्थक्यं, यतो विच्छेदमाशङ्कमानः क्रियायां प्रवृत्तमपि प्रेरयति। यत्राप्यप्रवृत्त एव प्रवर्त्यते तत्रापि योग्यत्वाद्बुद्धिस्थं क्रियासम्बन्धं गृहीत्वा प्रयुङ्क्ते। बुद्धिनिबन्धनोऽपि क्रियाकर्त्रोस्सम्बन्ध उपपद्यते। तदाप्याख्यानात् कृतस्तदाचष्ट इत्याद्युपसंख्यानं 'न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्' इति बुद्धिनिबन्धनत्वेनैव प्रत्याख्यातम्। तदा च बुद्धिकंसो बुद्धिवासुदेवेन हन्यत इत्येवंभूतबुद्धिविषयं प्रयोजकव्यापारमाश्रित्य पुनर्बौद्ध एव प्रयोजकव्यापारोऽङ्गीकृतः। अथोऽर्थाक्षिप्तकर्तृसङ्गताया धात्वभिहितायाः क्रियायाः प्रत्ययार्थत्वेन प्रेरणादिना सम्बन्ध इति। अत एव प्रवृत्तोऽपि प्रेष्यमाणे लोडादिप्रत्ययोत्पत्तेः कर्तृत्वस्यापायात्। ननु कथमप्रवृत्तबाह्ययोगः कर्तृत्वमुपेयात्। प्रैषसाध्यं च कर्तृत्वं कथं नाम ततः प्रागेव भवेत्? उच्यते; नेदं बाह्यप्रयोगप्रवृत्त्यधीनं कर्तृत्वमभिधीयते। क्रियायां तु सम्बध्यमानत्वेन विवक्षितायां तत्साध्यतानान्तरीयकः सामर्थ्यप्रापितसन्निधानः कर्ता स्थित एव प्रयोजकव्यापारेण बाह्यप्रयोगसिद्ध्यर्थमेव विषयीक्रियते। अन्यथा प्रयोजकव्यापारापेक्षकर्तृत्वे प्रयोजकोत्तरकालमेवास्य कर्तृत्वं भवेदिति न संप्रति कर्तृत्वाभावे तन्निबन्धनो लोडादिरुपपद्यते। तस्मात्पचतीत्यादिना यः पचति स पाकं प्रति प्रवर्तयत्विति कथितं भवति। क्रियासामर्थ्यादिनं निर्ज्ञातं कर्तारं प्रैष्यतया–भिधेयभावेन लकारोऽभिनिविशते। तथा हि– सोऽयं पाकादिधात्वर्थसामर्थ्यादवगतः कर्ता साधनत्वार्थस्य बाह्यप्रयोगसंपत्त्यर्थप्रेषणादिव्यापारविषयीकृतः प्रत्ययेनाभिधीयत इत्यामनन्ति।

भवतु नाम क्रियाप्रापितसन्निधानः कर्ता। स तु नियत एव पुरुषः कथं ज्ञायते, येनैवमुच्यते यस्त्वं पचसि स पाकं प्रवर्तयेति। अत एव भाष्ये सक्रियस्य कर्तुः प्रयोगे णिचमभिधाय द्रव्यमात्रस्य प्रयोगे लोट उत्पत्तिरभिहिता–पृच्छतु मा भवान्, अनुयुङ्क्तां मा भवान् इति। उच्यते द्रव्यमात्रमपि प्रेष्यमाणं क्रियासाधनयोग्यमेव प्रेष्यते, न काष्ठकुड्यादि। नन्वेवं णिचो लोटश्च विषयसङ्कर प्राप्नोति? नास्ति सङ्करः; यस्यावगतमसकृत् प्रमाणान्तरेण क्रियाकर्तृत्वमसावेव सम्भावितक्रियो णिज्विषयः। अदृष्टक्रियासामर्थ्यं तु योग्यमेव द्रव्यमात्रं लोड्विषय इति। तेन पचेत्ययमर्थः यस्त्वं पचसि पाकार्हः पाके शक्तः स त्वं प्रवर्तय पाकमिति। एवं च क्रियाकर्तृत्वेन योग्यतया ज्ञायमानस्य प्रयोगे प्रवर्त्यमानत्वात्

कर्तुरेवाधिकार इत्युक्तं भवति। किं च 'विद्वच्छूराभिजातकर्तृके राज्ये भवानधिकृत' इत्यादिवचनभङ्गिभिरयमेवार्थस्समर्थ्यते।

यदि तर्हि न कर्ताधिक्रियते नायं मतिमान् विशिष्टमेव पुरुषमेवंप्रकारेऽधिकारेऽनुरुन्धीत यमेव कञ्चित्पुरुषमुपाददीत।

अथवा एते लोडादिविषयाः प्रैषादिविषयाः। ते कस्य धर्मभूताः, तत्रैव ते वर्णयन्ति 'प्रयोक्तुः (इति)'; प्रयोक्ता हि प्रेषणादिभिरभिमतसिद्धयेऽभिलाषात् पुरुषं प्रवर्तयति; स च क्वचित् प्रेषयन्, क्वचिदध्येषयन्, क्वचिदामन्त्रयमाण इति शब्दस्यैते व्यापारा इत्यपरे।

प्रेषणा हि सर्वविध्यादिसाधारणरूपा। सा च शब्दव्यापारः, निमन्त्रणादयस्तु प्रमाणादिनिबन्धनास्तद्विशेषाः। तथा हि – इदं निमन्त्रणं, इयमनुज्ञा, अयं प्राप्तकाल इति प्रकरणादेरवगम्यते।

अन्यन्मतं प्रयोज्यव्यापारविशेषाः; ते चासंविदिताः; स तु पुरुषो लिङादिप्रयोगाद् भोजनादिक्रियासु निमन्त्रणाद्यवस्थान्तरमात्मानं मन्यते निमन्त्रितोऽहमध्येषितोऽहमिति।

अन्ये त्वाहुः – विधिरेक एवार्थः प्रत्ययस्य। स च यजेतेत्यादेर्यथारूपोऽवगम्यते तथारूप एव। कटं कुरु; इह करोत्यर्थात्मके विधिवद्धात्वर्थानुयायिनीति कारकाणामभिसंबन्धः। यतः करोत्यर्थात्मकव्यापारेण कारकाणां विशेष उपजायमान उपलभ्यते; कुर्वन् हि कारको भवति।

अन्ये त्वाहुः – योऽयं पाकादिको विशेष इतरेतरवैलक्षण्येनोपलभ्यमानः प्रतिनियतफलजनकः, यत्रैव फलसाधकत्वात् करणानि प्रवर्तन्ते तस्यैव तु व्यापारात्मकत्वात् क्रियारूपतापि संपन्नैवेति।

अपरमतं – तन्न विवेक्तुं शक्यम् इह कारकाणि व्याप्रियन्ते, न व्याप्रियन्त इति, उभयात्मके वस्तुनि विशिष्टोपाधिरूपस्य अनिर्धारितत्वादेकत्रापि प्रवृत्तिमुपयत् कारकमितरत्रापि प्रवृत्तमिवोपलभ्यते।

अथापरे ब्रुवते उभयात्मकमेव हि क्रियारूपं वस्तु कारकैस्संपद्यते। अत एव 'कारकाणां प्रवृत्तिविशेषः क्रिया' इत्येतद्भावनापक्षेऽपि सङ्गच्छते, न चास्माभिस्सकलधात्वर्थानुयायिकरोत्यर्थरूपा भावना अङ्गीक्रियते, यदित्थमध्यगीषत कृभ्वस्तयः क्रियासामान्यवचनाः, क्रियाविशेषवचनाः पच्यादय इति। किंतु प्रत्ययवाच्यत्वमस्या अनुकृष्यते।

ननु च भावनापक्षे कारकाणामिति बहुवचनानुपपत्तिः, कर्तुरेव हि व्यापारो भावना, न कारकाणामुच्यते। कर्तैव कारकशब्देनोक्तः, न पुनरितरकरणादि। कर्तॄणां तु क्रियाभेदेन बहुवचनम्।

कथं पुनरिदं ज्ञायते? यतो भुजिक्रियामूरीकृत्येदमभिधत्ते। अन्यथा कारकाणि शुष्कौदने प्रवर्तन्ते अन्यथा मांसौदन इति कर्तैव शुष्कौदने मन्दप्रस्थानेन प्रवर्तते, मांसौदने संरम्भेणात: कर्तुर्मन्दतासंरम्भप्रदर्शनं ज्ञायते। कर्तैव परिग्रहीता, यस्य बुद्ध्यनुषङ्गात् तथाप्रवृत्ति:।

ननु च शुष्कौदनमांसौदनयो: करणाधिकरणादीनामपि तद्भेदनिमित्तं बहुवचनं भविष्यति।

नैवम्; विद्यमानमपि कारकान्तरं कांस्यपात्रादिशुष्कमांसौदनयोर्मन्दतया संरम्भेण वा प्रवर्तते। यदापि सकलकारकव्यापार: क्रियेति पक्षस्तदापि प्रधानत्वात् कर्तैव कारकशब्देनोच्यते, तस्य च सर्वक्रियाविशेषविषयत्वेनानपायात् प्रयोगप्रवृत्तिहेतुत्वाच्च। कर्म पुन: यद्यपि तदर्थत्वात् प्रवृत्ते: प्रधानं तथापि तस्यासर्वविषयत्वान्न कारकाणामिति बहुवचनेन सङ्ग्रह:। यद्येवं कर्तृशब्द एव कस्मान्न कृत:? कर्मणि लकाराणां तस्य व्युदासो मा भूत्। तेन यत्र संभवति कर्म तत्राङ्गीकृतमेव तु तदपेक्षया बहुवचनम्।

ननु च संरम्भादिप्रदर्शनादचेतनव्यापारस्य क्रियात्वं न प्राप्नोति।

नैवम्; संरम्भादे: कर्तृविलक्षणत्वात्। अत: कर्तृव्यापार: क्रियेति सिद्धम्।

नन्वेवं सति भाष्यं न संगच्छते 'क: पचे: प्रधानार्थ:, याऽसौ तण्डुलानां विक्लित्ति:' इति। आर्थं प्राधान्यमाश्रित्य **तद्भाष्य**मित्यविरोध:। यत्तदर्थ: 'प्रेषणं, अध्येषणं वा स सर्व: पच्यर्थ' इति। एवं च पचतीत्याख्यातस्य विक्लित्त्युपसर्जनं विक्लेदनमर्थो भवति।

अन्ये तु कारकाणामिति बहुवचनं सर्वकारकव्यापारत्वेन व्याचक्षते, यस्मात्सर्व–कारकव्यापाराभिधायित्वं धातूनां दृश्यते। तथा च देवदत्तस्य काष्ठैस्स्थाल्यामोदनस्य च पाचक: इत्यादौ सर्वाण्येव कारकाणि धात्वर्थस्य विशेषणम्; नात्र कस्यचिद्गुणभाव: प्रधानभावो वा अवगम्यते।

आख्यातास्तर्हि सर्वकारकव्यापारा: किमिति नावगम्यन्ते? प्राधान्यात्कर्तृकर्मणोरेव लकारोत्पत्ते: तद्व्यापार एवाख्यातात्प्रतीयते।

किं पुनस्सर्वेषां कारकाणामेका प्रवृत्ति:? आहोस्वित् प्रतिकारकं भिन्ना: प्रवृत्तय: क्रियेति।

न तावदाद्य: पक्ष:, सर्वेषामेकस्या: प्रवृत्तेरसंभवात्। न हि यैव काष्ठानां प्रवृत्तिस्सैव देवदत्तस्य स्थाल्यादेश्च संभवति, तस्मात्प्रतिकारकं भिन्ना: प्रवृत्तयो धातुना युगपदभिधीयमाना: क्रियेत्युच्यन्ते।

अथवा पुनरस्त्वेकैका सर्वकारकाणां प्रवृत्ति: क्रिया। तथा हि सर्वैरेव कारकैरेका प्रवृत्तिरुपजन्यते सर्वाण्येव हि फलजननाय प्रवर्तन्ते। किञ्चित्तु केनचिद्रूपेण जनयतीत्यवान्तर–भेदात्करणादिव्यपदेश:, एकश्चानेकत्र वृत्तिर्जातिवदुपपद्यते। विशेषाद्वास्या: फलजननरूपत्वं, न पुनरधिश्रयणादिरूपतेति।

**(३. उपस्काररूपं पदम्)**

**विशेषणादिरूपं, निपातादिरूपं, आख्यातादिरूपं, संबोधनादिरूपं, हेत्वादिरूपं चेत्युपस्काररूपा।** एते चाग्रत उपस्कारार्थप्रस्तावे प्रपञ्चतो वर्णयिष्यन्त इति नेह प्रतन्यन्ते (द्र. पृ.२६५)। संबन्धाविच्छेदार्थं तु लेशत उदाह्रियन्ते। तत्र –

**विशेषणादयः** क्रियाविशेषणं, कारकविशेषणं, उपसर्गश्च; यथा– साधु पचति, भीष्ममुदारं दर्शनीयं कटं करोति, एहि मन्ये रथेन यास्यतीति।

**निपाताः** कर्मप्रवचनीयाः अव्ययानि च, यथा– अहं च त्वं च वृत्रहन्, असांप्रतं जेतुमित्यादयः।

**आख्यातानि** कृतस्तद्धिताश्च, यथा– स्मरसि देवदत्त कश्मीरेषु वत्स्यामः, रैपोषं पुष्यति, ब्राह्मणवद् ब्रवीति।

**सम्बोधनादयः** आमन्त्रणमवधिभावो लिङ्गं च, यथा– हे देवदत्त, भुक्त्वा व्रजतीति, स इति। संबन्धादयश्शेष इति, उपपदम्, सहार्थश्च, यथा– राज्ञः पुरुषः, कुशलं देवदत्तायेति, पुत्रेण सहायात इति।

**हेत्वादयो** हेतुर्लक्षणं तादर्थ्यं च, यथा– विद्यया यशः, कमण्डलुना छात्रः, यूपाय दार्विति।

कथं पुनरयं हेतुः कारकाद् विशिष्यते?

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्॥ ४९॥** (वाप. ३.७.२५)

यथा– बीजेन सस्यं, तपसा कृशः, अन्नेन वसति, व्रतेन ब्राह्मण्यम्। कारकं यथा– देवदत्तः श्रद्धया तीर्थे हेमशतं निष्कं ब्राह्मणाय ददाति। यद्येवं द्रव्यादिविषयत्वेन सहार्थत्वाद् हेतोरभेदः प्राप्नोति।

सहार्थोऽपि द्रव्यादिविषयत्वेन क्रियायामनियत एव भवति। यथा– पुत्रेण सह गोमान्, पुत्रेण सह स्थूलः, पुत्रेण सहागच्छति, पुत्रेण सह ब्राह्मण इति।

नैवम्; न हि सहार्थस्य द्रव्यादीन् प्रति निव(र्व)र्तनभावश्शब्देनोच्यते। हेतोः पुनराश्रितव्यापारस्यापि तृतीयादिभिः सोऽपि विधीयत इति क्रियाविषयः करणात्कथं भिद्यत इति चेत्,

**क्रियायै करणं तस्य दृष्टः प्रतिनिधिस्तथा ।**
**हेत्वर्थोऽपि क्रियाहेतुर्न च प्रतिनिधीयते ॥ ५०॥** (वाप. ३.७.२६)

तर्हि तादर्थ्यादभेदः।

किमिदं तादर्थ्यं नाम?

कार्यस्य कारणं प्रति प्रयोजकत्वं तादर्थ्यम्; विशिष्टः कार्यकारणभाव इति यावत्। यद्धि यदर्थं तन्नियोगतस्तस्य कारणं यथा अङ्गुलीयाय कनकमिति।

कथं तर्हि हेतोर्न भिद्यते?

यतः कारणस्य कार्यप्रसवयोग्यता हेतुत्वम्; कार्यस्य कारणं प्रति प्रयोजकत्वं तादर्थ्यमिति। अयं च विशेषः कार्यवाचिन एव तादर्थ्ये चतुर्थी कार्यवाचिनो निमित्तवाचिनश्च हेतोस्तु तृतीयेति।

यद्येवं हेतुलक्षणयोर्हेतुलक्षणा तृतीया कनकात् प्राप्नोति।

न च तादर्थ्यचतुर्थ्या बाध्यते, विषयभेदात्; कार्यवाचिनो हि तृतीया, चतुर्थी कारणवाचिन इति।

कथं च संबन्धे विधीयमाना चतुर्थी कार्यशब्दादेव, न कारणशब्दात्।

अपि च भिन्नाधिकरणत्वात् संबन्धस्य, यथा राज्ञः पुरुष इति द्विष्ठमपि संबन्धं राजशब्दादुत्पद्यमाना षष्ठी उपाधत्ते। तथा कार्योपजनित– व्यतिरेकादुत्पद्यमाना चतुर्थ्युभयमपि संबन्धमुपाधास्यते इति।

नैवम्; तस्मै तदर्थमिति सर्वनाम्ना योऽर्थः प्रतिपद्यते स एव स्वकारणापेक्षया प्रापितव्यतिरेकश्चतुर्थ्या संबध्यते। यथा– यदर्थमस्य मन्त्रः तदनेनाधिगतमिति सर्वनामार्थ एव कार्ययोगी, तथेहापि तच्छब्दोपात्त एवार्थः प्रयोजनतया विपरिणतः; तदर्थं शब्दो नाभिधीयते।

भावप्रत्ययान्तोऽप्यसौ कार्यगतमेव रूपं विशेषेणाचष्टे, कार्यस्य कारणं प्रति प्रयोजकत्वं तादर्थ्यमिति। तत्कथं कारकस्य तादर्थ्यविभक्तिराशङ्क्येत? कार्यस्थयाऽपि चतुर्थ्योभयगतस्यापि संबन्धस्यावगतत्वात् अव्यतिरिक्तप्रातिपदिकार्थाभिन्नः कारणशब्दाद् भवति, न तु व्यतिरेकलक्षणा तृतीयेति। अयं च हेतुतादर्थ्ययोर्विशेषः।

**प्रातिलोम्यानुलोम्याभ्यां हेतुरर्थस्य साधकः ।**
**तादर्थ्यमानुलोम्येन हेतुत्वानुगतं तु तत् ॥ ५१ ॥** (वाप. ३.७.२७)

वासेनाधीते, अध्ययनेन वसतीति, या च यूपाय दारु, अध्ययनाय वसतीति। यस्तु मन्यते तदर्थता तदर्थता तद्विषयस्य पारार्थ्यरूपा, कार्यप्रसवयोग्यता हेतुः, अनन्यार्थस्य तादर्थ्यम्, तस्य तद्विषयस्येति अनन्यार्थस्येति विशेषणद्वयमपार्थम्, उभयत्राविशेषात्। यदि तावदर्थस्यानन्यार्थता तादर्थ्यम् तदसत्। कनकस्य वलयादावपि सामर्थ्यं, सङ्घातात्। अथोक्तिधर्मेण, तद्धेतावपि समानम्। न हि विद्याया यशोहेतुतां मुक्त्वा कार्यान्तरयोग्यतां ब्रूते। पारार्थ्यरूपेत्यपि न वचनीयं, कार्यप्रसवयोग्यतेत्यनेनैव गतार्थत्वात्। ननु च नटस्य

शृणोतीत्यादौ कार्यप्रसवयोग्यस्यापि नटादेः पारार्थ्येन विवक्षायां मा भूद्धेतुत्वमिति विशेषणं क्रियते। नैवम्; यथा उपाध्यायादधीत इति उपाध्यायादेः परार्थत्वेन कारकत्वं, प्रयोजकत्वमेव च तादर्थ्यमिति।

अथ लक्षणस्य का वार्ता? लक्षणमपि तादर्थ्यवद्धेतुविशेष एव। सिद्धो हि हेतुः कारको ज्ञापकश्च। तत्र कारकस्य स्वव्यापारानाश्रयणे हेतुरित्याख्या, ज्ञापकस्य लक्षणमिति; पदार्थान्तरपरिच्छेदहेतुता हि लक्षणार्थः। तदुक्तम्—

**अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ।**
**आश्रयावधिभावं तु लक्षणे लक्षणं विदुः ।। ५२।।**(वाप. ३.७.२४)

क्वचित्तु हेतुरपि लक्षणं भवति; यथा 'शाकल्यस्य संहितामनु प्रावर्षत्, अनडुद्यज्ञमन्वसिञ्चत्, प्रजाः पर्जन्य इति। एतेन वृक्षं प्रति विद्योतते (विद्युद्) इति द्रव्यलक्षणम्, जटाभिस्तापस इति इत्थंभूतलक्षणम्, अक्ष्णा काण इति विकारलक्षणं, वाताय कपिला विद्युदित्युत्पातलक्षणं, गोषु दुह्यमानासु गत इति भावलक्षणं, पचन्नास्त इति क्रियालक्षणं च व्याख्यातमिति।

## (१०. वाक्यम्)

**एकार्थपरः पदसमूहो वाक्यम्**। तत् त्रिधा—

**१. संस्कृतम्,**
**२. प्राकृतम्,**
**३. अपभ्रंशश्च**। तत्र—

### (१. संस्कृतम् )

**संस्कृतं** श्रौतम्, आर्षं, लौकिकं च। तेषु —

**श्रौतं** द्विधा **मन्त्रब्राह्मण**भेदात्। तत्र —

**मन्त्रो** यथा— (तैआ. १०.१.७)

**तदेवाग्निस्तद् वायुस्तत् सूर्यस्तदु चन्द्रमाः ।**
**तदेव शुक्रममृतं तदापस्स प्रजापतिः ।। ५३।।** तद् ब्रह्म ।

**ब्राह्मणं** यथा— (बृउ. ४.३.३३)

**शं यो मनुष्याणां रागद्धः समृद्धो भवति । तत्रान्येषामधिपतिः सर्वेषां मनुष्यकैः कामैस्संपन्नतमः । स मनुष्याणां परम आनन्दः ।।**

**आर्षं** द्विधा **स्मृतिः पुराणं** च। तयोः

**स्मृतिर्**यथा– (मनु. ३.१३)

**शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।**
**ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः ॥ ५४॥**

**पुराणं** यथा– (वायुपु. ६७.६५)

**हिरण्यकशिपुर्दैत्यो यां यां साचि व्युदैक्षत ।**
**भयभ्रान्तैस्सुरैश्चक्रे तस्यै तस्यै दिशे नमः ॥ ५५॥**

**लौकिकं** द्विविधं **काव्यं शास्त्रं** च।

तयोः **काव्यं** यथा–

**कस्य नो कुरुते मुग्धे! पिपासाकुलितं मनः ।**
**अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥ ५६॥**

**शास्त्रं** यथा–

**प्रकामधवलं यस्याश्चक्षुः पर्यन्तपक्ष्मलम् ।**
**नवनीतोपमं तस्या भवति स्मरमन्दिरम् ॥ ५७॥**

(२. प्राकृतम्)

**प्राकृतं** त्रिधा **सहजं, लक्षितं श्लिष्टं** च। तेषु –

**सहजं** द्विधा **संस्कृतसमं देश्यं** च। तयोः –

**संस्कृतसमं** यथा–(मामा. ६.१०)

**सरले! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम् ।**
**विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥ ५८॥**

**देश्यं** यथा– (असाध्यसंस्कृता गाथा)

**विप्प अपि आपु आणुणाहं षडरसमं परिहसन्तेई ।**
**वासअर विणडिओ विसं ललंस्व णावेसि ॥ ५९॥**

**लक्षितं** द्विधा **महाराष्ट्रं शौरसेनं** च। तयोः –

**महाराष्ट्रं** यथा– (सेब. १.१)

**णमह अवड्ढिअतुंगं अवसारिअवित्थअं अणोणअगहिरं ।**
**अप्पलहुअपरिसण्हं अणाअपरमत्थपाअडं महुमहणं ॥६०॥**

(नमत अवर्धिततुङ्गमप्रसारितविस्तृतमनवनतगभीरम् ।
अप्रलघुकपरिश्लक्ष्णमज्ञातपरमार्थप्रकटं मधुमथनम् ॥)

**शौरसेनं** यथा– . . . . . . .

**श्लिष्टं** द्विधा पैशाचं मागधं च। तयोः **पैशाचं** (बृहत्कथामङ्गलम्) यथा–

**पनमथ पनय–पकुप्पित–को/गोली–चलनग्ग–लग्ग–पतिबिंबं ।**
**तससु नख–तप्पनेसुं एकातस तनु–थलं लुद्दं/रुत्तं ।। ६१ ।।**
(प्रणमत प्रणयप्रकुपितगौरीचरणाग्रलग्नप्रतिबिम्बम् ।
दशसु नखदर्पणेषु एकादशतनुधरं रुद्रम् ।।)

**मागधं** यथा–(वेसं. ३.१)

**हद-माणुश-मंश–भोअणे कुंभ–शहश्शं वशाहिं शंचिदे ।**
**अणिशं अ पिबामि शोणिदं वलिशशदं शमले हुवीअदु ।। ६२ ।।**
(हतमानुषमांसभोजनं कुम्भसहस्रं वसाभिः सञ्चितम् ।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ।।)

**(३. अपभ्रंशः)**

अपभ्रंशस्त्रिधा **उत्तमो, मध्यमः कनिष्ठ**श्च।

**(उत्तमः)** तेष्वावन्त्यलाटीयादि**रुत्तमः**। तत्र–

**आवन्त्यो** यथा–

**एकदू असलोणी अल आहरणसुसंठवी अच्छि**
**उपलंपटं वीवउकहिंमलं भट्टएवटपि अमइए ।**
**उणजाणिउं विरहातुरणुजूरि अएमज्झ**
**हरोदावणुदिण्णुवहिणे विण्णूरि अ ए ।।**[१]

**लाटीयो** यथा–

**हिरउ हरन्त हो चोरहोए भुजिदंदुहले जप्पिउपणव्व सच्छिले विलोइ अउगणे ।**
**एहु पुणु पिणघणत्थणि संघट्टउ क्कपणु जं चन्दाणणे दिज्जइ अहरहो दन्तपणा/वणु।।**
(हृदयं हरतश्चौरस्यैष एव दण्डो हले, यत् प्रिय एणशावाक्षि गृहीत्वा लागितो गले।
एष पुनः पीनघनस्तने संघट्टः को यच्चन्द्रानने दीयतेऽधराय दन्तव्रणः।।)

**(मध्यमः)** आभीरगौर्जरादिः **मध्यमः**। तयोः –

**आभीरो** यथा–(द्र. ८.२८)

**लवियप्फउ वीउदुद्दडाकउ हहाण एच्छसि ।**
**पुत्तहोमत्थजिभु जळदहिडां उजं मे पि जवि आआसि ।। ६५ ।।**

---

१. इमामारभ्य सप्त गाथा HOS-53 ग्रन्थे अन्यथैव मुद्रिताः। कुलकर्णिपाठस्तु दीयते।

**गौर्जरो** यथा--(द्र. ८.७)

**अव अख्खो ञ्झी समुद्रुतरि सिलदुहि गरुकाणि ।**
**मन्दो हि ए पिलहि अउअ जंपरुच्चइतें व अणि ।। ६६।।**

काश्मीरपौरस्त्यादि: **कनिष्ठ:** । तयो: **काश्मीरो** यथा--(द्र. सक. पृ. ६९२)

**कंवलि आल ए कं ते कुदुच्छलदन्तहि विठि सुद्धि एमं इवि आलसीलंति ।**
**सव अंगापिदुसरासहि खवाचि दुं फलिनन्तेकी आआसण अदसि ।।**

**पौरस्त्यो** यथा--

**महणाहि अकुटुंबि सामइंदीहिरेरेभाउ जपिहुरि ।**
**विण्णउजान्तां वव्हरिवामेक्केरेधूजे वासां हावाथि ।।**
**आंखीजणुकणांसहुंकाजाथितेहाथेंचित उदूकराए ।**
**वल आच्छइणी जीव उपाथरुस अंणइ भवणहिं वाच्छरं ।। ६८।।**

**(वाक्यमेकादशधा)**

तदेतत् समस्तमपि **वाक्यजातमाख्यातोपाधे: एकादशप्रकारं** विप्रथते। तद्यथा--एकाख्यातमनेकाख्यातमावृत्ताख्यातमनुवृत्ताख्यातं विपरिणताख्यातमेकार्थाख्यातं समुच्चिताख्यातं कृदभिहिताख्यातमपेक्षिताख्यातमेकान्तराख्यातं निरन्तराख्यातमिति। तेषु

(१) **एकाख्यातं** यथा-- **वागर्थाविव** (रघु. १.१) (पृ. ४९९)

(२) **अनेकाख्यातं** यथा--

**यदेव रोचते मह्यं तदेव कुरुते प्रिया ।**
**इति वेत्ति न जानाति तत् प्रियं यत् करोति सा ।।७०।।**

(३) **आवृत्ताख्यातं** यथा--

**जयत्यमलकौस्तुभस्तबकितांसपीठो हरि--**
**र्जयन्ति मृगलोचनाश्चलदपाङ्गदृष्टिक्रमा:।**
**ततो जयति मल्लिका तदनु सर्वसंवेदना--**
**विनाशकरणक्षमो जयति पञ्चमस्य ध्वनि:।।**

(४) **अनुवृत्ताख्यातं** यथा--

**चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिन: ।**
**चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ।।७२।।**

(५) **विपरिणताख्यातं** यथा–

**सोऽस्मिञ्जयति जीवातुः पञ्चेषोः पञ्चमध्वनिः ।**
**ते च चैत्रे विकीर्णैलातक्कोलीकेलयोऽनिलाः ॥७३॥**

(६) **एकार्थाख्यातं** यथा– (रघु. १.५४)

**तामवातारयत् पत्नीं रथादवततार च ॥७४॥**

(७) **कृदभिहिताख्यातं** यथा– (महा.द्रोण. १८४.८६)

**ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥७५॥**

(८) **अध्याहृताख्यातं** यथा–

**यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।**
**यश्चैनं गन्धमाल्याभ्यां सर्वत्र कटुरेव सः ॥७६॥**

(९) **अनपेक्षिताख्यातं** यथा–

**कियन्मात्रं जलं विप्र! जानुदघ्नं जनाधिप! ।**
**तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥७७॥**

(१०) **एकान्तराख्यातं** यथा– (भट्टि. १३.२७)

**तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।**
**तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्तो जहृषुः प्लवङ्गाः ॥७८॥**

(११) **निरन्तराख्यातं** यथा– (भट्टि. १३.२८)

**भ्रेमुर्ववल्गुः ननृतुर्जहर्षुर्जगुस्समुत्पुप्लुविरे निषेदुः ।**
**आस्फोटयांचक्रुरभिप्रणेदू रेजुर्ननन्दुविययुस्समीयुः ॥७९॥**

ननु च निरन्तराख्यातं समुच्चिताख्यातमेकार्थाख्यातमावृत्ताख्यातमित्यादयो वाक्यविकल्पा नोपपद्यन्ते; **वाक्यकारो** हि मन्यते नास्त्येव तिङन्तयोस्संबन्धः; तथा च 'तिङ्ङतिङः' (८.१.२८) इत्यत्र 'अतिङ्वचनमनर्थकं समानवाक्याधिकाराद्' {८.१.२८(१)} इत्यतिङ्वचनं प्रत्याचष्टे। न ह्येकत्र वाक्ये द्वे तिङन्ते स्त इति। एवं **वाक्यलक्षणं** करोति– **आख्यातं साव्ययकारकविशेषणं वाक्यम्।** तत्राख्यातग्रहणं न कर्तव्यम्; न ह्यव्ययकारकविशेषणपदानि निबन्धनमन्तरेणावतिष्ठन्ते। आख्यातमेवैषां निबन्धनमिति लब्धे, व्याख्याने पुनराख्यातग्रहणं आश्रितसङ्ख्याख्यातपदपरिग्रहार्थम्,

यत्रैकमाख्यातपदमव्ययकारकविशेषणपदानि सन्निपतन्ति, **तद्वाक्यं** यथा स्यात्। अनेकाख्यातपदप्रयोगे तु वाक्यसंज्ञा मा भूदित्यनाश्रितसङ्ख्यातपदाशङ्कानिरासार्थम् **'एकतिङ् वाक्यम्'** इति वचनान्तरमारभते।

तत्रेदं विचार्यते— किमेकस्मिन् वाक्ये द्वयोस्तिङन्तयोस्संबन्ध एव नास्ति, उत सत्यपि संबन्धे द्वितीयं न प्रयुज्यते एकतिङ् वाक्यमिति पूर्वाचार्यसमयादनु किञ्चिदाह — सत्यपि तिङन्तयोस्संबन्धे तिङन्तामन्त्रितनिघातयुष्मदस्मदादेशप्लुतादिकार्यव्यवस्थार्थ-मेकतिङ्वाक्यमिति **पारिभाषिकमेव वाक्यलक्षणं क्रियते**।

किं कारणम्?

समानवाक्यार्थात् पदादुत्तरयोस्तिङामन्त्रितयोर्निघातस्स्मर्यते। युष्मदस्मदोः वांनावादय (८.१.२०) आदेशा विधीयन्ते। 'वाक्यस्य टेः प्लुत उदात्तः' (८.२.८२) इति वाक्याचामन्त्यस्य प्लुतश्शिष्यते इति। तच्च तदोपपद्यते यदैकतिङ्वाक्यमिति पारिभाषिकं वाक्यलक्षणं क्रियते। अन्यथा 'समर्थः पदविधिः' (२.१.१) इति पदानां परस्परासामर्थ्ये वाक्यस्य चापरिसमाप्तौ सर्वथा न प्राप्नोति। तथा हि 'नद्यास्तिष्ठन्ति कूले, वृक्षस्य लम्बते शाखायां, कः प्रिये मयि कोपः? का सुभग प्रिया ते? शालीनां ते ओदनं दास्यामीति मे माता ब्रवीति, आगच्छ भो देवदत्त कुग्रामं गच्छावः, ग्रामं यदि यासि रे मामपि प्रतीक्षस्व।' अत्र तिष्ठतिना कूलमभिसंबन्धात्, नदी; लम्बनेन शाखा, न वृक्षः; क इत्यनेन कोपो, न प्रिया; केत्यनेन तु प्रिया, न सुभगः; ते इति युष्मदर्थेन ओदनं, न शालयः; मे इत्यस्मदर्थेन माता, न वचनम्; आगच्छ देवदत्त, ग्रामं यदि यासि रे, इत्येतावति वाक्ययोरपरिसमाप्तिः, किं तर्हि? गच्छावो, मामपि प्रतीक्षस्वेति। ततश्च निघातादिकार्याणामप्राप्तिः। एकतिङ्परस्य तु पदसमुदायस्य वाक्यत्वे परम्परया यथाकथञ्चिदभिसंबन्धे निघातयुष्मदस्मदादेशा युज्यन्ते। 'युक्तयुक्ते चोपसङ्ख्यानम्' इति युक्तेन वक्तव्यं भवति। एवं साकाङ्क्षस्यापि पदकदम्बकस्य एकतिङवच्छेदेन वाक्यत्वप्रतीतौ 'वाक्यस्य टेः प्लुत' इति वाक्याचामन्त्यस्योदात्तः प्लुत इति सिद्धो भवति।

कश्चित्तु ब्रूते—नास्त्येव तिङन्तयोस्संबन्धः। स हि तिङन्तेषूपकल्प्यमानः षोढैवावकल्पते—विशेषणविशेष्यसम्बन्धः, साध्यसाधनसम्बन्धः, लक्ष्यलक्षणसम्बन्धः, हेतुहेतुमत्सम्बन्धः, अवध्यवधिमत्सम्बन्धः, समुच्चयादिसम्बन्धश्चेति। तत्र विशेषण-विशेष्यसंबन्धस्सामानाधिकरण्येन वा स्यात् वैयधिकरण्येन वा। न तावत् सामानधि-

करण्येन, पचति पठतीत्येतयोरत्यन्तमर्थभेदात्; न हि पदार्थयोरत्यन्तभेदेऽभेदे वा विशेषणविशेष्यभाव उपपद्यते। न हि भवति आम्रश्चूतोऽश्वत्थ इति, यत्र तु नात्यन्तभेदो अभेदो वा तत्रोपपद्यते, यथा नीलमुत्पलमिति।

ननु यथा प्रपचति स्तोकं पचति इत्यादावुपसर्गेण स्तोकादिना वाऽऽख्यातं विशेष्यते, तथाऽऽख्यातान्तरेणापि कस्मान्न विशेष्यते? नैवम्; अत्र यथा नीलवीरशब्दौ नीलत्ववीरत्वे विशेषणरूपेणाभिदधतौ उत्पलं पुरुषं च सामान्येनोपगृह्णीतः। न तूत्पलपुरुषसामान्ययोर्वा नियतौ भवतः, उत्पलपुरुषशब्दावप्युत्पलपुरुषौ विशेष्यरूपेणा– भिदधतौ नीलत्वं वीरत्वं च सामान्येनोपगृह्णीतः; न तु तत्सामान्ययोस्तद्विशेषणयोर्वात्मानं नियमयतः। परस्परोपश्लेषकृतयोर्विशेषणविशेष्यभावो भवति। न वैतत् पचति पठतीत्येतयोरुपपद्यते; न हि नीलोत्पलादिवत् पचतिः पठतिं, पचतिं वा पठतिरुपग्रहीतुं शक्नोति।

ननु चात्यन्तमभिन्नार्थभिन्नार्थयोश्च दृश्यते विशेषणविशेष्यभावः। अभिन्नार्थयोर्यथा अधीते, अध्येति। भिन्नार्थयोर्यथा प्रतिष्ठते, प्रस्मरति। नैवम्, अधीते, अध्येतीत्येतयोर्यद्यपि धातुरुपसर्गं न व्यभिचरति, व्यभिचरत्येवोपसर्गो धातुम्, अतश्शक्यतेऽन्वयव्यतिरेका– भ्यामर्थभेदः कल्पयितुं, यदर्थोऽयमधिरन्यत्र दृष्टस्तदर्थ इहापि भवितुमर्हति। अयं चाधिरन्यत्रोपरिभावार्थो दृष्टः, यथा अध्यास्ते, अधिरोहतीति; ते मन्यामहे अस्य स एवार्थ इति। तस्मादधीङेव शब्दक्रियो ज्ञानक्रियश्चेति, अधिशब्दस्त्वेतमेवार्थमुपरिभावेन विशिनष्टि। विशिष्टार्थवतां शब्दानां विधिपूर्वं वा शब्दानां तथाधीतार्थविषयमेतद्विज्ञानमिति एतावानेवार्थोऽधिना विभज्यते। इह तर्हि कथं प्रतिष्ठते, प्रस्मरति इति। न ह्यत्र सत्यपि केवलप्रयोगे तिष्ठतेः स्मरतेर्वा पचतिवत्सामान्याभिधायित्वम्। किं तर्हि? विरोधिन्येव क्रिया गम्यते व्रजिक्रिया स्मरणनिवृत्तिश्च। व्यक्तं च प्रतिष्ठत इत्यनेन स्थानप्रारम्भो नोच्यते; किं तर्हि? गमनमेव; प्रस्मरतीत्यनेनापि स्मरणारम्भो नोच्यते, अपि तु स्मरणानारम्भ एवेति।

नैष दोषः। प्रशब्दोऽयं प्रपचतीत्यादिषु आदिकर्मवचनत्वेन निर्ज्ञातः; अस्य विशेषतोदृष्टादनुमानादादिकर्मवचनत्वमनुमीयते। तिष्ठतिश्च देवदत्तस्तिष्ठतीत्यादौ क्रियावचनाद्धातुत्वेन निर्ज्ञातः; अतोऽस्य सामान्यतोदृष्टादनुमानाद्गमनार्थत्वमपि विज्ञायते। बह्वर्था अपि धातवो भवन्ति, वपिः प्रकिरणे दृष्टश्छेदने ऽपि प्रवर्तते केशान्वपतीति। ईडतिश्च। ईडतिश्च स्तुतौ दृष्टः प्रेरणेऽपि प्रवर्तते, अग्निर्वा इतो वर्षमीट्टे; करोतिरपूर्वप्रादुर्भावे दृष्टो निर्मलीकरणेऽपि वर्तते; पादौ कुरु, षष्ठं पृष्ठं कुरु, उन्मृदानेति गम्यते। तथा कटे कुरु,

अश्मानमितः कुरु, निक्षिपावक्षिपेति गम्यते। अयमपि च धातुत्वादनेकार्थो भवितुमर्हति। एतेन स्मरतिरपि व्याख्यातः। न चैतन्न दृष्टं विरुद्धार्थावर्थौ तुल्यरूपेण शब्देनाभिधीयेते। तद्यथा—सन्निकर्षविप्रकर्षयोर्दृष्टमाराच्छब्देनाभिधानम्—**'आराच्छत्रुमपबाधस्व दूरम्'** (ऋवे. १०.४२.७) **'दूराद्दवीयो अपसेध शत्रून्'**(ऋवे. ६.४७.२९)। अतस्तिष्ठतिरेव गमनार्थः, स्मरतिरेव स्मरणनिवृत्तिक्रियः; तद्विशेषश्चोपसर्ग इति युक्तमुक्तं वस्तुनोरत्यन्तभेदेऽभेदे वा विशेषणविशेष्यभाव इति। यदाह—**''सम्भवे व्यभिचारे च विशेषणमर्थवद्भवति''** इति।

नापि वैयधिकरण्येनाख्यातमाख्यातस्य विशेषणं भवति, प्राधान्येऽसति असत्त्वभूतार्थत्वात्। इह राज्ञः पुरुष इति भरणादिक्रियानिमित्तो व्यतिरेको विशेष—सम्बन्धनम्। न च प्राधान्यस्यैव राजार्थस्योपजायते; न च तथाख्यातार्थस्य प्राधान्यं सत्त्वाभावे वा सम्भवति। यत्रापि च क्रियापदं श्रूयते मातुः स्मरति सर्पिषो जानीते इति तत्रापि सा क्रिया साध्यास्येत्यनेन रूपेणाश्रीयमाणसत्त्वभूतस्याप्रधानस्य मात्रादेरर्थस्य व्यतिरेक उपजायते; श्रूयमाणक्रियाविशेषसम्बन्धनिमित्तं भवति। न चैतदाख्यातस्योपपद्यते, सत्त्वभूतत्वादेव निमित्तानिर्देश्यतयास्येति व्यपदेशाभावात्। यत्खलु परिनिष्ठितस्वभावमस्य तस्येति सर्वनामप्रत्यवमर्शयोग्यं तद्विशेषणतया क्वचिदुपयुज्यते वा न वा? यत्पुनरात्मनैवाऽपरिसमाप्तरूपे तद्विपरीतं, तत्कथमिवान्यस्य विशेषणत्वं यायात्?

नन्विदानीमेव प्रपचति, स्तोकं पचतीत्यसत्त्वभूतयोः प्रशब्दस्तोकशब्दयो—र्विशेषणत्वमुक्तम्। नैवम्; अन्यथा तदुपपत्तेः, उपसर्गाणां क्रियाविशेषणानां वा सत्त्वभूतानामप्यनन्यविषयत्वेनैव क्रियां प्रति गुणभावो भवति। तथा हि—योऽसौ क्रियाभूतो धर्मः प्रारम्भादिः, तं क्रियार्थमिव क्रियानुप्रविष्टमसत्त्वभूतमभिदधत् प्रशब्दोऽभिव्यञ्जयति। यदि वा यथाक्षिनिकोचादयोऽनभिदधत एवार्थान् प्रदर्शयन्ति, एवं क्रियास्थान् प्रारम्भादीनन—भिदधत एव प्रादयोऽवद्योतयन्ति। दृश्यते अनधीयमानस्याप्यर्थस्यात्मस्थस्यावद्योतनं, यथा दाण्डा क्रीडेति; 'तदस्यां प्रहरणमिति क्रीडायां णो' (४.२.५७) विहितः क्रीडामब्रुवन् प्रहरणत्वं दण्डत्वमवद्योतयति। तस्मात् प्रपचतीत्यत्र पचिमेव संदिग्धं विशेष एव स्थापयन्नसत्त्वार्थोऽपि प्रशब्दो विशेषणत्वं लभते। एवं स्तोकशब्दोऽपि क्रियाभूतं धर्ममपकर्षादिकं क्रियार्थमिव असत्त्वभूतं क्रियानुप्रविष्टमभिदधानः क्रियानुरोधादेवा—सत्त्वभावमापन्नः क्रियाविशेषणत्वं भजते।

न चैवमाख्यातान्तरस्थं विशेषणमाख्यातमभिव्यञ्जयितुमभिधातुं वा शक्नोति, द्वयोरपि प्राधान्येन परस्परानपेक्षत्वात्। भवतु चोपसर्गादिरसत्त्वार्थस्यापि नीलोत्पलादिवदेव सामानाधिकरण्येन विशेषणविशेष्यभावः; वैयधिकरण्ये तु व्यतिरेकापेक्षायां कथमिवैतद्भवति? न हि अपरिनिष्पन्नत्वेनात्मलाभ एव क्षीणस्यापरोपकारिणः करणादयो व्यतिरेका युज्यन्ते। अतो वैयधिकरण्येनापि न तिङन्तयोर्विशेषणविशेष्यभावस्सम्बन्धो भवति। साध्यसाधनभावोऽपि नोपपद्यते, स हि क्रिययोः कर्तृत्वे कर्मत्वे वा स्यात्; साध्यं हि वस्तूत्पद्यमानत्वेन कर्ता कर्म चेति। न चैतदुभयमपि क्रियायाः क्रियान्तरं प्रति युज्यते। तिङन्तेन हि क्रियात्मोत्पत्तिं प्रति प्रयतमानकारकाकाङ्क्षापि प्रकृत्या प्रयोगेषु विनिवेशितस्वरूपाऽभिधीयते। अतोऽप्रतिलब्धात्मरूपत्वेन क्रियायास्साधनपरवशत्वेन तदवरुद्धत्वादितरेण क्रियात्मना सम्बन्धसत्त्वेनास्याः कर्तृरूपता कर्मरूपता वा सम्भवति, यतः परिनिष्पन्नरूपस्यात्मलाभनिरपेक्षस्य सिद्धात्मनस्साधनाभावो घटते, न तूक्तविपरीतात्मन इति। क्रियायाश्चायमेव स्वभावः, यदुत साधनाधीनत्वेन साध्यस्वभावायाः प्रतीतिः। या च साध्यस्वभावा सा कथमिवान्यस्मिन् साध्ये साधनभावं गच्छेत्, येन कर्त्रीत्युच्यते? या च साधनाधीनत्वेन साध्यस्वभावा सा कथमिव क्रिया साध्येत, येन कर्मेत्युच्यते? यदि च स्यात् परिनिष्पन्नरूपद्रव्यवदेवेदंतया निर्दिश्येत। न च निर्दिश्यते, अतोऽनिदन्तया निर्देशादपि न साधनम्। अवस्थारूपश्च साधनधर्मो व्यापारशब्दवाच्यः क्रिया। सा कथमिवात्मसिद्धये तथाबिवधमेव धर्मान्तरमपेक्षेत? अनपेक्षितयोश्च कथमिव मिथस्सम्बन्धोपपत्तिः?

न च क्रियायाः किमपि तदवशिष्यते यत्साधनैरसाधितं क्रियान्तरस्य साध्यं भविष्यति। तदेवमितरेतरानायत्तरूपयोरसम्बन्ध एव क्रिययोः। न च निर्वर्तमानलब्धात्मकं वस्तु निर्वर्तकादृते परेण सह सम्बन्धमर्हेत्। उपकार्योपकारकनिबन्धनस्वभावानामितरेतरेण संबन्धलब्धात्मकस्य चोपकारकत्वम्। क्रिया च तथारूपत्वविरहात् साधनेभ्यस्स्वोत्पत्ति-मवेक्षमाणा कथमिवातथाभूतक्रियान्तरेण संबन्धमियात्? तस्मात् स्वसाधनावरुद्धत्वात् साध्यमानैकस्वभावायाः क्रियायाः कर्तृत्वे कर्मत्वे वा न क्रियान्तरेण सह संबन्धः।

ननु च यथा पाकं करोति, पाको वर्तते इति तिङ्कृदभिहितयोः क्रिययोस्साध्य-साधनभावो दृश्यते, तथा च पठति पचतीत्येतयोरपि कस्मान्न भवति? नैवम्; उक्तमिदं **भाष्ये**, 'अस्ति खलु तिङभिहितस्य कृदभिहितस्य भावस्य विशेषः,

कृदभिहितो हि भावो द्रव्यवत् प्रकाशमानः क्रियया समवायं गच्छति' इति। न हि भवति पचति पठति इति लक्ष्यलक्षणभावोऽप्याख्याताभिहितयोः क्रिययोरभिन्न–साधनयोर्वा संभवति। द्विधापि चानुपपत्तिः; साध्यमानत्वेन प्रवर्तमानस्य साधनपरतन्त्रस्य चात्मनोऽनिदन्तानिर्देशस्य साधनवल्लक्षणत्वायोगात्। ननु च मा भूत् क्रियायास्साधनम्; लक्षणं तूभयथापि दृश्यते, पाचकः पठति, रुदतः प्राव्राजीदिति। ततो यः पचति स पठति, स रोदिति, अयं प्रव्रजतीत्याख्यातयोर्लक्ष्यलक्षणभावो भविष्यति। चिरं जीव, त्वयैव स्मारितोऽस्मि। आख्यातयोर्लक्ष्यलक्षणत्वेना–सम्बन्धकारणस्य यदत्र 'लक्षणहेत्वोः क्रियायाः' (३.२.१२६) इति शतृशानचौ तिङपवादौ स्मर्येते। अतो लक्षणत्वे क्रियायाः क्रियान्तरं प्रति समाश्रीयमाणे पचन् पठति, रुदतः प्राव्राजीदित्येव भवितव्यम्।

ननु यः पचति स पठति, स रोदित्ययं प्रव्रजतीति तत्कथं सम्बन्धः? एतेन हेतुहेतुमद्भावः आख्यातयोः प्रत्युक्तो भवति, यतोऽसावपि द्विधा–हेतुर्वा हेतुमत्परत्वेन, हेतुमतो वा हेतुपरत्वेन। तत्र हेतोर्हेतुमत्परत्वे शतृशानज्भ्यां हेतुमतस्स्वहेतुपरत्वे तुमुनादिभिर्भाव्यम्। यथा पचन् भुङ्क्ते, अधीयमानो वसति, भोक्तुं पचति, भोजको व्रजतीति। ननु पचति, भुङ्क्ते, व्रजतीति तत् कस्य केन संबन्धः? अवध्यवधिमद्भावोऽपि तिङन्तयोर्नास्त्येव। स हि देशतः कालतो वा स्यात्। न तावद्देशतः, तस्य मूर्तिमद्विषयत्वात्। कालतस्तु युज्यते, किंतु तत्र पूर्वकाले क्त्वाप्रत्ययविधानात् पक्त्वा भुङ्क्त इत्येव स्यात्, न तु पचति भुङ्क्त इति। समुच्चयेनापि क्रियायास्संबन्धः। सोऽपि हि द्विधैव; साधनानां वा क्रियायां यथा गौरश्वश्च गृह्यताम्; क्रियाणां वा साधने यथा असौ पचति पठति चेति; न तु क्रियाणां क्रियायामेव।

ननु चैकत्वात् क्रियाया यद्यपि साधनसमुच्चये क्रियाभिसंबन्धो नास्ति, तथाप्येकवस्तुविषयत्वेन क्रियासमुच्चयेऽसौ भविष्यति। तथा हि– य एव पचति स एव पठतीत्यैकाधिकरण्ये भवत्येव सम्बन्धोपपत्तिः। नैवं साध्ययोस्साधनायत्तयोरलब्धात्मनो–स्साधनोन्मुखत्वेन परिवर्तमानयोः, क्रियायाः परस्परानपेक्षत्वात्; न ह्यनन्वितात्मना–मधिकरणमपेक्षामुपजनयितुमलम्। अतस्सव्येतरगोविषाणवत् परस्परेणासमन्वितमेव क्रियाद्वयं साधने समुच्चीयतें न च समुच्चीयमाने वस्तुनी मिथस्संबध्येते, तथा सति समाहारेतरेतरयोरन्यतरापत्तौ समुच्चयस्यैवाभावात्। आदिग्रहणादन्वाचयेऽप्यनन्वय एव क्रिययोः। तस्मान्नास्त्येवाख्यातयोर्मिथस्संबन्ध इति।

ननु च अस्ति स मे रोचते, अस्ति त्वमीशिषे, नाहं रमेऽस्मि इति सामानाधिकरण्येन विशेषणविशेष्यभावः; भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यादिति कर्तृत्वेन; पश्य मृगो धावति, इह पश्यामः कर्मणि द्विनचनबहुवचनान्युदाह्रियन्ते, एहि मन्ये रथेन यास्यसि, स्मरसि देवदत्त कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे, न मर्षयामि यत्तत्र भवान् वृषलं याजयेदिति कर्मत्वेन साध्यसाधनभावः; यो भुङ्क्ते स गृह्यताम्, योऽधीते स पचतीत्यभिन्नसाधनत्वेन; स स्वपिति एष बुध्यते, स उदेति अयमस्तमेतीति भिन्नसाधनत्वेन लक्ष्यलक्षणभावः; हन्तीति पलायते, वर्षतीति धावतीति हेतोर्हेतुमत्परत्वेन; वक्ष्यामीति व्रजति, भोक्ष्यते इत्यास्त इति हेतुहेतुमतोर्हेतुपरत्वेन हेतुहेतुमद्भावः; यावद्भुङ्क्ते ततो व्रजति, यदयं भुङ्क्ते ततः पठति, यदयं भुक्त्वा व्रजतीत्यधीत एव ततः परमिति अवध्यवधिमद्भावः; सक्तून् पिब, धानाः खाद, ओदनं भुङ्क्ष्वेत्येवायमभ्यवहरति, पचति चायं पठति चेति समुच्चयः; वटो! भिक्षामट गां चानयेत्यन्वाचयोऽपि तिङन्तेषु दृश्यते। तत्कथमुच्यते नाख्यातयोस्संबन्धोऽस्तीति?

नैवम्; वाक्यभेदादिना तदुपपत्तेः। अस्ति स स मे रोचते, असि त्वं त्वमीशिषे, अस्म्यहमहं रमे, अस्त्येतद् गच्छामो वयं, भवत्वेवमेतत् पयसोधयामयत्वममिथ्येवासि (?), यन्मुरजितं त्वमपूपुज इत्युक्तेषु वाक्यभेदा उपपद्यन्ते। निपाता वा अस्त्यादयः आख्यातसरूपा निरर्थका अपि वाक्यपूरणाय कमीमिद्वादिवत्प्रयुज्यन्ते; न तु क्रियाभिर्विशेषणविशेष्यभावमनुभवन्ति। भवति पचतीत्यादिषु तु पचतीति पक्ष्यतीति अपाक्षीदिति च योऽर्थो भवति असावस्तीत्यर्थः। ननु पचत्यादेर्भवतौ कर्तृत्वेन साध्यसाधनभावः; एवं भवेदपि भवेत्, स्यादपि स्यादिति।

ननु चावश्यमेव पचत्यादिक्रिया भवतिक्रियाकर्तृत्वेनाभ्युपेया। यदि ह्येषा न भवेत्तेन कर्त्री स्यात् सिद्धरूपतया, न लकारेणाभिधीयते। न च सा सती सिद्धभावमुपैति। न च लकारः सिद्धतदभिधानेन विना कर्तृभावेनेमां प्रतिपादयितुमुत्सहते। ततो येनात्मना कर्त्री न तेन क्रिया, येन च साध्यात्मना क्रिया न तेन कर्त्रीति वस्त्वन्तरमेव लकारेण कर्तृतया कथितमापद्येत। देवदत्तः पचतीति चानेन ज्ञातवत्प्रज्ञाप्यते विधेयता त्वस्तेर्भवतीत्यत्र तु अज्ञातरूपतयोपादीयते भवनक्रियानुभवितृत्वात्। न च युगपदेव ज्ञातवदज्ञातवच्च समाश्रयणं युक्तम्; अतो न क्रिया कर्तृत्वमुपयाति। पश्य मृगो धावतीत्यत्र तु पश्यशब्दो न तिङन्तः। किं तर्हि निपातोऽयमाश्चर्यमित्येतस्मिन्नर्थे वर्तते; पश्य भुङ्क्ते, अहो आश्चर्यमद्भुतं भुङ्क्त इत्यर्थः।

केचिदाख्यातसरूपौ पश्यपश्यतशब्दौ दर्शनार्हेयं क्रियेत्यस्मिन्नर्थे मन्यन्ते।

अथवा पश्य मृगो धावतीत्यत्र नासावेवमाह—दृशं मृगसरणे नियुङ्क्ष्व; किं तर्हि? चक्षुः प्रणिधत्स्व प्रमत्तो मा भूरिति; यतोऽप्रणिहितचक्षुस्सन् मृगसरणमन्यद्वा प्रतिपद्यते। यथा रूपमग्र्यं दृष्ट्वा एतदेवाह—आलोकय आलोकयेति, तस्मात्पश्येत्येतावति वाक्यस्य परिसमाप्तत्वान्नास्ति दृशस्सरणेन संबन्धः।

अथवा यो धावति मृगस्तं पश्येति सर्वनाम्ना यदा सोऽर्थः प्रत्यवमृष्टो भवति तदा क्रिया तस्योपलक्षणाय प्रवर्तते। यो धावति सर्तारं तं पश्यति; अयं चार्थः पश्य धावतीति पदयोरसंबन्धत्वेन श्रुतार्थापत्तिगम्यः न तु शब्दसन्निवेशी।

यदि वा श्रुतार्थापत्त्येव गम्यमानेतिशब्दोपसंहृतस्य मृगो धावतीति वाक्यार्थस्य दृशौ कर्मत्वमेव। पश्याम उदाह्रियन्त इति।

अथवा द्वे एते वाक्ये—एकमेतावति वाक्यम् 'इह पश्यामः'; कर्मणि द्विवचनबहुवचनादीनि वचनान्येव दृशः कर्मत्वेनावतिष्ठन्ते, नोदाहृतिः। अतश्च पश्यामो यस्मादुदाह्रियन्ते प्रयुज्यन्त इति द्वितीयम्। एहि मन्ये रथेन यास्यसीत्यत्र 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (१.४.१०६) इति वचनाद् यदायमर्थः एहि मन्यसे रथेन यास्यामीति। यदा वा सूत्रप्रतिषेधपक्षे स्वविषय एव मध्यमोत्तमौ तदा सर्वथा गम्यमानेति—शब्दोपसंहृतस्य वाक्यार्थस्यैव कर्मत्वम्। एहीति च प्रहासविषयसंबोधनार्थ आख्यातस्वरूपो निपातः। आख्यातस्वरूपाश्च पुरुषं संख्यां न व्यभिचरन्ति; न हि भवति त्वमस्ति वयमस्तीति। किञ्चास्तिरपि निपातः; सोऽयं यथा अस्तिक्षीरा गौः; तत्र ह्याख्यातमिति कृत्वोक्तः; सुबधिकारेऽस्तिक्षीरादिवचनमिति; न चाव्ययत्वात्; निपातोऽयमिति परिहारः।

ननु च सङ्ख्यामव्यभिचरन् कथमेकशब्दो बहूनां प्रहासे बहुत्वं ब्रूयात्? नैवम्; बहुभिरेकः प्रहस्यते, नैकेन बहवः, न हि बहुष्वेकं प्रहसत्सु सूत्रप्रतिषेधपक्षे 'एहि मन्ये रथेन यास्यामि' (इति)। यदा वा सूत्रप्रतिषेधपक्षे अस्तीति कथं न सत्त्वभूतोऽर्थस्साध्य—साधनसंबन्धमनुभवति? यो भुङ्क्ते स गृह्यतामित्यत्रापि वाक्यद्वितयमेव। न चात्र क्रिययोः लक्ष्यलक्षणभावः, क्रियायाः कारकोपलक्षणत्वात्। तथा हि यो भुङ्क्ते स देवदत्त इति देवदत्तसत्त्वोपलक्षणमेको वाक्यार्थः; स तथाभूतो गृह्यतामिति तस्य ग्रहणसंबन्धः।

**दर्शनमपरम्**— न च यथा सत्त्वं तद्रूपाभिधायित्वेन स्मरणात् कर्तृप्राधान्यमभिदधत् क्रियायाः क्रियान्तरं प्रति लक्षणत्वमभिधत्ते, तथा सर्वनामाभिधातुं शक्नोति। तेन हि सा

क्रिया साध्यत्वात्प्रच्याव्य साधनोपसर्जनभावमुपनीता तत्परामृष्टं देवदत्तमुपलक्षयति; स तु तथाभूतः क्रियान्तरेण संबध्यत इति। न ह्येकस्याः प्रवृत्तेस्साधनोपलक्षणमपरक्रिया–संबन्धश्चोपपन्नो भवति।

नन्विदमेवास्याः क्रियान्तरेणान्वितत्वं यदन्यस्यास्साधनमुपलक्ष्यति। नैवम्, एषा स्वसाधनलक्षणत्वेन प्रवर्तमाना यदधीनोदया तदेवोपलक्षयेत्, नान्यद्, असंबन्धात्। ननु चास्या अपि देवदत्त एव साधनं, स चानयोपलक्षितः, तत्कथं भिन्नवाक्यता? नैवम्; भवतु नाम देवदत्तोपलक्षणत्वमस्याः; किंतु न तं देवदत्ततयोपलक्षयति, अपि तु स्वसाधनत्वेन। ततस्स्वसाधन एव देवदत्ते प्रथमतोऽस्या विश्रान्तिः, देवदत्तस्य च तयैव तदाभिसंबन्धोऽभ्युपेयः। न हि यौगपद्येन लक्ष्यमाणत्वं प्राधान्यं च प्रतिपद्येत, क्रियान्तरे गुणभावं च, विरोधप्रसङ्गात्। न च भुजिक्रियावच्छिन्नस्येतरक्रियाभिसंबन्धोऽभिमतः, समुच्चीयमानक्रियाद्वयप्रसङ्गात्। यो भुङ्क्ते स गृह्यतामित्येकरसा प्रवृत्तिः, प्रत्यासत्तेः। तन्मात्रमिदं सूत्रं, तस्य तु पुनरित्थंभूत एवार्थ इति न तत्र वाक्यभेदः। एतेन योऽधीते स पचतीत्यपि प्रत्युक्तम्। स स्वपित्येष बुध्यते, स उदेत्ययमस्तमेतीत्यत्र तु साधनत्वान्नतरां लक्ष्यलक्षणभावः। हस्तीति पलायत इति– अत्र त्वितिशब्दो हेतुहेतुमद्भावं द्योतयन्नर्थस्य स्वातन्त्र्यं करोति। दृष्ट इतिशब्दोऽर्थस्य स्वातन्त्र्यमुपजनयन्, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१.१.६६) इति। अत्र हि तस्मिन्नित्यधिकरणस्य कर्तृकर्मसमवायिन्यौ क्रिये प्रति उपाधित्वेन प्रवर्तमानस्याकाङ्क्षा; यत आधेयस्तत्र स्वे आत्मन्यवस्थानाभावादिति–शब्देनासत्यवच्छेदे कार्ययोगो न स्यात्। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्युक्ते तस्मिन् य आधेयो निर्दिष्ट इति संप्रत्ययः स्यात्; तस्मात् सप्तम्यर्थनिर्देशे पूर्वस्य कार्यस्य संप्रत्ययार्थमितिशब्द उपादीयते। एवमिहापि। इतिशब्दो वा न तस्य स्वातन्त्र्यमुपजनयति! यस्मादयं (हस्ती) हन्ति तस्मादयं पलायत इति। एवं वर्षतीत्यादावपि योजनीयम्। अत्र च तिङन्तयोरितिशब्दसामर्थ्याद्धेतुहेतुमद्भावोऽनुमीयते, न पुनश्शब्दसन्निवेशीति। यावद्भुङ्क्ते ततो व्रजतीत्यादौ तु भिन्नवाक्यतायामपि यावत्ततःपूर्वमित्यादिनिपातसामर्थ्या–दवध्यवधिमद्भावो गम्यते; न पुनराख्यातशब्दसन्निवेशीति। सक्तून् पिबेत्यादावपि 'सक्तून् पिब', 'धानाः खाद', 'ओदनं भुङ्क्ष्व' इति विशेषणवाक्यार्था इतिशब्दोपसंहृता इतिशब्दसामर्थ्यादेव तत्सामान्याभिधायिना अयमभ्यवहरतीति वाक्यान्तरेणोच्यन्ते। पचति चायं पठति चेति वाक्यद्वयमेव; एवं वटो! भिक्षामट, गां चानयेति।

तदेवं **कात्यायन**मते नास्त्येवाख्यातयोस्संबन्धः; **सूत्रकारस्य** तु मतेऽस्त्येवाख्यातयोः अनेकवाक्यत्वेनाभिसंबन्ध इति, यदयं समानवाक्याधिकारेऽतिङन्तादुत्तरस्य तिङो निघातं शास्ति। 'अभिज्ञावचने लृट्' (३.२.११२) इति स्मृत्युक्तावतीतकालेऽपि लृटं स्मरति; यदिति (३.२.११३) यत्प्रयोगे तन्निषेधति, 'विभाषा साकाङ्क्षे' (३.२.११४) इत्याकाङ्क्षायां विभाषयाभ्यनुजानाति, 'न यद्यनाकाङ्क्षे' (३.४.२३) इति निराकाङ्क्षवाक्ये क्त्वा–णमुलौ निषिध्य लडादीनेवानुमन्यते इति का पुनरत्रोपपत्तिः? उच्यते आख्यातपदतुल्यधर्मिणो हि क्त्वान्तस्यानेकस्यापि दृष्टस्तिङन्तेन सह संबन्धः। स्नात्वा पीत्वा भुक्त्वा व्रजतीति; तथा पूर्वं स्नाति भुङ्क्ते पिबति ततो व्रजति इति। तत्र यथैव क्त्वान्तस्य तिङन्तेनैकवाक्यत्वं तथा पूर्वकालक्रियाभिधायिनामाख्यातानां सर्वेषामपि क्रियाविशेषणकत्वाद्भवति। उक्तं च—

**यथाऽनेकमपि क्त्वान्तं तिङन्तस्य विशेषकम् ।**
**तथा तिङन्तं तत्राहुः तिङन्तस्य विशेषकम् ॥ ८० ॥** (वाप. २.६)

किंच यथाकथंचिदाश्रीयमाणोऽर्थस्सामानाधिकरण्येनावधिभावेन वा विशेषणत्वं न व्यतिक्रामति। तथा हि, व्रज देवदत्तेत्यामन्त्रितस्य विशेषणत्वेनैकवाक्यत्वाद् 'आमन्त्रितस्य च' (८.७.१९) इति निघातो दृश्यते; कर्तृत्वाद्भविष्यतीति चेद् व्रजानि देवदत्तेत्यत्र कथम्? न हि देवदत्तो व्रजिक्रियायाः कर्ता, न खल्वपि कारकस्य विशेषकम्, नापि सुष्ठु पचतीति पदान्तरत्वेन क्रियाविशेषणमुपपद्यते। किंतु क्रियां प्रति आभिमुख्येनावस्थाप्यमानः पञ्च वारान् पचतीतिवत् बाह्यविशेषणतां लभते। कः पुनर्बाह्यान्तरयोः क्रियाविशेषणयोर्विशेषः? अयमस्ति आन्तरं हि क्रियाविशेषणं कर्मत्वं नपुंसकत्वं च प्रतिलभते; बाह्यस्य तु स्वलिङ्गता न कर्मत्वनियमः। एवं च कृत्वोक्तम्—

**संबोधनपदं यच्च तत्क्रियाया विशेषकम् ।**
**व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ ८१ ॥** (वाप. २.५)

ननु च संबोधनपदस्य तिङन्तेनैकवाक्यता युज्यते, संबोधनं ह्याक्षिप्तक्रियापदं वर्तते। देवदत्त अभिमुखो भवेत्याभिमुख्ये हि युज्यते। तत्र देवदत्तेत्येतावत्यर्थस्य परिसमाप्तत्वात् संबोधनपदमेकं वाक्यम्, सोऽभिमुखीभूतः क्रियान्तरे नियुज्यते; व्रजेति तदाख्यातमेव द्वितीयम्; 'देवदत्त! व्रजानि' इत्यत्र तु क्रियान्तरनियोगोऽपि नास्तीति

भिन्नवाक्यत्वमेव। तन्न, वाक्यलक्षणायोगात्। एवं ह्याहुः—

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते ॥८२॥** (वाप. २.४)

एवं च ब्रुवतो यथोक्तलक्षणपदसमूहो वाक्यमित्यभिप्रायः, न च देवदत्तेति पदसमूहः; अथाभिमुखो भवेत्याक्षेपादस्य समूहभावः; तथापि साकाङ्क्षत्वादवाक्यत्वम्। न ह्यभिमुखीभावमात्रमेव कश्चिद् विधत्ते। किं तर्ह्यभिमुखीभावं विधाय क्रियान्तरे नियुङ्क्ते। अपि चाभिमुखो भवेत्यध्याह्रियमाणयापि क्रियया संबन्धं मन्यसे व्रजेत्युपात्तयापि न मन्यस इत्यहो माध्यस्थ्यम्। किंचाभिमुखो भवेत्ययमपि नियोगः, तत्रानभिमुखस्य नियोक्तुमशक्यत्वात्। अभिमुखीकरणाय क्रियान्तराध्याहारेऽनवस्था, तद्भयाच्चाभिमुखीकार–गर्भनियोगोऽङ्गीकर्तव्यः, स च व्रजेत्यादावपि तुल्य एवेत्यलमतिप्रसङ्गेन। यदि चामन्त्रितस्य तिङन्तेनैकवाक्यता न स्यात्, 'आमन्त्रितं पूर्वमविद्यमानवद्' इति (८.१.७२) सूत्रकारो न ब्रूयात्। तत्रेदमविद्यमानवत्त्वे प्रयोजनम् निघातादयो मा भूवन्निति; निघातादयश्चासमान–वाक्यत्वादेव न भविष्यन्ति, किमविद्यमानवद्भावेन।

न चैतद् **वार्त्तिककारो** मन्यते। सोऽपि ह्यविद्यमानवद्भावस्य प्रयोजनानि पठति अविद्यमानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मदादेशतिङ्निघाता इति। भवतु नाम सामानाधिकरण्येन वैयधिकरण्येन वा यथाकथंचिदाश्रीयमाणानामाख्यातानामाख्यातं प्रति विशेषणत्वमुपलक्षणत्वं हेतुमत्त्वमवधिभावो वा, समुच्चयोऽप्येवमेवोपपद्यताम्; साध्यसाधनभावस्तु नोपपद्यते, विरुद्धरूपयोरर्थयोरेकरूपेण शब्देनाभिधानात्। यथाऽयं दण्डो हरानेन फलानीत्ययं दण्ड इत्यनेन रूपेण दण्डशब्दो दण्डार्थमन्तर्भूतास्ति–क्रियामुपादातुमीष्टे। अनेनेत्ययं च शब्दः करणरूपेणेव वस्तुसामान्यमभिदधत् प्रत्यक्षेणोपादत्ते, न रूपान्तरेण, प्रकरणात्तु दण्डे प्रतिपत्तिः। तथेहापि पचति धावतीत्यादिराख्यातसाध्यभूतां क्रियामभिधत्ते, तामेव च सिद्धां साधनत्वमापन्नामनेनैव रूपेण वक्ष्यतीत्यसम्भवः।

नासम्भवः, साध्यत्वेनैव साधनत्वात्।

यदेवं हि क्रियायास्साध्यमानत्वमनिदन्तानिर्देश्यं परिनिष्ठितं रूपं तेनैव साधनभावं प्रतिपद्यते, न रूपान्तरेण; तस्याभावाल्लकारोऽपि चैतां साध्यतया भवन्तीं कर्तृभावेनाभिधत्ते पचति भवतीति।

ननु किमन्यद्भवनं पचतिक्रियायास्साध्यताव्यतिरेकि, किं वा तदतिरिक्तं कर्तृत्वं, येन साध्यसाधनभावोऽवकल्पेत?

उच्यते— योऽयमस्याः कारकसंबन्धः, कारकव्यापारविषयता न कारकाणि शशविषाणवत् पराकरोति, शक्यते संपादयितुं तेभ्यस्संपत्तिमनुभवति। तदस्याः कारकसंबन्धलक्षणं साध्यमानत्वमेव रूपं भवनमभिधीयते। पचतिक्रिया भवनं निर्वर्तयन्ती कारकेभ्यो निर्वृत्तिं प्रतिपद्यते, कारकाणि व्यापारवन्ति करोतीत्यर्थः। यत्पुनरस्या विशेषरूपं यागादिधर्मकं पक्तिरूपं पचत्येकशब्दवाच्यमनन्यसाधारणं, तेनैषा कर्त्री संपद्यते, तदेवमनन्यसाधारणेन स्वभावेन कर्त्री संपद्य साध्यात्मना भवतिक्रियारूपत्वेन भवतिः पचति, भवतिसाध्यत्वं लभत इत्यर्थः। अथवा प्रयोगात्मको योऽधिश्रयणादिव्यापारस्तैरेषा भवनक्रियारूपतामुपयाति। फलभूतेन विक्लित्त्यात्मना भवितृरूपं कर्तृत्वं, तेन भवति पचति इत्ययमर्थः पक्तिरधिश्रयणाद्यात्मना भवति, अधिश्रयणादयोऽस्याः प्रवृत्ता इति यावत्। अधिश्रयणादिरूपेण वा भवितृत्वं पक्तिरूपेण भवनक्रियात्वं, तेनायमर्थः अधिश्रयणादयः पक्तिरूपतया भवन्ति; विक्लित्तिस्सञ्जातेति यावत्। अथवा शब्दवाच्यं बुद्धिपरिगतं यद्रूपं तेन कर्तृत्वमस्यां, बाह्यसंपक्तिरूपत्वेन भवनरूपत्वं, बाह्यरूपेण भवितृत्वं, बुद्ध्यात्मना भवनरूपत्वमिति। यदि वा सामान्यात्मना कर्तृत्वं विशेषात्मना भवनरूपतेत्युपपद्यते क्रियायां कारकत्वम्।

ननु चोक्तं न लकारः सिद्धवदभिधानेन विना कर्तृभावेनेमां प्रतिपादयितुमुत्सहते, ततश्च सिद्धत्वेनाभिधाने पुनरपि विरोधः। नैवम्, यदेव पचतिक्रियायास्स्वभावभूतमात्मीयरूपं साध्यतालक्षणं तेनैव रूपेण सा कर्तृत्वमुपगता लकारेणोच्यते। सिद्धत्वावभासः कुत इति चेत्, लकारस्तां कर्तृभावेन प्रतिपादयितुं प्रवृत्तस्सिद्धत्वेनावगमयति, न तु साध्यायाः क्रियायाः सिद्धत्वापत्तिः। अतो रूपान्तरापत्तेः नास्ति विरोधः। यथा चोरस्य रुजतीति धात्वर्थ एव रोगलक्षणः कर्त्रन्तराश्रयणात् कर्तृभावमुपयाति; साध्यात्मन एव चास्य कर्तृत्वम्। न च सिद्धताप्राप्तिः कर्तृत्वेन प्रतीयमाना सिद्धतयाऽवभासते; तथा क्रियापि न सिद्धतया लकारेणाभिधीयते। अपि तु साध्यायामेव तस्यां तदधिकरणात् कर्तृशब्दै–रभिधीयते इति। अथवा एकस्यैव वस्तुनो नानारूपाश्शक्तयो विरुद्धाविरुद्धस्वभावा लोकयात्रां कल्पयन्ति। ततोऽस्य सर्वशक्तेर्भावस्य वाचकशब्दः कश्चित् सिद्धात्मिकां

शक्तिवृत्तिमवलम्बते, कश्चित् साध्यरूपाम्। तदेवं सिद्धसाध्यताशक्तियुक्तं वस्तु शब्दाभ्यामभिधीयमानं न विरुध्यते, अनेकशक्तियुक्तत्वात्। पचतीत्यनेन तदेव साध्यत्वेनावगतं भवतीति लकारस्साध्यत्वेनाभिधत्ते। सर्वशक्तिविरहितं वा वस्तु, सकलविकल्पोल्लेखरहितत्वात्। तस्य तु शब्दा एव स्वमहिम्ना नानाविधबुद्ध्युप–जननहेतवश्शक्तिं संनिवेशयन्ति; शक्त्याविष्टमिव व्यवहारगोचरतां नयन्ति। तेन शब्दाभ्यामेव सिद्धसाध्यताशक्त्याधानादखिलविकल्पीकृतात्मकमपि तद्वस्तु सिद्धसाध्यभावेनोपदिश्यते। भवति पचतीत्येकेन शब्देन सन्निवेशितसाध्यताशक्तियुक्तमभिहितम्, इतरेण तु तदेव शक्त्यन्तरारोपेण प्रकाश्यत इति नास्ति विरोधः।

यदि वा न पदस्य पदरूपादेवाधिकार्थता; किं तर्हि? वाक्यरूपात्। तद्यथा पुरुष इति पदकाले पुरुषो व्यतिरिक्त उच्यते। यदा तु राज्ञः पुरुष इति विशेषसन्निधौ प्रयुज्यते तदा विशिष्टस्य पुरुषार्थस्य गतिः, न पुरुषस्येति वाक्यकालेऽधिकस्य धर्मस्य प्रादुर्भावः, तथा पचतीति नैकस्मादेव पदरूपात् कर्तृत्वम्; यदा भवतीति पदान्तरसन्निधिस्तदा परत्वे साधनमदृष्टदवाक्यकाले पुरुषस्यैव व्यतिरेक उपजायत इति। यथापि व्यपदेशिवद्भावेना–भिन्नस्यापि धातोरवयवप्रथमैकाज्व्यपदेश इयायेत्यादौ प्रवर्तते तथा बुद्धिभेदकल्पनया आख्यातवाच्यस्यार्थस्य भेदेऽपि क्रियाकारकादिव्यपदेशाः प्रवर्तन्ते। ततश्च पचतीत्यत्रापि न काचिद् अपरा तदतिरेकिणी भवनक्रिया, कश्चिदपरो वा कर्ता विरोधहेतुरस्ति; अपि तु सैव व्यपदेशिवद्भावेन भवनक्रियारूपतां पक्तृत्वं च दर्शयन्ती चकास्ति। एतेन पश्य मृगो धावतीत्यादावपि सिद्धसाध्यत्वयोरविरोधः।

अपि चैकस्याप्यर्थस्य विषयभेदेन द्विधर्मत्वं न विरुध्यते। यथा राज्ञः पुरुषस्य पुरुष इति पुरुषश्शेषी भवति शेषश्च इति, राजानं प्रति शेषोऽविचलितस्वार्थश्शेषितामापद्यते, एवं च धावतीति मृगे कर्तरि साध्यभावं प्राधान्येनाजहत् सरणं दृशावङ्गत्वं साधनत्वं चोपैतीति न कश्चिद् विरोधः। अथवायमर्थः — साधनमिदमयं साध्य इति रूपं सिद्धमात्रमेतत्, यथा पदे अयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इत्येक एवासावर्थः अविशिष्टो विशिष्टो वा वाक्यविशेषयोर्ग्रहीतव्यः, यथा मुण्डयति, कूटयति, मूत्रयति, चर्चयतीति। तत्र मुण्डयति माणवकम्; मुण्डिः केशच्छेदनवचनः; तस्य तु व्युत्पत्तिः मुण्डं करोतीति सामान्यप्रवृत्तिविशेषं मुण्डशब्दोऽवस्थापयति; करोतिविशेषो यस्मिन् णिजुत्पद्यते, न करोतिमात्रम्। अन्ये पुनः

केशच्छेदनादिवचनान्मुण्डादीनध्यवस्यन्ति; यथोक्तम् अथवा मुण्डादयो धातवः। मुण्डयतीति चैतस्मिन्नर्थे कूटयतीति च प्रयुञ्जते, कूटयति माणवकमिति। यथा च मुण्डं करोतीति प्रयुञ्जते, नैवं कूटं करोतीति; कूटशब्देन हि करोतिविशेषो न लक्ष्यते; किंतु छिदादिविशेषमवलक्ष्यमाणोद्देशविभागं कूटिरेवोपादत्ते। एवं मूत्रं करोतीति मूत्रयति, चर्चां करोतीति चर्चयति। मूत्रेण चर्चया वा करोतौ विशेष्यमाणे क्षरणं परिभाषणं वा विशेषेणोपादीयते। स एव च कदाचित् क्षरणविशेषः परिभाषणविशेषो वा नष्टोद्देशविभाग उपादीयते, यथा 'मूत्र प्रसवणे' मूत्रयति, 'चर्च परिभाषणे' चर्चयतीति।

एवं पश्य मृगो धावतीति इदमत्र साधनपदमिदमत्र साध्यपदमिति उत्प्रेक्षैषा। इदं त्वर्थ—सतत्त्वं 'नात्र सरणं, न दर्शनं न मृगः। किं तर्हि? मृगकर्तृको दृशिकर्मसरणविशेषोऽयं तत्रैकार्थत्वादेकमेवेदं वाक्यमित्यस्ति द्वयोस्तिङन्तयोरेकस्मिन् वाक्ये सम्भवः। ततश्च पचति करोतीत्यादावपि पाकं करोतीतिवत् साध्यसाधनभावेन संबन्धोऽस्त्येवेति न कश्चिद् विरोधः।

अन्ये पुनर्मन्यन्ते, कस्यचिदपि बाह्यस्य वस्त्वात्मनोऽसंभवाद् भावभूतवस्तुशून्यमेवेदं जगत्, ततो बुद्धीनामेव तथाभूतव्यवहारोपजनननिबन्धनत्वम्। बुद्धय एव हि सिद्धसाध्यतारूपमुपदर्शयन्त्यः शब्दात् प्रवर्तयन्ति। ततश्च स्वमहिमोल्लासितनानाविधबुद्धिसमुपनीतभेदनकाल्पनिकाकारपरिगतोऽयं मायेन्द्रजालसदृशो व्यवहारः प्रवर्तत इति न कश्चिदपरं वस्तु यस्य सिद्धस्य साध्यलक्षणविरोधापत्तिः। तथा हि—बुद्धिमाकारभेदवतीमेके क्रियां मन्यन्ते। सा हि स्वमात्राभिरपर्यवसितविषयनिर्भासाभिः अन्तस्तत्त्वादिभिरिव बहिरर्थनिबन्धनामर्थक्रियां साधयति। न तदर्थं दर्शनाभिनिवेशोऽस्माकम् आराद्वीयस्समुत्सारयन्ति प्रत्ययव्यक्तयो हि पराकृतवाक्यार्थसंस्पर्शा बाह्यार्थवत् तासु तास्वर्थक्रियासु यथासामर्थ्यमुपजायमानाः प्रतीताशङ्काविषयपरिगमनाद्यवस्थासु तदा सामर्थ्यं क्रियासामर्थ्ये किमर्थमन्यपदार्थरूपमभ्युपेयत इति। अत्र **चूर्णी** विरोधं दर्शयति; इदं किलोक्तं **भाष्ये**—कृदभिहितो भावः क्रियया समवायं गच्छति, पाको वर्तत इति; तिङभिहितस्तु न गच्छति (म.भा. ३.१.१७)।

न हि भवति पचति पठतीति। अत्राऽयं समाधिः—यथाभूता क्रियोपन्यस्ता तथाभूता समवायं न गच्छति, विशेषयोस्समवायो नास्ति, सामान्ययोरस्त्येव। अस्ति स मे रोचते,

असि त्वमीशिषे, नास्मि रमे, भवति पचति करोतीति। तत्रैतच्छक्यते वक्तुं यत्रान्या च क्रिया भवति; यत्र तु खलु सैव सा क्रिया तत्र कथम्? यथा भवेदपि भवेत्, स्यादपि स्यादिति। अस्ति च लोके एवंभूतः प्रयोगः। अपि भवेदेतद्देवदत्तस्यापि, स दिवसः स्याद्यत्रेदं भवेदिति। देवदत्तस्य च वर्तमानकालां सत्तामविनाशं प्रार्थयमान एतत्प्रयुङ्क्ते; अपि भवेदेतत्, भवेद्देवदत्त इति। अत्राप्यन्यत्वमस्ति; कुतः, साधनभेदात्कालभेदाच्च। एकस्यात्र भवतेर्भवति साधनं सर्वकालश्च प्रत्ययः। अपि भवेदित्यत्र यो भवति तत्र देवदत्तसत्ता न प्रकृत्यर्थः; किं तर्हि? प्रत्ययार्थः; प्रार्थनेव लिङिति सर्वकालत्वं कालविशेषस्यानाश्रितत्वात्। 'अपरस्य बाह्यं साधनं वर्तमानकालश्च प्रत्ययो भवति। तस्य बाह्यं साधनं द्रव्यं देवदत्त इत्यर्थः, देवदत्तसत्ता तु प्रकृत्यर्थः, वर्तमानसत्ता तु देवदत्तस्य प्रार्थ्यत इत्यनुपात्तकालविशेषः। शास्त्रे लिङ् स्वरूपादेव वर्तमानकालेऽवतिष्ठते, यथा तव्यादयो भविष्यति, कर्त्तव्यः कट इति। स्वभावाच्चार्थानां व्यवस्थेपि **भाष्ये** कालाधिकारः प्रत्याख्यातः। एवं स्यादपि स्यादित्यत्रापि स्वाभाविकं नानात्वं साधनकालभेदेन प्रतिपाद्यत इति।

नन्वस्त्यादयोऽपि निपाताः, ते चाख्यातस्वरूपत्वात् कारकाणि विशिंषन्तः कालं पुरुषं संख्यां न व्यभिचरिष्यन्ति; यत्र व्यभिचारस्तत्र कथम्? तथा हि– भवति पक्ष्यति भवत्यपाक्षीदयूयुजस्त्वमसीति कालव्यभिचारः; भवतु गच्छाम्यहमिति पुरुषव्यभिचारः; भवतु तयैव मण्डूकाः पच्यन्तामिति संख्याव्यभिचारः; भवतु नाम द्रक्ष्यसीति कालपुरुषव्यभिचारः; भवतु तयैव मण्डूकाः पच्यन्तामिति संख्याव्यभिचारः; भवतु नाम द्रक्ष्यसीति कालपुरुषव्यभिचारः; भवतु भविष्यन्ति जीवतो धनानीति कालसंख्याव्यभिचारः; अस्त्यगमाम घोषादिति कालपुरुषसंख्याव्यभिचारः। लोके चैवंभूता वाचोयुक्तिरस्ति, प्रयुङ्क्ते हि लोकः, अस्ति गच्छामो वयमित्येवमादिः, तत्रास्तीत्येकवचनमुपलभ्यते। तेन मन्यामहे गमेरेवैकत्वाश्रयस्य कर्तृत्वं, न वयमिति बहुत्वाश्रयस्य। तदेवं सामान्यक्रियया विशेषक्रियाणां कर्तृत्वेनाभिसंबन्धात् अस्त्यनयोस्साध्यसाधनभावः। विशेषक्रियायामपि क्वचित्कर्मत्वेन संबन्धो दृश्यते– पश्य धावति, पश्याम उदाह्रियन्ते, मन्ये यास्यसि, स्मरसि वत्स्यामः, न मर्षयामि याजयिष्यति, आशंसे युक्तोऽधीयेति। करणादिभावश्च तिङन्तानां न विद्यते, पचति पठतीति। अत्र तु विद्यत एव संबन्धः, सर्वनाम्ना परामर्शात्।

न चेह वाक्यभेदः, सर्वथैव तदनुपलब्धेः। तत्र हि खलु वाक्यभेद उपेयते। त त्रासौ परामृश्यमानोऽन्यां बुद्धिल्लिखति। न चेहोल्लेखवान् वाक्यभेदो बुद्धावुपलभ्यते; तस्मादेकवाक्यत्वमेव। अत एवाभिजानासि देवदत्त यत् कश्मीरेषु वत्स्यामः, तत्रौदनं भोक्ष्यामहे इति 'विभाषा साकाङ्क्षे' (३.२.११४) इति सर्वनाम्ना परामर्शात्साकाङ्क्षत्वोपपत्तेः। तत्रेत्यनेनानुसंधीयमानत्वाल्लटो लङश्च विकल्पः प्रवर्तते। स स्वपित्येष बुध्यते, सोऽस्तमयतेऽयमुदेतीत्यत्र तु परस्परं वा आख्यातयोर्लक्ष्यलक्षणभावः, सह वा सर्वैरेव कालविशेषादिकं लक्ष्यत इत्येकपरत्वादेकवाक्यतैव। यथा—

**कुमुदानि प्रबुध्यन्ते शतपत्राणि शेरते ।**
**शकटं गाहते व्योम मातृमण्डलमुज्झति ॥८३॥**

हन्तीति पलायत इत्यादौ त्ववस्थित एव हेतुहेतुमद्भाव इति न द्योत्यते; नन्वपूर्व क्रियते पचति पठतीत्यत्रापि प्रसङ्गात्। एते तावदवध्यवधिमद्भावो यावदादौ समुच्चयादौ चादयश्च व्याख्याताः। तदेवं **सूत्रकारस्य भाष्यकारस्य** च दर्शने अस्ति क्रियायाः क्रियान्तरेण संबन्धः। **वार्त्तिककारस्तु** युष्मदस्मदादेशनिघाताद्यर्थम्, 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' 'एकतिङ्' वाक्यमिति अन्यदेव लौकिकात् पारिभाषिकं वाक्यलक्षणमारभते। न च तेन लौकिको व्यवहारस्सिध्यतीत्युपेक्ष्यते। तदुक्तम्—

**निघातादिव्यवस्थार्थे शास्त्रे यत् पारिभाषिकम् ।**
**साकाङ्क्षावयवं तेन न सर्वं तुल्यलक्षणम् ॥८४॥** (वाप. २.३)

एतेन भिन्नाभिन्नप्रवक्तृकानेकवाक्योपकल्पितैकवाक्यस्थानामपि क्रियाणां परस्परमभिसंबन्धो व्याख्यातः। स भिन्नप्रवक्तृकत्वे यथा—

**कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।**
**पुनरपि तदेव कथयसि मृतां तु कथयामि या श्वसिति ॥८५॥**

अभिन्नवक्तृत्वे यथा—

**यत्स्वच्छे सलिलात्मनि प्रतिफलद्देवे त्रियामापतौ**
**पीयूषाकृति पर्यवस्यति किल ज्योत्स्नेति तत्त्वान्तरम् ।**
**तिग्मं धाम चिरं चकास्ति दिवि तत् (यत्) तत्रास्ति दिव्यः पुमान्**
**यं विज्ञातवतां त्रुटन्ति निखिला भूयोभवग्रन्थयः ॥८६॥**

---

१. २. 'चचाल सा चे'—ति युक्ततरः पाठः।

## *(११. प्रकरणम्)*

**प्रबन्धाङ्गमवान्तरवाक्यं प्रकरणम्।**

*(आर्थप्रकरणम्)*

तत् त्रिधा— **१. प्रस्तुतं, २. कल्पितं, ३. आकस्मिकं** च। तेषु

(१) **प्रस्तुतं** द्विधा— **अङ्गं वर्णकं** च। तयोः

**अङ्गं** यथा—(कुसं. ५.३०)

**अथाजिनाषाढधरः प्रगल्भवाग् ज्वलन्निव ब्रह्ममयेन तेजसा ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबन्धः प्रथमाश्रमो यथा ॥८७॥**

इत्यत आरभ्य—(कुसं. ५.८४)

**इतो गमिष्याम्यथवेति वादिनी श्रमालसा[२] च स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितस्समाललम्बे वृषराजकेतनः ॥८८॥**

इति यावत्। अत्र हि—(कुसं. ५.३१)

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।**
**भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥८९॥**

इत्यादेः प्रकरणार्थस्य कथाशरीरत्वमवगम्यते।

**वर्णको** यथा—(कुसं. १.३१)

**असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथ वयः प्रपेदे ॥९०॥**

इत्यत आरभ्य—(कुसं. १.४९)

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥९१॥**

इति यावत्। अत्र हि—(कुसं. १.३२)

**उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरश्रशोभि वपुर्विभक्तं नवयौवनेन ॥९२॥**

इत्यादेः प्रकरणार्थस्य पार्वतीरूपयौवनलावण्यवर्णनाद्यवगम्यते।

(२) **कल्पितं** द्विधा— **साभासं निराभासं** च। तयोः

**साभासं** यथा— (माघ. १.४२)

अभूदभूमिः प्रतिपक्षजन्मनां भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ९३॥

इत्यत आरभ्य—(माघ. १.६९)

यथोपपत्तिच्छलनापरोऽपरामवाप्य शैलूष इवैष भूमिकाम् ।
तिरोहितात्मा शिशुपालसंज्ञया प्रतीयते संप्रति सोऽप्यसः परैः ॥ ९४॥

इति यावत्। अत्र हि—(माघ. १.४८)

विनोदमिच्छन्नथ दर्पजन्मनो रणेन कण्ड्वास्त्रिदशैस्समं पुनः ।
स रावणो नाम निकामभीषणं बभूव रक्षः क्षतरक्षणं दिवः ॥ ९५॥

इत्यादिः प्रकरणार्थः कल्पितोऽपि पुराणेषूपलम्भासंभवाच्च तथात्वेनावभासते।

**निराभासं** यथा—(किराता. १६.१)

ततः किराताधिपतेरलघ्वीमाजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कश्चिरं विचिन्वन्निव कारणानि ॥ ९६॥

इत्यत आरभ्य—(किराता. १६.१७)

इयं च दुर्वारमहारथानामाक्षिप्य कीर्तिं महतां बलानाम् ।
शक्तिर्ममावस्यति हीनयुद्धे सौरीव तारापतिधाम्नि दीप्तिः ॥ ९७॥

इति यावत्। अत्र हि—(किराता. १६.२)

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवोत्क्षिपन्तः ॥ ९८॥

इत्यादिः प्रकरणार्थः,तापसकिरातयुद्धवर्णनायामनाभासमानः काव्यकुशलेन कविनोहापोहद्वारेणोपकल्प्य कथ्यते।

**(३) आकस्मिकं** द्विधा सबीजं निर्बीजं च। तयोः

**सबीजं** यथा (रघु. ५.४३)—

अथोपरिष्टाद् भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यस्सरित्तो गज उन्ममज्ज ॥ ९९॥

इत्यत आरभ्य—(रघु. ५.६०)

इत्थं तयोरध्वनि दैवयोगादासेदुषोस्सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान् ॥१००॥

इति यावत्।

अत्र हि – (रघु. ५.५७)

**गान्धर्वमस्त्रं तदतः प्रतीच्छ प्रयोगसंहार–विभक्तमन्त्रम् ।**
**प्रस्वापनं नाम यतः प्रवृत्तुर्न चारिहिंसा विजयश्च हस्ते ॥१०१॥**

इति सबीजम्। यस्याग्रतः – (रघु. ७.६१)

**प्रियम्वदात् प्राप्तमथ प्रियार्हः प्रायुङ्क्त राजस्वधिराजसूनुः ।**
**गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥१०२॥**

इति फलमुपलभ्यते।

**निर्बीजं** यथा–(रघु. १२.२८)

**सन्ध्याभ्रकपिशस्तत्र विराधो नाम राक्षसः ।**
**अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥१०३॥**

इत्यारभ्य–(रघु. १२.३०)

**तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।**
**गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥१०४॥**

इति यावत्। अत्र हि–(रघु. १२.२९)

**स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।**
**नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥१०५॥**

इत्यादेः प्रकरणार्थस्याग्रतः फलानुपलम्भादाकस्मिकस्यापि निर्बीजत्वमवगम्यते। **तदिदमर्थत**स्त्रिधा प्रकरणमभिहितम्।

***(शाब्दप्रकरणम्)***

**अथ शब्दतो**ऽपि त्रिधैवाभिधीयते–

१. **एकवाक्यम्**, २. **अनेकवाक्यम्**, ३. **एकानेकवाक्यम्** च।

(१) **तत्रैकवाक्यं** द्विधा– सानुबन्धं निरनुबन्धं च। तयोः

**सानुबन्धं** यथा–(रघु. १२.७८)

**स मारुतिसमानीतमहौषधिहृतव्यथः ।**
**लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥१०६॥** इति।

**निरनुबन्धं** यथा–

**'ते हिमालयमामन्त्र्य' ॥१०७॥** (कुसं. ६.९४) इत्यादि

(२) **अनेकवाक्यं** द्विधा– आद्युपसंहृतमन्तोपसंहृतं च। तयोः

**आद्युपसंहृतं** यथा–(कुसं. ७.५६)

तस्मिन् क्षणे पौरविलासिनीनामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥१०८॥

इत्यत आरभ्य

'तासां मुखैरासवगन्धगर्भैः'॥१०९॥ (कुसं. ७.६२, रघु.७.११) इत्यादि।

**अन्तोपसंहृतं** यथा—(कुसं. ७.६५)

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाभितप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥११०॥

इत्यारभ्य—(कुसं. ७.६९)

इत्यौषधिप्रस्थविलासिनीनां शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिर्हिमालयस्यालयमाससाद ॥१११॥

इति यावत्।

(३) **एकानेकवाक्यं** द्विधा— सर्वनामयोजितं विभक्तियोजितं च। तयोः

**सर्वनामयोजितं** यथा—

'अस्त्युत्तरस्यां दिशि'॥११२॥ (कुसं. १.१) इत्यादि।

इत्यत आरभ्य—(कुसं. १.१७)

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागश्शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥११३॥

इति यावत्।

**विभक्तियोजितं** यथा— (कुसं. ३.५२)

निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥११४॥

इत्यत आरभ्य—(कुसं. ३.५६)

सुगन्धिनिःश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥११५॥

इति यावत्।

एतेनैतद्व्यतिरेकोऽपि व्याख्यातः। यथा—(सेब. ९.१)

अह पेच्छंति पवंगा सअल—जअक्कमण—वड्ढिअमहासिहरं ।
णिट्ठविअ—दक्खिण—दिसं सेसदिसा—मुह—पहाविअं व सुवेलं ॥११६॥

इत्यत आरभ्य—(सेब. ९.९५)

**तुङ्ग—अडोज्झर—मुहले जस्स अ कसणमणिगंड—सेलद्धंते ।**
**सेवंतीण ण पत्तो तिअस—वहूण सिढिलत्तणं अणुराओ ।।११७।।**

(अथ प्रेक्षन्ते — — — — अनुरागः।।)

इत्याश्वासकपरिसमाप्तिर्यावदिति।

ननु वर्णसमूहः पदं, पदसमूहो वाक्यं, वाक्यसमूहः प्रकरणमित्याचक्षते। तत्कथमुच्यते एकवाक्यं प्रकरणमवान्तरवाक्यं प्रकरणमिति?

उच्यते, त एव प्रष्टव्याः उच्चरितप्रध्वंसिनामनर्थकानां च वर्णानां समूहस्य पदत्वमर्थवत्तया वर्णयन्तः। **वयं त्वेकार्थपरः पदसमूहो वाक्यमित्येव प्रतिजानीमहे।** तत्र पदैरपि वाक्यमारभ्यते, वाक्यैरपि च प्रकरणमारभ्यते, वाक्यैः पदैरपि च प्रकरणैः प्रबन्ध आरभ्यते। ततश्च

**वाक्येष्वपि वाक्यानि** भवन्ति। यथा— (मवीच. १.३०)

**कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो**
**रत्नं यत्क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि ।**
**कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं**
**बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च संबन्धिनः ।।११८।।**

**प्रकरणेष्वपि प्रकरणानि** यथा— इन्दुमतीस्वयंवरे मगधेश्वरादिराजवर्णनादीनि।

**प्रबन्धेष्वपि प्रबन्धा** यथा— **उत्तरचरितादौ** गर्भनाटकादीनि।

यदि वाक्यमेव पदसमूहः, कथमाह महावाक्यो(काव्यो)पनिषदाचार्यो **दण्डी**—

**तैश्शरीरं च काव्यानामलङ्काराश्च दर्शिताः ।**
**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ।।११९।।** इति। (काआ. १.१०)

## *(१२. प्रबन्धः)*

**विधिनिषेधावगतिहेतुर्महावाक्यं प्रबन्धः।**

तत्त्रिधा – **१. पद्यं, २. गद्यं (च), ३. मिश्रं च।**

**(१. पद्यम्)**

तेषु **च्छन्दोगतं पद्यम्**। छन्दस्तु त्रिधा— **अक्षरच्छन्दो, मात्राच्छन्दो, गणच्छन्द**श्चेति।

तान्यपि प्रत्येकं त्रिधा **समार्धसमविषम**भेदात्। तत्र —

अक्षरच्छन्दस्समं यथा—(ऋवे. १०.१०३.१)

आशुश्शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरश्शतँ सेना अजयत्साकमिन्द्रः ॥१२०॥

अर्धसमं यथा—(ऋवे. १०.८५.१९)

नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे ।
भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरति दीर्घमायुः ॥१२१॥

विषमं यथा—(ऋवे. १.१७०.१)

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि· संचरेण्यमुताधीतं विनश्यति ॥१२२॥

पूर्वोक्तोदाहरणत्रयमपि वैदिकविषयमेव।

मात्राच्छन्दस्समं यथा—

वाउ न पुव्वु न पच्छिमु न वि दक्खिणु वहइ ।
वणे न कयंबु न अंबु न पाडल महमहइ ॥१२३a॥
(वायुः न पूर्वः न पश्चिमः नापि दक्षिणः वहति ।
वने न कदम्बः न आम्रः न पाटला गन्धं प्रसारयति ॥)
कोइल-मोर-मरालहं कोइ न वाहरइ ।
माए न् जाणउ माहहे केवं विरहिणि मरइ ॥१२३b॥
( कोकिलमोरमरालानां कोऽपि न व्याहरति।
मातर् न जाने माघे कथं विरहिणि मरइ ॥)

अर्धसमं यथा—

दिणहदिवट्ठहो इति स उप्पिज्ज्इउ सुरेविओ ।
अवरणेह मिहइ घरुमादालव्व हि दूरे ॥१२४॥

विषमं यथा—

जइविग्वाव्डहीजइ विवव्डुरव्ख पहुदुग्गमुतरु अरहीजइ विगहणेसूरु ।
विणदीसइ इतो इसु पुरिसु वसदि जहीते धुवट्ठहरहप अट्ठदि ॥१२५॥

गणच्छन्दस्समं यथा—(कादम्बरीमङ्गलम्)

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥१२६॥

अर्धसमं यथा— (किराता. १३.१)

**वपुषा परमेण भूधराणामथ संभाव्य पराक्रमं विभेदे ।**
**मृगमाशु विलोकयाञ्चकार स्थिरदंष्ट्राङ्कमुखं नरेन्द्रसूनुः ॥१२७॥**

विषमं यथा—(किराता. १२.१)

**अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।**
**क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥१२८॥**

तदेतत्त्रिविधमपि महाकाव्येतिहासश्रुत्यादिषु च दृश्यते।

## (२. गद्यम्)

**अच्छन्दः पदसंतानो गद्यम्।** तत्त्रिधा **वृत्तगन्धि, चूर्णम्, उत्कलिकाप्रायं** च। तेषु पद्यगन्धवद् **वृत्तगन्धि**। तत्त्रिधा— समा(र्ध)सम—विषमभेदात्। तेषु

समगणच्छन्दोगन्धि यथा— **'पातालतालुतलवासिषु'**॥१२९॥ इति॥

अर्धसमगणच्छन्दोगन्धि यथा—

**'क्रममारचय्य च महेन्द्रशासनात् खमुत्पपात'** ॥१३०॥ इति॥

एवं मात्राक्षरच्छन्दोऽपि द्रष्टव्यः।

अनाविद्धललितपदं **चूर्णम्**; तत्त्रिधा— **गुरुबहुलं, लघुबहुलं, मिश्रं** चेति। तत्र

**गुरुबहुलं** यथा—

**त्रैलोक्यैकप्रदीपस्य भगवतस्सहस्ररश्मेरर्चिशिशखासहस्र—**
**निष्ठ्यूतोऽञ्जनराशिरिव शार्वरस्तमस्तोमः स्त्यायते॥१३१॥**

**लघुबहुलं** यथा—

**व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरतलं विलोक्यते॥१३२॥**

**मिश्रं** यथा—(मामा. १.३५/३६)

**'महाभाग! सुश्लिष्टगुणतया रमणीय एष सन्निवेशः। कुतूहलिनी च नो भर्तृदारिका वतते, यतस्तस्यामभिनवो विचित्रः कुसुमेषुव्यापार'॥१३३॥ इति।**

अललिताविद्धपदवाक्यम् **उत्कलिकाप्रायम्**। तदपि त्रिधा— अललिताविद्धपदवाक्यभेदात्।

तत्र **अललितं** यथा—(वेणीसंहार प्रस्तावनान्ते)

**अयं ललाटतटघटितविकटकीनाशतोरणत्रिशूलायमानभीषणभ्रुकुटिः क्रुद्धो भीमसेन इत एवाभिवर्तते॥१३४॥**

**आविद्धपदं** यथा— (मामा. ३.१५—१६)

**एसो (क)खु . . . वज्जनिग्घाददारुणचवेडामोडि(अ)पाडिदानेअ—णरतुरंगम—**

**जंगलुग्गार–भरिदगलगुहागंभीरघग्घरोल्लि / गल्लूरण–रण–सद्दसंदब्भ–पडिरवाभोअ–भीसाविद–णट्ठविदासेस–जणणिहओ दुट्ठसद्दूलो कअंत–लीलाइदं करेइ।।१३५।।**

**आविद्धवाक्यं** यथा–(काद. कथामुखम्)

**यस्य च मदकलकरिकुम्भपीठपाटनमाचरतो लग्नस्थूलमुक्ताफलेन दृढमुष्टि–निपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेन कृष्यमाणा सुभटोरःकवाटपुट–घटितकवचसहस्रान्धकारमध्यवर्त्तिनी करिकरटतटगलितमदजलासार–दुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम राजलक्ष्मीः।।१३६।।**

तदेतत्त्रिविधमपि **आख्यायिकासु कथासु मधुमल्लिकादिषु** च दृश्यते।

**(३. मिश्रम् )**

**गद्यपद्यव्यायोगो मिश्रम्।** तत्त्रिधा **पद्यप्रधानं, गद्यप्रधानं, तुल्यरूपं** चेति। तेषु–**पद्यप्रधानं** त्रिधा **सजातीयेन विजातीयेनोभाभ्यां** च।

तत्र सजातीये**नेतिहास– सुभाषितकोशादौ,**

विजातीयेन **प्रस्थान–सेतुबन्धन–विवरणादौ,**

उभाभ्यां **भारतीयदशरूपकलक्षणा**दावस्य प्रयोगो दृश्यते।

**गद्यप्रधानम**पि तद्वदेव त्रिधा– तत्र सजातीयेन **पञ्चतन्त्र–चकेटा(चेटक)**... दौ, विजातीयेन **कात्यायनीय–पाणिनीय–प्राकृतलक्षणादौ**, उभाभ्यां **मयूरशुक–मार्जारिका**दावस्य प्रयोगा दृश्यन्ते।

**तुल्यरूपम**पि त्रिधैव सजातीयाभ्यां, विजातीयाभ्यां, सजातीयविजातीयाभ्यां चेति।

तत्र **सजातीयाभ्यां चम्पू–समीक्षा–सट्टकादौ,**

**विजातीयाभ्याम**पि **मार–साम्ब–गोविन्दाख्यानकादौ;**

**सजातीयविजातीयाभ्यां नाटक–नाटिका**दि–विदग्धमुखमण्डनादावस्य प्रयोगो दृश्यते।

**प्रकृत्यादिविभागेन सैष द्वादशधा स्थितः ।**
**अर्थावसायप्रसवनिमित्तं शब्द इष्यते ।।१३७।।** (स्फोट.३)

ननु च **वर्णसमूहश्शब्द** इति वक्तव्ये किमर्थमुच्यते प्रकृत्यादयश्शब्दा इति? यदाह कः **पुनश्शब्द इति प्रश्ने गकारौकारविसर्जनीया इति भगवानुपवर्षः।** नैवम्; **अर्थावसायप्रसवनिमित्तं शब्द इष्यते।** अथ गौरिति न प्रसवनिमित्तेषु जातिक्रियागुणद्रव्यादीनाम्।

कः शब्दः, येनोच्चारितेन अर्थः प्रतीयते, तर्हि वर्णा एव शब्दः। उच्चारितेषु हि गकारौकारविसर्जनीयेषु गौरिति सास्नादिमानर्थः प्रतीयते, सत्यमेतत्। किन्तु वर्णाः प्रत्ययनिमित्तमेकशो वा स्युः, समुदिता वा। न तावदेकशः, द्वितीयादिवर्णोच्चारण–वैयर्थ्यप्रसङ्गात्। नापि समुदिताः उत्पत्तिपक्षे यौगपद्येनानुत्पत्तेः, उत्पन्नस्य च क्षणादूर्ध्वमनवस्थानात्। अभिव्यक्तिपक्षे क्रमेणैवाभिव्यक्तेः अभिव्यक्त्यनन्तरमेव च वायुभिस्तिरोधानात् कथं समुदायः? एकस्मृत्युपारूढानां च वर्णानां वाचकत्वे क्रमस्मरणे नियमनिमित्ताभावात्। उक्तक्रमेण च स्मरणदर्शनात् सरो, रस इति प्रतीतेरविशेषः प्राप्नोति। वक्तृभेदे चार्थप्रत्ययप्रसङ्गः। उतो न वर्णाश्शब्दः, किन्तु वर्णसमूहाभिव्यङ्ग्य–स्फोटलक्षणोक्तार्थात्मा शब्द इति। स एव स्फुटत्यस्मादर्थ इत्यर्थावसायप्रसवनिमित्तमिष्यते। कथं तर्हि शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक इति ध्वनिं कुर्वन्नुच्यते? अभिव्यञ्जकाभिव्यङ्ग्ययोरभेदोपचारात्। नन्वभिव्यञ्जकत्वेऽपि न वर्णानामर्थवत्ता भवितुमर्हतीति? नैवम्, वर्णसमूहात्मनो ध्वनेरेवाभिव्यञ्जकत्वात्। किं पुनर्वर्णास्सर्वथैव नार्थवन्तः? पृथक्त्वेन तावन्नार्थवन्तः, न हि प्रतिवर्णमर्था उपपद्यन्ते।

ननु च धातुप्रातिपदिकप्रत्ययनिपातेषूपलभ्यन्ते– धातुषु इण्–एति, ऋ–इयर्तीति; प्रातिपदिकेषु अः शार्ङ्गी, उः ब्रह्मेति, उ उपस्करोति। नैते वर्णाः, अपि तु शब्दाभिव्यक्तिहेतव एकवर्णा एकध्वनिहेतवश्शब्दशब्दवाच्याः। न तूपचारतोऽपि वर्णसमूहश्शब्दः। नैवम्, अर्थाभिव्यक्तिहेतुश्शब्दः, शब्दाभिव्यक्तिहेतुर्ध्वनिः। स तु कश्चिदेकवर्णः; एकस्मिन्नेव वा समूहारोपणं सामर्थ्यातिशयाद्, यथैकापूपीति। यदि ह्येकस्मिन्नपूपे समूहो नारोप्यते, समूहाभावादेकापूप इत्येव स्यात्, न त्वेकापूपीति। कथं पुनरेकस्मिन् समूहारोपणम्? व्यपदेशिवद्भावात्। अन्यथा 'इयाय आर' इत्यादौ प्रथमत्वैकाच्त्वयोरभावाद् द्विर्वचनाभावः। यद्येवमन्येऽपि वर्णास्समूहारोपणेनैव ध्वनयो भवितुमर्हन्ति। नार्हन्ति। कुतः? शब्दशक्ति–स्वाभाव्यात्। यथा समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते केचिन्न युज्यन्ते; तथा धातुप्रातिपदिकप्रत्ययनिपाता एवैकवर्णास्समूहारोपणेनैवार्थवत्त्वाय ध्वनिव्यपदेशं लभन्ते, न पुनरन्ये। स्वाभाविकं चैतत्; न च स्वभावाः पर्यनुयोगमर्हन्ति।

इतस्तर्ह्यर्थवन्तो वर्णाः। वर्णव्यत्यये वर्णविपर्यये वर्णापाये वर्णोपजने वर्णविकारे वाऽर्थान्तरं गम्यते। वर्णव्यत्यये कूपः, सूपः, यूप इति। वर्णविपर्यये कलमः, लमकः, मलक इति। वर्णापाये मशकः, शकक इति। वर्णोपजने अक्षः, प्लक्षः, पक्ष इति। वर्णविकारे नीरं, नीलं, नीडमिति। तत्र कूप इति सककारेण कश्चिदर्थो गम्यते, सूप इति सकारव्यत्ययेऽर्थान्तरं, यूप इति तु सकारस्य ककारस्य वा यकारस्य व्यत्यये कूपात्

सूपाच्चार्थान्तरमिति। तेन मन्यामहे यः कूपे कूपार्थस्स ककारस्य, यस्सूपे सूपार्थस्स सकारस्य, यो यूपे यूपार्थस्स यकारस्येति। यदि तु समुदायस्यायमर्थो भवेत्, कूपादिसमुदायस्य यूपादिषु भूयस्त्वाद्भूयिष्ठः कूपार्थस्सूपे स्यात्; सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च सूप इति; एवं वर्णविपर्ययेऽपि क्रमोत्क्रमयोस्समुदायाविशेषात्, कलमः, मलकः, लमक इति प्रत्ययाविशेषः प्राप्नोति; न हि त्रस्तेभ्यो वटपरिच्छेदे पलाशतः खदिरतो वा न अवधारणे समुदायस्य भेदो भवति। वर्णापायेऽप्येकाद्यवयवविरहे समुदायस्यानन्यत्वात् मशकः, शकक इति नार्थान्तरं गम्येत। भिन्नकर्णपुच्छोऽपि श्वा श्वैव, नाश्वतर इति। वर्णोपजनेऽप्यक्षः, प्लक्ष इति प्रत्ययविशेषो न स्यात्। न हि सूनोद्भेदे केशोद्गमे वा युवतिव्यक्तेरन्यता युक्तिमती। एवं वर्णविकारेऽपि नीरं, नीलं नीडमिति नार्थान्तरप्रतीतिर्जायेत। न ह्यपलिते पलितवति रञ्जितकेशपाशे वा विष्णुमित्रादेः स्वरूपान्यत्वं भवति। वर्णव्यत्ययविपर्ययापायोपजनविकारेषु चार्थान्तरदर्शनान्मन्यामहे अर्थवन्तो वर्णा इति। वर्णार्थवत्वे वर्णव्यत्ययविपर्ययापायोपजनविकाराः कारणमर्थान्तरोपलब्धेर्जायन्ते।

अत्रापि ब्रूमः — य एते त्वया वर्णानामर्थवत्तायां हेतव उपन्यस्ता वर्णव्यत्ययादयः, तेषु कूपस्सूपो यूप इति सङ्घातान्तराण्येवैते, अर्थान्तरे च वर्तन्ते। यदि हि वर्णव्यत्ययादिकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थस्सूपे स्यात्, ककारमात्रस्यैव व्यत्ययात्। सूपार्थश्च कूप इति समानं पूर्वेण। यतस्तु न किंचित् कूपादीनां सूपादिष्वतोऽन्वयाभावान्मन्यामहे सङ्घातान्तराण्येवैतान्यर्थान्तरेषु वर्तन्त इति। एतेन वर्णविपर्ययादयोऽपि व्याख्याताः। तान्यपि हि अर्थान्तरवर्तीनि सङ्घातान्तराण्येवेति। इदं खल्वपि भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम्। यो हि मन्यते यः कूपे कूपार्थः स ककारस्य, ऊपशब्दस्तस्यानर्थकः स्यात्।

ननु च समुदायस्यार्थवत्त्वे समुदायैकदेशविनाशे समुदायस्य कारणाभावे कार्याभाव इति विनाशो वाभ्युपेयते; छिन्नकर्णपुच्छश्वन्यायादपि विनाशो वा। किंचातः? विनाशपक्षे समुदायाभावादर्थाभावप्रसङ्गः। पक्षान्तरेऽपि स एवार्थो, न त्वर्थान्तरम्; ततश्च कथं श्लोकः, शोकः, लोकः, ओकः, कः, इत्यर्थान्तरप्रतीतिः? उक्तमत्र— समुदायान्तराण्ये— वैतान्यर्थान्तरेषु वर्तन्ते। भवेदेतत्, यत्रार्थान्तरं गम्यते; यत्र तु स एव सोऽर्थस्तत्र कथम्? यथा उदकं, दकं, कम् इति। इमान्यपि सङ्घातान्तराण्येवैकार्थवृत्तीनि; यथा कन्दुः कोष्ठः, कुसूल इति। क्रमात्तस्य चार्थवत्तां ब्रुवता त्वयैव दकारोकारयोरानर्थक्यमुक्तं भवति। कश्चैवमाह? वर्णव्यत्ययविपर्ययापायोपजनविकारेष्वर्थान्तरदर्शनमेव; यतः श्यामा, रामा, वामा इति वर्णव्यत्ययो नार्थव्यत्ययः। तर्कुः, सिकता, सिंह इति वर्णविपर्ययो नार्थविपर्ययः।

सन्ति, घ्नन्तीति, स्यन्ति, वर्णापायो नार्थापायः। आस्थात्, अवोचत्, सञ्चस्कारेति वर्णोपजनो नार्थोपजनः। घातयति, क्षिणोति, रोपयतीति वर्णविकारो नार्थविकारः। तेन मन्यामहे वर्णव्यत्ययादिष्वप्यनर्थान्तरगमनादनर्थका एव वर्णा इति।

इतस्तर्ह्यर्थवन्तो वर्णाः; यदेषां सङ्घाता अर्थवन्तः। येषां ह्यवयवा अर्थवन्तस्त एव समुदायादर्थवन्तः; तद्यथा— एकश्चक्षुष्मान् पश्यति, तत्समुदायश्शतमपि पश्यति। एकतिलस्तैलं प्रसूते, तत्समुदायः खारीशतमपि प्रसूते। येषां पुनरवयवा नार्थवन्तस्तत्समुदाया अपि नार्थवन्तः। तद्यथा एकोऽन्धो न पश्यति, शतमप्यन्धानां न पश्यति। एका सिकता तैलं न प्रसूते, तत्समुदायः खारीशतमपि न प्रसूत इति। नैवम्, अतदर्थेनाप्यवयवेनावय— विनोऽर्थसद्भावो दृश्यते। यथा एक ऊर्णातन्तुः शीतत्राणासमर्थः, तत्समुदायश्च कम्बलः समर्थः; एकस्तण्डुलः क्षुत्प्रतिघातेऽसमर्थः, तत्समुदायश्च [1]वर्धितकं समर्थमिति। नैवं भवति। तत्र प्रत्येकमपि कियत्यप्यर्थमात्रा; इमे पुनर्वर्णा अत्यन्तायैवानर्थकाः। यथा तर्हि रथाङ्गानि विहितानि तानि प्रत्येकं न[2] व्रजिक्रियासमर्थानि, तत्समुदायश्च रथस्समर्थ इति। एवमेषां वर्णानां समुदायाश्शब्दाभिव्यक्तिहेतवोऽर्थवन्तः, अवयवास्त्वनर्थका इति।

अतः स्थितमेतत् प्रकृतिप्रत्ययादिवर्णजनितध्वनिसमूहोऽभिव्यङ्ग्यस्फोटलक्षणो— ऽर्थात्माऽर्थावसायप्रसवनिमित्तं शब्दः। तद्विशेषाश्च प्रकृत्यादिस्फोटः पदस्फोटो वाक्यस्फोट इति।

**योऽभूदित्यादिकश्शब्दो भवतीत्यादिकश्च यः ।**
**भूरस्तीत्यादिको यश्च स स्फोटं नातिवर्तते ॥१३८॥**
**प्रतिपाद्यो निवर्त्त्यश्च प्रतिपादक एव च ।**
**त्रिधा स्फोटस्स्फुटत्यस्मादतोऽर्थास्ते घटादयः ॥१३९॥**
**उक्तः क्रमाद् द्वादशभेदभिन्नश्शब्दप्रपञ्चोऽयमनादिसिद्धः ।**
**अथार्थमूर्त्याऽस्य विवर्तमाद्यं तावत्प्रकारं प्रतिपादयामः ॥१४०॥**

## इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रकृत्यादिशब्दप्रकाशो नाम ॥ तृतीयः प्रकाशः॥ ३ ॥

तृतीय एषोऽस्ति मया प्रकाशः प्रसाधितो हन्त सनातनेन ।
भोजप्रकाशः प्रकिरेत् प्रकाशं साहित्य—सौहित्य—समुत्सुकेषु ॥



---

१. अन्नपूर्णं पिठरादि पात्रम्। मनुः ३.२२४। २. नकारं राघवो न पठति HOS 200

अथ

## शृङ्गारप्रकाशे चतुर्थः प्रकाशः

क्रियाद्यर्थचतुष्टयप्रकाशो नाम

### (१. क्रिया)

तत्र प्रकृत्यादिशब्दप्रत्याय्याः क्रियाकालकारकपुरुषोपाधिप्रधानोपस्कारार्थे– प्रातिपदिकार्थविभक्त्यर्थवृत्त्यर्थपदार्थवाक्यार्थरूपा द्वादश भेदाः। तेषु कारकाणां प्रवृत्तिविशेषः **क्रिया**, तां धात्वर्थ इत्यामनन्ति (मभा. ३.१.३)।

धातवश्च त्रेधा– अस्त्यर्थाः, भवत्यर्थाः, करोत्यर्थाश्च। तत्र

येषां कर्तार उदासते ते **अस्त्यर्थाः**; यथा– अस्ति विद्यते ध्रियते तिष्ठति आस्ते वर्तते इत्यादि।

येषां विकुर्वते ते **भवत्यर्थाः**; यथा– भवति संजायते वर्धते विपरिणमते अपक्षीयते विनश्यति इत्यादि।

येषां प्रयुञ्जते ते **करोत्यर्थाः**; यथा– करोति विधत्ते जनयति निर्वर्तयति साधयति उत्पादयति। तत्र

**अस्ति–करोति–भवतीनां साम्यावस्थानं निर्विकारमनाद्यन्तं शब्दब्रह्मेत्याचक्षते।** तथैवंविधानेकार्थवाचिना भवतिनैवोमिति व्यपदिशन्ति। तस्य यदा अस्तिताहेतुरविद्या– निबन्धनोऽर्थविपरिणामरूपः प्रथमविकारो, अस्तिरुदयते तदा। अस्तेर्नास्तिप्रतियोगित्वादस्ति नास्ति वेत्येकमेवैतदुभयथापि प्रथामयते। यन्नास्ति तद् भवामीति चापेक्षायां, तद्भवतोऽस्य भवति–नामा द्वितीयविकारः परिप्लवते। ततो यद्भवति तस्य तस्य चान्यद्–भवतो मिथ्याभिनिवेशान्मिथः प्रयोज्यप्रयोजकत्वं (सं) भावयति–संज्ञकः तृतीयविकारः करोतिरित्याख्यायते (वाप. ३.३४–३६ जाति)।

एवं चास्मितापेक्षाभिनिवेशैर्दूरविप्रसृतायामविद्यायां एषामपि विशेषाविशेषतो दूरीकृता विद्याः विद्यति–जनि–पचादयः प्रादुर्भवन्ति। तदाह– 'कृभ्वस्तयः क्रियासामान्य– वचनाः क्रियाविशेषवचनाः पचादय' (मभा. ३.३.१८) इति। तेऽमी सर्वेऽपि धात्वर्थभेदाः संभेदतो मिथस्सङ्ख्यानमतिवर्तन्ते, न तु कृभ्वस्तिरूपताम्।

ननु च धात्वर्थः क्रिया; स च कारकाणां प्रवृत्तिविशेषः। कारकेषु च स्वतन्त्रः कर्ता, कर्तुरीप्सिततमं कर्म, साधकतमं करणम्, आधारोऽधिकरणं, कर्मणा यमभिप्रैति स

संप्रदानं, ध्रुवमपायेऽपादानं, तेभ्योऽन्यस्तदविवक्षा वा शेषः। कर्तुः प्रयोजको हेतुरिति कर्त्रादिभ्यो व्यतिरिक्तमर्थान्तरं नोपलभ्यते, यत् **क्रियेति** प्रतीयते।

## (क्रियासिद्धिः)

उच्यते– अस्ति क्रिया। किन्तु कर्त्रादिभ्यः पृथगाख्यातुमशक्यम्, अनापन्नसत्त्व–भावात्, अनिर्लुठितगर्भवत् (मभा. १.३.१); यथा गर्भोऽनापन्नसत्त्वभावः कललावस्थाया–माशयतः पृथगाख्यातुं न शक्यते, तथा क्रियापि साधनेभ्यस्साध्यावस्थायाम्। तद्यथा– ज्योतिः प्रकाशते, शब्दो ध्वनति इति।

कथं तर्हि अस्ति ज्ञायते कारकसन्निधानेऽपि पचतीति?

प्रख्योपाख्ययोर्भावाभावाभ्याम्।

१. इह खलु यत्सन्निधाने यस्य भावाभावौ, तस्य ततोऽन्यनिमित्तापेक्षित्वं दृष्टम्। यथा अग्निघटयोस्सन्निधाने भवतामभवतां च तत्संयोगापेक्षित्वं पाकजानाम्। कर्त्रादिसन्नि–धाने च कदाचित् पचतीत्येतद्भवति, कदाचिन्न पचतीति दृश्यते। तेन मन्यामहे नूनमस्ति शक्तिशक्तिमद्भ्योऽन्यश्शक्तिर्धर्मो यद्भावादिमे प्रख्योपाख्ये प्रवर्तेते, यदभावाच्च न प्रवर्तेते इति सिद्धमस्तित्वं क्रियायाः।

२. इतश्चास्ति क्रिया, साध्यमन्तरेण साधनानुपपत्तेः। इह खलु कर्त्रादीनां साधनव्यपदेशो दृश्यते, स च साध्यमन्तरेणानुपपन्नः; यच्च साध्यं सा क्रिया। तदाह–संहृत्य कारकैर्य एकोऽर्थोऽभिनिर्वर्त्यते सा क्रिया। क्रियानिमित्तं कारकमिति। तथा च क्रियासु स्वेच्छया कारकादीनि यः प्रयुङ्क्ते, न तु तैः प्रयुज्यते, स **कर्ता**, कर्तुः क्रिययाऽनन्यया यदाप्यते त**त्कर्म**, क्रियासिद्धौ साधकतमत्वेन यदव्यवहितं व्याप्रियते तत् **करणम्**, कर्त्रा कर्मणा वा व्यवहितः क्रियाधारोऽ**धिकरणम्**, क्रियाकार्यत्वेनावधारितं कर्मणा संयोगं यदनुभवति तत्**संप्रदानम्**, कर्त्रा कर्मणा वा क्रियाजन्यमेव ध्रौव्येण यद्विभागमवगाहते त**दपादानम्**, श्रूयमाणाश्रूयमाणक्रियापदः क्रियाकृतः कारकाणामकारकाणां च संबन्धविशेषः स **शेषः** (वाप. ३.७.१५६)। कुर्वन्तमेवाज्ञा–प्रदानादिना यः क्रियायां नियुङ्क्ते, सः तत्**प्रयोजको हेतुः कर्ता** च भवति। एवं च यथा काष्ठादयो लाक्षादिकमपेक्षमाणा एवं मिथस्संबन्धयोग्यतामनुभवन्ति तथा द्रव्याण्यपि क्रियापेक्षीण्येव परस्परसंबन्धाय प्रभवन्तीति क्रियामन्तरेण जगतश्चित्रकर्मण इव मिथस्संयोगो वियोगश्च न स्यात्। तदुक्तं – यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं **क्रियेति** (मभा. १.३.१)।

## (क्रिया न कारकम्)

अस्तु नाम क्रिया, कारकेभ्यस्तु तस्याः कथं व्यतिरेकः?

न च भवन्तोऽपि क्रियाकारकयोर्व्यतिरेकं न मन्यन्ते, तद्यथा चोरस्य रुजति, चोरस्यामयति इति।

उच्यते **व्यतिरिक्तैव कारकेभ्यः क्रिया**,

१. अनेकस्यैकव्यपदेशनिमित्तत्वात्। इह यद् यस्यानेकव्यपदेशनिमित्तं तत्ततोऽन्येति, अनुगम्यत्वात्; इह यैर्यदनुगम्यते तत्तेभ्योऽन्यत्, यथा नरेभ्यो राजा। अभिगम्यतेऽनुगम्यते च क्रिया कारकैः, अतस्ततोऽन्येयम्।

२. जन्यत्वेनोपलम्भात्; यज्जन्यतया यदुपलभ्यते तत्ततोऽन्यत्, यथा पितुः पुत्रः। उपलभ्यते क्रिया कारकजन्यत्वेन, तस्मात् ततोऽन्या।

३. उपलब्धावनुपलब्धेः; इह यस्योपलब्धौ यस्यानुपलब्धिः तत्ततोऽन्यथा, (यथा) रूपाद्रसः। सूर्यस्य चोपलब्धौ न गतेरुपलब्धिः, तस्यास्ततोऽन्यथा; अस्ति चास्यासौ, देशान्तरप्राप्तेः; सापि दृष्टा; तथैवापश्यतः परावृत्य दर्शनात्।

४. प्रमाणान्तरग्राह्यत्वात्; इह यद्यस्मात् प्रमाणान्तरेण गृह्यते तत्ततोऽन्यत्; यथा शरीरादात्मा। प्रमाणान्तरग्राह्या च सदागतौ गतिः; तस्मात्ततोऽन्या।

५. बहुप्रविविक्तत्वेनाभिधानात्; इह यद् बहुभ्यः प्रविविक्तमेकत्वेनाभिधीयते, तत् ततोऽन्यत्; यथा तन्तुभ्यः पटः। अभिधीयते बह्वाश्रितापि प्रविवेकैकत्वेन क्रिया; यथा ब्राह्मणैरास्यत इति तस्मात् ततोऽन्या।

६. अनावृत्तावावृत्तेः; इह यस्मिन्ननावर्तमाने यदावर्तते, तत् ततोऽन्यत्, यथा हस्तिनो मशकः। आवर्तते चानावर्तमाने कर्तरि क्रिया, पञ्चकृत्वः पचतीति; तस्मात् ततोऽन्या।

७. इहोभयोरपि संशयनिर्णयनिमित्तत्वात्; इहोभयोस्संशये यस्य यो निर्णयहेतुर्भवति, तत् ततोऽन्यत्, यथा स्थाणौ श्येनः, निर्णयहेतुश्च, पुरुषस्य चलनादिक्रिया, तस्मात् ततोऽन्या।

८. अभिधायाभिधानात्; इह यदभिधायार्थान्तराविवक्षामन्तरेण यदभिधीयते तत् ततोऽन्यत्, यथा गौरश्वः। अभिधीयते च अध्येता अधीते गन्ता गच्छतीति कारकमभिधाय क्रिया, तस्मात् ततोऽन्या।

९. पर्यायाप्रसिद्धेः; इह येषामेव पर्यायप्रसिद्धिः, तेषामेव च तेभ्यो न भेदः, यथा निर्वर्तिरिति; न च पचन्नधीते पचत्यधीत इति पचन्पचत्योः पर्यायत्वम्, (न च) अपि पचन्नधीत इति कर्तुः पचतीति क्रियायाः पर्याययोग्यत्वम्; अतोऽसौ ततोऽन्यः।

१०. अभिन्नशब्दाभिधानेऽपि विशेषणानां लिङ्गवचनभेदात्। इह खलु क्रियाकर्त्रोरभिन्न–शब्दाभिधेयत्वेऽपि तद्विशेषणानां लिङ्गवचनभेदो दृश्यते, यथा शोभनं पचति शोभनं पचतः शोभनं पचन्तीति। स चार्थभेदेऽभिन्नशब्दोपादान एव दृश्यते। तटः तटी तटं, पुष्यः तारका नक्षत्रं, रसः आपः जलम्, दाराः कलत्रं भार्या इत्यादिविशेषणानाम्। न तूदाहृतसदृशेष्विति क्रिया कर्तुरन्या।

११. शब्दावृत्तिभेदेषु तद्धी भेदात्। इह खलु क्रियाकारकयोश्शब्दावृत्तिभेदे बुद्धिभेदो दृश्यते; अध्येता पठति पठति, गन्ता गन्ता गच्छतीति पूर्वयोर्वीप्सा, उत्तरयोराभीक्ष्ण्यम्। यस्य च यतो बुद्धिभेदस्तत् ततो व्यतिरिक्तं, यथा मृदङ्गध्वनेर्मेघध्वनिः, घटादिभ्यः पटादय इति क्रियायाः कारकेभ्यो व्यतिरेकः।

१२. सिद्धे चास्मिन्नभेददर्शनं भेदव्यतिरेकश्च विवेकत एवेति द्रष्टव्यम्।

## (क्रियाया अनेकत्वम्)

१. दृश्यते च प्रदीपप्रवाहशब्दशरीरसंस्कारज्ञानसुखदुःखेच्छाद्वेषप्रयत्नरूपादिषु भिन्नेषु अभिन्नप्रत्ययः प्रवर्तते, तेष्वभेदेनैव तदनुकूलो व्यपदेशः। चोरस्य रुजतीत्यत्र तु रुक्साधकस्य कर्तुरभावाल्लकारः कर्तरि वर्तमानां तामेव रुजधात्वभिहितामभिधेयीकरोति। अस्ति च साध्यस्यापि वस्तुनो भवतः कर्तृत्वम्, अतस्तदेव कर्तृप्रत्ययेनाभिधीयते। न चोरस्य रुजतीत्यस्यायमर्थः चोरस्य रुगुत्पद्यत इति।

कुतः पुनरयं **कारकक्रिययोर्विशेषः** यदेकत्र **वीप्सा** अन्यत्र**आभीक्ष्ण्यमिति**?

क्रियाया एकत्वेन वीप्सानधिगमात्। बहूनां हि क्रियागुणद्रव्यैः प्रयोक्तुर्युग–पद्व्याप्तुमिच्छा **वीप्सा**; सा त्वेकत्वे क्रियाया नोपपद्यते इति।

२. ननु च क्रियाया एकत्वं नोपपद्यते, कालत्रयेणात्यन्तविरोधिना युगपदभिसंबन्धव्यपदेशात्; इह खलु क्रियाया एकैकस्मिन्नपि काले कालत्रयाभिसंबन्धहेतुर्व्यपदेशो दृश्यते, पचति देवदत्तः, अपाक्षीद् यज्ञदत्तः, पक्ष्यति विष्णुमित्र इति। तच्चैकत्वे न घटते **इत्यनेका क्रिया**।

३. भेदनिबन्धना आतिशयिकतरबादिप्रत्यययोगात्; इह खलु क्रियायाः पचतितरां पचति–तमामित्यातिशायनिकप्रत्ययो दृष्टः; स च द्वयोर्बहूनां च प्रकर्षे सिद्ध इत्यनेका क्रिया।

४. एकेन युगपदनेकाधिकरणस्य निर्धारणात्; इह यदेकैकस्मिन् काले अनेकाधारस्थं पृथक्त्वेनावधार्यते तदनेकम्, यथा अङ्गुलीषु नखानि निर्धार्यन्ते; निर्धार्यते चानेकाधिकेन युगपद् गोषु गतिरित्य**नेका क्रिया**।

५. पूर्वकालेऽपि प्रत्ययदर्शनात्; इह द्वयोरेककर्तृकयोः क्रिययोः पूर्वकाले क्त्वाप्रत्ययो दृश्यते। यथा भुक्त्वा भुङ्क्ते, पक्त्वा पचतीति; द्वित्वं चैकत्वप्रत्यनीकमित्यनेका क्रिया।

६. युगपल्लक्ष्यलक्षणयोगात्; इह क्रियाणामभिन्नकालं लक्ष्यलक्षणयोगो दृश्यते; गवि दुह्यमानायामपि दोग्धि; तयैकत्वेऽनुपपन्न**मित्यनेका क्रिया**।

७. हेतुफलभावात्; इह खलु हेतुफलयोः प्रसिद्धो भेदः; स च क्रियासु दृश्यते 'ओदनं पचति, शाकं पचति, भुञ्जान ओदनं भुङ्क्त' इति,भेदश्चैकत्वविरोधी**त्यनेका क्रिया।**

८. क्रियार्थक्रियोपपदतुमुनादिप्रत्ययोत्पत्तेः; इह ये तु क्रियार्थायामुपपदे तुमुनादयस्स्मर्यन्ते, ते च भोक्तुं गच्छति, पाकाय व्रजति भोक्ष्यामीति। पचतिप्रभृतिषु यथाऽभिन्नधातु– वाच्यत्वेऽपि दृश्यन्ते, यथा गन्तुं गच्छति, भोजनाय भुङ्क्ते, पक्ष्यामीति पचतीति। स चायं तदर्थफलभावोऽनेकत्व एवोपपद्यत **इत्यनेका क्रिया**।

९. अभिहितानभिहितशक्तिप्रादुर्भावनिमित्तत्वात्; इह धात्रीं धयति, दात्रेण दाति, दाशाय दाशते, भीमाद् बिभेति, आसने आस्ते, शयने शेते, स्थाने तिष्ठति, प्रासादे प्रसीदति (इति) प्रत्ययविभक्त्योर्दर्शनादभिहितानभिहितशक्तिप्रादुर्भाव उपलभ्यते; स चानैक्यनिमित्तं क्रियाभेदमन्तरेण न सङ्गच्छत **इत्यनेका क्रिया।**

१०. भावाभिधानेऽपि तन्त्रादिभ्यो द्विवचनबहुवचनोपलब्धिः; इह खलु शुद्धेऽपि भावे तन्त्रादिभ्यः पाकौ पाकाः, उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्त इति द्विवचनबहुवचनोपलब्धिः; तच्च क्रियैकत्वे न युक्त**मित्यनेका क्रिया**।

११. कृदाख्याताभिहितायाः क्रियायाः सर्वसंख्यासामानाधिकरण्यात्। इह कृदभिहिताया आख्याताभिहितायाश्च क्रियाया भिन्नार्थाभिधायिभिस्संख्याशब्दैः सामानाधिकरण्यं दृश्यते; यथैकः पाकः, द्वौ पाकौ, बहवः पाकाः; एका उष्ट्रासिका आस्यते, द्वे आस्येते, बह्व्य आस्यन्ते; तच्चैकत्वे क्रियाया न सांप्रत**मित्यनेका क्रिया।**

१२. इह भवतिनिमन्तृप्रभृतीनामवधृतभेदपरिस्पन्दाश्रयकार्याभिनिर्वृत्तेः; इह यासां क्रियाणामवच्छेदकधात्वर्थोपाधिभेदादनेकत्वं प्रत्यविवादः, तासु ये भेदाश्रया धर्माः प्रसिद्धाः, तद्यथा भोक्तुमिच्छति, भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, आमन्त्रयै समाजम्, उत्सवमामन्त्रयै इति–(ते) समानधातुवाच्यास्वपि दृश्यन्ते; एषितुमिच्छति, भवेदपि भवेत्, स्यादपि स्यात्, निमन्त्रये निमन्त्रणार्थम्, आमन्त्रये

आमन्त्रणार्थमिति; तस्माद् भवेदाश्रयकार्यसंबन्धाद् भवितव्यमनेकत्वम्; एकेन धातुना सर्वत्र भेदेने**त्यनेका क्रिया।**

१३. साध्यसाधनभावात्; इह साध्यसाधनयोः प्रसिद्धो भेदः; प्रदृश्यते च साध्यसाधनता क्रियाणाम्; यथा 'स इमान् पोषानपुषत्', तप्यते तपस्तापस इति। तच्चैकत्वे नं घटते **इत्यनेका क्रिया।**

तदेतदनेकत्वे क्रियायास्सर्वमसाधनं साधनभेदादेवोपचरितभेदाया एकत्वे वा तदुपपत्तेः।

## (क्रियायामनेकत्वोपचारः)

भिन्नानामप्युपाश्रयादिभेदाद् भिन्नाधारात् प्रतीतदेशव्यपदेशादयश्च दृश्यन्ते; यथेन्दोर्जलेषु, ज्योत्स्ना जालेषु, जलधराणाम् आशासु, दिशो व्यवस्थासु, पृथक्त्वस्यार्थेषु, बुद्धेर्विषयेषु, विद्युतोऽब्देषु, शब्दस्य कन्दरेषु, चित्रस्य नीलादिषु, आकाशस्यावकाशेषु, भावस्य भावेषु, भेदाभावेषु च या भेदबुद्धिः; यथा च संपन्नो यवो यवनेषु, शुष्कः तुरुष्केषु, सुजातो व्रीहिः सुह्मेषु विनष्टस्सुराष्ट्रेषु, दर्शनीयौ स्तनौ इन्द्रसेनेषु अक्षिणी कलिङ्गेषु, परुद् भवान्, पटुरासीत्, पटुतर ऐषमः (मभा. ३.५.५७), मार्गे कूपोऽभूत्, कूपो भविष्यति, प्रियो मन्युस्ते प्रिया न वयम्, मैथिली रामस्य दाराः, आपः पवित्रं, वरणा नगरं, शिरीषाः ग्रामः, पाञ्चाला जनपदा इत्यभिन्नस्यापि जात्यादेरर्थभेदस्य भेदतो व्यपदेशः। तथा क्रियाया अपि कालयोगादयः साधनभेदाद् भविष्यन्ति; अनेकाधारसमवेतायाश्च युगपदेकेन ग्रहणं जातिवदुपपत्स्यते।

कृदभिहितानां तु शुद्धभावानाम् आख्यातवद्भिः क्रियाभिः द्रव्यवद् वैधर्म्यादयुक्तस्तद्धर्मोपनयः। कृदभिहितो हि भावो द्रव्यवत् प्रकाशमानो लिङ्गसंख्या–कर्मादिशक्तीनामाश्रयो भवति (मभा.२.२.१९,३.१.६७) न त्वाख्यातवाच्यः तस्यापरिनिष्पन्नत्वेनाश्रयत्वानुपपत्तेः। तथा हि, यथा पाको वर्त्तते, पाकं पचतीति शक्तिसंख्यादियोगः कृदन्तेषु दृश्यते, नैव तिङन्तेषु। न हि भवति, पचति वर्तते, पचति पक्ष्यतीति। ननु च भवति पश्यति, मृगो धावति, इह पश्यामः, कर्मणि द्विवचनबहुवचन–नान्युदाह्रियन्त इति धावतीनां दृशि कर्मत्वं, केवलं त्वप्रातिपदिकत्वात् सुपोऽनुत्पत्तिः; तन्न; यथा क्रियायाः क्रियमाणत्वादेव नैसर्गिकं भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति च दृश्यते पचादीनां भवतेः कर्तृत्वं दृश्यते। भवति धावति पश्यति

पश्येति कर्मत्वं क्रियाविशेषणानां कर्मतयाऽवगम्यते। तथोत्पद्यमानत्वादेव गतौ कर्तृत्वमपि नैसर्गिकमेव। मृगो धावतीत्यादौ गम्यमानेतिशब्दोपसंहृतस्य वाक्यार्थस्य कर्मत्वं, न क्रियायाः। तस्मादशङ्कनीयं क्रिया सकर्तृशक्तियोगा, करणादियोगायोगाभ्याम्। शक्तिस्तु व्यक्तमेव कृदाख्याताभिधेयभावयोर्मिथो वैधर्म्यमिति। तस्मादनेकार्थविषयया वीप्सयाऽनभिसन्धानात् सिद्धमेकत्वं क्रियायाः। शब्दप्रत्यययोरभेदाच्च; यत्राभिधानज्ञानयोः अत्यन्तमभेदस्तस्यैकत्वं सिद्धम्, यथा जातेः प्रत्येकं च व्यक्तिविशेषाणाम्। अभिन्नौ च देशकालौ भेदे च क्रियायाः शब्दप्रत्ययौ दृश्येते, यथा च पचति पचतः पचन्तीति; तस्माच्छब्दप्रत्ययाभेदहेतुः एका क्रिया।

ननु च जलचन्द्रादिदृष्टान्ते भेदव्यवहारे सन्देहः, किं साधनमभेदाश्रयाणि क्रियायाः कालत्रययोगादीनि प्रत्ययव्यपदेशादीनि च भेदकार्याणि, उत स्वभेदाश्रयाणीति।

अत्रोच्यते क्रियाया अभेदेऽपि साधनभेदाद् द्विवचनबहुवचनोत्पत्तेस्संदेहाभावः। इह भेदस्याभेदपूर्वकत्वाद्, भेदमभ्युपगतवताऽवश्यमभेदोऽभ्युपगन्तव्यः; तस्य यस्याः क्रियाया एकत्वमभ्युपगम्यते तस्यास्साधनभेदाद् दृष्टो द्विवचनबहुवचनयोगः; यथा परमाणुं पचतः, परमाणुं पचन्ति। अनेकत्वाभ्युपगमे च साधनस्याभेदे दृष्टमेकवचनमेव, भिनत्ति कुसूलमिति। तस्मात् साधनभेदानुविधानाच्च क्रियायाः, क्रियाभेदानुविधानाच्च साधनानां साधनाश्रयाणि भेदाभेदकार्याणि क्रियायाः, न स्वाश्रयाणीति।

कथं तर्हि पच्येते ओदनौ पच्यन्ते ओदना देवदत्तेनेति कर्त्रभेदे वचनभेदः? यस्मिन् साधने लादयोऽभिधीयन्ते, तद्भेदमनु विधीयन्ते क्रियायाः क्रियाभेदसाधनानीत्यशङ्कनीयमेतत्। प्रदीपादिषु भेदयोरनात्यन्तिकत्वात् ज्ञानाभिधानयोरपि तथात्वेऽस्ति, न तैर्व्यभिचारः।

१४. इतश्चानेका क्रिया क्रियाभ्यावृत्तिभावाद् बहुसंख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजादयस्स्मर्यन्ते; पञ्चकृत्वो भुङ्क्ते, चतुष्पचतीति; तच्चाभेद एवोपपद्यते। न हि देवदत्ते गते, यज्ञदत्ते चायाते पुनरावृत्त इति व्यपदेशो दृश्यते; दृश्यते च तत्रैवायात इत्येका क्रिया, समुच्चयाभावात्। इह भिन्नानामेकविषयसन्निपाते समुच्चयो दृष्टः; तथा देवदत्तस्य गौश्चाश्वश्च पुरुषश्च; देवदत्तस्य यज्ञदत्तस्य विष्णुमित्रस्य च गौरिति। न च पक्तुरभेदे गुडतिलौदनादि पंक्तिभेदात् क्रियाभेदाभ्युपगमेऽपि क्रियासमुच्चयो दृश्यते, देवदत्तः पठति पचति चेति। तस्माद्

## (क्रियाया एकत्वम्)

१. एका क्रिया सत्त्वभावापत्तौ, प्रविवेके एकत्वेनाभिधानात्। इह क्रिया सत्त्वभावं प्रतिपन्ना यदा साधनेभ्यः प्रविविच्यते, न भवति तदा द्विवचनादियोगः, ब्राह्मणैरास्यत इति; तस्मादेका। ननु च सत्त्वभावेऽप्येतदुपलभ्यते यथा गुडतिलौदनानां पाकः 'ताम्रः पलाशेषु बभूव रागः' इति; तन्न; तस्यापि व्यभिचारात्, यथा—

**तां प्रत्यभिव्यक्तमनोरथानां ततो नृपाणां प्रणयाग्रदूत्यः ।**
**प्रवालचेष्टा इव पादपानां विलासचेष्टा विविधा बभूवः ॥१॥** (रघु. ६.१२)

व्यभिचारे किन्निमित्तमिति चेत्, कृदभिधानमेव; कृदभिहितो भावो द्रव्यवत् प्रकाशते। द्रव्यस्य च सत्यपि नानात्वे संबन्धिभेदादेव भेदावगतौ क्वचिदभेदाभिधानम्। यथा—

**ऊरुमूलचपलेक्षणमघ्नन् यैर्वतंसकुसुमैः प्रियमेताः ।**
**चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥२॥** (माघ. १०.६७)

यथा च वेदवाक्यम्— (तैसं. ३.१४.३)

**'यत्पशुर्मायुमकृतोरो वा पद्भिराहते।'** इति॥ **३**॥

क्वचित् पुनस्तद्विवक्षायां भेदेनैव यथा— (रघु. ७.११, कुसं. ७.६२)

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तरास्सान्द्रकुतूहलानाम्**॥ इति॥ ४॥

ब्राह्मणैरास्यत इति सर्वदैकवचनमेवेति विशेषः, साध्यत्वात्। सिद्धस्यैव वस्तुनस्संख्यायोगो युज्यते, न साध्यस्य, अपरिनिष्पन्नत्वेनाश्रयत्वानुपपत्तेः। साध्या च क्रिया प्राधान्यतः तिङ्भिरभिधीयते; तस्मान्न भेदसंख्ये इत्येका।

२. **एकशेषात्**। इह येषां सरूपशब्दाभिधेयानामनेकत्वं दृष्टं, तदभिधानानामेकशेषो दृष्टः। तद्यथा व्यक्तिपक्षे ब्राह्मणाः, पुरुषा इति। न च ब्राह्मणैरास्यते, पुरुषैर्गीयत इति क्रियाभिधानानामेकशेषो दृश्यते। स चायमेकशेषो व्यावर्तमानस्त्वव्याप्तमनेकत्वमपि गृहीत्वा व्यावर्तत इति एका क्रिया (मभा. १.२.६४)।

ननु च कथमेकशेषाभावः?

न तिङन्तान्येकशेषं प्रयोजयन्तीति (मभा. ५.३.६६)।

का पुनरत्रोपपत्तिः? क्रियाप्रधानत्वमाख्यातानाम् (मभा. ३.१.६६)। तदेव चिन्त्यते। इह खलु क्रियाकारकयोः प्रधानोपसर्जनभावेन वृत्तिसंसर्गेण चतुष्टयी गतिः। क्रिया वा क्रियायां न्यग्भवति यथा चिकीर्षति, अध्यापयतीति; कारकं वा कारके यथा

आक्षिकः, निष्कौशाम्बिः; कारके वा क्रिया यथा पाचकः, पचनीयम्; क्रियायां वा कारकं यथा पुत्रीयति, उपश्लोकयति। आख्यातेषु चैषामन्यतमोऽपि न प्रकारः; तत्र हि साध्या क्रिया विप्रकृता क्रमवती साधनतन्त्रा सव्यापारसाधना अपरिसमाप्ता पचादिभिरुच्यते, सिद्धानि च साधनानि तिबादिभिरभिधीयन्त इति न कस्यचित् प्राधान्यमप्राधान्यं वा। प्रत्युत प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः। प्राधान्येनेति, प्रत्ययार्थस्य प्राधान्यं स्यात्; एवं च द्विवचनबहुवचने अपि तन्निबन्धने उपपद्येते।

तन्न; सिद्धं साध्यायोपादीयते; सिद्धानि च साधनानि च, तानि परार्थमुपादीयमानानि शेषतां लभन्ते। साध्यं तु परोपकारेषु असमर्थमात्मसिद्धयेऽर्थान्तरमपेक्षमाणं तद्वैधर्म्यात् प्रधानभावमनुभवति।

नन्वेवं ह्येकशेषाभावो न सिध्यति; न ह्येकशेषाभावे प्राधान्येन गुणभावेन वा किञ्चिदाश्रीयते। पचादयो हि क्रियावचनाः, तेषामेक एवानेकसाधनसमवेतानेकत्वेन विवक्षितां क्रियामभिधास्यति।

तन्न; यद्यप्येको धातुः यथा उक्तां क्रियां ब्रवीति तथा लकारस्यानेककर्मकर्तृविषयत्वात् प्रतिसाधनमुपपत्तावनेकत्वं प्राप्नोति, तदनुरोधाच्चार्थाः प्रधानाः (वर्त्तन्त) व्यावर्तन्त इत्येकशेषारम्भः स्यात्। क्रियाप्राधान्येन तु गुणभूतयोः कर्तृकर्मणा(कृति २.३.६५)स्सुप्त इति(?)। एवं तर्हि भिन्नसाधनमभिन्नमर्थं वक्ष्यामीति एकशब्दत्वं, साधनभेदात्तु द्विवचनबहुवचनयोगः।

अन्ये ब्रुवते— यद्येकस्याः प्रकृतेस्साधनभेदे भिन्ना लकाराः प्रसज्येरन्, तथापि यथैकस्थाने एकवचनमेव द्वयोर्द्विवचनं बहूनां (बहुवचनं) भविष्यन्तीति। इदमेव हि द्विवचनबहुवचनयोः द्विवचनबहुवचनत्वं, यत्तदेकशब्दरूपमेकशेषशब्दवदनेकार्थाभिधाने समर्थमिति व्याख्यायते। इतश्च क्रियाप्रधानमाख्यातं, करोतिना प्रश्ने निर्णयार्थत्वात्। किं देवदत्तः करोतीति प्रश्ने पचति, आस्त इत्युत्तरं भवति, न त्वासकः पाचक इति (१.३.६६ काशिका)।

न चायं कर्तृप्रश्नः, किं देवदत्त इति, विशेषस्याभ्यन्तरीकृतत्वाद् भिन्नलिङ्गत्वाच्च। नापि कर्मप्रश्नः, अनिर्ज्ञाते व्यापारे कर्मप्रश्नासंभवात्; पचति पठतीति कर्तृविशेषमन्तरेण प्रतिवचने प्रष्टुः कृतार्थत्वात्; पचति पठतीति चाख्यातस्य आख्यातेनायोगात्। यदि साधनं प्रधानं स्यात्, यथा पाचकः पचतीति, सामानाधिकरण्येन न योगो भवति, यथा

पचति पठतीत्यत्रापि स्यात्। न चैतदस्त्यतः क्रियाप्रधानत्वमेवाख्यातानां, क्रियाप्रधानत्वाच्च न एकशेषारम्भः। तदनारम्भादेकत्वम्, एकत्वेन वीप्साभावः, वीप्साभावाच्च गन्ता गन्ता गच्छति गच्छतीति शब्दावृत्तिः, शब्दावृत्तेर्बुद्धिभेदः, बुद्धिभेदाच्च क्रियायाः कारकेभ्यो व्यतिरेक इति।

ननु च पचति पचतः पचन्तीति धात्वर्थ एवायं, न क्रिया।

तन्न; धात्वर्थस्य प्रत्ययार्थस्यैवावच्छेदकत्वाद्धात्वर्थात् तु क्रियायाः पृथक्त्वं साध्यमानमप्रधानव्यपदेश्यतायामेवं संतिष्ठते। यथैव तर्हि कारकभेदेऽप्यभेदः क्रियायाः, तथा धात्वर्थभेदेऽप्यभेद एवास्तु; सत्यमेतत्। किंतु वस्तुनः सर्वथैकत्वमनेकत्वं वोच्यमानं भेदाभेदनिबन्धनं लोकव्यवहारं सर्वमतिक्रामति। तस्माद् भेदमभेदं वा अभ्युपगच्छता व्यवहारप्रसिद्ध्यर्थमभेदो भेदश्चाभ्युपगन्तव्यः। कस्यचित् किञ्चिन्मुख्यं किञ्चिदौपचारिकम्। सर्वो हि भेदवादी निरुपकारेष्वयःशलाकावदसंबन्धेष्वन्योन्यव्यावृत्तेषु भेदेषु तदेवेदमिति प्रत्ययस्य अभेदादेकत्वमाश्रित्य लौकिकं व्यवहारमनुगच्छति। एकत्ववादी च भेदाधिष्ठानामिव भवतां सर्वां वृत्तिं सर्वं च विशेषशब्दव्यवहारं धर्मान्तरसंसर्गपूर्वकं लोके व्यवस्थितं मन्यमानो लोकमनुगच्छन् अभिन्नमपि भेदैरेव निदर्शयति। तस्माद् भिन्नधात्वर्थावच्छिन्ना भिन्नापि क्रिया अभिन्नैवेति। एतेनैतदपि संगृहीतम् –

१. भवति व्रजति पचत्यस्ति श्वेतत इत्यादौ प्रत्ययार्थधात्वर्थयोरुद्वापावापाभ्यामन्यत्वेनावधारितो धात्वर्थावच्छिन्नः, परिच्छिन्नकालः कालपरिच्छिन्नो वा, उपसर्गादिभिरुपस्कृतः, कृतप्रत्ययार्थोपकारः कारकैरसंख्यशक्तिभिस्संख्योपाध्युपकृतैरुपक्रियमाण उपक्रमप्रभृत्यपवर्ग पर्यन्तमन्तःप्रतिभया साकल्येनोल्लिख्य साध्यत्वेनाध्यवसितः तथा सूभृतो(?) बहिर्निष्पन्नः प्रक्रान्तक्रमरूपावयवसमुदायात्मा अनपेक्षितान्तरालक्रियान्तरोपनिपातः, तथाविधावयवो वा पुरुषव्यापारः क्रिया।

२. यथोक्तविशेषणोत्पन्नधात्वर्थो वा,

३. साध्यफलनिष्पत्तिपूर्वक्षणोपलभ्यमानतदवयवो वा

४. अवयवसमूहोपलभ्यमानैकाकारप्रत्ययनिमित्तजाति विशेषो वा,

५. पूर्वावयवोपकृतान्यावयवप्रतीयमानजातिप्रादुर्भावो वा,

६. धात्वर्थव्याप्रियमाणकर्तृकर्मणोः स्वव्यपदेशनिमित्तसत्तासंबन्धो वा, व्याप्रियमाणेषु स्वपरात्मनोः पूर्वस्वरूपविलक्षणरूपान्तराभिमानो वा,

७. तत्रैव च तयोस्तथाविधाभिन्नस्वकारणसत्तासंबन्धो वा,

८. बुद्धिसत्ताभावेषु प्रत्यस्तमितरूपमनेकबुद्ध्यनुस्यूतं बुद्धिसामान्यं वा क्रियाशब्दे–नाभिधीयते। अपि च–

**यावत् सिद्धमसिद्धं वा साध्यत्वेन विवक्षितम् ।**
**आश्रितक्रमरूपत्वात् तत् क्रियेत्यभिधीयते ।।५।।** (वाप. ३.१)

## (क्रियायाः परोक्षत्वम्)

सा च कार्यानुमेयत्वात् परोक्षेत्येके। गच्छतिपचत्यादिप्रत्ययेषु प्रत्यक्षेण, देवदत्तादिस्वरूपेऽतिरिक्तक्रियातत्त्वानुपलब्धेः। तथा हि–

**य एव देवदत्तात्मा तिष्ठत्प्रत्ययगोचरः ।**
**चलतीत्यपि संवित्तौ स एव प्रतिभासते ।।६।।** (न्यायमं.)

किंतु चलतीति प्रतीतिः संयोगविभागमालम्बते, संयोगविभागः कदाचिदेवोत्पद्यमानः परिदृश्यमानपदार्थस्वरूपातिरिक्तं कारणमनुमापयति, यच्च कारणं स परिस्पन्दप्रयत्नादिरूपः पुरुषव्यापारोऽतीन्द्रियः क्रियेति।

तदनुपपन्नमित्यन्ये। चलतीत्यादिप्रत्ययानां प्रत्यक्ष क्रियाऽवलम्बनत्वात्। तथा च न चलतीति प्रतीतेस्संयोगविभाग आलम्बनमव्याप्त्यादिप्रसङ्गात्। तत्र आकाशे विहङ्गमो गच्छतीति प्रतीतिर्न स्यात्, संयोगविभागयोरग्रहणात्। न च द्वयोर्विहङ्गमविहायसोः संयोगविभागौ प्रत्यक्षौ, प्रत्यक्षेतरवृत्तित्वात्, वायुवनस्पतिसंयोगविभागवत्।

अथ विततालोकावयवी आकाशः, तत्संयोगविभागौ च पक्षिणः प्रत्यक्षौ;

तन्न; सन्तमसेऽपि खद्योतविद्युतोः क्रियाबुद्धेः।

न च तमो नाम वस्तुरूपमस्ति, भूकम्पे च कम्पते वसुन्धरेति च ज्ञानमस्ति। न च संयोगविभागग्रहणमस्तीत्यव्याप्तिः। संयोगविभागोपजनप्रबन्धेऽपि तयोर्वर्तमानयोरेव ग्रहणम्; तौ च गत्वापि स्थिते गवादौ स्त इति। तत्रापि गच्छतीति ज्ञानप्रसङ्गः; निश्चले च श्येनसमवायापायपरम्परावति वध्यशूले, प्रवाहजलाश्लेषमालहारिणि सरित्कूले, रङ्गत्तुरङ्गमसंयोगविभागश्रेणिमति च वाह्यालीमहीतले चलतीति प्रत्ययः प्राप्नोति। अथ क्रियाजन्यत्वं संयोगविभागजानां, तत्रैव चलतीति श्येनादौ, चलतीति

प्रत्ययो न निष्क्रिये शूलादाविति; तर्हि क्रियावयवान्वयव्यतिरेकानुविधानात् क्रियालम्बन एवायं प्रत्ययो, न संयोगवियोगालम्बनः।

किञ्च नित्यपरोक्षायां क्रियायामिदमपि न ज्ञायते— 'किं शूलकूलमहीतलक्रियाजन्यत्वं संयोगविभागानां, किं वा श्येनजलतुरगक्रियाजन्यत्वमि**त्यतिव्याप्तिः**; संयोगविभागालम्बनत्वे च संयुज्यते वियुज्यत इति च प्रतीतिः स्यात्, न चलतीति, यथाविषयं प्रत्ययोत्पादाद्, अनिर्ज्ञाने जलस्य अनिर्ज्ञातलक्षणस्य आलम्बनता स्यात्। चलतीति च वर्तमानाभासः प्रत्ययः संयोगविभागानुमेयत्वेन संभवति। तथा हि— 'संयोगान्तं कर्मे'—ति न्यायात्। न च संयोगो वर्तमानां क्रियामनुमापयति; विभागोऽपि कार्यत्वादात्मनः प्राक्कालीनमेव कारणं गमयति। कारणस्य हि सत्त्वं प्राक्कलीनमेव कार्योपयोगि, न तुल्यकालं, तदानीं तस्य असिद्धत्वात्। अतः कार्यात् कारणभूतां क्रियामनुमिमानो भूतामेवानुमिमीते, न वर्तमानाम्। तस्मात् संयोगविभागाभ्यां क्रियानुमाने वर्तमानाभासश्चलतीति प्रत्ययो न संभवती**त्यसंभवः**। न च नित्यपरोक्षक्रियानुमानमपि शक्यं, कार्यं कारणपूर्वकमिति संबन्धग्रहणानुपपत्तेः। न हि द्रव्यमात्रं कारणम्, अपि तु क्रियाविशिष्टं, क्रियायाश्च परोक्षत्वान्न तदानीं विशिष्टद्रव्यकारणग्रहणं सुघटमिति घटादावपि दुर्घटा व्याप्तिप्रतीतिः। तस्मान्न कार्यानुमेया क्रिया। अपि तु उत्क्षेपणादिभेदवतः परिस्पन्दरूपस्य कर्मणः प्रत्यक्षेणोपलम्भात् प्रत्यक्षैवेति। एतेन पचतीति प्रतीतिरपि प्रत्यक्षक्रियालम्बनैवेति व्याख्यातम्। तत्र हि पचत्यादिक्रिया बह्व्यः प्रतीयन्ते 'देवदत्तश्चलति, चुल्ली ज्वलति, स्थाली ऊष्मायते, पयः क्वथयति, पिधानमपिधत्ते, तण्डुलानि विक्लिद्यन्ति, दर्व्यपविध्यति, ओदनस्सिध्यति' इति।

ननु च पाको नाम धात्वर्थः परिदृश्यमानदेवदत्तादिव्यापारव्यतिरिक्त एषितव्यः, तमन्तरेण फलनिर्वृतेरभावात्; तदभावे च किमधिकृत्य कारकाणि संसृज्येरन्?

अत्रोच्यते—यं तमेकं पाकं नाम धात्वर्थं चलनादिभ्योऽतिरिक्तं क्रियेति मन्यसे, स किं वस्तुधर्मः, तत्कार्यं वा? तत्र वस्तुधर्मत्वे रूपवज्जातिवद् वाभ्युपगम्यमाने यावद्वस्तु सर्वकालं वा फलनिष्पत्तिप्रसङ्गः। तत्कार्यत्वे सति स किं सकलकारकनिष्पाद्यः, एकैककारकनिर्वर्त्यो वा? तत्राद्यपक्षे एकैकं भवेत् कारकमक्रियम्; एकैकनिष्क्रियत्वे तु साकल्येऽपि कार्यत्वाद् व्यापारान्तरकल्पनायामनवस्था। पक्षान्तरे तु क्रियामिव फलमपि निष्क्रियाण्येव कारकाणि कुर्युरिति किं क्रियया?

ननु करोतीति कारकम्?

सत्यम्; करोति फलं न तु क्रियाम्।

ननु करोतीति यद् ब्रूषे सेयमुक्तैव क्रिया। चैत्रः कटं करोतीति चैत्रस्यैव कटस्यैव करोतेरप्यर्थो वाच्य एव।

उच्यते— परिस्पन्द एव भौतिको व्यापारः करोत्यर्थः। न हि वयं परिदृश्यमानं परिस्पन्दात्मकं व्यापारमपह्नुमहे, प्रतिकारकं विचित्रस्य चलनादेर्व्यापारस्य प्रत्यक्षेणोपलम्भात्। अतीन्द्रियस्तु तदतिरिक्तः करोत्यर्थो नास्तीति ब्रूमहे। क्रियातीन्द्रियत्वे हि तद्योगकृतं कारकत्वमधिगच्छन्तः फलार्थिनस्तदुपाददीरन्।

तावदेव विनिश्चित्य तदुपादीयतेऽर्थिभिः ।
तदेवोपाददानैश्च फलमप्यधिगम्यते ।।७।।

कारकत्वं च पक्षेऽस्मिन्नास्ति किञ्चिदतीन्द्रियम् ।
कारकत्वं स्वरूपस्य सहकार्यादिसन्निधिः ।।८।।

निर्व्यापारस्य नन्वस्य को गुणस्सहकारिभिः ।
व्यापारयोगिनोऽप्यस्य को गुणस्सहकारिभिः ।।९।।

अथ व्यापार एवैष सर्वैः संभूय साध्यते ।
किं फलेनापराद्धं वस्तद्धि संभूय साध्यताम् ।।१०।।

तस्मात् कारकचक्रेण चलता जन्यते फलम् ।
न पुनश्चलनादन्यो व्यापार उपलभ्यते ।।११।।

चलन्तो देवदत्ताद्यास्तदनन्तरमोदनः ।
एतावद्दृश्यते तत्र न त्वन्या काचन क्रिया ।।१२।।

क्रियानिमित्तसंसर्गवादिनोऽपि द्वयी गतिः ।
सत्यां क्रियायां संसर्गस्संसर्गे सति वा क्रिया ।।१३।।

अत्रापि पक्षे पूर्वस्मिन् संसर्गः क्वोपयुज्यते ।
तथा सति फलं सिध्येत् काष्ठादेः केवलादपि ।।१४।।

**संसर्गात् तु क्रिया सिद्धा पुनरेकैकमक्रियम् ।**
**तथा च सति नैधांसि ज्वलेयुः पिठराद् विना ।।१५।।** (न्यायमं)

१. **ज्वलन्त्येधांसि न पुनः पचन्ति पिठरान्विताः ।**
**पिठरे सत्यपीमानि ज्वलन्तीत्येव मे मतिः ।।१६।।**

२. **तस्मात् क्रियान्तराभावात् काष्ठाम्बुपिठरादयः ।**
**संसृज्यन्तां फलायैव किमदृष्टेन कर्मणा ।।१७।।**

ननु च फलं सिद्धं साध्यं वा?

किञ्चातः?

सिद्धं चेत् कारकान्तराण्यपि सिद्धानीति संसर्गाभावः। अथ साध्यं, सैव कारकव्यापारव्यतिरिक्ता क्रियेति।

तन्न, फलस्य क्रियात्वानुपपत्तेः। ओदनो हि फलं, न क्रिया; क्रियानाम्नि तु क्रियमाणे न विप्रतिपत्तिः।

पाकस्तर्हि कः? (न च) पचेर्वाच्यशून्यतैव युक्ता; उच्यते—समुदितदेवदत्तादिकारक-निकरपरिस्पन्द एव विशिष्टफलावच्छिन्नः पाकः। स एव च पचेरर्थः; देवदत्तादिक्रिया हि चलनज्वलनादिरूपाः पृथक्तयैवावभासन्ते, समुदितास्तु सत्यः फलान्तरावच्छेदाद् रूपान्तरेण पाकादिना परिस्फुरन्ति, व्यपदिश्यन्ते च; तथा देवदत्तः पचतीतिवत् काष्ठानि पचन्ति, स्थाली पचतीत्यपि व्यपदेशो भवति। ननु च यथा स्थाली पचति काष्ठानि पचन्तीति दृश्यते, नैवम् ओदनः। पचति, तण्डुलाः पचन्तीति।

सत्यमेतत्, कारणं तु वाच्यम्।

किं तदिति चेत् पचेरकर्मकक्रियात्वमेव।

नन्वोदनस्य तण्डुलानां वा कर्तृत्वं, न तूभयोस्संभवति।

नैवम्, तण्डुलानोदनं पचतीत्यपि व्यपदिश्यते।

न च कर्मवद्भावात् न कर्तृप्रत्ययः। नन्वेवं सति, ओदनतण्डुलानां निर्वृत्ति-विकारयोरस्वातन्त्र्यात् सिध्यति ओदनोऽपि, क्लिद्यन्ति तण्डुला इत्यपि न स्यात्। तन्न;

**निर्वर्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम् ।**
**कर्त्रन्तराणां व्यापारे कर्म संपद्यत पुनः ।।१८।।** (वाप. ३.७.५४)

भवतु नाम तण्डुलानां सिद्धानां कथञ्चिदेतत्, ओदनस्य तु साध्यस्य नोपपद्यते।

नैवम्, भवत्यर्थे सर्वस्य कर्तृत्वात् भवत्यर्थश्च सिध्यतीति न दोषः। कथं न दोषः?

**३. यद्योदनो न पक्तव्यः पक्तव्यो यदि नोदनः ।**

यथा—

**४. शाटकश्चेन्न वातव्यो वातव्यश्चेन्न शाटकः ॥१९॥**

अत्रोच्यते।

**५. अन्तस्तत्त्वं बहिस्तत्त्वं निष्पत्तौ द्वयमिष्यते ।**
**अन्तस्तत्त्वं पुरस्कृत्य बहिस्तत्त्वं प्रकाशते ॥२०॥**

**६. द्वयी सत्ता पदार्थानां बाह्या चाभ्यन्तरीति च ।**
**आन्तरी व्यवहारार्था बाह्या त्वर्थक्रियां प्रति ॥२१॥**

अन्यथा ह्यङ्कुरो जायत इत्यपि न स्यात्। अत इदमुक्तम् उपक्रमप्रभृत्य—पवर्गपर्यन्तमन्तःप्रतिभया साकल्येनोल्लिख्य साध्यत्वेनाध्यवसितः पुरुषव्यापारः क्रियेति। न च पुरुषव्यापारस्य क्रियात्वम्; रथो गच्छति, कूलं पततीत्यादिप्रयोगाभावः उपचारो वा। पुरुषशब्देनेह प्रथममध्यमोत्तमलादेशत्रिकाभिधेययोः कर्तृकर्मणोरभिधानात्।

न चैवमेतद् व्यापारयोरेव क्रियात्वं, फलाभिधेयत्वेन प्राधान्यतः कारकोपलक्षणत्वात्।

**यथा च भागाः पचतेश्चलनज्वलनादयः ।**
**चलनज्वलनादीनां ज्ञेया भागास्तथाऽपरे ॥२२॥** (वाप. ३.८.९)

तथाहि – देवदत्तश्चलतीत्यत्र किं प्रतीयते? युगीमादत्ते, आ XXX उदकमासिञ्चति, तण्डुलानावपतीति। एवं कारकान्तरव्यापारेष्वपि द्रष्टव्यम्।

ननु देवदत्तादेर्भौतिको व्यापारः आत्मव्यापारपूर्वको भवितुमर्हति।

नैतदेवम्, न ह्यात्मनो व्यापारः कश्चिदस्ति, इच्छाद्वेषपूर्वकप्रयत्नवशादेव स भौतिकव्यापारकारणतां प्रतिपद्यते। चलतीति प्रतीतिवत् पचतीति प्रतीतिरपि प्रत्यक्ष—क्रियालम्बनैवेति।

अत्रानुमेयक्रियावादिनस्समादधते—

अस्तु नाम देवदत्तादिकारकनिकरपरिस्पन्दसमुदायः क्रिया। किन्तु पचतीत्यादा—वधिश्रयणावचपनविचटनादीनां समुदायं किमायुष्मान् क्रियेति मन्यते।

ओमिति ब्रूमः।

किमर्थं सर्वाण्येवेति?

पृच्छामि चायुष्मन्तं किमधिश्रयणादयः क्रियाव्यपदेशमेकशो वा लभेरन्? न तावदेकशः, क्रमरूपाभावात्। एतच्च तत्क्रियायाः क्रियात्वं यदुत साधनैस्साध्यमानता क्रमरूपोपादानं च। न चैकस्य क्रमस्संभवति, अवश्याभिधेयश्चैतदुपात्तक्रमस्साध्य–तयाऽभिधीयमानपदार्थः क्रियेति। अन्यथा हि पाकादीनामुपसंहृतक्रमाणामपि क्रियात्वप्रसङ्गः। ते हि पर्यवसिताः स्वरूपतयोपसंहृतक्रमा एव स्वशब्दैरभिधीयन्ते। तेषां पूर्वपरीभावविरहान्न क्रियात्वम्। अत एव ते साधनभावेन तैश्शब्दैरुपादीयन्ते, न साध्यभावेन। पाकं करोतीत्यादौ हि साधनविशेषनिबन्धना विभक्तिरुपलभ्यते, द्वितीयानिर्वृत्तिरूपं च साधनमुपपद्यते।

नन्वेवम् अस्ति विद्यते तिष्ठतीत्यादीनामपि न क्रियात्वं प्रसजेत्, यावता नेहापि क्रम उपलभ्यते।

नैवम्, अत्रापि क्रमस्य प्रतीयमानत्वात्। तथा हि–

**कालानुपाति यद्रूपं तदस्तीत्यपदिश्यते ।**
**परितस्तु परिच्छिन्नं भाव इत्येव कथ्यते ॥२३॥** (वाप. ३.८.१२)

एवं विद्यते तिष्ठतीत्यत्रापि द्रष्टव्यम्; कालाधिकारे चैतद् विशेषतो वर्णयिष्यामः। नापि क्षणशः क्रमजन्मता अधिश्रयणादीनाम्, उत्पन्नमात्रप्रध्वंसित्वाद्, अयौगपद्ये समूहानुपपत्तेः। तदभावे च कथमिव अभिन्नेषु भिन्नशब्दो वर्ततां पचतीति।

उच्यते–क्रमोपजातावयवपरिच्छेदप्राप्त–संस्कारान्तं यदा सकलं क्रियाकलापत्तेः (कलापं) कलयति, तदा प्रत्ययः परिवर्ति समुदाय एककार्यत्वादपिहितभेदः पचतीत्या–दिशब्दव्यपदेशनिमित्तं भवति। तथा ओदनादिकार्यक्रियाकलापस्तिरोधाय भेदमभेदेन व्यपदिश्यते। पचतीति फलस्य च सकलक्रियावयवसाध्यत्वात् साधनभावेनापि स एवापेक्ष्यते। तदनन्त(तदन्त?)र्गतास्त्वधिश्रयणादयः प्रत्येकं फलमभिनिर्वर्तयितुमपर्याप्ताः पर्याप्तस्य समुदायस्य रूपसम्पादनार्थत्वात् समुदायं प्रति गुणभूता विज्ञायन्ते। तदाह–

**गुणभूतैरवयवैस्समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥२४॥** (वाप. ३.८.४)

यद्येवं पचतीति व्यपदेशो नोपपद्यते, धातूपादाना क्रिया यदा नातीता न चानागता, तदा वर्तमानकालविहितः प्रत्ययः प्रयुज्यते। न चास्य क्रियाप्रतानस्येयं व्यवस्था संभवति, अधिश्रयणादीनां पूर्वपरीभावनियमात्। न चैकः क्रियाभागः पचतिशब्दनिबन्धनं, शब्दशक्तिस्वभावात्। न ह्युपात्तक्रियावयवार्थप्रत्यायकश्शब्दो यथाभूतमर्थं प्रत्याययति;

ततश्च कथमेकस्य वर्तमानकालतां प्रत्ययोऽनुरुध्येत?

नैतदस्ति; शब्दशक्तयो हि भिन्नरूपामभिन्नामर्थव्यक्तिमुपात्तभेदां दर्शयन्ति; यतः पूर्वापरीभूतावयवसमुदायावग्रहरूपा बुद्धिर्यथाऽवगृहीतं समुदायाकारमवयवेषु प्रत्यस्यति; तेऽवयवाः प्रत्ययेन समारोपितसमुदायरूपाः पचतिशब्दवाच्यास्सन्तः स्वरूपसन्निधानात् तंवर्तमानादिव्यपदेशमनुभूय प्रत्ययविशेषोत्पत्तिनिमित्तं भवन्ति। तथा हि– अभिसमीहितफलः क्रियायां फलोपजननसाधनभूतायां प्रवर्तमानः पुमान् समुदायमेवाधाय चेतसि तास्ववयवक्रियासु प्रवर्तते। ततो ह्यस्य समुदायाभिसन्धिसमुत्थापिताः क्रियाभागाः समुदायसंपादनार्थत्वात् समुदायरूपेणाध्यवसीयन्ते। तथाध्यवसितक्रियारूपैस्तु तस्य क्रियाक्षणस्य सन्निधानाद्वर्तमानकालविहितः प्रत्ययः प्रयुज्यते पचतीति। अत्र चोत्पन्नामात्र-प्रध्वंसित्वात् सर्वे क्रियावयवा वर्तमाना न संभवन्तीति स्फुटमेवावसीयते; किन्तु प्रत्येकं समुदायिषु समुदायाध्यासेन प्रयुज्यते पचतीति। अधिश्रयणाद्यवयवक्रियासमुदायवचनेषु पचादिषु यस्मिन्नवयवेऽध्यारोप्य समुदायोऽधिश्रयणादिः विल्कित्त्यन्तः प्रत्याय्यते, तत्कालप्रत्ययोऽनुवर्तते। तत्र यदा वर्तमानावयवे समुदायाध्यासस्तदा पचतीति भवति। यदा तु भूतभविष्ययोस्समूहारोपणे तदाऽपाक्षीत् पक्ष्यतीति। यदुक्तम्–

**समूहस्स तथाभूतः प्रतिभेदं समूहिषु ।**
**समाप्यते ततो भेदे कालभेदस्य संभवः ।। २५।।** (वाप. ३.८.५)

समुदायस्य च समुदायिषु प्रत्येकपरिसमाप्तौ निदर्शनं ग्रामो दग्धः, पटो दग्ध इति। यदि ह्येकस्मिन्नंशे समुदायो न स्यात्, पाणिमात्रस्याङ्गुलिमात्रस्य वा चण्डालत्वविरहात् चण्डालपाण्यङ्गुलिस्पर्शे नैवोच्येत चण्डालः स्पृष्ट इति, न चाङ्गविकारेणाङ्गिनो विकृतिर्लक्ष्यते, अक्ष्णा काण इति।

तदुक्तम् 'अवयवे हि स्पृष्टे समुदायोऽपि स्पृष्टो भवति; अवयवे हि कृतं लिङ्गं समुदायस्यापि विशेषकं भवति (मभा. १.३.६२); यश्च समुदायः सोऽवयवान्न व्यभिचरति। तस्य विशेषकं यथा 'गोस्सक्थनि कण्ठेऽपि कृतं लिङ्गं गोरेव विशेषकं न गोमण्डलस्य' इति। तदेवमुक्ते किमुक्तं भवति उपात्तक्रमाधिश्रयणादिविक्लित्यन्तानामवयवानां समुदायः पचतिक्रियेति? तर्हि चिरं जीवतु भवान्; भवतैव प्रतिज्ञाता नैव क्रिया प्रत्यक्षेति। तस्मादुपात्तक्रिया क्रमाः क्रियावयवाः; तदस्य क्रियासङ्घातस्य केचिदवयवा निवृत्ताः, केचिदनिवृत्ताः, कश्चिदेव प्रत्युपस्थितः। प्रत्युपस्थितविषयाः चक्षुरादयः; ततोऽथ

क्रियाकलापाः प्रत्यक्षयितुम्, चक्षुरादिभिरनभिसंबन्धात्; न व्यतीतानागतरूपस्यासतः क्रियावयवस्य सदसदनुपातिना करणग्रामेण संबन्धः, न वाऽनधिगतेन्द्रियसंबन्धस्य पदार्थस्य दर्शनपरिच्छेद्यता संभवति। तदुक्तम्–

**क्रमात् सदसतां तेषामात्मानो न समूहिनाम् ।**
**सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः ।। २६।।** (वाप. ३.८.६)

दर्शनाभिमानः कथमिति चेत्, यथा गौरश्व इत्येवमादिषु पदेषु गकारादयो वर्णभागाः क्रमरूपानुविधायिनो व्यक्तावुपजने वा प्राप्तयौगपद्याः सङ्घातरूपेण न पार्यन्तेऽवधारयितुम् इन्द्रियायत्तया बुद्ध्या, तस्याः प्रत्युपस्थिताक्षरावसायशक्तेः पूर्वोत्तरभागयोरसंस्पर्शात्। समभिहितावयवपरिच्छेदप्रापितातिशयास्तु बुद्धयः स्वानुरूपं संस्कारपरम्परायामन्ते समालोचितविशेषवर्णभागामुपजनयन्ति बुद्धिं तस्यामुत्तीर्णमिव तत्पदं समुदायात्मना निरूप्यते। तदाह– **यथा गौरिति सङ्घातस्सर्वो नेन्द्रियगोचरः ।**
**भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते ।। २७।।** (वाप. ३.८.७)

काल्पनिकस्तु युगपद्ग्रहणाभिमानः प्रत्यक्षभ्रमनिबन्धनम्। यथाऽलातस्य आविद्धविष्वग्गते देशे नैरन्तर्येण परिवृत्तिरूपमविरामेणावधारयन्नन(वसितकालभेदो युगपत्सकलदेशव्यापि अ) परिच्छिन्दन्नध्यवस्यति चक्रमिति; यथा क्रमवन्तः क्रियाभागाः क्रमेणैवावसिता लघुतरं परिवर्तित्वादनवधृतकालभेदैर्युगपदेवाध्यवसीयन्ते; यथाध्यवसायं च दर्शनाभिमानमुत्पादयन्तः प्रत्यक्षव्यवहारं वर्तयन्ति। यदुक्तम्–

**इन्द्रियैरन्यथाप्राप्तौ भेदांशोपनिपातिभिः ।**
**अलातचक्रवद् रूपं क्रियाणां परिवर्तते ।। २८।।** (वाप. ३.८.९)

## (क्रियाया अप्रत्यक्षत्वम्)

**अप्रत्यक्षैव तु क्रिया।** यदाह महाभाष्यकारः–क्रिया नामेयमत्यन्तापरिदृष्टा अशक्या पिण्डीभूता निदर्शयितुं, यथा गर्भो निर्लुठितः, साऽसावनुमानगम्येति। ननु प्रत्यक्षाप्रवृत्तौ संबन्धग्रहणाभावात् कथं क्रियाविषयेऽनुमानं प्रवर्तते?

नैष दोषः; धातुवाच्यस्य समूहस्य युगपदसन्निधानादप्रत्यक्षत्वम्; एकैकस्य तु क्षणस्य प्रत्यक्षत्वे बुद्ध्या सङ्कलय्य पचतीति प्रयुज्यते; यदाप्येकस्मिन् क्षणे पचतीति प्रयोगस्तदा तत्र समूहारोपणम्। यदाह–

**पूर्वोत्तरैर्यदा भागैस्समवस्थापितक्रमः ।**
**एकस्सोऽप्यसदध्यासादाख्यातैरभिधीयते ॥ २९॥** (वाप. ३.८.११)
**यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते ।**
**तत्रैकस्मिन् क्रियाशब्दः केवले न प्रयुज्यते ॥ ३०॥** (वाप. ३.८.१०)

न त्वेवम्; इन्द्रयैरभिसंबन्धात् सरूपसन्निधानाय वर्तमानव्यपदेशाच्च कथमप्रत्यक्षत्वं क्रियायाः?

उच्यते; नेह वस्त्वर्थो निरूप्यते, अपि तु शब्दार्थः तत्र चान्वयव्यतिरेकाभ्यां यः प्रकृत्यर्थोऽवस्थाप्यते, या क्रियावचनस्य धातुसंज्ञा, नासौ शक्या साक्षादुपलब्धुम्। तत्र हि आचार्याणां मतभेदः।

एके मन्यन्ते— अधिश्रयणादीनां समुदायो बुद्ध्या निगृहीतः, एकत्वेन स पचतीत्यादीनां वाच्य इति। न च समुदायं पचतीति प्रयुञ्जानः प्रत्येकमधिश्रयणादिषु प्रत्यस्यति, प्रत्ययाश्च न समुदाय इत्येवंरूपं प्रत्यस्यन्ति। नापि 'अयं च अयं च' इति संबन्धिनो बुद्ध्यावगृहणाति। किं तर्ह्याश्रितक्रमरूपमिव प्रत्येकमवयवेषु प्रत्यस्य पचतीति प्रयुङ्क्ते, तदा तस्यैव समीहितं भवति, अधिश्रयणाद्यानुपूर्व्या फलमोदनादि निर्वर्तयितव्यमिति। यथा प्रथमक्रियासंभागे पचिरित्येवाध्यवस्यति नाधिश्रयणमिति। इतरथा ह्येवं प्रयोगः तस्याधिश्रयतीति; यदा चाधिश्रयणे निर्वृत्ते नागते वा भूतभविष्यत्कालाभिधायिनं शब्दं प्रयुङ्क्ते, तदा समुदायरूपप्रत्यासेनैव तमवयवबुद्ध्या निगृह्य प्रयुङ्क्ते अपाक्षीत्, पक्ष्यतीति। न त्वधिश्रयणरूपेण, अन्यथा ह्येवं प्रयोगस्स्यात् अध्यशिश्रयत्, अधिश्रयिष्यतीति। एवमावपने विचटने वा समूहिनि समुदायरूपप्रत्यासादेव धातुताव्यपदेशात्, पचत्यपाक्षीत् पक्ष्यति। एवंभूतश्चार्थात्माऽधिकृतः साधनतन्त्रसाध्यावस्थः शब्देन प्रक्रान्तोऽशक्य उपलब्धुम्; यथा गौरिति गकारौकारविसर्जनीया एवोपलभ्यन्ते, समुदायस्तु बुद्धिनिर्ग्राह्य एव, तथा पचतीत्यादिष्वेवाधिश्रयतीत्यादिषु अवयवा एव हस्तप्रसरणस्थाली— विन्यासादयोऽशब्दवाच्या, अप्रत्यक्षा एव। यावदपकर्षपर्यन्तप्राप्ता क्रियेति सापि नाप्रत्यस्ते क्रमरूपे समुदाये आख्यातशब्देनाभिधीयते। अपकर्षपर्यन्ता चेत् क्रमरूपेण न अवागृहणादिति अवाचक एवाख्यातशब्दः। यथा श्लोकशब्दं प्रयुञ्जानं आद्यं पदं पदरूपेणावगृहणाति न तदा श्लोकस्समुच्चार्यत इति प्रयुङ्क्ते यदा वाश्रितोत्तरप्रबन्धमवगृहणाति तदा श्लोकशब्दं प्रयुङ्क्ते। एवं कृत्वा **निरुक्ते**ऽप्युक्तं 'पूर्वापरीभूतं भावमाख्यातेनाचष्ट' इति।

अन्येषां दर्शनं(वाप. ३ क्रिया) यद् विचटनं तण्डुलावयवानां तण्डुलावयवेभ्यो विभागः, यदनन्तरं मार्दवादयो निष्पद्यन्ते, तद्यदाऽधिश्रयणादिषु प्रत्यस्तरूपं भवति तदाऽऽख्यातेना– भिधीयते। तत्र यदुपलभ्यतेऽधिश्रयणं तदशब्दवाच्यम्; कारकनिराकाङ्क्षं यच्छब्देनाभिधीयते तदनिष्पन्नं साधनतन्त्रमप्रत्यक्षम्; निष्पन्नानिष्पन्नयोश्चैकात्म्यापत्तौ पचत्यादिशब्दप्रयोगः। स चायमेवंरूपोऽर्थात्मा गुणक्रियाणां पौर्वापर्यात्मनां न पूर्वो न परश्च पूर्वापरीभूतो व्यपदिश्यते।

अन्ये तु विचटनमेवाधिश्रयणादिरूपं प्रतिपन्नाः, न रूपशून्यानधिश्रयणादीन् अप्रत्यस्तविचटनरूपान्; आहुश्च कः पुनः पचेः प्रधानार्थः? याऽसौ तण्डुलानां विक्लित्तिः। (मभा. ३.१.२६)।

अथवा यदभिसंधिपूर्वकं प्रेषणमध्येषणं वा स सर्वः पच्यर्थ इति। सर्वस्मिन्नपि दर्शने यथाभूताख्यातशब्देन क्रिया प्रक्रम्यते, तथाभूतायाः सिद्धमप्रत्यक्षत्वमिति फलेनैव समधिगमो युक्तः। स कथमिति चेत्, इह सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचतीत्येतद् भवति, कदाचिन्न भवति, यस्मिन्निमित्ते सन्निहिते पचतीत्येतद् भवति सा नूनं क्रिया, 'यथा देवदत्त इह भूत्वा पाटलिपुत्रे भवति, सा नूनं क्रिया' इति (मभा. १.३.१)। द्वितीयहेतुशक्त्या सोऽप्यर्थ इति चेन्नैवम्; इह कस्यचिदेषा बुद्धिः स्यात्; असत्येवास्मिन्निमित्ते पचत्यादिबुद्धयः प्रवर्तन्ते, यथा मृगतृष्णिकादिष्विति तदनेन निर्वर्तयति (वाप. ३ क्रिया)। मृगतृष्णिकादिभ्यो हि तृप्तिमलापकर्षणघर्मापनोदनादि न फलं निर्वर्तते। असर्वगतयोर्हि देवदत्तपाटलिपुत्रयोर्गमनक्रियान्तरनैरन्तर्येणावस्थानरूपं फलमुपलभ्यते।

अथवा एतदयं प्रतिपद्येत, शक्तिकृताः पचत्यादयो विशेषाः सप्रत्ययाश्च स्युः, न क्रियाकृता इति, तदनेन निर्वर्तयति, यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रियेति। यदि ह्येते शक्तिकृतास्स्युः शक्त्यनन्तरमेव पाटलिपुत्रेण प्राप्तिः स्यात्। न च भवति, तस्माद् भवितव्यं शक्तिकृतेनान्येन धर्मेण, यस्य फलं देशान्तरप्राप्तिरिति।

**क्रियामन्ये तु मन्यन्ते क्वचिदप्यनपाश्रिताम् ।**
**साधनैकार्थकारित्वे प्रवृत्तिमनपायिनीम् ॥ ३१ ॥**(वाप. ३.८.३७)
**सामान्यभूता धात्वर्थैस्सा पुनः प्रविभज्यते ।**
**ततो व्यापाररूपेण साध्ये पर्यवतिष्ठते ॥ ३२ ॥**(वाप. ३.८.३८)
**प्रकृतिस्साधनानां सा प्रथमं तच्च कारकम् ।**
**शक्तिरेकाधिकरणे स्रोतोवदपकर्षति ॥ ३३ ॥**(वाप. ३.८.३९)

**अपूर्वं कालशक्तिं वा क्रियां वा कालमेव वा ।**
**तमेवंलक्षणं भावं केचिदाहुः कथञ्चन ।।३४।।**(वाप. ३.७.३४)

सा तु यथा अस्ति भवति करोतीत्याद्यच्छेदे भेदादभिन्नापि भिन्नेव प्रकाशते, तथा क्रमरूपोपादानान्नित्यमेव कालसंबन्धोपाधिभूत–भूत–भविष्यदादिव्यपदेशमासादयति।।

## *(२. कालः )*

कः पुनरयं **कालो** नाम?

**क्रियैव, क्रियान्तरावधृतपरिमाणव्यवच्छिन्ना वा क्रियापरिच्छेदहेतुः कालः।**

कथं पुनः क्रिययैव क्रियापरिच्छित्ति?

श्रूयताम् इह तु क्रियाः काश्चित्क्रियान्तरैः कैश्चिद् बुद्ध्यैव परिमीयन्ते। यथा अर्कादीनां गतयः, यथा च गोदोहादयः, यथाऽस्मदादिव्यापाराः, यथा पुरुषायुषादयस्त–त्रावधृतपरिमाणाभिरितराः परिच्छिद्यन्ते; यथा दिविसं गच्छति, वर्षशतं जीव, ओदनपाकमास्ते, गोदोहं स्वपिति; तत्र परिच्छेदकालव्यवहारं वर्तयन्ति; यथा 'सवितुरुदयादिरस्तमयपर्यन्तः क्रियाप्रबन्धो दिवसः, स एवास्तमयादिः पुनरुदयावसानो निशा, सर्वर्क्षाणां सकृत्परिवृत्ति–रहोरात्रः, कलाभिरिन्दोराप्यायनं परिक्षयो वा पक्षः, चन्द्रस्य सकलनक्षत्रातिक्रमो मासः, सूर्याचन्द्रमसोर्गति विभागादेकाहोरात्रक्षयः ऋतुः, रवेर्दक्षिणत उत्तरतो वा गमनमयनम्, बृहस्पतेरेकाराश्य तिक्रमस्संवत्सर इति। तेन चोक्तानुक्तक्रियया कालोऽवच्छिद्यते। यथा दिवा दिवसः, दिवसो निशा चाहोरात्रः, पञ्चदशाहोरात्रः पक्षः, पक्षद्वयं मासः, मासद्वयमृतुः, ऋतुत्रयमयनं, अयनद्वयं संवत्सरः, पञ्च संवत्सरा युगम्, युगानि द्वादश कल्पः, कल्पशतानि द्वादश महाकल्पः, महाकल्पषष्टिश्चतुर्युगम्, चतुर्युगानि द्विसप्ततिर्मन्वन्तरम्, मन्वन्तराणि चतुर्दश ब्रह्मदिवसः, तावत्येव तन्निशा प्रलयः, तन्मानेन वर्षशतान्ते ब्रह्मणोऽपवर्गो महाप्रलयः। यथा वा सूर्यस्य भगणभोगो वर्षं, राशिभोगो मासः, मासत्रिंशांशो दिनं, दिनषष्ट्यंशः कला, कलाषष्ट्यंशो विकला, विकलाषष्ट्यंशः तत्परेति। तत्र 'यथा रजताद्यधिकरणगौरवमवधृतपरिमाणद्रव्यान्तरसंबन्धसमुत्कीर्णरेखस्तुलादण्डः रेखासूत्रावस्थानः पलशः कर्षशो भागशो परिच्छिनत्ति, तथा कलादिव्यवस्थानवशेन भागशः कालान्तरं परिच्छिनत्ति। परिमाणं परिमिमीतेक्रियानियमैः कालावच्छेदनियमः, यथा परमाणोः स्वावष्टब्धप्रदेश क्रमलक्षणः कालः क्षणः, पक्ष्मसंपातो निमेषः, इयत्क्षणा इयन्निमेषा वा नाडिका, द्विनाडिको मुहूर्तः, पादोनचतुर्मुहूर्तो यामः, यामाष्टकमहोरात्र इति। बुद्ध्यवच्छेदेन

वा कालपरिच्छेदः, यथा अर्कस्य उदयाविदूरता प्रत्यूषः, (विराट्)पुरुषभ्रूप्रदेशगता दीर्घता पूर्वाह्णः, तपमा मध्याह्नः, परावृत्य दर्शनमपराह्णः, अस्तमयासन्नताभिसन्धिः सन्ध्येति। रात्रेः प्रारम्भो निशामुखम्, निशामुखाद् रात्रेस्तुर्यांशः प्रदोषः, अर्धरात्रमुभयतो निशाष्टमो निशीथः, निशीथात् तावन्मात्रमपररात्रः, परतो निशावशेषः प्रभावमिति क्रियाविशेषैः कालविशेषावगमः। तथा हि—

शयाने शेरते रात्रौ दिवा जाग्रति जाग्रति ।
जगत्प्रदीपे पद्मानि कलत्राणीव भर्तरि ।। ३५।।

रतान्तकालकान्तस्त्रीदृग्विलासैकसाक्षिणी ।
निशा नीलोत्पलानीके निमीलति निमीलति ।। ३६।।

चञ्च्वग्रचुम्बिताऽऽताम्रचूताङ्कुरकदम्बकैः ।
कथ्यते कोकिलैरेव मधुर्मधुरकूजितैः ।। ३७।।

दिवाकरकरालातपातनिर्दग्धवीरुधः ।
मार्गास्समल्लिकामोदा भाविग्रीष्मस्य शंसिनः ।। ३८।।

शिखण्डिमण्डलारब्धचण्डताण्डवडम्बरैः ।
प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः ।। ३९।।

मौक्तिकाकारविस्तारि तारानिकरचित्रितम् ।
शरत् पिशुनतां याति यामुनाम्भोनिभं नभः ।।४०।।

आयामियामिनीभोगसफलाभोगविभ्रमाः ।
हेमन्तमभिनन्दन्ति सोष्माणस्तरुणीस्तनाः ।। ४१ ।।

आस्कन्दन—दलत्कुन्दकलिकोत्करदन्तुराः ।
वदन्ति शिशिरं वातास्तुषारकणकर्कशाः ।।४२।।

बाल्यकौमारयौवनादयो मौग्ध्यमाध्यप्रागल्भ्यादयश्च क्रियाविशेषव्यङ्ग्याः कालविशेषा एव। वयो हि देहिनां वत्सरादिभिः कालभेदः; वयोनिमित्ताश्च तेषां मौग्ध्यादय इति। उच्यते—

**उत्तालालकभञ्जनानि कबरीभारेषु शिक्षारसो**
**दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।**
**तिर्यग्लोचनवल्गितानि वचसां छेकोक्तिसङ्क्रान्तयः**
**स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ।। ४३ ।।**

(बारा. ३.२३)

व्यसनोत्सवनित्यनैमित्तिकक्षणप्रकीर्णचन्द्रोदयचन्द्रास्तमयप्रभृतयश्च कालव्यपदेश–भाजो गोदोहादिवद् वेदितव्याः। अपि च

**पराव/पर–चिरक्षिप्र–क्रमोत्क्रम–विभागवान् ।**
**कालक्रियाविशेषाभिव्यङ्ग्यरीतिः प्रतीयताम् ।। ४४ ।।**

तथा हि– उत्पत्त्यादिक्रियाणां प्रथमत्वे परः; यथेयं बाला ज्येष्ठा च; वैपरीत्ये पुनरपरः, यथैषा प्रगल्भा कनिष्ठा च। साधनानां मन्दसंपातित्वे चिरः, यथा वत्स्यति कालः पक्ष्यते तालः, भोक्ष्यते तालफलम्; तदन्यथात्वे क्षिप्रः, यथोद्भिन्नश्च वंशकरीरः शिरागतश्च प्रमाणम्। क्रियाणामपौर्वापर्ये युगपत्, यथा कपित्थयोः प्रतिभेदः, मेषयोरभिघातः। पौर्वापर्ये त्वयुगपत्, यथा दिवसाग्रतो निशा, निशाग्रतो दिवस इति। सेयं वस्तुनश्शक्तिः पाकप्रभवा स्वाभाविकी क्रियैव; क्रियापरिच्छेदहेतुः कालः; क्रियाश्च भूता भविष्यन्ति, वर्तमानाः अव्यक्ताश्च। तत्र व्यतिपतितसाधनभूता यथाऽपाक्षीदिति; अनागताऽसन्निहित–साधना च भविष्यति यथा पक्ष्यतीति; आवाप्ता अप्रच्युतस्वरूपा वर्तमाना यथा पचतीति; अनिर्धारितविशेषा अव्यक्ता यथा पचेदयमिति। तन्निबन्धनश्च लोके अद्य, श्वः, परश्वः, परेद्युः, अन्येद्युः, उभयेद्युः, इदानीम्, एतर्हि, ऐषमः, परुत्, परारि, शश्वत्, स्वः, भूः, सद्यः, पुरा, ह, स्म, यावत्, तदा, यदा, अन्यदा, एकदा, सदेति व्यवहारः लुङादीनां भूतादिषु स्मरणमिति।

अन्ये पुनः क्रियाव्यतिरिक्तमनुदयास्तमयमभिन्नमनवच्छिन्नदेशं च द्रव्यं पृथग्विधानेकशक्तिशतसहस्रपाकायतनं जगत्प्रवृत्तिनियमकारणं क्रियापरिच्छेदहेतुमदृष्टाद्यपेक्षं कालमाचक्षते। स च क्रियापरिच्छेद्यः किलेति केचित्; आहुश्च "नित्यो व्यापी संप्रतिभूतभविष्यत्क्रियासमावेशात् आकाशकल्प एको द्रव्यात्मा भिद्यते कालः।।" तच्चासमीचीनमेवेति ब्रूमः। क्रिया हि साध्यत्वात् साधनमेवापेक्षते। न च क्रियाविशिष्टस्यापि द्रव्यात्मनः कालकारकेण संबन्धो घटते, द्वयोरपि सिद्धत्वात्। तस्माद् द्रव्यरूपे क्रियारूपे

वा कालः क्रियामेव विशेषयति। सा च तद्विशिष्टा कारकविशेषमुपतिष्ठते। यदाह—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारित्वे तथा भूयसि वर्तते ॥४५॥

कलाभिः पृथगर्थाभिः प्रविभक्तं स्वभावतः ।
केचिद्बुद्ध्यनुसंधानलक्षणं तं प्रचक्षते ॥४६॥(वाप.३.९.५७)

सत्तालक्षणमन्ये तु क्षणरूपं तथाऽपरे ।
देवतावस्तुशक्त्यात्मस्वरूपमपरे विदुः ॥४७॥

तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ॥४८॥

प्रतिबद्धाश्च यास्तेन चित्रा विश्वस्य शक्तयः ।
तास्स एवानुजानाति यथा तन्त्रशकुन्तिकाः ॥४९॥(वाप. ३.९.१५)

प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शाश्वती ।
तया विभज्यमानोऽसौ लभते क्रमरूपताम् ॥५०॥(वाप.३.९.७०)

तृणराजस्य या वृद्धिस्त्वचिसारस्य वा दधत् ।
चिरक्षिप्रादिभेदे च कालतत्त्वं विकल्पते ॥५१॥

व्यतिक्रमेऽपि मात्राणां न तस्यास्ति व्यतिक्रमः ।
न गन्तृगतिभेदेन मार्गभेदोऽस्ति कश्चन ॥५२॥(वाप.३.९.७४)

दूरान्तिकव्यवस्थानमध्वादि करणं यथा ।
चिरक्षिप्रव्यवस्थानं कालोऽधिकरणं तथा ॥५३॥(वाप. ३.९.४७)

क्रियोपाधिस्स या भूतभविष्यद्वर्तमानताः ।
परावरविभागार्थे स शक्तीः प्रतिपद्यते ॥५४॥(वाप.३.९.३७)

भूतानां चैव यद् रूपं रूपं यद् भाविनामपि ।
सुदुर्दर्शे इवादर्शे काल एवोपलभ्यते ॥५५॥

क्रियाभेदाद् यथैकस्मिंस्तक्षाद्याख्या प्रवर्तते ।
क्रियाभेदात् तथैकस्मिन् नृत्वाख्या चोपजायते ।। ५६ ।।(वाप. ३.९.३२)

विशिष्टमवधिं तं तमुपादायावकल्पते ।
कालः कालविदामेकः कलादिप्रविभक्तये ।। ५७ ।।(वाप. ३.९.६८)

तृणपर्णलतादीनि यथा स्रोतोऽवकर्षति ।
प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा ।। ५८ ।।(वाप. ३.९.४१)

प्रारम्भावेशनिष्ठासु स्थितिविप्रतिपत्तिषु ।
साम्योत्कर्षापकर्षेषु निमित्तं काल इष्यते ।। ५९ ।।

संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः ।
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ।। ६० ।।(वाप. ३.९.८)

प्रतिव्यवस्थं कालस्य व्यापारोऽत्र व्यवस्थितः ।
कालो वा विश्वरूपात्मा व्यापार इति कथ्यते ।। ६१ ।।(वाप. ३.९.१२)

क्रियावच्छेदहेतुं वा क्रियावच्छेद्यमेव वा ।
कालात्मानमनाश्रित्य व्यवहर्तुं न शक्यते ।। ६२ ।।

तस्याव्यक्तस्वरूपस्य व्यवहारे क्रियाकृताः ।
भूतादयो महाभेदा यान् लोको नातिवर्तते ।। ६३ ।। (वाप.३.९)

के पुनस्ते? यान् भूत उपाधौ (भूताद्युपाधौ) लुङादिविषयानुदाहरिष्यामः ।।

तदेतद् द्रव्यात्मनः क्रियात्मनो वा क्रियापरिच्छेदिनः कालस्य स्वरूपमभिहितम्। अथापरमपरिमेयात्मनो देवतादिरूपस्य स्वशक्तिनिमित्तविश्वप्रवृत्तिपरिच्छेद्यस्य तस्य परिच्छेदिनो वा क्रियाहेतुशक्त्यायतनभूतं द्रव्यरूपपरिणतं विवृत्तं वा, यत् समस्तविवृत्त–संग्रहानुग्रहादिनित्यनैमित्तिकादिरूपं स्वरूपमस्तिः तत् पुरस्तात् प्रतिपादितं, अग्रतश्च विशेषतः प्रतिपादयिष्यत इति नेह प्रतन्यते, संबन्धावच्छेदार्थं तु लेशतोऽ–भिधीयत इति। तत्प्रभेदाद् द्रव्यरूपोऽपि कालश्चतुर्धा– **नित्यो, नैमित्तिकः, स्वाभाविको, वैपरामर्शिक** इति। तेषु –

१. **नित्यः** शाश्वतिको, वैकल्पिकः नैयोगिकश्च त्रिधा।

२. **नैमित्तिको**ऽपि औद्योगिकः, औपभोगिकः प्रायोगिकश्चेति त्रिविधः। एवं

३. **स्वाभाविको**ऽपि आगन्तुकः, नैसर्गिकः, सांसर्गिक इति त्रिधा।

४. **वैपरामर्शिको**ऽपि सङ्कीर्णः, प्रकीर्णो, विप्रकीर्ण इति त्रिधैव।

(१. नित्यः)

**(शाश्वतिकः)** तेषु क्षणनिमेषनाडिकामुहूर्तप्रहराहोरात्रस्वरूपश्**शाश्वतिकः**।

अयं हि शश्वत्प्रवर्तमानो नावधिविशेषमपेक्षते। यथा—

**क्षणे निमेषे नाड्यां वा मुहूर्ते प्रहरेऽह्नि वा ।**
**गते त्वमेष्यसीत्युक्ते रुरोध पथिकं प्रिया ।। ६४।।**

**(वैकल्पिकः)** दिनरात्रिपक्षमासर्त्वयनरूपो **वैकल्पिकः**।

अयं हि सूर्योदयादिविशिष्टमवधिमपेक्षमाणो विकल्पाय प्रभवति। यथा—

**दिनानि रात्रयः पक्षमासावृतुरथायनम् ।**
**जरा वै यद्यदङ्गानां तत् तत्प्रेम्णो रसायनम् ।। ६५।।**

**(नैयोगिकः)** संवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयरूपो **नैयोगिकः**।

अयं हि बृहस्पतिनारायणपुरमथनब्रह्मणां राश्यादिप्रवृत्तिविशेषविशिष्टमेवावधिमपेक्षमाणः प्राणिनो विशिष्टासु प्रवृत्तिषु नियुङ्क्ते। यथा—

**संवत्सरैर्युगैः कल्पैर्मनुभिः प्रलयैः क्षयैः ।**
**हीयते हि जगत् सर्वमेकः कामो न हीयते ।। ६६।।**

तेऽमी शाश्वतिकवैकल्पिकनैयोगिकास्त्रयोऽपि कालभेदा नित्या उच्यन्ते, नित्यरूपेणैवानिवारितप्रवृत्तित्वात्।

(२. नैमित्तिकः)

**(औद्योगिकः)** प्रातःप्रत्यूषप्राह्णमध्याह्नसन्ध्यारूप **औद्योगिकः**।

अयं ह्यपेक्षिताहर्भागपौर्वापर्यावधिः प्राणिनां प्रबोधोत्थानस्नानभोजनप्रसाधन—विहारादेरुद्योगस्य निमित्तं भवति। यथा—

**प्रातःप्रत्यूषयोस्स्नाति भुङ्क्ते सन्ध्यापराह्णयोः ।**
**प्राह्णमध्याह्नयोर्यूनां शेते मनसि मन्मथः ।। ६७।।**

अयं ह्यपेक्षितरात्रिविभागापौर्वापर्यावधिः कामिनां दूतीसंप्रेषणप्रेक्षानिद्रासुख– मधुपानाभिसरणादेरुपभोगस्य निमित्तं भवति। यथा–

**निशामुखे प्रदोषे च निशीथापररात्रयोः ।**
**इन्दोः प्रकाशे नाशे वा सुप्तः कामो विबुध्यते ॥ ६८॥**

**(प्रायोगिकः)** शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षारूपः **प्रायोगिकः**।

अयं ह्यपेक्षितसंवत्सरविषु– पौर्वापर्यावधिं प्राणिनां कामकृतचित्तवैकृतानां प्रयोगनिमित्तं भवति। यथा–

**शरद्धेमन्तयोरन्यदन्यद् वर्षावसन्तयोः ।**
**हिमर्तुग्रीष्मयोरन्यत् कामावस्था प्रवर्तते ॥ ६९॥**

तेऽमी त्रयोऽप्यौद्योगिकौपयोगिकप्रायोगिकाः कालभेदा **नैमित्तिका** उच्यन्ते। नित्यत्वेऽप्येषामुद्योगादेर्निमित्तत्वात्।

**(३. स्वाभाविकः)**

**(आगन्तुकः)** मदप्रमदाभ्युदयोत्सवव्यसनपरिहासाभिरूप **आगन्तुकः**।

स हि विशिष्टक्रियोपनिपातादिकमवधिमपेक्षमाणः प्राणिनां मदप्रमदादिरूपेणैवागच्छति। यथा–

**मदप्रमदहर्षेषु व्यसनेषूत्सवेषु च ।**
**परिहासेषु च प्रायः कामस्संमानमर्हति ॥ ७०॥**

**(नैसर्गिकः)** बाल्यकौमारयौवनमौग्ध्यमाध्यस्थ्यप्रागल्भ्यादिरूपो **नैसर्गिकः**।

अयं हि वयोविभागादिकं विशिष्टमेवावधिमपेक्षमाणः प्राणिनां निसर्गत एव भवति। यथा–

**मौग्ध्यप्रागल्भ्यमाध्यस्थ्यबाल्यकौमारयौवनैः ।**
**आतिष्ठति पदैष्षड्भिः स्त्रीजातिं कामषट्पदः ॥ ७१॥**

**(सांसर्गिकः)** परापरयौगपद्यचिरक्षिप्ररूपस्**सांसर्गिकः**।

अयं हि प्रवृंत्तिसाधनानां पूर्वापरत्वे सहैकत्वे मन्दशीघ्रसमपातित्वे च क्रियास्वपेक्षमाणो मिथः संसर्गाय प्रभवति। यथा–

**क्रमेण युगपत् पूर्वमग्रतो द्राक् चिरेण वा ।**
**समासजन्त्यः चेतांसि न ज्ञायन्ते स्मरार्तयः ॥ ७२॥**

तेऽमी आगन्तुकनैसर्गिकसांसर्गिकास्त्रयोऽपि कालभेदाः **स्वाभाविका** उच्यन्ते, स्वभावत एव प्रवर्तमानत्वात्।

(४. वैपरामर्शिकः)

**(सङ्कीर्णः)** देश्यक्रीडाकेलिकेलिद्यूतव्रतगोष्ठीप्रेक्षादिरूपस्**सङ्कीर्णः**। स हि विशिष्टं तं तमवधिमपेक्षमाणस्संभूय प्रवर्तितस्सङ्कीर्ण एव भवति। यथा–

**व्रतेषु गोष्ठीप्रेक्षासु केलिद्यूतेषु केलिषु ।**
**देश्यक्रीडासु चानङ्गः पुनरङ्गेन युज्यते ॥ ७३॥**

**(प्रकीर्णः)** विविक्तदीर्घिकोद्यानसौधक्रीडादिदर्शनादिरूपः **प्रकीर्णः**। स ह्येकस्य वा परिमितपरिवारस्य वा विशिष्टावधिक एव प्रकीर्णकन्यायेन यदाकदाचिदुत्पद्यते। यथा–

**विविक्त–दीर्घिकोद्यान–सौध–क्रीडादि–दर्शने ।**
**लतावेश्मोपवेशे च कामः कामेन युज्यते ॥ ७४॥**

**(विप्रकीर्णः)** अष्टमीचन्द्रकेन्द्रोत्सवयक्षरात्रिकुन्दचतुर्थीसुवसन्तकमदनत्रयोदश्यादिरूपो **विप्रकीर्णकः**। स हि विशिष्टमष्टम्यादिकालभेदावधिमपेक्षमाणः कामिभिर्निर्वर्त्यते। समस्तेष्वपि देशेषु विप्रकीर्ण इव दृश्यते इति। यथा–

**अष्टमीचन्द्रके कुन्दचतुर्थ्यों सुवसन्तके ।**
**स्मरस्स्मरार्चा–शक्रार्चा–यक्षरात्रिषु वर्धते ॥ ७५॥**
**स एव कालः कात्स्न्र्येन द्विरूप इव दर्शितः ।**
**क्रियापदैकवाच्यो यः क्रियायास्साधनं च यः ॥ ७६॥**

## *(३. कारकम् /द्रव्यम् (साधनपदार्थः))*

किं **पुनस्साधनम्**? स्वपराश्रितक्रियाभिनिर्वृत्तिहेतुश्शक्तिमद्**द्रव्यं**, यत् **कारकम्** इत्याचक्षते । कारकशब्दश्चायमव्युत्पन्नः **क्रियानिमित्तवचनो लोकतस्सिद्धः करोतीति वा कारकशब्देन शक्तिमद् द्रव्यमुच्यते**। तथा हि–

**निष्पन्नमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।**
**व्यापारभेदापेक्षायां करणादित्वसंभवः ॥ ७७॥**
**पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वमुच्यते ।**
**अयमस्मादियं त्वस्मादिति भेदविवक्षया ॥ ७८॥**
**शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मिणः ।**
**सर्वथा सर्वदा भावात् क्वचित् किञ्चिद् विवक्ष्यते॥ ७९॥**

**सर्वत्र सहजा शक्तिर्यावद्द्रव्यमवस्थिता ।**
**क्रियाकाले त्वभिव्यक्तिराश्रय: परकारिणी ॥८०॥**

**स्वाङ्गसंयोगिन: पाशा दैत्यानां वारुणा यथा ।**
**व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा ॥८१॥**(वाप. ३.७.३०)

**तैक्ष्ण्यगौरवकाठिन्यसंस्थानै: स्वैरसिर्यदा ।**
**भेद्यं प्रति व्याप्रियते शक्तिमान् गृह्यते तदा ॥८२॥**(वाप. ३.७.३१)

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।**
**क्रियाणामभिनिष्पत्तेर्निमित्तं शक्तिरिष्यते ॥८३॥**

**तत्त्वे वा व्यतिरेके वा व्यतिरिक्तैव सोच्यते ।**
**शब्दप्रमाणको लोकस्स शास्त्रेणानुगम्यते ॥८४॥**(वाप. ३.७.३८)

तत्र शक्तिमतो **द्रव्यस्य** कारकाख्यायामवान्तरव्यापारनिबन्धना: **षडुपाख्या** भवन्ति, **१. कर्ता, २. कर्म, ३. करणम्, ४. संप्रदानम्, ५. अपादानम्, ६. अधिकरणम्** चेति। तेषु —

**स्वतन्त्र: कर्ता ।**

किं पुनस्तस्य स्वातन्त्र्यम्, यत् करणादीनि प्रयुङ्क्ते, न तै: प्रयुज्यते, तानि न्यक्करोति, न तैर्न्यक्क्रियते, न तैर्निर्वर्त्यते, तानि निर्वर्तयति, तानि प्रतिनिधत्ते, न तै: प्रतिनिधीयते; तेभ्यस्स: प्रथममात्मानं लभते, न तानि। तस्मात् स तैर्विनाऽपि दृश्यते, न तानि तेनेति। तदाह—

**प्रागन्यतश्शक्तिलाभान्न्यग्भावापादनादपि ।**
**तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥८५॥**(वाप. ३.७.१०१)
**अदृष्टत्वात् प्रतिनिधे: प्रविवेके च दर्शनात् ।**
**आरादप्युपकारित्वे प्राधान्यं कर्त्तुरुच्यते ॥८६॥**(वाप. ३.७.१०२)

कथं तर्हि कर्तृशक्त्या न्यक्कृतेषु करणादिषु कारकत्वम्, स्वव्यापारे प्रधानव्यापारे च स्वातन्त्र्यात्। तदुक्तम्—

**गुणक्रियाणां कर्तार: कर्त्रा न्यक्कृतशक्तय: ।**
**करणत्वादिभिर्जाता: क्रियाभेदानुवादिभि: ॥८७॥**[1]

१. वाक्यपदीये ३.७.२०—३.७.२१ इति कारिकयो: पूर्वार्द्धे।

**व्यस्ता(न्यक्ता)यामपि संपूर्णैस्स्वव्यापारैस्समन्विताः ।**
**स्वातन्त्र्यमुत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम् ॥८८॥**[1]
**यथा राज्ञो नियुक्तेषु योद्धृत्वं योद्धृषु स्थितम् ।**
**तेषु वृत्तौ तु लभते राजा जयपराजयौ ॥८९॥**(वाप.३.७.२२)
**तथा कर्त्रा नियुक्तेषु सर्वेष्वेकार्थकारिषु ।**
**कर्तृत्वं करणादित्वैरुत्तरं न विरुध्यते ॥९०॥**(वाप.३.७.२३)

कर्त्रादीनां च षण्णामपि प्रत्येकं त्रिप्रकारत्वा**दष्टादशप्रभेदा** भवन्ति। तत्र –

**कर्ता** स्वतन्त्रः, हेतुः, कर्मकर्ता च।

**कर्म** निर्वर्त्यं, विकार्यं प्राप्यं च।

**करणं** बाह्यमाभ्यन्तरं बाह्याभ्यन्तरं च।

**संप्रदानं** ददातिकर्माप्यं, कर्ममात्राप्यं क्रियाप्यं च।

**अपादानं** निर्दिष्टविषयमनिर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं च।

**अधिकरणं** वैषयिकमौपश्लेषिकं नैमित्तिकं चेति।

(१. कर्ता)

**(स्वतन्त्रः –६)** तच्च(त्र)कर्तृभेदेषु **स्वतन्त्रः** समर्थोऽसमर्थस्समर्थासमर्थः,संबन्धोऽसंबन्धस्संबन्धासंबन्धश्च। तेषु –

**समर्थो** यथा– व्रजति, पचति, अस्ति, श्वेतते।

**असमर्थो** यथा– जायते, विरमति, नश्यति, विकरोति।

**समर्थासमर्थो** यथा– चैत्रस्य रुजति, चैत्रस्यामयति, चोरं ज्वरयति, चोरं संतापयति।

**संबन्धो** यथा प्रियं दृष्ट्वा सुखं भवति, रिपुं दृष्ट्वा दुःखमुत्पद्यते, रम्यं श्रुत्वा दिदृक्षा जायते, रहः प्राप्य रतिर्निर्वर्तते।

**असंबन्धो** यथा– मेरौ दोग्धरि धरित्रीमद्रयो दुदुहुः,पञ्चभिर्हलैः क्षेत्रं ग्रामणीः कर्षति, शैलैर्वाल्मीकिरम्भोधिं बन्धयति, उज्जनिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति।

**संबन्धासंबन्धो** यथा– भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यात्।

---

१. वाक्यपदीय ३.७.२०–३.७.२१ इति कारिकयोः उत्तरार्द्धे।

**( हेतुः –६)** कर्मप्रयोजकः, कर्तृप्रयोजकः, कर्मकर्तृप्रयोजकः, हेतुप्रयोजकः, अहेतुप्रयोजकः हेत्वहेतुप्रयोजकश्च। तेषु–

**कर्मप्रयोजको** यथा– गां दोग्धि पयः, पौरवं गां याचते, गर्गाञ्छतं दण्डयति, काशान् कटं करोति।

**कर्तृप्रयोजको** यथा– यज्ञदत्तः पाचयति, माठरः पाठयति, भिक्षा वासयति, कारीषोऽग्निः अध्यापयति।

**कर्मकर्तृप्रयोजको** यथा– आरोहयति हस्तिनं हस्तिपकः, आरोहयते हस्तिनं हस्तिपकः, आरोहयते हस्ती, निषादयति क्रमेलकमौष्ट्रिकः, श्रपयति यवागूं यज्ञदत्तः, साधयति ओदनं सूपकार इति। कथं पुनः श्रायति–सियति–कर्त्रोर्यवाग्वोदनयोः कर्मकर्तृत्वं घटते?

श्रातिसिध्यती अकर्मकौ कर्मकर्तृविषयस्य पचेरर्थे वर्तेते। एतौ पुनः प्राकृतं पच्यर्थमाहतुरिति।

**हेतुप्रयोजको** यथा–अवीवदत् प्रवीणो वीणां परिवादकेन, अपीपठत् कठो माणवकं माठरेण, अजिघ्रपत् प्रियः कुसुमं कान्तया, अदूदुहद् गां वल्लवो गोपालकेन। कथं पुनः दुहिकर्तुः कर्तृप्रयोजकस्य हेतुत्वम्?

दुहेरन्तर्भूतणिजर्थत्वात्। वक्ष्यति हि–

**अन्तर्भूतणिजर्थानां दुहादीनां णिजन्तवत्।**
**सिद्धं पूर्वेण कर्मत्वम् (णिजन्तं नियमस्तथा)।।९१।।** इति (वाप. ३.७.७३)।

**अहेतुप्रयोजको** यथा– संवर्मयति, अतिहस्तयति, अभिषेणयति, उपश्लोकयति।

**हेत्वहेतुप्रयोजको** यथा– पुत्र उपाध्यायमध्यापयति, कन्या नदौ न (?) वर्तयति, याज्ययाजकौ याजयति, कन्यावरौ विवाहयति।

**(कर्मकर्ता –६)** विकर्मकर्ता, प्रयोज्यकर्ता, कर्मप्रयोज्यकर्ता, प्रकृतिकर्ता, विकारकर्ता प्रकृतिविकारकर्ता च। तेषु –

**विकर्मकर्ता** यथा– अवकिरते हस्ती, ग्रथते माला, प्रस्नुते गौः, चिकीर्षते कटः।

**प्रयोज्यकर्ता** यथा– पाचयति देवदत्तेन, पाठयति विष्णुमित्रेण, भारयति भारं वाहकेन, कारयति कटं वरुटेन।

**कर्मप्रयोज्यकर्ता** यथा— आरोहयते निषादिनं करेणुः, लावयते पामरं केदारः, दर्शयते राजा भृत्यैः, अभिवादयते गुरुर्देवदत्तेन।

**प्रकृतिकर्ता** यथा—काष्ठानि भस्म भवन्ति, महद्भूतश्चन्द्रमाः, त्वद् भवन्ति ज्ञातयः, मद् भवन्ति दायादाः।

**विकारकर्ता** यथा—मूत्राय संपद्यते यवागूः, अभ्यूषाय कल्पते यवानी, घटाय कपालौ भवतः; सुवर्णपिण्डं कुण्डले भवतः।

**प्रकृतिविकारकर्ता** यथा—सङ्घीभवन्ति ब्राह्मणाः, वर्गीभवन्ति गावः, वत्सो वृषस्संपद्यते, बाला प्रगल्भा भवति।

स एषोऽष्टादशप्रकारोऽपि अभिहितानभिहितप्रयुज्यमानाऽप्रयुज्यमानप्रसिद्धप्रकृता—पेक्षितौपचारिकप्रकल्पितविकल्पितानुस्यूतसामान्यादिभेदादनेकधा कर्तृभेदस्संभवति। तत्र—

**अभिहितो** यथा— स आस्ते, भवान् करोति।

**अनभिहितो** यथा—भवता कृतं, तेन सुप्यते।

**प्रयुज्यमानो** यथा— त्वं पचसि, अहं पचामि।

**अप्रयुज्यमानो** यथा—पचसि, पचामि।

**प्रसिद्धो** यथा – वर्षति, हेषते।

**प्रकृतो** यथा— भ्रेमुः, ववल्गुः।

**अपेक्षितो** यथा— इत्याचक्षते, यमयुङ्क्त।

**उपचरितो** यथा— धुनर्विध्यति, मञ्चाः क्रोशन्ति।

**प्रकल्पितो** यथा— आत्मनोऽपि नात्मानो जायन्ते, आत्मैवात्मानं जानाति।

**विकल्पितो** यथा— अहमन्यो वा गच्छतु, अन्योऽहं वा गच्छामि।

**अनुस्यूतो** यथा— स च त्वं च पचथः, त्वं चाहं च पचावः।

**सामान्यो** यथा— पचति पठति चेति। एते च भेदाः कर्मादिष्वपि यथासंभवमूहनीया इति विभक्तः कर्ता।।

## ( २. कर्म )

क्रियाप्यं **कर्म** ; यदाह 'कर्तुरीप्सिततमं कर्म' (१.४.४९) इति।

तत्तु त्रिविधं, **निर्वर्त्यं, विकार्यं प्राप्यम्**इति।

तत्र यदविद्यमानमुत्पाद्यते विद्यमानं वा जन्मादिना प्रकाश्यते **तन्निर्वर्त्यं**,

यदभिनिर्वृत्तमेव प्रकृत्युच्छेदेन गुणान्तराधानेन वा विकारमापद्यते तद् **विकार्यं**, यस्य क्रियाकृतानां विशेषाणां सर्वथानुपलब्धिस्तत् **प्राप्यम्**। तदुक्तम्—

**यदसज्जायते सद्वा जन्मना यत् प्रकाशते ।**
**तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम् ।। ९२।।**(वाप. ३.७.४९)
**प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत् ।**
**किञ्चिद् गुणान्तरापत्त्या सुवर्णादिविकारवत् ।। ९३।।**(वाप. ३.७.५०)
**क्रियागत/कृतविशेषाणां सिद्धिर्यत्र न गम्यते ।**
**दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते ।। ९४।।**(वाप. ३.७.५१)

तत्र निर्वर्त्ये विकार्यः प्राप्यधर्मस्स्वधर्मश्च विकार्ये प्राप्यधर्मस्स्वधर्मश्च, प्राप्ये तु स्वधर्म एव। कः पुनरसौ— (वाप.३.७.५३)

**आभासोप/सोऽवगमो व्यक्तिस्सोढत्वमिति कर्मणः ।**
**विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः ।। ९५।।**

निर्वर्त्यविकार्ययोस्तु निर्वृत्तिविकार्यविव। यथोच्यते—

**निर्वर्त्यादिषु तत् पूर्वमनुभूय स्वतन्त्रताम् ।**
**कर्त्रन्तराणां व्यापारे कर्म संपद्यते पुनः ।। ९६।।** (वाप. ३.७.५४)

**( निर्वर्त्यम् —६)**

तत्र **निर्वर्त्यम्** 'उत्पाद्यं प्रकाश्यमुपसर्जनं विशेषणं व्यवहितमप्राप्यं' च। तेषु—

यदसदुत्पाद्यते **तदुत्पाद्यम्**, यथा संयोगं विधत्ते, सुखमुत्पादयति, विभागं कुर्वते, दुःखं जनयति। विद्यमानमेव यदावरणापायादाविर्भवति तत् **प्रकाश्यम्**, यथा शब्दं जनयति, पुत्रं सूयते, तैलं कुरुते, पयो दोग्धि। अप्रधानभूत**मुपसर्जनम्**, यथा कटं कर्तुमारभते, ग्रामो वासयितुमिष्यते, पक्त्वोदनो भुज्यते, पक्तुमोदनश्चिन्त्यते। स्वानुरक्तप्रत्ययजनकं **विशेषणम्**, यथा भीष्ममुदारं कटं करोति, महान्तमव्यक्तं शब्दमुच्चारयति, दीर्घायुषं गुणिनमात्मजं प्रसूते, चित्रमच्छपटं वयति। क्रियान्तरेण व्यवधानवद् **व्यवहितम्**, यथा मासमास्ते, गोदोहं पचति, क्रोशमधीते, कुरून् (गच्छन्) स्वपिति।

**कालाध्वभावदेशानामन्तर्भूत—क्रियान्तरैः ।**
**सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ।। ९७।।** (वाप. ३.७.६७)

सकर्मिकापि क्रिया द्रव्यादिकर्मण्येव निविशते, न कालादिकर्मणि, यथा मासमोदनं पचति, क्रोशमनुवाकमधीते।

**आधारत्वमिव प्राप्तास्ते पुनर्द्रव्यकर्मसु ।**

**कालादयो भिन्नकक्ष्या/कक्ष्यं यान्ति कर्मत्वमुत्तरम् ।। ९८ ।।** (वाप. ३.७.६८)

क्रियाविशेषणम् **अप्राप्यम्,** यथा सुखमभिधत्ते, दुःखं निर्वर्तयति, मन्दं गच्छति, शीघ्रमायाति।

कथं पुनरुपसर्जनादीनां निर्वर्त्यमानता? यथा निर्वर्त्यमानस्य 'यथा ह्यसौ कटं निर्वर्तयति, एवं तद्गतभीष्मोदारादिकं तद्धर्ममपि इति। एवं शब्देऽपि। पक्वौदनो भुज्यत इति। अत्र तु पाकेनौदनो निर्वर्त्यते ; केवलं सास्य शक्तिः; प्रधानभुजिक्रियाविषयकर्म–शक्तिसन्निधौ पक्त्युपसर्जनीभूताख्यातेन प्रधानशक्त्यभिधानेऽभिहितवत् प्रकाशते। पक्तुमोदनश्चिन्त्यत इत्यत्र पच्यर्थत्वात् चिन्तायाः यद्यपि पाकस्य वास्तवं प्रधानत्वं तथाऽप्याख्यातप्रत्ययेन प्राधान्यतश्चिन्ताभिधानात् पचिक्रियोपसर्जनं भवति। अतस्तद्विषया कर्मशक्तिः प्रधानशक्त्यभिधानेऽभिहितवद् भवति। एतेन कटः कर्तुमारभ्यते, ग्रामो गन्तुमिष्यते इत्यपि व्याख्यातम्।

ननु गमेर्ग्रामः, इषेरुभे कर्मणी, तत् कस्यात्रोपसर्जनता? नैवम्; इषेरुभे कर्मणी इति यदुच्यते तत्सामर्थ्यप्रदर्शनपरमवगन्तव्यम्। इष्यते ग्रामः किं कर्तुम्? गन्तुम्, ग्रामो ग्राममिति वा। न पुनरिषेः युगपदुभे कर्मणी संभवतः। एवमहितेऽपि कटादिवदेव मासादीनामासनादिभिरभिनिर्वर्त्यमानता प्रतीयते। तथा हि वक्तारो भवन्ति इह स्थितोऽयं मासं निर्वर्तयतीति। एवं पचन् गोदोहम्, अधीयानः क्रोशं, स्वपन् कुरुन् इति कालभाव गन्तव्यानामेव कुरुक्रोशादीनां कर्मत्वम्। यदाह–

**कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।। ९९ ।।** (मभा. १.४.५१) इति।

**अप्राप्यम्–** यत्क्रियाविशेषणत्वात् क्रियावदेव निर्वर्त्यमानम्। तत्क्रियायाः कथमिति चेत्, पुरुषव्यापारसामान्याश्रयणात्। अप्राप्यत्वं पुनस्तस्य धात्वर्थाभिप्रायेण। न ह्यसौ धात्वर्थेन प्राप्यते; अपि तु पुरुषव्यापारेण। धात्वर्थस्य तु तत्र करणत्वम्। विश्वजिता यजेतेत्यादौ धात्वर्थनामधेयेभ्यो विश्वजिदादिभ्यः करणविभक्तिदर्शनादग्निष्टोमयाजी–त्यादिसिद्ध्यर्थ 'करणे यजः' (३.२.८५) इति च सूत्रारम्भात्। अग्निष्टोमादयो हि स्वर्गादिफलभावनायां करणम्।

( विकार्यं –६ )

**विकार्यम्**– अविनाश्यं विनाश्यमीप्सितमनीप्सितमास्थितं कर्तृकर्म च। तत्र –

**अविनाश्यं** यथा– सुवर्णं कुण्डलीकरोति, काण्डं लुनाति, कान्तां कोपयति, प्रियं प्रसादयति।

**विनाश्यं** यथा– कुसूलं भिनत्ति, काष्ठं दहति, धाना: पिबति, उदपेषं पिनष्टि।

**ईप्सितं** यथा– स्त्रियं गच्छति, पय: पिबति।

**अनीप्सितं** यथा– चोरान् पश्यति, धनं त्यजति, विषं भक्षयति, अहिं लङ्घयति। क: पुनरेषां विकार:? प्रकृतेरन्यथात्वम्; न हि चोरादयो दर्शनादिविषया भवन्ति।

**आस्थितं** यथा– पन्थानं गच्छति, नदीं तरति, पर्वतमारोहति, गर्तमुत्तरति। क: पुनरन्यतोऽस्य भेद:? उच्यते–

**त्यागरूपं प्रहातव्ये प्राप्ये संदर्शनादिके/संसर्गदर्शनम् ।**
**आस्थितं कर्म यत् तत्र द्वैरूप्यं भजते क्रिया ।।१००।।**(वाप.३.७.१३५)

**कर्तृकर्म** यथा– लूयते केदारस्स्वयमेव, पच्यत ओदनस्स्वयमेव, भिद्यते कुसूलस्स्वयमेव, भज्यते काष्ठ: स्वयमेवेति।

( प्राप्यम् –६)

**प्राप्यमपि** प्राप्यं, प्रयोज्यं, अपरिहार्यमभिहितमनभिहितमकथितं च। तत्र

**प्राप्यं** यथा– आदित्यं पश्यति, हिमवन्तं श्रृणोति, वेदमधीते, चर्चा: पारयति।

**प्रयोज्यं** यथा– माणवकं गमयति, शिष्यं बोधयति, ब्राह्मणमासादयति, पतिं शाययति। ननु च विकार्यमेतत्; तन्न, प्रयोजकव्यापारमात्रस्य विवक्षितत्वात्। विकारश्चैषां स्वक्रियानिबन्धन इति।

**अपरिहार्यं** यथा– विभागं जनयन् संयोगमुच्छिनत्ति, कटं कुर्वन् काशानाहरति, ग्रामं गच्छन् वृक्षमूलान्युपसर्पति, आमिक्षां भावयन् वाजिनमाप्नोति।

**अभिहितं** यथा यथा– उष्ट्रासिका: आस्यन्ते, हतशायिकाश्शय्यन्ते, रैपोषं पुष्यति, उदपेषं पिनष्टि।

**अनभिहितं** यथा–'पश्य मृगो धावति, स्मरसि देवदत्त काश्मीरेषु वत्स्याम:, न मर्षयामि यत् तत्र भवान् वृषलं याजयेत्।

**भावरूपं तु यत् कर्म तदिहाभिहितं विदुः ।**
**क्रियारूपं तु मन्यन्ते कर्माऽनभिहितं बुधाः ।। १०१ ।।**

अथ **अकथितम्**, तद्यथा— गां दोग्धि पयः, पौरवं गां याचते, व्रजं गामवरुणद्धि, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते, वृक्षमपचिनुते फलानि, माणवकं धर्मं ब्रूते, माणवकं धर्ममनुशास्ति, शतानीकं शतं जयति, गर्गाञ्छतं दण्डयति, उपसरमश्वं मुष्णाति, अम्बुनिधिममृतं मन्थाति, शाखां ग्रामं कर्षति, अजां ग्रामं नयति, एधान् ग्रामं हरति, भारं ग्रामं वहति, एवं नगरं हरति भारम्, समाहर्तारमयुतं गृह्णाति, काशान् कटं करोति।

किं पुनरिहाकथितम्?

पयःप्रभृति।

केनाकथितम्?

लकृत्यक्तखलर्थादिभिरिति। न हि पयःप्रभृतयो लादिभिः कथ्यन्ते, अपि तु गवादयः; यथा दुह्यते गौः पयः, दोग्धव्या गौः पयः, सुदुहा गौः पय इति। यत्तु तैराख्यायते तदीप्सिततमं प्रधानकर्म, प्रागेव क्रियासंबन्धात्। तदुक्तम्—

**तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्धः ।**
**गोर्दुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन् ।।१०२।।**[1]

एवं ग्रामा दिष्वपि आनयनादिभ्यः प्रागेव नयत्यादिसंबन्धात् लादिभिरभिधाने तद्धितोत्पत्तिरवगन्तव्या। तच्चाख्यानतः कथितमुच्यते, तद्विपरीतं त्वकथितमिति।।

**'दुहियाचिरुधिप्रच्छिभिक्षिचियाम्'** (मभा. १.४.५१) इत्यादि,

**जिदण्डिमुषिमन्थानां गत्यर्थानामकीर्तिते ।**
**नीहृव्वहिग्रहादीनामुपसंख्यानमिष्यते ।।१०३।।** (मभा. १.४.५१)

अस्यार्थः दुह्यादीनां य उपयोगः प्रपूरणादिस्तस्य यन्निमित्तं पयःप्रभृति, यच्च ब्रुविशास्योः क्रिया(क्रियया) धर्मादिकं(क)समवायेन संबध्यते तदपादानादिसंज्ञानामविधाने द्वितीया—वाच्यमप्रधानकर्माकथितम् उच्यते। जिप्रभृतीनां चाप्रधानकर्मणस्तत्रैवोपसंख्यानमिति।

---

१. तस्माच्छुद्ध = य(त)स्माच्छब्दस्य शुद्ध राघवः

अन्ये तूपयुज्यत इत्युपयोगः पयःप्रभृति, तस्य यन्निमित्तं गवादि। ब्रुविशासिगुणेन च प्रधानेन धर्मादिकर्मणा माणवकादि यत् संबध्यते तदकथितमित्याचक्षते। तत्पक्षे लादिवाच्यानां गवादीनां प्राधान्यं (न) व्याहन्येत, अकथितसंज्ञा च नार्था स्यात्। लादयश्च तेषामपि मते प्रधानकर्मण्येव, यथा अजा नीयते ग्राममिति। यथोक्तम्—

**प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।**
**अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥१०४॥** (मभा. १.४.५१)इति

तन्मिथो विरुद्धार्थत्वादेषामेवाविमृश्यवादितामापादयति। कथं समान एव योगक्षेमे गवादीनामप्राधान्यम्, अजादीनां च प्राधान्यम्, कथं वा प्रधानं गवादि लादिभिरजादिवदेवाभिधीयते? किं च—

**अन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत् ।**
**सिद्धं पूर्वेण कर्मत्वं णिजन्तनियमस्तथा ॥१०५॥** (वाप. ३.७.७३)

अस्मिन् पक्षे गवादीनां व्यक्तमेव प्रयोज्यत्वात् प्राक्सूत्रेणैव प्रधानकर्मत्वम्। तथा च गां दोग्धि पय इत्यत्र गां पयः क्षारयतीत्यर्थः। यतो दुहिः प्रपूरणार्थः, पूरणमाप्यायनं, प्रपूरणं तु विरेचनं, प्रेरणप्रस्थानादाविवार्थवैपरीत्याधानात्। यस्तु णिजन्तादीनामपि 'गतिबुद्धि'(१.४.५२) इत्यादिना कर्मसंज्ञारम्भः, स पाचयति देवदत्तेनेत्यादौ प्रयोज्यस्य कर्तुः कर्मसंज्ञां निर्वर्तयन्नियमार्थो भविष्यतीति विभक्तं कर्म॥

**(३. करणम्)**

करणमुच्यते; तत्र क्रियां प्रत्युपात्तव्यापारेषु कर्मादिषु यद्व्यापारानन्तरं क्रियासिद्धिविवक्षा तत्कारकं साधकतमं **करणमिति**। यदाह —

**क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम् ।**
**यदा विवक्ष्यते तस्य करणत्वं तदा स्मृतम् ॥१०६॥**(वाप.३.७.९०)

तदपि त्रेधा **बाह्यमाभ्यन्तरं बाह्याभ्यन्तरं** च। तेषु —

**( बाह्यम् —६)**

**बाह्यं** कर्तृरूपं, कर्त्राश्रितं, कर्मरूपं, कर्माश्रितं, क्रियाश्रितमनाश्रितं चेति। तत्र—

**कर्तृरूपं** यथा— एधैः पचति, सेनया जयति, अश्वेन गच्छति, नावा तरति।

**कर्त्राश्रितं** यथा—अक्षैर्दीव्यति, दात्रेण लुनाति, धनुषा विध्यति, परशुना छिनत्ति।

**कर्मरूपं** यथा– पथा गच्छति, अन्तिकेन याति, पयसा भुङ्क्ते, यवाग्वा जुहोति।

**कर्माश्रितं** यथा– पयसा ओदनं भुङ्क्ते, पथा ग्रामं गच्छति, द्विद्रोणेन धान्यं क्रीणाति, पञ्चकेन पशून् बध्नाति।

**क्रियाश्रितं** यथा– मासेनाधीते, क्रोशेनाधीते, विश्वजिता यजते, विधिना विदधाति।

**अनाश्रितं** यथा– स्तोकेन मुक्तः, कृच्छ्रेण लब्धः, आलोकेन पश्यति, दीपिकया याति।

**( आभ्यन्तरम् –७)**

**आभ्यन्तरमपि** आन्तरम्, अवान्तरम्, आभ्यन्तरम्, अनन्तरं, समनन्तरं, प्रत्यनन्तरं, बाह्याभ्यन्तरमिति। तत्र–

**आन्तरं** यथा– आत्मना बुध्यते, स्वयमुपक्रमते, स्वतः प्रकाशते, अन्योन्यतो जानाति।

**अवान्तरं** यथा– जात्या दुर्जनः, प्रकृत्या अभिरूपः, निसर्गेणार्यः, स्वभावेन सुभगः।

**आभ्यन्तरं** यथा– अहङ्कारेण कत्थते, सत्त्वेन सहते, रजसाऽनुरज्यते, तमसा मुह्यति।

**अनन्तरं** यथा– मनसा मोदते, अन्तरेणाचरति, प्रतिभया पश्यति, संस्कारेण स्मरति।

**समनन्तरं** यथा– प्रयत्नेनारभते, बुद्ध्या जानाति, सुखेन शेते, दुःखेन पठति।

**प्रत्यनन्तरं** यथा– धर्मेण वर्धते, अधर्मेण पतति, अविद्यया मृत्युं तरति, विद्ययाऽमृतं प्राप्नोति।

**बाह्याभ्यन्तरं** यथा– चक्षुषा पश्यति, वाचा वदति, इङ्गितेन कथयति, आकारेण ज्ञापयति।

**(बाह्याभ्यन्तरम् –६)**

**बाह्याभ्यन्तरमपि** बहिर्मुखमन्तर्मुखं, निर्मुखं, बहिरुद्रेकमन्तरुद्रेकं, निरुद्रेकं च। तेषु

**बहिर्मुखं** यथा– विद्ययाऽमृतमाप्नोति।

**अन्तर्मुखं** यथा– घ्राणेन जिघ्रति, जिह्वया स्वादयति, स्पर्शेन बुध्यते, श्रोत्रेण शृणोति।

**निर्मुखं** यथा– निश्शङ्कत्वेन यातः, निर्भयत्वेन आयातः, निष्किञ्चनत्वेन मुक्तम्(क्तः), निरायुधत्वेन हतः।

**बहिरुद्रेकं** यथा– पद्भ्यां गच्छति, पाणिभ्यां स्पृशति, संज्ञया गमयति, पौंस्नेन प्रीणाति।

**अन्तरुद्रेकं** यथा— बलेन वर्षति, कौशलेन रञ्जयति, अभियोगेनाधीते, अभ्यासेन धारयति।

**निरुद्रेकं** यथा— प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, अभिजनेन सौघ्नः, शाखया च्छन्दोग इति।

निष्किञ्चनत्वस्तोकत्वादीनां सदभावासत्त्वरूपत्वादसाधकत्वमिति चेत् तन्न।

**यथैव सन्निधौ तस्य तथैवासन्निधावपि ।**
**भावस्य करणत्वेन क्रियासिद्धिः प्रतीयते ।।१०७।।**[1] (वाप. ३.७.९८)
**स्तोकत्वस्याभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा ।**
**प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते ।।१०८।।** (वाप. ३.७.९९)

न च करणस्य वास्तवं रूपमस्ति विवक्षानिबन्धनत्वात्। तदुक्तम्—

**वस्तुतस्तदनिर्देश्यं न हि तद् वस्तुनि स्थितम् ।**
**स्थाल्या पच्यत एषापि विवक्षा दृश्यते यतः ।। १०९ ।।**(वाप.३.७.९१)

न च भवति एधाः पचन्ति, धनुर्विध्यति, चक्षुः पश्यति, मनो जानाति इति।।

करणमुक्तम्।

## (४. संप्रदानम्)

**संप्रदान**मुच्यते; तत्त्रिविधम्— **ददातिकर्माप्यं, कर्ममात्राप्यं क्रियाप्यं** चेति। तत्र

### (ददातिकर्माप्यम् —६)

संप्रदानमिति महत्याः संज्ञायाः करणात्। सम्यगस्मै प्रदीयते तद्गवादिना **ददातिकर्मणा** प्राप्यमुपाध्यायादिकं संप्रदानसंज्ञं भवति। तत् स्वत्वनिवृत्तौ, परस्वत्वापत्तौ, उभययोगे, स्वोपयोगे, परोपयोगे, उभयोपयोगे चेति **षोढा** विप्रथते।

**स्वत्वनिवृत्तौ** यथा— शिष्याय विद्यां प्रयच्छति, वराय कन्यां विश्राणयति, आप्तायोपदेशं ददाति, गुरुभ्य आत्मानं निवेदयति।

**परस्वत्वापत्तौ** यथा— रिपुभ्यो भयं ददाति, शत्रवे प्रहारं प्रयच्छति, वादिने उत्तरं ददाति, दयितायै वाचं प्रयच्छति।

**उभययोगे** यथा— कर्मकराय छत्रमर्पयति, मूकाय हितमुपदिशति, संवाहकाय कायं वितरति, प्रियतमाय शरीरं ददाति।

---

१. कारिकाया अस्या वाक्यपदीयस्य मूले भिन्न एव पाठः, पृ. ८६, पूनासंस्करणम् ।

**स्वोपयोगे** यथा– वाताय चक्षुर्ददाति, पृष्ठमातपाय स्पर्शयति, गीताय कर्णं ददाति, श्रुताय चेतो वितरति।

**परोपयोगे** यथा– पुत्रायाशिषं प्रयच्छति, छात्राय चपेटां ददाति, भीतायाभयं प्रयच्छति, आर्तायौषधं ददाति।

**उभयोपयोगे** यथा– नापिताय क्षुरं प्रयच्छति, मैत्रावरुणाय दण्डं ददाति, प्रियतमायाधरं प्रयच्छति, प्रियाया अङ्कपालीं ददाति।

'कर्मणा यमभिप्रैति स संप्रदानम्' (१.४.३२) इति परिभाषया लक्ष्यमाणं

**(कर्ममात्राप्यम् –६)**

**कर्ममात्राप्यम्** तदपि **षोढा** प्रेरकमनुमन्तृ, निराकर्तृ, अनिराकर्तृ, प्रत्यर्पकं, अप्रतिग्राहकमिति (वाप. ३.७.१२९)। तेषु –

**प्रेरकं** यथा– याचकायान्नं ददाति, वृद्धिमुत्तमर्णाय प्रयच्छति, द्वाःस्थायोपचारं कल्पयति, दायादाय भागं निर्दिशति।

**अनुमन्तृ** यथा– गामुपाध्याय निवेदयति, सेवकाय ग्रामं निर्दिशति, पतिंवरायै वरं दर्शयति, दास्यै वस्त्रमतिसृजति।

**अनिराकर्तृ** यथा– देवाय पुष्पं क्षिपति, कुबेराय बलिमुपहरति, रुद्राय पशुमालभते, सोमायार्घ्यं ददाति।

**निराकर्तृ** यथा– उन्मत्तायौषधं निर्दिशति, वादिने दूषणं ददाति, टङ्काय दण्डं करोति, शाक्यायामिषं प्रेषयति।

**प्रत्यर्पकं** यथा– सादिनेऽश्वं निर्दिशति, सन्निधात्रे कोशमर्पयति, समाहर्त्रे राष्ट्रं निवेदयति, अमात्याय मुद्रामुपनयति।

**अप्रतिग्राहकं** यथा– देवेभ्य उषितान्नं ददाति, पितृभ्यो भुक्तशेषं प्रयच्छति, अन्धाय रूपं दर्शयति, बधिराय शास्त्रमुपदिशति।

**(क्रियाप्यम् –६)**

कर्मग्रहणेन क्रियाया अपि सङ्ग्रहात् क्रियया यदाप्यते तदपि संप्रदानं, **क्रियाव्याप्यमिति** च भवति। कर्मणोऽस्मात् को विशेष इति चेदीप्सिततमत्वं नामं तदपि **षोढा** शेषः, कर्मशेषः, कर्म, व्यवहितकर्म, हेतुः, निमित्तहेतुरिति च। यदाह– (वाप. ३.७.१३०)

**हेतुत्वे कर्मसंज्ञायां शेषत्वे वाऽपि कारकम् ।**
**रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते ।।११०।।** तत्र–

**शेषो** यथा— देवदत्ताय रोचते, देवदत्ताय स्वदते, देवदत्ताय तिष्ठते, देवदत्ताय नमते।

**कर्मशेषो** यथा— देवदेत्ताय गां प्रतिशृणोति, देवदत्ताय गामाशृणोति, देवदत्ताय शतं धारयति, देवदत्ताय दैवमीक्षते।

**कर्म** यथा— देवत्ताय राध्यति, पुष्पाय स्पृहयति, ग्रामाय गच्छति, देवेभ्यो नमति।

**व्यवहितकर्म** यथा— छात्राय श्लाघते, चैत्राय शपते, होत्रे प्रतिगृणाति, पोत्रे अनुगृणाति।

**हेतु**र्यथा— देवदत्ताय क्रुध्यति, देवदत्ताय द्रुह्यति, देवदत्तायेर्ष्यति, देवदत्तायासूयति।

**निमित्तहेतु**र्यथा— एधेभ्यो व्रजति, श्राद्धाय निगर्हते, युद्धाय सन्नह्यति, पत्ये शेते इति। एतेन 'रुच्यर्थानां प्रीयमाणः'(१.४.३३), 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (१.४.३४), 'धारेरुत्तमर्णः'(१.४.३५) 'स्पृहेरीप्सितः' (१.४.३६), 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः'(१.४.३७), 'राधीक्ष्योर्यस्य विप्रश्नः'(१.४.३८), 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (१.४.४०), 'अनुप्रतिगृणश्च'(१.४.४१) 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (२.२.१२) 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' (२.३.१४) इत्यादिवचनं 'कर्मणा यमभिप्रैति स संप्रदानम्' (१.४.३२) इत्याद्ययोगस्यैव प्रपञ्चार्थम् इत्युक्तं भवतीत्यवसितं संप्रदानम्।।

## (५. अपादानम्)

**अपादान**मुच्यते, 'ध्रुवमपायेऽपादानम्'(१.४.२४); कायसंसर्गपूर्वके बुद्धिसंसर्गपूर्वके वा अपाये यद्ध्रुवमवधिभूतं विवक्षितं तस्यापादानमिति संज्ञा। यथोच्यते—

**अपाये यदुदासीनं तद्रूपं यदि वा चलम् ।**
**ध्रुवमेव तदावेशात् तदपादानमुच्यते ।।१११।।** (पम.१.४.२४)

तदपि त्रिविधं **निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं** चेति। तदुक्तम्—

**निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।**
**अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ।।११२।।** (वाप. ३.७.१३६)

**(निर्दिष्टविषयम् –६)**

तेषु यत्रोपात्तक्रियोपादानेनापायः प्रतीयते, **तन्निर्दिष्टविषयम्।**

तत् षोढा– उज्झितमनुज्झितमीप्सितं जिहासितं परिणतं निवृत्तमिति। तत्र–

**उज्झितं** यथा– ग्रामादागच्छति, वृक्षात् पर्णं पतति, मेषादे(न्मे)षोऽपसर्पति, धावतोऽश्वात् पतितः।

**अनुज्झितं** यथा– शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवति, वटात् प्ररोहो लम्बते, अग्नेर्धूम उच्चरति।

**ईप्सितं** यथा– यवेभ्यो गां निषेधति, माषेभ्यो महिषान् रुणद्धि, कूपादन्धं वारयति, अग्नेर्माणवकंमपसारयति।

**जिहासितं** यथा– अरण्यान्निष्क्रामति, गर्तादुत्तरति, पर्वतादवरोहति, आकाशात् पतति।

**परिणतं** यथा– गोमयात् वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा भवन्ति, सुवर्णात् कुण्डलमुत्पद्यते, काशेभ्यः कटो भवति।

**निवृत्तं** यथा– प्रभावाद्धीयते, प्रज्ञायाः प्रभ्रश्यते, न्यायादपैति, स्वरूपात् प्रच्यवते।

कथं प्रभावादीनां ध्रौव्यमिति चेत् शब्दव्यापारतोऽपायाभिनिवेशः।

**(उपात्तविषयम् –६)**

औदासीन्याद् यत्रोपात्तक्रियासामर्थ्यादवगम्यमानक्रियापदेनापायप्रतीतिस्तद् **उपात्तविषयम्**। तदपि **षोढा**– सिद्धरूपं, साध्यरूपं, प्राप्यरूपमप्राप्यरूपं, परिहर्तव्यं, निर्हर्तव्यमिति। तेषु –

**सिद्धरूपं** यथा– कूलात् पतति, कुसूलात् पचति, कांस्यपात्रतो भुङ्क्ते, ब्राह्मणाच्छंसति, उपाध्यायादधीते।

**साध्यरूपं** यथा– अध्ययनात् पराजयते, धर्मात् प्रमाद्यति, अधर्माजुगुप्सते, अकृत्याद् विरमति।

**प्राप्यरूपं** यथा– आसनात् प्रेक्षते, प्रासादादवलोकयति, बलाहकाद् विद्योतते, यौवनतो विकुरुते।

**अप्राप्यरूपं** यथा– द्व्यहादन्नं भोक्ष्यते, आमृत्योः श्रियमाकाङ्क्षेत्, क्रोशाल्लक्ष्यं विध्यति, आपाटलिपुत्राद् वृष्टो देवः।

**परिहर्तव्यं** यथा— चोरेभ्यो बिभेति, दुर्जनेभ्य उद्विजते, उपाध्यायादन्तर्धत्ते, सहाध्यायिभ्यो निलीयते।

**निर्हर्तव्यं** यथा— चोरेभ्यो गुह्यं त्रायते, रोगेभ्य आतुरं रक्षति, काकेभ्यो दध्यवति, असत्यादात्मानं पाति।

**(अपेक्षितक्रियम् —६)**

यत्रार्थप्रकरणादिभ्यो गम्यमानात् क्रियापदादपायबुद्धिस्त**दपेक्षितक्रियम्**।

तदपि **षोढा**— सामान्यक्रियापेक्षं विशेषक्रियापेक्षं सत्त्वभूतापेक्षमसत्त्वभूतापेक्षं नियतरूपापायम् अनियतरूपापायमिति। तेषु—

**सामान्यक्रियापेक्षं** यथा— दानवेभ्यो देवा बुद्धिमन्तः, सुरेभ्योऽसुरा योद्धारः, सुह्मा ब्रह्मोत्तरेभ्य आढ्यतराः, पाटलिपुत्रेभ्यः सुकुमारतराः।

**विशेषक्रियापेक्षं** यथा— रोहणाद् रत्नम्, पयो वारिधरात्, कुतो भवान्? पाटलिपुत्रात्।

**सत्त्वभूतापेक्षं** यथा— अन्यो देवदत्तात्, इतरो देवदत्तात्, पृथक् देवदत्तात्, नाना देवदत्तात्।

**असत्त्वभूतापेक्षं** यथा— ऋते देवदत्तात्, विना देवदत्तात्, आराद् देवदत्तात्, दूराद् देवदत्तात्।

**नियतरूपापायं** यथा— कौमुद्या यक्षरात्रिः पक्षे, कार्तिक्या आग्रहायणी मासे, गवीधुमतः सांकाश्यं चतुर्षु योजनेषु, पाटलिपुत्राद् राजगृहं सप्तयोजनानि।

**अनियतरूपापायं** यथा— प्राग्ग्रामातृ, दक्षिणा ग्रामात्, तत उपरिष्टात्।

अन्ये तु 'ध्रुवमपायेऽपादानम्' (१.४.२४) इति निर्दिष्टविषयम्; 'भीत्रार्थानां भयहेतुः' (१.४.२५), 'पराजेरसोढः' (१.४.२६), 'वारणार्थानामीप्सितः' (१.४.२७), 'अन्तर्धौ येनादर्शनमिच्छति' (१.४.२८), 'आख्यातोपयोगे' (१.४.२९), 'जनिकर्तुः प्रकृतिः' (१.४.३०), 'भुवः प्रभवः' (१.४.३१); 'ल्यब्लोपे कर्मण उपसंख्यानम्' (१.४.३१, वा), 'सप्तमीपञ्चम्यौ कारकमध्ये' (२.३.७), इत्यादियोगोक्तमुपात्तविषयम्; 'पञ्चमी विभक्ते' (२.३.४२), 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' (२.३.२९), 'प्रतिःपतिनिधिप्रतिदानयोः' (१.४.९२), 'प्रतिनिधिप्रतिदाने च यस्मात्' (२.३.११) इत्यादिकं त्ववधिभावादपेक्षितक्रियमिति त्रिधाऽपादानं मन्यन्ते। आहुश्च—

**निर्धारणे विभक्ते यो भीत्रादीनां च यो विधिः।**

**उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ॥११३॥**(वाप.३.७.१४७)

उक्तमपादानम्।

**(६. अधिकरणम्)**

**अधिकरण**मुच्यते, 'आधारोऽधिकरणम्'(१.४.४५); कर्त्तुः कर्मणो वा क्रियाश्रयस्य क्रियां प्रति य आधारस्तदधिकरणम् (काशिका १.४.४५) तदुक्तम्—

**कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।**

**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥११४॥** (वाप. ३.७.१४८)

तत् त्रेधा— **वैषयिकमौपश्लेषिकं नैमित्तिकं** चेति। तत्त्रिविधमपि अनेकप्रकारम्।

**(वैषयिकम् —६)**

विसिनोतीति विषयो जातिगुणक्रियादीनामाश्रयः, विषय एव वैषयिकमिति; 'विनयादिभ्यष्ठक्' (५.४.३४)। तत् **षोढा**— जातिवैषयिकं गुणवैषयिकं क्रियावैषयिकं द्रव्यवैषयिकं संज्ञावैषयिकं संकेतवैषयिकमिति। तेषु

**जातिवैषयिकं** यथा— दिवि देवाः, भुवि मनुष्याः, जले मत्स्याः, पाताले पन्नगाः।

**गुणवैषयिकं** यथा— आयुक्तः कटकरणे कुशलः, कटकरणे साधुः, मातरि निपुणः, पितरि प्रवीणः।

**क्रियावैषयिकं** यथा— प्राच्यामादित्य उदेति, दक्षिणस्यामगस्त्यो दृश्यते, आकाशे शकुन्ताः पतन्ति, शब्दादिषु श्रोत्रादयोऽभिनिविशन्ते।

**द्रव्यवैषयिकं** यथा— गोषु स्वामी, गोषु दायादः, अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः।

**संज्ञावैषयिकं** यथा— ब्रह्मणि पितामहः, विष्णौ पुरुषोत्तमः, रुद्रे महेश्वरः, इन्द्रे शक्रः।

**सङ्केतवैषयिकं** यथा— तर्जनीमध्ये उदात्तः, कनिष्ठिकामध्येऽनुदात्तः, अनामिकामध्ये स्वरितः, मध्यमामध्ये प्रचय इति।

**(औपश्लेषिकम् —६)**

उपश्लेषोऽवष्टम्भः तस्मै प्रभव**त्यौपश्लेषिकम्**; तदपि **षोढा**— **एकदेशिकमभि—व्यापकं सामीप्यकमौपश्लेषिकमौपशल्यकमौपचारिकं** चेति। तेषु—

**एकदेशिकं** यथा– गृहे तिष्ठति, स्थाल्यां पचति, पर्यङ्के शेते, शाखायां लम्बते।

**अभिव्यापकं** यथा– तिलेषु तैलम्, शैलेषु रागः, गवि गोत्वं, तन्तुषु पटः।

**सामीप्यकं** यथा– गुरौ वसति, तीर्थे वसति, गङ्गायां घोषः, कूपे गर्गकुलम्।

**औपश्लेषिकं** यथा–द्व्यहे भोक्ता, कार्तिक्या आग्रहायणी मासे, इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति, पाटलिपुत्राद् राजगृहं सप्तसु योजनेषु।

**औपशल्यकं** यथा– उप खार्यां द्रोणः, उप निष्के कार्षापणम्, उप व्यामे वितस्तिः, उप शते पञ्चाशत्।

**औपचारिकं** यथा– यो यस्य प्रियस्स तस्य हृदये वसति, यो यस्य द्वेष्यस्स तस्याक्ष्णोः प्रतिवसति, समः समग्रो मुष्टिमध्ये तिष्ठति, अङ्गुल्यग्रे हस्तियूथशतमास्त इति।

**(नैमित्तिकम् –६)**

निमित्तमेव **नैमित्तिकम्** ; तदपि षोढैव– देशनैमित्तिकं कालनैमित्तिकं भावनैमित्तिकं वस्तुनैमित्तिकं कर्मनैमित्तिकं कर्मयोगनैमित्तिकमिति। तेषु –

**देशनैमित्तिकं** यथा–गेहे मोदते, अरण्ये बिभेति, जले मज्जति, श्वभ्रे पतति।

**कालनैमित्तिकं** यथा–

**काशाः पुष्प्यन्ति मेघान्ते मधौ माद्यन्ति कोकिलाः ।**
**पुष्ये पायसमश्नीयान्मघासु पललोदनम् ॥११५॥**

**भावनैमित्तिकं** यथा– दर्शने प्रसीदति, विरहे विषीदति, अर्थलाभे हृष्यति, अरिविनाशे तुष्यति।

**वस्तुनैमित्तिकं** यथा– आतपे क्लाम्यति, छायायामाश्वसिति, दोषेषूद्विजते, गुणेषु रज्यत इति।

**कर्मनैमित्तिकं** यथा– इष्टी यज्ञे, परिगणिती याज्ञिक्ये, आम्नाती छन्दसि, अधीती व्याकरणे।

**कर्मयोगनैमित्तिकं** यथा–

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।**
**वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥११६॥** (मभा. ३.२.३६)

ननु च निमित्तहेतोः कारकत्वात् कारकस्य च प्रयोजकपरतन्त्रत्वादिह कथं कारकत्वमिति।

उच्यते, द्विविधः कारकहेतुः **प्रवृत्तप्रेरकः अप्रवृत्तप्रेरक**श्च। तत्राद्यो णिज्विषयः, इतरस्तु विध्याद्यात्मको निमित्तात्मकश्च। तयोश्च **प्रथमो** लिङ्लोट्तव्यादिवाच्यः। तदुक्तम्— **द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।**
**सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥११७॥**(वाप. ३.७.१२६)

**(अधिकरणम्) निमित्तात्मकस्तु** क्रियाश्रयत्वात् सप्तमीवाच्यो नैमित्तिकमधिकरणमिति विभक्तम**धिकरणम्**।

ननु च उप खार्यां द्रोणः, अधि पाञ्चालेषु ब्रह्मदत्त इत्यादौ यद्यधिकरण एव सप्तमी अधिकं किमर्थम् उच्यते 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२.३.९) इति। उच्यते 'कर्मप्रवचनीययुक्ते द्वितीया (२.३.८) मा बाधिष्ट' इति।

ननु च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'(मभा. २.३.४) इति द्वितीया न भविष्यति, यथा गोः स्वामी व्रजति, देवान् नमस्करोतीति।

नैवम्; नेयमुपपदविभक्तिः, अपि त्वन्तर्भूतक्रियान्तरसंबन्धा कर्मविभक्तिः।

तद्यथा शाकल्यस्य संहितामनु प्रावर्षत्, संहितामनु निशम्य इत्यर्थः।

तर्हि किमर्थं विधीयते?

कारकान्तरेऽपि यथा स्यात्। तेन उपार्जुनं योद्धार इत्यपादानेऽपि पञ्चमी बाधते। अत एव 'पञ्चम्यपाङ्परि' (२.३.१०) इत्यपादानेऽप्यारभ्यत इति। एतेनाधीती व्याकरणे, एधेभ्यो व्रजतीत्यादयः कारकविभक्तिविषये, गोषु स्वामी, प्राग्ग्रामादित्यादयः संबन्धविभक्तिविषये कारकविभक्तिसमावेशात् प्रकाशिता भवन्ति।

ननु च शक्तिस्साधनं, तद्वशेन द्रव्यस्य क्रियासु योगित्वात्। किंच द्रव्यमपि साधनम्, कल्पयित्वा साधनभेदा(न्), न पुनराश्रयितव्याः शक्तयः। संन्यस्ता वेति (सन्त्यक्तैवेति) शक्तिः।

सत्यम्, (शक्ति–)भेदास्साधनमिति कल्पितम्। न च तासामधिकरणं द्रव्यमेवेति द्रव्यानपेक्षसाधनत्वम्, द्रव्यस्यापि स्वकर्मायत्तजन्मनस्तदपेक्षया तुल्यदोषत्वात्; शक्तीनामेव च साधनत्वे प्रत्ययाभिहितासु शक्तिषु द्रव्यवचनानामनुप्रयोगो युज्यते 'वर्धते देवदत्तः, परिगतमर्थतत्त्वम्' इति। द्रव्ये तु साधने तस्याभिहितत्वादनुप्रयोगो न प्राप्नोति। शक्तीनामेव च साधनत्वे 'अद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद् वा भोक्ता'

इति शक्तिमध्यवर्तिनि काले सप्तमी पञ्चमी वा कारकमध्ये (२.३.७) लभ्यते। द्रव्यस्य देवदत्तादेरेकत्वान्मध्ये द्व्यहादिकालो न संभवति। शक्तीनामेव च साधनत्वे 'प्रासादे अस्ति' इति घञादिविषयमधिकरणमभिहितं, न त्वासिविषयमित्यनभिहित–विषयलक्षणा सप्तमी लभ्यते; द्रव्ये सत्यभिहितत्वाद् इति। शक्तीनामेव साधनत्वे योऽयमेकद्रव्याधिकरणः साधनभेदः श्रूयते, स उपपन्नो भवति, 'वेगेन पतितो रुग्णः', 'स्फुरतो ध्वनिरुदित' इति द्रव्ये तु तस्यैकत्वान्न संभवति। क्रियाभेदनिबन्धनो भविष्यतीति चेत् कर्मादिनियमो बाध्येत; प्रतीतिभेदश्च न स्यात्।

तन्न, क्रियाया अर्थान्तरत्वात् न ह्यन्यस्य भेदः, अन्यद् भिद्यते। अपि च द्रव्यस्यैकत्वे कुतः क्रियाभेदकारणभेदः, कार्यस्याभेदात्। शक्तीनामेव च साधनत्वे प्रातिपदिकाद् विभक्तयो युज्यन्ते। द्रव्यस्य तु प्रातिपदिकेनाभिहितत्वाद् अनर्थका नोत्पद्येरन्।

वचनात् स्वार्थिका इति चेत्, कर्मादिः नियमो बाध्येत, प्रतीतिभेदश्च न स्यात् वृक्षे वृक्षेणेति। अस्ति चासावभिन्नेऽपि प्रातिपदिकार्थे तस्मादर्थान्तरं प्रातिपदिकार्थाद् विभक्त्यर्थः कारकमिति।

नैवम्; शक्त्यपेक्षा तस्य साधनत्वं विहन्ति; शक्तेरपि द्रव्यापेक्षत्वे तुल्यदोषत्वात्। न चान्यापेक्षा कारकाणां कारकत्वं विरुणद्धि; कार्यत एवान्वयव्यतिरेकाभ्यां कारकत्वावगतेः। कार्यं हि कस्यचित् संभवेऽप्यनवाप्तसत्ताकः पुनरवाप्नुवन् सत्तान्तरस्य भाव एव परिगृहीतातिशयान्तरस्य कारणतां सूचयति; न त्वकारणतामेव। विशेषशालिनि तस्मिन्नेव पुनर्भावात् तदभावे चाभावात्। न खलु कुसूलादौ बीजसमवधानेऽप्यलब्धोपलब्धेरङ्कुरस्य क्षित्यादिसहकारिग्रामबीजस्य समवधानसदृश्यमानमूर्त्तेरन्वयकार्यं न प्रतीयते, अपि तु तदेव बीजं समवहित–क्षित्यादिसहकारिप्रत्ययमस्य जनकमितरथेति गम्यते।

द्रव्यस्यैकत्वात् साधनभेदः कथमिति चेत् एकद्रव्याधिकरणाश्शक्तयो भिन्नरूपाः स्वरूपभेदेनाश्रयभेदमुपदधत्योऽभेदमधिकरणस्य दर्शयन्ति। एकस्यापि देवदत्तादेः शिल्पभेदात् तक्षायस्कारादिससमाख्या अर्थभेदनिबन्धनाः संदृश्यन्ते। शक्तयस्तु भिन्नरूपा इति शक्तिसाधनिकोऽपि मन्यते। तासां च वशेन तद्द्रव्यमाहितभेदं द्रव्यसाधनिकस्यापि साधनभेदव्यवस्थां रचयति इति।

यत्तूक्तम् द्रव्ये साधने प्रत्ययाभिहितत्वात् तदनुप्रयोगो न स्यात्, तत्र सामान्यमभिहितं, विशेषो न प्रयोक्ष्यते इति;

न (तद्) वक्तव्यम्; साधने विधीयमानप्रत्ययः कथं साधनं सामान्यम–भिदधीत? सामान्यस्य विशेषाश्रयत्वाद् विशेष एव वा प्रत्ययेनैकरूपत्वादनु–प्रयोगापेक्षिणाऽभिधीयते गोशब्देनैव प्रकरणाद्यपेक्षिणा गवादिरर्थ इति।

ननु चान्यापेक्षया विशेषमभिदधतः सामन्यसाधनशक्तीनां विशेषे शब्दस्या–भिधानशक्तिप्रतिघात इति।

नैवं, शक्तिर्विशेष एवोच्यते। धातोः क्रियाविशेषवचनादेव प्रत्ययोत्पत्तेः। स च कार्यविशेषाश्रयभेदाभ्यामवधार्यते। तत्र कार्यभेदो धातुनैवाभिहितः; आश्रयभेदः पुनरप्रतीतः पदान्तरेणैवोच्यते चैत्रो मैत्र इति। तथाप्यन्यापेक्षा तुल्यैव। न चाश्रिताश्रययोस्सामाना–धिकरण्यम्। अतश्चैत्रो वर्तते इति न स्यात्, अपि तु चैत्रो वर्धत इति। अपि च धातुः क्रियाविशेषवचन एवेति कुत एतद् वर्धते, यावदनेन वर्धितव्यम्। इदं कर्म कुर्याः, 'नागरकवृत्तं वर्तेत, समान् पोषान् अपुष्यत्' इत्यादौ सामान्यस्य विशेषः प्रतीयते।

यत्तु देवदत्तादेर्द्रव्यस्यैकत्वान्मध्ये द्व्यहादिः कालो न सम्भवतीत्युच्यते, तदपि न सम्यक्; आश्रितोपाधिनिमित्तस्य भेदस्योपपत्तेः। तथा हि वक्तारो भवन्ति, परुद्भवान्, पटुरासीत्, पटुतरश्चैषमः, अद्यान्य एवासि संपन्न (मभा. ५.३.५७) इति। तदेवं सामर्थ्यभेदादाहितविभागमधिकरणं भागशोऽवच्छिद्य साधनभेदः प्रकल्प्यमानो मध्यमप्युपकल्पयति।

न च शक्तिपक्षेऽपि साक्षान्मध्यसम्भवः। पूर्वशक्तिकाले परस्याः, परकाले च पूर्वस्या अभावात्।

अथवा द्व्यहे भोक्तेत्यवधिसप्तमी द्व्यहाद् वा भोक्तेत्यवधेरेव पञ्चमी, स चान्त्यमोजनेनावच्छिद्यते। यदि तु मध्यसिद्धये द्रव्यभेदः शक्तिभेदश्च कल्प्यते, तदा कर्तृभेदाद् भुक्त्वेति क्त्वाप्रत्ययः 'समानकर्तृकयोः पूर्वकाले' (३.४.२१) इति न स्यात्।

उपचरिताभेदाश्रयस्स इति चेद्, मध्यं न सिध्यति। अथैकत्वाद् भुक्तिक्रियायां कारकैकत्वकालभेदाश्रयश्च कारकभेदः, स्नात्वा व्रजतीति न स्यात्; स्नानव्रजिक्रिययोश्च भेदात् तन्निमित्तयोः कर्तृशक्त्योरपि भेदे समानकर्तृकत्वाभावात्। ननु च यस्यापि द्रव्यमाश्रितशक्तिभेदसंपादितनानात्वं साधनं तस्याप्येष दोषः। अ(ना)पि च भिन्नाधारवर्तितया सामर्थ्ययोरभेदमाधेयशक्तिवादिना शक्यते वक्तुं समानः कर्तेति। यस्य तु शक्तिभेदोपनीतस्तदाधारस्य भेदः, तस्य निबन्धनमुपचरितमप्येकत्वं न विद्यते, अपेक्षणीयश्चाधारभेद, क्रियाभेदस्य पौर्वापर्यवतः अपेक्षितत्वात्।

अत्रोच्यते—द्रव्यस्यैकत्वेन शक्त्योरेकत्वमुच्यते। शक्तिनानात्वेन च द्रव्यस्यापि नानात्वं करिष्यते द्रव्यस्य तु पारमार्थिकमप्येकत्वं न मृष्यत इत्यहो कामचारः। अपि तु शक्तौ साधने पशौ कर्तरि हस्तिकवाटयोः कर्त्रोः इति (पम. न्यास. ३.२.५४) कथं शक्तिरेकाधारावच्छिन्ना प्रतिपद्यते? प्रतिपद्यताम्, सामानाधिकरण्यं पृच्छामि; पशौ द्रव्ये यः कर्तेति चेत्, उपमानात् कर्तुरिति न प्राप्नोति।

अथ शक्तिभेदोपकरणाः कर्त्रादिश्रुतयः तदधिकरणं कार्ययोगितयाऽवगमयन्ति, शुल्कादय इव रूपविशेषाश्रयमिति सामानाधिकरण्योपपत्तेः। जितं तर्हि भवता, सिद्धश्शक्तिसाधनभेदः, कर्त्रादिश्रुतिभिराश्रयस्य शक्तिमतोऽभिधानात्।

किञ्च शक्तिकारकपक्षे कर्मण एकत्वे, कर्मणो द्वित्वे, कर्मणो बहुत्वे विभक्तिवचनादि न स्यात्; न हि गुणस्य संख्या संबन्धोऽपि; द्रव्ये तु युज्यते। यतः कर्मादिशब्दाः शक्तिमद्द्रव्यमविरुद्धसंख्यासम्बन्धं बोधयन्ति।

ननु गुणस्यापि संख्यासम्बन्धो दृश्यते पञ्च कर्माणि, चत्वारोऽभावा— स्त्रयस्संयोगा द्वे सामान्ये एकस्समवाय इति। न चायमुपचारः प्रत्ययाविशेषात् एवं शक्तयोऽपि कार्यभेदभिन्नास्सङ्ख्याभेदमनुभविष्यन्ति।

सत्यम्, अस्ति शक्तीनां भेदः, न तु तत्रापि ते वचनभेदः, यस्मादादित्यं पश्यति स्तौतीति दर्शनादिक्रियाभेदाद् भिन्नास्वपि शक्तिषु न बहुवचनं दृश्यते। न पर्यायोक्तौ शक्तयः क्रियाभिरभिसंबध्यन्त इति चेत्, तन्न। प्रत्येकसमाप्ता अपि क्रियाभेदास्समस्याभिधानेषु वचनभेदं प्रयुञ्जते। यथा पञ्च शरानस्यति, सव्यापसव्याभ्यां विध्यति, द्वयोः पर्यङ्कयोश्शेते इति।

न च पर्यायेणैव दर्शनादयः स्युः, यौगपद्येनापि भावात्। तस्मात् सामर्थ्या— धारनिबन्धनो वचनभेदो न शक्त्याश्रय इति। अत एव स्वातन्त्र्याद् विभक्त्याऽपि शक्तिर्नाभिधीयते। यदि हि स्वतन्त्रां शक्तिं विभक्तिरभिदध्यात् तदा तद्गतामेव संख्यां विभक्तिरभिदधीत, समानशब्दोपादानात्; न चैतदस्ति। तस्माद् यस्य संख्यां विभक्तिरुपादत्ते तदेव शक्तिमत् कारकमिति।

यत्तु शक्तावेव विभक्त्यर्थे वर्तमानमव्ययं समस्यते इत्युच्यते तच्छक्तिमत्यपि कारके अव्ययानामपि सत्त्ववचनात् तन्मात्राभिधानमिति कथं सत्त्वभूतं द्रव्यमसत्त्वार्थेनाव्ययेनाभिधीयेत? यस्तु प्रासाद आस्त इत्यनभिहितलक्षणा सप्तमी न लक्ष्यत इति तत्र यथा घञादिविषये शक्तिमद्द्रव्यमभिहितं, न त्वासिविषयशक्तिमदिति,

तत्र केन सप्तमी वार्यते? यदि च घञादयः शक्तिमभिदधीरन् तदा शक्तेरसिशब्दाभिहितायाः शक्त्यन्तरायोगादास्तां, सप्तमीद्वितीयादयोऽपि नोत्पद्येरन्।

कथं चैवमाह अधिकरणादिवचनानि प्रासादादयः।

ते हि संज्ञाशब्दा वृक्षादिवदेव केषुचिदर्थविशेषेषु रूढाः केवलममीषां धर्मनियमा वा यथाकथञ्चिदुत्पत्तिं गमयन्ति। एतेन च 'वेगेन पतत' इत्यादौ येयमेकद्रव्याधिकरणा साधनभेदश्रुतिः सापि प्रतिविहितैव भवति।

न चैतावद् वाच्यं, द्रव्ये कारके प्रातिपदिकादयो नोत्पद्येरन्। द्रव्यं हि विभक्तिलिङ्गशक्तिसंख्यास्वर्थपरिमाणवत् सामान्यमात्रया प्रातिपदिकमात्रेणाभिधीयते, शक्तिसंख्यालिङ्गवच्च विभक्तिवचनसंस्कारो लभ्यत इत्यतः स्थितमेतच्छक्तिमद् द्रव्यं कारकमिति।।

## (४. पुरुषः)

आख्यातप्रत्ययाभिधेयः कारकविशेषः **पुरुषः**।

स त्रिधा— **प्रथमो, मध्यम उत्तमश्च** । तत्र परस्मैपदात्मनेपदयोः प्रथमत्रिकाभिधेयः **प्रथमः**, मध्यमत्रिकाभिधेयो **मध्यमः**, अन्त्यत्रिकाभिधेय **उत्तमः**। तत्र च—

**प्रत्यु/त्यक्तापरभावश्चेदुपाधिः/धी कर्तृकर्मणोः ।**
**तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ।।११८।।**(वाप. ३.१०.१)

तदाह— युष्मदि मध्यमः, अस्मद्युत्तमः, शेषे प्रथम (१.४.१०५, १०७, १०८) इति। तत्र कर्तरि पुरुषत्रयप्रयोगो यथा—(कुसं. ५.६५)

**अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।**
**अमङ्गलाभ्यासरतिं विचिन्त्य तं तवाभ्यनुज्ञां न तु कर्तुमुत्सहे ।।११९।।**

कर्मणि यथा—

**यदि त्वं मन्यसे तेन त्वया स यदि तोष्यते ।**
**तत् किमस्थानकोपेन दूति! दह्यामहे वयम् ।।१२०।।**

अथैषां क्वचित् प्रथम एव यथा— भावप्रयोगेषु युवाभ्यामास्यते, अस्माभिर्गण्यते इति क्वचिन्मध्यम एव यथा क्रियासमभिहारे हिस्वाभ्यां समुच्चयेषु लुनीहि लुनीहित्येवायं लुनाति, अलावीत् लविष्यति वा, अधीष्वाधीष्वेत्येवमधीयाते, अध्यैषातां अधीष्येते वा, राष्ट्रमट, मठमट खदूरमटेत्येवावामटावः, अटिष्व अटिष्यावो वा, छन्दोऽधीष्व व्याकरणमधीष्व, निरुक्तमधीष्वेत्येव वयमधीमहे, अध्यगीष्महि अध्येष्यामहे वा, सक्तून् पिब, धानाः खादत, ओदनं भुङ्क्ष्व इत्येवं यूयमभ्यवहरथ अभ्यवाहार्ष्ट

अभ्यवहरिष्यथ वा। क्वचिदुत्तम एव यथा प्रहासे मन्यते एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्ते पिता; एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तस्सोऽतिथिभिरिति। मन्यतेस्तु उत्तमविषयेऽपि मध्यम एव; तत्र ह्ययमर्थःएहि मन्यसे रथेन यास्यामि, एहि मन्यस ओदनं भोक्ष्यथ इति। युगपद्वचने पुनः पुरुषाणां परो भवति यथा स च त्वं च पचथः, त्वं चाहं च पचावः, स च त्वं चाहं च पचाम इति। युगपद्वचनता चैकशेषस्य द्वन्द्वसमानार्थत्वाच्च अर्थविषयैव गृह्यते; न चार्थविषया (वाप.–३) तेन

**अहं वा कुम्भकर्णो वा त्वं वा राक्षसपुङ्गव ।**
**इन्द्रजिद्वा निकुम्भो वा भरेयुर्भारमीदृशम् ।। १२१ ।।**(रामा.६.७.६)इति।

शेषे प्रथम एव भवति, यथा त्वमहमन्यो वा गच्छत्विति।

एवं तर्हि चार्थे युगपद्वचनतायामभावात् वहेयुरिति बहुवचनं न प्राप्नोति।

नैवम्; वार्थेषु क्वचिद्युगपद्वचनता दृश्यते, यथा द्वौ वा त्रयो वा द्वित्रा इति। आह च **महाभाष्यकारः**, 'द्वौ वेत्युक्ते त्रयो वेति गम्यते, त्रयो वेत्युक्ते द्वौ वेति गम्यते। सैषा पञ्चाधिष्ठाना वाक्। तत्र युक्तं बहुवचनम्। सामान्याश्रयं वा बहुवचनम्, यथा कति भवतः पुत्राः कति भवतो भार्या इति।

**अत्वं संपद्यते यस्मिन्न तस्मिन् युष्मदाश्रया ।**
**प्रवृत्तिः पुरुषस्यास्ति प्रकृतेस्सा विधीयते ।। १२२ ।।**(वाप.३.७.११७)

यथा अत्वं त्वं संपद्यते त्वद्भवति, अयूयं यूयं संपद्यन्ते युष्मद्भवन्तीति। उपलक्षणं चैतत्। प्रकृतिविकृत्याश्रयपुरुषसंप्रधारणायां प्रकृत्याश्रय एव पुरुषो भवति, न विकृत्याश्रय इति। तेन अनहमहं संपद्यते मद्भवति, अवयं वयं संपद्यन्ते अस्मद्भवन्ति, असस्स संपद्यते तद्भवति, अनहमहं संपद्यसे मद्भवसीत्याद्यपि सिद्धं भवति। का पुनरत्रोपपत्तिः? अभूततद्भावे प्रकृतिविकृत्योः कर्तृत्वविवक्षायां कामचारः। तथा हि—क्वचिद्विकृतेः कर्तृत्वं विवक्ष्यते, यथा मूत्राय संपद्यते यवागूः, यथा च सुवर्णपिण्डः पुनरपरया आकृत्या संवृत्तः खदिराङ्गारसवर्णे कुण्डले भवत इति। तथा हि – **क्लृपि संपद्यमाने या चतुर्थी सा विकारतः ।**
**सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम् ।। १२३ ।।**(वाप.३.७.११५)

क्वचित्तु प्रकृतेः; यथा सङ्घीभवन्ति ब्राह्मणाः, महद्भूतश्चन्द्रमा (मभा. ६.३.४६) इति। अत्र यदि प्रकृतेः कर्तृत्वं न विवक्ष्यते तदा विकृतेस्सङ्घस्यैव कर्तृत्वाद्भवन्तीति

बहुवचनं न प्राप्नोति। महद्भूतः इत्यत्र महच्छब्दस्य च मुख्यार्थत्वाद् 'आन्महतस्समानाधिकरणजातीययोः' (६.३.४६) इत्यात्वं स्यात्। प्रकृतिर्हि काचिदुपचरितविकाररूपा, यथा इन्द्रः स्थूणा, उपेन्द्रो ग्राव इति; काचित् परिणामिनी यथा दुग्धं दधि भवति, हेम कुण्डलीभवति। तत्र विपरिणामिनीषु प्रकृतिषु सङ्ख्यमहत्त्वादिभिर्मुख्यैरपि योगे पूर्वस्या अवस्थायाः प्रच्युतस्योत्तरामवस्थां प्राप्तस्य पूर्वोत्तरयोरवस्थयोराश्रितयोसव्यापारत्वात् पूर्वस्यामवस्थायां कर्तृत्वविवक्षायाः सङ्ख्यमहदादेर्विकारशब्दस्य प्रकृत्युपग्राहिणो गौणत्वं विज्ञायते। तदुक्तम्— (वाप.२.२८०)

**महत्त्वं सङ्ख्भावं च प्रकृतिः प्रतिपद्यते ।**
**भेदे नापेक्षिता सा तु गौणत्वस्य प्रसाधिका ॥१२४॥** इति।

यद्येवम्, अतिमहती महती संपन्ना महद्भूता ब्राह्मणीति पुंवद्भावो न प्राप्नोति। अर्थाश्रयः एतदेवं भवति (मभा. ६.३.४६); शब्दाश्रयश्च पुंवद्भावः; 'गोतो णित्' (७.१.९०), 'औतोंऽशसोः' इति (६.२.९३) वाहीके वर्तमानस्य गोशब्दस्य गौस्तिष्ठति गामानयेति वृद्धिरात्वं च भवति (मभा. ६.३.४६)॥

**तेऽमी क्रिया च कालश्च कारकं पुरुषस्तथा ।**
**उक्ताः पदार्थाश्चत्वारस्स्वैस्स्वैर्भेदैस्समन्विताः ॥ १२५॥**
**द्रव्यात्मा चापि कालो यः प्रसङ्गात् सोऽपि कीर्तितः ।**
**स हि प्रायः प्रबन्धेषु तत्र तत्रोपयुज्यते ॥ १२६॥**
**क्रियायां कालोऽन्तर्भवति पुरुषः कारकपदे**
**प्रधाने सोपाधिद्वयमपि तदेतन्निविशते ।**
**प्रधानं तं प्राहुर्यमभिदधते घञ्प्रभृतयः**
**सहोपस्कारार्थैर्निविशति स तु प्रातिपदिके ॥ १२७॥**

**इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे**
**क्रियाद्यर्थचतुष्टयप्रकाशो नाम**
**॥ चतुर्थः प्रकाशः ॥४॥**

रेवाप्रसादस्य सनातनस्य प्रकाशसंशोधनकार्यमेतत् ।
प्रकाशमेतं तु तुरीयमाप्तं प्रसीदतादत्र महान् स देवः ॥



अथ

## शृङ्गारप्रकाशे पञ्चमः प्रकाशः

उपाध्याद्यर्थचतुष्टयप्रकाशो नाम

## *(५. उपाधिः)*

**(क्रियोपाधिः — १२)**

प्रकृत्यर्थप्रत्ययार्थभेदेषु कारकाणां प्रवृत्तिविशेषः **क्रिया**; तामनुपहितां कृभ्वस्तयो वदन्ति। तेषां परस्परमसंभेदसंभेदाभ्यां साम्योत्कर्षापकर्षजन्मानो द्वादश **धात्वर्थभेदाः क्रिया** भवन्ति। तद्यथा —

**अकर्मकाः, अन्तःकर्मकाः, अर्थान्तरकर्मकाः, अविवक्षितकर्मकाः, प्रसिद्धकर्मकाः, द्विकर्मकाः, प्रसिद्धकर्तृकाः, भावकर्तृकाः, कर्मकर्तृकाः, कर्तृस्थक्रियाः, कर्मस्थक्रियाः, उभयस्थक्रियाश्चेति।**

ते **चापरिस्पन्दसपरिस्पन्दभेदात्** प्रत्येकं द्विधा भूत्वा चतुर्विंशतिर्जायन्ते।

तत्र स्वभावतोऽस्तिस्तु उदासीनकर्तृकत्वाद् **अपरिस्पन्दः**।

करोतिः प्रयुञ्जानकर्तृकत्वात् **सपरिस्पन्दः**।

भवतिः विकुर्वाणकर्तृकत्वात् **सपरिस्पन्दापरिस्पन्द** इति स्थितम्।

**(१. अकर्मकाः)** अतोऽस्त्यर्था भवत्यर्थश्च न्यग्भवतयो न्यगस्तयश्चाकर्मका भवन्ति। तेषु —

पूर्वे अपरिस्पन्दा यथा— भिद्यते, स्वदते, वर्तते, प्रीयत इति।

उत्तरे सपरिस्पन्दा यथा— जायते, विवर्धते, x x x x x x ते, स्फुरतीति।

**(२. अन्तःकर्मकाः)** त एव न्यक्करोतयोऽन्तःकर्मकाः; तेषु —

पूर्वे अपरिस्पन्दा यथा— जीवति, म्रियते, पुत्रीयति, प्राणितीति।

उत्तरे सपरिस्पन्दा यथा— नृत्यति, श्वसिति, बाष्पायते, रोदितीति।

**(३. अर्थान्तरकर्मकाः)** अस्तिकरोत्यर्थाः करोतिभवत्यर्थाश्चार्थान्तरकर्मकाः। तेषु —

पूर्वे अपरिस्पन्दा यथा— तरति काष्ठं, तरति विपदं, विपर्यस्यति मतिं, विपर्यस्यति हस्तमिति।

उत्तरे सपरिस्पन्दा यथा— वहति नदी, वहति भारं, पतति पर्णं, पतत्यध्वानमिति।

(४. **अविवक्षितकर्मकाः**) त एवानुत्करोतयोऽपि अविवक्षितकर्मकाः। तेषु –

पूर्वे अपरिस्पन्दा यथा– संज्ञा संज्ञिन्यभिनिविशते, बुद्धिस्तत्त्वमभिनिविशते, तीर्थं उपवसति, त्रिरात्रमुपवसतीति।

उत्तरे सपरिस्पपन्दा यथा– चैत्रो हसति, मैत्रं हसति, चक्रं भ्रमति, देशान् भ्रमतीति।

(५. **प्रसिद्धकर्मकाः**) उत्करोतयस्तु त एव प्रसिद्धकर्मकाः। तेषु–

पूर्वे अपरिस्पन्दा यथा– वपतीत्युक्ते बीजमिति गम्यते, प्रसूत इत्युक्ते गर्भमिति गम्यत इति।

उत्तरे सपरिस्पन्दा यथा– कृषतीत्युक्ते क्षेत्रमिति गम्यते, परिणयतीत्युक्ते कन्यामिति गम्यत इति।

(६. **द्विकर्मकाः**) सत्येवोत्करोतित्वे न्यगस्तयो न्यग्भवतयश्च त एव द्विकर्मकाः। तेषु–

पूर्वे अपरिस्पन्दा यथा– लिङ्गं लिङ्गिनमवगमयति ज्ञातारं, जयति शतमश्वानश्वसेनमिति।

उत्तरे सपरिस्पन्दा यथा–गां दोग्धि पयः, वृक्षमपचिनोति फलानीति। एवमेते षट् द्वियोगविकल्पाः। परं त्रियोगविकल्पाः षड्भवन्ति।

(७. **प्रसिद्धकर्तृकाः**) तत्रोदस्तय उद्भवतयो वा प्रसिद्धकर्तृकाः। तेषु–

पूर्वे अपरिस्पन्दा यथा– दहतीत्युक्ते वह्निरिति गम्यते।

उत्तरे सपरिस्पन्दा यथा– कूजतीत्युक्ते (पिक इति गम्यते), (हेषत इत्युक्ते) अश्व इति गम्यत इति।

(८. **भावकर्तृकाः**) न्यग्भवतिकरोतयो न्यगस्तिकरोतयो वा भावकर्तृकाः। तेषु–

पूर्वे अपरिस्पन्दा यथा–चोरस्य रुजति, चोरस्यामयति, चोरं ज्वरयति, चोरं संतापयतीति।

उत्तरे सपरिस्पन्दा यथा– भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यादिति।

(९. **कर्मकर्तृकाः**) उदस्तिन्यक्करोतय उद्भवतिन्यक्करोतयो वा कर्मकर्तृकाः। तेषु–

पूर्वे अपरिस्पन्दा यथा– दुग्धे गौस्स्वयमेव, प्रस्नुते गौस्स्वयमेव, भूषयते कन्या स्वयमेवेति।

उत्तरे सपरिस्पन्दा यथा–अवकिरते हस्ती स्वयमेव, नमते दण्डः स्वयमेव, उच्छ्रयते दण्डस्स्वयमेव, आरोहयते हस्ती स्वयमेवेति।

(**१०. कर्तृस्थक्रियाः**) उदस्तिकरोतयः उद्भवतिकरोतयो वा कर्तृस्थक्रियाः। तेषु—

पूर्वे अपरिस्पन्दा यथा—अर्हति पूजां, जानाति वर्णं, पश्यति रूपं, शृणोति शब्दमिति।

उत्तरे सपरिस्पन्दा यथा— गच्छति ग्रामम्, आरोहयत्यश्वम् इति।

(**११. कर्मस्थक्रियाः**) न्यग्भवत्युत्करोतयो न्यगस्त्युत्करोतयो वा कर्मस्थक्रियाः। तेषु—

पूर्वे अपरिस्पन्दा यथा— दुनोति शत्रुं, धिनोति मित्रं, मदयति सुहृदं, सुखयति सखायमिति।

उत्तरे सपरिस्पन्दा यथा— पचत्योदनं, भिनत्ति कुसूलं, संक्ष्णुते शस्त्रं, तक्ष्णोति यूपमिति।

(**१२. उभयस्थक्रियाः**) न्यग्भवत्युदस्तिकरोतयो न्यगस्त्युद्भवतिकरोतयो वा उभयस्थक्रियाः। तेषु—

पूर्वे अपरिस्पन्दा यथा— लभते पूजां, प्राप्नोति धर्मम् .........।

उत्तरे सपरिस्पन्दा यथा— भुङ्क्त ओदनम्, अधीते स्वाध्यायं, तप्यते तपः, साधयति स्वर्गमिति।

ननु च भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यादिति नैतावस्तिभवत्यर्थौ, अपि तु साक्षादस्तिभवती। तौ चानुपहितक्रियाभिधायकाविति नोपाधी भवितुमर्हतः। उच्यते— 'अस भुवि', 'भू सत्तायाम्' इति धातुपाठादनु—प्रयोगवर्जमार्धधातुकेऽस्तेर्भूविधानात् सङ्कर एवेति विज्ञायते। एवमपि करोत्यर्थानुप्रवेशो दुरुपपादः। सोऽपि कर्तृत्वान्यथानुपपत्तेरुपपत्स्यते।

ननु च भवति पक्ष्यति, भवत्यपाक्षीदित्ययं लट्प्रयोग एव। अस्ति गच्छामो वयमिति च अस्तिप्रयोगोऽपि भावकर्तृकेषु दृश्यते।

नैवम्; नास्माभिरस्तिभवति भावकर्तृकावेवोच्येते, अपि तु अस्तिभवति—कर्तरिऽस्त्यादयः पचत्यादयश्च। ते हि रुजत्यादिवदुपाधिपरा अपि अस्तौ कर्तारो भवन्ति। एतावाँस्तु विशेषः, रुजादीनां कर्तृत्वं तत्परेणैव लकारेणोच्यते, पचादीनां च भवत्यस्तिपरेणेति।

**(कालोपाधिः —१२)**

यथा च धात्वर्थः क्रियोपाधिरेवं कालोऽपि। यदुक्तम्—

**क्रियोपाधिश्च सन् भूतभविष्यद्वर्तमानताः ।**[१]
**परापरविभागार्थास्स शक्तीः प्रतिपद्यते ॥१॥**

---

१. वाक्यपदीये ३.९.३७ इति करिकाया पूर्वार्द्धम् ।

स भूतादिभेदा द्वादशधा। तद्यथा—

**भूतः, भूतानद्यतनः, भविष्यत्, भविष्यदनद्यतनः, वर्तमानः, वर्तमानानद्यतनः, परोक्षः, अतिपन्नः, अव्यक्तः, सङ्कीर्णः, प्रकीर्णः, विप्रकीर्ण** इति।

**(१. भूतः —६)** लुङादिविषयोऽप्यतीतमात्रं **भूतः**।

स षोढा— भूतः, प्रकर्षभूतः, भूतानद्यतनः, अभिमानाद्यतनः, प्रबन्धाद्यतनः, सामीप्याद्यतन इति।

तेष्वनिर्धारितविशेषो **भूतः**, यथा— अकार्षीत्, निषसाद, उवास, शुश्राव, अपक्त, पक्तवानिति।

शब्दान्तरावगतप्रकर्षादनवेक्षितानद्यतनपरोक्षादिप्रत्ययः **प्रकर्षभूतः**, यथा— अवात्सुरिह पुरा छात्राः।

विवक्षितान्यावधिः **भूतानद्यतनः**, यथा— अगमाम घोषात्।

रात्रिशेषे जागरणसंततौ **अभिमानानद्यतनः**, यथा अमुत्रावात्सम्, सकलां रात्रिं जागरितः रात्रेरप्रभातत्वादद्यतनमिमं कालं मन्यते।

अविवक्षितक्रियाविरामः **प्रबन्धाद्यतनः**, यथा यावज्जीवं भृशमन्नमदात्। विवक्षितक्रियानन्तर्यः **सामीप्याद्यतनः**, यथा— येयं गता पौर्णमासी अस्यामुपाध्यायोऽग्नीनाधित। अत्रानन्तरयोः 'नानद्यतनवत् क्रियाप्रबन्ध—सामीप्ययोः' इति स्मर्यते।

**(२. भूतानद्यतनः —६)** एवं लङ्निमित्तमविद्यमानाद्यतनो **भूतानद्यतनः**।

स षोढा— सामान्यानद्यतनः, विशेषानद्यतनः, अभिज्ञानद्यतनः, प्रसिद्ध्यपरोक्षः, प्रश्नापरोक्षः, ह—शश्वदपरोक्ष इति। तेषु—

अविवक्षितपरोक्षत्वादिः **सामान्यानद्यतनः**, यथा— अकरोत्, अशृणोत्, न्यषीदत्, अमुत्रावसम्, 'आसीदिदं तमोभूतम्', रामो वनमगच्छदिति।

पदान्तरावगतपरोक्षत्वादिविशेषो **विशेषानद्यतनः**, यथा— अवसन्निह पुरा छात्राः।

'न यदि' इत्यभिज्ञावचनं लृडपवादो**ऽभिज्ञानद्यतनः**, यथा— स्मरसि देवदत्त काश्मीरेषु यदवसाम।

लोकप्रसिद्धेरारोपितापरोक्षाभिमानः **प्रसिद्ध्यपरोक्षः**, यथा— अजयज्जयन्तो हूणान्।

प्रश्नोपभुक्तपरोक्षत्वं **प्रश्नापरोक्षः**, यथा— किमगच्छद्देवदत्तः।

ह—शश्वदर्थोपक्षीणपरोक्षत्वो **ह—शश्वदपरोक्षः**, यथा— इति ह अकरोत्, शश्वदकरोदिति।

(३. **भविष्यत्** –६) अनागतमात्रं लृडादिविशेषो **भविष्यत्** ।

स षोढा– सामान्यभविष्यत्, विशेषभविष्यत्, लिप्साभविष्यत्, प्रबन्धाद्यतनः, सामीप्याद्यतनः प्रविभागाद्यतन इति। तेषु –

अनिर्धारितानद्यतनादिः **सामान्यभविष्यत्**, यथा– करिष्यति, बलिरिन्द्रो भविष्यति, कदा गमिष्यसि, एष गमिष्यामि, पक्ष्यन् व्रजति, पाचका व्रजतीति।

निर्धारिताद्यत्वविशेषो **विशेषभविष्यत्**, यथा– अद्य गमिष्यामीति।

लिप्सोपाधिको **लिप्साभविष्यत्**, यथा– यो मे भिक्षां दास्यति स स्वर्गं लोकं यास्यतीति।

अविवक्षितक्रियाविरामः **प्रबन्धाद्यतनः**, यथा– यावज्जीवं भृशमन्नं दास्यतीति।

विवक्षितक्रियानन्तर्यस्**सामीप्याद्यतनः**, यथा– येयमागामिनी पौर्णमासी अस्यामुपाध्यायोऽग्नीनाधास्यतीति।

'भविष्यति मर्यादावचनेऽवरस्मिन्', 'कालविभागे चानहोरात्राणाम्', 'परस्मिन्विभाषा' इति **प्रविभागानद्यतनः**, यथा– योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्रौदनं भोक्ष्यामहे, योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहा–यण्यास्तत्र युक्ता अध्येष्यामहे, एवं परस्मिन्विभाषेत्यपि द्रष्टव्यमिति।

(४. **भविष्यदनद्यतनः** –६)भविष्यन्नेवाविद्यमानाद्यतनो लुण्णिमित्तं **भविष्यदनद्यतनः।**

स षोढा– सामान्यानद्यतनः, लिप्सानद्यतनः, परिदेवनानद्यतनः, परावरविभागीयः, परप्रविभागीयः, (अध्वविभाषीय) इति। तेषु–

अनिर्धारितक्रियाप्रबन्धः **सामान्यानद्यतनः**, यथा– कर्ता कर्तारौ कर्तारः, कारिता कारितारौ कारितार इति।

शब्दान्तरावगतविशेषो **विशेषानद्यतनः**, यथा– त्वं पक्ता।

लिप्सोपाधिको **लिप्सानद्यतनो** यथा यो मे भिक्षां दाता स स्वर्गं लोकं गन्ता।

परिदेवनोपाधिकः **परिदेवनानद्यतनः**, यथा– इयं नु कदा गन्ता यैवं पादौ निदधाति, अयं नु कदाध्येता य एवमनभियुक्तः।

'कालविभागे चानहोरात्राणाम्' इत्यहोरात्रविषयः **परापरविभागीयः**, यथा– योऽयमागामी मासस्तस्य यः परः पञ्चदशरात्रस्तत्रौदनं भोक्तास्महे, योऽयमागामी त्रिंशद्रात्रस्तस्य योऽपरः पक्षस्तत्र युक्ता अध्येतास्महे।

परस्मिन्विभाषेत्यनहोरात्रकालाध्वमर्यादाविषयः **परप्रविभागीयः**, यथा– योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र पाटलिपुत्रं गन्तास्मः।

स एव अध्वविभाषाविषयोऽ**ध्वविभाषीयः**, यथा– योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्याः तत्र सक्तून् पातास्म इति।

**(५. वर्तमानः –६)** अवाप्ताप्रच्युतक्रियाविषयो लडादिनिमित्तं **वर्तमानः।**

(स) षोढा– सामान्यवर्तमानः, विशेषवर्तमानः, अविरामवर्तमानः, प्रवृत्तोपरतः, वृत्ताविरतः, नित्य(प्र)वृत्त इति। तेषु–

अनपेक्षितविरामादिविशेषस्**सामान्य**वर्तमानः, यथा– अस्ति, भवत्, कुर्वाणः, पच्यमानः, पवमानः, कवचमुद्वहमान इति।

परोक्षादिविषयो **विशेषवर्तमानः**, यथा– अत्र वटे यक्षः प्रतिवसति।

विवक्षितक्रियाप्रबन्धो**ऽविरामवर्तमानः**, यथा– प्रासादं करोति।

विवक्षितप्रवृत्तिविरामः **प्रवृत्तोपरतः**, यथा– जीवन्तं मारयति।

अविवक्षितप्रवृत्तिविरामो **वृत्ताविरतः**, यथा– इह कुमाराः क्रीडन्ति।

अविच्छिन्नप्रवृत्तिसंतानो **नित्यप्रवृत्तः**, यथा– तिष्ठति पर्वत इति।

**(६. वर्तमानानद्यतनः–६)** अनागतातिक्रान्तक्रियास्वपि पदान्तरप्रयोगापादितवर्तमानत्वाल्लटो निमित्तमविद्यमानानद्यतनो **वर्तमानानद्यतनः**।

स षोढा– लिप्साविषयः, आशंसाविषय, पुरायोगीयः, स्मयोगीयः, उभययोगीयः, अनुभययोगीय इति। तेषु–

**लिप्साविषयो** यथा– यो मे भिक्षां ददाति स स्वर्गं लोकं याति, को मे भिक्षां ददाति, कस्स्वर्गं लोकं याति; एवं कतरो मे भिक्षां ददाति, कतमो मे भिक्षां ददाति।

**आशंसाविषयो** यथा– देवश्चेद् वर्षति संपद्यन्ते शालयः।

**पुरायोगीयो** यथा– वसन्तीह पुरा छात्राः।

**स्म–योगीयो** यथा– इति स्मोपाध्यायः कथयति।

**उभययोगीयो** यथा– नडेन स्म पुराधीयते।

**अनुभययोगीयो** यथा– भाषते राघवस्तदेति।

(७. **परोक्षः** –६) भूत एव लिड्विषयोऽक्षाणां परः **परोक्षः**।

स षोढा– स्वपरोक्षः, परपरोक्षः, स्वपरपरोक्षः, मनःपरोक्षः, [१]प्रमाणपरोक्षः, निर्णयपरोक्ष इति। तेषु–

**स्वापेक्षया** परोक्षो यथा– चकार, चकार(जहार), चकासाञ्चकार, ऊषुरिह पुरा छात्रा इति।

परापेक्षया **परपरोक्षो** यथा कः कलिङ्गान् विवेद, को ब्राह्मणान् ददर्श, नाहं कलिङ्गान् जगामेति।

उभयापेक्षया **स्वपरपरोक्षो** यथा–जघान कंसं वासुदेवः, ददाह त्रिपुरं हरः, ममाथ वृत्रं मघवेति।

स्मरणापेक्षया **मनःपरोक्षो** यथा–इति चकार, शश्वच्चकार, इति ह शश्वच्चकारेति।[२]

'प्रश्ने चासन्नकाल' (३.२.११७) इति **निर्णयपरोक्षो** यथा–

**किं सा जगाम तत्पार्श्वं किमुवाच यथोचितम् ।**
**स किं शुश्राव तद्वाक्यमिति पृच्छामि किं सखि! ॥२॥** इति।

(८. **अतिपन्नः** –६)

भविष्यद्भूतवर्तमानक्रियातिपत्तिविषयो लृङ्निमित्तम(प्र)तिपन्नः (मभा.३.३.१३९)।

स षोढा– भविष्यद्भूतवर्तमानक्रियातिपत्तीनां शुद्धमिश्रभेदात्।

तत्र केनचिल्लिङ्गेन **भविष्यन्तीं शुद्धामेव क्रियातिपत्तिमवगम्य** प्रयुङ्क्ते, यथा– अपि वज्राहतेनापतिष्यत्, कथं नाम तत्रभवान् वृषलमयाजयिष्यत्, दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत्। यथा च–

**यदि सद्भिः प्रदिष्टेन पथा समचरिष्यथ ।**
**न ते समचरिष्यन्न चरणान्ते विभूतयः ॥३॥**

एवं मिश्रामपि यथा–(मवीच. १.२७)

**रामाय पुण्यमहसे सदृशाय सीता दत्तैव दाशरथिचन्द्रमसेऽभविष्यत् ।**
**आरोपणेन पणमप्रतिकार्यमार्यस्त्रैयम्बकस्य धनुषो यदि नाऽकरिष्यत् ॥४॥**

केनचिल्लिङ्गेनानीतां क्रियातिपत्तिं शुद्धामेवावगम्य प्रयुङ्क्ते, यथा– न श्रद्दधे यत् तत्रभवान् वृषलमयाजयष्यित्, न संभावयामि तत्र नामाभोक्ष्यत भवान्। यथा च– (किराता. १३.४९)

---

१–२. उदाहृतेषु 'जो. रा. चे.' इत्येषु विस्मृतायास्मै प्रमाणपरोक्षाय 'भुक्ता मया हि गिरय' इति (कम.) इति भैरवानन्दोक्तिरुपयुज्येत ।

**दुर्वचं तदथ मा स्म भून्मृगस्त्वय्यसौ यदकरिष्यदोजसा ।**
**नैनमाशु यदि वाहिनीपतिः प्रत्यपत्स्यत सितेन पत्रिणा ॥५॥**

एवं मिश्रामपि– (रघु. ७.१४)

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥६॥**

केनचित् प्रमाणेन **वर्तमानामपि क्रियातिपत्तिं** शुद्धामेवावगम्य प्रयुङ्क्ते, यथा उताकरिष्यत्, अप्यकरिष्यत्। यथा च –

**गामधास्यत् कथं नागो मृणालमृदुभिः फणैः ।**
**आरसातलमूलात् त्वमवालम्बिष्यथा न चेत् ॥७॥** (कुसं. ६.६८)

एवं मिश्रामपि यथा–

**अमङ्क्ष्यद् वसुधा तोये च्युतशैलेन्द्रबन्धना ।**
**नारायण इव श्रीमान् यदि त्वं नाधरिष्यथाः ॥८॥** इति।

**(९. अव्यक्तः –६)** तिरोभूतभूतभविष्यदादिविशेषोऽ**व्यक्तः**। षोढा– **लिङ्विषयः, लोड्विषयः, लड्विषयः, लृड्विषयः, तव्यादिविषयः, तुमुनादिविषयश्चेति**। तेषु–

**लिङ्विषयो** यथा कटं कुर्यात्, चिरं जीव्यात्, कथं तत्रभवान् वृषलं याजयेत्, अपि शिरसा पर्वतं भिन्द्यात्, संभावयामि भुञ्जीत भवान्, कालो यद्भुञ्जीत भवानिति।

**लोड्विषयो** यथा–उपाध्यायश्चेदागच्छति आगन्ता आगमिष्यति वा अथ त्वं छन्दोऽधीष्व। ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगन्ता आगमिष्यति वा अथ त्वं व्याकरणमधीष्व, कुरु कटं प्राप्तस्ते कालः अलावीत् लविष्यसि वेति।

**लड्विषयो** यथा– कदा भुङ्क्ते कर्हि भुङ्क्ते, अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान् वृषलं याजयति, कच्चिज्जीवति मे माता, कं वा विभूतयो न मदयन्तीति।

**लृड्विषयो** यथा– अन्धो नाम पर्वतमारोक्ष्यति, उत दण्डः पतिष्यति, कतरो नाम वृषलः यं तत्रभवान् वृषलं याजयिष्यति, न मर्षयामि न श्रद्दधे नावकल्पयामि यत् तत्रभवान् वृषलं याजयिष्यति, किं किल तत्रभवान् वृषलं याजयिष्यति (इति) 'प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो' (कुसं.२.३१), इति।

**तव्यादिविषयो** यथा– स्वाध्यायोऽध्येतव्यः, ब्राह्मणो न हन्तव्यः, पितरो वन्दनीयाः, गुरवो माननीयाः, कृत्यं न भावयेत्, कार्यं न कुर्यादिति।

**तुमुनादिविषयो** यथा—भोक्तुमैच्छत् इच्छति एषिष्यति वा, भुक्त्वा अव्राजीत् व्रजति व्रजिष्यति वा, अधीत्यास्नासीत् स्नाति स्नास्यति वा, चोरङ्कारमाक्रुक्षत् आक्रोशति आक्रोक्ष्यति वा, पायंपायमासिष्ट आस्ते आसिष्यते वा, रैपोषमपुषत् पुष्यति पोक्ष्यति वेति।

**(१०.सङ्कीर्णः—६)** कालान्तरसम्पृक्तस्सङ्कीर्णः ; सङ्करश्चानेकाकारत्वादियत्तया न शक्यते निर्देष्टुमिति भङ्गनिर्वाहार्थं तु षोढैवोदाह्रियते। स—

**भूतभूतानद्यतनयोः** यथा— अन्येभ्यो वा अभुङ्क्ष्महि।

**भविष्यद्भविष्यदनद्यतनयोः** यथा— अद्य श्वो वा गमिष्यति।

**भूतभविष्यदनद्यतनयोः** यथा— अग्निष्टोमयाजी अस्य पुत्रो जनिता। (३.४.१)

**भूतानद्यतनभविष्यतोः** यथा— भाविकृत्यमासीत्।

**वर्तमानपरोक्षयोः** यथा— (कुसं. ३.७२)

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥९॥**

**भविष्यद्वर्तमानपरोक्षाणां** यथा— (माघ. ३.७४)

**साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।**
**तान्येकदेशान्निभृतं पयोधेस्सोऽम्भांसि मेघान् पिबतो ददर्श॥१०॥** इति।

**(११. प्रकीर्णः)** वर्तमानस्य भविष्यद्भूतयोरनुप्रवेशे **प्रकीर्णः**। स

**भविष्यदनुप्रवेशे आशंसायां** यथा— उपाध्यायश्चेदागच्छति युक्ता व्याकरणमधीमहे।

**लिप्सायां** यथा— कोपयतो भोजयति (कं भवन्तो भोजयन्ति)।

**यावत्पुरायोगे** यथा— यावद् भुङ्क्ते, पुरा व्रजति।

**सामीप्ये** यथा— कदा ग्रामं गमिष्यसि, एष गच्छामि, गच्छन्तमेव मां विद्धि। एवं

**भूतानुप्रवेशेऽपि**; भूतसामीप्ये यथा— अयि भोः कटमकार्षीः, कटं देवदत्त ननु करोमि, अयं नु करोमीति।

**(१२. विप्रकीर्णः)** भविष्यतो भूतानुप्रवेशे भूतस्य भविष्यदनुप्रवेशो **विप्रकीर्णः**। स

**भविष्यतो भूतानुप्रवेशे** यथा— स्मरसि देवदत्त काश्मीरेषु वत्स्यामः, अभिजानासि कलिङ्गेषु वत्स्यामः तत्रौदनं भोक्ष्यामहे, स्मरसि यत् काश्मीरेषु वत्स्यामः यत् तत्रौदनं भोक्ष्यामह इति। यथा वा—(माघ. १.६८)

**स्मरत्यदो दाशरथिर्भवन् भवानमुं वनान्ताद् वनितापहारिणम्।**
**पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ।।११।।** इति।

**भूतस्य भविष्यदनुप्रवेशे** यथा– मास्म कार्षीः, मास्म करोः (मभा. ३.३.१७६), देवश्चेद् वृष्टस्सम्पन्नाः शालयः इति (मभा. ३.३.१३३)।

यथा वा–

**अपकर्ताऽहमस्मीति मा ते मनसि भूद् भयम् ।।१२।।**(काआ.२.२९३)
**मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ।।१३।।**(रामा.२.५३.२१)
**जातश्चायं मुखेन्दुस्ते भ्रुकुटीप्रणयी पुनः ।**
**गतं च वसुदेवस्य कुलं नामावशेषताम् ।।१४।।** (हव.राघव:) इति।

अथ कथं नित्यप्रवृत्तस्य वर्तमानप्राप्तावपि तस्थुः स्थास्यन्ति गिरयः, मार्गे कूपोऽभूत्, कूपो भविष्यतीति भूतभविष्यत्कालविषयः प्रयोगो भवति।

उच्यते हेहयादिवंशेषु ये राजानो बभूवुः, तेषां याः क्रियाः तासामतीतत्वात् तत्सम्बन्धविवक्षायां भूतकालविषयं प्रत्ययं प्रयुङ्क्ते, हेहयराज्येऽपि पर्वता इत्थमेव तस्थुरिति। तथा आगामिमन्वन्तरेषु ये राजानो भविष्यन्ति तेषां याः क्रियास्तासां भविष्यत्वात् तत्सम्बन्धविवक्षायां भविष्यत्कालविषयं प्रत्ययं प्रयुङ्क्ते ; यदा बलिरिन्द्रो भविष्यति तदापीत्थमेव पर्वताः स्थास्यन्तीति।

एवं कूपस्यापि भूतभविष्यद्दर्शनक्रियासम्बन्धाद् अभूद् भविष्यतीति क्रियाभिसम्बन्धो न विकल्प्यत इति।।

**(प्रकृत्यर्थोपाधिः = उपग्रहः)**

**उपग्रहो**ऽपि प्रकृत्यर्थोपाधिरेव।

कः पुनरसौ?

**परस्मैपदात्मनेपदोभयपदिनामात्मनेपदपरस्मैपदयोगनिमित्तमर्थविशेषः**। तदुक्तम्–

**य आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते ।**
**परस्मैपदतो वापि मन्यन्ते तमुपग्रहम् ।।१५।।** (वाप. ३.१२.१)

यथा– नाथति नाथते, शपति शपते, आह्वयति आह्वयते, प्रतिजानाति प्रतिजानीत इति। अत्र 'आशिषि नाथः' {३.१.२१ (७)}, 'शपः शपथे' 'स्पर्धायामाङः' (१.३.३०–३१), 'सम्प्रतिभ्यामनाध्याने' ह्वः (१.३.४४, ४६) ज्ञः इति आत्मनेपदम्; शेषे परस्मैपदमित्यर्थभेदाः। एवं –

मुण्डो भीषयते, कुञ्चिकयैनं भाययति, जटिलो विस्मापयते, मत्यैनं विस्मापयति। श्येनो वर्तिकामुल्लापयते, कस्त्वामुल्लापयति, संप्रवदन्ते ग्राग्या:, संप्रवदन्ति शकुनय इति। अत्र 'भीस्म्योर्हेतुभये', 'लिय: सम्माननशालिनी– करणयोश्च', 'व्यक्तवाचां समुच्चारणे' वद: (इति) आत्मनेपदम्, शेषे परस्मैपदमित्यर्थभेद:। एवमन्यदप्यूहनीयम्।

ननु च 'य आत्मनेपदाद् भेद: क्वचिदर्थस्य गम्यत' इति, अत्र कवचिद्ग्रहणं किमर्थम्?

उच्यते परस्मैपदात्मनेपदोभयपदिनामात्मनेपदपरस्मैपदोभयपदयोग: षट्प्रकारो भवति– **'प्रकृतिनिमित्त:, प्रकृत्यर्थनिमित्त:, प्रत्ययनिमित्त:, प्रत्ययार्थनिमित्त:, उपस्कारनिमित्त:, उपस्कारार्थनिमित्त**श्च। तत्रार्थनिमित्तेषु यथायोगमर्थावगतिहेतुत्वं विद्यते। शेषेषु तु न विद्यते इति 'क्वचिद्–'ग्रहणेन ज्ञापयति। तत्र–

**(आत्मनेपदयोगे)**

**आत्मनेपदयोग: प्रकृतिनिमित्तो** यथा–'अनुदात्तङित आत्मनेपदम्' (१.३.१२); 'सन:' 'स्मृदृशिभ्याम्', एधते, च्यवते, सुस्मूर्षते, दिदृक्षत इति।

**प्रकृत्यर्थनिमित्तो** यथा– 'प्रकाशनस्थेयाख्ययोश्च' (१.३.२३), 'भुजोऽनवने' (१.३.६६), 'गृधिवञ्च्यो: प्रलम्भने' (१.३.६९), 'कर्मव्यतीहारे' (१.३.१४) तिष्ठते, भुङ्क्ते, गन्धयते, व्यतिलुनीत इति।

**प्रत्ययनिमित्तो** यथा–'शदेश्शित:' (१.३.६०), 'म्रियतेर्लुङ्लिङोश्च' (१.३.६१), शीयते, म्रियते, अमृत, मृषीष्टेति।

**प्रत्ययार्थनिमित्तो** यथा– 'भावकर्मणोरात्मनेपदम्' (१.३.१३) कर्मकर्तरि फलवत्कर्तरि च, आस्यते, पच्यते, विपच्यते, पचत इति।

**उपस्कारनिमित्तो** यथा– 'विपराभ्यां जे:' (१.३.१९), 'समवप्रविभ्य: स्थ:'(१.३.२२), 'समस्तृतीयायुक्तात्' (१.३.५४), 'मिथ्योपपदात् त्कृञोऽभ्यासे' (१.३.७१), विजयते, पराजयते, संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते, अश्वेन सञ्चरते, पदं मिथ्या कारयते।

**उपस्कारार्थनिमित्तो** यथा– 'वे: पादविहरणे' (१.३.४१), 'आङो ज्योतिरुद्गमने', 'उपान्मन्त्रकरणे' (१.३.२५), 'दाणश्च सा चेच्चतुर्थ्यर्थे' (१.३.५५), विक्रमते राजा, आक्रमन्ते ज्योतीषि, सावित्र्योपतिष्ठते, दास्या संप्रयच्छत इति।

**(परस्मैपदयोगे)**

**प्रकृतिनिमित्तः परस्मैपदयोगे** यथा– 'शेषात्कर्तरि परस्मैपदम्' (१.३.७८) भवति, व्यतिहसन्ति, व्यतिहरन्ति परस्परस्य व्यतिलुनन्ति।*

**प्रत्ययार्थनिमित्तो** यथा– 'कुषिरजोः प्राचां श्यन् परस्मैपदं च' (३.१.९०) 'शेषात् कर्तरि परस्मैपदम्'। रज्यति वस्त्रं स्वयमेव, कुष्यति पादस्स्वयमेव, रजति वस्त्रम्, कुष्णाति पादमिति।

**उपस्कारनिमित्तो** यथा– 'अनुपराभ्यां कृञः' (१.३.७९), 'इतरेतरान्योन्योप–पदाच्च' (१.३.१६), अनुकरोति, पराकरोति, इतरेतरस्य व्यतिलुनन्ति, अन्योन्यस्य व्यतिलुनन्तीति।

**उपस्कारार्थनिमित्तो** यथा– 'समोऽकूजने'(१.३.२१वा.१) 'आङो दोऽनास्य–विहरणे' (१.३.२०), 'उदोऽनूर्ध्वकर्मणि' (१.३.२४), प्रादेरजाद्यन्तराद्युजेरयज्ञापात्रेषु, संक्रीडन्ति शकटानि, व्याघ्रो मुखं व्याददाति, आसनादुत्तिष्ठति, यज्ञपात्राणि प्रयुनक्तीति।

**(उभयपदप्रयोगे)**

**उभयपदप्रयोगे प्रकृतिनिमित्तो** यथा– 'वा क्यषः' (१.३.९०), अप्रादेर्वा, लोहितायति लोहितायते, क्रामति क्रमत इति।

**प्रकृत्यर्थनिमित्तो** यथा–'विभाषाकर्मकात्' (१.३.८५), 'विभाषा विप्रलापे' (१.३.५०), उपरमति उपरमते, संप्रवदन्ति मौहूर्ताः, संप्रवदन्ते मौहूर्ता इति।

**प्रत्ययनिमित्तो** यथा–'द्युद्भ्यो लुङि' (१.३.९१), 'वृद्भ्यः स्यसनोः' (१.३.९२), अद्युतत् अद्योतिष्ट, वर्त्स्यति, वर्तिष्यत इति।

**प्रत्ययार्थनिमित्तो** यथा– रज्यति रज्यते, कुष्यति कुष्यते, 'कुषिरजोः प्राचां श्यन्', 'परस्मैपदं च कर्मकर्तरि' इति।

**उपस्कारनिमित्तो** यथा– 'उपसर्गादस्यत्यूह्योर्वा' (१.३.२९ वा. ३), उदस्यति उदस्यते, समूहति समूहत इति।

**उपस्कारार्थनिमित्तो** यथा 'वा लिप्सायाम्' (१.३.२५ वा. २), 'विभाषोपपदेन प्रतीयमाने' (१.३.७७); भिक्षुको ब्राह्मणकुलमुपतिष्ठति उपतिष्ठते, ब्राह्मणस्स्वं यज्ञं यजति, यजत इति।

---

* परस्मैपदयोगे प्रकृत्यर्थनिमित्तः प्रत्ययनिमित्तश्चेति भेदाविमौ न स्पृष्टौ ।

एवमन्येऽपि **हेतुलक्षणाभीक्ष्ण्यभृशार्थगर्हाकौटिल्यसाकल्यपूर्वकालतादर्थ्यादयः प्रकृत्यर्थोपाधिविशेषा** वेदितव्याः, यथा– अधीयानो वसति, पचन्नास्ते, पुनः पुनः पठति पापठ्यते, पुनः पुनः पचति पापच्यते, गर्हितं दहति दन्दह्यते, कुटिलं क्रामति चङ्क्रम्यते, कन्यादर्शं वरयति, भुक्त्वा व्रजति, भोक्तुं व्रजति इति। एवमेते धातुरूपायाः प्रकृतेरर्थोपाधयः।।

**(प्रत्ययार्थोपाधिः)**

**प्रत्ययरूपायाः** स्वप्रत्ययार्थोपाधय **एवोपाधयो** भवन्ति।

**प्रातिपदिकरूपायास्तु** स्वार्थद्रव्यलिङ्गसङ्ख्यापरिमाणकारकसंबन्धसंबोधनसहार्थ–तादर्थ्यहेतुलक्षणादय **उपाधयो** विद्यन्ते। ते तु प्रत्ययार्थोपस्कारार्थप्रातिपदिका–र्थेष्वनन्तरमेव वर्णयिष्यन्त इति नेह प्रतन्यन्ते।

अथ **प्रत्ययार्थोपाधिः** तत्र कारकोपाधिषु पुरुष उक्तः; सङ्ख्या त्वग्रतोऽभिधास्यते। अपरेऽपि चास्य विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनप्रैषातिसर्गप्राप्तकालशक्त्यर्ह–गर्हादयः **उपाधयो** भवन्ति। तद्यथा– अग्निहोत्रं जुहुयात्, इह भवान् भुञ्जीत, इह भवानानासीत्, भवान्माणवकमध्यापयेत्, किं नु खलु व्याकरणमधीयीय इतः उत छन्दः, लभेयाहं भिक्षाम्; आशंसनमपि प्रार्थनमेव; चिरं जीव्याः, ग्रामं गच्छ, गच्छानुज्ञातोऽसि, कुरु कटं प्राप्तस्ते कालः कटकरणे, भवान् खलु शत्रुं हन्यात्, तत्रभवान् खलु भारं वहेत्, कथं नाम तत्रभवान् वृषलं याजयेदिति।

एवमन्येऽपि तच्छीलतद्धर्मतत्साधुकारिहेत्वानुलोम्यशक्तिवयोवचनाकृच्छ्रानुद्यमन–शिल्पिलक्षणलिङ्गादयोऽवगन्तव्याः। यथा– वदिता जनापवादान्, मुण्डयितारः श्राविष्ठायनाः वधूमूढाम्, कन्यामलङ्करिष्णुः, यशस्करी विद्या, आज्ञाकरी भार्या, हस्तिघ्नो भटः, कवचहरः क्षत्रियकुमारः, धारयन्नुपनिषदम्, अंशहरस्सुतः, नर्तकी वेश्या, जायाघ्नस्तिलकः, व्यासस्य वचनं, पाणिनेरुक्तिः, कालिदासस्य प्रबन्ध इति।

**अथोभयोपाधिः।** सोऽपि संज्ञाजातिप्रभासपरिमाणद्यूताभ्रेषभाषाच्छन्दोमन्त्र–ब्राह्मणाशीरुत्क्रोशादिभेदादनन्तप्रकारः। तद्यथा 'क्तिच्क्तौ च संज्ञायाम्' (३.३.१७४), भद्रभूतिर्देवदत्त इति, हस्ता पुरोढा (हस्ती पुरुषः?) इति। 'द्वितीया ब्राह्मणे' (२.३.६०) गामस्य तदहस्सभायां दीव्येयुः, पष्ठौहीं दीव्यतीति ; आशिषि वुन्, जीवतात् जीवकः, नन्दतात् नन्दक इति। 'माङ्याक्रोशे' (३.२.१२६ वा.६), 'आक्रोशे नञ्यनिः' (३.३.११२),

**मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।**
**तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥१६॥** माघ.२.४५ इति।

एवमन्येऽप्यसूयासंमतिकोषकुत्सनभर्त्सनाबाधप्रकाराकृच्छ्रपर्यायार्हणोत्पत्ति– प्रभृतयोऽवगन्तव्याः। तेषु –

**असूया** यथा– माणवक ३ माणवक, अभिरूपक३ अभिरूपक, रिक्तं ते आभिरूप्यम्।
**संमतिः** यथा– माणवक ३ माणवक, अभिरूपक३ अभिरूपक शोभनः खल्वसि।
**कोपो** यथा– माणवक ३ माणवक, अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म।
**कुत्सनं** यथा– शक्तिके ३ शक्तिके, यष्टिके ३ यष्टिके रिक्ता ते शक्तिः।
**भर्त्सनं** यथा– चोर ३ चोर, वृषल ३ वृषल घातयिष्यामि त्वाम्।
**आबाधो** यथा– गतगता नष्टनष्टा प्रियाया गमनादिना ।
पीड्यमानः कश्चिदेवं प्रयुङ्क्ते ॥
**प्रकारो** यथा– पटुपटु, भीतभीत, परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं भवति।
**अकृच्छ्रं** यथा– सुखसुखेन ददाति, प्रियप्रियेण ददाति, अपीड्यमानो ददातीत्यर्थः।
**पर्यायादयो** यथा– भवतश्शायिका, अर्हति भवानिक्षुभक्षिकाम्, इक्षुभक्षिकां मे धारयसि, उदपादीक्षुभक्षिका इति।

सर्वोऽपि चायमुपाधिप्रपञ्चस्त्रिधैवाख्यायते **धर्म्युपाधिः, धर्मोपाधिः, प्रकीर्णोपाधिश्च।**

तत्र कृञः स्तम्बशकृद्भ्यां व्रीहिवत्सयोरिन्, स्तम्बकर्णयो रमिजपोः (३.२.१३) हस्तिसूचकयोरित्यादि (३.२.१३ वा.) **धर्म्युपाधिः** यथा–

**व्रीहिस्स्तम्बकरिः क्षेत्रे गृहे वत्सश्शकृत्करिः ।**
**जनः कर्णेजपो राज्ये मत्तस्स्तम्बेरमो वने ॥१७॥** (३.२.२४)

'प्रजने सर्तेः' अप् (३.३.७१), 'समुदोरजः पशुषु' (३.३.६९) **धर्मोपाधिः** यथा–

**समजस्स्याद् गवां गोभिरुक्ष्णामुदज उक्षभिः ।**
**भवत्यपसरे यस्यास्सैषा मे गोमतल्लिका ॥१८॥**

'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' (२.३.१७), 'षष्ठी चानादरे' (२.३.३८), अधिके भावलक्षणे इति **प्रकीर्णोपाधिः** यथा–

**मन्यते न तृणायापि (सर्वस)वं पश्यतोहरः ।**
**मिषत्सु लोकपालेषु हविः पिबति सोऽध्वरे ॥१९॥** (हव.)

## (६. प्रधानम् )

**तिङ्कृत्तद्धिताभिधेयप्रत्ययार्थः प्रधानः।**

स त्रिधा– **(१) स्वार्थः, (२) सम्बन्धी, (३) कारकं** चेति। तेषु –

**(१. स्वार्थः)**

**प्रकृत्यर्थ एव स्वार्थः।**

स त्रिधा **(१) धात्वर्थः, (२) प्रातिपदिकार्थः, (३) शेषश्च**। तत्र–

**(१) धात्वर्थस्त्रिविधः – भावः, क्रिया कारकं** च। तेषु–

**भावो** द्विधा– सत्त्वभूतोऽसत्त्वभूतश्च। तयोः

लिङ्गसङ्ख्यायोगी **सत्त्वभूतो** यथा–

**अवचनं वचनं प्रियसन्निधावनवलोकनमेव विलोकनम् ।**
**अवयवावरणं च यदंशुकव्यतिकरेण तदङ्गसमर्पणम् ॥ २० ॥**

अलिङ्गसङ्ख्योऽ**सत्त्वभूतो** यथा–

**अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।**
**कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ २१ ॥**(रघु.५.१०)

**क्रिया** द्विधा– शुद्धा सङ्कीर्णा च। तयोः–

कारकासंपृक्ता **शुद्धा** यथा–

**पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।**
**पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ २२ ॥** (माघ.१०.५३)

कर्तृत्वापन्नसाध्यरूपा **सङ्कीर्णा** यथा–

**कुचद्वन्द्वे तन्वि! द्विपकलभकुम्भस्थलतुलां**
**दधानेऽस्मिन् कस्या न युवतिषु चित्तस्य रुजति ।**
**तवोर्वोर्युग्मे वा हतरुचिरचामीकररुचौ**
**विकर्षत्यूष्माणं कमिह न युवानं ज्वरयति ॥ २३ ॥**

**कारकं** द्विधा– नियतधातुविषयमनियतधातुविषयं च।

तयोर्**नियतधातुविषयं** यथा– (किराता. ३.६६)

**तुषारलेशाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः ।**
**अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे ॥ २४ ॥**

**अनियतधातुविषयं** यथा— (शाकु. २.१२)

**अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम् ।**
**विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥२५॥**

(२) **प्रातिपदिकार्थः** त्रिविधः व्यक्तोऽव्यक्तस्संदिग्धश्च। तेषु —

प्रत्ययोत्पादानुत्पादयोरविशिष्टो **व्यक्तः**। स द्विधा तल्लिङ्गोऽन्यलिङ्गश्च। तयोः —

**तल्लिङ्गो** यथा— मन एव मानसम्, बन्धुरेव बान्धवः, यव एव यावक इति।

**अन्यलिङ्गो** यथा— उपाय एव औपयिकम्, देव एव देवता, देवतैव दैवतमिति।

**अव्यक्तो** द्विधा— उज्झितस्वरूपोऽनुज्झिस्वरूपश्च। तत्र

**उज्झितस्वरूपो** यथा—'वेश्शालच्छङ्कटचौ'(५.२.२८), 'संप्रोदश्च कटच्' (५.२.२९), 'उपाधिभ्यां त्यकन्नासन्नारूढयोः'(५.२.३४) इति यथा— विशालं, विशङ्कटं, प्रकटं, विकटम्, उपत्यका, अधित्यका इति। अत्रोपसर्गैरश्शृङ्गत्वादिस्वरूपमुज्झितम्।

**अनुज्झितस्वरूपो** यथा— 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' (५.३.९१), 'कासूगोणीभ्यां ष्टरच्'(५.३.९०), 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (५.४.११)। 'विनञ्भ्यां नानाञौ नसह'(५.२.२७)। यथा— वत्सतरः, उक्षतरः, नितराम्, अतीवतरां, विना, नानेति।

उपचरितार्थवृत्तिः **सन्दिग्धः**। स द्विधा— सङ्ख्यावानसङ्ख्यश्च। तयोः—

**तिङन्तार्थो** यथा— पचतितरां, पचतकीति (५.३.७४,७५)।

**सुबन्तार्थो** यथा— त्वयका, उच्चकैः (५.३.७४) इति।

(३) उक्तादन्यः **शेषः** स द्विधा प्रत्ययार्थः समासार्थश्च।

**प्रत्ययार्थो** द्विधा, कृदर्थस्तद्धितार्थश्च। तयोः

**कृदर्थो** यथा— व्यावक्रोशी, सांराविणमिति।

**तद्धितार्थो** यथा— आभिजित्यः(५.३.११८),कौञ्जायन्यः(५.३.११३) इति।

**समासार्थो** द्विधा— समासनिमित्तम्, समासनिमित्तश्च। तत्र

यमाश्रित्य 'तद्धितार्थे' इति समासो भवति (स) **समासनिमित्तम्।**

यथा— द्वैमातुरः, पञ्चकपाल इति।

सम्बन्धी यस्य तु समासान्त इति समासो निमित्तं स **समासनिमित्तः।**

यथा— देवराजः, प्रत्युरसमिति।

(२. सम्बन्धी)

**सम्बन्धी** त्रिधा– **(१) क्रिया, (२) द्रव्यं (३) गुणश्च** । तेषु –

(१) **क्रिया** त्रिधा– क्रियासम्बन्धिनी, कारकसम्बन्धिनी उभयसम्बन्धिनी च। तासु–

**क्रियासम्बन्धिनी** द्विधा– भिन्नरूपाऽभिन्नरूपा च।

**भिन्नरूपा** यथा– कर्तुमिच्छति चिकीर्षति, जुगुप्सितुमिच्छति जुगुप्सिषत' इति।

**अभिन्नरूपा** यथा– अत्यर्थं पचति पापच्यते, पुनः पुनः पठति पापठ्यत इति।

**कारकसम्बन्धिन्यपि** द्विधा, साकाङ्क्षा निराकाङ्क्षा च।

**साकाङ्क्षा** यथा– पटमिवाचरति पटीयति कम्बलम्, प्रासाद इवाचरति प्रासादीयति कुटी।

**निराकाङ्क्षा** यथा–पुत्रमिच्छति पुत्रीयति, पुच्छमुदस्यत्युत्पुच्छयत इति।

**उभयसम्बन्धिनी** द्विधा– क्रियाकारकसम्बन्धिनी कारकक्रियासम्बन्धिनी च। तयोः

**प्रथमा** यथा– पचन्तं प्रयुङ्क्ते पाचयति देवदत्तः, अधीयानं प्रयुङ्क्ते अध्यापयति कारीषोऽग्निः।

**द्वितीया** यथा– कंसवधमाचष्टे कंसं घातयति, आरात्रि विवासमाचष्टे रात्रिं विवासयति।

(२) **द्रव्यमपि** त्रिधा– विशेष्यं, विशेषणं, व्यवहितं च। तेषु–

**विशेष्यं** द्विधा– सापेक्षमनपेक्षं च।

**सापेक्षं** यथा– युष्माकमयं यौष्माको गौः, वत्सेभ्यो हितो वत्सीयो गोधुक्।

**अनपेक्षं** यथा– वसिष्ठस्यापत्यं वासिष्ठः, पृथिव्या ईश्वरः पार्थिवः।

**विशेषणं** द्विधा– धर्मिनिष्ठं धर्मनिष्ठं च।

**धर्मिनिष्ठं** यथा–गावोऽस्य सन्तीति गोमान्, प्रासादोऽस्य स्यात् प्रासादीयं दारु।

**धर्मनिष्ठं** यथा– अस्तीति मतिरस्यास्तिकः, नास्तीति मतिरस्य नास्तिक इति।

**व्यवहितं** द्विधा, विशेष्यरूपं विशेषणरूपं च।

**विशेष्यरूपं** यथा– द्विमयमुदश्विद् यवानाम्, द्विमया यवा उदश्वितः (काशिका ५.२.४७)।

**विशेषणरूपं** यथा– 'पञ्चमो मासोऽस्य जातस्य पञ्चमी बालकः (काशिका ५.२.१३०), षष्ठं रूपग्रन्थग्रहणमस्य षट्को वटुः।

(३) **गुणोऽपि** त्रिधा– आश्रितः प्रवृत्तिनिमित्तमुपाधिश्च। तेषु–

**आश्रितो** द्विधा– अभिन्नरूपो भिन्नरूपश्च। तयोः

**अभिन्नरूपो** यथा–भिक्षाणां समूहो भैक्षम्, काकोलूकस्य वैरं काकोलूकिका।

**भिन्नरूपो** यथा– ऋत्विजां कर्मार्त्विज्यम्, पीलूनां पाकः पीलुकण इति।

**प्रवृत्तिनिमित्तं** द्विधा– अनुरञ्जकमननुरञ्जकं च। तत्र

**अनुरञ्जकं** जात्यादि, यथा–ब्राह्मणस्य भावः ब्राह्मण्यम्, ऋजोर्भाव आर्जवमिति।

**अननुरञ्जकं** सम्बन्धादि, यथा–दण्डिनो भावो दण्डित्वम्, पाचकस्य भावः पाचकतेति।

प्रकृत्यर्थप्रत्ययार्थयोर्विशेषणम् **उपाधिः।** स द्विधा– व्यस्तस्समस्तश्च।

**व्यस्तः प्रकृत्यर्थे** यथा– शिवो देवताऽस्येति शैवं, लवणं पण्यमस्येति लावणिकः।

**प्रत्ययार्थे** यथा– गार्गिकया श्लाघते, काठिकयाऽधिक्षिपति। अत्र देवतापण्यश्लाघाधिक्षेपा उपाधयः।

**समस्तो** यथा– दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। अत्र दण्डशब्दात् 'तदस्याम्'(४.२.५७) इत्यधिकरणे प्रत्ययो विहितो दण्डस्थं प्रहरणत्वम्, अधिकरणत्वं च क्रीडात्वं प्रत्याययति। एवं ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम्। अत्र ह्योगोशब्दाद्विकारे प्रत्ययो विहितः, प्रकृत्यर्थोपाधिं दोहं प्रत्ययार्थो च संज्ञां प्रत्याययमिति।

## (३. कारकम्)

**कारकं** त्रिधा **(१) सक्रियं, (२) भिन्नक्रियम् (३) अभिन्नक्रियं** च। तेषु –

**(१) सक्रियं** त्रिधा– कर्तृरूपं, कर्मरूपम् अनुस्यूतं च।

**कर्तृरूपं** द्विधा, क्रियाविशेषस्थं कारकविशेषस्थं च। तयोः –

**क्रियाविशेषस्थं** यथा– सुस्नातं पृच्छति सौस्नातिकः, एवं सौखशायनिकः; प्रभूतमाह प्राभूतिकः; एवं माशब्दिकः, प्रतीपं वर्तते प्रातीपिकः, प्रतिकूलं चरति प्रातिकूलिक इति।

**कारकविशेषस्थं** यथा– व्याकरणं वेत्त्यधीते वा वैयाकरणः, समां समां विजायते समांसमीना, अक्षैर्दीव्यत्याक्षिकः, संतापाय प्रभवति सान्तापिकः, पितुरागतं पित्र्यम्, समानोदरे शयितः सोदर्य इति।

**कर्मरूपं** द्विधा, सजातीयस्थमसजातीयस्थं च।

**सजातीयस्थं** यथा– अयानयं नेयः अयानयीनः शारः, मासं भृतो मासिको भृत्यः, वर्षमधीष्टो वार्षिक उपाध्यायः, पक्षं लक्षः(?) पाक्षिको निबन्धः, षण्मासं क्रीतः षाण्मासिको दासः, संवत्सरं कृतस्सांवत्सरिकोऽभ्यास इति।

**असजातीयस्थं** यथा— वामदेवेन दृष्टं वामदेव्यं साम, लाक्षया रक्तं वस्त्रं लाक्षिकं, देवाय देयं दैव्यं हविः, तन्त्रादचिरापहृतः तन्त्रकः पटः, द्वारे नियुक्तो दौवारिकः पुमान्, चतुर्दश्यां दृश्यते चातुर्दश्यं रक्ष इति।

**अर्थान्तरानुबन्धमनुस्यूतम्**। तद्द्विधा— क्रियानुस्यूतं कारकानुस्यूतं च। तयोः —

**क्रियानुस्यूतं** यथा— सीतान्वेषणमधिकृत्य कृतो ग्रन्थः 'सीतान्वेषणीयः', एवं 'किरातार्जुनीयः', 'वाक्यपदीयः', पौषी पौर्णमासी अस्मिन् मासे भवति पौषः, एवमाग्रहायणिकः, आश्वत्थिक इति।

**कारकानुस्यूतं** यथा— तित्तिरिणा प्रोक्तं वेदं विदन्त्यधीयते वा तैत्तिरीयाश्छात्राः, एवं वारतन्तवीयाः, छागलेयिनः, ऐतरेयिणः, तथा पाराशरिणो भिक्षवः, शैलालिनो नटाः।

(२) **भिन्नक्रियं** त्रिधा लक्षितक्रियमपेक्षितक्रियमनुषक्तक्रियं च। तेषु—

**लक्षितक्रियं** द्विधा— कर्तृस्थं कर्मस्थं च। तयोः

**कर्तृस्थं** यथा— मुद्गा भवन्त्यस्मान्मौद्गीनं क्षेत्रम्, दण्डिनः सन्त्यस्यां दण्डिमती शाला, वरणाः सन्ति अस्मिन् वरणा नगरमिति।

**कर्मस्थं** यथा— श्राद्धमनेनाद्य भुक्तं श्राद्धिकः, अग्रभोजनमस्मै दीयते आग्रभोजनिकः, पद्मस्मिन् दृश्यं पद्यः कर्दम इति।

**अपेक्षितक्रियं** द्विधा, व्यवहितमव्यवहितं च। तयोः

**व्यवहितं** यथा— ग्रामादागच्छति, ब्राह्मणाय ददाति, पर्यङ्के शेत इति।

**अव्यवहितं** यथा— कटं करोति, दात्रेण लुनाति, देवदत्तेनास्यत इति।

**अनुषक्तक्रियं** द्विधा, तुल्याधिकरणमतुल्याधिकरणं च। तयोः

**तुल्याधिकरणं** यथा— शुक्लीभवति, उन्मनी स्यात्, भस्मसात् संपद्यत इति।

**अतुल्याधिकरणं** यथा— पटपटाकरोति, देवत्रागच्छति, मनुष्यत्रावसति इति।

(३) **अभिन्नक्रियं** त्रिधा, तिङभिधेयं, कृदभिधेयं तद्धिताभिधेयं च। तत्र—

**तिङभिधेयं** द्विधा कर्तृरूपं कर्मरूपं च। तयोः

**कर्तृरूपं** यथा— पचति देवदत्तः, दुग्धे गौः, चोरस्य रुजति रोग इति।

**कर्मरूपं** यथा— पच्यते ओदनः, भिद्यते कुसूलः, उष्ट्रासिका आस्यन्त इति।

**कृदभिधेयं** द्विधा, विशेष्यं विशेषणं च। तयोः

**विशेष्यं** यथा— दात्रं, प्रासादः, कुम्भकार इति।

**विशेषणं** यथा—कर्तव्यं, पाचकः, सुबोधमिति।

**तद्धिताभिधेयं** द्विधा— सापेक्षक्रियमनपेक्षितक्रियं च। तयोः

**सापेक्षक्रियं** यथा— इष्टी यज्ञे, परिगणिती याज्ञिक्ये, आम्नाती छन्दसि, अधीती व्याकरणे, कृतपूर्वी कटमिति।

**अनपेक्षक्रियं** यथा— पाकेन निर्वृत्तं पाकिमं, सेकेन निर्वृत्तं सेकिमं, कुट्टेन कुट्टिमं, करणेन कृत्रिमं, श्येनपातोऽस्यां क्रियायां तिलपातोऽस्यां क्रियायां श्यैनंपाता तैलंपातेति।

## *(७. उपस्कारार्थः)*

**प्रकृतिप्रत्ययोभयद्वारकं पदार्थविशेषणमुपस्कारार्थः।**

स त्रिधा— **(१) प्रकृतिद्वारकः, (२) प्रत्ययद्वारकः, (३) उभयद्वारकश्च**। तेषु—

**(१) प्रकृतिद्वारकः** षोढा— लोपागमवर्णविकारादेशप्रत्यापत्त्युपपदोपस्कारभेदात्। तेषु —

**(लोपः)**'रञ्जेर्णौ मृगरमणे' नलोप इत्यादिर्लोपोपस्कारार्थो यथा— (किराता. ६.२४)

**धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयन् गुरुभिः ।**
**रजयाञ्चकार विरजाः स मृगान् किमिवेशते रमयितुं न गुणाः।। २६।।**

**(आगमः)** 'अश्ववृषयोर्मैथुनेच्छायाम्' इत्यादि**रागमोपस्कारार्थः**, यथा—

**अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी ।**
**सा क्षीरकण्ठकं वत्सं वृषस्यन्ती न लज्जिता ।।२७।।**

**(वर्णविकारः)** 'वेश्च स्वनो भोजने' मूर्धन्य इत्यादि**र्वर्णविकारोपस्कारार्थः**, यथा—

**ग्लानिच्छे(दी) क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं झारिताजीर्णशेषः ।**
**स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद् व्यस्वनच्च ।।२८।।**

**(आदेशः)** 'मातुर्मातच्पुत्रे श्लाघ्य' इत्यादिरादेशोपस्कारार्थः, यथा—

**गौरीमातस्य तस्यैताः कार्त्तिकेयस्य कीर्त्तयः ।**
**कीर्त्तितासु न कीर्त्यन्ते यासु कस्यापि कीर्त्तयः ।।२९।।**

**(प्रत्यापत्तिः)**'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृति**प्रत्यापत्तिः** प्रकृतिवच्च कारकम्' इत्यादिः। **प्रत्यापत्त्युपस्कारार्थः**, यथा—

**शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं**
**व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।।३०।।** इति।

**(उपपदः)**'अपादाने परीप्सायां' णमुलित्यादि**रुपपदोपस्कारार्थः**, यथा—

**किञ्चिच्छेषनिशातुषारमधुरस्पर्शं गृहप्राङ्गणे**
**शय्योत्थायमिह व्रजन्ति हलिनां बालाः कुकूलानलम् ॥ ३१ ॥** इति।

(२) **प्रत्ययद्वारकोऽपि** षोढा— **लोपागमवर्णविकारविकरणादेशोपग्रहभेदात्**। तेषु—

**लोपार्थः** 'फलकुसुमयोर्लुक्' (४.३.१६६) यथा—

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः॥३२॥**(कुसं.३.२८)

**आगमार्थो** 'हृषेर्लोमसु' (७.२.२९) इट्, यथा—

**आननैर्विचकसे (हृषिताभिः) वल्लभानभि तनूभिरभावि॥३३॥** (माघ.१०.३६)

**वर्णविकारार्थः** 'दिवोऽविजिगीषायां' (८.२.४९) निष्ठानत्वम्, यथा—

**आद्यूनस्सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः ॥ ३४॥** (किराता. ११.५)

**विकरणार्थः**, 'श्लिष आलिङ्गने' (३.१.४६) क्सः, यथा—

**आश्लिक्षद् भयचपलेक्षणा नवोढा**
**भर्तारं विपदि न दूषितातिभूमिः ॥ ३५॥** (माघ. ८.२०)

**आदेशार्थ** 'आशिषि तुह्योस्तातङ्' (७.१.३५) यथा—

**भवताद् भवतो मतिश्शुभा जयताज्जीव भवावनीश्वरः॥ ३६॥**

**उपग्रहार्थः** 'अधेः प्रसहने' (१.३.३३) कृतेः आत्मनेपदम्, यथा—

**भवादृशाश्चेदधिकुर्वते रतिं**
**निराश्रया हन्त हता मनस्विता ॥ ३७॥** (किराता १.४३) इति।

(३) **उभयद्वारकः** तु द्वादशधा— **अवधि—सम्बोधन—क्रियाविशेषण—कारकविशेषण—शेष—परिशेष—सहार्थ—तादर्थ्य—हेतु—लक्षणोपपद—प्रकीर्णभेदात्**। तत्र—

**(१. अवधिः—६)** क्रियादीनां मिथो **मर्यादावधिः**;

स **पूर्वकालव्यतिहारपरापरयोगकालाध्वादिभेदादनेकप्रकारः**। तेषु—

**पूर्वकालो** यथा—(किराता. ४.६)

**कृतोर्मिलेखं शिथिलत्वमायता शनैश्शनैश्शान्तरयेण वारिणा ।**
**निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डु सैकतम् ॥ ३८॥**

**व्यतिहारो** यथा—

**स्तनोपपीडं परिरभ्य चुम्बतोः प्रजल्पतोरप्यनवस्थितं मुहुः ।**
**स्रजश्च यूनोरपमित्य याचतोरनिद्रयोरेव जगाम शर्वरी ॥ ३९॥**

परयोगो यथा—

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्याम: पादो बलिविमथनाभ्युत्थितस्येव विष्णो: ॥४०॥ (मेघ. ५७)

अपरयोगो यथा—

अप्राप्य पर्वतमिमानि पुरोविलीननीरन्ध्रलोध्रवकुलानि वनस्थलानि ।
आसेदुषस्तव हरिष्यति येष्वघौघमध्वक्लमं च सुरसिन्धुतरङ्गवात: ॥ ४१ ॥

कालयोगो यथा—

एवमिन्द्रियसुखस्य वर्त्मनस्सेवनादनुगृहीतमन्मथ: ।
शैलराजभवने सहोमया मासमेकमवसद् वृषध्वज: ॥४२॥ (कुसं. ८.२०)

अध्वयोगो यथा—

उदन्वच्छिन्ना भू: स च निधिरपां योजनशतं
सदा पान्थ: पूषा गगनपरिमाणं गणयति ।
इति प्रायो भावास्स्फुरदुपधिमुद्रामुकुलिता:
सतां प्रज्ञोन्मेषा पुनरयमसीमा विजयते ॥४३॥ (बारा. १.८)

(२. सम्बोधनम् —६) सिद्धस्य क्रियार्थमभिमुखीकरणं सम्बोधनम्।

तत् षोढा नियोगनिषेधानुमत्युपालम्भप्रश्नाख्यानार्थभेदात्। तेषु—

नियोगार्थं यथा—(कुसं. ३.३)

आज्ञापय ज्ञातविशेष! पुंसां लोकेषु यत् ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृद्धमिच्छामि संवर्धितुमाज्ञया ते ॥४४॥

निषेधार्थं यथा—(कुसं. ८.७६)

आर्द्रकेसरसुगन्धि ते मुखं मत्तमत्तनयनं स्वभावत: ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि! मद: करिष्यति ॥४५॥

अनुमत्यर्थं यथा—(कुसं. ३.१२)

सर्वं सखे! त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवाँश्च ।
पूर्वं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥४६॥

**उपालम्भार्थं** यथा—(कुसं. ५.६६)

**अवस्तुनिर्बन्धपरे! कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥४७॥**

**प्रश्नार्थं** यथा—(रघु. १६.८)

**का त्वं शुभे! कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।**
**आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥**

**आख्यानार्थं** यथा—(कुसं. ८.५८)

**नूनमुन्नमति यज्वनां पतिश्शार्वरस्य तमसो निषिद्धये ।**
**पुण्डरीकमुखि! दिङ्मुखं यतः कैतकैरिव रजोभिराहतम् ॥४९॥**

(३. **क्रियाविशेषणम्**—६)

प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थभागमुखेन भेदकं **क्रियाविशेषणम्**; भावोत्पन्ने हि प्रत्यये कदाचित् समुदायः प्रत्ययमुखेन विशेष्यते, कदाचित् प्रकृतिमुखेन। तीव्रः पाकः, तीव्रं पाक इति। तत् षोढा— **नामरूपम्, अव्ययरूपं, कृद्रूपं, तद्धितरूपं, समासरूपम्, उपसर्गादिरूपमिति**। तेषु —

**नामरूपं** यथा—

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।**
**गर्भाधान—क्षण—परिचयान्नूनमाबद्धमाला—**
**स्सेविष्यन्ते नयनसुभगं खे भवन्तं वलाकाः ॥५०॥** (मेघ.९)

**अव्ययरूपं** यथा—(किराता. ८.२८)

**प्रशान्तधर्माभिभवश्शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः ।**
**ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥५१॥**

**कृद्रूपं** यथा—

**शय्यन्ते हतशायिकाः पथि तरुच्छायानिषण्णाध्वगैः**
**श्रीकण्ठायतनेषु धार्मिकजनैरास्यन्त उष्ट्रासिकाः ।**
**शून्ये तत्र निकुञ्जशाखिनि सखि! ग्रीष्मस्य मध्यन्दिने**
**सज्जानां दयिताभिसारणविधौ रम्यः क्षणो वर्तते ॥५२॥**

**तद्धितरूपं** यथा–

**शतं वारानुक्तः प्रियसखि! वचोभिस्सुपरुषै–**
**स्सहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः ।**
**कियत्कृत्वो बद्धाः पुनरपि न वेद्मि भ्रुकुटय–**
**स्तथापि क्लिश्नन्मां क्षणमपि न धृष्टो विरमति ॥५३॥**

**समासरूपं** यथा–(कुसं. ५.५१)

**इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।**
**अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत॥५४॥**

**उपसर्गादिरूपं** यथा–(कुसं. ३.९)

**प्रसीद विश्राम्यतु वीर! वज्रं शरैर्मदीयैः कतमस्तवारिः ।**
**बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥५५॥**

**(४. कारकविशेषणम्–६)**

कर्त्रादीनां स्वेभ्यः परं **कारकविशेषणम्**। तदपि षोढा–

**कर्तृविशेषणं कर्मविशेषणं करणविशेषणं संप्रदानविशेषणमपादानविशेषणम–**
**धिकरणविशेषणमिति**। तेषु –

**कर्तृविशेषणं** यथा–(कुसं. ७.११)

**सा मङ्गलस्नानविशुद्धगात्री गृहीतवत्युद्गमनीयवस्त्रम् ।**
**निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥५६॥**

**कर्मविशेषणं** यथा–(कुसं. ३.५३)

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥५७॥**

**करणविशेषणं** यथा–(कुसं. ५.२७)

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसम्पदां सरोजसन्तानमिवाकरोदपाम् ॥५८॥**

**संप्रदानविशेषणं** यथा–(कुसं. ३.१६)

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।**
**योषित्सु तद्वीर्यनिषेकभूमिस्सैव क्षमेत्यात्मभुवोपदिष्टम् ॥५९॥**

**अपादानविशेषणं** यथा—(कुसं. ५.११)

**विसृष्टरागादधरान्निवर्तितस्स्तनाङ्गरागारुणिताच्च कन्दुकात् ।**
**कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥६०॥**

**अधिकरणविशेषणं** यथा—(कुसं. ३.२७)

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान् नामाक्षराणीव मनोभवस्य ॥६१॥**

(५. शेषः —६)

**अनुप्रयोगार्थश्शेषः।**

स षोढा— **लिडनुप्रयोगार्थः, लोडनुप्रयोगार्थः, कृदनुप्रयोगार्थः, यथाविध्यनुप्रयोगार्थः, तद्धितानुप्रयोगार्थः, द्विर्वचनानुप्रयोगार्थ** इति।

**लिडनुप्रयोगार्थो** यथा—(माघ. ३.२८)

**न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।**
**अचेष्टताष्टापदभूमिरेणुः खुराहतो यत् सदृशं गरिम्णः ॥६२॥**

**लोडनुप्रयोगार्थो** यथा—(माघ. १.५१)

**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।**
**निगृह्य चक्रे नमुचिद्विषो बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥६३॥**

**कृदनुप्रयोगार्थो** यथा—(किराता ८.१६)

**सलीलमासक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम् ।**
**स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया ॥६४॥**

**यथाविध्यनुप्रयोगार्थो** यथा—(किराता. ८.१६)

**स ते प्रियश्चेत् सुभगोऽपराधैर्विचिन्तितैरस्य फलं न किञ्चित् ।**
**प्रियापराधो हि विचिन्त्यमानस्समूलकाषं कषतीव चेतः ॥६५॥**

**तद्धितानुप्रयोगार्थो** यथा—(किराता. १६.११)

**परिक्षते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती ।**
**नेह प्रमोहं प्रियसाहसानां मन्दारमाला विरलीकरोति ॥६६॥**

**द्विर्वचनानुप्रयोगार्थो** यथा—

**वदत वदत सत्यं रूपमीदृक् कदाचिद् यदि पुनरबलाया दृष्टपूर्वं मुखादि ।**
**जगति जितसमस्तारातिवर्गै(र्गैर्भ्रमद्भिर्बत कि-)मिव न दृष्टं मत्प्रसादाद् भवद्भिः॥**

(६. परिशेषः —६)

चादिनिपातद्योत्यः समुच्चयादिः पदार्थधर्मः **परिशेषः**।

सोऽनन्तप्रकारोऽपि षड्विध इहोदाह्रियते — **समुच्चयः, विकल्पः, उपमा, नियोगः, विनिग्रहः, प्रतिषेधः**। तेषु—

**समुच्चयो** यथा—(कुसं. ५.८४)

**इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितस्समाललम्बे वृषराजकेतनः ॥ ६८॥**

**विकल्पो** यथा—(कुसं. ५.७८)

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यत वपुः ॥ ६९॥**

**उपमा** यथा—(रघु. ७.२१)

**हस्तेन हस्तं परिगृह्य वध्वास्स राजसूनुस्सुतरां बभासे ।**
**अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ ७०॥**

**नियोगो** यथा—(रघु. ५.३७)

**रूपं तदोजस्वि तदुन्नतत्वं तदेव नैसर्गिकमस्य तेजः ।**
**न कारणात् स्वाद् विभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ७१॥**

**विनिग्रहो** यथा—

**त्वमहनीह निबर्हय मानिनीः विरहिणः कु (त—उत्सविनी धृ—) तिः ।**
**इति निवेशयति स्म कलापिनामनुगिरं नु गिरं जलदागमः ॥ ७२॥**

**निषेधो** यथा—(किराता. ९.२५)

**न प्रसादमुचितं गमिता द्यौः नोद्धृतं तिमिरमद्रिवनेभ्यः ।**
**दिङ्मुखेषु न च धाम विकीर्णं भूषिता च रजनी हिमभासा ॥ ७३॥**

(७. सहार्थः—६)

यद्युत्पत्तौ सहकारिलाभः तदा **सहार्थस्त्रिधा अभिधीयमानः, प्रतीयमानः, व्यवधीयमानश्च**। तेषु —

**अभिधीयमानो** द्विधा, सहेन पर्यायेण च।

तयोराद्यो यथा—(रघु. ६.३५)

**अनेन यूना सह पार्थिवेन रम्भोरु! कच्चिन्मनसो रुचिस्ते ।**
**शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥ ७४॥**

**द्वितीयो** यथा—(रघु. ६.५७)

**अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।**

**द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥७५॥**

**प्रतीयमानोऽपि** द्विधा, विभक्तितो निपाताच्च।

तयोराद्यो यथा—(रघु. १४.२४)

**स पौरकार्याणि विचिन्त्य काले रेमे विदेहाधिपतेर्दुहित्रा ।**

**उपस्थितं चारु वपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥७६॥**

**द्वितीयो** यथा—(कुसं. ७.४३)

**तमन्वगच्छत् प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।**

**जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥७७॥**

**व्यवधीयमानोऽपि** द्विधा वीप्सया भागेन च। सहकृता एव हि क्रिया गुणद्रव्यैः प्रयोक्त्रा युगपद्व्याप्तुमिष्यन्ते, सहकृता एव च विभज्यन्ते। अर्थशब्दस्तु निवृत्तिवचनोऽपि विद्यते, यथा मशकार्थो धूम इति। तत्र—

**वीप्सया** यथा—

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।**

**प्रतिक्षणं सम्भ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥७८॥** (कुसं. ३.५६)

**भागेन** यथा—

**अलङ्कृताप्यन्वयरूपभूषणैर्न शोभते मां प्रति तावदङ्गना ।**

**बिभर्ति यावत् प्रमदासमागमे न शूरभार्यादृतगर्वितं शिरः ॥७९॥**

(८. **तादर्थ्यम्**—६)

कार्यस्य कार्यिणो वा कारणं प्रति प्रयोजकत्वं **तादर्थ्यम्**।

तत् षोढा— क्रियातादर्थ्यं, द्रव्यतादर्थ्यं, क्रियाद्रव्यतादर्थ्यं, द्रव्यक्रियातादर्थ्यं, प्रकृतिविकारतादर्थ्यं, क्रियाकारकतादर्थ्यमिति। तत्र—

**क्रियातादर्थ्यं** यथा—(कुसं. ५.१३)

**पुनर्ग्रहीतुं नियमस्थया तया द्वयीषु निक्षेप इवार्पितं द्वयम् ।**

**लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ॥८०॥**

**द्रव्यतादर्थ्यं** यथा—(कुसं. १.२३)

**प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।**
**शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥८१॥**

**क्रियाद्रव्यतादर्थ्यं** यथा—(रघु. ६.४४)

**तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।**
**शरत्प्रमृष्टाम्बुधरोपरोधश्शशीव पर्याप्तकलो नलिन्याः ॥८२॥**

**द्रव्यक्रियातादर्थ्यं** यथा—(कुसं. ५.४३)

**अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे ।**
**पराभिमर्शो न तवास्ति कः करं प्रसारयेत् पन्नगरत्नसूचये ॥८३॥**

**प्रकृतिविकारतादर्थ्यं** यथा—(रघु. १४.७७)

**पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।**
**विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥८४॥**

**क्रियाकारकतादर्थ्यं** यथा—

**गेहाद् याता सरितमुदकं हारिका नाजिगीषे**
**मङ्क्ष्यामीति श्रयसि यमुनातीरवीरुद्गृहाणि ।**
**गोसन्दायी विशसि विपिनान्येव गोवर्धनाद्रेः**
**किं त्वं राधे! दृशि निपतिता देवकीनन्दनस्य ॥८५॥**

**(९. कारको हेतुः —६)**

**हेतुविशेषेषु** प्रयोजकः कारकश्च कारक एव; अकारकस्तु प्रपञ्च्यते। तत्र— कार्यप्रसवयोग्यः कारकस्तु षोढा— **लिङ्गादिवाच्यः, सद्वाच्यः, निपातादिवाच्यः, तृतीयावाच्यः पञ्चमीवाच्यः, प्रथमादिवाच्य** इति। तेषु—

**लिङ्गादिवाच्यो** यथा—

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।**
**ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचिस्मितस्य ॥८६॥** (कुसं.१.४४)

**सद्वाच्यो** यथा—(कुसं. ७.२१)

**सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।**
**सरिद् विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥८७॥**

निपातादिवाच्यो यथा—(जाह. १.२८)

लीला गतेस्तत्र निसर्गसिद्धा मत्तो न हस्ती मुषितो न हंसः ।
इतीव जङ्घायुगलं तदीयं चक्रे तुलाकोट्यधिरोहणानि ॥८८॥

तृतीयावाच्यो यथा—(कुसं. १.२४)

तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥८९॥

पञ्चमीवाच्यो यथा—(कुसं. ५.४०)

अतोऽत्र किञ्चिद् भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने! न चेद् रहस्यं प्रतिवक्तुमर्हसि ॥९०॥

प्रथमादिवाच्यो यथा—(कुसं. १.११)

उद्वेजयत्यङ्गुलिपार्ष्णिभागान् मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥९१॥

(१०. लक्षणम् —६)

हेतुरेव ज्ञापको **लक्षणम्**।

तत् षोढा — **द्रव्यलक्षणं, इत्थंभूतलक्षणं, विकारलक्षणं, उत्पातलक्षणं, भावलक्षणं, क्रियालक्षणमिति**। तेषु —

द्रव्यलक्षणं यथा—(रघु. ६.१२)

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥९२॥

इत्थंभूतलक्षणं यथा—(काव्याद. २.१०)

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।
पारावतः परिक्रम्य रिरंसुश्चुम्बति प्रियाम् ॥९३॥

विकारलक्षणं यथा—(माघ. १.७०)

स बाल आसीद् वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं संप्रति तेजसा रविः ॥९४॥

उत्पातलक्षणं यथा—(विसा. १.३)

गोनासाय नियोजितागदरजास्सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती ।

भर्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये ह्रीता च भीता च या ॥९५॥

भावलक्षणं यथा–(रघु. ६.८२)

तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥९६॥

क्रियालक्षणं यथा–(काव्याद. २.११)

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् ।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥९७॥

(११. उपपदम् –६)

उपपदं षोढा– क्रियारूपं, नामरूपं, नामार्थरूपं, प्रत्ययरूपं, निपातरूपं, कर्मप्रवचनीयरूपमिति। तेषु–

क्रियारूपं यथा–(कुसं. ६.५९)

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥९८॥

नामरूपं यथा–

सुखास्तेभ्यो विभावर्यस्तेभ्यो हितमहस्सदा ।
येषामकृत्रिमप्रेमा प्रिया पार्श्वं न मुञ्चति ॥९९॥

नामार्थरूपं यथा–(रघु. ९.४०)

हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥१००॥

प्रत्ययरूपं यथा–(किराता. १०.४४)

नृपसुतमभितस्समन्मथायाः परिजनगात्रतिरोहिताङ्गयष्टेः ।
स्फुटमभिलषितं बभूव बध्वा वदति हि संवृतिरेव कामितानि ॥१०१॥

निपातरूपं यथा–

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः ।
कान्तामुखस्यावशगः तस्मै नृपशवे नमः ॥१०२॥

कर्मप्रवचनीयरूपं यथा–(कुसं. ७.८४)

आ लोचनान्ताच्छ्रवणे विवृत्य पीतं गुरोस्तद् वचनं भवान्या ।
निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥१०३॥

(१२. **प्रकीर्णम्**–६)

शब्दान्तरसाहचर्यविरोधलिङ्गस्वराभिनयादयः **प्रकीर्णम्**। तत्र–

**शब्दान्तरं** यथा–

**भवतु समदना रतये तिलकवती चारुचम्पकच्छाया ।**
**घनचन्दनधवलकुचाक्रान्ता तव विद्विषामटवी ॥१०४॥**

**साहचर्यं** यथा–

**लक्ष्मणानुगतो भाति शशी राम इवापरः ।**
**कौसल्येव बिभर्ति द्यौरभिषेकोज्ज्वलां श्रियम् ॥१०५॥** (?)

**विरोधो** यथा–

**हरिबाणाविमौ रोषादुभावपि धृतायुधौ ।**
**प्रहर्तुमुद्यतौ वीरौ रणे रामार्जुनाविव ॥१०६॥** (?)

**लिङ्गं** यथा–

**आप्याययति मित्रो यं यस्य मित्रं पयोनिधिः ।**
**सोऽप्यमित्रश्शशी जातस्तदमैत्र्याऽद्य मे सखि! ॥१०७॥** (?)

**स्वरो** यथा–

**यदि मे वल्लभा दूती तदाहमपि वल्लभा ।**
**यदि तस्यां प्रिया वाचस्तन्ममापि प्रिय प्रियाः ॥१०८॥**

**अभिनयो** यथा–(कुसं. ६.६३)

**एते वयममी दाराः कन्येयं कुलजीवितम् ।**
**ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥१०९॥**

## *(८. प्रातिपदिकार्थः)*

**प्रातिपदिकार्थस्त्रिधा १. स्वार्थः, २. द्रव्यं ३. लिङ्गं** च। तेषु–

(१. **स्वार्थः**)

शब्दात्मैव **स्वार्थः**। स द्विधा– **स्वरूपमनुकार्यश्च**। तयोः–

**स्वरूपं** द्विधा– सत्त्ववचनार्हमसत्त्ववचनार्हं च।

तत्राद्यं यथा–

**चूडामणिश्शिरोरत्ने तरलो हारमध्यगे ।**
**पर्यङ्कश्शयने प्रोक्त आवेशश्चापि वेश्मनि ॥११०॥**

द्वितीयं यथा— (काव्याद. २.२३४)

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥१११॥** इति।

**अनुकार्यो** द्विधा— अर्थवाननर्थश्च।

**तयोरर्थवान्** यथा—

**उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।**
**हुंहु मुञ्च मममेति च मन्दं जल्पितं जयति मानवतीनाम् ॥११२॥**

**निरर्थको** यथा—

**अग्रशालमधिरुह्य नगस्य स्फारकण्ठकुहरो मदमत्तः ।**
**ह्रस्वदीर्घसविसर्गघुकारान् घोषयत्युषसि पाण्डुकपोतः ॥११३॥**

**(२. द्रव्यम्)**

उपात्तनिमित्तेनानुपात्तनिमित्तेन वा यत् श्रूयते गम्यते प्रतीयतेऽभिधीयते तद् **द्रव्यम्**। तद्द्विधा— **आश्रयरूपमनाश्रयरूपं** च।

तत्र जात्यादिभिः प्रवृत्तिनिमित्तैर्यदाश्रीयते **तदाश्रयरूपम्**; यथा गौः, अश्वः, शुक्लः, एकः, प्रस्थं, पलम्, ऋजुः, पूर्वः, पाचकः, दण्डी, राजपुरुषः, चैत्र इति।

तद्विपरीतम् **अनाश्रयरूपं** निपाताव्ययोपसर्गगतिकर्मप्रवचनीयादीनामर्थः, यथा 'अहं च त्वं च वृत्रहन्', 'ऋते धर्मं कुतः सुखम्','(लौहघ)नस्सुमनायते[१]' 'कस्त्वामूरीकरिष्यति', 'कस्तं प्रति न यास्यति', 'स्वयं पर्येतुमिच्छति'।

**(३. लिङ्गम्)**

**लिङ्गं** द्विधा, **शब्दलिङ्गमर्थलिङ्गं** च।

तयोरियमयमिदमित्यर्थव्यपदेशनिमित्तं शब्दसंस्कारहेतुरयमित्यर्थव्यपदेशकारणं **पुमान्**, 'नपुंसकस्य झलचः' (७.१.७२) इति x x x x x x उपस्कारहेतुरिदमित्यर्थव्यपदेशकारणं **नपुंसकमिति**।

तदेतच्छुद्धमिश्रादिभेदात् षोढा विप्रथते— **शुद्धं, मिश्रं, सङ्कीर्णम्, उपसर्जनम्, आविष्टं, अव्यक्तं** च।

तेष्वेकसंस्कारहेतुश्**शुद्धम्**, खट्वा, वृक्षः, कुण्डं, स्त्री, पुमान्, नपुंसकमिति।

संस्कारद्वयोपग्राहि **मिश्रम्**, मरीचिः, ऊर्मिः, अर्चिः, छर्दिः, कषायः, कवाटमिति।

---

१.'ऋते ध..नायते' इति जो. नास्ति। ३२५२ प्रतौ, बडोदा प्रतौ, राघवेऽपि च 'सुखम्, नस्सुमनायते इति पाठः'। कोष्ठकपूर्त्तिरस्मत्कृता

संस्कारत्रययोगि **सङ्कीर्णम्**, तटी तटः तटं, शृङ्खला, शृङ्खलः, शृङ्खलमिति।

विशेष्यशब्दनिघ्नविशेषणरूप**मुपसर्जनम्**, शुक्ला शुक्लः शुक्लं, पट्वी पटुः पट्विति।

विशेषणत्वेऽपि नियतशब्दसंस्कारार्हम् **आविष्टम्**, प्रकृतिः, विषयः, प्रधानं, भार्या, दाराः, कलत्रमिति।

लिङ्गनिमित्तशब्दसंस्कारानर्हम् **अव्यक्तम्**, पञ्च, षट्, कति, उच्चैः x x x x।

**(भाव)**

विशेष्यते अवच्छिद्यते द्रव्यं येन तच्छब्दस्यार्थे प्रवृत्तिनिमित्तमर्थधर्मो **विशेषणं गुणो भाव** इति चाख्यायते। x x x x

तत् त्रिधा– **गुणः, परिमाणं, सम्बन्ध** इति। तत्र–

द्रव्ये स्वाद्युक्ते प्रत्ययजनको **गुणः**, जातिः, गुणः, सङ्ख्या, संस्थानमवस्थानमित्यादि; यथा– गौः, ब्राह्मणः, पटुः, गौरः, एकः, अनेकः, हनुमान्, वासुदेवः, युवा, वृद्धः, ऋजुः, पूर्व इति।

अननुरञ्जकमा x x x x भिधेयमवच्छेदकं **परिमाणं**, तदध्वगौरवमूल्य– सङ्ख्यासङ्घातक्षेत्रादिभेदादनेकधा। यथा योजनं पर्वतः, पलं सुवर्णः, पुराणः कपर्दकाः, अक्षौहिणी बलम्, खारी व्रीहयः, निवर्तनं भूमिरिति।

कृत्तद्धितसमासप्रातिपदिकविशेषाणामर्थेषु प्रवृत्तिनिमित्तं **सम्बन्धः।**

स त्रिधा– क्रियासम्बन्धो, द्रव्यसम्बन्धः, क्रियाद्रव्यसम्बन्धश्च। तत्र–

**क्रियासम्बन्धो** यथा– पाचक इति।

**द्रव्यसम्बन्धो** यथा– दण्डी, राजपुरुष इति।

**क्रियाद्रव्यसम्बन्धो** यथा– आक्षिकः, निष्कौशाम्बिरिति।

यदा पुनः जातिगुणपरिमाणादयश्शब्दाः प्राधान्येनाभिधीयन्ते भावप्रत्ययैर्वा प्रतिपाद्यन्ते तदैतेषां द्रव्यत्वमेव, न लिङ्गत्वम्। **भावप्रत्ययो** हि – (५.१.११९)

**जातिगुणाज्जातिगुणे समासकृत्तद्धितात् तु सम्बन्धे ।**
**डित्थादेः स्वे रूपे धवखदिराज्जातिसङ्घाते ॥११४॥** इति॥

**(निपातानां वाचकत्वं द्योतकत्वं वा)**

अन्ये तु स्वार्थो विशेषणं, द्रव्यं विशेष्यं, लिङ्गं स्त्रीनपुंसकमित्याचक्षते। तच्च निपातगत्युपसर्गकर्मप्रवचनीयादिप्रातिपदिकार्था x x x x ते। न हि निपाता

जात्यादिकं प्रवृत्तिनिमित्तमुपादायेदं तदि'—ति व्यपदेशयोग्येषु सत्त्वभूतेष्वर्थेषु वर्तन्ते, अपि तु प्रवृत्तिनिमित्तानुपग्रहेणैवासत्त्वभूतं समुच्चयादिकमर्थमभिनिविशन्ते। तदाह—

**तेषामुच्चावचार्थत्वात् सर्वसंबन्धदर्शनात् ।**
**अन्यतन्त्रतयोद्भूतेरसत्त्वार्थत्वमुच्यते ॥११५॥**

अथ किममी वाचका उत द्योतका इति। तत्रैके वर्णयन्ति —

**तत्प्रयोगावसेयत्वाद् वाच्यस्तेषां स गम्यते ।**
**समुच्चयादिरर्थात्मा यथान्येषां गवादिकः ॥११६॥**

अन्वयव्यतिरेकनिबन्धना हि शब्दानामभिधेयव्यवस्था। ततश्च अनादिप्रयोगा—दवसीयमानः समुच्चयविचारणादिरर्थात्मा कथममीषां वाच्यो न भवेत्? प्रतीयते (च) च—शब्दात् समुच्चयः; 'अहं च त्वं च वृत्रहन्' (ऋवे) इति; विचारणा वा—शब्दात्, 'हन्ताहं पृथिवीमिमां निदधानीह वेह वा' (ऋवे.) इति। एवमिवादिभ्य उपमानादयो गम्यन्त इति तद्वाच्यास्ते भवन्ति।

अन्ये त्वाहुः—

**षष्ठ्यभावादसत्त्वोक्तेरेकानुक्तेः परस्थितेः ।**
**गुणभावात् स्मृतेश्चैषां द्योतकत्वं सुनिश्चितम् ॥११७॥**

तथा हि— प्लक्षन्यग्रोधयोः समुच्चय इति वाचकपदप्रयोगे षष्ठी निर्दिश्यते, नैवं प्लक्षन्यग्रोधयोश्च इति। यथा च व्रीहियवयोर्विकल्पः प्रवर्ततामिति वाचकशब्दप्रयोगेऽसत्त्वभूतो विकल्पशब्दार्थः क्रियया सम्बध्यते, नैवं व्रीहियवयोर्वा इति। यथा च वृक्ष इत्येकेनापि वाचकेन शाखादिमानर्थः प्रतीयते, नैवं समुच्चयो विकल्पो वा। यथा च भिक्षां देहि देहि भिक्षामिति वाचकपदानां पौर्वापर्यप्रयोगे कामचारः, नैवं वृक्षः च—वृक्ष इति। यथा च वृक्षश्शोभन इति वाचकस्य विशेषणयोगो दृश्यते, नैवं च— शोभन इति। तदेवं वाचकशब्दवैधर्म्याद् द्योतकाश्चादय इति निश्चीयते। स्मरति **सूत्रकारः** 'चादयोऽसत्त्वे' (१.४.५७) इति। निरुक्तकारोऽप्याह 'भावप्रधानमाख्यातं, सत्त्वप्रधानानि (नामानि) (१.१.९), (निर्बद्धाः) उपसर्गा अर्थान्निराहुः (१.३.३), उच्चावचेष्वर्थेषु निपतन्तीति निपाताः' (१.४.२) इति। स चैषामुच्चावचोऽनेकप्रकारोऽर्थः स्वतोऽनवगम्यमानात्मा पदान्तरसंबन्धोपहित—प्रकरणाद्यनुविधानेनावसीयते। ततः स्वरूपमात्रेणाप्यर्थानवगतौइतरप्रयोगापेक्षत्वाद् **द्योतका एवैते, न वाचका** इति।

एतत्तु सर्वं सव्यभिचारमिति केचित्। तथा हि— 'वाचकेनाप्याख्यातेन द्योतितं सत्त्वभूतार्थम्, अपि च वाचकमाख्यातम्, आस्यते भवद्भिरिति। वाचकावपि प्रकृतिप्रत्ययौ नैव केवलौ प्रयुज्येते, जुहोतीति। वाचकमपि वर्तिपदं पौर्वापर्यनियमेनावतिष्ठते, राजपुरुष इति। वाचकानामपि चोपसर्जनपदानां विशेषणयोगो न दृश्यते, न हि भवति ऋद्धस्य राजपुरुष इति। स्मृतेश्चेति यदुच्यते तदप्ययुक्तम्; न हि व्याकरणेऽर्था आदिश्यन्ते। **निरुक्तकारो** वाचकतां मन्यते, न तु द्योतकताम्; अतो व्यभिचारदर्शनात् कथमिवैतदुपपन्नं भवति? उच्यते— वाचकत्वादाख्यातप्रयोगे शेषविवक्षायां षष्ठ्यपि दृश्यते, न माषाणामश्नीयादिति। चादिप्रयोगे तु षष्ठी नैव भवति। न चाख्यातमसत्त्वार्थवाचि? किं तर्हि पूर्वापरीभूतसाध्यार्थवचनम्; तदाह— 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे'। न च स्वभावस्यासत्त्वरूपता सम(भवति कृदभिहितो भावो) द्रव्यवत् प्रकाशते। चादयः पुनर्यदत्यन्तमस्वतन्त्रं, यस्य न शक्यते पदान्तरसम्बन्धाद् ऋते रूपमवगन्तुं, तदेवासत्त्वभूतमर्थमात्रमवगमयन्ति। प्रकृतिप्रत्ययाभ्यां च केवलाभ्यामप्यर्थोऽभिधीयते, दधि मधु इयानधुनेति। चादयस्तु नैव केवलास्तमभिदधते।

अथैवमुच्यते शब्दान्तराण्येवैतानि दध्यादीनि प्रयोगसमवायीनि (इति अत्र ब्रूमः) हे प्रकृतिप्रत्ययावपि न स्तः। कथमभिधीयते प्रकृतिप्रत्ययावपि केवलौ नार्थं ब्रूत इति। वर्तिपदानां पुनरनियतप्रयोगत्वमपि दृश्यते, आहिताग्निरग्न्याहित इति। न चैवं प्रकारतावादिनां शब्दान्तरमेव वा समासः। यदुक्तम्— 'वावचनानर्थ्यं च स्वभावसिद्धत्वाद्' इति। यदि वर्तिपदानां 'उपसर्जनं पूर्वम्'(२.२.३०) इत्यादिना प्रकृतिप्रत्यययोरपि परश्चेति(३.१.१,२) वचने गत्युपसर्गाणां 'ते प्राग्धातोः' (१.४.८०) इत्यनेन प्रयोगनियमः, प्रयोगनियमानामपि प्रयोगनियमो दृश्यते, तस्माद् व्यभिचार इति। उपसर्जनानामपि च विशेषणयोगो दृश्यते, देवदत्तस्य गुरुकुलमिति। चादीनां तु नैतत् कदाचिदप्यस्ति। व्याकरणे चार्थाः कथं नादिश्यन्त इति, यदाह—'शालीनकौपीने अधृष्टाकार्ययोः'(५.२.२०), 'अगारैकदेशे प्रघणः प्रघाणश्च' (३.३.७९) इति। निरुक्तेऽप्युच्चावचस्यार्थस्य केवलान्निपातादनुपलब्धेः पदान्तरो— पादानात्तु तदर्थाभिव्यक्तेर्निपात xxxx। अतो द्योतका एव न वाचकाश्चादय इति।

**(कर्मप्रवचनीयानां सम्बन्धसङ्गतिः)**

**अथ गत्युपसर्गकर्मप्रवचनीयानां का वार्ता?**

उच्यते। गतीनां तावत् सदसदादीनामादरादिवाच्यनिर्देशेनैव गतिसंज्ञा–विधानादनिर्दिष्टवाच्यानामप्यूर्यादीनां वाचकत्वमेव गम्यते। उपसर्गास्तु वाचकाः द्योतकाः विशेषकास्सहाभिधायकाः कार्यार्थो निरर्थकाश्च भवन्ति। **कर्मप्रवचनीयाः पुनर्निपातवद् द्योतका एव**। तदाह–

**क्रियाविशेषजन्यानां सम्बन्धानां प्रकाशने ।**
**कर्मप्रवचनीयाः स्युर्निमित्तमवधारिताः ॥११८॥**

कथम्? इह खलु सम्बन्धाः क्रियापूर्वकत्वात् करणानुविधायितया क्रियोपदर्शितविशेषं कारकमाश्रयन्ति। तत्र च भिन्नजातीयस्य युगपदेकया विभक्त्या वक्तुं शक्यत्वात् शेषसम्बन्धाभिधानवेलायामशब्दोपादानः क्रियाकारकसम्बन्धश्शब्द–वता शेषसंबन्धेनानुमीयमानसन्निधिरवतिष्ठते। तच्चानुमानं शेषसम्बन्धस्य स्वरूपसामर्थ्यान्नियतक्रियाविषयमनियतक्रियाविषयं च।

**नियतक्रियाविषयं** यथा– x x x x ना जना (जनिः) कर्तर्यपेक्षितकर्मविशेषे शेषलक्षणं पितापुत्रसम्बन्धमुत्पादयतीति। सेव तस्मादनुमीयते। तथा वृक्षस्य शाखेत्याधाराधेयनिबन्धना स्थितिरपेक्षितकर्तृविशेषेऽधिकरणेऽवयवावयविलक्षणं शेषसम्बन्धं निबध्नातीति सैव प्रतीयते।

**अनियतक्रियाविषयं** यथा– राज्ञः पुरुष इति स्वस्वामिभावसाधनो भरणक्रयणापजयादिः अनियतानेकक्रियः कर्ताx x x x शेषसंज्ञकं स्वस्वामिसम्बन्धं संनिवेशयति। स चानियतानेकक्रियापर्वकत्वादपर्याप्तः क्रियाविशेषमनुमापयितुमिति स्वनिमित्तक्रियासामान्यमेवानुमापयति। एवंविधे विषये क्रियाविशेषप्रकाशनाय कर्मप्रवचनीयाः प्रयुज्यन्ते। यथा शाकल्यस्य संहितामनु प्रावर्षदिति संहिताप्रवर्षणयोर्हेतु–फलभावो निशमयतिक्रियापूर्वकः x x x x इत्येतदनुना प्रकाश्यते। यः क्रियाविशेष–प्रकाशनं विभक्तेरशक्यं कल्पयितुम्, क्रियाविशेष प्रकाशनमपि क्रियापदसन्निधानायत्तम् असति क्रियापदे न युक्तम्। सम्बन्धोऽपि नास्याभिधेयः, तस्य विभक्तिप्रत्ययनिबन्धनत्वात्। यदि च कर्मप्रवचनीयस्तमभिदधीत, प्रातिपदिकार्थस्य व्यतिरेकोपजनो न स्यात्, यथा राजस्वामीति। प्रतीयते च लोके कर्मप्रवचनीययोगे सम्बन्धस्य निमित्तविशेषावच्छेदः। तस्मात् स तस्य प्रयोजक इत्यवसीयते। तदुक्तम्– (वाप.२.२०४)

**क्रियाया द्योतको नायं न सम्बन्धस्य वाचकः।**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥११९॥** इति ।

ननु च नाप्रतीतायां निशमयति—क्रियायां तया सम्बन्धस्यावच्छेदश्शक्यते कर्तुम्। तदयमनुः क्रियामप्रत्याययन् सम्बन्धमवच्छिनत्तीति न युज्यते। अथास्य क्रियाप्रकाशनमन्यत्रादर्शनान्न कल्प्यते। सम्बन्धावच्छेदोऽपि मा प्रकल्पि, अन्यत्रादर्शनादेव।

उच्यते— क्रियाभेदसमधिगतमात्मातिशयं सम्बन्धस्यावगमयन्नर्थसामर्थ्यात् क्रियाविशेषप्रत्ययनिमित्तमनुः। अतोऽस्य क्रियावचनत्वमन्यतः क्रियाप्रतीतेर्न कल्प्यते।

यदि वा निमित्तभेदोपाधेयविशेषापरामर्शेन रूपभेदं सम्बन्धस्यावगमयन्ति कर्मप्रवचनीयाः। यथा अधि ब्रह्मदत्ते पञ्चालाः, अभिमन्युः अर्जुनतः प्रति इति स्वस्वामिभावस्सादृश्यं च कर्मप्रवचनीयात् प्रतीयते। विशिष्टाधिकरणव्यवच्छेदास्तु सम्बन्धास्स्वरूपातिशयेन क्रियाभेदमधिगमयन्ति। यथा पञ्चालानां परिपालन—करादानादयः कार्या ब्रह्मदत्तेन, अभिमन्योः अध्यवसायसंप्रहरणादयस्सदृशा अर्जुनेन प्रक्रान्तसम्बन्धवशाद् अभिप्रेयन्ते। तदयमप्यनुः संहिताप्रवर्षणयोस्सम्बन्धं हेतुफलभावेनावच्छिनत्ति, अध्ययनविशेषरूपत्वात्तु संहितायाः। तस्य च शब्दातिशयप्रकाशसामर्थ्यान्निशमनमत्रार्थगृहीतं न कर्मप्रवचनीयाधिगम्यमिति।

तस्य तु (अन्यत्तु) दर्शनम्— अनुः पश्चाद्भावाभिधाने प्रतीतसामर्थ्यो यथा अनुरथं पादातम् इति। स इहापि तदर्थ एव भवितुमर्हतीति तस्य हेतौ विधीयमाना कर्मप्रवचनीयसंज्ञा न प्राप्नोति। सम्बन्धावच्छेदेऽप्येतत् तुल्यम्।

अथ विषयवशाद्धेतौ वृत्तिः कल्प्यते, पश्चाद्भावेऽपि अविरोधः, यतः पौर्वापर्यमिह हेतुफलविषयम्। अयमेव तर्हि सम्बन्धावच्छेदः यदनियताधिकरणं पौर्वापर्यमिह हेतुफलविषयतयावच्छिद्यते। एतदेव च सम्बन्धावच्छेदहेतुत्वं पृथक्करणनिमित्तं निपातेभ्यः कर्मप्रवचनीयसंज्ञानाम्।

कथं तर्हि 'अधिपरी अनर्थकौ' (१.४.९३), 'सुः पूजायाम्' (१.४.९४), 'अतिरतिक्रमणे च' (१.४.९५), 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' (१.४.९६) इत्यमीषां कर्मप्रवचनीयत्वम्? कश्चिदेभिस्सम्बन्धोऽवच्छिद्यते।

सत्यमेतत्। किन्तु कार्यार्थमेषां अतद्धर्माणामपि शास्त्रे वाचनिक—कर्मप्रवचनीयत्वमभिहितमिति।

**(सामान्यविचार:)**

ननु च जात्यादिप्रवृत्तिनिमित्तोपग्राहिणो वृक्षादयः सत्त्ववचनाः,तद्विपरीताश्चादयो असत्त्ववचना इत्युच्यते। न च जातिर्नाम प्रत्यक्षादिसमधिगम्यं किञ्चित् प्रमेयमस्ति। तथा हि – असौ न प्रत्यक्षा, प्रत्यक्षस्य पूर्वापराननुस्यूतस्वलक्षणत्वात्, जातेश्च पूर्वापरानुस्यूतरूपत्वात् तदाह–

**समानवृत्तिता नाम सामान्यस्य निजं वपुः ।**
**कथं स्पृशति सापेक्षमनपेक्षाक्षजामिति ॥१२०॥**

तत्पृष्ठभाविनस्तु विकल्पा स्वभावेनावस्तुविषयत्वान्न सामान्यसिद्ध्यै प्रभवन्ति। नाप्यनुमानं शब्दो वा सामान्यमवस्थापयति। तयोरपि विकल्पविषयत्वेन वस्तुव्यवस्थापकत्वायोगात्। वस्तुप्राप्तिस्तु भेदानध्यवसायनिमित्तवस्त्वध्यवसायाद् भविष्यति।

इतश्च न व्यक्तिव्यतिरिक्तं सामान्यं कुवलयामलकबिल्वादिवद् भेदेनानुपलम्भाद्, घटपटादिवच्च देशभेदाग्रहणाद्, व्यक्त्यग्रहे घटपटादिवदेव तदनुपलब्धेः। व्यक्तिवृत्तित्वात् सामान्यस्य तदग्रहे तदनुपलब्धिरिति चेन्न, वृत्त्यनुपपत्तेः। किं प्रतिपिण्डं कात्स्न्येन वर्तते जातिरुतैकदेशेन?

**पिण्डे सामान्यमेकत्र यदि कात्स्न्येन वर्तते ।**
**तत्रैवास्य पदार्थत्वं न स्यात् पिण्डान्तरे ग्रहः ॥१२१॥**
**एकदेशेन वृत्तौ तु गोत्वजातिर्न कुत्रचित् ।**
**समग्राऽस्तीति गोबुद्धिः प्रतिपिण्डं कथं भवेत् ॥१२२॥**(न्यायम.)

न चास्य निरवयवत्वादेकदेशा विद्यन्ते। न चैकपिण्डे समाप्त्या वर्तमाना पिण्डान्तरेऽपि समाप्त्यैव वर्तितुमर्हति। समाप्तस्य न पुनरुत्पत्तिं विना समाप्त्यन्तरानुपपत्तेः। न च तथाभूता काचिद् वृत्तिरुपलभ्यते। न च समवायात्मिका वृत्तिः। स ह्ययुतसिद्धानां भवति। अयुतसिद्धिस्सम्बन्धश्चेति विप्रतिषिद्धम्। द्रव्यगुणयोः अपृथक्सिद्धयोरपि सम्बन्धदर्शनान्नैवमिति चेन्न। तत्रापि गुणव्यतिरिक्तस्य गुणिनो भेदेनासिद्धेः। अवयवावयविनोरपि पृथक्सिद्धेरभावान्न सम्बन्धः। नापि रूपरूपिलक्षणस्सम्बन्धो भविष्यतीति वक्तव्यम्, रूपार्थस्य निरूपयितुमशक्यत्वात्। किमयं रूपशब्दश्शुक्लादिगुणवचनः स्वभाववचनो वा। शुक्लादिवचनत्वे नीरूपाणां पवनमनःप्रभृतीनां द्रव्याणां सामान्यशून्यता स्यात्। आकारवचनत्वेऽप्यवयवसन्निवेशरहितानां तेषामेव सामान्यवत्ता न प्राप्नोति। स्वभाववचनत्वे तु जातिजातिमतोरव्यतिरेक एव भवेत्।

अवभाति हि भेदेन स्वभावो न स्वभाविनः ।
शब्दातिरिक्ततैवेयं न तु वस्त्वतिरिक्तता ॥१२३॥

अपि चेयं जातिः—

सर्वसर्वगतापि (ता वा) स्यात् पिण्डसर्वगतापि वा ।
सर्वसर्वगतत्वेऽस्याः कर्कादावपि गोमतिः ॥१२४॥
अश्वधीश्शाबलेयादावुष्ट्रबुद्धिर्गजादिषु ।
पदार्थसङ्करश्चैवमत्यन्ताय प्रसज्यते ॥१२५॥
अथापि व्यक्तिसामर्थ्यनियमान्नैष सङ्करः ।
न हि कर्कादिपिण्डानां गोत्वादिव्यक्तिकौशलम् ॥१२६॥
मैवं खण्डाद्यभिव्यक्तमपि गोत्वमनंशकम् ।
सर्वत्रैव प्रतीयेत न वा सर्वगतं भवेत् ॥१२७॥
तदंशग्रहणे तस्य न हि कश्चिन्नियामकः ।
दीपवद् व्यञ्जकः पिण्डो न तु तत्पिण्डवृत्ति तत् ॥१२८॥
सर्वत्रागृह्यमाणत्वे सर्वत्रास्तीति को वदेत् ।
सर्वसर्वगतं तस्मात् न गोत्वमुपपद्यते ॥१२९॥
पिण्डसर्वगतत्वे तु काममेतददूषणम् ।
किन्तु नैवाद्य जातायां गवि गोप्रत्ययो भवेत् ॥१३०॥
पिण्डे नासीदसञ्जाते जातिर्जाते च विद्यते ।
संक्रामति न चान्यस्मात्पिण्डादन्यत्र निष्क्रिया ॥१३१॥
आयान्त्यपि न तत्पिण्डमपोज्झति पुरातनम् ।
न चांशैर्वर्तते चेति केयं व्यसनसन्ततिः ॥१३२॥

तस्मादपोहरूपमलीकमेव सामान्यं, न परमार्थसदिति। ततश्च तदभावात् तद्वतोऽनुपपत्तिरिति।

अत्रोच्यते— किं जात्यादेर्बाह्यस्य शब्दार्थस्याभावादपोहे पक्षपातः, उत प्रतीतिबलेनेति।

न तावत्प्रतीतिबलेन, प्रतीतेरनुगताकारविषयत्वेनापोहपरिपन्थित्वात्। नापि जातेरसत्त्वं, प्रत्यक्षेण, स्वलक्षणवदावेदितस्वरूपत्वात्।

आद्यमेव हि विज्ञानमर्थसंस्पर्शि चाक्षुषम् ।
न तदुत्तरभावीति किमिदं राजशासनम् ॥१३३॥
तदेवास्तु प्रमाणं वा तेनापि त्वधिगम्यते ।
व्यावृत्तं वस्तुनो रूपं नानुगामीति का प्रमा ॥१३४॥
भवेद् यदि विशेषैकविषयं निर्विकल्पकम् ।
सामान्याध्यवसायोऽयमकस्मात् कथमुद्भवेत् ॥१३५॥

न चैतच्छाब्दरूपम्। यतः

पश्यत्यनुगतं रूपमविज्ञातेऽपि वाचके ।
दाक्षिणात्य इवाकस्मात् पश्यन्नुष्ट्रपरम्पराम् ॥१३६॥

अपि च शबलेयपिण्डमवलोकितवतः कालान्तरे बाहुलेयपिण्डं पश्यतश्शाबलेय–पिण्डस्मरणमुत्पद्यते। तत्सामान्याभावे न घटते। न ह्यन्यस्मिन्दृष्टेऽन्यस्मरणनिमित्तं किञ्चिदस्ति। तयोरनुगतरूपाभ्युपगमे तदुपपद्यते नान्यथेति। किंच व्यक्त्यन्तरदर्शनेऽपि स एवायं गौरिति प्रत्यभिज्ञायते, तदप्यनुगतरूपाग्रहणे न युज्यते। न च व्यक्तिरेव प्रत्यभिज्ञायते, व्यक्तिभेदस्य प्रत्यक्षसिद्धत्वात्। यत्र च लघुतरपरिमाणतिलमुद्गादिप्रचयसन्निधानेऽवच्छिन्नस्वलक्षणे ग्रहणं नास्ति, तत्रानुवृत्तमेव रूपमिन्द्रियेण गृह्यते। तस्माद् विशेषवत् सामान्यापह्नवो न युक्तः।

तस्मात् पूर्वाक्षसम्पाते तुल्यत्वमभिगम्यते ।
नानात्वं चेति सामान्यभेदौ द्वावपि वास्तवौ ॥१३७॥
सामान्यमिदमित्येवमथ तत्रानुपग्रहः ।
व्यावृत्तमिदमित्येवं किं वा बुद्धिस्स्वलक्षणा ॥१३८॥
समानवृत्तिसापेक्षं न च सामान्यवेदनम् ।
तत्र सन्निहितत्वात् तु व्यक्तिवन्नानुपग्रहः ॥१३९॥
समानवृत्त्यपेक्षत्वात् सामान्यस्यानुपग्रहे ।
विशेषोऽपि च मा ग्राहि व्यावृत्तिं स ह्यपेक्षते ॥१४०॥
अनुवृत्तिर्हि येष्वस्य का तेषां ग्रहणे गतिः ।
व्यावृत्तिरपि येभ्योऽस्य का तेषां ग्रहणे गतिः ॥१४१॥

**अथानुवृत्तिव्यावृत्तिनैरपेक्ष्येण केवलम् ।**
**वस्त्वेव गृह्यते कामं कीदृक्तदिति कथ्यताम् ॥१४२॥**
**निर्विकल्पकवेलायां निर्देष्टुं तन्न शक्यते ।**
**तदुत्थास्तूभयत्रापि साक्ष्यं ददति निश्चयाः ॥१४३॥**
**यच्च वृत्तिविकल्पादिदूषणं तत्र वर्णितम् ।**
**तत् प्रत्यक्षमहिम्नैव सर्वं प्रतिहतं भवेत् ॥१४४॥**

यत्तावदुक्तं कुवलयामलकादिवदनवभासादिति तत्र प्रतीतिभेदो दर्शित एव। यत्तु देशभेदेनाग्रहणात्, तदग्रहे तद्बुद्ध्यभावादिति तत्र जातेस्तदाश्रितत्वं, नासत्त्वम्। यदप्युक्तं वृत्त्यनुपपत्तेरिति तत्राप्युच्यते, प्रतिपिण्डं कार्त्स्न्येनैव जातिर्वर्तत इति पिण्डान्तरे तदुपलम्भोऽस्त्येव। एकदेशास्तु जातेर्न सन्त्येव।

**क्वेदमन्यत्र दृष्टं चेदहो निपुणता तव ।**
**दृष्टान्तं याचसे यस्त्वं प्रत्यक्षेऽप्यनुमानवत् ॥१४५॥**

किंनामधेया वृत्तिरियमिति चेन्न नामधेयमस्याः जानीमः, पिण्डसमवेता जातिरित्येव प्रचक्ष्महे।

**(समवायविचारः)**

नन्वयुतसिद्धयोस्सम्बन्धः समवायः, स विप्रतिषेधादेव निरस्तः? न शक्यते निरसितुम्।

**प्रतीतिभेदाद् भेदोऽस्तु देशभेदस्तु नेष्यते ।**
**तेनावकल्पते वृत्तिस्समवायस्स तूच्यते ॥१४६॥**

अवयवावयविनोर्गुणगुणिनोश्चेयमेव वृत्तिः। अर्थान्तरत्वं चैतयोर्जातितुल्यन्यायतया सिद्धमेव। देशभेदश्च तयोर्नास्तीति विस्पष्टमयुतसिद्धत्वम्। यदप्युच्यते—

**नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता ॥१४७॥**

इति तदपि परिहृतमाचार्यैः 'जातं सम्बद्धं चेत्येकः काल' इति वदद्भिः।

**या चेह वृत्तिः स्रक्सूत्रभूतकण्ठगुणादिषु ।**
**जात्यादीनामनङ्गत्वात् ताभ्यां वृत्तिर्विलक्षणा ॥१४८॥**

तस्माद्वृत्त्यनुपपत्तेरित्यदूषणम्।

यदपि सर्वसर्वगतत्वं पिण्डसर्वगत्वं च विकल्प्य दूषितं तदपि यत्किञ्चित्; यथाप्रतीति तदभ्युपगमात्।

सर्वसर्वगता जातिरिति तावदुपेयते ।
सर्वत्र ग्रहणं तस्या व्यञ्जकव्यक्तिसन्निधे: ।।१४९।।
व्यक्तिर्व्यञ्जकतामेति जातेर्दृष्टैव नान्यथा ।
दृष्टिर्यत्र यदा त्वस्यास्तदा तत्रैव तन्मति: ।।१५०।।
सर्वत्र विद्यते जातिर्न तु सर्वत्र दृश्यते ।
तदभिव्यञ्जिका यत्र व्यक्तिस्तत्रैव दृश्यते ।।१५१।।
व्यक्तेरन्यत्र सत्त्वेऽस्या: किं प्रमाणं तदुच्यते ।
इहाप्यानीयमानायां गवि गोत्वोपलम्भनम् ।।१५२।।
गोपिण्डेन सहैतस्या न चागमनसम्भव: ।
देहेनेवात्मनस्तस्मादिहाप्यस्तित्वमिष्यताम् ।।१५३।।
अभिव्यक्तिस्तु तत्काला यत्कालं व्यक्तिदर्शनम् ।
तस्मात् सकृदभिव्यक्ता नान्यदापि प्रतीयते ।।१५४।।
अभिव्यक्तिश्च तद्देशा यद्देशा व्यक्तिरीक्ष्यते ।
तस्मादस्मिन्नभिव्यक्ता न देशेऽन्यत्र दृश्यते ।।१५५।।
पिण्डसर्वगतत्वेऽपि स्वयूथ्यै: कैश्चिदाश्रिते ।
भविष्यत्यन्यजातायां गवि गोधीस्तथाग्रहात् ।।१५६।।
जायमानैव हि व्यक्तिर्जायते जातियोगिनी ।
एक एव हि कालोऽस्या जातिसम्बन्धजन्मनो: ।।१५७।।
नेह जाते: पुरास्तित्वं न च संक्रान्तिरन्यत: ।
किं तु स्वहेतोस्सा व्यक्तिस्तादृशैवोपजायते ।।१५८।।
कथमेतदितीदं तु येन पर्यनुयुज्यते ।
इदमप्यपरं हन्त तेन पर्यनुयुज्यताम् ।।१५९।।
वृष: पिशङ्गो गौ: कृष्णा सा च नीलतृणाशिनी ।
ताभ्यामुत्पादितो वत्स: कथं भवति पाण्डुर: ।।१६०।।

यथा रूपादिसम्बद्धा सा व्यक्तिरुपलभ्यते ।
तथैव जातियुक्तेति का ते व्यसनसन्ततिः ॥१६१॥
अगोव्यावृत्ततायां च नैष प्रश्नो निवर्तते ।
तस्मादगोनिवृत्तं तदन्यजातं स्वलक्षणम् ॥१६२॥
तस्माद् वस्तुस्वभावस्य विदित्वाऽननुयोज्यताम् ।
चोद्यचुञ्चुत्वमुत्सृज्य प्रतिपत्तिर्निरूप्यताम् ॥१६३॥

प्रतिपत्तिश्च विशेषेष्विव सामान्येऽपि निरपवादा दर्शितैव। तस्माद् विशेषवदप्रत्याख्येयं सामान्यम् इति।

उपाधिरेवं त्रिविधः प्रधानमपि च त्रिधा ।
त्रिधोपस्कारवान् प्रातिपदिकार्थश्च वर्णितः ॥१६४॥
वाचकत्वं निपातानां द्योतकत्वं च निश्चितम् ।
कर्मप्रवचनीयानामुक्ता सम्बन्धसङ्गतिः ॥१६५॥

अथो विभक्त्यर्थविधिस्त्रिधोच्यते त्रिधैव वृत्त्यर्थपदार्थनिर्णयः ।
क्रियादिवाक्यार्थनिवर्तनात् ततस्त्रिधैव वाक्यार्थगतिः प्रपञ्च्यते ॥१६६॥

**इति महाराजाधिराज—श्रीभोजदेवविरचिते शृङ्गारप्रकाशे**
**उपाध्याद्यर्थचतुष्टयप्रकाशो नाम**
**॥ पञ्चमः प्रकाशः ॥५॥**

प्रकाश एषोऽस्तु रतिप्रियस्य शरः परः पञ्चम एव यस्मिन् ।
लग्ने स्मारेरपि हृष्यति स्वं वशंवदं फालगतं च चक्षुः ॥
सनातनः कश्चन भोजराजं जीर्णञ्च शीर्णञ्च विभाव्य तस्मै ।
यष्टीयति स्वं प्रतिभाभिधानं ललाटचक्षुः प्रतिसंश्रयाणः ॥



अथ

## शृङ्गारप्रकाशे षष्ठः प्रकाशः

विभक्त्यर्थादिचतुष्टयप्रकाशो नाम

### *(१. विभक्त्यर्थः)*

**विभक्त्यर्थ**स्त्रिधा १. सङ्ख्या, २. कारकं, ३. शेषश्च। तेषु—

**(१. सङ्ख्या)** कारकसम्बन्धिगतैकत्वद्वित्वबहुत्वानि **सङ्ख्या**।

सा षोढा— आभिधानिकी, वैवक्षिकी, नैमित्तिकी, पारिभाषिकी, वैभाषिकी पारिशेषिकी च। तासु—

**आभिधानिकी** यथा— आपः,. दाराः, लाजाः, द्वयम्, अनेकं, नियुतमिति। अत्राभिधानतो बहुवचनैकवचने एवेत्याभिधानिकी।

**वैवक्षिकी** यथा— रोदसी रोदस्यौ, कबरी कबर्यः, स्तनौ स्तनाः, विशाखा विशाखे विशाखाः, दृक् दृशौ दृशः, जगत् जगती जगन्ति। अत्र विवक्षयैकत्वद्वित्वबहुत्वानीति वैवक्षिकी।

**नैमित्तिकी** यथा— वृक्षः, शोभनः, दम्पती, पितरौ, अक्षाः, गभस्तय इति। अत्र वस्तुनो निमित्तस्य सद्भावान्नैमित्तिकी।

**पारिभाषिकी** यथा— मार्दङ्गिकपाणविकं पुरुषौ (काशिका २.४.२), खलतिकं वनानि (काशिका १.२.५१), गोदौ ग्रामः (काशिका १.२.५१), तिष्यपुनर्वसू तारकाः (काशिका १.२.६३), पञ्चाला जनपदः (काशिका १.२.५२), स चाहं च पचाव इति। अत्र द्वित्वबहुत्वादिषु एकत्वादिपरिभाषणमिति पारिभाषिकी।

**वैभाषिकी** यथा— अश्वबडबम् अश्वबडबौ (काशिका २.४.१२), लक्षन्यग्रोधं प्लक्षन्यग्रोधाः (काशिका २.४.१२), पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्य (काशिका १.२.६०) इति। अत्र विभाषयैकत्वद्वित्वबहुत्वानीति वैभाषिकी।

**पारिशेषिकी** यथा—एकः द्वौ बहवः, उभौ द्वित्राः, अर्धतृतीया इति। अत्रैकाद्युक्तसङ्ख्यापरिशेषे स्वादय इति पारिशेषिकी। तदुक्तम्—

**निमित्तमेकमित्यत्र विभक्त्या नाभिधीयते ।**
**तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ॥१॥** (वाप. ३.११.२७)

**(२. कारकम्)**

**कारकं** षड्विधमभिहितं पुरस्तात् (पृ.२२१–२४५)। तद् द्वितीयादिवाच्यत्वेन पृथक्पृथक् षट्प्रकारं प्रथते। तत्र–

**कर्म** द्वितीयावाच्यं, कटं करोति; तृतीयावाच्यं, मात्रा सञ्जानीते; चतुर्थीवाच्यं, न त्वा शुने मन्ये; पञ्चमीवाच्यं, परि त्रिगर्तेभ्यो वृष्टो देवः; षष्ठीवाच्यं, मातुः स्मरति; सप्तमीवाच्यम्, अधीती व्याकरणे।

**कर्ता** द्वितीयावाच्यः, गमयति ग्रामं देवदत्तम्; तृतीयावाच्यः, चैत्रेण कृतम्; चतुर्थीवाच्यः, मूत्राय कल्पते यवागूः; पञ्चमीवाच्यः, उपाध्यायादधीते; षष्ठीवाच्यः, व्यासस्य कृतिः; सप्तमीवाच्यः, ब्राह्मणेषु भुञ्जानेषु वृषला आसते।

**करणं** द्वितीयावाच्यम्, अक्षान् दीव्यति; तृतीयावाच्यं, दात्रेण लुनाति; चतुर्थीवाच्यं, शताय परिक्रीतः; पञ्चमीवाच्यं, स्तोकान्मुक्तः; षष्ठीवाच्यं, सर्पिषो जानीते; सप्तमीवाच्यम् अक्षेषु दीव्यति।

**सम्प्रदानं** द्वितीयावाच्यं, देवदत्तमभ्यसूयति; तृतीयावाच्यं, दास्या सम्प्रयच्छते; चतुर्थीवाच्यं, देवाय ददाति; पञ्चमीवाच्यं, गुरोराभ्य(?) गाः प्रयच्छति; षष्ठीवाच्यं, घ्नतः पृष्ठं ददाति; सप्तमीवाच्यं पुष्पेषु स्पृहयति।

**अपादानं** द्वितीयावाच्यं, अर्जुनं योद्धारः; तृतीयावाच्यं, धनुषा विध्यति; चतुर्थीवाच्यं, श्राद्धाय निगृह्णते; पञ्चमीवाच्यं, ग्रामादागच्छति; षष्ठीवाच्यं कृष्णा गवां सम्पन्नक्षीरतमा; सप्तमीवाच्यं, भुक्त ओदनः कंसपात्र्याम्।

**अधिकरणं** द्वितीयावाच्यं, ग्राममधिवसति; तृतीयावाच्यं, समेन धावति; चतुर्थीवाच्यं, युद्धाय सन्नह्यति; पञ्चमीवाच्यं, क्रोशाद्विध्यति; षष्ठीवाच्यं, गवामीश्वरः; सप्तमीवाच्यं, तीर्थं उपवसतीति।

**(३. शेषः)** कारकातिरेकी क्रियाकारकपूर्वकः सम्बन्धविशेषः **शेषः**।

स त्रिधा **उक्तादन्यः, कारकेभ्योऽन्यः, कारकाणामविवक्षा च**। तेषु–

**उक्तादन्यत्वे** भिन्नसम्बन्ध्यपेक्षः, अभिन्नसम्बन्ध्यपेक्षश्च।

तयोराद्यो राज्ञः पुरुष इति यथा– (कुसं. ७.१९)

**पत्युश्शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥२॥**

द्वितीयो राहोश्शिर इति यथा—

**शिखिच्छदच्छत्रपतत्रमण्डलीभरोपरुद्धं मुखमेणचक्षुषः ।**
**मुखेन राहोरभियोक्तुमुद्यतं कलावतो बिम्बमिव व्यराजत ॥३॥**

**कारकेभ्योऽन्यत्वे** उपात्तक्रियोऽनुपात्तक्रियश्च।

तयोराद्योऽन्नस्य हेतोर्वसतीति यथा— (रघु.२.४७)

**एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।**
**अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४॥**

द्वितीयो ब्राह्मणस्य तुल्य इति यथा— (रघु. ६.७९)

**कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।**
**त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥५॥**

**कारकविवक्षायां** द्रव्यापेक्षः क्रियापेक्षश्च।

तयोराद्यः साधोः स्वं धनं रोचत इति यथा— (माघ.१०.२३)

**दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन ।**
**सस्वदे मुखसुरं प्रमदानां नाम रूढमपि च व्युदपादि ॥६॥**

द्वितीयो न माषाणामश्नीयादिति यथा—(कुसं. ५.८३)

**निवार्यतामालि! किमप्यसौ वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यस्स पापभाक् ॥७॥**

सहार्थतादर्थ्यहेतुलक्षणोपपदसम्बोधनादयस्तु सम्बन्धविशेषा उपस्काराधिकारेऽभिहिता (द्र.पृ.२६५) इति नेह प्रतन्यते। ननु च सम्बन्धस्य क्रियाकारकपूर्वकत्वात् कारकेष्वेव शेषसम्बन्धस्याप्यन्तर्भाव इति सङ्ख्या शक्तिश्च विभक्त्यर्थः।

तत्र जातौ पदार्थे जात्यभिधायिनः प्रातिपदिकस्य सङ्ख्याकारकाभिधायिन्या विभक्त्या सम्बन्धो न घटते। न हि जातेः सङ्ख्याशक्तियोगस्संभवति।

उच्यते, जात्यविनाभावेन लक्षिताया व्यक्तेः सङ्ख्याशक्तियोगादेकार्थसमवायलक्षणस्सम्बन्धो भविष्यति।

नैवम्; यथानन्त्यव्यभिचाराभ्यां भेदवतीं व्यक्तिमशक्ताः प्रकृतयोऽभिधातुमित्यभिन्नामव्यभिचारिणीं च जातिमाचक्षते, तथाधारभेदाद्भिन्नामानन्त्यव्यभिचाराभ्यामशक्ता विभक्तयः शक्तिं सङ्ख्यां चाख्यातुम् अतस्तदाधारां शक्तिसङ्ख्याजातिमाचक्षते। ततश्च प्रकृत्यर्थसम्बन्धाया अपि व्यक्तेर्विभक्त्यर्थेन शक्तिसङ्ख्यासामान्येनासम्बन्धादनुपपन्न एव प्रकृतिप्रत्यययोः समभिव्याहारः।

नानुपपन्नः, एकार्थसमवेतसमवायेन तदुपपत्तेः।

कथं पुनस्सामान्याभिधानेनाभिधीयमानयोस्सङ्ख्याद्रव्ययोः परस्परेण सम्बन्धः? यथाभिधीयमानयोः। यथा शब्देनाभिहितावर्थौ बुद्धौ विपरिवर्तमानौ मिथस्सम्बध्येते तथा शब्देनाभिहितादर्थात् प्रतीयमानावपि परस्परेण सम्बन्धमनुभविष्यत इति।

किं पुनरियं सङ्ख्या शक्तिर्वा नियोगतो जातिमवच्छिनत्ति?

नेत्याह। न हि ग्रहं समार्ष्टीति श्रूयमाणमेकवचनमेकत्वसङ्ख्यां क्रियाङ्गभावेन प्रतिपादयति। नापि सक्तून् जुहोतीति द्वितीया श्रुतिः सक्तूनां होमक्रियायां कर्मशक्तिमभिधत्ते। अपि त्वक्षान्दीव्यतीतिवत् संबन्धसामान्यतिरोहितकर्मरूपान् सक्तून् साधकतमत्वेन होमकर्मणि नियुङ्क्ते। क्वचित्तु तद्रूपयैव विभक्तिश्रुत्या संख्याकर्मादिशक्तीनां क्रियास्वङ्गभावोऽवबोध्यते, यथा पशुमालभेत व्रीहीनवहन्तीति।

कुतः पुनरिदं श्रुत्युपात्ते अपि क्वचिदेव सङ्ख्याशक्ती विवक्ष्यते?

तत्र तावत् सङ्ख्यां प्रति श्रूयते— [१]सत्त्वभूतम् इदंतदिति व्यपदेशयोग्यं वस्तु न शक्यते सङ्ख्यामन्तरेण शब्दैरभिधातुम्[२], ससंख्यानामेव शब्दानां सत्त्वाभिधायकत्वात्; अतो नान्तरीयकमुपादानं संख्याया इति।

सत्त्वनिर्देशे संख्या न विवक्ष्यते, यथा ब्राह्मणो न हन्तव्य इति[३]। एवं च जात्यापि विना वस्तुमात्रस्य संप्रमुग्धत्वाद् विवेकेनाभिधानमशक्यम्। अतो नान्तरीयकं जात्युपादानमिति जातावप्यविवक्षा प्राप्नोति।

अपर[४] आह— यत्र संख्यापदैरेकादिभिस्संख्या अभिधीयते, तत्र नियोगतः कर्माङ्गभावेन विवक्ष्यते, यथा एकां गां ददाति, द्वाभ्यां खनति (तैसं. ५.१.४१), त्रीन् पशूनालभत इति। एकादिशब्दरूपाद्धि सा प्रतीयमाना न शक्यमविवक्षितुम्। अन्यत्र तु शब्दसंस्कारमात्रपरत्वादेकवचनादेरविवक्षा, यथा गौः पदा न स्प्रष्टव्या (न्यायवा.२.२.६७)।एतदपि नास्ति 'यस्योभयं हविरार्तिमार्च्छेद्' इत्येवमादावुभयादि— शब्दोपादानादप्यविवक्षादर्शनात् (न्यायमं.)।

अन्ये मन्यन्ते 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१.२.५३) इति ज्ञापकादेकवचनं, च न विवक्ष्यते। द्विवचनं विवक्ष्यते, यथा 'सारस्वतौ भवतः' (तैसं. २.४.६.१) इति।

---

१—४. वाप. ३ जाति।

तदप्ययुक्तं, द्विवचनस्यापि अविवक्षादर्शनात्। यथा– (वाप. जाति ३.१.५३)

**यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम्।। ८।।**

यतस्तदौषधमेकस्यापि दीयमानं वातादिविकारं शमयितुं शक्नोति। एवं तर्हि यत्र पराङ्गतया जातिर्विधीयते, तत्र संख्या विवक्ष्यते, यत्र तु स्वसंस्कारप्रतिपत्तयेऽनूद्यते तत्र न विवक्ष्यते। यथा पशुना यजेत, ग्रहं संमार्ष्टीति। तदेतदुभयमपि उदाहरणमात्रेणाशक्यं प्रतिपत्तुमिति युक्तिरभिधातव्या। सेयमुच्यते–पशुना यजेतेति यागस्य फलवत्तया प्राधान्यं, तदङ्गं पशुः, अङ्गं च यत्प्रधानस्योपकरोति। एकेनैव पशुना कृतः प्रधानस्योपकार इति द्वितीयो नोपादीयते। यदि हि यस्य यावन्तः पशवस्सन्ति स तावत उपादत्त इत्याश्रीयते, प्रकृतस्य यागस्यैकेन पशुना, समापितत्वादितरवैयर्थ्यं मा भूदिति यागान्तराणि क्रियन्ते। गुणेन द्रव्येण प्रधानं यागः प्रयुक्तस्स्यात्। न चैष न्यायो यद्गुणः प्रधानं प्रयुङ्क्ते। किंच पशुमालभेत, पशुना यजेतेत्यादौ क्रियाङ्गभावेनाप्रज्ञातस्य पशोस्साधनभावप्रख्यापनायेदमुत्पत्तिवाक्यम्। तत्र शब्ददर्शनावसेयत्वादर्थस्य यथाभूतं शब्द आह तथाभूतस्सोऽर्थोऽनुगततया समाश्रीयते। शब्देऽन्वयव्यतिरेकाभ्यां प्रकृतेर्जातिरिव विभक्तस्संख्याभिधेयत्वेनावधार्यते। यदि च द्वितीयस्य पशोरुपादानमन्तरेण शब्दार्थो न समाप्येत, क्रिया वा न निवर्त्येत, तदोपादीयेतापि द्वितीयः। पशुत्वजातेश्च प्रतिव्यक्त्यविकल्पात्मनः समाप्तत्वादेकपश्ववदानैश्च यागक्रियाभिनिर्वृत्तेर्द्वितीयो नोपादीयते।

न च पशुना यजेतेत्यस्यास्संख्याया विरोधिनी संख्या उत्पत्तिवाक्यगता काचिद्विद्यते यदनुरोधादियं त्यज्येत, यस्मादिदमेव पशोरुत्पत्तिवाक्यम्, अतश्शब्दवत्त्वात् सङ्ख्यान्तरेण चाविरोधात्। पशुना यजेतेत्यादौ सङ्ख्या विवक्ष्यते, ग्रहं संमार्ष्टीत्यत्र तु न विवक्ष्यते। यस्मात् प्राजापत्या नव ग्रहा भवन्तीत्यादौ ग्रहाणामुत्पत्तिवाक्ये या अनेकत्वसङ्ख्या सा प्रधानविषया, तत्र ग्रहाणां विधीयमानत्वात्। ग्रहं संमार्ष्टीत्यत्र तु या एकत्वसंख्या सा शेषविषया, सम्मार्गस्य विधीयमानत्वात्, तदधिकरणसंपादनार्थत्वाद् ग्रहशब्दस्य।

न च युक्तं यत्प्रधानसम्बन्धिनी संख्या शेषसंख्यया बाध्यते।

ननु चोत्पत्तिवाक्यवशेनानेक एव ग्रहो गृह्येत। ग्रहमित्येतस्माच्चैक–वचनादेकस्सम्मृज्येत। किमत्र बाधितं स्यात्? एवं तर्हि विधानवाक्ये पूर्वमेव प्रज्ञाताङ्गभावाः सम्मार्गमपूर्वं विधातुं केवलं ग्रहमित्यनेन स्मृतौ संनिवेश्यन्ते।

ग्रहस्मृतिश्चानुभवसामर्थ्यादुद्भवन्ती यथानुभूतानेवार्थान् दर्शयतीति नैको ग्रहस्संमृज्यते।

ननु च यथा पूर्वानुभूतचमसाद्यनेकपदार्थसन्निधौ संमार्गविधानाय ग्रहश्रुति- र्ग्रहाणामेव स्मारयति न चमसादीनां तथैवानेकग्रहसंन्निधावेकवचनमेकस्यैव स्मारयेत्। येन हि बहवोऽनुभूतास्तेनैकोऽप्यनुभूत एव।

सत्यमेतत्, किन्तु प्रतीयमानोऽप्यसौ संख्याभेदः क्रियां प्रत्यविधीय- मानत्वादसमर्थः क्रियामेकस्मिन्नवस्थापयितुम्। अविधीयमानश्च संख्याभेदः, यतोऽत्रश्रुत्या ग्रहस्य संमार्गो विधीयते। तदेतावति पर्यवसितं वाक्यम्। न चापरश्शब्दोऽस्ति, येनैकस्य स विधीयेत। न चैकश्शब्द उभयं शक्नोति विधातुम् अप्रज्ञातं संमार्गं प्रज्ञातस्य चैकत्वेन संबन्धमिति, प्रवृत्तिभेदात्।

अथ ग्रहैकत्वाभ्यां विशिष्टस्संमार्गो विधीयते, न भिद्येत प्रवृत्तिः; अर्थस्तु नैवं, यतो ग्रहार्थः संमार्गस्तस्य प्रयोजनवत्त्वात्।

विभक्तिविशेषश्च प्राधान्यं ग्रहस्य दर्शयति। अतो न विधीयते सङ्ख्या।

इह तर्हि कथं चित्रगवीं बध्नातीति चित्रो गुणो विधीयते, यतोऽत्रापि गोरस्वतन्त्रीकारस्तस्याश्च चित्राया इति भिद्यते प्रवृत्तिः; गुणद्रव्ययोगस्य श्रुत्यैवाभि- धीयमानत्वात्, तद्विषयत्वाच्च क्रियाया नात्रापराध इति चेद्, ग्रहमित्यपि श्रुतिरेव सङ्ख्यायास्तदधिकरणस्य च द्रव्यस्य क्रियाङ्गभावमभिधत्ते। तथा शोणं योजयेदित्ये- कशब्दोपादानयोर्जातिगुणयोरङ्गीकरणम्। एवं तर्हि स्वार्थायां प्रवृत्तौ सङ्ख्याभेदस्य विधातुमशक्यत्वादविवक्षिता सङ्ख्या, यथा ग्रहं संमार्ष्टीति। अत्र ग्रहार्थत्वात् संमार्गस्य प्रधानं ग्रहाः, तदङ्गं संमार्गः (पम. १.२.६४)। पशुना यजेत, शोणं योजयेत्, चित्रगवीं बध्नातीत्यादौ तु यागादिकर्मार्थत्वात् पश्वादीनामप्रधानानां ससङ्ख्यानां सगुणानां च विशिष्टानामेव विधानमिति विवक्ष्यते सङ्ख्या गुणश्चेति। आचार्यप्रवृत्तिरप्येतदेव ज्ञापयति 'प्रधाने संख्या न विवक्ष्यते, गुणे तु विवक्ष्यत' (पम. १.२.६४) इति। तथा हि- 'सरूपाणामेकशेष' इति कर्मसाधने शेषशब्दे शेषशब्दाभिधेयस्य द्रव्यस्य साधुत्वाद् व्याख्यानेनाभिधीयमानसंस्कारत्वात् प्राधान्यम्। अतः स्वार्थे प्रवर्तमानस्याविवक्षित- सङ्ख्यात्वादेकशब्दोपादानं कृतमेकश्शिष्यत इति। तदेत लिङ्गं प्रधानस्याविवक्षिता संख्येति। एवं सुबन्तं सुबन्तेन समस्यत इति संख्याया अङ्गीकरणाद् बहूनां समासो न भवति, यथा महत्कष्टं श्रित (मभा. २.१.१) इति। अत्र ह्येवंप्रकारावयव-

सन्निवेशावच्छिन्नस्समुदायस्साधुरित्यन्वाख्यायते। अतोऽवयवपरामर्शोपायेन समुदायस्य संस्काराधानप्रक्रमे प्रधानं समुदायस्तमुद्दिश्य प्रवर्तमाना अवयवा उपात्तसङ्ख्याविशेषाङ्गी–करणेन प्रवर्तन्ते। यत्र तु यत्नान्तरमारभते तत्र बहूनामपि भवति, यथा 'कालाः परिमाणिना' (२.२.५) इति; बहुवचनाद् द्व्यह्नजातः (पम. २.२.५) इति। यथा च बहुव्रीहिद्वन्द्वविधावनेकग्रहणान्मत्तबहुमातङ्गं वनं, धवखदिरपलाशा इति। क्वचित् पुनर्गुणेऽपि सङ्ख्या न विवक्ष्यते, यत्र तदविवक्षया प्रधानान्तरस्य सिद्धिर्भवति, यथा 'कर्तुरीप्सिततमं कर्म' (१.४.४९) इति। अत्र हीप्सिततमस्य कर्मसंज्ञायां विधीयमानायाम् ईप्सया अवच्छेदायोपादीयमानः कर्ता यद्याश्रितैकत्वसंख्यः प्रतीयेत, अनेकस्येप्सितं वस्तु कर्मसंज्ञासंबन्धादपेयात्। अतः प्रधानसंस्कारोपरोधतिरस्काराय कर्तानपेक्षितसंख्या–विशेषस्समाश्रीयते।

ननु च प्रयोजनमिदं प्रधानान्तरसिद्धिः। तस्मादविवक्षायामुपपत्तिर्वक्तव्या।

इयमुच्यते सामान्यनिबन्धनत्वादीप्सिततमशब्दस्य संबन्धिनामविशेषेण प्रसक्तौ साधनान्तरोच्छित्तये कर्तृग्रहणं क्रियते। तदुपात्तविपरीतप्रतिषेधमात्रोपक्षयमसमर्थं संख्याभेदमङ्गीकर्तुमिति।

शक्तिः पुनरप्रधाने प्रधाने वा संख्यावति विभक्त्या विधीयमाना विवक्षामेवानुरुध्यते। एवं च यथा पश्वादीनां ससंख्यानां तथा ग्रहादीनामसंख्यानामेव क्रियासु साधनभावो भवति। कथं पुनः पश्वादिगता संख्या साधनत्वेनावगम्यते, यावता प्रातिपदिकार्थस्य साक्षात् पारम्पर्येण वा संबन्धिसाधनत्वं संख्या च विभक्त्या विधीयते। न तु संख्यासाधनत्वयोः परस्परेण संबन्धोऽस्ति। एवं तर्हि प्रथमतरं व्यक्तिस्संख्यया संबध्यते। संख्या संसर्गप्राप्तातिशया तु साधनभावेन। सोऽयं साधनभावो विशिष्टे निपाताद् विशेषणमपि साधनमित्यावेदयति। यथा सायुधेन जितमिति।

कुतः पुनरयं संख्यासाधनत्वयोरेकशब्दोपनिबन्धनयोरस[1]निबन्धकारिकालभेदेन संबन्धः?

न ह्येतदस्ति। संख्यया संसर्गमनवाप्य न शक्नोति साधनभावमासादयितुमिति। एवं तर्हि संख्यासाधनभावाभ्यां व्यक्तिस्संबध्यते। ताभ्यामुत्पादितात्मातिशयामाख्यात–विभक्तिस्तां क्रियासु विनियुङ्क्ते। सा विशिष्टा क्रियासंबन्धमनुभवतीति विशेषणमपि क्रियासंबद्धं प्रतीयते।

---

१. 'असनिबन्ध; सह निबन्धः सनिबन्धः; स न भवतीति असनिबन्धः' इति राघवाचार्यः।

ननु च कर्मकरणादिकारकं विभक्त्यर्थः, तच्च क्रियासिद्धावुपात्तव्यापारत्वाच्छक्तिमद्द्रव्यमेव तस्मिंश्च प्रातिपदिकेनैवोक्ते किं विभक्त्योच्यते?

**(शक्तितत्त्वम्)**

शक्तिरिति ब्रूमः।

द्विधा हि द्रव्यं सत्त्वभूतमसत्त्वभूतं च। तयोश्शक्तिसङ्ख्याश्रयस्सत्त्वभूतं वृक्षाद्यर्थः। तदनांश्रयोऽसत्त्वभूतमव्ययाद्यर्थः। तदुभयमपि निरुपाध्येव प्रातिपदिकेनोच्यते। तदाश्रितास्तु सशक्तिसङ्ख्यासंबन्धोपाधयो विभक्त्येति। ननु च

**स्वरूपादुद्भवत् कार्यं सहकार्युपबृंहितम् ।**
**नैव कल्पयितुं शक्तं शक्तिमन्यामतीन्द्रियाम् ॥ ९॥** (न्यायमं.)

शक्तिर्हि कल्प्यमाना पदार्थस्वरूपवन्नित्या वा स्यात् कार्या वा? तत्र नित्यत्वे नित्यमेव कार्योत्पादप्रसङ्गः। सहकार्यपेक्षा तु स्वरूपस्यैवास्तु किं शक्त्या? कार्यत्वे तु पदार्थस्वरूपमात्रकार्यतायां सदा शक्तेरुत्पादात् सदैव कार्योत्पादः। सामग्रीकार्यं तु कार्यमेवास्तु, किमन्तराले शक्त्या? अशक्तात् कारकात् कार्यानिष्पत्तिरिति चेच्छक्तिरपि कार्यं, तदुत्पत्तौ शक्त्यन्तरकल्पनादनवस्था; अन्यथाऽभ्युपगमव्याघातः।

आह, दृष्टसिद्धये ह्यदृष्टं कल्प्यते। शक्त्यन्तरकल्पनायाः शक्तिश्रेणनिर्माण एव क्षीणत्वात् कारकाणां मा भूत् कार्यव्याघात इत्येकैव शक्तिः कल्प्यते, तत्कुतोऽनवस्था?

नैवम्; अन्यथापि तदुपपत्तेः। यदि ह्यर्थव्यक्तिः क्रियासु प्रतिहन्येत तदा तदतिरिक्तशक्तिकल्पना युक्तेति। अप्रतिहताश्च सहकारिलाभादपि कार्योपजनाश्चार्थव्यक्तयः। तत्किं वृथा शक्तिकल्पनयेति।

ननु शक्तिमन्तरेण कारकं कारकमेव न भवेत्, भावतत्त्वस्य क्रियासु प्रतिघातात्। रूपमेव हि दृश्यते न रसादि, दर्शनायतनं पश्यति न रसनादि, रस एव रस्यते न रूपादि, रसनमेव रसयति न चक्षुरादि, आप एव पिपासामपनयन्ति न त्वग्निः, अग्निरेव शीतं शमयति न त्वाप इति। अप्रतिघाते हि वस्तुस्वरूपाविशेषात् सर्वस्मात्सर्वकार्योदयप्रसङ्गः। ततश्चक्षुरिव रसनमपि पश्येत्, रूपमिव रसोऽपि दृश्येत, रसनमिव चक्षुरपि रसयेत्, रस इव रूपमपि रस्येत, आप इवाग्निरपि पिपासामपनयेत्, अग्निरिवापोऽपि शीतं शमयेयुः। यथा च तैलार्थिना तिला उपादीयन्ते तथा सिकता अप्युपादीयेरन्। यथा वा पादपं छेत्तुमनसा

परशुरुद्यम्यते तथा पादुकाद्यप्युद्यम्येत। अपि च विषदहनयोर्मारणे दाहे च शक्तावनिष्यमाणायां मन्त्रप्रतिबद्धायां यत्तयोस्स्वकार्यौदासीन्यं तत्र का युक्तिः?

चक्षुः श्रोत्रयोर्वा दर्शने श्रवणे च रोगादिना यत् स्वकार्याकरणं तत्र कोपपत्तिः? न हि मन्त्रादिना रोगादिना वा तत्स्वरूपाणि सहकारिणो वा प्रतिबध्यन्ते, तद्रूपेणैव तेषामुपलम्भात्। शक्तयस्तु प्रतिबध्यन्त इति सत्स्वपि स्वरूपसहकारिषु कार्यानुत्पादो युक्तः। तस्माद् यथा सुखादिकार्यानुमितमदृष्टं, सातिशयबुद्धिनिबन्धन–स्मृतिप्रत्ययहेतुस्संस्कारः, क्रियाविशेषजनितः क्रियान्तरप्रसवोपयोगी वेग इत्याद्य–परमतीन्द्रियमेव कल्प्यते भवद्भिः, तथा शक्तिरपि कार्यातिशयकारणमतीन्द्रिया कल्प्यतामिति।

तदनुपपन्नम्; शक्तिमन्तरेणापि क्रियाप्रतिघातादीनामुपपत्तेः। स्वकारणपरम्परा–यातनियतस्वभावतयैव भिन्नस्वभावा रसादयो रूपादिभ्यस्ते कथं रूपादिसाध्या–मर्थक्रियामतथाभूतास्साधयेयुः? नियोगतश्चैतदङ्गीकर्त्तव्यम्; शक्तिकल्पनायामपि तुल्यानुयोगित्वात्। कथमेताश्शक्तयो नियताधारा न पुनरवयवेन शक्तीर्व्याप्नुवन्तीति। पदार्थस्वरूपातिशयादिति चेत्कार्यभेदोऽपि तत एव सेत्स्यति। अपि चाश्रयस्य भेदे कथं शक्तिभेदः? यतो वा शक्तयः प्राप्तरूपभेदास्तत एवाश्रयरूपभेदेन कार्यभेदसिद्धेः किं शक्तिभेदकल्पनेन? यास्तर्हि तुल्यरूपा व्यक्तयः कार्यमतुल्यं साधयन्ति तासु कथम्? यथा गल्वर्ताश्चन्द्रकान्तिभिः स्यन्दन्ते न सूर्यग्रावाणः, करका अर्कांशुभिर्विलीयन्ते न मुक्तामणयः, आन्तरं तेजः पश्यति न बाह्यम्, प्राणो वायुः प्राणिति न व्यानः, श्रोत्राकाशश्शृणोति न वक्त्राकाशः, विद्वान् क्रियास्वधिक्रियते नाविद्वानिति तुल्यजातीयत्वेऽपि तेषामदृष्टप्रतिनियमो द्रव्यान्तरसंपर्कभेदश्च कार्यभेदं व्यवस्थापयति। यास्तर्ह्यभिन्ना भिन्नमर्थव्यक्तयः कार्यं साधयन्ति तासु कथम्? यथा– तदेव तेजो दहति प्रकाशयति शीतं चापनुदति, ता एवापः प्लावयन्ति, क्लमं चापनयन्ति, तादृशः स तेजसः पयसो वा रूपातिशयः कर्मण इव संयोगविभागवेगानुकूलता, धर्मस्येव सुखज्ञानापवर्गकारणत्वमिति। उपादाननियमे तु न वयमन्यं कंचिदभिनवं भावानां कार्यकारणभावमुत्पादयामः, किंतु यथा प्राप्तमनुसरन्तो व्यवहरामः (न्यायमं.)। तत्र तैलोत्पादपादपच्छेदादावन्वयव्यतिरेकाभ्यां वृद्धव्यवहाराद्वा तिलपरश्वधादेरेव कारणत्वमवगच्छाम इति तदेव तदर्थिन उपादद्महे, न सिकतापादुकादीति। न च तिलादेः

परश्वधादेर्वा स्वरूपे सत्यपि सदा कार्योदयः। स्वरूपवत् सहकारिसन्निधेरप्यपेक्षणीयस्य सर्वदानुपपत्तेः। सहकारिवर्गे च धर्मादिकमपि निपतति; तदपेक्षे च कार्योत्पादे कथं सर्वस्मात् सर्वसम्भवः? धर्मादीनां तु जगद्वैचित्र्यादिकार्यबलेन कल्पनमपरिहार्यम्। यद्यपि विषदहनयोः सन्निधाने सत्यपि मन्त्रोपयोगात्तत्कार्याजननं तदपि न शक्तिप्रतिबन्धनिबन्धनम्। अपि तु सामग्र्यन्तरानुप्रवेशहेतुकम्।

ननु मन्त्रेणानुप्रविशता किं कृतम्?

न किञ्चित्कृतम्। सामग्र्यन्तरं तु सम्पादितम्। काचिद्धि सामग्री कस्यचित्कार्यस्य हेतुः, स्वरूपं तदवस्थमेवेति चेदभक्षितमपि विषं कथं न हन्यात्? तत्रास्यसंयोगाद्यपेक्षणीयमस्ति। मन्त्राभावोऽप्यपेक्ष्यताम्। दिव्यकाले धर्म इव मन्त्रोऽप्यनुप्रविष्टः कार्यं प्रतिहन्ति। शक्तिपक्षेऽपि वा मन्त्रस्य को व्यापारः? मन्त्रेण हि शक्तेर्नाशो वा क्रियते प्रतिबन्धो वा? न तावन्नाशः, मन्त्रापगमे पुनः कार्यदर्शनात्। प्रतिबन्धस्तु स्वरूपस्यैवास्तु।

ननु स्वरूपस्य कि जातम्?

शक्तेरपि किं जातम्?

कार्यौदासीन्यमिति चेत्तदितरत्रापि समानं स्वरूपमस्त्येव, दृश्यमानत्वात्। शक्तिरप्यस्ति पुनः कार्यदर्शनानुमेयत्वात्। एतेन चक्षुःश्रोत्रयोरपि रोगादिना दर्शनश्रवणशक्तेर्नाशप्रतिबन्धविकल्पो व्याख्यातः। अपि च व्यापारोऽपि अतीन्द्रिय– शक्तिवदिष्यते भवद्भिः; अन्यतरकल्पनयैव च कार्योपपत्तेः किमुभयकल्पनागौरवेण?

शक्तमप्यव्याप्रियमाणं न कारकमिति चेत् शक्तमिति कथं ज्ञायेत?

कार्यदर्शनादिति चेद् व्यापारादेव कार्यं सेत्स्यति। पादुकादेर्व्याप्रियमाणादपि न पादपच्छेदं पश्यामि। प्रत्यक्षस्तर्हि व्यापारो नातीन्द्रियः, यतः कार्यदर्शनात् पूर्वमपि व्याप्रियमाणत्वं जानासि। कार्यानुमेयो हि व्यापारः कार्याद् विना न ज्ञायेतैव। कार्यं त्वन्यतरस्मादपि घटमानं नोभयं कल्पयितुं प्रभवतीत्यसम्भवः। शक्तेरिति चेदत्रोच्यते स्वरूपं स्वरूपमिति यद्ब्रूषे तत्र किमिदं स्वरूपं नाम? न तावद्द्रव्यं; द्रव्यस्य स्वरूपमिति भेदेनाभिधानात्। किं पुनस्तत्? सजातीयेभ्यो विजातीयेभ्यश्च भेदको धर्म इति नस्तर्कः। तं हि भवन्तोऽपि अर्थतत्त्वं भावतत्त्वमिति भावप्रत्ययेन भाषन्ते। स च यस्य गुणस्य

भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ (५.१.११९) इति गुणाभिधाने स्मर्यते।
**गुणो धर्मः सामर्थ्यमर्थक्रियाकारित्वमतिशयश्शक्तिरिति चैकोऽर्थः।**

**स तु द्रव्याद् विभिन्नो वा द्रव्यस्यात्मैव वा तथा ।**
**व्यतिरेकमुपाश्रित्य साधनत्वाय कल्पते ॥१०॥** (वाप.३.७.१५)

परस्परतो हि व्यावर्तमानशरीराः करणादयस्साधनभेदाः कथमेकद्रव्यात्मता-मुपयन्तो न सङ्कीर्येरन्? असङ्करे वा कथममीषामेकद्रव्यात्मता युज्यते? तस्मादेकद्रव्याधिकरणा करणादिप्रतीतिरेवास्या द्रव्याद् भेदमापादयति। किञ्च

**विभक्त्यर्थेऽव्ययीभाववचनादवसीयताम् ।**
**अन्यो द्रव्याद् विभक्त्यर्थस्सोऽव्ययेनाभिधीयते ॥११॥** (वाप. ३.७.१६५)

तथा हि– विभक्त्यर्थे वर्तमानमव्ययमुत्तरपदेन समस्यते। यदि च विभक्त्यर्थ इत्यनेन शक्त्याश्रयस्सत्त्वभूतं द्रव्यमुच्यते, तदसत्त्ववाचिनाव्ययेन नाभिधीयेत। तस्य चार्थस्य प्रातिपदिकेनैवोक्तत्वात् तदभिधाय्यव्ययमप्रयोगार्हमेव स्यात्। एवं च अधिस्त्रि, अधिकुमारीति न सिध्येत्। यत्र हि पदद्वयं सङ्गतार्थं प्रयुज्यते स विषयस्समाससंज्ञायाः। तस्मादनभिहितामधिकरणशक्तिमव्ययमभिदधदुत्तरपदेन समासमनुभवति। तेन चावधार्यते द्रव्यातिरिक्तां शक्तिमभिधत्ते विभक्तिरिति। भवतोऽपि युक्तमेवोच्यते। स्वरूपादुद्भवत् कार्यं ततोऽन्यां शक्तिमशक्तं कल्पयितुमिति। यतः शक्तिवादिनोऽपि गुणादिशब्दवाच्यात् कारकत्वादेर्द्रव्यस्य स्वरूपान्न शक्तिमन्यां मन्यन्ते। किन्तु कार्योपजनायार्थव्यक्तयः क्षमा इति न क्षमन्ते; सर्वस्मादपि कार्योदयप्रसङ्गात्। स्वकारणपरम्परायातनियतस्वभावतां तु न विद्मः। कारणगुणोत्थः पदार्थातिशय इति चेत् सैव शक्तिः। तस्यास्तु नित्यत्वानित्यत्वविकल्पो नोपयुक्तः; यावद्द्रव्यभावित्वे न द्रव्यवदेव नित्यानित्यत्वात् सर्वदा कार्योत्पादः, क्रियाकाल एव शक्तेरुन्मेषात्। अदृष्टप्रतिनियतसहकार्यादयस्तु शक्त्युन्मेषहेतवो नास्माभिरपि निराक्रियन्ते। येन तूपादाननियमे अन्वयव्यतिरेकौ वृद्धव्यवहारादृतेऽपि कार्यदर्शनावसेयशक्तिमूलावेव; वृद्धैरप्यन्वयव्यतिरेकाभ्यां तथैव कारणत्वावगमात्। नाशः शक्तेः प्रतिबन्धो वा मन्त्रादिनेत्यादिविकल्पस्तु स्वरूपस्य शक्तित्वसिद्धौ निषिद्ध एव भवति। व्यापारस्तु धातुवाच्य एवातीन्द्रियो न वास्तवः। तेन कार्यदर्शनान्यथानुपपत्तिकल्पिता शक्तिरतीन्द्रियोपपन्नतरैवेति।

## (१०. वृत्त्यर्थः)

**वृत्त्यर्थस्त्रिधा – १. अपदार्थः, २. एकपदार्थः, ३. अनेकपदार्थश्च।**

(१. **अपदार्थः**)

तत्राऽपदार्थस्त्रिधा– **धातुप्रत्ययार्थीयः, प्रत्ययप्रत्ययार्थीयः, प्रातिपदिकप्रत्ययार्थीयश्च** । तेषु –

**धातुप्रत्ययार्थीयो** द्विधा– क्रियारूपः, कारकरूपश्च। तयोः–

**क्रियारूपो** यथा कर्तुमिच्छति चिकीर्षति, कुर्वन्तं प्रयुङ्क्ते कारयति, अत्यर्थं पुनः पुनः पचति पापच्यते।

**कारकरूपो** यथा पाकं करोति पचति, पाकेन क्रियते पच्यते, पाचकः पक्तव्यमिति।

**प्रत्ययप्रत्ययार्थीयो** द्विधा– नित्यो वैवक्षिकश्च। तयोः–

**नित्यो** यथा कृत्रिमं, सांराविणम्, व्यावक्रोशी, भिदा, आभिजित्यः कौञ्जायन्य इति।

**वैवक्षिको** यथा चिकीर्षुः, कारणा, गार्ग्यायणः, काल्याणिनेयः, मालायाः, कुमार्या इति।

**प्रातिपदिकप्रत्ययार्थीयो** द्विधा– व्यक्तिरूपः, शक्तिरूपश्च। तयो–

**व्यक्तिरूपो** यथा अजा, कुमारी, ब्रह्मबन्धुः, वृक्षः वृक्षौ वृक्षा इति।

**शक्तिरूपो** यथा वृक्षं, वृक्षेण, वृक्षाय, वृक्षात्, वृक्षे, वृक्षस्येति।

(२. **एकपदार्थः**)

**एकपदार्थस्त्रिधा– वस्तुरूपः, अवस्तुरूपः, क्रियारूपश्च**। तेषु–

**वस्तुरूपो** द्विधा– सत्त्वभूतोऽर्थः, असत्त्वभूतोऽर्थश्च। तयो–

**सत्त्वभूतोऽर्थो** यथा औपगवः, छान्दसः, लाक्षिकं, यौष्माक इति।

**असत्त्वभूतोऽर्थो** यथा आस्तिकः, उपत्यका, प्रकटं, तत्रत्यम् इति।

**अवस्तुरूपोऽपि** पूर्ववदेव द्विधा। तयोः–

**सत्त्वभूतोऽर्थो** यथा अग्निवत्, पञ्चवत्, पञ्चकृत्वः, सर्वदा, बहुश इति।

**असत्त्वभूतोऽर्थो** यथा नतरां, प्राहतरां, पचतितरां, पचतिरूपमिति।

**क्रियारूपोऽपि** द्विधा– संक्षिप्तो, विक्षिप्तश्च। तयोः–

**संक्षिप्तो** यथा आत्मनः पुत्रमिच्छति पुत्रीयति, श्येन इवाचरति श्येनायते,

अभृशो भृशो भवति भृशायते, सेनया अभियाति अभिषेणयतीति।

**विक्षिप्तो** यथा कंसवधमाचष्टे कंसं घातयति, आरात्रि विवासमाचष्टे रात्रिं विवासयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयति, उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयतीति।

**(३. अनेकपदार्थः)**

अनेकपदार्थस्त्रिधा— **एकपदार्थाश्रयः, उभयपदार्थाश्रयः, अन्यपदार्थाश्रयश्च।** तत्र **एकपदार्थाश्रयो** द्विधा— पूर्वपदार्थाश्रयः, उत्तरपदार्थाश्रयश्च। तयोः—

**पूर्वपदार्थाश्रयो** यथा उपकुम्भं, पुरुषव्याघ्रः, गोमतल्लिका, पूर्वकायः, राजदन्तः, प्राप्तजीविक इति।

**उत्तरपदार्थाश्रयो** यथा राजपुरुषः, यूपदारुः, कष्टश्रितः, श्वलेह्यः (काशिका २.१.३३) द्व्यह्नजातः अनेक इति।

**उभयपदार्थाश्रयो** द्विधा— एकाधिकरणो भिन्नाधिकरणश्च। तयोः

**एकाधिकरणो** यथा नीलोत्पलम्, अग्निस्तोकः (काशिका २.१.६५), पुरुषोत्तमः, सर्वश्वेतः (काशिका २.२.९), सप्तर्षयः, खञ्जकुब्ज इति।

**भिन्नाधिकरणो** यथा धवखदिरौ, अश्वबडबौ, दधिपयसी, धवखदिरपलाशाः, काकोलूकं, गवाश्वमिति।

**अन्यपदार्थाश्रयो** द्विधा— सतद्गुणोऽतद्गुणश्च। तयोः

**सतद्गुणो** यथा उन्मत्तगङ्गं, शस्त्रीश्यामा, सहस्राक्षः, शूलपाणिः, द्वित्राः, अर्धतृतीया इति।

**अतद्गुणो** यथा ऊढरथः, चित्रगुः, दक्षिणपूर्वा, उष्ट्रमुखः गुडप्रियः, प्रियगुड इति (मभा. २.२.३५)।

**(वृत्तिः — जहत्स्वार्था अजहत्स्वार्था वा)**

अथ ये वृत्तिं वर्तयन्ति किं त आहुः?

**परार्थाभिधानं वृत्तिरिति।**

कः पुनरस्यार्थः?

किं परार्थस्याभिधानमाहोस्वित्परार्थमभिधानमिति?

उभयथापि न दोषः।

यदा तावदेतावद्दर्शनमनेकमप्यर्थमेक एव शब्दः प्रत्याययति, तदा वाक्यावस्थायां

शब्दान्तराभिधेयतया प्रतीतमर्थात्मानं वृत्तिविषये तदुपसर्जनपदमभिधेयभावेनोपादत्ते। तदेतद्विभक्तपदावस्थायामभिधानशक्तिप्रतिघाताद्वृत्तौ परार्थस्याभिधानं परार्थाभिधान-मुच्यते। यदा पुनरेष पक्ष: एकश्शब्दोऽनेकमर्थं न प्रत्याययति तदा पुरोपात्तमेवार्थं वृत्तिविषये तान्युपसर्जनपदानि परार्थमुपाददते। व्यक्तमेवास्मिन्दर्शने परार्थाभिधानम्। तत्र द्वयी गति: – विहाय वा प्रसिद्धमर्थसम्बन्धमुपसर्जनपदान्यर्थान्तरमुपाददीरन्, अवस्थित एव वा प्रच्येऽर्थेऽर्थान्तरमभिदधीरन् (वाप. ९४)। द्वयमपि हीदमन्यत्र दृश्यते; तद्यथा दधिकलशे दध्यपनीय क्षीरं निधीयते, जलं तु सिकताकुम्भे सहैवावतिष्ठते सिकतादिभि:। तदाह – तेषां परार्थाभिधानं वृत्तिरिति ब्रुवतां किं जहत्स्वार्था वृत्तिराहोस्विदजहत्स्वार्थेति? (मभा.२.१.१)

किञ्चात:?

यदि **जहत्स्वार्था,** राजपुरुष आनीयतामित्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेति चापत्यमात्रस्य।

**अथाजहत्स्वार्था**? उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। तदेवमुभयत्रापि दोषदर्शनादुभया प्रतिपत्ति:।

तत्रैकेषां दर्शनम् – 'उपात्तार्थपरित्यागेनार्थान्तरनिवेशीन्युपसर्जनपदानि'; यतोऽर्थान्तरपराधीनस्य शब्दस्य प्राच्यमेवार्थमनुविधीयमानस्यार्थान्तराभिधानमशक्यम्। तस्मादर्थान्तरमभिदधता परित्याज्यमनेनोपात्तमर्थवस्तु। तदाह – का पुनर्वृत्तिर्न्याय्या, जहत्स्वार्थेति। युक्तं पुनर्यज्जहत्स्वार्था नाम वृत्ति: स्यात्? बाढं युक्तम्। एवं हि दृश्यते लोके – पुरुषोऽयं परकर्मणि प्रवर्तमान: स्वं कर्म जहाति। तद्यथा तक्षा राजकर्मणि प्रवर्तमान: स्वं कर्म जहाति। एवं युक्तं यद्राजा पुरुषार्थे उपगुश्चापत्यार्थे वर्तमान: स्वमर्थं जह्यात्।

ननु च यथा तक्षा कोशसमाहरणसन्निधापनादौ राजकर्मणि व्याप्रियमाण: स्वव्यापारापरित्यागेन राजकर्मणोऽनुष्ठातुमशक्यत्वात् स्वं दारुच्छेदचतुरश्रीकरणादि-व्यापारं जहाति, तथा यद्युपसर्जनमप्यर्थान्तरप्रत्यायनादौ परार्थे व्याप्रियमाणं स्वार्थापरित्यागेन परार्थाभिधानं कर्तुमशक्यमिति पूर्वोपात्तमर्थं विशेषणत्वादि जह्यात्। तदुक्तोदाहरणयो: पुरुषमात्रस्यापत्यमात्रस्य चानयनं प्राप्नोति।

नैष दोष:। यद्यपि स्वार्थोपसर्गेण अर्थान्तरमुपसर्जनपदान्यभिनिविशन्ते, तथाप्याधाय प्रधाने रूपभेदमुपगृहीतार्थातिशयनिबन्धनमुत्तरकालं स्वार्थमुज्झति।

अतस्तदाहितरूपभेदानुगतः पुरुषार्थो निवृत्तेऽप्युपसर्जनपदार्थे विशिष्ट एव प्रतीयते। न ह्यतिशयाधायिनिमित्तसन्निधानकालमात्रानुवर्तिनस्तदाहितविशेषाः, अपि तु निमित्त-व्यवायेऽप्यनुवर्तन्ते। तत्र यथा शरदर्करश्मिसंतापोद्भूतेनान्तश्शरीरतेजसा ज्वरस्स-मुदीर्यमाणो नातपस्पर्शपरिवर्जनमात्रेण प्रतिक्रियते। यथा वा प्रदीप्ततेजस्संयोगप्रति-लब्धजन्मानो रूपरसगन्धस्पर्शविशेषाः दूरोत्सारितेऽपि तेजसि यावदाधारमवतिष्ठन्ते, तथोपसर्जनपदार्थोपहितः प्रधानरूपातिशयः तदर्थास्तमयेऽपि प्रधानस्य विशेषा-वच्छेदनिमित्तं भवति। यदि वोपसर्जनश्रुतिमर्थविशेषाभिधानसामर्थ्यवतीमवधृतवतः तदवसायोपहितसंस्कारवृत्तिलाभप्रापितजन्मा तदर्थपरिच्छेदः परित्यक्तार्थायामपि श्रुतौ रूपसामान्यादपहृतबुद्धेरनवगतार्थपरित्यागस्य प्रवर्तते। ततस्तदुपहितविशेषं प्रधानमवैति।

ननु च यदि तस्या एव श्रुतेः प्रयोगदर्शनाभ्याससामर्थ्यात् तमेवार्थं प्रतिपद्यते, कः स्वार्थपरित्यागः?

न हि श्रुतौ तस्यां भस्त्रायामिवोपकरणविशेषाः कृतसन्निवेशाः पदार्थाः।

किं तर्हि? ते शब्दरूपदर्शनानुमेयाः।

तदिहापि तथैवेति किमवहीयते स्वार्थस्य?

नैवम्; निवृत्तेऽपि स्वार्थेऽन्वयाद् अर्थाः प्रतीयन्ते, तद्यथा घृतघटस्तैलघट इति। निषिक्तेऽपि घृते तैले वा अन्वयाद् घृतं तैलं वा घटविशेषणं भवति अयं घृतघटोऽयं तैलघट इति (मभा. २.१.१)।

विषम उपन्यासः; भवति तत्र या च यावती चार्थमात्रा। अङ्ग हि भवानग्नौ निष्टप्य तृणकूर्चेन प्रक्षालयतु, न गम्यते स विशेषः; यथा तर्हि मल्लिकापुटश्चम्पकपुट इति; निष्कीर्णास्वपि सुमनस्सु तत्सम्पर्कोपहितगन्धविशेषाद्यनुवृत्तेः प्रतीयते व्यपदेशः अयं मल्लिकापुटोऽयं चम्पकपुट इति, तथेहाप्यन्वयादुपसर्जनार्थः परित्यक्तोऽपि विशेषणं भविष्यति।

अथवा जहदप्यसौ स्वार्थं राजशब्दो नात्यन्ताय जहाति। कश्चिदेव भागः स्वार्थस्यापि हीयते।

कथम्? विरोधादेष स्वार्थमवजहाति। ततो यावतास्य प्रधानार्थोपयोग-विरोधस्तावन्तमेवार्थं जह्यात्। तदाह – यः परार्थविरोधी स्वार्थः तं जहाति। न हि प्रधानार्थोपयोगिनः स्वार्थस्य अत्यागे निदर्शनमस्ति? अस्ति, राजकर्मणि प्रवर्तमानः तक्षा राजा तक्षकर्मैव जहाति, न हिक्कितहसितकण्डूयितानि। न चायमर्थः परार्थविरोधि-विशेषणत्वं नाम तस्मान्न हास्यति।

ननु चोपसर्जनपदानि प्रधानार्थावच्छेदव्यापारावेशवन्ति प्रधानोपकारिणं विशेषणभावं न जहतीत्युच्यते। अयमेव चोपसर्जनपदानामर्थो यत् प्रधानमवाप्तरूपभेदमवगमयन्ति। तथा हि राज्ञः पुरुष इति स्वामिविशेष–सम्बन्धोपहितभेदः पुरुषार्थोऽवगम्यते राजपुरुष इति। न चापदार्थरूपभेदं प्रधान–स्याधातुं तदनवहीयमानस्वार्थमेवोपसर्जनपदमिति किमुच्यते जहत्स्वार्था वृत्तिरिति?

एवं मन्यते – 'पदस्य स्वातिशयपतिपत्तौ स्वाधीनत्वं, तस्य त्यागात् स्वार्थापहानम्। यदि चोपसर्जनपदं न स्वार्थेन प्रधानस्योपकुर्यात्, स्वरूपमेवास्य हीयेत। यतः परोपकारिताकारणकमेवोपसर्जनत्वं, प्रयोगवैयर्थ्यं चोपसर्जनस्य प्रसज्यते। प्रधानस्योत्तरपदेनैव प्रतीतत्वात्। न चानर्थकाणां परेण सम्बन्धो घटते, सामर्थ्यनिबन्धना समाससंज्ञा च नोपपद्यते। तस्मान्न सकलार्थपरित्यागः। किं तर्हि? विशेषणतया स्वपदोपधीयमानरूपातिशयप्रतिपत्तियोग्यतामात्रमस्यापहीयते।

ननु च परित्यक्ताशेषार्थमपि उपसर्जनपदमर्थविशेषाभिधायिनस्समुदायस्य वर्णवदङ्गभावमापत्स्यते (वाप. ३ वृ.)?

नैवम्; एवं हि प्रतीयमानः प्रधानार्थोपयोगी पदार्थः परित्यक्तो भावी। न च परित्यक्तस्वार्थेभ्य उपसर्जनपदेभ्यः प्रधानविशेषो विशेषणविशेष्यावच्छिन्नः समुदायो वा प्रतीयते। न चाप्रतीयमानश्शब्दार्थो न्याय्यः कल्पयितुमिति यत्किंचिदेतत्। यद्यपि चायं समुदायः एवाव्यपदेश्यपूर्वापरभागो भागभेदानुयात इवावसीयमानः संबन्धी पदार्थद्वयोपहितभेदं ह्यर्थमभिधत्ते। तथापि तदधिगमोपायः पूर्वोत्तरविभागदर्शनम्। तत्र च वृत्तौ समर्थाधिकारः क्रियते। सामर्थ्यं नाम भेदस्संसर्गो वा (मभा. २.१.१)।

अपर आह – भेदसंसर्गौ वा सामर्थ्यमिति।

कः पुनः भेदस्संसर्गो वा? इह राज्ञ इत्युक्ते सर्वं स्वं प्रसक्तम्। पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः। इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं निवर्तयति अन्येभ्यः स्वामिभ्यः। पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः। एवमेतस्मिन्नुभयतोऽवच्छिन्ने यदि जहाति कामं जहातु। न जातुचित् पुरुषमात्रस्यानयनं भविष्यति।

ननु च पुरुष इत्युक्ते न स्त्रीत्येतावता संप्रत्ययेन भवितव्यम्।

सत्यमेवैतत्। यदा तु पुरुष आकारविशेषाद् द्रव्यान्तरसम्बन्धाद्वा स्वातन्त्र्येण निर्ज्ञात उपलब्धः तं प्रत्येतदुच्यते। राज्ञो हि अनिर्ज्ञातार्थत्वात् परार्थायां प्रवृत्तौ सामान्यसंसर्गविषयः प्रातिपदिकार्थव्यतिरेक उपजायते। पुरुषस्तु निर्ज्ञातार्थात्

स्वामिविशेषसंबन्धादवसीयमानः पूर्वमव्यतिरिक्तप्रातिपदिकार्थः प्रथमान्तः स्वामि–विशेषस्थं सम्बन्धमनुभवति। तस्मिन् प्रतिलब्धविभक्तौ य उत्तरो व्यतिरेक उपजायते वाक्यार्थः स भवति। इहेदानीं राजा पुरुषं निवर्तयति अन्येभ्यः स्वामिभ्यः। तत्र योऽसौ भेदस्तत्सामर्थ्यं तन्निमित्ता च वृत्तिः; भेदनिमित्तायां च वृत्तौ सत्यां वृत्त्यभिमुखस्य भेदमुपजनय्य स्वार्थो निवर्तते। यस्यापि न निवर्तते पुरुषस्य सोऽपि स्वामिनं भिनत्ति। एवमेतयोर्द्वयोरन्योन्यक्लृप्तौ सत्यामुभयतो व्यवच्छेदेन निर्ज्ञाते पुरुषविषेशे समुदायार्थे चान्यस्मिन् प्रादुर्भूते यदि राजार्थो निवर्तते कामं निवर्तताम्। प्राक् तु वृत्तेरकृतार्थस्य निवृत्तौ वृत्तिरेव न स्यात्। वृत्तिनिमित्ता च निवृत्तिः। तस्माददोषः।

अपर आह – पुरुष एव हि राजपुरुषो ब्राह्मणादिपुरुषश्च। तत्र राजा स्वाम्यन्तरनिवृत्तिमात्रं करोति, न त्वसौ राजार्थमेव निवर्त्तयति। स्वाम्यन्तरनिवृत्तौ तु कृतायां पुरुष एव राजपुरुषार्थमाहेति।

अथान्यन्मतम् – नावस्थितार्थपरित्यागेन शब्दोऽर्थान्तरम् उपादत्ते। न ह्यपौरुषेयसंबन्धोपहितनिवेशमर्थात्मानं रूपदर्शनावसीयमानं शरीरं शब्दाः परित्यक्तुमुत्सहन्ते। यथा हि ते स्वरूपमसमर्थास्त्यक्तुं तथार्थमपि नैव योगक्षेममपहातुं क्षमन्ते। न हि जलमनलसंस्पर्शोपचीयमानस्पर्शातिशयमप्यात्मीयं स्नेह जहाति। निमित्तविशेषसन्निधानो पपादिते पुनरेषामर्थान्तराभिधानसामर्थ्ये कामचारः। तस्मादभ्युच्चय एवार्थान्तरस्य वृत्तावुपसर्जनपदानां प्रधानोपकारातिशयः। प्रधानोपकारस्तु स्वामिविशेषावच्छेदः पुरुषार्थस्य। स चापरित्यागेनैव स्वार्थस्य कर्तुं शक्यते। न ह्यत्यन्तमपाकीर्णस्वार्थं शब्दः रूपातिशयमर्थान्तरे निवेशयितुं शक्नोति। रूपातिशयनिवेशनायां पदार्थनिबन्धनत्वादनङ्गीकृतस्वार्थानि च यान्युपसर्जनपदानि प्रधानार्थनिवेशीनि तमेवार्थं शब्दान्तरेण प्रतिपादयन्ति। न तैरतिशयः प्रधानस्य प्रतिपादितो भवति। ततश्च राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेति चापत्यमात्रस्येति। तदवधार्याह – अथवा पुनरस्त्वजहत्स्वार्था वृत्तिः। युक्तं पुनः यदजहत्स्वार्था नाम वृत्तिः स्यात्? बाढं युक्तं; एवं हि दृश्यते लोक भिक्षुकोऽयं द्वितीयां भिक्षामासाद्य पूर्वां भिक्षां न जहाति, सञ्चयायैव यतते।

ननु चोक्तमुभयोर्विद्यमानस्वार्थयोः द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति।

कस्याः पुनर्द्विवचनं प्राप्नोति?

प्रथमायाः। न प्रथमासमर्थो राजा। षष्ठ्यास्तर्हि प्राप्नोति। न षष्ठीसमर्थः पुरुषः।

प्रथमाया एव तर्हि प्राप्नोति।

ननु चोक्तं न प्रथमासमर्थो राजाभिहितः, सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थस्संपन्नः। तत्र प्रातिपदिकार्थे प्रथमेति प्रथमाया एव द्विवचनं प्राप्नोति। तत्र यथा धवखदिराविति पदार्थान्तरोपचये सङ्ख्याभेदोपजनकानेकवचनं प्रवर्तते तद्वदिहापि राजपुरुषः, इति पुरुषशब्दाद् द्विवचनं प्राप्नोति।

नैवम्; धवखदिरावित्यवयवार्थ समवेतस्सङ्ख्याविशेषः, ततोऽवयवात् परस्या विभक्तेः कारणम्। इह तु एक एव पुरुषार्थः तदेकवचनमेव पुरुषशब्दे न्याय्यः। न हि राजशब्देनासम्बध्यमाना विभक्तिस्तदर्थसमवेतां सङ्ख्यामभिधेयत्वेन अपेक्षते। द्वन्द्वपदानां तु प्रत्यवयवमनेकार्थाभिधानसामर्थ्यादनेकवचनं न विरुध्यते। अनुत्तरपदेष्वपि तर्हि तत् प्राप्नोति?

प्राप्नोतु। 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति लोपो भविष्यति।

अथायमभिप्रायः — समुदायात् परा विभक्तिः, अतस्समुदायार्थसमवायिनीं सङ्ख्यामभिधत्ते। समुदायस्य चावयवात्मकत्वादवयवभेदनिबन्धनस्सङ्ख्याभेदः निमित्तमनेकवचनस्येति। तदेतत् क्व युज्यते?

यत्र पदसमुदायेनार्थसमुदायः प्रत्याय्यते, यथा द्वन्द्वपदे। यत्र तु विशेषणविशेष्यभावावच्छिन्नमर्थान्तरमेवाभिधेयमवयवैः समुदायेनोपादीयते, यथा बहुव्रीहिपदे 'लोहितवसनः', 'चित्रवेष्टन' इति, तत्रावयवार्थाहितभेदस्य पदार्थस्य समुदायेनाभिधीयमानत्वात् ततः परा विभक्तिस्समुदायार्थनिवेशिनीं सङ्ख्यामुपादत्ते। तदाह 'सङ्घातस्यैकार्थ्यान्नावयवसङ्ख्यातस्सुबुत्पत्तिः' (२.१.२ वा. ३)। अत्र हि समुदायाद् राजपुरुष इत्येतस्माद् विभक्त्योत्पत्तव्यम्। तेन समुदायेनैवैकार्थपिण्डोऽवयवार्थशक्त्यनुगृहीतः पृथगव्यपदेश्योऽवयवशक्तिरभिधीयते। तस्मिंश्च सङ्घातार्थे स्वामिविशेषपरिच्छिन्ने निवृत्तस्वाम्यन्तरसंबन्धे एकत्वं समवेतं, तेन विद्यमानायामप्यवयवसङ्ख्यायां तदाश्रया सुबुत्पत्तिर्न भविष्यति। तदेवमजहत्स्वार्थायां वृत्तौ तदुपसर्जनपदं स्वार्थातिशयावच्छिन्नं प्रधानार्थमभिदधाति। ततो विशेषणविशेष्यभूतार्थद्वयाभिधानमुपसर्जनस्य वृत्तौ भवति। यत्तु प्रधानार्थसम्भवविशेषणं पाटलिपुत्रकादि, तदस्य निवर्तते, अतो वृत्तिविषये राजार्थः तैर्विशेषणैर्नावच्छिद्यते। यदा तु वाक्यावस्थायामुपसर्जनं पदार्थः प्रधानसंस्पर्शविभक्तः केवल एव भवति, तदा

युक्तमेव यद्विशेषणभावमनुभवति, यथा राज्ञः पाटलिपुत्रकस्य पुरुष इति; यदि वा—

**उपायमात्रान्नानात्वं समूहस्त्वेक एव सः।**
**विकल्पाभ्युच्चयाभ्यां तु भेदसंसर्गकल्पना ॥१२॥** (वाप.३.१४.९८)

तत्रात्यन्त**जहत्स्वार्थायां** वृत्तौ पुरुषशब्दे पुरुषार्थाभिधायिनि सर्वशब्देषु च प्रतिनियतार्थाभिनिवेशिषु भेद एव सामर्थ्यम्। **अजहत्स्वार्थायां** तु वृत्तौ पुरुषशब्दे पुरुषमात्राभिधायिनि सर्वशब्देषु च प्रतिनियतार्थाभिनिवेशिषु संसर्ग एव सामर्थ्यम्। नात्यन्तमजहत्स्वार्थायां वृत्तौ पुरुषादिषु सम्बन्धिशब्देषु सर्वशब्दानां चासमर्थयोनित्वाभ्युपगमे समाप्तौ भेदसंसर्गौ सामर्थ्यमित्याख्यायते— (वाप. ३.१४.९९)

**वृत्तिं वर्तयतामेवमबुधप्रतिपत्तये।**
**भिन्नाः सम्बोधनोपायाः पुरुषेष्वनवस्थिताः ॥१३॥**

न हि परमार्थतः पराकृतपूर्वोत्तरविभागसंस्पर्शेन सङ्घातेनातिशयवत्यर्थेऽ—भिधीयमाने भेदसंसर्गदर्शनावकाशः कश्चिदस्ति। तस्मादसत्येन भेदसंसर्गदर्शनेन सत्यस्समुदायार्थो निरूप्यत इति॥

## *(११. पदार्थनिरूपणम्)*

पदार्थस्त्रिधा— १. **जातिः**, २. **व्यक्तिः**, ३. **आकृतिश्च**। तत्र—

(१. जातिः)

**भिन्नेष्वभिन्नप्रत्ययनिमित्तं जातिः**।

सा त्रिधा द्रव्यजातिः, गुणजातिः, क्रियाजातिश्च। तासु—

**द्रव्यजातिर्द्विधा**— संस्थादि(न)व्यङ्ग्या उपदेशव्यङ्ग्या च। तयोः—

**आद्या** यथा गौः पदा न स्प्रष्टव्या, सम्पन्नो व्रीहिः सुभिक्षं करोतीति।

**द्वितीया** यथा ब्राह्मणो न हन्तव्यः, कठः प्रवक्ता भवतीति।

**गुणजातिः** द्विधा— प्रत्यक्षा अनुमेया च। तयोः

**आद्या** यथा श्वेतं छागमालभेत, अम्लो रसः पाचनो दीपन इति।

**द्वितीया** यथा दक्षः श्रियमधिगच्छति, कामी मण्डनप्रियो भवतीति।

**क्रियाजातिः** द्विधा— सामान्यरूपा विशेषरूपा च। तयोः —

**आद्या** यथा रैपोषं पुष्यति, नागरकवृत्तं वर्तेतेति।

**द्वितीया** यथा अष्टका कर्तव्या, विश्वजिता यजेतेति।

**(२. व्यक्तिः)**

**जात्याधारो व्यक्तिः ।**

सा त्रिधा– द्रव्यव्यक्तिः, गुणव्यक्तिः, क्रियाव्यक्तिश्च। तासु–

**द्रव्यव्यक्तिः** द्विधा– शुद्धा मिश्रा च। तयोः –

**आद्या** यथा गां बधान, गां दोग्धि, त्वं पचसि, अहं पचामीति।

**द्वितीया** यथा–

**मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे ।**
**बाहू प्रलम्बावङ्गेषु वङ्गेषु चरणौ मृदू ॥१४॥** इति।

**गुणव्यक्तिः** द्विधा– मुख्या गौणी च। तयोः–

**आद्या** यथा श्वेतं रूपं पश्यामि, मधुरं रसमास्वादयामि, सुगन्धिं गन्धमाजिघ्रामि, शीतं स्पर्शमनुभवामीति।

**द्वितीया** यथा–'तीव्रः प्रतापो मधुरं वचस्ते यशोऽवदातं सुरभिः स्वभावः।' इति।

**क्रियाव्यक्तिः** द्विधा– कर्त्राश्रिता, कर्माश्रिता च। तयोः–

**आद्या** यथा आस्ते देवदत्तः, प्रस्नुते गौः स्वयमेवेति।

**द्वितीया** यथा पच्यते ओदनः, लूयते केदारः स्वयमेवेति।

**(३. आकृतिः)**

**व्यक्तिप्रतिरूपमाकृतिः।**

सा त्रिधा– द्रव्याकृतिः, गुणाकृतिः, क्रियाकृतिश्च। तासु–

**द्रव्याकृतिः** द्विधा– श्रुतदशा, दृष्टदशा च। तयोः

**आद्या** यथा अस्यां दृषदि वासुदेवः क्रियताम्, अस्यां भित्तौ कामदेवो लिख्यताम्, अत्र ध्वजे हनूमान् बध्यतामिति।

**द्वितीया** यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् (न्यायवा. २.२.६७), अयं कूपे चन्द्रमाः, अयमाकाशे देवपथ इति।

**गुणाकृतिः** द्विधा– प्रत्यक्षाश्रया, अनुमानाश्रया च। तयो–

**आद्या** यथा वध्रिका दर्शनीयो मनुष्यः, चञ्चा रमणीयः (मभा. १.२.५२),

तदेतद्घुणाक्षरं रूपमिति।

**द्वितीया** यथा अहो मुग्धं रूपमालेख्यस्य, विदग्ध आकारश्चित्रस्य, सौम्या मूर्ति: प्रतिमाया इति।

**क्रियाकृति:** द्विधा– कायक्रियाधारा, मन:क्रियाधारा च। तयो:

**आद्या** यथा ऋज्वाग(य)तं तमालेख्यम् (लीनम्), साचिमुखवर्तक: परावर्तकं स्थानमिति।

**द्वितीया** यथा भीता दृष्टि:, त्रस्त आकार:, सविकारं रूपमिति।

ननु च जातिरेव शब्दार्थ इति जैमिनीया:। जैमिनिर्हि–

**जातिमेवाकृतिं प्राह व्यक्तिराक्षिप्यते यया ।**
**सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥१५॥** (श्लोवा.)

ननु च सास्नादीनां सन्निवेश आकृति:। न चासौ **जैमिनि**मतेऽपि न पृथगस्ति। यदाह **भाष्यकार:** – अथ गौरित्यत्र कश्शब्दार्थ: सास्नादिविशिष्टा आकृतिरिति। ततश्च सैव शब्दार्थो भवति। नैवम्; एवं सति संस्थानस्य प्रतिव्यक्तिभिन्नत्वात्, आनन्त्यव्यभिचाराभ्यां सम्बन्धस्य ग्रहीतुमशक्यत्वात्। न च विद्यमानायामप्याकृतौ गामानयेत्युक्तश्चित्रपुस्तमयीं कश्चिद् गामानयति ननु जातिपक्षेऽपि जातेस्सर्वगत–त्वामिति मृद्गवकानयनं (न्या.सू. २.२.६३) न भवति; सास्नादिमत: प्राणिन एव गोत्वाभिव्यञ्जकत्वात्। अतो नाकृतिर्जाति: पृथक्छब्दार्थ इति।

व्यक्तिरपि न शब्दार्थ:, सा हि व्यक्तिमात्रं वा स्याद् विशिष्टा वा। न तावद्व्यक्तिमात्रं, अश्वादिव्यक्तावपि गौरिति ज्ञानाभिधानयो: प्रसङ्गात्। अथ गोत्वविशिष्टा?

तद्गोत्वमवगतमनवगतं वा विशेषणं भवति?

नानवगतमतिप्रसङ्गात्; अवगमस्तु शब्दात् प्रमाणान्तरतो वा; न प्रमाणान्तरत:, तदसन्निधानात्। शब्दतस्तु गोत्वावगमे तदेव प्रथमतश्शब्दोऽभिदधाति, नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात्। ननु जातिं विशेषणत्वेन विशेष्येत्वेन च व्यक्तिं गोशब्दो वक्ष्यति; न शक्नोति वक्तुमतिभारात् तदाह–

**विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे॥१६॥** (अवृमा.) इति॥

ननु दण्ड्यादिशब्दादिव विशेषणं जातिं विशेष्यां च व्यक्तिं गोशब्दादेव प्रतिपत्स्यामहे; तत्कोऽस्यातिभारः?

विषम उपन्यासः। तत्र हि प्रकृतिप्रत्ययविभागेन प्रकृत्यर्थविशिष्टः प्रत्ययार्थोऽवगम्यते। गोशब्देन तु नैवमिति। न च व्यक्त्यवगतौ गतिरन्या नास्ति, येनोभयाभिधानं कल्प्यते। अविनाभावबलेन जातिप्रतीतावपि तत्प्रतीतिसिद्धेः। यदि च व्यक्तिश्शब्दार्थो भवेत्, व्यक्त्यन्तरे गोशब्दो न प्रयुज्यते। न च न प्रयुज्यते, तस्मात् सर्वव्यक्तिसाधारणी जातिरस्यार्थः, न व्यक्तिः।

ननु च व्यक्त्यन्तरमपि व्यक्तिरेव। सोऽयं व्यक्तौ गोशब्दः प्रयुक्तो, न सामान्ये।

नैवम्। एवं सति कर्कादिव्यक्तावपि प्रसङ्गः। यत्रास्य प्रयोगो दृष्टस्तत्र प्रयुज्यत इति चेत्, अद्य जातायां गवि मा प्रयोजि। अपि च व्यक्तौ पदार्थे 'इयमियं वा गौरिति प्रतीतिः स्यात्, न पुनरियमियं चेति। न च आकृताविव व्यक्तावप्यानन्त्य-व्यभिचाराभ्यां सम्बन्धग्रहणमुपपद्यत इति।

कथं पुनरिमा जातयः परस्परतो व्यावर्तमानशरीरा भवेयुः? रूपमेव ह्यासां परस्परतो व्यावर्त्तते। विषयरूपानुरोधी च प्रत्ययः स्वाकारभेदेन तदवच्छिनत्ति। तदनुविधायिनश्च शब्दास्तथैव तदुपाददते। एवं तर्हि नित्यत्वादासां तद्रूपावसायस्सदा प्रसज्येत।

नैवम्; असन्निहिताश्रयाणामनभिव्यक्तेः। यद्येवमभिव्यञ्जकवशादवसायस्ता-सामिति सोपव्यञ्जनाश्शब्दैरभिधीयेरन्।

तन्न। यथा काचादर्शोदकादिषु प्रतीयमानभेदो मुखादिरर्थः काचादिदर्शनाऽपेक्षो न प्रतीयते। न च काचादिभिरुपदर्शितमर्थमभिदधानाः शब्दाः काचादीनुपाददते, तथा व्यक्तिभिरुपदर्शितरूपविभागा जातयस्ताभिरसंस्पृष्टा एव शब्दैः प्रत्याय्यन्ते। कथं पुनराश्रयाश्शब्देन असंस्पृश्यमानभेदा अपि जातिभेदावगमाय कल्पन्ते, यथा चक्षुरादयोऽप्रतीयमाना अपि रूपादिविषयविशेषप्रतिपत्तये। तदुक्तम्—

**यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते ।**
**तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते ॥१७॥**

**यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते ।**
**इन्द्रियार्थेष्वदृश्योऽपि ज्ञानभेदाय कल्पते ॥१८॥**

**विनात्मरूपग्रहणाद्व्यञ्जिका व्यक्तयस्तथा ।**
**सामान्ये ज्ञानभेदानामुपयान्ति निमित्तताम् ॥१९॥**(वाप.जा.२९–३१)

**व्यक्तिरेव शब्दार्थ इति व्याडीयाः**। शब्दो हि पदं, तच्च विभक्त्यन्तमेव न प्रातिपदिकमात्रम्। विभक्तिः प्रातिपदिकादुच्चरन्ती प्रातिपदिकार्थगतमेव स्वार्थमाचष्टे। युगपच्च त्रितयं विभक्त्यर्थः 'लिङ्गं सङ्ख्या कारकं' च। न चैतत् त्रितयं प्रातिपदिकार्थे जातावन्वेति; न हि जातेः कारकत्वम्, अमूर्तत्वात्। न सङ्ख्यासम्बन्धित्वम्, अभेदात्। न स्त्रीत्वादिसामान्ययोगः, निस्सामान्यत्वात्।

**नन्वात्मनीनसामान्ये कारकत्वं भविष्यति ।**
**कक्ष्यान्तरितमित्येष युक्तो वैभक्तिकोऽन्वयः ॥२०॥** (न्यायमं.)

नैतत्सारम्। अमूर्तस्याप्यात्मनो ज्ञानप्रयत्नादियोगे कारकत्वमुपपद्यते। जातेस्तु न मनागपि व्यापारसंस्पर्श इति (मभा. १.२.६४, शा.भा. १.३.९.३०, न्यायमं.)।

ननु च व्यक्तिलक्षणया सर्वमुपपत्स्यते।

नैवम्; लक्षणा हि तत्र भवति यत्र सकृत्प्रयुक्तं पदं कञ्चनार्थमभिधत्ते, भूयश्चानुपपद्यमानमर्थान्तरं लक्षयति, लक्षिते च शक्तिसङ्ख्यादिकं निवेशयति। अत्र तु नान्यथानुपपत्त्यादि संवेद्यते। न च व्यक्तिप्रतीतिर्व्यवहितेति केचिन्मन्यन्ते। व्यक्तिमेव च शक्तिसङ्ख्यानुरञ्जितां कार्ययोगिनीं पश्यामः। अत एव चालम्भनप्रोक्षणविशसनादयो जातौ न विधीयन्ते। न च षड् देयाः द्वादश देयाः चतुर्विंशतिर्देया इति भेदसङ्ख्यया जातिर्युज्यते। अपि तु व्यक्तिरेवैनं भारमुद्वहति। किंच जातौ पदार्थे यदि पशुरुपाकृतः पलायेतान्यं तद्वर्णं तद्वयसमालभेत इति पशोरन्यत्वं न युज्यते, जातेरभेदात्। अपि च–

**चयापचयसङ्घातस्वस्वामित्वादिकल्पनाः ।**
**यान्ति जात्यभिधेयत्वपक्षे साक्षान्न सङ्गतिम् ॥२१॥** (न्यायमं.)

एतेन तुल्ययोगक्षेमत्वादाकृतिरपि न शब्दार्थ इत्युक्तं भवति; तस्या अपि प्रोक्षणादिक्रियासाधनत्वायोगात्। न हि सन्निवेशः प्रोक्ष्यते आलभ्यते विशस्यते वा। ये च सङ्ख्यायोगादयः चयापचयादयो वा ते जातावाकृतावपि न युज्यन्ते। किंच आकृतिवचनत्वे गोशब्दस्य शुक्लादिगुणवाचिभिः पदान्तरैस्सामानाधिकरण्यं न प्राप्नोति। न हि शुक्लादयो गुणाः आकृतिवृत्तयः, अपि तु व्यक्तिवृत्तय इति। न चैतद् वाच्यं व्यक्तिलक्षणाद्वारकमिदं

भविष्यतीति। लक्षणा हि मुख्याभावे प्रवर्तते। न खलु ऋजौ वहति वर्त्मन्यनृजुरध्वाश्रयितव्यो भवति। न चानन्त्यव्यभिचाराभ्यां सम्बन्धाग्रहणमिति वक्तव्यम्। तद्धि जातिमाकृतिं वोपलक्षणमाश्रित्य भविष्यति।

यद्येवमुपलक्षणभूतां जातिमाकृतिं वाभिधाय शब्दो व्यक्तिमभिधत्ते।

नैवम्; आस्तामभिधीयमानं, विद्यमानमपि प्रतिपन्नमात्रमेव **उपलक्षणं** भवति। तद्यथा– 'कतरद्देवदत्तगृहम्? यत्रायं काक इति। अत्र हि न काकलक्षणोपलक्षणद्वारेण प्रवृत्तो देवदत्तगृहशब्दः काकार्थमभिधत्ते, उपरते वा काकसम्बन्धे तद्व्यवच्छिन्नवस्तुनिवेशितां जहाति। एवं जात्युपलक्षणद्वारेण व्यक्तौ प्रवर्तमानश्शब्दो जातिं च (नाभिधास्यति, तद्व्यवच्छिन्नगोव्यक्तिविनिवेशं च हास्यति। एतेनाकृतिरपि शब्देनानभिधीयमानैव व्यक्तिमुप)लक्षयतीति लक्ष्यते। तद्यथा– कतरत् सुवर्णं, य एष रुचकः स्वस्तिको वर्धमानक इति; न ह्यत्र रुचकाद्याकारद्वारेण प्रवृत्तस्सुवर्णशब्दो रुचकाद्याकारमभिधत्ते, उपरतेषु वा रुचकाद्याकारेषु तद्व्यवच्छिन्नस्वर्णार्थपरतां परित्यजति। तदुक्तम्–

**अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।**
**गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥ २२॥**
**सुवर्णादि यथा युक्तं स्वैराकारैरपायिभिः ।**
**रुचकाद्यभिधानानां शुद्धमेवैति वाच्यताम् ॥ २३॥** (वाप.३.२.४)
**तथोपलक्षणे जातावाकृतौ वा समाश्रिते ।**
**व्यक्तयो यान्ति शब्दानां शुद्धा एवाभिधेयताम् ॥ २४॥**

एतेन यदुक्तं व्यक्त्यभिधानपक्षे सर्वे शब्दाः सर्वार्था भवेयुरिति तदपि निरस्तं भवति। तथा हि– यथा चक्षुरादिशब्दानामशेषरूपादिप्रकाशनसामर्थ्यं नलिकादिसुषिरवर्त्मनि युक्तं दर्शनस्य तदवकाशावस्थितरूपभेदोपरुद्धतया विषयान्तरेषु न विप्रकीर्यते, तथा जात्याकृतिभ्यामवरुद्धविषया गवादिशब्दानामभिधानशक्तिर्नाश्वादिष्वतिप्रसज्यत इति। उक्तं च–

**आकारैश्च व्यवच्छेदात्सार्वार्थ्यमवरुध्यते ।**
**यथैव चक्षुरादीनां सामर्थ्यं नलिकादिभिः ॥ २५॥** (वाप. ३.२.५)

यच्चोक्तं – यथा जलादिभिरादर्शैरभिव्यक्ताश्चन्द्रादय एव चन्द्रादिशब्दैरभिधीयन्ते, यथा चेन्द्रियभेदग्रहणमन्तरेणापि रूपादिविषयज्ञानभेदो भवति, तथा व्यक्तिभिरुपव्यञ्जिता जातय एव गवादिशब्दैरभिधीयन्ते, व्यक्तिग्रहणे च तदुपव्यञ्जना

जातिर्ग्रहीष्यति (इति), तदपि न सम्यक्। यदा तावत् प्रतिबिम्बमुदकादिषु भावान्तरमेवोपजायत इति दर्शनम्, तदा तद्रूपभेदानुपातिनः शब्दाः किमिति उदकादीनुपाददीरन् यतो नोदकादयस्तदानीं चन्द्रादीनामुपव्यञ्जनम्, अपि तु रूपजनन–कारणम्; न च कार्यवचनाः शब्दाः कारणसंस्पर्शमनुभवन्ति। यदा तु दर्शनविप्लवः स तादृश इति प्रतिपत्तिः, तदा दूरोत्सारितावकाशो व्यङ्ग्यव्यञ्जकभावः। यदा तर्हि जलाद्यादर्शप्रतिघातात् परावृत्ते चक्षुषि स्ववक्त्रवच्चन्द्रादयोऽपि दृश्यन्त इति दर्शनं तदैतदुपपत्स्यते। तदा ह्युदकादिवत् सन्निहितमुपव्यञ्जनं रूपभेदेन जातिमभिव्यक्तरूपभेदां दर्शयति। तदेव च शब्दोऽभिधत्ते। एतदप्यव्यभिचरितोपव्यञ्जनायत्तदर्शन(नाः) जातयः कथं विनोपव्यञ्जनैः प्रतीयन्त इति पर्यनुयोगे नातिचतुरश्रम्; चन्द्रादीनामन्यथापि दर्शनोपपत्तेः। एवं जातिभेदप्रतिपत्तावपि। यथा दर्शनादीन्द्रियायत्तोदयाः नीलाद्यर्थावसायाः कारणभेदमनु परिवर्तन्ते नैवं जातिपरिच्छेदाः व्यक्तिरूपप्रतिबद्धोत्पादाः, येन तद्भेदमनुविदध्युः। ततश्च गोत्वादयोऽपि परस्परतो न व्यावर्तेरन्। संवेद्यमानभेदश्च पदार्थः कथमकस्मादेक इति श्रद्धीयते?

**व्यक्तेरेव पदार्थत्वं तस्मादभ्युपगम्यताम् ।**
**तथा च बुद्धिस्तत्रैव श्रुतशब्दस्य जायते ॥ २६॥**
**येषामर्थेषु सामान्यं न सम्भवति तैः पुनः ।**
**उच्यते केवला व्यक्तिराकाशादिपदैरिव ॥ २७॥**
**एवं डित्थादिशब्दानां संज्ञात्वविदितात्मनाम् ।**
**अभिधेयस्य सामान्यशून्यत्वाद्व्यक्तिवाच्यता ॥२८॥** (न्यायमं.)
**ये पुनः कल्पितानेकभेदवृत्तिं प्रचक्षते ।**
**वाच्यं तत्रापि सामान्यमतीव ग्रहिलास्तु ते ॥ २९॥**
**न हि डित्थत्वसामान्यं दृश्यते गगनत्ववत् ।**
**कल्पनायाश्च ना(नो) भूमिः काचिदस्ति विपश्चिताम् ॥ ३०॥**(न्यायमं.) इति॥

## (आकृतिपदार्थवादः)

आकृतिरेव पदार्थ इति **विन्ध्यवासि**मतगन्धीयाः।

**तत्राकृतिपदेनेह संस्थानमभिधीयते ।**
**लोके शास्त्रे च दृष्टत्वान्न जातिर्जैमिनीयवत् ॥ ३१॥** (न्यायमं.)

लोके यथा **'यत्राकृतिस्तत्र गुणा वसन्ति'** इति। शास्त्रे यथा— **'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्॥'** (मभा. ४.१.६३) इति॥

उभयत्रापि चाकृतिशब्देनावयवसन्निवेशविशेष उच्यते (न्यायमं.)। वृद्धाश्च व्यवहरन्ति यत्रार्थे यत्पदं प्रयुञ्जते स तस्यार्थो भवति। तत्र यदेष गोशब्दः सास्नादिमति प्रयुज्यते न केसरादिमति, तदयमसाधारणसन्निवेशविषयतां द्योतयति।

प्रत्यक्षविषये च गौरित्यादिपदं प्रयुज्यते। प्रत्यक्षं चाकृतिविषयम्। अश्वपिण्डसन्निवेशाद्धि विलक्षणो गोपिण्डसन्निवेश इन्द्रियेण प्रतीयते। तत्कृतमेव च वस्तूनामितरेतरवैलक्षण्यम्। अतः प्रत्यक्षविषये गौरित्यादिपदं प्रवर्तमानमाकृतावेव प्रवर्तितुमुत्सहते। अपि च 'श्येनचितं चिन्वीते'ति न जातिश्चीयते, न व्यक्तिः, अपि तु आकृतिरेव। प्रदीपप्रवाहादीनां च शब्दानामाकृतिरेवार्थोऽभ्युपेयः। न ह्येषामर्थेषु व्यवस्थितं जातिरूपं व्यक्तिरूपं वा समस्ति। यदि चाकृतिश्शब्दार्थो न भवेत्, कथमिव गवादिशब्दैः गवाद्याकारमेव ज्ञानं जन्येत? अपि (च) 'तानेव शाटकानाच्छादयामो ये पाटलिपुत्रे, तानेव शालीन्भुञ्ज्महे ये मधुरायाम्' (मभा.१.१.२) इति योऽयमेवंप्रकारो व्यवहारः, स आकृतावेव पदार्थे सङ्गच्छते। यच्च व्रीह्यादेर्मुख्यस्याभावे नीवारादिभिः प्रतिनिधिभिः कर्म समाप्यते तदाकृतेः अशब्दार्थत्वे समापितमप्यङ्गहीनत्वादफलमेव प्राप्नोति; नीवारादौ व्रीह्यादिजातिव्यक्त्योरभावात्। यश्चायमर्चादिप्रतिकृतौ वासुदेवादिशब्दप्रयोगः, सोऽप्याकृतावेव पदार्थे युज्यते। किंचात्यनतमदृष्टेष्वप्यर्थेषु शब्दाद् आकारविषयः प्रत्यय उपजायमानो दृश्यते। तद्यथा— इन्द्रः स्कन्दो वैश्रवण इति। तच्चाकृतेरेव शब्दार्थत्वे उपपद्यते। सम्बन्धग्रहणं चास्य जातिवदुपपत्स्यते, समस्तगवीष्वपि गोसंस्थानस्यैकरूपत्वात्। मुख्यगौणभावे तु प्रसिद्धिरप्रसिद्धिश्च नियामिका भविष्यति। प्रोक्षणादिक्रिया शुक्लादिगुणयोगश्च व्यक्तिद्वारा आकृतेरुपपत्स्यते। न चामूर्तत्वादाकृतेरक्रियाङ्गत्वं, अमूर्तानामपि गुणकर्मणां क्रियाङ्गत्वात्। अरुणया क्रीणाति, अभिक्रामं जुहोतीति। किंच—

**यथाभूतेन्द्रियोत्पाद्यमात्मकर्तृकमिष्यते ।**
**तथा तल्लक्षितव्यक्तिसाध्यं तत्साध्यमुच्यते ॥३२॥** (न्यायमं.)

तस्मादाकृतिः पदार्थ इति।

कथं तर्ह्याचार्याणां मतविरोधो जातिर्व्यक्तिराकृतिश्च पदार्थ इति? गवादि–शब्दैस्तद्वतोऽभिधानात्।

ननु कोऽयं तद्वान्नाम? तदस्यास्तीति तद्वानिति विशेष एवाकार–सामान्यवानुच्यते। विशेषवाच्यत्वे चानन्त्यव्यभिचारौ तदवस्थौ। सामान्यं च शब्देनानुच्यमानं नोपलक्षणं भवति। उभयाभिधाने च शब्दस्यातिभार इत्युक्तम्।

उच्यते नेदंतया निर्दिश्यमानः शाबलेयादिर्विशेषस्तद्वान्। न च सर्वः त्रैलोक्यवर्तिव्यक्ति व्रातः तद्वान्, किन्तु सामान्याश्रयः कश्चिदनुल्लिखित–शाबलेयादिविशेषः तद्वानित्युच्यते। सामान्याश्रयत्वाच्च नानन्त्यव्यभिचार–योस्तत्रावकाशः। न च विशेषणमभिधाय विशेष्यमभिदधाति शब्द इत्युपगच्छामो, येनैनमतिभारेण पीडयेम। सामान्याश्रयत्वमात्रे सङ्केतग्रहणात् तावन्मात्रं वदतः शब्दस्य कोऽतिभारः? किंच–

**प्रत्यक्षं न च निष्कृष्टजात्यंशपरिनिष्ठतम् ।**
**तद्गोचरप्रवृत्तश्च शब्दस्तत्कथयेत् कथम् ॥ ३३॥**
**युगपन्ननु संवित्तिर्विशेषणविशेष्ययोः ।**
**प्रत्यक्षेऽपि न दृष्टैव न च युष्माभिरिष्यते ॥ ३४॥**
**कार्यकारणभावो हि तद्धियो भवतां मते ।**
**तस्माद् विशेषणे जातौ पूर्वमिन्द्रियजा मतिः ॥ ३५॥**
**पदादपि तदायत्तसम्बन्धज्ञप्त्यपेक्षिणः ।**
**तत्रैव बुद्धिरित्येवं न व्यक्तेरपि वाच्यता ॥ ३६॥** (न्यायमं.)

उच्यते, प्रत्यक्षे तावद्द्वयोरपि विशेषणविशेष्ययोः इन्द्रियविषयतासामान्ये संयुक्तसमवायादिन्द्रियं प्रवर्तमानं विशेषणवद्विशेष्यमपि विषयीकरोति। न च सामान्यं प्रत्यक्षं विशेषोऽनुमेय इति व्यवहारः। एवं हि गुणमात्रग्राहिणीन्द्रिये गुणिनोऽनुमेयत्वं स्यात्। न चैवमस्ति। तस्माद् विशेष्यपर्यन्तं प्रत्यक्षं, तथा पदमपि तत्तुल्यविषयं न सामान्यमात्रनिष्ठमिति युक्तम्। यत्त '**सामान्यांशादपोद्धृत्य पदं सर्वं प्रवर्तते॥३७॥**(न्यायमं.) इति केवलव्यक्त्यभिधाने सत्यानन्त्यव्यभिचारभयादुच्यते। तद्वदभिधाने तु न तदुभयमस्तीति न शुद्धजात्यभिधेयतया शब्दव्यापारः सङ्कोचनीयः।

ननु सर्वात्मना प्रत्यक्षतुल्यविषयश्चेच्छब्दः प्रतिपत्तिसाम्यं प्रसजेत्? न च शब्दादिन्द्रियाच्च तुल्ये प्रतिपत्ती भवतः। तदुक्तम्– (वाप.२.४.१९, न्यायमं.)

**अन्यथैवाभि(ग्नि)संबन्धाद् दाहं दग्धो हि मन्यते ।**
**अन्यथा दाहशब्देन दाहार्थस्संप्रतीयते ॥ ३८॥**

उच्यते – परिहृतमेतत् सकलविशेषग्रहणाग्रहणाभ्यां प्रतिपत्तिविशेषसिद्धेः। नैतावता सामान्यमात्रनिष्ठः शब्दो भवति। अपि च निष्कृष्टसामान्यांशवचनत्वे गोशब्दाद् गोत्वशब्दाच्च तुल्ये प्रतिपत्ती स्याताम्। गौः शुक्ल इतिवच्च गोत्वं शुक्लमिति बुद्धिः स्यात्। चातुर्वर्ण्यादिवच्च स्वार्थ एव गोशब्दाद् भावप्रत्ययस्त्वतलादिः स्यात्।

अथ मन्येथाः आक्षिप्तव्यक्तिकां जातिं गोशब्दो वक्ति, भावप्रत्ययान्तस्तु निष्कृष्टामिति, तदनुपपन्नम्; अनाक्षिप्तव्यक्तिकायाः क्वचिदपि जातेरदर्शनात्। अथ गोशब्दश्रवणवेलायां न व्यक्तिसंस्पर्शशून्या जातिरवगम्यते। भावप्रत्ययान्ते तु गोशब्दे श्रुते तच्छून्या शुद्धासौ प्रतीयत इति।

यद्येवमागतोऽसि मदीयं पन्थानम्, आश्रयवती चेज्जातिरुच्यते जात्याश्रय उक्त एव भवति; नान्यथा हि साश्रयवत्युक्ता स्यात्। तदाश्रयपरिहारेणाश्रयिसामान्य–मात्रविवक्षायां त्वतलादयः प्रयुज्यन्ते। तथा चाहुः 'यस्य गुणस्य हि भावाद्द्रव्ये शब्द–निवेशस्तदभिधाने त्वतलौ' (मभा. ५.१.११९) इति। गुणस्य भावाद्द्रव्ये शब्दनिवेश इत्यस्मत्पक्षसाक्षीण्यक्षराणि। सामानाधिकरण्यं च तत्रैवोपपद्यत इत्युक्तमेव। तस्मात्

**यथा विध्यन्तपर्यन्तो वाक्यव्यापार इष्यते ।**
**तथैव व्यक्तिपर्यन्तः पदव्यापार इष्यताम् ॥ ३९॥** (न्यायमं.)

अनुपरतव्यापार एव शब्दे तदवगमात्–(न्यायमं.)

**येनान्विताभिधानं च पदानामभ्युपेयते ।**
**सुतरां तेन वक्तव्या व्यक्त्यन्तं तावतो मतिः ॥ ४०॥**
**न हि व्यक्त्यनपेक्षाणां जातीनामितरेतरम् ।**
**अन्वयोऽनन्वितानां च नाभिधानमिति स्थितिः ॥ ४१॥**
**गङ्गायां घोष इत्यादौ यथा सामीप्यलक्षणा ।**
**नैवं गौश्शुक्ल इत्यादौ विद्यते व्यक्तिलक्षणा ॥ ४२॥**
**प्रयोगप्रतिपत्तिभ्यां वृद्धेभ्योऽध्यवसीयते ।**
**तस्माद् गवादिशब्दानां तद्वानर्थ इति स्थितम् ॥ ४३॥**
**सर्वेषु च प्रयोगेषु गां दोग्धीत्येवमादिषु ।**
**तद्वतोऽर्थक्रियायोगात् तस्यैवाहुः पदार्थताम् ॥ ४४॥**

**पदं तद्वन्तमेवार्थमाञ्जस्येनाभिजल्पति ।**
**न च व्यवहिता बुद्धिर्न च भारस्य गौरवम् ॥४५॥**
**सामानाधिकरण्यादिव्यवहारश्च मुख्यया ।**
**वृत्त्योपपद्यमानस्सन्नान्यथा योजयिष्यते ॥४६॥**

तदिदमुक्तं भगव**ताक्षपादेन**, 'व्यक्त्याकृतिजातयस्तु पदार्थ' (न्यायसू. २.२.६५) इति। तुशब्दो विशेषार्थः; किं विशेष्यते? गुणप्रधानभावस्यानियमेन शब्दार्थत्वम्। अतः स्थितेऽपि तद्वतो वाच्यत्वे क्वचित्प्रयोगे जातेः प्राधान्यं व्यक्तेरङ्गभावः, यथा गौः पदा न स्प्रष्टव्येति सर्वगवीषु प्रतिषेधोऽवगम्यते। क्वचिद्व्यक्तेः प्राधान्यं जातेरङ्गभावः, यथा गां मुञ्च गां बधानेति नियतां कांचिद्व्यक्तिमुद्दिश्य प्रयुज्यते। क्वचिदाकृतेः प्राधान्यं व्यक्तेरङ्गभावः, जातिस्तु नास्त्येव। यथा पिष्टमय्यो गावः क्रियन्तामिति, तत्सन्निवेशचिकीर्षया प्रयोग इति। गुणशब्दास्तु केचित् स्वजात्यवच्छिन्नं गुणमभिधाय तावत्येव विरमन्ति। केचित्तु 'गुणमभिधाय द्रव्यमप्याक्षिपन्ति।' तत्सामानाधिकरण्ये प्रयोगदर्शनात्। तद्यथा—

**गुणैकनियतास्तावद् गन्धरूपरसादयः ।**
**गन्धत्वादिव्यवच्छिन्नगन्धादिगुणवाचिनः ॥४७॥**
**तेषां न द्रव्यपर्यन्ता वृत्तिः क्वचन दृश्यते ।**
**न गन्धः पद्ममित्यस्ति सामानाधिकरण्यधीः ॥४८॥**
**गुणं शुक्लादिशब्दास्तु कथयन्तस्तदाश्रयम् ।**
**द्रव्यमप्याक्षिपन्त्येव शुक्लोऽश्व इति दर्शनात् ॥४९॥**
**क्रियाशब्दास्तु विविधाः केचित्कर्तरि कर्मणि ।**
**करणे च प्रयुज्यन्ते केचिद्भावेऽवधावपि ॥५०॥**
**कर्त्रादिवचनास्तावन्निमित्तीकृत्य कांचन ।**
**क्रियां तद्योगिनि द्रव्ये वर्तन्ते पाचकादयः ॥५१॥**

यत्रापि तत्क्रियायोगस्तदानीं नोपलभ्यते ।
तत्रापि योग्यतां दृष्ट्वा शब्दं सन्तः प्रयुञ्जते ॥५२॥
अन्ये पूर्वापरीभूतस्वभावपरिहारतः ।
सिद्धरूपतया प्राहुः शब्दाः पाकादयः क्रियाम् ॥५३॥

अन्यत्रप्रवृत्तौ शब्दस्य निमित्तमवगम्यते ।
अभिधेयं ततश्चान्यदित्ययं प्रथमः क्रमः ॥५४॥

पाचकादिशब्दानां हि प्रवृत्तिनिमित्तं क्रिया। अभिधेयास्तु कर्त्रादयः।

क्वचित् पुनर्यदेवास्य स्यात् प्रवृत्तिनिबन्धनम् ।
तस्यैव वाच्यता भावप्रत्ययान्तपदेष्विव ॥५५॥
इतीयं लेशतस्तावन्नाम्नां वृत्तिरुदाहृता ।
आख्यातानां तु वाच्योऽर्थः पुरस्तादुपवर्णितः ॥५६॥
उपसर्गनिपातानां नाम्नामप्यविभागतः ।
प्रयोगप्रतिपत्तिभ्यामनेकोऽर्थोऽवगम्यते ॥५७॥
उपसर्गवशाद्धातुरर्थान्तरविलासकृत् ।
विहाराहारसंहारप्रहारपरिहारवत् ॥५८॥
अन्वयव्यतिरेकाभ्यां तदर्थोऽभ्यवगम्यते ।
तदागमे तत्प्रतीतेस्तदभावे तदग्रहात् ॥५९॥
अयमस्य पदस्यार्थ इति किं चिन्तितेन वा ।
योऽर्थः प्रतीयते यस्मात् स तस्यार्थ इति स्थितिः॥ ६०॥(न्यायमं.)

## (१२. *वाक्यार्थः*)

**वाक्यार्थस्त्रिधा — १. भावना, २. विधिः, ३. प्रतिभा** च।

**(१. भावना)**

**तत्रान्योत्पादानुकूलो भवन्तं प्रयुञ्जानः पुरुषव्यापारः करोत्यर्थो भावनेत्युच्यते।**

अनवच्छिन्नश्चानुष्ठातुमशक्य इति सान्निध्यात् समानपदोपात्तं धात्वर्थ—मवच्छेदकत्वेनापेक्षते। स चौदनं पचतीत्यादौ समानपदोपात्तत्वेऽप्ययोग्यत्वेन साध्यत्वात् प्रच्युतः करणांशेऽभिनिविशमानः प्रधानक्रियामोदनफलिकां निष्पादयति। करणं च केवलमसाधकतमत्वात् क्वचिदपि क्रियां निष्पादयन्नोपलब्धम्। अतस्तत्साधकतमत्वसिद्धये काष्ठादीतिकर्तव्यतानुप्रवेशः, फलानुप्रवेशस्तु तदुद्देशेनैव भावनायाः प्रवृत्तेः। अतः फलकरणेतिकर्त्तव्यतावच्छेदात् किं केन कथमित्यपेक्षिणी त्र्यंशपरिपूर्णा भावना भवति। तत्र देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादौ ओदनं फलं, पाकः करणं, काष्ठादिकारकचक्रमितिकर्तव्यता इति। तदुक्तम् —

**ओदने साध्यमाने हि पाकः करणमिष्यते ।**
**स्थाल्यग्निचुल्लीकाष्ठानामितिकर्तव्यता मता ।।६१।।**

स च प्रयत्नपरिस्पन्दात्मौदासीन्यप्रच्युत्युपलक्ष्यमाणः पुरुषव्यापारः करोत्यर्थो भावना। कथं तर्हि काष्ठानां करणत्वम्? धात्वर्थस्य क्रियात्वात्; भावनायां तु धात्वर्थस्य करणत्वात्; करणविभक्त्युपादाने च प्रधानान्तरेण सम्बन्धायोगात्।

उच्यते– 'भावनासंबन्धाद्धात्वर्थोऽपि पूर्वापरीभूतो भावनात्मावगम्यत' इति तदपेक्षया काष्ठानां करणत्वम्। अतः स्थितमेतत्– **'त्र्यंशपरिपूर्णा भावना वाक्यार्थ'** इति।

(२. विधिः)

**प्रवृत्तिनिवृत्त्योर्विधायकोऽर्थवादादिभिरुपक्रियमाणो लिङ्लोट्तव्यादिवाच्यः शब्दव्यापारो विधिः।**

तेन हि भावनायां पुरुषः प्रवर्त्यते निवर्त्यते वा। यथा यावज्जीवमग्निहोत्रं जुहुयात्, ब्राह्मणं न हन्यात्, प्रैषाननुब्रूहि, मापभाषस्व होतुः, अष्टकाः कर्तव्याः (शाभा. १.३.१), सुरा न पातव्या, पितरो वन्दनीयाः, गुरवो नावमान्याः, शिवं ते भूयात्, मा त्वा श्येन उद्वधीदिति। स च सर्ववाक्यानामर्थः; सर्वं हि वाक्यं विधिनिषेधयोरेव पर्यवस्यति। यत्रापि च लिङादयो न श्रूयन्ते तत्रापि विधिनिषेधपरतया सर्ववाक्यानां वाक्यशेषभूतास्तेऽवगम्यन्ते। तद्यथा– 'इह देशे सुभिक्षमित्युक्तेऽत्रैव स्थातव्यं, मध्याह्नो वर्तत इत्युक्ते इहैव भोक्तव्यं, सचोरः पन्था इत्युक्ते न गन्तव्यं, ग्राहाः सरित्यस्यामित्युक्ते न स्नातव्यमिति प्रतीयते। किं च महाकाव्यैरपि रामायणादिभिरिदमेव व्युत्पाद्यते– 'रामस्य पितुराज्ञां पालयतो वननिवासिनोऽपि तथाविधोऽभ्युदयः संवृत्तः, रावणस्य परदारानभिलष्यतस्त्रैलोक्यविजयिनोऽपि तथाविध उच्छेदः; तस्मात् पितुराज्ञां पालयेत्, परदारान्नाभिलष्येत्, रामवद् वर्तेत न रावणवदिति।

नन्वाख्यातवाच्यत्वेन भावनैव विधिरित्युक्तं भवति। कथं च तत्रैव तस्य प्रवर्तकत्वं, स्वात्मनि क्रियाविरोधात्? तन्न, शब्दार्थभेदेन भावनाया द्वैविध्यात्। तदुक्तम्–

**अभिधाभावनामाहुरन्यामेव लिङादयः ।**
**अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ।।६२।।** (त.वा. २.१.१)

तत्र शब्दभावना प्रेरणात्मिका शब्दस्याभिधेया विधेया च। तदुक्तम्— 'अभिधत्ते करोति च' इति। सा त्वर्थभावनांशद्वयविषया, न फलांशविषया। तदुक्तम्—

**फलांशे भावनायाश्च प्रत्ययो न विधायकः ।**
**अभिदध्युः स्वशक्त्या हि विधिमात्रं लिङादयः ॥६३॥**(त.वा.२.१.१)

तस्याश्च 'किं केन कथम्' इत्यपेक्षायामर्थभावनाविषया पुरुषप्रवृत्तिः फलांशः, प्रेरणाज्ञानं करणांशः, अर्थवादादय इतिकर्तव्यतांश इति त्र्यंशपरिपूर्णत्वम्; सा च फलकरणयोः साध्यसाधनभावमज्ञातं गमयन्ती गमकत्वात् प्रमाणं भवति। ननु च

**विधिलक्षणमेतावदप्रवृत्तप्रवर्तनम् ।**
**अज्ञातज्ञापनं ह्येवं सर्वोऽपि हि विधिर्भवेत् ॥६४॥** (न्यायमं.)

तथा हि— (श्लोकवा. ५.१२—१३)

**साध्यसाधनसम्बन्धः सर्वाख्यातेषु विद्यते ।**
**सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ॥६५॥**

न च साध्यसाधनभावावगममन्तरेण प्रवर्तकत्वं न सिद्ध्यतीति साध्य-साधनभावावगतिरवश्यकल्पनीया। प्रेरणाज्ञानजनकत्वेनैवास्य प्रवर्तकत्वात्। किमित्यसौ निष्फले व्यापारे प्रवर्तत इति चेद्, विधित एतेति ब्रूमः। स हि सफले निष्फले वा व्यापारे पुरुषं प्रवर्तयत्येव। यच्च पुरुषेष्वप्रवर्तमानेष्वपि प्रामाण्यं तदपरिहार्यमेव। कल्पिते हि फले वैषयिकसुखद्वेषिणो वीतरागा न प्रवर्तन्ते, प्रवृद्धतररागास्तु न निवर्तन्त इति (न्यायमं.)।

उच्यते 'यजेत स्वर्गकाम' इत्यादौ विधिर्भावनायां पुरुषं प्रवर्तयति। भाव्यनिष्ठस्वभावको व्यापारो भावना। सा च साध्यादिस्वरूपपरित्यक्ता निरुपपत्तिकैव स्यात्। साध्यत्वं च समानपदोपादानसन्निधिवशाद् धात्वर्थस्याहोस्विदिष्यमाणतया कामिपदोपात्तस्य स्वर्गादेः स्यादिति संशये योग्यत्वात् स्वर्गस्यैव, न धात्वर्थस्येति। तदुक्तम्— (श्लोकवा. ५.१४—१५)

**विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।**
**श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥६६॥**
**विधौ कृतमतिक्रम्य स्वर्गादिः साध्यतेष्यते ।**
**तत्साधनस्य धर्मत्वमेवं सति च गम्यते ॥६७॥**

धर्मे ह्यदृष्टविषये चोदनैव प्रमाणम्। चोदनैव हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं वाऽर्थमवगमयितुं शक्नोति, नान्यत् किंचनेन्द्रियमिति (शाभा. १.१.२) एतेनापौरुषेयत्वेन यथार्थप्रतिपादकाप्तप्रणीतत्वेन वा निरस्तदोषांशस्य बाधकप्रत्यय– रहितस्य वैदिकस्य लौकिकस्य च वाक्यस्यौत्सर्गिकं प्रामाण्यमुक्तं भवतीति विधिर्वाक्यार्थ इति।

**(३. प्रतिभा)**

**स्वं स्वमर्थमभिधायोपरतेषु पदेषु पदार्थप्रतिपत्त्यनन्तरमुपजायमाना इदं तदिति अव्यपदेश्यानुपदेशसिद्धा हिताहितप्राप्तिपरिहारहेतुः प्रवृत्त्यनुकूला बुद्धिः प्रतिभा।**

तथा हि– पदनिबन्धनानां पदावयवनिबन्धनानां च अर्थप्रत्यवभासमात्राणां विच्छेदेन प्रवृत्तौ पदार्थैः क्रमेण गृह्यमाणैराहितसंस्कारासु बुद्धिषु सर्वार्थप्रत्यवभास– संसर्गानुगृहीता प्रत्यस्तमितभेदप्रत्यवभासा प्रवृत्तिफलप्रसवानुमेयाभिन्नजातीयैव प्रतिभा प्रत्यात्मं विवर्तते। यथा मन्दविषरसादिषु भिन्नानां द्रव्याणां पूर्वमदृष्टांशसंसर्गात् प्राप्तपरिपाकानां मदमरणसुवर्णादिरर्थक्रिया दृश्यते, तथा प्रतिपदं भिन्नानां शब्दानामुच्चारणेष्वदृष्टा, पुनः क्रमेणाविच्छिन्नानामुच्चारणे तासु तासु इतिकर्तव्यतास्वनुकूला प्राणिनां प्रतिभोपजायमाना दृश्यते। अयं च अस्या भावनादिभ्यो विशेषः। यावत् किमत्र मया कथितं प्रतिपन्नमर्थरूपं वा परेण कथमनुसन्धीयत इति न विचार्यते, तावदनाख्येयेन उपायेन पूर्वोत्तरानुसन्धानमेषां प्रकल्पयति। प्रत्यक्षानुमानविषयेऽपि यावत् पूर्वापरप्रत्यवमर्शः शब्दोल्लेखवान् प्रतिभया न क्रियते, तावत् प्रत्यक्षमनुमानं वा स्वकार्यं न प्रसाधयति। प्रतिभोपगृहीतानि सर्वप्रमाणानि प्रमाणतां लभन्ते।

**प्रतिभालोचनो हि लोक इतिकर्तव्यतासु प्रवर्तते।। ६८।।**

ननु च न प्रतिभा वाक्यार्थः, यतो बालानां स्तन्यपानादिषु, हंसानां क्षीरनीरविवेचने, जन्त्वादीनां कुलायादिकरणे, जातमात्राणामेव पशुमृगसरीसृपा– दीनामुदकसन्तरणे, सुप्तानां च प्रबोधादौ, कुमार्याश्च श्वो मे भ्राता आगमिष्यतीति ज्ञाने स्वभावतो वाक्यश्रवणमन्तरेणापि प्रतिभोपजायमाना दृश्यते। तथा कालविशेषात् पुंस्कोकिलानां स्वरविकारे, अभ्यासविशेषात् रत्नादि परीक्षकाणां तद्दोषगुणज्ञाने, अदृष्टाद् रक्षःपितृपिशाचादीनां परावेशान्तर्धानादौ, योगाद् योगिनां पराभिप्रायावगतौ,

बाह्येन्द्रियवृत्तिनिरोधाद् वसिष्ठादीनामतीन्द्रियज्ञाने, कृष्णद्वैपायनाद्यनुध्यानात् सञ्जयादीनां दूरदर्शनश्रवणादौ, कारणान्तरेभ्योऽपि प्रातिभमुपलभ्यते।

उच्यते— यथैव साक्षात् पुरुषोपदिष्टवाक्यादर्थक्रियासु शब्दव्यापारेणोपसंहृता प्रतिपत्तृणां प्रतिभा विवर्तते, तथैव बालादीनां स्तन्यपानादिषु पूर्वशब्दभावनानुगमाद् वाक्यार्थप्रतिपत्तृभिरविशिष्टैव प्रतिभोपजायते। येषामपि च अप्रसिद्धशब्दनिबन्धनो व्यवहारः, तेऽपि हस्त्यश्वादयोऽपि जन्मान्तरीयशब्दभावनावशात् प्रत्युत्पन्नशब्दप्रत्ययाः प्रतिभामनुगच्छन्तः सर्वमारभन्ते। पूर्वशब्दभावनानुगमाच्च स्वबीजानामाभिमुख्येऽपि प्रकृष्टशब्दव्यापारे कोकिलादीनां स्वरविकारादौ प्रतिभोपजायते। पूर्वजन्मजनित— शब्दश्रवणसंस्कारोद्बोधकानि त्वन्यानि कालाभ्यासादृष्टयोगध्यानानुध्यानादीनि साधनानि (वाप. २.१५२)। इयांस्तु विशेषः — 'क्वचित् वाक्यमुच्चरितमात्रमेव तमव्यपदेश्यमसत्त्वभूतं प्रतिभापदाभिधेयं स्वार्थं प्रकाशयति। क्वचित्तु चिरव्यवहितमपि विशिष्टप्रतिभाबीजभावनानिवेशान्निमित्तान्तरसान्निध्ये तदेव वाक्यं पारम्पर्येण प्रतिभाख्यं स्वार्थमाविर्भावयतीति प्रतिभा वाक्यार्थ इति।।

**(क्रियायाः पदार्थत्वं भावनायाश्चापदार्थत्वम्)**

ननु च क्रियापि नाम वाक्यार्थो विद्यते, सोऽपि वक्तव्यो भवति।

नैवम्। पदार्थः क्रिया, न वाक्यार्थः। पदार्थानां तु मिथः संसर्गे यदाधिक्यमुपजायते स वाक्यार्थः। तदाह—(मभा. २.३.४६) **'यदत्राधिक्यं वाक्यार्थः स'** इति। **स कदाचित् पुरुषव्यापाररूपो भावनेति, कदाचित् शब्दव्यापाररूपो विधिरिति, कदाचिद् बुद्धिव्यापाररूपः प्रतिभेति।**

ननु च भावनापि पदार्थ एव धातोर्वा प्रत्ययाद् वा गम्यमाना पदार्थत्वं न व्यभिचरति।

अथैवमुच्यते — न पदार्थमात्रं भावना, अपि तु परिदृश्यमानपूर्वापरीभूत— विध्यादिभावार्थस्वरूपातिरिक्तः पुरुषव्यापारः, सोऽपि 'धातुवाच्यत्वे प्रत्ययवाच्यत्वे वा न पदार्थत्वमतिक्रामति' (न्यायमं.)।

उच्यते— 'यजेत' इत्यादौ प्रकृत्यर्थः क्रियारूपो यागादिः, प्रत्ययार्थः प्रेरणारूपो विध्यादिः, न चैतदतिरिक्तो भावनाख्यः कश्चिदपि पुरुषव्यापारो दृश्यते। न च भावनावाचिनीं काञ्चिदपि विभक्तिं लिङादिमिव विध्यादौ स्मरति **पाणिनिः**। मैवम्—

**आस्तां विधिपदं तावद् वर्तमानापदेशिनः ।**
**शब्दाद् यजन इत्यादेर्भावना सावगम्यते ।।६९।।** (न्यायमं.)

पचत इत्यादेर्हि यथा पाकादिर्धात्वर्थः प्रतीयते तथा कर्तृव्यापारः करोत्यर्थोऽपि, पाकाद्युपरञ्जकाभावेऽपि[1] तत्प्रतीतेरनपायात्। यथा हि औपगवः, कापटवः, औपमन्यव इति उपगुप्रभृतीनामावापोद्वापयोरपि 'तस्यापत्यम्' (४.१.९२) इति प्रत्ययार्थोऽनुवर्तते, तथा पचति, पठति, गच्छतीत्यादावपि करोत्यर्थोऽनुवर्तमानो दृश्यते। तथा हि— यदा पचतीत्याख्यातपदस्य पदार्थो व्याचिख्यासितो भवति, तदा पाकं करोतीति वाक्यं व्याख्यातारः प्रयुञ्जते। तत्र पाकशब्देन द्वितीयान्तेन साध्यं प्रकृत्यर्थं कर्तृव्यापारं[2] तु करोतीति पदेन व्याचक्षते। अपि च, किं करोति देवदत्त इति पृष्टास्सन्तो द्वये वक्तारो भवन्तिपचती'ति, पाकमिति। तदिदमुभयरूपमप्युत्तरमेकार्थम्, अन्यथा न तेन प्रष्टा प्रत्याय्येत। तस्मात् पाकं करोतीति पदद्वयस्य योऽर्थस्स एव पचतीत्येकपदस्येति।

आह— न प्रत्ययात् कर्तृसङ्ख्याव्यतिरेकेण धात्वर्थातिरिक्तो व्यापारः प्रतीयते, प्रतीयते चेत् करोतीत्यत्रापि प्रतीयेत। तदुक्तम्—

**यथा पाकं करोतीति व्यवहारो विभागतः ।**
**तथा कारं करोतीति प्रतीतिर्नास्ति लौकिकी ।।७०।।** (न्यायमं.)

तस्याः किं बीजमिति चेत् कृभ्वस्तीनां क्रियासामान्यवचनत्वम्। न च सामान्ये सामान्यानि भवन्ति, यथा हि यजेत दद्याज्जुहुयादिति करोतिसामान्यमवगम्यते नैवमस्ति भवतिकरोतीति।

ननु च कथं करोत्यर्थः करोतिशब्दान्नावगम्यते?

न नावगम्यते; किंतु यागादिविशेषानवच्छिन्नो नानुष्ठानयोग्यो भवति।

एवं तर्हि मा भूत् प्रत्ययार्थो भावना। प्रकृत्यर्थो भविष्यति। यथा हि शाबलेयादीनामनुगतं गोरूपमवभासते व्यावृत्तं च शाबलेयादिरूपम्, एवं यागादिकर्मणामनुगतं व्यापाररूपमवभासते। परस्परविभक्तं च यागादिरूपम्। तत्र यदनुगतं करोतिसामान्यं सा भावना, यद् व्यावृत्तं यागादिकं स धात्वर्थः। यथा च शाबलेयादेः पृथग्दर्शयितुं गोत्वमशक्यमेवं भावनापि यागादेः पृथग्दर्शयितुं न शक्यते।

---

१. रञ्जकाभावे = रञ्जकाद्युपजनाभावे राघवः।

२. कर्तृव्यापारो प्रत्ययार्थं इति राघवः।

तदुपरक्तत्वेन सर्वदोपलम्भात्। न चैतावतासौ नास्ति, नास्तितायां हि तस्याः किं करोतीति अनवगतविशेष्य(ष)व्यापारप्रश्ने पचति पठतीत्युत्तरमनुत्तरमेव भवति। किंच—

**औदासीन्यदशायां तु पुमान् येन प्रवर्तते ।**
**स यत्नो यागहोमादौ भावनेत्यभिधीयते ॥७१॥**

सा च सामान्यरूपापि न गोत्वादिवत् क्रियात्ववद् वा सिद्धतयावभासते, येन विधेया न भवति। यद्येवम्—

**क्रियाविशेष एवासौ व्यापारो ज्ञातुरान्तरः ।**
**स्पन्दात्मकबहिर्भूतक्रियाक्षणविलक्षणः ॥७२॥** (न्यायमं.)

क्रियायाश्च पदार्थत्वमिष्यत एव। ननु च पदार्थत्वेऽपि क्रियाया वाक्यार्थत्वमेव न्याय्यम्।

**यतः पदार्था वाक्यार्थभावमायान्ति संहताः ।**
**अपेक्षानुगुणान्योन्यव्यतिषङ्गविशेषिताः ॥७३॥** (न्यायमं.)

व्यतिषङ्गश्च प्रधानगुणभावे भवति।

**साध्यं च साध्यमानत्वात् प्रधानमवगम्यते ।**
**क्रियातो नापरं तच्च वाक्यार्थोऽतः क्रियेष्यताम् ॥७४॥**
**यजेत दद्याज्जुहुयादधीयीतेति चोदितः ।**
**क्रियां साध्यतया वेत्ति तां च लोकोऽनुतिष्ठति ॥७५॥**(न्यायमं.)

यच्चाधिकारिपदं स्वर्गकाम इत्यादि तदपि भावनापेक्षितकर्तृसमर्पकत्वेन सङ्गच्छते। अस्यां क्रियायामयं कर्ता, अनेनैषा क्रिया संपाद्येति। न चात्र क्रिया प्राधान्यमुज्झति। न हि क्रिया कर्त्रर्था (न्यायम), कर्ता तु क्रियार्थः, स हि तां निर्वर्तयन्नुपलभ्येत। शब्दोऽपि तथैवोपदिशति एष इदं कुर्यादिति। किमर्थं पुनरसौ क्रियामनुतिष्ठतीति चेत् शब्दादेवेति ब्रूमः।

**बुद्ध्वेदमेव भगवान् ददर्श खलु बादरिः ।**
**न द्रव्यगुणसंस्कारव्यतिरिक्तेऽस्ति शेषता ॥७६॥** (भा.वि.)
**वेदाद् गुरुनियोगाद्वा शासनाद्वा महीभुजः ।**
**न सचेताः क्रियां कांचिदनुतिष्ठति निष्फलाम् ॥७७॥** (न्यायमं.)

अथोच्यते 'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम् (मभा.पस्प.)। तर्हि स्वर्गकामपदमपि शब्द एव, तस्याप्यत्रान्वयो वक्तव्यः (न्यायमं.)।

ननु च कर्तृपदमेकं कर्ता च क्रियार्थ इति।

नैवम्। न कर्तृपदं स्वर्गकाम इति, अपि त्वधिकारिपदम्। स्वर्गे कामोऽस्य स्वर्गं वा कामयते, स्वर्गकामनाविशिष्टः पुरुषोऽस्मात्पदादवगम्यते। तदत्र काम्यमानः स्वर्गः कथं योगक्रियया सम्बध्यते? स्वर्गस्य निरतिशयप्रीतिरूपत्वात्, न प्रीतिरद्रव्यत्वात् क्रियाङ्गभावं भजते। न च प्रीतेः क्रियार्थत्वमुपपद्यते। प्रीत्यर्थमन्यद्, नान्यार्था प्रीतिरिति। एवं च क्रियासाधनानुपदेशात् न कर्तृसमर्पकत्वेन स्वर्गकामपदसमन्वयः, अपि त्वधिकारिसमर्पकत्वेन।

अथ कोऽयमधिकारी नाम?

कर्मणः स्वामी। ननु च कर्तैव कर्मणः स्वामी।

नैवम्, स्वामी सन् कर्ता, न कर्ता सन् स्वामी।

ननु क्रियाकारकसंबन्धव्यतिरेकेण कोऽन्यः कर्मणः पुरुषस्य च सम्बन्धः?

उच्यते– ममेदं कृत्यम् अहमत्र स्वामीति स्वस्वामिभावमशक्यम् (अवगत्य) पाश्चात्त्यक्रियाकारकसम्बन्धो गम्यते।

पाश्चात्त्य इत्यत्र किं प्रमाणमिति चेत् अनुपादेयविशेषणविशिष्टस्य पुंसो निर्देशस्तस्मादधिकृतस्य कर्तृत्वं, कर्तुरधिकार इति। इत्थं च स्वर्गकामस्याधिकारो निर्वहति। यदि तत्कर्म स्वर्गकामं स्यात् स्वर्गोऽपि भोग्यो भवेत्। कथमहं स्वर्गं प्राप्नुयामित्येवं साध्यत्वेन स्वर्गमिच्छन् स्वर्गकाम उच्यते। यदि च न स्वर्गसाधनं कर्म स्यात् तद्विरुद्धमिदमापतति स्वर्गं कामयते यागं करोति, अन्यदिच्छत्यन्यत्करोतीति। अतः कर्मणि काम्यमाने साधनताम् (अ)प्रतिपद्यमानः स्वर्गकामस्तत्र नैवाधिक्रियते। न चानधिक्रियमाणस्तत्र सम्बध्यते। तदेवमधिकृतत्वेन स्वर्गकामस्य कर्मणि सम्बन्धात् स्वर्गयागयोश्च साध्यसाधनभावावगममन्तरेणाधिकारस्यानिर्वाहाद् अवश्यं क्रियायां साधनत्वं स्वर्गस्य च साध्यतवमभ्युपगन्तव्यम्। अतश्च क्रियायाः फलं प्रति गुणभावादप्राधान्यम्, अप्राधान्याच्च न वाक्यार्थत्वम्। तदुक्तम् ''कर्माण्यपि हि जैमिनिः फलार्थत्वाद्'' इति। का चेयं क्रिया? वाक्यार्थ इत्युच्यते य एष यागादिर्भावार्थो धातुवाच्यः, उत प्रत्ययार्थः, कश्चिदतिरिक्त इति। तत्र भावार्थस्य काम्यमानसाधनत्वादप्राधान्यमुक्तमेव। प्रत्ययार्थस्तु काम्यमानभावार्थगतसाध्यसाधन–

सम्बन्धापरित्यागेनैव वाक्यार्थतां प्रतिपद्यते। तस्मान्न क्रियामात्रपर्यवसायी वाक्यार्थ इति।

**किमिदानीं फलस्यैव वाक्यार्थत्वं प्रचक्ष्महे ।**
**तद्धि प्रधानं साध्यं च तदर्थो ह्यखिलः श्रमः ॥७८॥**

नैवम्; यथा क्रियायाः फलार्थत्वादप्राधान्यम् एवं फलस्यापि पुरुषार्थत्वात्। न हि स्वर्गः स्वतन्त्र एव सत्तां लभतामिति पुरुषो यतते, अपि तु स्वोपभोग्यतयैनमभिलषति। तदाह —''फलं च पुरुषार्थत्वात्'' (मीसू. ३.१.५)।

तर्हि पुरुष एव वाक्यार्थो भवतु।

नैवम्; 'यजमानेन संमितौदुम्बरी भवति' इति तस्यापि क्रियाङ्गत्वात्। तदाह 'पुरुषश्च कर्मार्थत्वात्' इति (मीसू. ३.१.६)। हन्तैवं क्रिया फलार्था, फलं पुरुषार्थं, पुरुषः क्रियार्थ' इति चक्रके पतिताः कस्य प्राधान्यं शिष्मः?

उच्यते– पुरुषस्तावन्न वाक्यार्थः, पदार्थानां मिथः संसर्गेऽपि अव्ययकारक–विशेषणार्थोपगृहीतस्याख्यातार्थस्यैव प्राधान्येन वाक्यार्थत्वात्।

ननु चाख्यातेऽपि यजेतेत्येवमादौ कर्तर्येव लकारः?

मैवम्; कोऽयं लकारो नाम?

सिद्धं हि साध्यायोपादीयत' इति प्रत्ययार्थोऽपि कर्ता प्रकृत्यर्थे क्रियायामेव न्यग्भवति। फलमपि न वाक्यार्थः सिद्धासिद्धविकल्पानुपपत्तेः। सिद्धस्य तावत् फलस्याभिधानमेव नास्ति, काम्यमानत्वेन निर्देशात्।

**साध्यमानत्वपक्षे तु साक्षात् तत्सिद्ध्यवेदनात् ।**
**व्यापार एव तन्निष्ठो वाक्यार्थ इति युज्यते ॥७९॥**
**अत एव हि वाक्यार्थं भावनां प्रतिजानते ।**
**यथोचितफला मंशत्रयसम्बन्धबन्धुराम् ॥८०॥** (श्लोकवा.)

भाव्यनिष्ठो हि भावकव्यापारो भावनेति।

**सैष द्वादशभेदोऽर्थः क्रियादिः प्राक्प्रकीर्तितः ।**
**वाच्यो विशेष्यः शब्दस्य प्रत्याय्यो ह्यभ्युपेयते ॥८१॥**

न चैतद्वाच्यं– 'वाक्यस्यैव प्रत्यायकत्वं न पदानां, यतो यथा गुडशब्दो गुडद्रव्यमभिधत्ते तथा प्रत्याययत्यपि तदविनाभावि माधुर्यम्। यदि वा पदान्येव संहत्यार्थमभिदधति वाक्यम् (शाभा. ३.३.१४), आख्यातशब्दो वाक्यम्, पदसङ्घातो

वाक्यमित्यपि दर्शनानि विद्यन्ते। क्रियादयश्च पदार्थ एवान्तर्भवन्ति। तथा हि— धात्वर्थः क्रिया, तां कालो विशिनष्टि, प्रत्ययार्थः कारकम्, तत् पुरुषो विशेषयति। तस्योभयस्याप्युपाधयोऽवच्छेदका भवन्ति। सम्भूय प्रकृतिप्रत्ययौ प्रत्ययार्थं ब्रूतः। यं तं प्रधानमामनन्ति स भेदाभेदाभ्यामुपस्कारार्थविशिष्टप्रातिपदिकार्थव्यपदेशं लभते। तस्य शक्तिसङ्ख्याभिव्यक्तये विभक्तिः, तदन्तं पदं, पदानामपदानां च सामर्थ्ये वृत्तिः, वृत्तानामपि च कृत्तद्धितसमासानां पुनः प्रातिपदिकसंज्ञायां सुबुत्पत्तेः पदसंज्ञेति।

वाक्यं पुनरखण्डवाक्यार्थपक्षे वाचकमपि भवति। तत्र शब्दस्यार्था—भिधानसामर्थ्यं वाचकता। सा त्रिधा—मुख्या, गौणी, लक्षणा च। यथा गौर्गच्छति, गौर्बाहीकः, गोषु निवसतीति। आसां च विशेषान् विशेषेणाग्रतो वक्ष्यामः। तेषु प्रबुद्धेषु प्रबुद्धाप्रबुद्धैः प्रसिद्धपदसामानाधिकरण्योपदेशवृद्धव्यवहारेभ्योऽधिगतेषु संज्ञासंज्ञिसम्बन्धबलेन शब्दस्तटस्थ एव गोत्वमर्थं प्रत्याययति। तदाहुः—

**प्रसिद्धपदसामानाधिकरण्यात् प्रतीयते ।**
**अप्रसिद्धपदस्यार्थश्चूते रौति पिको यथा ॥८२॥**
**तथा हि रौति यश्चूते पिकः स इति निश्चयः ।**
**उपदेशाद् यथार्थोऽयं पनसाख्यः प्रकाशते ॥८३॥**
**व्यवहारात् तु शब्दार्थसम्बन्धस्त्रिप्रमाणकः ।**
**वृद्धशब्दाभिधेयानि प्रत्यक्षेणात्र पश्यति ॥८४॥**
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।**
**अन्यथानुपपत्तौ च वेत्ति शक्तिं द्वयाश्रयाम् ॥८५॥**

(श्लोवा. प्रत्य. १४०, ४१इति)

स्वावच्छेदेन विशिष्टज्ञानजनकता विशेषणत्वम्। तत् त्रिधा भेदकमनु—रञ्जकमुपलक्षकं च। यथा विश्वजिता यजेत, श्वेतं छागमालभेत, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति। न च गोत्वादयः कदाचिदपि शब्दानुवेधवन्ध्यबोधविषयतां प्रतिपद्यन्ते। तथा हि— 'आयं गौः पृश्निरक्रमीत्' (तै.सं. १.५.३.१) इत्यादौ यथा जातिगुणक्रियावच्छिन्नविषयावभासिनि सविकल्पके, तथा निर्विकल्पके विज्ञाने शब्दविशिष्ट एवार्थः परिस्फुरति। तदाह— (वाप. १.१२३)

**न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥८६॥**

न चैतद्वाच्यम्—(श्लोकवा. प्रत्य. ११२)

**अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥८७॥**

यतो बालादयो जन्मान्तरानुभवोपजनितनानासंस्कारजातयो जात्याद्युल्लेखेनैव तं तमर्थं प्रतियन्ति। तथा हि—'तदहर्जातस्यापि बालकस्य पुरतो विदग्धवनिता: प्रदीपं न प्रस्थापयन्ति कर्कटो x x x न्मा भविष्यतीति।

अथ तथात्वातथात्वयो: मध्यस्थता प्रतीतिहेतुत्वात् प्रत्यायकत्वं, कथं पुनरतथाभूतमर्थं शब्दस्तथा प्रत्याययति?

शब्दशक्तिमाहात्म्यात्। शब्दशक्त्युपजनिता हि बुद्धय: स्वबीजपरिपाक-वशादाकारविशेषवत्य उपजायमाना: सत्यपि वस्तुनोऽभेदे भेदमुपदर्शयन्ति। तद्यथा राहो: शिर:, शिलापुत्रकस्य शरीरमिति। तदुक्तम्—

**मायेन्द्रजालप्रख्योऽयं प्रविभाग: प्रकल्प्यते ।**
**शब्दशक्तिमहिम्नैव निर्विभागेऽपि वस्तुनि ॥८८॥**

अन्ये त्वाहु:—

**न वस्तुनोऽधिकं रूपं न शब्दस्याधिकार्थता ।**
**शब्द: शब्दान्तरोपाधेरधिकार्थ: प्रतीयते ॥८९॥**

तद्यथा पुरुष इति पुरुषमात्रं, राज्ञ इति शब्दान्तरसन्निधेस्तु स एव विशिष्ट: प्रतीयते पुरुषविशेषोऽयं राजपुरुष इति। एवं भवतिपचतीत्यादावपि पचतीति क्रियामात्रप्रतीति:, भवतीति तु पदोपाधि: कर्तृशक्तिप्रयुक्ता प्रतीयते।

अपरे तु मन्यन्ते सकलविकल्पोल्लेखविरहितेऽपि वस्तुनि शब्दा: स्वमहिम्नैव नानाविधबुद्ध्युत्पत्तिकारणीभूता: शक्ती: सन्निवेशयन्ति, यद्वशादभिन्नरूपमपि वस्त्वन्यथा चावभासत इति। तथा हि कथक: कंसं घातयतीत्युक्ते कंसवधमाचष्ट इति प्रतीयते। यदा त्विन्द्र: कंसं घातयतीति प्रयोगस्तदा 'कंसघ्नं तमुपेन्द्रम् इन्द्र: प्रयुङ्क्त' इति।

अन्ये तु कथक: कंसं घातयतीत्यत्रापि प्रयोजकं व्यापारं ब्रुवते। यत:—

**शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ।। ९० ।।**(वाप.साधन ३.७.५)

तेषां चोत्पत्तेः प्रभृत्याविनाशात् स वृद्धीराचक्षाणः परानपि तथैव प्रत्याय्ययति। तथा वक्तारो भवन्ति 'गच्छ हन्यते कंसः, किं गतेन, हतः कंस' (मभा.३.१.२६) इति।

अथापरेषां दर्शनम्—

**विकल्पयोनयः शब्दा विकल्पाश्शब्दयोनयः ।**
**तेषामन्योन्यसम्बन्धो नार्थं शब्दाः स्पृशन्त्यमी ।। ९१ ।।** (न्यायमं.)

तद्यथा—

**गुणानुरागमिश्रेण यशसा तव सर्पता ।**
**दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ।। ९२ ।।**
**अत्रार्धकुङ्कुमेत्युक्ते सौरभादिगुणान्विता ।**
**यशोऽनुरागयोर्वर्णप्रक्लृप्तिरवगम्यते ।। ९३ ।।**
**वधूशब्देन तु दिशां नायिकात्वं प्रतीयते ।**
**न च सम्बन्धगन्धोऽपि वास्तवस्तेषु विद्यते ।। ९४ ।।**

तदुपज्ञं चैष लौकिकः प्रवादः—

**अतहट्ठिए वि तह तह संठिए व्व हिअअम्मि जा णिवेसेइ ।**
**अत्थविसेसे सा जअइ विअडकइगोअरा वाणी ।। ९५ ।।**
(अतथास्थितानपि तथासंस्थितानिव हृदये या निवेशयति ।
अर्थविशेषान् सा जयति विकटकविगोचरा वाणी ।।)

भवतु नाम शब्दस्य वाचकत्वपक्षे विवक्षानुप्रवेशादर्थातथात्वेऽपि तथा प्रत्यायकत्वम्। विशेषणपक्षे तु कथमिवैतदुपपद्यते? विशेषणेन हि प्रधानानुयायिना भवितव्यम्, प्रधानेन त्वविचलितस्वार्थेन।

नैवं, विशेषणमपि शब्दानुरञ्जकत्वेनार्थमध्यासीनः कुतश्चिदुपाधेरन्यथाव-भासमानः स्वाश्रयमप्यन्यथावभासयति। तद्यथा—

**मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे ।**
**बाहू प्रलम्बावङ्गेषु वङ्गेषु चरणौ मृदू ।। ९६ ।।** इति।

अत्र स्तनादयो जातिशब्दाः सव्यत्वदक्षिणत्वजातिद्वयैकार्थसमवायो—

पाधेरेकत्वयोगिनोऽपि द्वित्वेनावभासमानाः स्वाश्रयानपि तथैवावभासयन्ति। एतेन व्यक्तौ पदार्थे बहूनामपि द्वित्वावभासो व्याख्यातः। तद्यथा–

**दैत्याधिपप्राणमुषां नखानामुपेयुषां भूषणतां क्षतेन।**
**प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम्।। ९७।।** (माघ.३.१४)

अत्र विशिष्टनखक्षतभूषादिविशेषोपादानात् सुव्यक्तैव स्तनशब्दस्य व्यक्त्यर्थतेति। एवं कदा पूर्वाः फल्गुन्य इति चन्द्रमसा सह योगे बहुत्वविवक्षायां द्वयोरपि बहुत्वेनावभासः, कदा तिष्यपुनर्वसू इति तारकानपेक्षनक्षत्रद्वितवविवक्षायां बहूनामपि द्वित्वेनावभासो भवति।

अथ यथा चन्द्रयोगस्याविवक्षायां तारकागतद्वित्वसङ्ख्यया पूर्वे फल्गुन्याविति भवति, एवं चन्द्रमसा सह योगस्य तारकासङ्ख्यायाश्च विवक्षितत्वे भवितव्यं तिष्यपुनर्वसव इति; प्रयोगे तु न भवितव्यम्; न हि लोके तादृशी विवक्षा विद्यते; विवक्षा च कुलवधूरिव न लोकमर्यादामतिक्रामति। तद्यथा– (रघु. ३.१६)

**जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।**
**अदेयमासीद् द्वयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ।। ९८।।**

ननु चार्थोपाधेरप्यर्थोऽन्यथाभासमानो दृश्यते। तद्यथा–

**पायाद् वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको**
**यस्याऽऽकस्मिकवर्धमान–वपुषस्तिग्मद्युतेर्मण्डलम् ।**
**मौलौ रत्नरुचि श्रुतौ परिलसत्ताटङ्ककान्ति क्रमात्**
**जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम् ।। ९९।।**

ततश्च न ज्ञायते किमयमर्थोपाधिनिबन्धनोऽर्थस्यान्यथावभासः, उत शब्दोपाधिनिबन्धन इति।

चिरं जीव, यदवतीर्ण इव प्रतिपाद्यार्थपदवीं दृश्यसे; पृच्छाम्यायुष्मन्तं क एषोऽर्थो नाम?

किं ब्रवीषि– 'यः शब्देन प्रतिपाद्यते'?

अथ गौरित्यत्र कः शब्दार्थः?

किमात्थ, 'सास्नादिमान् पिण्डः' इति?

कथं स्वरूपमपि पृष्टः शब्देनैव व्यपदिशसि?

किमवोचः, शब्दाख्यविशेषणानुरक्तस्य तस्य स्वरूपमन्यथाख्यातुं न शक्नोमि, शब्दापरित्यागलब्धप्रकाशयैव च तदनुभूत्यानुभवामि?

तर्हि शब्दात् पृथगर्थतत्त्वस्य व्यपदेष्टुमनुभवितुं चाशक्यत्वाच्छब्दस्यैवाय-मध्यासो विवर्तो विपरिणामो वार्थो नाम, नान्यः कश्चिदिति निश्चीयताम्। युक्तं चैतत्। न हि निरूपयन्तोऽपि शब्दाद् विभिन्नमर्थतत्त्वमुपलभामहे। अन्येऽपि चैवमाहुः— (प्र.वा. २.३५४)

**अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।**
**ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥१००॥**
**ग्रहीतृग्रहणग्राह्यमायापथपरिच्युताम् ।**
**नमामः परमानन्दज्योतीरूपां सरस्वतीम् ॥१०१॥** इति।

**(विवर्तः)**

कः पुनरयं विवर्तो नाम ?

उच्यते **एकस्य तत्त्वादप्रच्युतस्य सन्निवेशविशेषादिभिरसत्यप्रविभक्तान्य-रूपोपग्राहिता विवर्तः।**

तत्र **यथा जलादयः कल्लोलादिरूपेण सर्पादयः कुण्डलादिरूपेण नीलादयश्चित्रादिरूपेण विवर्तन्ते तथा शब्दतत्त्वमविद्योपाधेस्तेन तेनार्थरूपेण तथा तथा विवर्तते।**

**तद्यथा** 'व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरतलम्, अञ्जनचूर्णपुञ्जश्यामलं शार्वरं तमः।' (प्रप्राभा.) इति।

अथ यथा शब्दस्यार्थो विवर्तस्तथार्थस्य शब्दो यदि भवेत् को दोषः स्यात्? न कश्चित्। किन्तु—

**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शनी ॥१०२॥** (प्रपाभा.)
**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥१०३॥**(काव्याद.१.४)

ननु चाभिधीयमानतेव प्रतीयमानतापि वाक्यार्थधर्मो विद्यते।

यथा चोच्यते— (ध्वन्या. १.४)

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत् तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥१०४॥**

तस्य च वाक्यार्थभावनोत्तरकालमवगतेरध्यासपक्षे विवर्तपक्षे वा कथमिवोपपत्तिर्भवति?

उच्यते, विपरिणामाद् भविष्यति।

**वस्तुनः अवस्थान्तरगमनं विपरिणामः। तत्र यथा मृदादयो घटादिरूपेण क्षीरादयो दध्यादिरूपेण चैत्रादयो युवादिरूपेण विपरिणमन्ते, तथेदं शब्दब्रह्माप्यविद्योपाधेः तेन तेनार्थरूपेण तथा तथा विपरिणमते।**

तद्यथा—'सन्ति मे पञ्च पुत्राः, मातरं पितरं शुश्रूषितवानस्मि, योऽयं युवा द्रमिडदेशे द्रमिडकन्याभिः सहावसं सोऽहमिदानीं पश्चिमे वयसि गङ्गातीरे तपश्चरामीति। अत्र च शब्दार्थयोः पृथगवभासाद् वाक्यार्थस्याभिधीयमानतायां प्रतीयमानतायां वा नानुपपत्तिः, न चैतावता शब्दव्यापारो विरंस्यति। यतस्तात्पर्यमस्य ह्यग्रतो विशेषेण वक्ष्यमाणमास्ते। तस्योदाहरणमात्रम्—

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या—**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।**
**सेतुं बध्नाति कस्मादयमिह सकलद्वीपनाथानुयात—**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥१०५॥**

अत्र वर्णनीयराजविशेषस्य विजयिनो यथाश्रुतवाक्यार्थोऽभिधीयमानस्त्वयीति पदे विष्णवध्यासावतारः समस्तीति प्रतीयमानस्तदवतारान्तराणां निद्रालसत्वादिदोषयोगादस्य च तद्व्युदासात् ततो वैशिष्ट्यप्रतिपादनं तात्पर्यम्, यस्य काव्येषु ध्वनिरिति प्रसिद्धिः। तदुक्तम्—

**१. तात्पर्यमेव वचसि ध्वनिरेव काव्ये**
**सौभाग्यमेव गुणसम्पदि वल्लभस्य ।**
**लावण्यमेव वपुषि स्वदतेऽङ्गनायाः**
**शृङ्गार एव हृदि मानवतो जनस्य ॥१०६॥**

कः पुनः काव्यवचसोः ध्वनितात्पर्ययोर्विशेषः?

उच्यते —

२. यदवक्रं वचश्शास्त्रे लोके च वच एव तत् ।
वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः ॥१०७॥
३. यदभिप्रायसर्वस्वं वक्तुर्वाक्यात् प्रतीयते ।
तात्पर्यमर्थधर्मस्तच्छब्दधर्मः पुनर्ध्वनिः ॥१०८॥
४. सौभाग्यमिव तात्पर्यमान्तरो गुण इष्यते ।
वाग्देवताया लावण्यमिव बाह्यस्तयोर्ध्वनिः ॥१०९॥
५. अदूरविप्रकर्षात् तु द्वयेन द्वयमुच्यते ।
यथा सुरभिवैशाखौ मधुमाधवसंज्ञया ॥११०॥ इति॥
६. विभक्त्यर्थोऽथ वृत्त्यर्थः पदार्थश्चोपवर्णितः ।
भावनादिप्रभेदेन वाक्यार्थश्च प्रकीर्तितः ॥१११॥
७. क्रियायाश्च पदार्थत्वाद् वाक्यार्थत्वमपाकृतम् ।
कृतं च भावनायास्तदपदार्थत्वहेतुकम् ॥११२॥
८. वाच्या विशेष्याः प्रत्याय्याः शब्दस्योक्ताः क्रियादयः ।
अध्यासविपरीणामविवर्ताश्चास्य तान् प्रति ॥११३॥
९. विभक्तिवृत्त्यर्थवतोरुपस्क्रियाप्रधानयोर्धाम पदार्थ इष्यते ।
पदं पदार्थस्य तु वाक्यगोचरो भवेद् यतोऽर्थस्तदतो निरूप्यते ॥११४॥

**इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे**
**विभक्त्यर्थादिचतुष्टयप्रकाशो नाम**
**॥ षष्ठः प्रकाशः ॥६॥**

साहित्यविद्याध्ययनाब्धिमन्थमन्थाचलः कोऽपि सनातनोऽहम् ।
प्रकाशमेतं प्रतिमुच्य दोषाच्छरावतो दीपमिवास्मि तुष्टः ॥



अथ

## श्रृङ्गारप्रकाशे सप्तमः प्रकाशः

केवलशब्दसम्बन्धशक्तिप्रकाशो नाम

तत्र **'अभिधा–विवक्षा–तात्पर्य–प्रविभाग–व्यपेक्षा–सामर्थ्याऽन्वयैकार्थीभाव–दोषहान–गुणोपादानालङ्कार–रसावियोगरूपाः'** शब्दार्थयोर्द्वादश सम्बन्धाः साहित्य–मुच्यते। तेषु–

### *(१. अभिधा)*

**शब्दस्यार्थाभिधायिनी शक्तिरभिधा।**

तया स्वरूप इवाभिधेये प्रवर्तमानः शब्दो वृत्तित्रयेण वर्तते।

ताश्च **१. मुख्या, २. गौणी, ३. लक्षणेति** तिस्रः। तत्र –

साक्षादव्यवहितार्थाभिधायिका **मुख्या**।

गम्यमानशौर्यादिगुणयोगव्यवहितार्था **गौणी**।

स्वार्थाविनाभूतार्थान्तरोपलक्षणा तु **लक्षणेति**।

तथा हि – गौरित्ययं शब्दो **मुख्यया** वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति; स एव तिष्ठन्मूत्रतादिगुणसम्पदमपेक्षमाणो यदा बाहीके वर्तते तदा **गौणीं** वृत्तिमनुभवति। तदाह–

**रूढ्या यत्रासदर्थोऽपि लोके शब्दो निवेशितः ।**
**समुख्यस्तत्र तत्साम्याद् गौणोऽन्यत्र स्खलद्गतिः।।१।।** (प्रवा. प्रत्यक्ष ३७)

यदा तु शब्दः स्वार्थतः क्रियासिद्धौ साधनभावं गन्तुमसमर्थस्तदाभिधेया–विनाभूतमर्थान्तरं लक्षयति, तदा सा च **लक्षणा** वृत्तिः। यथा गङ्गायां घोषः प्रतिवसति। अत्र गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिः। स च घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयति। तदुक्तम्–

**अभिधेयाविनाभूतप्रतीतिर्लक्षणेति या ।**
**सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते ।।२।।** (तवा. १.४.२३)

प्रत्येकं चैतास्तिस्रोऽपि द्विधाभूय पृथक् षोढा भिद्यन्ते। तत्र–

**(१. मुख्या)**

मुख्या द्विधा— **१. तथाभूतार्था, २. तद्भावापत्तिश्च**। तयोः —

**(१. तथाभूतार्था —६)**

**तथाभूतार्था** षोढा— जातिविषया, व्यक्तिविषया, आकृतिविषया, गुणविषया, क्रियाविषया सम्बन्धविषया चेति। तत्र—

१. गौरश्वः पुरुषो ब्राह्मण इत्यादि**र्जातिविषया**; यथा—(नच. १.४)

**प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।**
**भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥३॥**

यथा— **थोरत्थणीएं बहुणो हलाएँ सामाएँ मंदगमणाए ।**
**कोरच्छिपेच्छिरीए पहुप्पए एक्कमहिसीए ॥४॥**
(स्थूलस्तन्या वध्वाः हलायाः श्यामाया मन्दगमनायाः।
कोराक्षिप्रेक्षितायाः प्रभवति एकमहिष्याः ॥)

२. अयं, सः, त्वम्, अहम् इत्यादिव्यपदेशार्हार्था **व्यक्तिविषया** यथा—

**सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।**
**रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥५॥** (विक्रमो. ४.५१)

यथा वा— **निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।**
**नीलोत्पलेषु विमृशति करमर्पयितुं कुसुमलावी ॥६॥**

३. चित्रबिम्बप्रतिमाद्यर्थवाचिन्या**कृतिविषया** यथा—

**इङ्गुदीपादपः सोऽयं शृङ्गिबेरपुरे पुरा ।**
**निषादपतिना यत्र स्निग्धेनासीत् समागमः ॥७॥** (उराच. १.२१)

यथा वा— **अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥८॥**(शाकु.३.७)

४. श्वेतः कर्कशः कृशः स्थूल इत्या**दिर्गुणविषया** यथा— (काव्याद. २.१००)

**श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।**
**भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥९॥**

यथा वा— **ताम्बूलबहलरक्तः प्रियभुक्तो धूसरः सपर्यन्तः ।**
**बालाधरोऽधिरोहति कुसुमरुचः काञ्चनारस्य ॥१०॥**

५. पक्ता पचन् पक्वः पच्यमान इत्यादिः **क्रियाविषया** यथा— (भट्टि. १८.४०)

**दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन् ।**
**युध्यभग्नविपन्नस्य किं दशास्यस्य शोचति ॥११॥**

यथा वा— **कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणीओ ।**
**जह गहिआ तह हिअअं हरंति उच्छण्णमहिळाओ ॥१२॥**
(कुपिताः प्रसन्ना अवरुदितमुख्यो विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति उत्सन्नमहिलाः ।।)(द्र. ७.९५)

६. पिता माता शत्रुः सूनुरौपगव इत्यादिः **सम्बन्धविषया** यथा— (विक्रमो. ४.३८)

**सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।**
**स्वयंवृतपतिर्द्वाभ्यामूर्वश्या च भुवा च यः ॥१३॥**

यथा वा— **सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते ।**
**सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥१४॥**(बारा.५.४१)

**(२. तद्भावापत्तिः —६)**

अर्थस्यातथात्वेऽध्यासादिभिस्तथात्वापादनं **तद्भावापत्तिः**।

सापि षोढा— अध्यासात्मिका, कल्पनात्मिका, विवर्तात्मिका, विपरिणामात्मिका, विपर्ययात्मिका, प्रवादात्मिका चेति। तत्र—

१. जानतोऽप्यतस्मिंस्तदेतदित्यारोपणम् **अध्यासः**। यथा— (गास. ६.७०)

**अइ दिअर किं ण पेच्छसि आआसं किं मुहा पुलोएसि ।**
**जाआए बाहुमूलम्मि अद्धअंदाण परिपाडिंवाडिं ॥१५॥**
(अयि देवर, किं न प्रेक्षसे, आकाशं किं मुधा प्रलोकयसि।
जायाया बाहुमूलेऽर्धचन्द्राणां परीपाटीम् ।।)

यथा वा—

**कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।**
**सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥१६॥**

२. असतोऽप्युत्प्रेक्षा **कल्पना** यथा—

**गुणानुरागमिश्रेण यशसा तव सर्पता ।**
**दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥१७॥**

यथा वा— (माघ. १६.२४)

**अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ।**
**खल तां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥१८॥**

३. वस्तुनः सन्निवेशविशेषेणावस्थानं **विवर्तः**। यथा— (किराता ५.३९)

**उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिरुहोद्भवः परागः ।**
**वात्याभिर्वियति विवर्त्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥१९॥**

यथा वा— **अस्मिन्नीषद्-वलित-विषम-स्तोक-विच्छिन्न-भुग्नः**
**किञ्चिल्लीनो विपिनविनतः पुञ्जितश्चोत्थितश्च ।**
**धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्नेः**
**स्वैरं सर्पन् सृजति गगने गत्वरानभ्रभङ्गान् ॥२०॥**

४. वस्तुनोऽवस्थान्तरोपगमनं **विपरिणामः**। यथा—

**य एते यज्वानः प्रथितमहसो येऽप्यवनिपाः**
**मृगाक्ष्यो याश्चैताः कृतमपरसंसारिकथया ।**
**अहो ये चाप्यन्ये फलकुसुमनम्रा विटपिनो**
**जगत्येवंरूपा विलसति मृदेषा भगवती ॥२१॥**

यथा वा— **च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं**
**समं चक्रीकृत्य प्रहसितमुखी शैलतनया ।**
**अवोचद् यं पश्येत्यवतु स शिवः सा च गिरिजा**
**स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥२२॥**

५. मिथ्याज्ञानं **विपर्ययः**। यथा— (विक्रमो. ४.१७)

**हृतोष्ठरागैर्नयनोदबिन्दुभिः निमग्ननाभेर्निपतद्भिरङ्कितम् ।**
**च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥२३॥**

यथा वा— **मा भैः शशाङ्क मम शीधुनि नास्ति राहुः**
**खे रोहिणी वसति कातर! किं बिभेषि ।**
**प्रायो विदग्धवनितानवसङ्गमेषु**
**पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥२४॥**

६. अवस्तुष्वपि वस्तुवन्मिथ्याप्रसिद्धिः **प्रवादः**। यथा—

गन्धर्वपुरसुरायुधकुरङ्गतृष्णान्धकाररूपाणि ।
असतामसत्यदुर्ग्रहदुरापमलिनानि वृत्तानि ॥ २५॥

यथा वा— रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ २६॥ (मेघ. १५)

(२. गौणी)

**गौणी** द्विधा— १. **गुणनिमित्ता**, २. **उपचारनिमित्ता** च।

(१. गुणनिमित्ता —६)

तत्र यस्यां द्वयोर्वचनयोस्सामानाधिकरण्येन वैयधिकरण्येन वा प्रयोगः, विशेषण—विशेष्यभावान्यथानुपपत्त्यैकस्य प्रतीयमानाभिधीयमानगुणद्वारकसम्बन्धो भवति, सा गुणव्यवहितार्था **गुणनिमित्ता** च। तत्र च—

संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम् ॥ २७॥(वाप. ३.५.१)

गुणः स्वार्थो विशेषणं प्रवृत्तिनिमित्तमिति चैकोऽर्थः। स धर्मगुणक्रियाऽऽकृति—जातिस्वरूपादिभेदादनन्तः। तत्सम्बन्धेन यद्यपि तन्निमिता वृत्तिरनन्तप्रकारैव कल्प्यते तथापि तस्याः षडेव विकल्पा भवन्ति — '**मुख्यविषयः, अमुख्यविषयः, भेदविषयः, अभेदविषयः, विशेषणविषयः, अविशेषणविषय**' इति।

(१) यत्र द्वयोरपि मुख्यविशेष्यार्थयोर्धर्मादिनिमित्तमेकस्येतरविशेषणत्वं भवति स **मुख्यविषयः**।

स **धर्मनिमित्तः समासे** यथा—

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥ २८॥

स एव **असमासो** यथा—(काव्याद. १.६)

गौर्गौः कामदुधा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ २९॥

**क्रियानिमित्तः** समासो यथा—

कत्तो संपडइ महं पि पिअसहि पिअसंगमो णिसीहे वि ।
जा जअइ गहिअ—कर—णिअरखिक्खिरि चंदचंडालो ॥ ३०॥

(कुतः सम्पतति ममापि प्रियसखि प्रियसङ्गमो निशीथेऽपि ।
यावज्जयति गृहीतकरनिकरखिक्खिरी चन्द्रचाण्डालः ।।)

स एव **असमासो** यथा–

**किं द्वारि दैवहतिके सहकारकेण**
**संवर्धितेन विषपादप एष पापः ।**
**अस्मिन्मनागपि विकासविकारभाजि**
**भीमा भवन्ति मदनज्वरसन्निपाताः ।। ३१ ।।**

(२) यत्र विशेषणविशेष्ययोः प्रथममेवैकममुख्यं भवति असौ **अमुख्यविषयः**।
स विशेष्यस्यामुख्यत्वे सामानाधिकरण्येन **धर्मनिमित्तो** यथा– (माघ. ७.७३)

**हिमलवसदृशः श्रमोदबिन्दूनपनयता किल तन्नवोढवध्वाः ।**
**कुचकलशकिशोरकौ कथंचित् तरलतया तरुणेन पस्पृशाते ।। ३२।।**

स एव **क्रियानिमित्तो** यथा–

**मुखपङ्कजरङ्गेऽस्मिन् भ्रूलता नर्तकी तव ।**
**लीलानाट्यामृतं दृष्टौ सखि! यूनां निषिञ्चति ।। ३३।।**

विशेषस्य मुख्यत्वे वैयधिकरण्येन **आकृतिनिमित्तो** यथा–

**पडिवक्खमण्णुपुंजे लावण्णउडे अणंगगअकुंभे ।**
**पुरिससअहिअअधरिए कीस थणंती थणे वहसि ।। ३४।।**

(प्रतिपक्षमन्युपुञ्जौ लावण्यकुटावनङ्गगजकुम्भौ।
पुरुषशतहृदयधृतौ किमिति स्तनन्ती स्तनौ वहसि।।) (काव्याद. २.९३)

स एव **क्रियानिमित्तो** यथा–(सेब. १.१४)

**ववसाअरइपओसो रोसगइंददिढसिंखलापडिबंधो ।**
**कह कह वि दासरहिणो जअकेसरिपंजरो गओ घणसमओ ।। ३५।।**

(व्यवसायरविप्रदोषो रोषगजेन्द्रदृढशृङ्खलाप्रतिबन्धः ।
कथं कथमपि दाशरथेर्जयकेसरिपञ्जरं गतो घनसमयः ।।)

(३) यत्रैक एव शब्दोऽर्थभेदप्रकल्पनया गुणनिमित्तं विशेषणविशेष्यभावमनुभवति असौ **भेदविषयः**। गौणमुख्ययोर्गुणनिमित्तो मुख्ययोश्च **जातिनिमित्तो** यथा–

**तुह करकमलं कमलं चंदो चंदमुहि तुज्झ मुहअंदो ।**
**कमलं उण कमलं च्चिअ चंदो चंदो च्चिअ वराओ ।। ३६।।**

(तव करकमलं कमलं चन्द्रश्चन्द्रमुखि तव मुखचन्द्रः ।
कमलं पुनः कमलमेव चन्द्रश्चन्द्र एव वराकः ॥)

मुख्ययोर्गुणनिमित्तो यथा—

**ताला जाअंति गुणा जाला दे सहिअएहि घेप्पंति ।**
**रइकिरणाणुग्गहिआइं होंति कमलाइं कमलाइं ॥ ३७॥**

(तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥)

मुख्ययोः **क्रियानिमित्तो** यथा—(किराता. ११.७३)

**ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।**
**नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥ ३८॥**

**स्वरूपनिमित्तो** यथा—

**अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं**
**रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।**
**इति न भजते वस्तु प्रायः परस्परसङ्करं**
**तदियमबला धत्ते भावान् कथं सकलात्मकान् ॥ ३९॥**

(४) साधर्म्यादिप्रसिद्धेर्यत्रोपमानमेवोपमेयं प्रत्याययत्य**सावभेदविषयः**।

सो**ऽन्योक्तौ** यथा—

**पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।**
**अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥ ४०॥** (काव्याद. २.२०६)

**समासोक्तौ** यथा—

**अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।**
**अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ४१॥**

**उभयोक्तौ** यथा—

**उपाध्वं तत्पान्थाः पुनरपि सरो मार्गतिलकं**
**यदासाद्य स्वेच्छं विलसथ विलीनक्लमभराः ।**
**इतस्तु क्षाराब्धेर्जरठमकरक्षुण्णपयसो**
**निवृत्तिः कल्याणी न पुनरवतारः कथमपि ॥ ४२॥**

**अनुभयोक्तौ** यथा—(उराच. १.२८)

**अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना**
**तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि ।**
**जनस्थाने शून्ये विकलकरणैरार्यचरितै-**
**रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥४३॥**

(५) यत्र विशेषणभूतं नाम सर्वनाम वा विशिष्टगुणधर्मादिकं प्रवृत्तिनिमित्तमुपादत्ते स **विशेषणविषयः**।

स नाम्नो **विशिष्टगुणनिमित्तत्वे** यथा-

**भवतु रुषि कठोरा किन्तु रम्या मृगाक्षी**
**निरुपधिमधुराणां स्वादवोऽमी विकाराः ।**
**श्रयति कठिनभावः शुक्तिपात्रेष्वपो यः**
**कुलजनबहुमानस्तासु मुक्ताफलान्तः ॥४४॥**

सांस्कारिक्यादिजनिका संज्ञापि नामैव तस्याः यथा-

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्वलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि! धीरा भव ॥४५॥**

सर्वनाम्नो **विशिष्टगुणसम्पत्तिनिमित्तत्वे** यथा- (उराच. ४.१२)

**स राजा तत् सौख्यं स च परिजनस्ते च दिवसाः**
**स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टेऽद्य सकलम् ।**
**विपाके घोरेऽस्मिन्न खलु न विमूढा तव सखी**
**पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥४६॥**

मुख्यवद् गौणस्यापि विशेषणं तद्विशेषणमेव। तत्र सर्वनाम्नो **गुणसम्पत्तिनिमित्तत्व** एव यथा-

**चआवळअ दीहिअहिमंघल्लहिनिअदेह ।**
**अन्नजीदि हरलोअण होतहोमुहअंदहोरेवह ॥४७॥**

(६) विशेषणमव्यभिचरितमविशेषणं तद्धर्मादिगुणयोगेन यत्र प्रवर्तते तदसाव**विशेषणविषयः**

**छित्तो(?)चलणेण हला मओ वि कण्हस्स को ण जीवेज्ज ।**
**सो उण तेणावि मओ रिट्ठो सच्च चिअ बइल्लो ॥४८॥**

(स्पृष्टः चरणेन सखि मृतोऽपि कृष्णस्य को न जीवेत्।
स पुनस्तेनापि मृतोऽरिष्टः सत्यमेव बलीवर्दः।।)

**चेतनप्रकृतेर्**यथा— (गास.(वे.) ८६४, द्र.स.क. पृ.३१३)

**सच्चं चिअ कट्ठमओ सुरणाहो जेण हळिअधूआए ।**
**हत्थेहि कमलदलकोमलेहि छित्तो ण पल्लविओ ।।४९।।**

(सत्यमेव काष्ठमयः सुरनाथो येन हालिकदुहित्रा ।
हस्ताभ्यां कमलदलकोमलाभ्यां स्पृष्टो न पल्लवितः ।।)

**अचेतनस्य** यथा—

**भवतु विदितमेतत् काष्ठमेवासि सत्यं**
**किमपरमभिधास्ये कानने वर्धितोऽसि ।**
**कुवलयनयनायाः पाणिसङ्गोत्सवेऽस्मिन्**
**मुसल किसलयं ते तत्क्षणादद्य जातम् ।।५०।।**

**अचेतनस्यैव** प्रभाववतो यथा—

**अन्विष्यद्भिरयं चिरात् कथमपि प्राप्येत यद्यर्थिभि-**
**र्नाथ त्वं पुनरर्थिनः प्रतिदिनं यत्नात् समन्विष्यसि ।**
**प्राप्तौ चिन्तितमात्रकं दददसौ चिन्तातिरिक्तप्रदं**
**त्वामालोक्य विदीर्यते यदि न तद् ग्रावैव चिन्तामणिः ।।५१।।**

(२. उपचारनिमित्ता –६)

मुख्यया गौण्या वान्यविशेषणस्य सतोऽन्यत्रारोपणम् **उपचारः**।

**तन्निमित्तिकोपचारनिमित्ता**; सा तु गौणव्यवहितार्थत्वाद् **गौणी** भवति; तस्या अपि धर्मगुणाकृतिक्रियास्वरूपजात्यादयः प्रवृत्तिनिमित्तम्; तद्भेदात् सापि षट्प्रकारा भवति—

**धर्मनिमित्ता, गुणनिमित्ता, आकृतिनिमित्ता, क्रियानिमित्ता, स्वरूपनिमित्ता, जातिनिमित्ता** च। तासु—

(१) **धर्मनिमित्ता** यथा—

**भवतु रुषि कठोरा किन्तु रम्या मृगाक्षी ।।५२।।**
**तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे ।।५३।।** मेघ. ७६

अत्र कठोरसुभगशब्दौ मूर्तिमद्द्रव्यप्राणिविशेषयोर्विशेषणत्वेन रूढौ, रोषवलयशिञ्जयोरारोप्यमाणौ, तद्योगान्नायिकातालयोरपि विशेषणभावमनुभवतः।

(२) **गुणनिमित्ता** यथा– (शाकु. १.१७)

**किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥५४॥**

**उच्चिणस्सु पडिअ–कुसुमं मा धुण सेहालिअं हलिअ–सुण्हे ।**

**एस अवसाणविरसो ससुरेण सुओ वलअसद्दो ॥५५॥**

(उच्चिनुष्व पतति–कुसुमं मा धुनीहि शेफालिकां हालिक–स्नुषे।

एषोऽवसानविरसः श्वशुरेण श्रुतो वलय–शब्दः॥) (ध्व.२)

अत्र मधुरविरसशब्दावास्वाद्यविशेषविशेषणत्वेन रूढौ तद्व्यवधानेन वर्णनयाऽऽकृतिवलयशब्दयोरारोपितौ विशेषणभावमनुभवतः।

(३) **आकृतिनिमित्ता** यथा–

**अङ्कुरिते पल्लविते कोरकिते कुसुमिते च सहकारे ।**

**अङ्कुरितः पल्लवितः कोरकितः कुसुमितश्च हृदि मदनः ॥५६॥**

यथा वा–(वज्जाल. ३.१३)

**पल्लविअं पिव/विअ करपल्लवेहिं पप्फुल्लिअं व णयणेहिं ।**

**फलिअं विअ पीणपओहरेहि अज्जाएँ लावण्णम् ॥५७॥**

(पल्लवितमिव करपल्लवाभ्यां प्रफुल्लितमिव नयनाभ्याम् ।

फलितमिव पीनपयोधराभ्यामार्याया लावण्यम् ॥)

अत्राङ्कुरितपल्लवितादयो मूर्तिमत्सु भूरुहादिषु आकृतिविशेषतो विशेषणत्वेन रूढास्तद्व्यवधानेनामूर्तयोर्मदनलावण्ययोरारोप्यमाणा गौणं विशेषणभावमनुभवन्ति।

(४) **क्रियानिमित्ता** यथा–

**शशिनमसूत प्राची नृत्यति मदनो हसन्ति ककुभोऽपि ।**

**कुमुदरजःपटवासं विकिरति गगनाङ्गणे पवनः ॥५८॥**

यथा वा–

**अवऊहिअपुव्वदिसे समअं जोण्हाए सेविअपओसमुहे ।**

**माइ ण झिज्जउ रअणी अपरदिसाहुत्तपत्थिअम्मि मिअंके ॥५९॥**

(अवगूहितपूर्वदिशे समकं ज्योत्स्नया सेवितप्रदोषमुखे ।

मातर्न क्षीयतां रजनी अपरदिशाभिमुखप्रस्थिते मृगाङ्के ॥)

अत्र सेवोपगूढादीनामन्यक्रियाणां तद्व्यवधानेनान्यत्रारोपणाद् विशेषणभावः।

कथं पुनरयं भेदो गौण्याः पृथग्भवति?

यत्र प्रसिद्धेरुपमानोपमेयत्वं गम्यते, सा गुणव्यवहितार्था गौणी, यामन्योक्तिं समासोक्तिं वा वर्णयन्ति। यस्यां पुनरुपमेयेन गुणसाम्यादुपमानं गम्यते, सा गौणव्यवहितार्था गौणी, यां समाधिमाचक्षते। तदुक्तम्— **'उक्तस्याप्राकरणिकत्वे समासोक्तिः, प्राकरणिकत्वे समाधिः'** इति।

(५) **स्वरूपनिमित्ता** यथा—

**कस्य नापनतिं कुर्याद् दैन्यमाता दरिद्रता ।**
**कं वा न मदयत्येषा श्रीरुन्मादकुटुम्बिनी ॥६०॥**

यथा वा— (विक्रमो. २.३)

**आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।**
**उपमानस्यापि सखे! प्रत्युपमानं वपुस्तस्याः ॥६१॥**

अत्र दरिद्रताया दैन्यजनकत्वेन मातृस्वरूपाध्यारोपादपत्यताव्यवधानेन सम्बन्धः; दरिद्रता दैन्यं जनयतीति वाक्यार्थः। तस्य च 'शशिनमसूत प्राची' इत्यादिवदुपचारोपपत्तिः। एवमुत्तरत्रापि योज्यम्।

(६) **जातिनिमित्ता** यथा—

**धृतिः क्षमा दया शौचमौचित्यं वागनिष्ठुरा ।**
**भूतानामनभिद्रोहस्सप्तैताः समिधः श्रियः ॥६२॥**

यथा वा—

**येषां प्राणिवधः क्रीडा, नर्म मर्मच्छिदो गिरः ।**
**परोपतापः कर्तव्यं ते मृत्योरपि मृत्यवः ॥६३॥**

अत्राग्निसमिद्धर्मेषु मर्त्यमृत्युधर्मेषु च श्रीधृत्यादिषु मृत्युदुर्जनेषु चारोपितेषु समिन्मृत्युजात्योरेव गुणभावो न त्वग्निमर्त्ययोरिति अमीषां साक्षादसम्बन्धे दीप्तिविनाशादिधर्मद्वारक उपचारः सम्बन्धाय कल्पते। तेनायमर्थः सम्पद्यते— धृत्यादयः श्रियं समेधयन्ति, दुर्जना मृत्युमपि मारयन्ति। सा चेयमन्यरूढा क्रियाऽन्यत्रारोप्यत इत्युपचारवृत्तिरेव भवति। यदुक्तम्— (काव्याद. १.९४)

**कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।**
**इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥६४॥**

एवम् **'परार्थे यः पीडामनुभवति' ॥६५॥** (भल्लटशतकम् ५६)

**'एति जीवन्तमानन्दो नरं वर्षशतादपि'॥६६॥** (रामा. ५.३४.६)

इत्यादि च द्रष्टव्यम्।

यद्येवं क्रियानिमित्तैषा कस्मान्न भवति?

क्रियाया एव द्रव्यजातिरूपेण विपरिणामात्, यथा दैन्यमातेत्यादौ वृत्तिरूपेण।

ननु च यथा गौरिव गौस्तथा समिध इव समिध इतीयमपि गौणी कस्मान्न भवति?

भवति यदि समिध इत्यनेन श्रिय इति नापेक्ष्यते, श्रीवह्नेरिति वा वह्निशब्दप्रयोगो भवति। यथा वा 'ववसाअरइपओसो' (व्यवसायरविप्रदोषः), 'घणसमओ' (घनसमयः), 'अणंगगअकुंभे थणे' (अनङ्गगजकुम्भौ स्तनौ) इति। एतेन 'दैन्यमाता दरिद्रता', 'ते मृत्योरपि मृत्यवः' इत्यादेरपि न गौणत्वमित्युक्तं भवति। आदिग्रहणान्नामसर्वनामादेरपि भेदाभेदाभ्यामुपचारे गौणव्यवहितार्थैव **गौणी** भवति।

**सभेदोपचारे नामाध्यारोपाद्** यथा– (उराच.२.१०)

**हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणाम् ।**
**रामस्य गात्रमसि निर्भरगर्भखिन्न–**
**सीताविवासनपटोः करुणा कुतस्ते ॥६७॥**

यथा वा– (राच. १९.५१)

**स्थानेऽवसीदसि रघूद्वह! किं विधात–**
**रस्यास्त्वयेक्षितमलक्षणमङ्गकेषु ।**
**अद्यापि जीवसि दशानन! हे हनूमन्!**
**केयं तवाभिमुखवर्तिरिपोः प्रतीक्षा ॥६८॥**

**अभेदोपचारेण सर्वनामाध्यारोपाद्** यथा–

**चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा**
**वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित् ।**
**एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः**
**स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥६९॥**

यथा वा–

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।**

**सेतुं बध्नाति चासौ कथमिव सकलद्वीपनाथानुयात–**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥७०॥**

अत्राद्योदाहरणयो रामहनूमन्तौ नामशब्दावतिनिष्करुणे परिभवासहिष्णौ च स्वमूर्तिभेदे संज्ञाविशेषणत्वेन रूढौ तद्व्यवधानेन तद्विपरीतयोरुपचरितस्वमूर्ति–भेदान्तरयोरारोपितावौपचारिकं विशेषणभावं भजेते इति गौणव्यवहितार्थोपचार–निमित्तोपचारनिमित्तेयं गौणी। यत्र तु न भेदोपचारः तत्र व्यवधानाभावाद् गुणनिमित्तैव गौणी भवति, यथा 'रामोऽस्मि सर्वं सहे', 'तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणम्' इति।

कथं पुनः शब्दार्थयोरभेदेऽपि भेदव्यपदेशः?

स हि 'राहोः शिरः', 'गौर्गौः कामदुघा' इत्यादौ शब्दार्थभेद एव दृश्यते।

उच्यते– अस्ति तावदेतन्मुख्याभावे सति प्रयोजने निमित्ते च सत्युपचारः प्रवर्तते। स चाभिन्नानां भेदव्यपदेशहेतुः, भिन्नानां चाभेदव्यपदेशहेतुर्भवति। तत्र **अभिन्नानां भेदा** यथा– (कुसं. २.१०)

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥७१॥**

अत्र परमात्मव्यतिरिक्तवस्त्वन्तराभावात् कर्मादिकारकव्यतिरेकेण च ज्ञानादि–क्रियानुपपत्तेरेक एव कर्तृकर्मकरणाधिकरणोपचारेण भिद्यते। सिद्धे च भेदे सादृश्यनिबन्धने मुख्यानामिवोपचरितानामप्युपमानोपमेयव्यवहारः प्रवर्तते। तद्यथा–

**त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।**
**त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥७२॥**

**वैसादृश्यनिबन्धन**स्तु व्यतिरेको भवति। यथा– (किराता. ११.७३)

**नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥७३॥**
**रइकिरणाणुग्गहिआइं होंति कमलाइं कमलाइं ॥७४॥**
(रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।) (द्र. ७.३७)

ततश्च भिन्नार्थवत्सम्बन्धसम्बोधनविभक्त्यादेरुत्पत्तिर्यथा– **'रामस्य गात्रमसि'** (उराच. २.१०), 'हे हनूमन्' इति। एतेन मुख्यगौणयोरपि उपमारूपकादया व्याख्याताः। यथा–

**अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।**
**सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥७५॥**

**चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।**
**असमग्रो ह्ययं शश्वदयमापूर्णमण्डलः ॥ ७६ ॥**(काव्याद.२.८९–९०)
**अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।**
**मुखेन्दौ तव सत्यस्मिन्नितरेण किमिन्दुना ॥ ७७ ॥** (काव्याद. २.१५९)
**न मीलयति पद्मानि न नभो व्यवगाहते ।**
**त्वन्मुखेन्दुर्ममासूनां हरणायैव यस्यति ॥ ७८ ॥** (काव्याद. २.८३)

भिन्नानामभेदोपचारो यथोत्तरोदाहरणयोः तत्र हि प्रतीयमानाभिधीयमानतुल्य–गुणोपमानविशेषणमनेकं सर्वनाम उपमानव्यवधानेनोपमेये प्रयुक्तमभेदोपचारेणो–त्कर्षमारोपयति।

नन्वियमन्योक्तिः समासोक्तिरुभयोक्तिर्वा कस्मान्न भवति?

तथा हि– प्रतीयमानाभिधीयमानोपमेयगुणविभूतयः सर्वनामाध्यासेऽप्यन्योक्ति–समासोक्त्युभयोक्तयो दृश्यन्ते। तत्र –

**अन्योक्ति**र्यथा–

**हा सौरभं क्व तत् ते क्व नु ते सन्तापहारि हा शैत्यम् ।**
**अङ्गारकारहस्ते चन्दन! पतितोऽसि धिग् दैवम् ॥ ७९ ॥**

**समासोक्ति**र्यथा–

**मुग्धामजातरजसं कलिकामकाले**
**बालां कदर्थयसि किं नवमालिकायाः ।**
**अन्यासु तावदुपमर्दसहासु भृङ्ग!**
**लोलं विनोदय मनः सुमनोलतासु ॥ ८० ॥**

**उभयोक्ति**र्यथा–

**केनासीनः सुखमकरुणेनाकरादुद्धृतस्त्वं**
**विक्रेतुं वा त्वमभिलषितः केन देशान्तरेऽस्मिन् ।**
**यस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्तां**
**नास्ति भ्रातर्मरकतमणे! त्वत्परीक्षाक्षमोऽपि ॥ ८१ ॥**

उच्यते– यत्रोपमानमेव प्रयुक्तं प्रतीयमानाभिधीयमानगुणमुपमेयं गमयति, तत्रैवान्योक्त्यादयो भवन्ति। इह तु नोपमानं प्रयुज्यते। किं तर्हि? तद्विशेषणं सर्वनाम;

तेन प्रथमोदाहरणे नान्योक्तिः, द्वितीयोदाहरणे तु न समासोक्तिरिति।

यद्येवमध्यासात्मिका तद्भावापत्तिः कस्मान्न भवति? यथैष बालाबाहुमूले बालचन्द्रमाः; यथा वा– (माघ. १५.६३)

**किमहो नृपाः सममुमीभिरुपपतिसुतैर्न पञ्चभिः ।**

**वध्यमभिहत भुजिष्यममुं सह चानया स्थविरराजकन्यया ॥८२॥** इति

उच्यते नात्र सर्वनाम्नामेव प्रयोगः। किं तर्हि? विशेष्याणामपीति युज्यते तद्भावापत्तिः। 'चन्द्रज्योत्स्ना' इत्यादौ तु सर्वनामाध्यासे समाधिलक्षणयोगा–दुपचारगौण्येवैषा भवति। यथा च धर्मिणोऽप्यध्यासे समाधिरुपपद्यते तथाग्रतो वक्ष्याम इति।

**(३. लक्षणा)**

लक्षणा द्विविधा– **१. लक्षणा, २. लक्षितलक्षणा** च।

तयोर्यस्यामुपात्तशब्दस्यार्थस्य क्रियासिद्धौ साधनत्वायोगात् स्वार्थोऽविनाभूत–मर्थान्तरं व्यवहितमेव लक्षयति सा **लक्षणा**, तद्व्यतिरिक्ता तु वक्ष्यमाणानेकरूपा **लक्षितलक्षणेति**। तत्र–

**(१. लक्षणा –६)**

**लक्षणा** षोढा– **सामीप्यलक्षणा, साहचर्यलक्षणा, सहचरितलक्षणा, हेतुलक्षणा, तादर्थ्यलक्षणा, परिमाणलक्षणा** च। तत्र–

१. 'गङ्गायां घोषः प्रतिवसति', 'मञ्चाः क्रोशन्ति' इत्यादिषु स्वार्थाविनाभूतसमीपा–र्थान्तरप्रतीतिहेतुः **सामीप्यलक्षणा**। यथा–

**'यत् तालीदलपाकपाण्डुवदनम्' ॥८३॥** (विसा. २.१४)

**'अभिनवकरिदन्तच्छेदकान्तः कपोलः' ॥८४॥** इति। (मामा. १.२५)

अत्र पाकच्छेदयोः क्रियात्वेनामूर्तत्वात् पाण्डुत्वं कान्तत्वं चासम्भवत् समीपस्थं पक्वतालीपत्रं सद्यश्छिन्नं च हस्तिदन्तं लक्षयति। '

२. छत्रिणो गच्छन्ति', 'कुन्तान् प्रवेशय' इत्यादिषु स्वार्थाविनाभूतसाहचर्योप–लब्धार्थान्तरप्रतीतिहेतुः **साहचर्यलक्षणा**। यथा– (कुसं. १.२)

**यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।**

**भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥**

अत्र दोग्धृसाहचर्याच्छैलेष्वपि दुदुहुरिति प्रयुज्यते। यथा वा–

**पदेपदे कूबरिणः शतंशतं शतंशतं मत्तगजान् रथेरथे ।**
**न्यवेशयद् वाजिशतं गजेगजे हयेहये कुन्तशतं शतक्रतुः ॥८६॥**

३. यत्रोक्तधर्मसहचरितोऽन्योऽपि धर्मो लक्ष्यते सा **सहचरितलक्षणा**। यथा–

**'मधुपृषत्पिङ्गाः पयोबिन्दवः'**॥८७॥

**'कनकफलकस्फारजघना'**॥८८॥ इति।

अत्र पिङ्गत्वस्फारत्वसहकृतास्तदाश्रयाकारकान्त्यादयो' लक्ष्यन्ते।

४. 'अन्नं वै प्राणाः', 'आयुर्घृतम्' इत्यादिषु स्वार्थाविनाभूतनिमित्तकारणार्थान्तर–प्रतीतिहेतुर्**हेतुलक्षणा**। यथा–**'त्वं जीवितं त्वमसि मे हृदयं द्वितीयम्'** (उराच.३.२६) इति। अत्र जीवितशब्देन हृदयशब्देन च जीवितचैतन्यहेतुः प्रियतमोच्यते।

५. 'इन्द्रः स्थूणा' 'मल्लिका प्रदीपा' इत्यादिषु तदर्थप्रतीतिहेतुः **तादर्थ्यलक्षणा**। यथा–

**आरूढो मलयाचलं जलनिधेः पारं परं नायय–**
**न्नण्डं दृप्तनृसिंह सिंहलपतेरुच्छेत्तुमच्छं यशः ॥८९॥** इति।

अत्र दण्डशब्देन दण्डनाप्रहितो लोक उच्यते।

६. प्रस्थं खलु क्रोश इत्यादौ परिमाणसाधनभूतार्थान्तरप्रतीतिहेतुः **परिमाणलक्षणा**। यथा–

**यस्मादनर्घाणि हृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।**
**आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥९०॥**

अत्र प्रस्थशब्देन प्रस्थपरिमाणसाधनं मानभाण्डं काष्ठादिमयमुच्यते।

**(२.लक्षितलक्षणा–६)**

**लक्षितलक्षणापि** षोढैव– **रूढलक्षणा, प्रतीकलक्षणा, विवक्षितलक्षणा, विरुद्धलक्षणा, तदन्यलक्षणा, प्रकीर्णलक्षणा** च। तासु–

१. यस्यां यथाकथंचिद् व्युत्पत्त्या लक्षितेनाभिधानेन रूढलक्षण एवार्थो लक्ष्यते सा **रूढलक्षणा**। रोदरश्चक्रवाको द्विरेफो भ्रमर इति। यथा– (कुसं. ३.३६)

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः॥९१॥** इति।

अत्र रोदरत्वं द्विरेफत्वं च कुररेऽपि सम्भवति, न चात्र रूढा लक्षणेति नायं लक्ष्यते।

२. यत्र प्रतीकेनाभिधानैकदेशेन समुदायो लक्षित एव लक्ष्यते, न यः कश्चित्, सा **प्रतीकलक्षणा**। यथा–

**'भीमो भीमपराक्रमः, 'सच्चा अपि होइ अइअदंसणतुरीआ'**। अत्र

सेन—भामाशब्दो भीम—सत्या शब्दप्रतीकश्रवणात् भीमसेनः, सत्यभामा इत्यभिधानयोः पूर्वलक्षितयोर्लक्षणया लक्ष्येते। न हि भवति ज्येष्ठाः ज्येष्ठेति, आर्द्रा वार्द्रेति।

३. यत्र यथाकथंचिच्छब्दप्रयोगे विवक्षितमेव लक्ष्यानुसारतो लक्ष्यते सा **विवक्षितलक्षणा**। यथा **'मनसिजजैत्ररथं विलोचनार्धं ॥ ९२॥** (किराता.१०.५२)
**'चकितहरिणीहानिरनेत्रत्रिभागः'॥ ९३॥** (?) इति।

अत्र नार्धशब्दस्य त्रिभागशब्दस्य अर्थः, किन्तु ताभ्यामसमग्रालोकनं लक्ष्यते। न हि भवति नेत्रचतुर्भागो नेत्रषड्भागो वेति।

४. पदं केवलमन्यसन्निधेर्वा यत्राभिहितविरुद्धं लक्षितमेवार्थं लक्षयति सा **विरुद्धलक्षणा**। यथा—

'विष्टिर्भद्रा', 'अङ्गारको मङ्गलः', 'पुण्यवत्यहं यस्यास्त्वमेवंविधः पतिरसि' इति। अत्र भद्रामङ्गलशब्दौ पुण्यवच्छब्दश्च अभद्रमङ्गलत्वे अपुण्यवत्त्वं च लक्षितमेव लक्षयन्ति। यथा वा **रत्नावल्यां** राजा विदूषकमाह – 'महाब्राह्मणस्त्वमसि, कोऽन्य एवमृचामभिज्ञ (रत्ना. २.६)' इति। अत्र महाब्राह्मण इत्यनेन ऋचामभिज्ञ इत्यनेन च वृषलादप्यधमत्वं वैधेयत्वं च लक्ष्यते। यथा च **मालतीमाधवे** लवङ्गिका मदयन्तिकामभिधत्ते—'कहं णाम णवबहूवीसंभेणोवाअजाणअं लडहविअड्ढमहुरभासणं अरोसणं भादरं दे भत्तारं समासादिअ पिअसही (ण) दुम्मणइस्सदि' (कथं नाम नववधूविस्रम्भणोपायाभिज्ञं लडहविदग्धमधुरभाषणमरोषणं भ्रातरं ते भर्तारं समासाद्य प्रियसखी न दुर्मनायिष्यते।) (मामा.७.०/१) अत्र नववधूविस्रम्भणोपायज्ञत्वादयस्तद्विरुद्धमर्थं लक्षयन्ति। एवमन्येऽपि यथा— (काव्याद. २.२८९)

**इदमम्लानमानाया लग्नं स्तनतटे तव ।**
**छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ ९४॥**
**कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणीओ ।**
**जह गहिआ तह हिअअं हरंति उच्छण्णमहिलाओ ॥ ९५॥**
(कुपिताः प्रसन्ना अवरुदितमुख्यो विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति उत्सन्नमहिलाः ॥) (द्र. ७.१२)

**वयं तथा नाम यथात्थ किं वदाम्ययं त्वकस्माद्विकलः कथान्तरे।**
**कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः॥९६॥** (मामा.७.०/१)

एतेष्वम्लानमानशब्देन मानभङ्गः, उत्सन्नशब्देनानुच्छेदाशीः, विशुद्धमुग्धशब्देनाविशुद्धिरमौग्ध्यं च लक्ष्यते।

५. यत्राभिहितशब्दार्थतिरस्कारेणार्थान्तरं लक्ष्यते सा **तदन्यलक्षणा**। यथा—

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।**

**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ।।९७।।** (महाभारत ५.३५.६४)

अत्र न सुवर्णशब्दार्थो, नापि पुष्पशब्दार्थः; किन्तु सुवर्णशब्देन सर्वपुरुषार्थमूलं हिरण्यं, पुष्पशब्देन च प्रसवार्थो लक्ष्यते। ताभ्यां च लक्षिताभ्यां व्यवसायिनां पुरुषविशेषाणां वसुमती सर्वान् कामान् प्रसूत इति।

६. उक्ताभ्योऽन्या **प्रकीर्णलक्षणा**। यथा— (रघु. ८.२९)

**दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।**

**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ।।९८।।**

**हिरण्यपूर्वं कशिपुं प्रचक्षते ।** (माघ. १.४२)

**तुरङ्गकान्तामुखहव्यवाहज्वालेव हित्वा जलमुल्ललास ।।९९।।**

(माघ. ३.३३) इति।

अन्ये पुनर्लक्षितलक्षणामन्यथा व्याचक्षते— **लक्षणयोपचरितवृत्त्या गौण्या अर्थेन यत्रार्थान्तरं लक्ष्यते सा लक्षितलक्षणेति।** यथा— रथावयवायुधः, पङ्क्तिरथः (रघु. ९.७४), रथाङ्गनामेति (रघु. ३.२४); अत्र रथावयवशब्देन चक्रं लक्ष्यते, तेन तदाकृतिः तन्नामा आयुधविशेषः; पङ्क्तिरित्यनेन दशाक्षरं छन्दो लक्ष्यते, तेन दशशब्दः, ताभ्यां चायुधसन्निधेश्चक्रायुधः, दशरथः इति देवविशेषराजविशेषौ लक्ष्येते। रथाङ्गमित्यनेन रथैकदेशो लक्ष्यते, तेन चक्रशब्दः, नामेत्यनेन परिभाषणं लक्ष्यार्थः; ताभ्यामन्योन्यसन्निधेश्चक्रवाक इति पक्षिविशेषो लक्ष्यत इति। अस्याश्च प्रबन्धेषु भूयसा प्रयोगः। तद्यथा— (गास. ६.१)

**सूईवेहे मुसलं विच्छुहमाणेण दड्ढलोएण ।**

**एक्कग्गामे वि पिओ इमेहिं/समेहि अच्छीहि वि ण दिट्ठो ।।१००।।**

(सूचीवेधे मुसलं विक्षिपता दग्धलोकेन।

एकग्रामेऽपि प्रिय आभ्याम्/समाभ्याम् अभ्यामपि न दृष्टः।।)

अत्र सूचीवेधे मुसलप्रवेशो न सम्भवति, जनस्तु तमपि करोतीत्यनेन मुख्यया लक्षितेन तस्यासम्भाव्यमानार्थवादिता लक्ष्यते। यथा—

**चुंबिज्जइ सअहुत्तं अपवाहिज्जइ सहस्ससअहुत्तं ।**
**रमिअ पुणो वि रमिज्जइ पिए जणे णत्थि पुणरुत्तं ॥१०१॥**[१]

(चुम्ब्यते शतकृत्वः अवरुध्यते सहस्रशतकृत्वः ।
रन्त्वा पुनरपि रम्यते प्रिये जने नास्ति पुनरुक्तम् ॥)

अत्र पुनरुक्तशब्दो व्यर्थवाक् पुनःप्रयोगविशेषे निरूढशक्तिः, क्रिया पुनःकरण–सामान्यं लक्षयति विपक्षि(?) चुम्बनादि x x x करणविशेषवैयर्थ्याय लक्षयति। एवम्–

**दूइ तुमं विअ णिउणा कक्कसमहुआइ जाणसे वोल्लुं ।**
**कंडुइअपंडरं जह ण होइ तह तं कुणिज्जासु ॥१०२॥**

(गास. २८१)

(दूति त्वमेव निपुणा कर्कशमृदुकानि जानासि वक्तुम् ।
कण्डूयितपाण्डुरं यथा न भवति तथा तं करिष्यसि ॥)

अत्र कण्डूयितपाण्डरमित्यनेन पारुष्यं लक्ष्यते; तेन तु स्नेहक्षतिरिति। अपि च–

**गअणं च मत्तमेहं धाराळुळिअज्जुणाइ अ वणाइ ।**
**णिरहंकारमिअंका हरति नीलाओ विअ णिसाओ ॥१०३॥**

(गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः ॥)

अत्र मत्तनिरहङ्कारशब्दावनिभृतत्वं निभृतत्वं च लक्षयन्तौ चेतनेषु रूढावचेतनेषु प्रयुज्यमानौ तयोरपि तथाविधार्थयोगं लक्षयतः। किंच– (गास.(वे) ९६९)

**अण्णं लडहत्तणअं अण्णा च्चिअ अंगवद्ढणच्छाआ ।**
**सामा सामण्णवआवइस्स रेह च्चिअ ण होइ ॥१०४॥**

(अन्यल्लडहत्वमन्यैव अङ्गवर्त्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥)

अत्र रेखाशब्देन चित्रालेख्यं लक्ष्यते, तेन च विशिष्टं रूपनिर्माणमिति। अपरम्–

**अगणिअणअणाआसं मारिसलोइज्जंत गतं को होसि मअणस्स(?)॥१०५॥**

(अगणितनयनानासं मारिष लोक्यमान त्वं को भवसि मदनस्य।)

अत्र मदनस्य (को) भवसीत्यनेन तत्सनाभित्वं लक्ष्यते, तेन च तदौपम्यमिति। तथा–

---

१. ध्वन्यालोके तूत्तरार्धपाठ ईदृशः – 'विरमिअ पुणो रमिज्जइ पिए जणे णत्थि'।

**प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः**
**कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् ।**
**परिम्लानप्रायामनुवदति दृष्टिः कमलिनीं**
**नवीनस्तन्वङ्ग्या मनसिजविकारो विजयते ।।१०६।।**

अत्र प्रतीच्छत्यवतरत्यनुवदतीति चेतनधर्मैरचेतने प्रयुक्तैरुपलक्षितेषु धारणप्राप्त्यनु, किसलयपरावृत्त्या श्वासधूसरत्वं लक्ष्यते, तेनापि तत्सामीप्यादशोक–किसलयौपम्यमिति; तालीपरिणत्या कमलिनीपरिम्लानतया च विरहकार्श्यं, तेन च स्नेहातिरेक इति। एवम्–(रत्ना. २.११)

**परिम्लानं पीनस्तनजघनसङ्गादुभयत–**
**स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।**
**इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः**
**कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ।।१०७।।**

अत्र वदतीत्यनेनोपचारवृत्त्या ज्ञापयतीति, परिम्लानमित्यादिभिस्तद्धर्मैस्तस्याः तनुसन्निवेशचारुत्वोत्कर्षो लक्ष्यते। अपि च–

**निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी ।**(बारा. १.४०)
**कन्दर्पस्य धनुर्लता किमपरं द्वारि भ्रुवोर्धार्यते ।।१०८।। इति।।**

अत्र निर्माल्यदासशब्दाभ्यामुपचारवृत्त्या हीनत्वेन लक्षितेन नयनवक्त्रयोरुपमोत्कर्षो लक्ष्यते। कन्दर्पधनुर्लतायास्तु द्वारप्रवेशक्षणोपलक्षणेन हीनत्वेन तयोरपि सुतरां ब्रूते। किंच– (विस. २.१५)

**यत् तालीदलपाकपाण्डु वदनं यद् दुर्दिनं नेत्रयो–**
**र्यच्चानर्तितकेलिपङ्कजदलं श्वासाः प्रसर्पन्ति च ।१०९।**

अत्र दुर्दिनं नेत्रयोरित्यत्र दुर्दिनशब्दः वृष्टिमेघाहतशोभेऽह्नि रूढाभिधानशक्ति–र्नेत्रयोरसम्भाव्यमानत्वेन स्वार्थाविनाभूतं पयःप्रवाहं लक्षयन्नश्रुप्रवाहं लक्षयति।

अन्यच्च– (महाभारत १.११९.६)

**अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।**
**शश्वत् पापीयदिवसाः पृथिवी गतयौवना ।।११०।।**

अत्रातिक्रान्तसुखत्वादि चेतनधर्मैरचेतनेषु कालादिष्वारोपितैरतेषु तदसम्भवेन

तदविनाभूतास्तद्गता; प्राण्यादयो लक्ष्यन्ते। तेन वक्तृनिर्वेद इति।

अपरं च—

**'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।।१११।।'**(काव्यद. १.४)

**'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।।११२।।'**(रामा.३.१६.१३)

अत्र यथा अन्धे रूपविशेषाभिव्यक्तिर्न सम्भाव्यते एवं तमस्यपि; यत्र नीरन्ध्रे रूपविशेषाभिव्यक्तेरसम्भवस्तदन्धं तम इत्युच्यते; तथा यथान्धो रूपग्रहणासमर्थः, एवम् आदर्शोऽपि। यो रूपग्रहणासमर्थः सोऽन्ध इत्युच्यते; तत्रोपचरितवृत्तौ योऽन्धवन्न पश्यति स एवान्ध इत्युच्यते। इह यत्र किंचिन्न दृश्यते तत्रापि अन्धशब्दो लक्षितलक्षणया प्रवर्तत इति।

एवमन्यदपि यथा—

**'स्वल्पैरसावपि न दह्यत एव काष्ठैः ।।११३।।'**

**'वअस्स तुमं पि थेवचंदणरसेण समससिज्जसि ।।११४।।'**

(वयस्य त्वमपि स्तोकचन्दनरसेन समाश्वसिहि।)

अत्र पूर्वस्मिन् यथाश्रुतार्थो वर्णनीयेऽसम्भवन् यथा **विक्रमादित्य**स्तथायमपि महापुरुषविशेष इति लक्षयति। तेन च स्वल्पैर्वचोभिरनाख्येयं माहात्म्यादिगुण–गौरवमुभयोरपि लक्षयति। उत्तरत्र तु स एवार्थो विरुद्धलक्षणया वैपरीत्येनाख्यायत इत्येवमयमनन्तो लक्षितलक्षणाव्यापारः प्रबन्धेषु लक्षणीयः। यथा—(द्र. स.क. पृ. १८५)

**एक्किंहिं अच्छिहिं सावणु अण्णहिं भद्दवउ ।**
**माहउ महिअलसत्थरि गंडत्थल सरउ ।।११५।।**
**अंगहिं गिम्ह सुहच्छिइ तिलवण मग्गसिरु ।**
**मुद्धिहिं मुहपङ्कअसरि आवासिउ सिसिरु ।।११६।।**

(एकस्मिन्नक्षिण श्रावणोऽन्यस्मिन् भाद्रपदो ।
माघः महीतलस्रस्तरे गण्डस्थले शरत् ।।
अङ्गे ग्रीष्मः सुखासिका तिलवने मार्गशीर्षः ।
मुग्धाया मुखपङ्कजसरसि आवासितः शिशिरः।।)

**नीहारजालमलिनः पुनरुक्तसान्द्राः कुर्वन् वधूजनविलोचनपक्ष्ममालाः।**
**क्षुण्णः क्षणं यदुबलैर्दिवमातितांसुः पांसुर्दिशांमुखमतुत्थयदुत्थितोऽद्रेः।।११७।।**

(माघ. ५.११)

## (२. विवक्षा)

**शब्देष्वर्थदानाभिप्रायो विवक्षा।**

यदाह— 'वक्तुर्विवक्षितपूर्विका शब्दप्रवृत्तिः' इति।

त्रिधा हि वाङ्मयम् **अपौरुषेयम्, आर्षं, पौरुषेयं** च। तत्र—

शब्दप्रधानम् **अपौरुषेयं** मन्त्रो ब्राह्मणं च। तत्र वक्तुरभावाद् विवक्षा नोपपद्यते।

अर्थप्रधानम् **आर्षं**, स्मृतिरितिहासश्च। तत्र विवक्षामात्रं प्रवर्तते—(उराच. १.१०)

**लौकिकानां हि साधूनां वागर्थमनुवर्तते ।**
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते ॥११८॥** इति।

(एतदुभय—)प्रधानम्[१]।(शास्त्रकाव्यादि)**पौरुषेयम्** ।

(तच्)च तदुभयमप्यभिनिविष्टबुद्धीनां विशिष्टविवक्षाभ्यो जायते। तद्यथा— 'विवक्षातः कारकाणि भवन्ति'। अक्षान् दीव्यति अक्षैर्दीव्यति अक्षेषु दीव्यत(ति) इति, वलाहको विद्योतते, वलाहकस्य विद्योतत इति। (वाप. ३.७.२)

**शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः ।**
**सर्वदा सर्वथाभावात् क्वचित् किञ्चिद् विवक्ष्यते ॥११९॥**

**कारकेष्वप्यकारकविवक्षा** यथा— मातुः स्मरति, सर्पिषो जानीते, न माषाणामश्नीयात्।

**'नैते सुखस्य जानन्ति ये न वत्स्यन्ति नन्दने'** ॥१२०॥ इति।

अत्र कर्मादिषु शेषत्वेन विवक्षितेषु सम्बन्धमात्रे षष्ठी, न कर्मकरणकर्तृष्वपि कारकविभक्तिरिति।

**अकारकेषु कारकविवक्षा** यथा— 'भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, अस्ति गच्छामो वयमिति। तथा स्मरसि कश्मीरेषु वत्स्यामः, एहि मन्ये न यास्यसि, पश्य मृगो धावति, इह पश्यामः। कर्मणि द्विवचन—बहुवचनान्युदाह्रियन्त इति।

**क्रियायामपि कारकविवक्षा** यथा—'चोरस्य रुजति, चोरस्यामयति, चोरं ज्वरयति, चोरं संतापयती'ति। अत्र 'रुजार्थानां भाववचनानामज्वरिसन्ताप्योः (२.३.५४)' इति भावस्यैव कर्तृत्वम्।

---

१. अत्र राघवः '(उभय)प्रधानं पौरुषेयं च (काव्यं शास्त्रं च)।' इति पूरयते। इतिहासस्तु त्यक्त एव स्थितोऽत्र संपूर्णेऽपि सन्दर्भे।

**अक्रियाविवक्षा** यथा– 'नीलति वनम्, श्वेतते प्रासादः;

**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥१२१॥** (कुसं. २.५५)। इति।

**क्रियायां क्रियान्तरविवक्षा** यथा– एषितुमिच्छति, कमितुं कामयते, भवेदपि भवेत्, स्यादपि स्यादिति।

**कारकेऽपि क्रियाविवक्षा** यथा–'द्रष्टुं चक्षुः, योद्धुं धनुः, गन्तुमनाः, गन्तुकाम' इति। अत्र क्रियायां क्रियार्थायामुपपदे तुमुन् भाव उक्तः। स चक्षुरादीनां क्रियाविवक्षामन्तरेण न सिध्यतीति।

**असम्बन्धे सम्बन्धविवक्षा** यथा–(माघ. ३.७४)

**साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।**
**तान्येकदेशान्निभृतं पयोधेरम्भांसि मेघान् पिबतो ददर्श ॥१२२॥**

**अचेतनेषु चैतन्यविवक्षा** यथा–नदीकूलं पिपतिषति, अश्मा लुलुठिषते।

**(चेतने अचैतन्य)–विवक्षा** यथा– अश्वारोहः पिपतिषति।

**प्रधाने गुणविवक्षा** यथा– बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यमिति।

**गुणे प्रधानविवक्षा** यथा–'मधुरो रस आप्याययति, अम्लो दीपयतीति।

**अवयवे समुदायविवक्षा** यथा–ग्रामो दग्धः, पटो दग्धः, अक्ष्णा काणः, पादेन खञ्ज इति।

**समुदाये अवयवविवक्षा** यथा–'दोर्दण्डचण्डिममात्रारोपणीये धनुषि सति पदातिलवे लक्ष्मणेन प्रभुरार्यः', 'मामपि तस्यैव सुगृहीतनाम्नो देवस्य भृत्यपरमाणुं विकुक्षिनामानमवधारयतु भवती' इति।

**अभेदे भेदविवक्षा** यथा– परुद् भवान् पटुरासीत् पटुतर ऐषमः अन्य एवासि सम्पन्नः, राहोः शिरः, शिलापुत्रकस्य शरीरम् इति।

**भेदेऽप्यभेदविवक्षा** यथा– तानेव शालीनश्नीमो ये मधुरायाम्, तानेव शाटकानाच्छादयामो ये पाटलिपुत्र इति।

**असतो विवक्षा** यथा– समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति।

**सतोऽप्यविवक्षा** यथा– अनुदरा कन्या, अलोमिका एडका इति।

**सदसतोर्विवक्षा** यथा– तदिदमपमेघोदयं वर्षं, सोच्छ्वासं मरणम् इति।

**सदसतोरविवक्षा** यथा– 'शैलाधिराजतनया न ययौ न तस्थौ' इति।(कुसं.५.८५)

**स्तुत्या निन्दाविवक्षा** यथा–

**गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।**
**असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥१२३॥**

**निन्दया स्तुतिविवक्षा** यथा–(काव्याद. २.२७१)

**चपलो निर्दयश्चासौ जनः किं तेन मे सखि !**
**आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥१२४॥**

**विधिना निषेधविवक्षा** यथा–(काव्याद. २.१४१)

**गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥१२५॥**

**निषेधेन विधिविवक्षा** यथा–

**मा गच्छ प्रमदाप्रिय प्रियशतैर्भूयस्त्वमुक्तौ मया**
**बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्थान्तरम् ।**
**किं चास्याः कुचभारपीडनपरैर्यत्नप्रबन्धैरपि**
**त्रुट्यत्कञ्चुकजालकैरनुदिनं निस्सूत्रमस्मद्गृहम् ॥१२६॥**

एवमियमनेकधा विवक्षा विप्रथते। तदेष लौकिकवादः–(ध्वन्या. ३.४३)

**अस्मिन्नपारे संसारे कविरेकः प्रजापतिः ।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥१२७॥**

अपि च–(गउडवहो ६६)

**ठिअमट्ठिअं व दीसइ अठिअं पि जहट्ठिअं/परिट्ठिअं व पडिहाइ ।**
**जहसंठिअं च दीसइ सुकईण इमाओ पयईओ ॥१२८॥**

(स्थितमस्थितमिव दृश्यते अस्थितमपि यथास्थितमिव/परिष्ठितमिव प्रतिभाति।
यथासंस्थितं च दृश्यते सुकवीनामिमाः पदव्यः/प्रकृतयः ॥)

किंच–

**क्वचित् स्वल्पेऽप्यर्थे प्रचुरवचनैरेव रचना**
**क्वचिद् वस्तु स्फारं कतिपयपदैरर्पितरसम् ।**
**यथावाच्यं शब्दाः क्वचिदपि तुलायामिव धृता–**
**स्त्रिभिः कल्पैरेवं कविवृषभसन्दर्भनियमः ॥१२९॥**

**विवक्षा** लोकव्यवहारे काव्यव्यवहारे च सुमतिभिरुन्नीयमाना त्रिधा विख्यायते **काक्वादिव्यङ्ग्या, प्रकरणादिव्यङ्ग्या, अभिनयादिव्यङ्ग्या** च। तत्र–

**(१. काक्वादिव्यङ्ग्या –३)**

**काकुः, स्वरो, विच्छेद** इति **काक्वादयः**। तेषु–

**(काकुः) भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते॥१३०॥**

सा त्रिधा– **१. नियतप्रतिबन्धा, २. अनियतप्रतिबन्धा, ३. अप्रतिबन्धा** च। तासु–

**(१) नियतप्रतिबन्धा** द्विधा– साकाङ्क्षा, निराकाङ्क्षा च।

तयोर्वाक्यान्तरापेक्षिणी **साकाङ्क्षा**।

सा त्रिधा– **आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा** च।

वाक्यान्तरभाविनी **निराकाङ्क्षा**।

सापि त्रिधा– **विधिरूपा, उत्तररूपा, निर्णयरूपा** च।

तदेव वाक्यं काकुविशेषेण साकाङ्क्षं, तदेव काक्वन्तरेण निराकाङ्क्षम्। तत्र–

**(साकाङ्क्षा, निराकाङ्क्षा)**

**आक्षेपगर्भा** यथा–

**यदि मे वल्लभा दूती तदाहमपि वल्लभा ।**
**यदि तस्याः प्रिया वाचस्तन्ममापि प्रियप्रियाः ॥१३१॥**

इयमेव निर्देष्टु**र्विधिरूपा**।

**प्रश्नगर्भा** यथा–

**गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु ।**
**वर्तन्ते साम्प्रतं तासां हेतवः शुक्तिसम्पुटाः ॥१३२॥**

इयमेवोपदेष्टु**रुत्तररूपा**।

**वितर्कगर्भा** यथा–(विक्रमो. ४.१)

**नवजलधरः सन्नद्धोऽयं न दुष्टनिशाचरः**
**सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।**
**अयमपि पटुर्धारासारो न बाणपरम्परा**
**कनकनिकषस्निग्धा विद्युत् प्रिया मम नोर्वशी ॥१३३॥**

इयमेवोपदेष्टु**र्निर्णयरूपा**।

एवमन्या अपि—(विक्रमो. ४.२७)

**सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।**
**रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥१३४॥**

इत्यादयो द्रष्टव्याः।

ता इमास्तिस्रोऽपि **नियतप्रतिबन्धाः ।**

(२) **अनियतप्रतिबन्धाः** पुनरनन्ताः। तासु —

**अभ्युपगमानुनयकाकु**र्यथा— (वेसं. १.११)

**युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं**
**प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।**
**क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतकौरवा—**
**नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥१३५॥**

**अभ्यनुज्ञोपहासकाकु**र्यथा— (वेसं. १.१४)

**मथ्नामि कौरवशतं समरे न कोपाद् ?**
**दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ?**
**सञ्चूर्णयामि गदया न सुयोधनोरू ?**
**सन्धिं करोतु भवतां नृपतिः पणेन ॥१३६॥**

**विषान्ना**(अमर्षा?)**द्याक्षेपकाकु**र्यथा— (वेसं. १.७)

**लाक्षागृहानलविषान्नसभाप्रवेशैः**
**प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।**
**आकृष्टपाण्डववधूपरिधानकेशाः**
**स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥१३७॥**

एवमन्या अपि— (रुद्रट. २.१७)

**शल्यमपि स्खलदन्तः सोढुं शक्येत हालहलदिग्धम् ।**
**धीरैर्न पुनरकारणकुपितखलालीकदुर्वचनम् ॥१३८॥**

इत्यादयो द्रष्टव्याः।

(३) **अप्रतिबन्धा** तु एकगुणा, द्विगुणा, त्रिगुणा (चतुर्गुणा) च। तत्र—

**एकगुणा** यथा—

भ्रुकुटिरारचिता, गतमग्रतो हृतमथाननमुक्तमसाधु वा ।
इयमपि प्रभुता क्रियते बलादकुपितोऽपि हि यत् कुपितो जनः ॥१३९॥

द्विगुणा यथा–

किंकिरातेन यच्चक्रे समाकृष्य शिलीमुखान् ।
शिलीमुखान् समाकृष्य किं किरातः करोति तत् ॥१४०॥

त्रिगुणा यथा–

सेयं पश्यति, नो कुरङ्गकवधूस्त्रस्तेयमुद्वीक्षते
तस्याः पाणिरयं, न मारुतचलः पत्राकृतिः पल्लवः ।
तारं रोदिति सैव नैष मरुता वेणुः समापूर्यते
सेयं मामभिभाषते प्रियतमा, नो कोकिलः कूजति ॥१४१॥

चतुर्गुणा खल्वपि यथा– (किराता. ९.३९, ४०)

उच्यतां स वचनीयमशेषं नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः ॥१४२॥
किं गतेन न हि युक्तमुपैतुं कः प्रिये सुभगमानिनि मानः ।
योषितामिति कथासु समेतैः कामिभिर्बहुरसा धृतिरूहे ॥१४३॥
सख्या वा नायिकाया वा सखीनायकयोरथ ।
भूयसीनां सखीनां वा वाचि काकुरिह स्थिता ॥१४४॥ (का.मी. पृ.१२)

एवमन्या अपि कोऽहमित्यादयो द्रष्टव्याः।

(स्वराः)

स्वरास्त्रिधा – १. प्लुतादयः, २. उदात्तादयः ३. प्रगृह्यादयश्च । तेषु –

(१) प्लुतादयो यथा–

सुभ्रु! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्युपनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद् भवन्ति दयिते! सर्वा ममान्धा दिशः ॥१४५॥

तदेतत्प्रियतमाप्रसादनपरमपि वाक्यं दृष्टे इत्यत्र सम्बुद्धौ प्लुतस्वरकरणा–दुत्कुपितदृष्टिप्रसादनपरं सम्पद्यते। आदिग्रहणेन ह्रस्वदीर्घानुनासिकाः सङ्गृह्यन्ते। तत्र

**ह्रस्वस्वरकरणादर्थभेदो** यथा— अश्ववदिति (अश्वावति इति) सम्बोधनं प्रतीयते।

**दीर्घकरणादर्थभेदो** यथा— विश्वामित्रो विश्वानर इति ऋषिः, संज्ञा च प्रतीयते।

**अनुनासिककरणादर्थभेदो** यथा—'गम्भीरआँ अपः अत्र' (गभीर आँ उग्रपुत्रे; अभ्र आँ अपः) (ऋवे. ८.६७.११, ५.४८.१); 'आङोऽनुनासिकश्छन्दसि' (६.१.१२६) इति ईषदादिरर्थः प्रतीयते।

न स्थाणुदिनं (अननुनासिकं?) यथा— (उराच. २.३१)

**आ ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति॥१४६॥**

२. **उदात्तादयो** यथा— कलो रवोऽस्येति कलरवः, एकः पुत्रोऽस्येत्येकपुत्र इति। समासे बहुव्रीहिस्वरो भवति, स च पूर्वपदस्यान्तोदात्तः। कलश्चासौ रवश्च, एकश्चासौ पुत्रश्चेति समासे कर्मधारयस्वरो भवति। स च 'समासस्य' (६.१.२२३) इति समासस्यान्तोदात्तो भवति। ताभ्यां चान्यपदार्थ उत्तरपदार्थश्च प्रतीयते। तदुक्तम्—

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ।**
**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥१४७॥**

(माघ. १४.२४)

आदिग्रहणेनानुदात्तस्वरितैकश्रुतयः सङ्गृह्यन्ते। तत्र —

**अनुदात्तादर्थभेदो** यथा— पूर्वोक्तयोरेवोदाहरणयोरन्यपदार्थः प्रतीयते, नोत्तरपदार्थ इति।

**स्वरितादर्थभेदो** यथा— भ्रातृव्य इति भ्रातुरपत्यं प्रतीयते, न सपत्नः।

**एकश्रुतेरर्थभेदो** यथा— आगच्छ भो माणवक देवदत्त३ (मभा. १.२०.३३) 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् अपां रेतांसि जिन्वतो३म्।।' (ऋवे. ८.४४.१६, काशिका १.२.३४)[१] यत्रैकश्रुतेः यथा x x x दूरादाह्वानमज्ञक x x x सन्धीयते x x x तत्स्वरोऽपि तात्स्थ्यात् प्रगृह्य इत्युच्यते; ततोऽर्थभेदो यथा— 'आली आगच्छामि ताम् इतः' इति सखीभ्यामिवागन्तव्यम् इत्यर्थः प्रतीयते, नागन्तूनां पङ्क्तिरस्माद् इति।

आदिग्रहणेन सन्धेयसंवृता संगृह्यन्ते। तत्र —

**सन्धेयादर्थभेदो** यथा— आङ्गिरस इति;

---

१. इतः परम् आङ्गिरस इत्यन्तं भागं राघवो यथा तथा व्याकृत्य श्रान्तोऽस्फुटार्थ एष इति मन्वानो विरराम।

**(विच्छेदः)**

विच्छेदस्त्रिधा— **१. पदविच्छेदो, २. वाक्यविच्छेदो, ३. यतिविच्छेदश्च**। तेषु—

(१) **पदविच्छेदः** चतुर्धा— **शृङ्खला, भङ्गः, परिवर्तकः, चूर्णकम्** **इति**। तेषु—

**शृङ्खला** यथा— 'कान्तारतरुतलासितमृगयुवरचितान्तरा हरत्यटवी' इति। अत्र यदा कान्तारः तरुतलः आन्तरा इति पदच्छेदस्तदा प्रिया—सम्भोग—मणित—हर्षित—व्याधप्रधान—व्याप्तमध्या इति। सेयं शृङ्खलेवान्योन्यसङ्कलाच्छृङ्खला।

**भङ्गो** यथा— जाय x x x x वाक्यं निन्दार्थं क्रियते सेयं पदद्वैधीभावो भङ्गः।

**परिवर्तको** यथा— 'कलिकामधुगर्हणा' इत्यविकृतमेव विच्छिद्यते, (तदा) कुट्मलमकरन्द— निष्यन्देत्यर्थप्रतीतिः; यदा तु कलिकामधुक् अर्हणेति तदा पूजनैव कलिकाले कामधेनुरिति; सोऽयं गकारककारयोः परिवर्तने परिवर्तकः।

**चूर्णकं** यथा— 'पश्य सलिलं पयोधेर्दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तम्'; मत्स्यानां वल्लभं पयोधेर्जलमवलोकयेत्यर्थः; यदा तु दूरसम् उन्मुक्तशुक्तिमीनाङ्कान्तमिति, तदा दुःखेन रसनीयं उद्वान्तमौक्तिकाधारं मत्स्यचिह्नितपर्यन्तं जलमवलोकयेति। अत्र शुक्तीत्यस्य संयोगाक्षरस्य दूरसमित्यत्र रेफस्य च चूर्णनिमित्तं चूर्णकम्।

(२) **वाक्यविच्छेदो**ऽपि चतुर्धा— **वाक्यसम्भेदो, वाक्यान्यथात्वं, वाक्यासमाप्तिः, वाक्यानुच्चारणम्** इति; तेषु—

१. **वाक्यसम्भेदो** यथा—

**दिङ्मातङ्गघटाविभक्तचतुराघाटा महो साध्यते**
**सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।**
**विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो**
**यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्** ॥१४८॥

अत्र वदन्त एव हि वयं रोमाञ्चिताः पश्यतेति वाक्यसम्भेदो वक्तुर्भावकत्वेन गुणविशेषविज्ञानातिशयप्रकाशनं प्रतिपादयति।

२. **वाक्यान्यथात्वं** यथा— (वेसं. २.५)

**सहभृत्यगणं सबान्धवं सहमित्रं सबलं सहानुगम् ।**
**स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतः सुयोधनम्** ॥१४९॥

अत्र पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनमिति

भानुमतीविरहवैमनस्यप्रयुक्तस्य सुयोधनवाक्यस्यान्यथात्वमनुच्यमानं भाविनोऽर्थस्य तथात्वमवबोधयति।

३. **वाक्यासमाप्तिर्**यथा– (उराच. ३.२६)

**त्वं जीवितं त्वमसि मे हृदयं द्वितीयं**
**त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।**
**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां**
**तामेव शान्तमथवा किमतः परेण ॥**

अत्र 'शान्तमथवा किमतःपरेणे'ति वासन्तीवाक्यासमाप्तिः 'सुहृद्विषये नामङ्गलं वक्तव्यमि'–ति प्रतिपादयति।

४. **वाक्यानुच्चारणं** यथा–

**अक्षुद्राऽरिकृताऽभिमन्यु–निधन–प्रोद्भूत–तीव्र–क्रुधः**
**कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयः ।**
**पार्थस्याऽकृत–शात्रव–प्रतिकृतेरन्तश्शुचा मुह्यतो**
**हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद् बहिः ॥१५१॥**

अत्र हा वत्सेति वाक्यानुच्चारणमकृतशत्रुप्रतिक्रियाणां महात्मनामनुचितं परिदेवनमिति ज्ञापयति।

**(३. यतिविच्छेदः)**

विरामो यतिः। स चतुर्धा– **पदे, पादे, अर्धे, स्थाने** च ।
तस्यान्यथाकरणं **यतिविच्छेदः**।

१. तत्र **पदे** यथा–

**सम्पदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि ।**
**शारदाभ्रदलचञ्चलमायुः, किं धनैः, परहितानि विदध्वम् ॥१५२॥**

अत्र किं धनैरिति पदयतौ न्याय्योऽर्थः प्रतीयते, तस्यान्यथाकरणं किमित्यत्रैव विच्छेदः; तेन च किमिति धनैः परहितानि विदध्वमित्यन्याय्यः।

२. **पादे** यथा–

**पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।**
**आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥१५३॥** (मनु. १२.११०)

अत्र यदा पादे पादे यतिस्तदा न्याय्योऽर्थः प्रतीयते; यदा त्वाज्ञासिद्धानि चत्वारि नेति पादमतिक्रम्य तदा अन्याय्य इति।

३. **अर्धे** यथा—(किराता. ९.३९)

**उच्यतां स वचनीयमशेषं नेश्वरे परुषता सखि! साध्वी ।**
**आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः ॥१५४॥**

अत्र यदार्धे यतिस्तदैकस्या एवेदं वाक्यमित्यन्योऽर्थः प्रतीयते; यदा तु तद्विच्छेदात् पाद एव यतिः क्रियते तदा द्वयोः बह्वीनां वा एकवाक्येनान्य इति।

४. **स्थाने** यथा—

**येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो**
**यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।**
**यस्याहुश्शशिमच्छिरो हर इति स्तुत्यं च नामामराः**
**सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥१५५॥**

अत्र द्वादशसु सप्तसु चाक्षरेषु यतिस्थानम्, तदतिक्रमेण बलिजित्काय इति शशिमच्छिरोहर इति च यतिकरणे उमाधवो माधवश्च त्वामव्यादित्यर्थौ क्रमेण प्रतीयेते इति।

**(२. प्रकरणादिव्यङ्ग्या)**

प्रकरणमर्थो लिङ्गमौचित्यं देशः काल इति **प्रकरणादयः**।

तत्र प्रकरणाद्यथा सैन्धवः सामान्येन लवणेऽश्वे पुरुषे च वर्तमानः भोजनादिप्रकरणवशादर्थविशेषप्रतिपत्तिनिमित्तं भवति।

देवो वर्षती**त्यर्थात्** देवशब्दो मेघमभिधत्ते,

रामलक्ष्मणाविति लक्ष्मणलिङ्गाद् राम**शब्दो** दाशरथौ वर्तते।

पुण्डरीकमुखी**त्यौचित्यात्** पुण्डरीकशब्दः कमलमाह,

अमरावत्यां हरिरिति हरिशब्दो **देशतः** शतक्रतुं ब्रूते,

रात्रौ पतङ्गं पश्येति **कालतः** पतङ्गशब्दः शलभमभिधत्त इति।

एवमन्येऽपि। तद्यथा—

**भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः**
**स्मरवति यतः कान्ते कान्तां हठात् परिचुम्बति ।**
**न न न म म मा मां मा स्प्राक्षीर्निषेधपरं वचो**
**भवति शिथिले मानग्रन्थौ तदेव विधायकम् ॥१५६॥** इति।

(३. अभिनयादिव्यङ्ग्या)

अभिनयोऽपदेशो निर्देशः संज्ञा इङ्गितमाकार इत्यभिनयादयः। तेषु –

**अभिनयो** यथा–

**एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।**
**एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअएहिं ॥१५७॥**
(एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥)

**अपदेशो** यथा–(कुसं. २.५५)

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥१५८॥**

**निर्देशो** यथा– 'भर्तृदारिके दिष्ट्या वर्धामहे, यदत्रैव कोऽपि कस्यापि (वल्लभः) तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः।'(मामा. १२८/२९)

**संज्ञा** यथा–(कुसं. ८.६)

**अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।**
**वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥१५९॥**

**इङ्गितं** यथा–(काव्याद. २.२६१)

**कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।**
**अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥१६०॥**

**आकारो** यथा–(कुसं. ५.४६)

**निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।**
**न विद्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥१६१॥**

एवमन्येऽपि; यथा–

**आश्लेषे प्रथमं क्रमादथ जिते हृद्येऽधरस्यार्पणे**
**केलीद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति ।**
**सान्तर्हासनिरुद्धसम्भृतरसोद्भेदस्फुरद्गण्डया**
**तूष्णीं शारविसारणाय निहितः स्वेदाम्बुगर्भः करः ॥१६२॥**

## (३. तात्पर्यम्)

**यत्परश्शब्दः स शब्दार्थ इति तात्पर्यम्।**

तच्च वाक्य एवोपपद्यते, पदमात्रेणाभिप्रायस्य प्रकाशयितुमशक्यत्वात्।

तच्च वाक्यप्रतिपाद्यं वस्तु त्रिरूपं भवति –

**१. अभिधीयमानं, २. प्रतीयमानं, ३. ध्वनिरूपं** च।

यत्र यदुपात्तशब्देषु मुख्यागौणीलक्षणाभिः शब्दशक्तिभिः स्वमर्थमभिधायोपरत–व्यापारेषु आकाङ्क्षासन्निधियोग्यतादिभिर्वाक्यार्थमार्थमभिधीयते **तदभिधीयमानम्**, यथा– गौर्गच्छतीति।

वाक्यार्थावगतेरुत्तरकालं वाक्यार्थ उपपद्यमानोऽनुपपद्यमानो वार्थप्रकरणौ–चित्यादिसहकृतौ यत्प्रत्याययति **तत्प्रतीयमानम्**; यथा– **'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः'** इत्युक्ते वरं विषं भक्षितम्, न पुनरस्य गृहे भुक्तमिति **प्रतीयते**।

अर्थशब्दोपायादुपसर्जनीकृतस्वार्थो वाक्यार्थावगतेरनन्तरमनुनादरूपं प्रतिशब्दरूपं वा यद् अभिव्यञ्जयति **तद्ध्वनिरूपम्**। तच्च न सार्वत्रिकम्। तथा हि यथा– निवृत्तेऽभिघाते कस्यचिदेव कांस्यादेर्द्रव्यस्यानुनादो जायते, कस्यचिदेव कन्दरादेः प्रतिशब्दः, यथा च कस्यचिदेव वाक्यस्य प्रतीयमानाभिधीयमानवाक्यार्थप्रतीतेरनन्तरं ध्वनिरुपलभ्यत इति। निमिषत्येषेत्युक्तेऽक्ष्णोर्निमेषोऽभिधीयते, देवी न भवतीति प्रतीयते, रूपातिशयं च ध्वनति। अथैषां प्रयोगः।

### (१. अभिधीयमानम्)

तत्राभिधीयमानं चतुर्धा– **विधिरूपं, निषेधरूपं, विधिनिषेधरूपम्, अविधिनिषेधरूपञ्च**। तेषु –

**विधिरूपं** यथा–

**दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः ।**
**परोपकरणं कायादसारात् सारमुद्धरेत् ॥१६३॥**

**निषेधरूपं** यथा–

**लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता ।**
**यस्यैतानि न विद्यन्ते न तेन सह संवसेत् ॥१६४॥**

**विधिनिषेधरूपं** यथा–

**पक्वान्नमिव राजेन्द्र! सर्वसाधारणाः स्त्रियः ।**
**तस्मात् तासु न कुप्येत न रज्येत रमेत च ॥१६५॥**

**अविधिनिषेधरूपं** यथा—

**न दानेन न मानेन न शाठ्येन न सेवया ।**
**न शास्त्रेण न हृद्यास्ताः सर्वथा किमिव स्त्रियः ॥१६६॥**

**(२. प्रतीयमानम्)**

**प्रतीयमानं** पुनरनेकधा।

१. **क्वचिद् विधौ निषेधः** – (गास. २.७५)

**भम धम्मिअ वीसद्धो/विसत्थो सो सुणओ अज्ज मारिओ तेण ।**
**गोलाणईकच्छकुडंगवासिणा दरिअसीहेण ॥१६७॥**

(भ्रम धार्मिक विस्रब्धः/विश्वस्तः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥)

अत्र विस्रब्धो भ्रमेति विधिवाक्ये तत्र निकुञ्जे सिंहस्तिष्ठति, त्वं च शुनोऽपि बिभेषि, तस्मात्त्वया तस्मिन्न गन्तव्यमिति निषेधः प्रतीयते।

२. **क्वचिन्निषेधे विधिर्यथा** – (गास. ७.६७)

**अत्ता एत्थ णुमज्जइ एत्थ अहं दिवसअं पलोएहि ।**
**मा पहिअ रत्तिअंधअ सेज्जाए मह णिमज्जिहिसि ॥१६८॥**

(श्वश्रूरत्र निमज्जति शेते अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोर्निङ्क्ष्यसि ॥)

अत्र शय्यायां मा निषत्स्यसीति निषेधवाक्ये इयं श्वश्रूशय्या, इयं मच्छय्येति दिवाभ्युपलक्ष्य रात्रौ त्वयेहागन्तव्यमिति विधिः प्रतीयते।

३. **क्वचिद्विधौ विध्यन्तरं** यथा – (गास. ४.३५)

**बहलतमा हअराई अज्ज पउत्थो पई घरं सुण्णं ।**
**तह जग्गिज्ज सअज्जिअ/ज्झिअ ण जहा अम्हे मुसिज्जामो ॥१६९॥**

(बहलतमा हतरात्रिरद्य प्रोषितः पतिः, गृहं शून्यम् ।
तथा जागृहि प्रतिवेशिन्! न यथा वयं मुष्यामहे ॥)

अत्र यथा वयं न मुष्यामहे तथा जागृहीति विध्यभिधाने रात्रिरत्यन्धकारा, पतिः प्रोषितो, गृहं शून्यम् अतस्त्वमभयो मत्पार्श्वमागच्छेति विध्यन्तरं प्रतीयते।

४. **क्वचिन्निषेधे निषेधान्तरं** यथा–(गास. ९५८ वे.)

**आसाइअं अणाएण जेत्तियं तेत्तिएण बंध दिहिं ।**
**ओरमसु वसह एण्हिं रक्खिज्जइ गहवईछित्तं ॥१७०॥**
(आस्वादितमज्ञातेन यावत् तावदेव बधान धृतिम् ।
उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥)

अत्र गृहपतिक्षेत्रे दुष्टवृषवारणपरे निषेधवाक्ये उपपतिवारणं निषेधान्तरं प्रतीयते।

५. क्वचिद् **विधिनिषेधे विधिर्**यथा–(वल. ४९१)

**महुएहिं किंव पंथिअ जइ हरसि णिअंसणं णिअंवाओ ।**
**वाहेमि कस्स रण्णे गामो दूरे अहं एक्का ॥१७१॥**
(मधुकैः किंवा पान्थ यदि हरसि निवसनं नितम्बात् ।
आह्वयामि कस्यारण्ये ग्रामो दूरे अहं एका ॥)

अत्र विधिनिषेधयोरनभिधाने 'अहमेकाकिनी ग्रामो दूर' इति विविक्तोपदेशान्नितम्ब– वासोऽपि मे हरेति विधिः प्रतीयते।

६. क्वचिद् **अविधिनिषेधे** यथा–(काव्याद. २.१३९)

**जीविताशा बलवती धनाशा दुर्बला मम ।**
**गच्छ वा तिष्ठ वा कान्त! स्वावस्था तु निवेदिता ॥१७२॥**

अत्र गच्छ वा तिष्ठ वेत्यविधिनिषेधाज्जीविताशा बलवती धनाशा दुर्बला ममेति वचनात् त्वया विनाहं जीवितुं न शक्नोमीत्युपक्षेपेण गमननिषेधः प्रतीयते।

७. क्वचिद् **विधिनिषेधयोर्विध्यन्तरं** यथा– (गास. पृ. ९५७ वे.)

**णिअदइअदंसणक्खित्त पहिअ अण्णेण वच्चसु पहेण ।**
**गहवइधूआ दुल्लंघवाउरा इह हअग्गामे ॥१७३॥**
(निजदयितादर्शनोत्सिक्त! पथिक! अन्येन व्रज पथा ।
गृहपतिदुहिता दुर्लङ्घ्यवागुरा इह हतग्रामे ॥)

अत्रान्येन पथा व्रजेति विधिनिषेधयोरभिधाने हे स्वकान्ताभिरूपताविकत्थन पान्थाभिरूपक इह ग्रामे भवतो गृहपतिसुता द्रष्टव्यरूपेति विध्यन्तरं प्रतीयते।

८. क्वचिद् **विधिनिषेधयोर्निषेधान्तरं** यथा–(गास.(वे) ९५९)

**उच्चिणसु पडिअ–कुसुमं मा धुण सेहालिअं हलिअसुह्णे ।**
**एस अवसाणविरसो ससुरेण सुओ वळअसद्दो ॥१७४॥**

(उच्चिनु पतितकुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।
एष अवसानविरसः श्वशुरेण श्रुतो वलयशब्दः ।।)

अत्र पतितं कुसुममुच्चिनु मा धुनीहि शेफालिकामिति विधिनिषेधयोरभिधाने 'सखि! चौर्यरते प्रसक्ते वलयशब्दो न कर्तव्य इति निषेधान्तरं प्रतीयते।

९. क्वचिद् **विधावनुभयं** यथा–

**सणिअं वच्च किसोअरि पए पअत्तेण ववसुमहि पट्ठेदि/ठवसु महिवट्ठे।**
**भञ्जिहिसि वित्थअत्थणि विहिणा दुक्खेण णिम्मविआ।।१७५।।**

(शनैर्व्रज कृशोदरि! बहुप्रयत्नेन व्यवस्यामः पृष्ठतः/स्थापय महीपृष्ठे ।
भङ्क्ष्यसि विस्तृतस्तनि! विधिना दुःखेन निर्मापिता ।।)

अत्र शनैर्व्रजेति विध्यभिधाने हि न विधिर्नापि निषेधः, अपि तु वर्णनामात्रं प्रतीयते।

१०. क्वचिन्**निषेधेऽनुभयं** यथा–(गास. ९६८ वे.)

**दे आ पसिअ णिवत्तसु मुहससिजोण्हाविलुत्ततमणिवहे ।**
**अहिसारिआण विग्घं करेसि अण्णाण वि हआसे ।।१७६।।**

(प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोषि अन्यासामपि हताशे! ।।)

अत्र निवर्तस्वेति निषेधाभिधानेऽपि न निषेधो नापि विधिः; अपि तु मुखेन्दुकान्तिः प्रतीयते।

११. क्वचिद् **विधिनिषेधयोरनुभयं** यथा–(गास. पृ.९४४ वे.)

**वच्च मह च्चिअ एक्काए होंतु णीसास–रोइअव्वाइं ।**
**मा तुज्झ वि तीए विणा दक्खिण्णहअस्स जाअंतु ।।१७७।।**

(व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जायन्ताम् ।।)

मा तवापि तां विना तानि जायन्तामिति विधिनिषेधयोरभिधाने न विधिर्नापि निषेधः ; अपि तु कृतव्यलीकप्रियतमोपालम्भनमात्रं प्रतीयते।

१२. क्वचिद् **अविधिनिषेधेऽनुभयं** यथा–(गास. २.७१)

**गोलाणइए तूहे/कच्छे चक्खंतो राइआइ पत्ताइं ।**
**उप्फडइ मक्कडो खोक्खएइ पोट्टं च पिट्टेइ ।।१७८।।**

(गोदानद्याः तीर्थे/कच्छे चर्वयन् राजिकायाः पत्राणि ।
उत्पतति मर्कटः खोक्खशब्दं करोत्युदरं च ताडयति ॥)

अत्र न विधिर्नापि निषेधोऽभिधीयते। नाप्येनयोः अन्यः, सङ्केतकुडुंगे अभ्यागतो भवान्न गत इति तं ज्ञापयतीति प्रतीयते।

**(३. ध्वनिरूपम्)**

प्रतीयमानाभिधीयमानवाक्यार्थानामानन्त्याद् **ध्वनिरूपम्** अप्यनेकप्रकारमेव। ध्वनिश्च द्विधा **१. अर्थध्वनिः, २. शब्दध्वनिश्च**। तयोः –

१. **अर्थध्वनिः** अनुनादध्वनिरूपः प्रतिशब्दध्वनिरूपश्च। तत्र–

योऽभिधीयमानवाक्यार्थानुस्यूतमेव कांस्यानुनादरूपमर्थान्तरं ध्वनति, स **अनुनादध्वनिः**। यथा–

**शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।**
**तरुणि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥१७९॥**

अत्र यथाश्रुतवाक्यार्थोऽभिधीयमानो बिम्बफलारुणाधर इत्युपलक्षणेन रागातिशयं प्रत्याययन्नाल्पपुण्यस्त्वदधरप्रतिनिधिमपि चुम्बतीति चाटुना वर्णनीयायाः स्वानुराग–प्रकाशनं ध्वनति। एतच्च कांस्यध्वनिवदविच्छिन्नमेव ध्वनन्ननुनादरूपं प्रतीयत इत्यनुनादध्वनिः। तथा–

**शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं**
**क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम् ।**
**विश्वं स्त्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यतेऽशिष्यते**
**नागै रागिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥१८०॥**

अत्र गणाः कपाललिपिमप्रसिद्धाक्षरां पदशः पठन्तीति वाक्यार्थोऽभिधीयमान–स्तानि कपालानि ब्रह्मादीनामिति प्रत्याययन् महाध्वो(र्थो)पसंहारे भगवतोऽनुपहत–प्रभावस्यैकाकिनोऽवस्थानम् इव (इति) ध्वनति। तच्च 'विश्वं स्त्रक्ष्यतीत्यादि–पदार्थानुस्यूतमेवाऽनुनादवन्निरूप्यत इत्यनुनादध्वनिः। एवम्–

**अण्णत्त/त्थ वच्च बालअ मज्जंतिं/ण्हाअंतिं कीस मं पलोएसि ।**
**एअं भो जाआभीरुआण तूहं तित्थं विअ ण होइ ॥१८१॥**

(अन्यत्र व्रज बालक! मज्जन्तीं/स्नान्तीं कस्माद् मां प्रलोकयसि ।
एवम् भो जायाभीरुकाणां तीर्थमेव न भवति ।।)

अत्र किं मां मज्जन्तीं प्रलोकयसि, अन्यत्र व्रज, नेदं जायाभीरूणां तीर्थमित्यभिधीयमानो जायायास्त्वं बिभेषि, तेन मां न कामयस इत्युपालम्भार्थं प्रत्याययन् स्नेहं विना युवतीनामीर्ष्यायितं भवतीति ध्वनति। तच्च तस्या अनुरागार्थानुस्यूतमेवानुनादरूपं ध्वनतीत्यनुनादध्वनिः। एवं 'अत्ता एत्थ णिमज्जइ' इत्यादिवाक्ये निषेधे विधिः प्रतीयमानः कदाचिदयमन्धकारे मद्भ्रान्त्या श्वश्रूं प्रति यायादित्युत्प्रेक्षमाणायाः स्खलितप्रतिविधानरूपं रात्र्यन्धपदाभिधानमपि नयवत्या वैदग्ध्यं ध्वनति। तच्चाभिधीयमानप्रतीयमानयोरनुस्यूतेन प्रतीयत **इत्यनुनादध्वनिः**। तथा– **'महुएहि किं वि पंथिअ'** इत्यादौ अविधिनिषेधे विधिः प्रतीयमानो मधूकापचायिकायाः प्रार्थनावैदग्ध्यं ध्वनति। तच्च प्रतीयमानार्थानुस्यूतमेवानुनादमिवोपलभ्यत **इत्यनुनादध्वनिः**। अपि च–**'उच्चिणसु पडिअं कुसुमं मा धुण सेहालिअं'** इत्यादिवाक्ये विधिनिषेधयोर्निषेधः प्रतीयमानः स्खलितगोपनेषु सखीवैदग्ध्यं ध्वनति। स च शेफालिकापुष्पावचयव्याजेन पश्चाद्वाटमुपगताया हालिकस्नुषायास्तत्रागतेनोपपतिना सह प्रवृत्ते चौर्यरतकलहे कुड्यान्तरितश्वशुराकर्ण्यमानमनोहरवलयशब्दप्रतिषेधपरतया प्रवर्तमानः स्नुषानुस्यूतमेव शेफालिकाशाखावधूननं सवलयकरावधूननं च कांस्यध्वनिरूपेणानुनादो ध्वनिं प्रतिपादयन्ननुनादध्वनिव्यपदेशमासादयतीति।

यः पुनरभिधीयमानवाक्यार्थात् पृथग्भूत इव गुहादिप्रतिशब्दानुरूपमर्थान्तरं प्रत्याययन् प्रतिध्वनति स **प्रतिशब्दध्वनिः**। यथा –

**लावण्यसिन्धुरपरैव हि केयमत्र**
**यत्रोत्पलानि शशिना सह संप्लवन्ते ।**
**उन्मज्जति द्विरदकुम्भतटी च यत्र**
**यत्रापरे कदलकाण्डमृणालदण्डाः ।।१८२।।**

यथा– गुहायां पौरुषादिशब्दानां प्रतिशब्दा जायन्ते, ते च ध्वनिं जनयन्त उपलभ्यन्ते, एवं लावण्यसिन्धुरित्येतस्मिन् पद्यार्थे उत्पलादिशब्दानां यथा स्वोपमेयलोचनाद्यर्थप्रतिशब्दा जायन्ते, ते चार्थान्तरध्वनिं जनयन्त उपलभ्यन्ते, तथेह च यथाश्रूयमाणानामुत्पलादीनामर्थोऽभिधीयमानः तस्य लोचनाद्यर्थैः सह सादृश्यं प्रत्याययन् वर्णनीयायाश्चारुत्वोत्कर्षप्रतीतिं ध्वनति। सा ततः पृथगिवोपलभ्यमाना

प्रतिशब्दध्वनिः। तथा—(वायु. ८३.११)

**एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।**
**यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥१८३॥**

अत्र बहवः पुत्रा एष्टव्या इति वाक्यार्थोऽभिधीयमानः पुत्रैः पितृप्रीतये प्रयागगमनादयः कर्तव्या इति प्रत्याययन् पितृणां कामपूरणं परमपुरुषार्थ इति ध्वनति। स च पितृव्यपदेशपरतया प्रवृत्तः पुत्रोद्देशरूपेण तत्प्रवृत्तिषु प्रतिशब्दायमानः पृथगिवोपलभ्यत इति **प्रतिशब्दध्वनिः**। एवम्— (गासा. ८८६ वे.)

**कस्स व ण होइ रोसो दट्ठूए पिआए सव्वणं अहरं ।**
**सभमरकमलपउमग्घाइरि वारिअवामे सहसु एण्हिं ॥१८४॥**

(कस्य वा न भवति रोषः दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरकमलपद्मघ्रायिणि वारितवामे! सहस्वेदानीम्॥)

अत्र सख्युपालम्भार्थोऽभिधीयमानः पत्युरीर्ष्योपशान्तये भ्रमरेणास्या अधरः खण्डितो नोपपतिनेति प्रत्याययन् स्खलितगोपनेषु सखीवैदग्ध्यं ध्वनति। स चान्योपदेशपरत्वेन प्रवृत्तोऽन्यस्य चेतसि प्रतिफलित इति प्रतिशब्दध्वनिः। एवं **'भम धम्मिअ वीसद्धो'** इत्यादिवाक्ये विधौ निषेधः प्रतीयमानः तस्या नदीकुञ्जके केनचित् सह सङ्केतार्थं ध्वनति। स वाक्यार्थात् पृथगिवोपलभ्यमानः **प्रतिशब्दध्वनिः**। **'आसाइअं अण्णाएण जत्तिअम्'** इत्यादिवाक्ये वृषनिवारणपरो निषेध उपपतिनिवारणं प्रत्याययन् प्रयोक्तुर्वैदग्ध्यं ध्वनति। स चान्याभिधानेनान्यमभिदधत् ततः पृथगिवोपलभ्यमानः प्रतिशब्दध्वनिः। एवं 'गोलाणइए कच्छे चक्खन्तो राइआइ पत्ताइ' इत्यपि प्रतिशब्दध्वनिरिति।

**(२. शब्दध्वनिः)**

एवं **शब्दध्वनिरपि** द्विधैव। तत्र—

**अनुनादरूपो** यथा— (सूर्यश. २)

**भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां**
**लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।**
**कालाकारान्धकाराननपतितजगत्साध्वसध्वंसकल्याः**
**कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥१८५॥**

अत्र भास्करकराः कल्याणं वः क्रियासुरिति वाक्यार्थः करशब्दशक्ति-स्वाभाव्यात् किसलयरुचय इत्यादिसमस्ततुल्यविशेषणयोगाच्च हस्तेष्वनुनादं जनयन् भगवतस्तेजोरूपतां पुरुषरूपतां च ध्वनति। तदुभयमपि तदनुस्यूतमेवेह निरूप्यत इत्यनुनादध्वनिः। एवम्— (सूर्यश. ३)

**गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः**
**प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव ।**
**निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मा-**
**नूष्माणं सन्तताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ।।१८६।।**

अत्र पादशब्दस्वाभाव्यात् सर्वमपि योजनीयम्। इयांस्तु विशेषः—'पूर्वत्र साधर्म्यद्वारेण इह तु वैधर्म्यद्वारेणे'—ति।

अत्र च **प्रतिशब्दध्वनिः** यथा— (सूर्यश. ९)

**दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः**
**पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।**
**दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो**
**गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ।।१८७।।**

अत्र दीप्तांशोर्गावो रश्मयः स्तूयमानाः गोशब्दशक्तिस्वाभाव्यात् तुल्यविशेषण-योगाच्च धेनुषु प्रतिशब्दं जनयन्त्यस्तास्वपि विशिष्टं माहात्म्यविशेषं प्रतिध्वनन्ति।

एवम्— **मीलच्चक्षुर्विजिह्नं श्रुतिजडरसनं निघ्नितघ्राणवृत्ति**
**स्वव्यापाराक्षमत्वक्परिमुषितमनः श्वासमात्रावशेषम् ।**
**विस्रस्ताङ्गं पतित्वा स्वयमपहरतादश्रियं वोऽर्कजन्मा**
**कालव्यालावलीढं जगदगद इवोत्थापयन् प्राक्प्रतापः ।।** (सूर्यश. ३१)

अत्रार्कजन्मा प्राक्प्रतापः कालव्यालावलीढं जगदुत्थापयन् अश्रियं वोऽपहरतादिति वाक्यार्थः। अर्कशब्दशक्तिस्वाभाव्यात् तुल्यकर्मक्रियापदादियोगाच्च अर्कवृक्षजन्मा अगदः कालव्यालदष्टमप्युत्थापयतीति प्रत्याययन्नर्को विषघ्नानां श्रेष्ठ इति प्रतिशब्दरूपं ध्वनिमुत्थापयतीति। एवमन्येऽपि महाकविप्रयोगेषु ध्वनिविशेषा गवेषणीया इति। यदुक्तं **'तात्पर्यमेव वचसि ध्वनिरेव काव्ये'**[१] इत्यादि।

कः पुनः काव्यवचसोर्ध्वनितात्पर्ययोः विशेषः? ननूक्तं पुरस्तात्[२]—

---

१. ग्रन्थारम्भे ५ श्लोके।  २. अत्रैव ६ प्रकाशान्ते।

**यदवक्रं वचश्शास्त्रे लोके च वच एव तत् ।**
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः ॥१८९॥**
**यदभिप्रायसर्वस्वं वक्तुर्वाक्यात् प्रतीयते ।**
**तात्पर्यमर्थधर्मस्तच्छब्दधर्मः पुनर्ध्वनिः ॥१९०॥**
**सौभाग्यमिव तात्पर्यमान्तरो गुण इष्यते ।**
**वाग्देवताया लावण्यमिव बाह्यस्तयोर्ध्वनिः ॥१९१॥**
**अदूरविप्रकर्षात्तु द्वयेन द्वयमुच्यते ।**
**यथा सुरभिवैशाखौ मधुमाधवसंज्ञया ॥१९२॥** इति।[1]

सत्यमुक्तम्। किन्तु नाद्यापि निदर्शनतः प्रतिपाद्यते।

तर्हि श्रूयतामिदं प्रतिपादयामः—

यस्तावदयमनन्तरो ग्रन्थः स सर्वः काव्ये ध्वनिरित्यवधार्यताम्। वचसि तात्पर्यं द्विधा शास्त्रे लोके च। तत्र शास्त्रे यथा—'आत्मस्थितं गुणविशेषमहङ्कृतस्य' इत्यादि। अत्र 'आत्मस्थितं गुणविशेषमहङ्कृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः' इत्याप्तोपदेशरूप **आगमः**; 'तस्यात्मशक्तिरसनीयतया रसत्वम्' इति संज्ञार्थानुगामि प्रत्यात्मवेदनीयं **प्रत्यक्षम्**। 'युक्तस्य येन रसिकोऽयमिति प्रवादः' इत्यर्थापत्तिरूपम् **अनुमानम्**; तथा हि योऽयं लोके रसोऽस्यास्तीति रसिकोऽयं रसिकोऽयमिति विना[1] मधुरादीन् केषुचिदेव पुरुषविशेषेषु निरपवादः प्रवादः स नान्तरेण प्रत्यात्मवेदनीयं रसाह्वयवस्तुसम्बन्धमुपपद्यते। सोऽयं विवक्षितार्थस्य प्रमाणत्रयेण प्रतिपादनं वाक्यार्थोऽभिधीयमानः।

प्रतिपाद्यश्च त्रिप्रकारः पुरुषो भवति **अप्रतिपन्नो, विप्रतिपन्नः संशयित** इति। तत्र यथातुरानातुरयोर्भोजनमनातुरः प्रतिपद्यत इति तथैव प्रकल्प्यते, तथेहाप्रतिपन्ना-नुरोधादितरयोरप्यागम एव प्रथममुपन्यस्यते। अत्र विप्रतिपन्नः संशयितो वागमं न मन्यते। अतस्तदर्थं सर्वप्रमाणेभ्यो वलीयः प्रत्यक्षमुपन्यसनीयं भवति। तदपि वैयात्याद् विप्रतिपन्नो न मन्यते। ततोऽस्य शासनाय ब्रह्मास्त्ररूपा सार्वलौकिकी युक्तिरुपन्यस्यत इति। स एव प्रमाणत्रयोपन्यासहेतुर्वक्तुरभिप्रायः प्रतीयमानः प्रमाणत्रयोपन्यासादिना च साङ्ख्यदर्शनाश्रयेण शृङ्गारस्सन्नेवाविर्भवति, न त्वसन्नुत्पद्यते; स च त्रिविधप्रमाणाश्रयः

---

१. माधुरा० इति तु मूलं स्यात्। माधुरा माथुराः — रे.

श्रेयानिति प्रतिपादनतात्पर्यम्। साङ्ख्या ह्येवमाहुः, 'सदेवोत्पद्यते, प्रकृतिरेव कर्त्री, पुरुषः पुनरुदास्ते, उदासीनमपि चैनं भोगसम्पादनाय प्रकृतिरुपसर्पति' इति।

ननु च साङ्ख्यानां 'दृष्टमनुमानमाप्तवचनं च' इति प्रमाणोपन्यासक्रमः। इह त्वागमस्य प्रथममुपन्यासे किं तात्पर्यम्?

ननूक्तमप्रतिपन्नानुरोधादिति।

अन्यदप्युच्यते; 'न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते यथा वाग्मिनां वचोभिरावेद्यमाना' इत्यागमस्य प्रथममुपन्यासेन सूचयति।

न च सर्वथा साङ्ख्यदर्शनाश्रयिणो वयमिति प्रमाणव्युत्क्रमेण प्रतिपादयति, **साहित्यस्य सर्वपार्षदत्वात्**।

अथात्मनि प्रतिबिम्बद्वारेणावस्थितस्याहङ्कारगुणविशेषस्य धर्मार्थफलभूत-तृतीयपुरुषार्थजीवितस्य [१] शृङ्गारस्याभिमानापरनाम्नो यान्याविर्भावकारणानि यानि च तत्कार्याणि तान्यनन्तरश्लोकेन निर्दिशति– 'सत्त्वात्मनाममलजन्म/ [२]धर्मविशेषजन्मा' इत्यादि। तत्रायमात्मनामनुपहतेभ्यः सुकृतविशेषेभ्य उत्पद्यते। उत्पन्नस्य [३] सर्वस्यात्मा आत्मगुणसम्पदो [४] वक्ष्यमाणलक्षणाया **उदय**हेतुर्भवति। अनेकजन्मानुभवजनितात्तु संस्कारादुत्कृष्यते। उत्कृष्टश्चात्मगुणसम्पद एव **अतिशय**हेतुर्भवति। स चायमेक एवैवंविधोऽभिमानात्मा प्रकृतिविकार आत्मविशेषाणां तमोनिर्भेदस्थानेषु प्रतिबिम्बरूपेण सुप्त इव प्रतिबुध्यत इति **वाक्यार्थोऽभिधीयमानः**। **एकहेतु**रित्यनेन च हेत्वन्तराभावमात्मगुणसम्पदः प्रदर्शयन् अयमेव चतुर्वर्गकारणमिति ज्ञापयति। **'जागर्ति'** इति; जागर्तिश्च सुप्तप्रबोधदृष्टान्तेन तस्यानाविर्भावावस्थायामपि स्तिमितरूपेणावस्थानादविद्यमानतां निराकरोति। **'कोऽपि'** इत्यनेनाद्भुतप्रदर्शनद्वारेण तदुत्कर्षसम्पत् जन्मसहस्रेणाप्यनाख्येया इति ख्यापयति। **'मानमय'** इत्यनेन चास्याभिमानात्मनोऽभिमान एव मूलमित्यन्यावष्टम्भं निराचष्ट इति। सोऽयमेवंप्रकारो वाक्यार्थः **प्रतीयमानः**, एवंविधं वस्तु वयं च वक्तुमुद्यताः, अतश्चतुर्वर्गार्थिनोऽत्र प्रवर्तन्तामिति श्रोतृजनप्रोत्साहनादस्मिन्वचसि **तात्पर्यमिति**।

---

१. तृतीयः पुरुषार्थः कामः। तथा च कालिदासः 'धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक्' रघु. १०.८४।

२. '०ममलधर्मवि०' इति तु प्राक्तनः पाठः। तथा हि मङ्गले पृ० ३। जन्मेत्येव पाठे तु रघुवंशाद्यभिमता जन्मशुद्धिः स्मरणीया 'सोऽहमाजन्मे'–ति १.५।

३. उत्पन्नश्चेति तु स्यात्।

४. एकादशे प्रकाशे।

एवं लौकिकेऽपि वचस्यभिधीयमानं प्रतीयमानं तात्पर्यं च पर्यालोचनीयमिति। एतेन काव्यवचसोर्ध्वनितात्पर्ययोश्च क्वचित् सम्प्लवोऽपि व्याख्यातः। तद्यथा—**'अच्छिन्नमेखलमलब्धदृढोपगूढम्'** इत्यादि। अत्र—

१. काव्यार्थस्तावत् कान्ताविमिश्रवपुषः पुरारेर्वपुरच्छिन्नमेखलमित्यादिविशेषणयोगाद् विप्रलम्भसम्भोगयोः सख्यसम्पादकमिवेत्युत्प्रेक्ष्यमाणं रक्षत्विति वाक्यार्थो **अभिधीयमानः।**

**'कान्ताविमिश्रवपुषः'**—वपुरित्यनेन मूर्तिरिवास्य सांसारिकेषु कर्मस्वधिक्रियते, न पुनरात्मेति प्रत्याययति। मूर्तिरिति च वक्तव्ये वपुरिति पदोपादानान्न केवलं विश्वस्य रक्षणे, सृष्टिसंहारयोरप्ययमेव व्याप्रियत इति प्रतिपादयति। वपिर्हि सृष्टौ संहारे च दृश्यते, बीजं वपति, केशान् वपतीति।

**'कृतविप्रलम्भसम्भोगसख्यमिव'** इत्यनेन सहानवस्थानादिभिर्दुर्घटानप्ययं पदार्थान्मिथो घटयतीति ज्ञापयतीति।

**'पुरारेः'** इत्यनेन च कान्ताविमिश्रवपुरप्येवंविधेष्वरिवधादिव्यापारेषु समर्थ एवेति सत्यापयति। सोऽयमेवंप्रकारो वाक्यार्थः **प्रतीयमानः**। तदेवंप्रकारमपारमनन्य—साधारणं च यस्यैश्वर्यमसावेव नमस्कार्यो नान्य इति **तात्पर्यार्थः**।

एवमुत्तरश्लोकेऽपि यथाश्रुतवाक्यार्थोऽभिधीयमानः **'यत्पादपङ्कजरजः—परिमार्जितेषु'** इति प्रयोजकव्यापारो(प)दर्शनाद् ध्यानेनानीय गणपतिर्मनस्यारोपणीय इत्युपदिशति।

**'चेतस्सु दर्पणतलामलतां गतेषु'** इत्यनेन चादर्शतलानीव भस्मना स्मृत्युपहितेनापि तत्पादरजसा मनांसि निर्मलीभवन्ती**त्यभिधत्ते**।

**'शब्दार्थसम्पद उदारतराः स्फुरन्ति'** इत्यनेन तु दर्पणतलेष्विव निर्मलेष्वमीषु विश्वे पदार्थाः स्फुरन्तीत्यावेदयति।

**'विघ्नच्छिदेऽस्तु भगवान् स गणाधिनाथ'** इत्यनेन पुनरुपन्यस्तान्या—येनाभिगामिकं गुणयोगमस्योपदर्शयन् अविघ्नप्रार्थनया चिकीर्षितं महान्तमारम्भ—विशेषमात्मनः प्रतिपादयति। सोऽयमेवंविधो वाक्यार्थः **प्रतीयमानः**। यस्य च पादपङ्कजस्मृतेरप्येतत्फलं तस्य साक्षादाराधनादेः किमुच्यत इति **तात्पर्यार्थः**॥

२. अथेदमेव श्लोकद्वयं शास्त्रादौ वचोरूपेण तात्पर्यपर्यन्तं व्याक्रियते। तत्राभीष्टदेवता स्तोतव्येति शिष्टाचारः। ततो हि विशिष्टदृष्टसम्पत्तेः समीहितफलावाप्तिर्भवति।

अभीष्टदेवता च द्विविधा— **'अधिकृताऽनधिकृता'** च। तत्राधिकृतानधिकृतयोरधिकृतायां प्रतिपत्तिर्गरीयसीत्यधिकृतैव स्तूयते। शास्त्रे चेह शृङ्गारोऽभिधेयः, तत्र च यथा भगवान् महेश्वरः सर्वज्ञतया सौभाग्येन दयितजानितया स्वातन्त्र्येण परमपरिपूर्णतया समर्थत्वेन चाधिक्रियते नैवमन्यस्तद्विधेयवैभवः शक्रादिः। तत्र च प्रागुक्त एव प्रतीयमानः; तात्पर्यरूपस्तु निरूप्यते। तत्र—

इह शास्त्रे शृङ्गारो वक्तव्यः। स द्विधा— **सम्भोगो विप्रलम्भश्च।** तत्र सम्भोगो विप्रलम्भमन्तरेण न प्रकर्षमधिरोहतीति विप्रलम्भ एव प्रथममभिधेयो भवति।

स चतुर्धा— **'प्रथमानुरागः, मानः, प्रवासः, करुण'** इति। विचित्रश्चैष सम्भोगादिति विस्तरेणोच्यते।

चतस्रश्चास्यावस्था भवन्ति— **'सत्ता, जन्म, अनुबन्धः, प्रकर्ष'** इति।

तमिमं चतुर्भेदं चतुरवस्थं विचित्रं च **पूर्वार्धेन** वक्ष्यमाणमुपलक्षयति।

तत्राच्छिन्नमेखलमित्यनेन **प्रथमनुरागं,** मेखलाच्छेदावधिर्हि प्रथमानुरागः;

अलब्धदृढोपगूढमित्यनेन **मानं,** न हि माने दृढोपगूढं लभ्यते;

अप्राप्तचुम्बनमित्यनेन **प्रवासं,** न हि प्रवासे चुम्बनादयः प्राप्यन्ते ;

अवीक्षितवक्त्रकान्तीत्यनेन **करुणं**, न हि करुणे वक्त्रकान्तिर्वीक्ष्यते।

अथैतदवस्थास्वपीमान्येव पदानि।

**अच्छिन्नमेखलमि**ति विप्रलम्भसत्तायाम्। विप्रलम्भो हि मेखलायामच्छिन्नायाम—वश्यमेव सम्भोगार्थिनः सम्भवति, सास्य **प्रथमावस्था**।

**अलब्धदृढोपगूढमि**ति विप्रलम्भजन्मनि, विप्रलम्भवान् हि मेखला अच्छेदात् सम्भोगमलभमानः प्रेयसीं प्रार्थयते, 'अयि प्रियतमे, यदि मे मेखलाच्छेदं न मन्यसे तदालिङ्गनमपि गाढं प्रयच्छ'; तदप्रतिपद्यमानायां च तस्यामस्य विप्रलम्भो जायते, सास्य **द्वितीयावस्था**। **अप्राप्तचुम्बनमि**ति विप्रलम्भानुबन्धे; विप्रलब्धो हि सर्वाङ्गीणं प्रियासंश्लेषमलभमानः वक्त्रमात्रसंयोगमप्यभिलषति; तदलाभे चैनं विप्रलम्भोऽनुबध्नाति, सास्य **तृतीयावस्था**। **अवीक्षितवक्त्रकान्ती**ति विप्रलम्भप्रकर्षे;अपेक्षणीयालिङ्गनाद्यनवाप्तौ हि कामिनः प्रियामुखावलोकनमपि बहु मन्यन्ते। तदप्यनाप्नुवतामेषां विप्रलम्भः प्रकृष्यते; सास्य **तुरीयावस्था**।

सोऽयं चतुर्विधश्चतुरवस्थश्च विप्रलम्भश्चातुर्विध्येन चातुरवस्थ्येनपृथक्पृथग—भिधीयमानो विचित्र इत्युच्यते।

सम्भोगोऽपि चतुर्धैव— **प्रथमानुरागानन्तरः, मानानन्तरः, प्रवासानन्तरः, करुणानन्तर** इति। तस्यापि ता एव चतस्रोऽवस्थाः —**'सत्ता, जन्म, अनुबन्धः, प्रकर्ष'** इति। सोऽयमपि चतुर्भेदश्चतुरवस्थश्च कान्ताविमिश्रवपुष इत्यनेनापि चित्रत्वात्संक्षेपेणैवोपलक्ष्यते। तत्राप्युपसर्गस्य क्रियाविशेषणार्थवाचकत्वाद् येन येन विशेषेण प्रथमानुरागानन्तरे मानानन्तरे (प्रवासानन्तरे) करुणानन्तरे च कान्तया सह मिश्रीभावः साध्वसोत्कम्पः, सेर्ष्याकषायं, सौत्सुक्यरभसं, सहर्षविस्मयं च जायते, स सर्व उद्दिष्टो भवति। सोऽयं विमिश्रपदेन सम्भोगश्चतुर्विधोऽप्याक्षिप्तः। कान्तापदेन पुनरस्य चतस्रोऽवस्था अपि। तत्र यदा कान्ताशब्दः स्त्रीपर्यायस्तदा—

**नामापि स्त्रीति संह्लादि विकरोत्येव मानसम्।।१९३।।** (कामन्दकः २.५१)

इति सम्भोगस्याद्यावस्था सत्तासंज्ञिका प्रतीयते। यदा तु कान्ताशब्दो मनोज्ञापर्यायस्तदा

**किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः।।१९४।।** (कामन्दकः २.५१)

इति न्यायात् सम्भोगस्य द्वितीयावस्था जन्मसंज्ञिका प्रतीयते। यदा पुनः कान्ताशब्दो वृषस्यन्तीपर्यायस्तदा

**पुनरपि सुलभं तपोऽनुरागी युवतिजनः खलु नाप्यतेऽनुरूपः।**(किराता.१०.५०)

इति न्यायात् सम्भोगस्य तृतीयावस्था अनुबन्धसंज्ञिका प्रतीयते। यदा तु कान्ताशब्दो वल्लभापर्यायस्तदा

**यदेव रोचते मह्यं तदेव कुरुते प्रिया।**
**इति वेत्ति न जानाति तत् प्रियं यत् करोति सा ।।१९६।।**

इति न्यायात् सम्भोगस्य तुरीयावस्था प्रकर्षसंज्ञिका प्रतीयते। सोऽयं चतुर्भेदश्चतुरवस्थश्च विप्रलम्भः, सम्भोगश्चाग्रतो विशेषेण वर्णयितुमुपक्रान्तो दिङ्मात्रेणात्र सूचित इति **तात्पर्यम्**।।

३. अथाऽधिकारि नायिकानायकविशेषाणां का वार्ता?

**'कान्ताविमिश्रवपुष'** इत्यस्य तन्त्रेण व्याख्यानान्तरे तेऽपि सूचिता एव। तत्र हि भगवतो वपुर्विप्रलम्भसम्भोगयोः कृतसाहाय्यकमिव कान्ताविमिश्रवपुषः पुरुषान् स्त्रियश्च पात्विति व्याख्या भवति। विमिश्रशब्देन च संयोगिन इव वियोगिनोऽप्युच्यन्ते, व्युपसर्गस्य क्रियाविशेष इव क्रियावैपरीत्येऽप्युपलम्भात्। तद्यथा विभक्तो विक्रीत

इति। एवं च कान्ताभिर्विमिश्रवपुषः पुरुषाः कान्तैरविमिश्रवपुषो योषितः संयुक्ता वियुक्ताश्च शृङ्गाराधिकारिण उभयेऽपि नायकविशेषाः **प्रतीयन्ते**।

वपुश्शब्देन पुनरिह विशेषणपक्षे यौवनपल्लवितलावण्यलक्ष्मीकं समग्रात्मगुणसम्पदाश्रयः शरीरमुच्यते, न त्वादिकर्तृकसृष्टिसंहारकादि।

वपिर्हि सृष्टिसंहारयोरिव कान्तावपि दृश्यते। तद्यथा – 'गोभिर्वपावान्' (मभा.२.१.३०), वपुष्टमा नामाप्सरोविशेष (महाभारते १) इति। तत्राच्छिन्नमेखलमित्यादीनि कान्ताविमिश्रवपुष इति । समासपदान्तर्गतयोर्वियुक्तिसंयुक्तिक्रिययोर्गमकत्वाद् विशेषणानि भवन्ति; यथा कर्तुंमनाः कटं, गन्तुकामो ग्राममिति।

४. अथ सम्भोगपक्षे अच्छिन्नमेखलमित्यादीनि कथं सम्बध्यन्ते?

उच्यते। एवं नाम रागान्धतया कान्ताभिः सह ते संयुक्ताः येन मेखलाच्छेदमालिङ्गनं चुम्बनमालोकनं च परमानन्दमग्नाः कर्तुं न पारयन्ति, **'तद्यथा प्रियया स्त्रिया परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्'** (बृप. ४.३.२१) इति; यथा च–

**धन्यासि या कथयसि प्रियसङ्गमेऽपि**
**विस्रब्धचाटुकशतानि रतान्तरेषु ।**
**नीवीं प्रति प्रणिहितस्तु करः (ते तु करे) प्रियेण**
**सख्यः शपामि यदि किञ्चिदपि स्मरामि** ॥१९७॥

एवमयं प्रथमश्लोकः 'पदान्येव संहत्यार्थमभिदधति वाक्यम्' इति पक्षे व्याख्यायते।

५. अथाखण्डवाक्यार्थपक्षे व्याख्यायते। तथा हि –

एवमिह पदानामन्वयो भवति–'पातु।

किम्? विश्वम्।

कुतः? अपायेभ्यः।

किं तत्? वपुः।

कस्य? पुरारेः।

कीदृशस्य? कान्ताविमिश्रवपुषः।

किंविशिष्टम्? अच्छिन्नमेखलम्, अलब्धदृढोपगूढम्, अप्राप्तचुम्बनम्, अवीक्षितवक्त्रकान्ति।

कथम्? उत्प्रेक्ष्यमाणम्? कृतविप्रलम्भसम्भोगसख्यमिवेति।

अत्र चायमच्छिन्नशब्दः, बहुव्रीहिश्च समासः अध्याह्रियमाणपदद्वया द्वादशपदा नान्दी (नाशा. ५.१०४) सदाऽविश्लेषः, विशेषोक्तिगर्भ उत्प्रेक्षावाँश्चाशीरलङ्कारो मङ्गलार्थः। तेऽमी चत्वारोऽपि मङ्गलार्थाः शस्त्रादौ प्रयुक्ताः कर्तुः श्रोतुरध्येतुर–ध्यापयितुश्च मङ्गलमावहन्ति। यदाह –'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राण्यव्याहतप्रसराणि आयुष्मच्छ्रोतृकाणि च भवन्ति (मभा. १.१.१,१.३.१)।

६. ननु च नेह विश्वमपायेभ्य इति कर्मापादानपदयोः श्रवणमस्ति, तत्कथमिवेयं द्वादशपदा नान्दीति?

उच्यते, पात्विति श्रुतिपदमेतत्; श्रुतेश्चानेकपदनिबन्धन एकशब्दविषयो विध्यादिरर्थः; स चान्यथानुपपद्यमानः स्वसिद्धये कर्मकरणकर्त्रधिकरणादिकं यदाक्षिपति स सर्वः श्रुतिपदार्थो भवति। तत्रोपादीयमानमपि कर्तृकर्मादिकं नियमाय,अनुपादाय वा विज्ञायते। तद्यथा – सामान्याक्षेपे विशेषपदमुपादीयमानं नियमाय भवति,'पातु वः परमं ज्योतिः' इति। विशेषाक्षेपे तत्र तदनुपादाय विज्ञायते देवो जलं वर्षतीति। (इह तु) यथा 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेत्' इति वचनात् 'स्वाध्यायोऽध्येतव्य' इत्यत्र द्विजेनाचार्यादित्यनुपात्तमप्यवश्यमेव सन्निधीयते, तथेहाप्यपायनिर्हरणरूप–त्वात् पात्वर्थस्य स्थितेरीश्वरकर्तृकस्य सृष्टिसंहारयोरिव विश्वविषयत्वादपायेभ्यो विश्वमिति पदद्वयमनुपादीयमानमपि नियमेन सन्निधीयते।

७. ननु चाशरीरिणो महेश्वरस्य विश्वोत्पत्तिस्थितिप्रलयकारणत्वाभ्युपगमेऽपि कथमिवोच्येत वपुः पात्विति।

अशरीरिणोऽपि वैश्वरूप्येण तदुपपत्तेः। स ह्येवं तत्त्वविद्भिः स्तूयते–

**मूलजालमधिभोक्तृचेतना शक्तयस्त्वदधिभो(यो)क्तृसंहतिः ।**
**ज्ञानमेतदधिनायकव्रजंस्त्वत्स्मृतौ युगपदेव भासते ॥१९८॥**

अत एव **कान्ताविमिश्रवपुष** इति पुरारेर्विशेषणं तन्त्रेणान्यथा व्याचक्षते। तद्यथा–**कं पानीयम् अन्तेऽस्या इति कान्ता पृथ्वी**, कं सुखमन्तेष्वासामिति कान्ता आपः। को वायुरन्तेऽस्येति कान्तो वह्निः। कं तोयमन्ततीति कान्तो वायुः। कं ब्रह्म अन्तोऽस्येति कान्तमाकाशम्, कान्तिर्दीप्तिस्तदतिशयवान् कान्तः सूर्यः, कान्तिः कामनीयकं तदतिशयवान् कान्तश्चन्द्रमाः, कान्तिर्वाल्लभ्यं तदतिशयवान् कान्त आत्मेति कान्तशब्देनाष्टापि भगवतो मूर्तय उच्यन्ते। ता अवन्तीत्येवंशीला भवोग्रभीमादयो मूर्तिपतयः कान्ताविनः। मिश्रशब्दः पूजावचनः। तेनैषां 'प्रशंसावचनैश्च' (२.१.६६)

इत्यार्यमिश्रादिवत् समासः। ततः कान्ताविमिश्रं वपुर्यस्येति बहुव्रीहौ वैश्वरूप्यसिद्धेर्विवक्षितार्थसिद्धिः।

अथात्राच्छिन्नमेखलमित्यादीनां कथमन्वयः?

तान्यपि वपुषो विशेषणानि भवन्ति। तत्राच्छिन्नमेखलमित्यनेन परमुच्यते। मेखला हि जघनपरिक्षेपसूत्रम्, तदपरिच्छिन्नं यस्येति। अलब्धदृढोपगूढमित्यनेनागाधत्व– दुरवगाहत्वमाख्यायते; दृंहतीति दृढ आधारः, तस्योपगूढमुपश्लेषः प्रतिष्ठास्थानं, तदनुपलब्धं यस्येति। अप्राप्तचुम्बनमित्यनेनोच्चैष्ट्वस्य निरवधित्वं कथ्यते, चुम्बनं हि वक्त्रसंयोगः, तदप्राप्तं यस्येति।अवीक्षितवक्त्रकान्तीत्यनेनाप्रतिलघोरस्य परिसूक्ष्मत्वमभिधत्ते। 'वक्त्रा' कुतस्त्या कुतोमुखी वेत्यविज्ञायमाना कान्तिर्यस्येति, कृतविप्रलम्भसम्भोग– सख्यमिवेत्यनेन त्वविज्ञातपरमार्थत्वेन विप्रलभमानमिव पृथिव्यादिप्रसिद्धरूपतया सम्भुज्यमानं सम्भुञ्जानमिव च तदेवोच्यते। यदित्थमेनमाहुः– (कुसं.२.१५)

**त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतम् ।**
**वेद्यं वेदयिता चासि ध्याता ध्येयं च तत्परम् ॥१९९॥**

अयमप्याह[1]–(कुसं. ६.२६)

**विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः ।**
**ननु मूर्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥२००॥**

तदमुना विशेषणपञ्चकेनैतदुक्तं भवति–(सेब. १.१)

**णमह अवड्ढिअतुंगं अवसारिअवित्थअं अणोणअ–गहिरं ।**
**अप्पलहुअ–परिसण्हं अणाअपरमत्थपाअडं महुमहणं ॥२०१॥**

(नमत अवर्धिततुङ्गमप्रसारित–विस्तृतमनवनतगंभीरम् ।
अप्रलघुक–परिश्लिक्ष्णमज्ञातपरमार्थप्रकटं मधुमथनम् ॥)

८. ननु च पात्विति नायं विधौ लोट्, अपि त्वाशिषि। सा च विशेषस्याश्रुतौ स्वरूपादेवात्मविषयतयातिष्ठत इति कथं विश्वविषया भवति?

उच्यते–

**अयं निजः परो वेति विकल्पा लघुचेतसाम् ।**
**उदारचरितानां तु वसुधैव कुटुम्बकम् ॥२०२॥**

---

१. शिवोऽप्याहेत्यर्थः। मे मम शिवस्य।

९. यदि वा

नास्य वाक्यस्य यः कश्चिद् वक्ता; किं तर्हि? पूर्वज्ञैः क्रमागतविश्वपालने नियुक्तो महामाहेश्वरः कोऽपि पुंविशेषः। स च 'ग्रन्थविरचनाव्यग्रे मयि मा भूद्वर्णाश्रमाचारस्थितेः व्याकोप' इति महेश्वरमेव तत्समर्थं प्रार्थयते। अतोऽत्र विश्वस्यैव कर्मत्वमवगम्यते। रक्षितो राजा राज्यं रक्षतीति च न्यायादात्मन्यपि रक्षणीयताशीर्भवति। अत्र चाशीरेषणा; तिस्त्रश्चैषणा भवन्ति, प्राणैषणा वित्तैषणा परलोकैषणा च। राज्ञो या ह्येव प्राणैषणा सा वित्तैषणा सैव परलोकैषणेति भवति। तस्य (स)प्रकृतिकं राज्यं शरीरं, तदेव च वित्तं, तस्य ह्यसौ स्वाम्यमनुभवति। यथोक्तदण्डकरादानादिसम्भृतं वसु यशश्च वित्तं, स एव च धर्मः, तेन ह्यसाविमममुं च लोकं जयति ; तदेतत्सर्वमपायेभ्यो विश्वरक्षयो x x x तं भवति। x x x देवता स्तोतव्येति शिष्टाचारः। न चाशीस्स्तुतिः; एवमेतत्; किन्तु गुणोत्कर्षप्रकाशनेन सर्वत उपर्यारोपणं स्तुतिः; सा च यथा आशास्यमानाभिमत–फलैकहेतुताप्रकाशनेन प्रत्याय्यते, नैवं नमस्तस्मै, स जयतीत्येवमादिभिरित्यभिप्रायः।।

१०. अथाखण्डवाक्यार्थपक्षावलम्बिनो द्वितीयश्लोकस्य व्याख्या–**'स भगवान् गणाधिनाथो विघ्नच्छिदेऽस्तु यत्पादपङ्कजरजःपरिमार्जितेषु दर्पणतलामलतां गतेषु शब्दार्थसम्पद उदारतराः स्फुरन्ति'** इति। इहापि पङ्कजदर्पणार्थसम्पद्–भगवदादयः शब्दाः, गौणी च वृत्तिः मङ्गलार्थाः; इयमपि द्वादशपदा नान्द्येव; इहापि रूपकोपमाश्लेषसमाधिगर्भः कारणमालाङ्गवानाशीरलङ्कार इति योजनीयः।

११. ननु च सम्बन्धिनोऽध्याहारात् त्रयोदशेह पदानि?

नैवम्, विभक्त्यादिपरिणामेन शब्दार्थसम्पत्परिस्फुरणस्यैवात्र सम्बन्धित्वात्। तथा ह्येवमियं कारणमाला समाप्यते भगवतः पादपङ्कजमार्जने, मार्जनस्य नैर्मल्ये, नैर्मल्यस्य शब्दसम्पदामर्थसम्पदां च परिस्फुरणे, तस्य च प्रबन्धविघ्नच्छेदे कारणं भवतीति। रूपकोपमाश्लेषपदानि चेह पादपङ्कजदर्पणतलामलरजांसि प्रतीयन्ते। तत्रोदारतराः शब्दार्थसम्पदः परिस्फुरन्तीति च समाधिरपि प्रकाशते। आदर्शतलेषु हि किलोदारदर्शनाः स्त्रियः स्वलङ्कृतमात्मानमवलोकयन्ति। स चान्यधर्माणामन्यत्रारोपणं समाधिरिति। एतच्च [१]वरवाचां सूचनापरमित्यवधार्यमाणमस्य वचसस्तात्पर्यं भवति; तदिदमुक्तं **'तात्पर्यमेव वचसि'** इति।

१. वरवाचां = व(त्कुरुदा)रवाचां–राघवः।

१२. कः पुनरिह रूपकोपमयोर्विशेषः?

उच्यते – यत्रात्यन्तसादृश्यादभेदोपचारेणेवादिशब्दविकलमुपमानपदमेवोपमेये प्रवर्तमानं गौणीं वृत्तिमनुभवत् सामानाधिकरण्येन विशेषणत्वमनुभवति तद् रूपकम्, यथा मुखचन्द्रः, पादपङ्कजमिति। यत्र तु मुख्यानुभव x x x यमात्मनोपमेयस्य साम्यमभिधत्ते सोपमा, यथा चन्द्र इव मुखमादर्शतलामलं चेति।।

१३. अथ यदेषदसमाप्ति–प्रतिकृत्योर्बहुच्कल्पबादयः कनादयो (५.३.६७, ६८,९५) वा अत्यन्तसादृश्यादुपमेयवृत्तिभ्य एवोपमानशब्देभ्यः स्वार्थिका विधीयन्ते, तदा किमुपमाने प्रत्यय आहो उपमेय इति।

किंचातः?

यद्युपमाने, गुडकल्पा द्राक्षा, कुशाग्रीया(५.३.१०५) बुद्धिरित्युपमेयलिङ्गं न प्राप्नोति; उपमेये, बहुगुडो द्राक्षा(५.३.६८) चञ्चा च लिङ्गं न प्राप्नोति। लिङ्गमशिष्यं लोकाश्रयत्वात् (मभा. २.१.३६)। स्वार्थिकाश्च क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते (मभा. ५.३.६८), यथा 'देव एव देवता' (५.४.२७) चत्वार एव वर्णाश्चातुर्वर्ण्यम् (५.१.१२४ वा.) इति।

किमेतद् वक्तव्यम्?

कथमनुक्तं गम्यते?

आचार्यप्रवृत्तिर्ज्ञापयति यदयं 'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३) इति णचं विधाय तदन्तात् स्वार्थिकविधाने 'णचः स्त्रियामञ्' (५.४.१४) इति पुनः स्त्रीग्रहणं करोति। अभेदोपचारणैव च प्रतिकृतिलिङ्गवचनं x x x या x x x 'लुप् मनुष्ये' इति लुकमतिक्रम्य प्र(ति)कृतिवचनेभ्यो लुपं शास्ति।

१४. कथं पुनः 'ईषदपरिसमाप्तौ' 'इवे प्रतिकृतौ' इति इवार्थे वा विधीयमानः प्रत्यय उपमान उपमेये वा शङ्क्येत?

ईषदपरिसमाप्ते क्रियात्वेन इवार्थस्य चासत्त्वभूतत्वेन लिङ्गवचनायोगात् प्रत्ययान्तरेषु च लिङ्गसङ्ख्यावशादीषदपरिसमाप्तौ चेवार्थे वर्तमानात् प्रातिपदिकात् स्वार्थे प्रत्ययो भवतीति विज्ञायते।

किं पुनरिह न्याय्यम्?

उपमाने प्रत्यय इति।।

१५. ननु च गुड इवेयं गुडो द्राक्षा, चञ्चेवायं चञ्चा पुरुष इति गुडादिशब्दा माधुर्यादिगुणयोगेन द्राक्षादिषु वर्तन्ते। ततश्च द्राक्षादयः प्रकृत्यर्था भवन्ति। प्रकृत्यर्थे चोपमेये स्वार्थिकाः कल्पबादय इति कथमुपमाने प्रत्यय इति?

मैवम्; न हिं द्राक्षायास्तत्रापरिसमाप्तिः, अपि तु गुडस्य। येन हि गुणेन माधुर्यादिना गुडशब्दो द्राक्षायां वर्तमानो गौणीं वृत्तिमनुभवति तस्यैवेषदसमाप्तौ प्रत्ययो विधीयते। अद्यैवं गुडस्येषदपरिसमाप्तौ वर्तमानस्य स्वार्थे प्रत्ययविधानात् बहुगुडो द्राक्षेति। सोऽयमित्यभिसम्बन्धाद् अव्यतिरेक इति चेद् व्यतिरेकमूलत्वाद— व्यतिरेकस्य प्रसङ्गः, यथा शुक्लः पटः, पटस्य शुक्ल इति।

नैवम्; उपपद्यमानव्यतिरेकाणामुभयं भवति। न चात्र तदुपपत्तिः; न हि यथा शुक्लगुणोऽस्तीति मतुब्लोपादपृथक्सिद्धशुक्लगुणवाचिना शुक्लशब्देन पटोऽभिधीयते, तथा गुड इत्यनेन। स हि द्रव्यशब्दो द्रव्यान्तरसामानाधिकरण्यान्यथानुपपत्त्या गौणीं वृत्तिमाश्रित्य स्वनिबन्धनं द्रव्यान्तरे व्यतिरेकमुपनिधत्ते। तत्र सामानाधिकरण्यभ्रंशात् गुणवृत्तेरपि भ्रंशो मा भूदिति न व्यतिरेकलक्षणा षष्ठी भवति। न च गुणवचनानामपि केषांञ्चिल्लोके व्यतिरेक उपलभ्यते। न हि भवति पटुः पटुकल्पोऽयं देवदत्त इति।

१६. कथं पुनर्गुणवृत्त्याप्युपमेये वृत्तेर्गुडशब्दात् स्वार्थे विधीयमानः प्रत्यय उपमानं प्रत्याययति,

द्रव्यवत् प्रवृत्तिनिमित्तस्यापि स्वार्थत्वात्। तथा हि चञ्चा तृणमयः पुरुषो यः क्षेत्ररक्षणाय क्रियते; तस्य च पुरुषे प्रवर्तमानस्य स्वाकारः प्रवृत्तिनिमित्तम्; अतः 'इवे प्रतिकृतौ' (५.३.९६) इतीवार्थे तत्रैव प्रत्ययो भवति।

१७. ननु च यदि प्रतिकृतौ वर्तमानात् प्रातिपदिकात् स्वार्थे प्रत्ययः, किम् इवार्थ इत्यनेन? अथेवार्थे कृतं प्रतिकृतावित्यनेन?

उच्यते; उपचरितशब्दानां शक्तिमहिम्नैव त्रयी गतिर्भवति। क्वचिदिवार्थ एव स्वार्थिकः, 'कुशाग्रीया बुद्धिः, शैलेयं दधीति। क्वचित् प्रतिकृतावेव, 'वासुदेवो भीमसेन' इति। क्वचिदिवार्थे प्रतिकृतौ च, यथा वरोरूः पीवरोरूरिति। अत्र यदि वरशब्देन पीवरशब्देन वा ऊर्वोरिव गुणोऽभिधीयेत तदा 'ऊरूत्तरपदादौपम्ये' (४.१.६९) इत्यूङ्न सिद्धयति। ततश्चौपम्याय कर्तव्योऽत्र य x x x वं स्यात्। यदि वरशब्दः पीवरशब्दो वा वरे पीवरे च रम्भास्तम्भस्तम्बेरमकरादौ वर्तित्वात् तत्सादृश्यात् तदुपमेययोरूर्वोर्वर्तेत, तच्चेवार्थे प्रतिकृतौ वर्तमानयोस्तयोः

प्रत्ययलुग्विधाने भवति। अन्यथा हि 'वरत्वं पीवरत्वमेव' च लभ्यते, न संस्थानविशेष इति।

न भवितव्यम्। प्रत्ययमन्तरेणापि स्वस्रादीनामिव तस्य ताच्छीलिकान्तत्वेन स्त्रीत्वाभिधानमेव 'ऋन्नेभ्यो ङीप्' (४.१.५) इत्यस्य 'न षट्स्वस्रादिभ्यः' (४.१.१०) इति प्रतिषेधः प्रत्याख्यायते। किं पुनरमी उपमानशब्दा लुप्तप्रत्ययत्वेन गुणीभूता एव कल्पबादीनामुत्पत्तिनिमित्तं भवन्ति?

बाढम्। 'अजादी गुणवचनादेव' (५.३.५८) इत्यतो हि गुणवचनादित्य-धिक्रियते। ततश्च बहुच्कल्पब्देश्यदेशीयर ईषदसमाप्तिम्, एवं प्रशंसायां रूपप् विधीयमानः पचतिरूपं पचतोरूपं पचन्तिरूपमिति क्रियालक्षणस्य गुणस्यैव प्रशंसां द्योतयन्ति। अन्यथा हि सर्वत्रैकवचनं न स्यात् (मभा. ५.३.३६)। न च द्रव्यस्य समाप्तिः असमाप्तिः कुत्सा प्रशंसा वा स्वतः सम्भवति, अपि तु गुणतः। अतश्च गौण्या मुख्यया वा मन्दमध्योत्कृष्टेषु गुणेषु वर्तमानात् प्रातिपदिकादीषदसमाप्तौ द्योत्यायां कल्पबादयो भवन्ति।

१८. ननु च निर्ज्ञातस्यार्थस्य समाप्तिरसमाप्तिर्वा भवति। गुणश्च अनिर्ज्ञातः, लोकतो गुणस्य निर्ज्ञानम्। तद्यथा पटुरयं ब्राह्मणः, यो लघुनोपायेनार्थं निर्वर्तयति, पटुकल्पोऽयं यो नातिलघुनेति। एवं 'पटुतरः शुक्लतमः कनीयान् पटिष्ठः उत्कृष्टतरः वैयाकरणपाश' इत्यादिषु तरबादयोऽपि गुणवचनेभ्यो विधीयमाना गुणगतमेव प्रकर्षं द्योतयन्ति।

१९. कथं पुनरतिशायनादौ विधीयमानास्तरबादयो गुणप्रकर्षे भविष्यन्ति, न पुनर्द्रव्यप्रकर्ष इति?

नैव द्रव्यस्य प्रकर्षः सम्भवति।

किं तर्हि?

गुणस्य च(हि) प्रकर्षोऽस्ति, तस्य प्रकर्षो भविष्यति?

कथं ज्ञायते गुणस्यैव प्रकर्ष इति?

एवं हि दृश्यते लोके – समान आयामे विस्तारे च पटस्यान्योऽर्घो भवति काशिकस्य, अन्यो माधुरस्य। गुणान्तरं खल्वपि; शिल्पिनः प्रकर्षायोत्पादयमानास्तमेव द्रव्यान्तरेण प्रक्षालयन्ति, अन्येन शुद्धं धौतं कुर्वन्त्यन्येन शेफालिकमन्येन माध्यमिकमिति। तर्हि शुक्लात् कृष्णो मा भूदिति समानग्रहणं कर्तव्यम्।

न कर्तव्यम्। स्पर्धा वै प्रकर्षः, सा च समानगुण एव भवति, न ह्याढ्याभिरूपौ स्पर्धेते।

वाचकेन खल्वप्युत्पत्तव्यम्। न च शुक्लात् कृष्णे उत्पद्यमानो वाचकः स्यात्। यत्र तत् स्यात्, तत्रोत्पद्यत एव, यथा शुक्लात् कृष्णो मासुरतर इति।

न तर्हीदानीमिदं भवति अध्वयुर्वै श्रेयान्, पापीयान् प्रतिप्रस्थाता अन्येभ्यः पापेभ्यः। काणतम इति कणिरयं सौक्ष्म्ये वर्तते; सर्व इमे काणाः किंचित् पश्यन्ति, अयं तु किंचिदपि न पश्यतीति काणतम उच्यते।

तस्याऽदूरविप्रकर्ष इति वक्तव्यम्। सर्षपाद्धिमवतो महत्त्वे मा भूदिति।

न वक्तव्यम्। अदूरविप्रकर्ष एव स्पर्धा भवति। न हि निष्कधनः शतनिष्कधनेन स्पर्धते।

तर्हि जातेः नेति वक्तव्यम्, वृक्षात् प्लक्षादेः मा भूदिति।

न वक्तव्यम्। जननेन या प्राप्यते सा जातिः। न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः।

अथ शुक्लतर इत्यादिषु किमेकं शौक्ल्यम्, आहोस्विन्नाना।

किं चातः?

यद्येकम्, प्रकर्षो नोपपद्यते; न हि तेनैव तस्य प्रकर्षो भवति। अथ नाना? समानगुणग्रहणं कर्तव्यं, शुक्लात् कृष्णो मा भूदिति। एकं शौक्ल्यं, तत्तु विशेषवत्।

२०. किंकृतो विशेषः?

अल्पत्वबहुत्वकृतः। अथवा पुनरस्त्वेकं निर्विशेषं च।

ननूक्तं प्रकर्षो नोपपद्यते, गुणान्तरेण प्रच्छादनाद् भविष्यति।

अथेहास्य शुक्लानि वस्त्राणि, अस्यातिशयेन शुक्लानीति शुक्लतरवस्त्र इति प्राप्नोति। शुक्लवस्त्रतर इति चेष्यते।

उक्तमत्र;

किमुक्तम्?

'पूर्वपदातिशय आतिशायिकाद् बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः' 'उत्तरपदातिशय आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः' इति॥

अथ यत्र त्रीणि शुक्लानि प्रकर्षापकर्षयुक्तानि, तत्र पूर्वं पूर्वमपेक्ष्य द्वे तरबन्ते, तत्र शुक्लतरशब्दादुत्पत्तिः प्राप्नोति। शुक्लशब्दादेव च इष्यते, शुक्लतरशब्दे शुक्लशब्दोऽप्यस्तीति शुक्लादेवोत्पत्तिर्भविष्यति।

नैतद् विवदामहे शुक्लतरशब्दे शुक्लशब्दोऽस्त्युत नास्ति। किं तर्हि? शुक्लतरशब्दोऽप्यस्ति, तत उत्पत्तिः प्राप्नोति, तदन्ताच्चातिशायिको दृश्यते। तद्यथा—'देवो वः सविता प्रार्पयतु श्रेष्ठमाय कर्मणे', 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' (मभा. ५.३.५५) इति।

अयं तर्हि परिहारः; मध्यमाच्छुक्लशब्दात् पूर्वपरापेक्षात् प्रत्ययेनोत्पत्तव्यम्'। मध्यमश्च शुक्लशब्दः पूर्वमपेक्ष्य प्रकृष्टः परमपेक्ष्य न्यूनः प्रकर्षाय प्रवर्तते।

न च बहूनां प्रकर्षे तरपा भवितव्यम्।

केन तर्हि?

तमपा। श्रेष्ठतमाय, श्रेष्ठतम इति छन्दस्येव भवति। वाचकेन खलु उत्पत्तव्यम्; न च शुक्लतरशब्दादुत्पद्यमानो वाचकः स्यात्। उक्तं च (मभा. २.३.५५)—

**अपेक्ष्य मध्यमः पूर्वमाधिक्यं लभते सितः ।**
**परंतु न्यूनतामेति न च न्यूनः प्रवर्तते ।।२०३।।**
**अस्तु वाऽपि तरप्तस्मान्नापशब्दो भविष्यति ।**
**वाचकश्चेत् प्रयोक्तव्यो वाचकश्चेत् प्रयोज्यताम् ।। २०४।।** (मभा. ५.३.५५)

२१. अथ यद्यातिशायिका गुणप्रकर्ष एवोत्पद्यन्ते किमर्थमुच्यते 'अजादी गुणवचनादेव' (५.३.५८) इति? एतौ गुणविशेषवचनेभ्य एव यथा स्यातामिति। गुणाः खल्विह द्विप्रकारा विप्रथन्ते तत्स्थाश्च तद्विशेषणानि च।

यदाह — तत्स्थैश्च गुणैः षष्ठी समस्यते, न तु तद्विशेषणैः (मभा.२.२.८) इति। तत्र ये भावप्रत्ययोत्पत्तिमन्तरेण द्रव्यात् पृथगाख्यातुमशक्याः स्वशब्दैर्द्रव्य-परतयैवाभिधीयन्ते ते तत्स्थाः। तद्यथा—'पटुः पुमान्, मृदुः शय्या, गुरुर्द्रव्यम्, लघुरुपायः। एवमणुर्महान् दीर्घो ह्रस्वः, पृथुः कृशो, दृढः स्थूल' इत्यादयो वक्तव्याः।

ये तु स्वशब्दैः पृथगाख्यायमाना मतुब्लोपादिना द्रव्यं विशेषयन्ति ते तद्विशेषणानि। तद्यथा 'शुक्लगुणयोगाच्छुक्ला बलाका, 'कृष्णगुणयोगात् कृष्णः काकः, तीक्ष्णगुणयोगात् तीक्ष्णः कण्टकः, दक्षगुणयोगाद् दक्षः पुरुषः, एवं शीतोष्णस्वादुसुरभिवत्सलोत्सुकरभसमत्सरादयो वक्तव्याः। तत्र यथा 'बलाकायाः शुक्लः, काकस्य कृष्णः, कण्टकस्य तीक्ष्णः, पुरुषस्य दक्ष' इत्यादौ, तथा 'बलाकायाः

शौक्ल्यम्, काकस्य कार्ष्ण्यम्, कण्टकस्य तैक्ष्ण्यम्, पुरुषस्य दाक्ष्यमि'त्यादावपि समासो न भवति (मभा. २.२.८,११)। गन्धरसरूपस्पर्श– सङ्ख्यापरिमाणादयस्तु न तत्स्थाः, नापि तद्विशेषणानि। तेषां शुक्लादिसङ्घातेषु शास्त्रकारसङ्केताद् द्रव्यवचनत्वेनैव राजपुरुषादिवत् षष्ठीसमासा भवन्ति। तद्यथा – चन्दनगन्धः, चूतफलरसः, कन्यारूपं, कुचस्पर्शः, पुरुषसङ्ख्या, सेनापरिमाणमिति। यैश्च तीव्रादींस्तद्विशेषणत्वेनोपन्यस्य घृतस्य तीव्रश्चन्दनस्य मृदुरित्युदाहृत्य च तीव्रमृदुगुणयोगाद् गुणवृत्त्या गन्धस्पर्शविशेषणत्वेन सापेक्षत्वे सत्यसामर्थ्याल्लब्धेऽपि समासाभावे यदा प्रकरणवशात् तीव्रशब्द एव विशिष्ट– गन्धवृत्तिस्तदा तदर्थोपचित एव व्यतिरेके षष्ठीसमासप्रसङ्ग इति प्रतिषेधोपपत्तिरुक्ता, त एवं प्रष्टव्याः – कथं प्रकरणाद्यपेक्षायामपि सापेक्षत्वस्य तादवस्थ्यान्नासामर्थ्यमिति? तदेवं तत्स्थैर्गुणैः षष्ठी समस्यते पटुत्वादिभिः, न तु तद्विशेषणैः शुक्लादिभिरिति।

किं वक्तव्यमेतत्?

**२२.** न हि; कथमनुक्तं गंस्यते? आचार्याणां च प्रवृत्तयो गमयन्ति तत्रार्थैकत्वं गोसहस्रम् इत्यादिषु 'अर्थैकत्वादेकं वाक्यम्', 'शतसहस्रान्ताच्च निष्कात्' (५.२.११९), 'क्रोशशतयोजनशतयोरुपसङ्ख्यानम्' (५.१.७४ वा.), 'तत्समुदायः खारीशतमपि न प्रसूत' (समर्थ?) मित्यादिजैमिन्यादिमुनिचतुष्टयवचनात् सङ्ख्यया परिमाणेन च समासो न निषिध्यते 'वर्तमानसामीप्ये वर्तमानवद् वा (३.३.१३१), 'अपरस्पराः क्रियासातत्ये' (६.१.११४), 'उत्तरपदार्थप्राधान्ये' (२.२.६ मभा.), 'तद् यत्नगौरवं प्रसज्येत' (शाबरभाष्यम् १.१.१) इति सूत्रकारभाष्यकारप्रयोगाच्च कुसुमसौकुमार्यादिशब्दसिद्धिः। तेनावगम्यते तत्स्थैर्गुणैरेवंप्रकारैः षष्ठी समस्यत इति।

नन्वेवमपि

**'द्विरदमदजलासारसौरभ्यगर्भः',॥ २०५॥**
**'कुचकलशमहोष्माबद्धरेखस्तुषारः',॥ २०६॥**
**'तुहिनगिरिशिलाशैत्यसङ्क्रान्तिमन्ति'॥ २०७॥**

इत्येवमादीनामनुपपत्तिः,
सप्तमीसमासा इमे भविष्यन्ति।

**२३.** कथं पुनः सौरभ्यादीनामाधारतः पृथगुपलम्भे सप्तमी भवति?

उच्यते, समस्तमूर्तिमद्द्रव्याणां पाञ्चभौतिकत्वे वायुना विभक्तावयवा आप्यपार्थिवादिद्रव्यसूक्ष्मभागा यत्रयत्र सञ्चार्यन्ते तत्रतत्रैतेषु घ्राणादिसम्बन्धनिबन्ध–

नाद्युपलब्धिरित्यधिकरणविभक्तेर्नानुपपत्तिः। एवमपि भागानामेवाधिकरणत्वं, न भागवताम्; न हि निकृत्तस्य हस्तपादादेः पुरुषादिव्यपदेशो भवति।

एवमेतत्; किन्तु पृथक्स्थितानामप्यवयवानामवयविव्यपदेशो दृश्यते, तद्यथा 'राहोः शिरो राहुः, शिवस्य लिङ्गं शिव' इति।

न चैतद् वाच्यम्; एवं सति समुद्गकादिस्थस्य कर्पूरादेर्बहिरुपलभ्य-मानबहुलपरिमलस्य कालान्तरेणोपक्षयः स्यात्; तद्वदेव दृष्टसन्निधेस्तत्रान्यभागाना-मुपनिपातात्; अत एव पुराणद्रव्याणां गन्धरसरूपस्पर्शगौरवप्रभावविपाकवीर्यविपर्यया युज्यन्त' इति।

तदेवं यैः सह षष्ठीसमास इष्यते तेभ्य एवेयसुन्-इष्ठनोः विधानमिति नानर्थकं गुणवचनादेवेति।

ननु च गुणमुक्तवान् मतुबुत्पत्तेः पूर्वमिति गुणवचनः शुक्लादिर्गुणं वक्ष्यति भावप्रत्ययोत्पत्त्येति गुणवचनः पट्वादिः। विशेषवचनत्वाविशेषे यावदजादी पट्वादिभ्य उत्पद्येते तावच्छुक्लादिभ्यः किमिति नोत्पद्येयाताम्। न च समास-विधाविवेह ज्ञापनादीनि सन्ति। कथं न सन्ति? तद्यथा – 'प्रशस्यस्य श्रः' (५.३.६०), 'ज्य च' (५.३.६१), 'वृद्धस्य च' (५.३.६२), 'अन्तिकबाढयो-र्नेदसाधौ' (५.३.६३), 'युवाल्पयोः कनन्यतरस्याम्' (५.३.६४) इति। अपि च 'इष्ठेमेयस्सु' (६.४.१५४) इत्यधिकृत्य यदयं स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं लुप्यते पूर्वस्य च गुणो भवतीत्यभिधत्ते, प्रियस्थिरस्फिरोरुबहुलगुरु-वृद्धतृप्रदीर्घबृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः इत्याह। 'बहोर्लोपो भू च बहोः' (६.४.१५८) इति ब्रूते। 'र ऋतो हलादेर्लघोः' (६.४.१६८) इत्यत्र पृथुमृदुदृढकृशभृशपरिवृढानामिति परिगणनं करोति। तद्ज्ञापयति तत्स्थगुणवचनेभ्य एवेयसुनिष्ठनौ भवत इति। ततश्च यथा 'शुक्लतरः कृष्णतम' इत्यादि भवति, नैवं शुक्लीयान् कृष्णिष्ठ इत्यादि। यथा च मृदिष्ठः पटीयानिति भवति, नैवं कारकिष्ठः पाचकीयानिति।

२४. कथं तर्हि ओजिष्ठः पापीयानिति?

'विन्मतोर्लुक्' (५.३.६५) इति ज्ञापकेन तदन्ताद् भविष्यति।

अथ यथा चन्द्रकल्पं मुखं, गुडकल्पा द्राक्षा, तथा चन्द्रतमं गुडतमेति कस्मान्न भवति?

प्रकर्षाभावात्। न हि केनचिद् गुणेनोपमेयवृत्तीनामुपमानशब्दानामतज्जातीयेषु वर्तमानानां स्वार्थापेक्षया प्रकर्षः सम्भवति। यत्र तु तज्जातीयेषु गुणाभिधानं तत्र भवत्येवातिशयितम्। तद्यथा– गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं सीरं च; गौरियं या समां समां विजायते, गोतरेयं या समांसमीना जीववत्सा च। दृश्यते हि जातिवाचिनस्तज्जातीयेष्वपि गुणाभिधायित्वम्।

**'सङ्ग्रामेषु चरत्येष पुरुषः पुरुषो यथा'**।। २०८।।

**'नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान्'**।। २०९।। (किराता. ११.७३) इति।

यद्येवं चन्द्रगुडादिभ्यः कल्पबादयोऽपि न स्युः?

नैवम्; तेषामीषदसमाप्तावेव विधानात्।

तर्हि कृतकल्पं भुक्तकल्पमिति क्तान्तेभ्यः न चास्ति सम्भवो यद्भूतं च स्यादसमाप्तं च ;

'आशंसायां भूतवच्च' (३.३.१३२) इति वचनाद् भविष्यति।।

## *(४. प्रविभागः)*

पदे वाक्ये प्रबन्धे वाऽस्यैतावतः शब्दस्यायमर्थोऽस्मिन्नर्थे चायमेतावान् शब्द इति शब्दार्थयोर्मिथः सम्बन्धितया पृथक्त्वेनावधारणं **प्रविभागः**।

स त्रि(द्वि)विधोऽन्वयव्यतिरेकाभ्याम्। इह खल्वत्यन्तसंसृष्टानां पदार्थानां प्रविभागेऽन्वयव्यतिरेकाभ्यां नान्यो हेतुरस्ति। यथा लोके बधिरोऽपि [1]चक्षुष्मानालोकयति, सत्यपि श्रोत्रे उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुश्श्रोत्रसन्निधाने रूपालोकनं चक्षुष एव व्यवस्थाप्यते न श्रोत्रस्य; तथा शब्दशास्त्रेऽपि सुबन्तेषु तिङन्तेषु च पदेष्वत्यन्तसंसृष्टा अर्थात्मानः शब्दाश्च प्रकृतिप्रत्ययादयो मिथस्सम्बन्धित्वेनान्वयव्यतिरेकाभ्यामेव प्रविभज्यन्ते।

तत्रावस्थितस्यानुवृत्ति**रन्वयः**।

तद्विपर्ययो **व्यतिरेकः**। स द्विविधो **जन्महानिभ्याम्**। तद्यथा–

वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते; वृक्ष इत्यकारान्तः सकारश्च प्रत्ययः, अर्थोऽपि कश्चिद् गम्यते शाखादिमत्त्वमेकत्वं च।

ऋक्ष इत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, **कश्चिदन्वयी**।

१. 'चक्षुष्मान् नालो' इति राघवः।

वृक्षशब्दो हीयते, ऋक्षशब्द उपजायते, **सकारोऽन्वयी।**
अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते **कश्चिदन्वयी**;
शाखादिमत्त्वं हीयते, सटादिमत्त्वमुपजायते, **एकत्वमन्वयीति।**
वृक्षावित्युक्ते सकारो हीयते, औकार उपजायते, **वृक्षशब्दोऽन्वयी।**
अर्थेऽप्येकत्वं हीयते, द्वित्वमुपजायते, **शाखादिमत्त्वमन्वयीति।**

**तिङन्तेषु** खल्वपि पचतीत्युक्ते कश्चिच्छब्दः श्रूयते, पच इति चकारान्तः, अतिशब्दः प्रत्ययः, अर्थोऽपि कश्चिद् गम्यते विक्लित्तिः कर्तृत्वं च।
पठतीत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, **कश्चिदन्वयीति।**
पच्छब्दो हीयते, पठशब्द उपजायते, **अतिशब्दोऽन्वयी।**
अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते, कश्चिदन्वयी; विक्लित्तिर्हीयते, पठिक्रियोपजायते, **कर्तृत्वमन्वयी।**
पच्यत इत्युक्ते अतिशब्दो हीयते, यतेशब्द उपजायते, **पच्छब्दोऽन्वयी;**
अर्थोऽपि कर्तृत्वं हीयते, कर्मत्वमुपजायते, **विक्लित्तिरन्वयिनीति।**
ते मन्यामहे यश्शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते; यश्शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते; यश्शब्दोऽन्वयी तस्यासावर्थे **योऽर्थोऽन्वयीति।**

एवं **वाक्येऽपि** गामानयेत्युक्ते कश्चिच्छब्दः श्रूयते, गामिति द्वितीयान्तः आनयेति च लोडन्तः;

अर्थोऽपि कश्चिद् गम्यते सास्नादिमान् कर्मत्वमापन्नः आनयेति क्रियार्थत्वविधि-त्वमापन्नः अथाश्वमानयेत्युक्ते गवार्थो हीयते, अश्वार्थ उपजायते, **आनयनार्थोऽन्वय।**

गां बधानेत्युक्ते आनयनार्थो हीयते, बन्धार्थ उपजायते, **गवार्थोऽन्वयी।**

एवं गौरानीयतामश्व आनीयतां गौर्बध्यतामश्वो बध्यतामित्यादिषु कर्मकर्तृत्वयोर्हानिरुपजनिश्चाभ्यूह्यः। एतेन प्रबन्धोऽपि व्याख्यातः।

कश्चिदाह, मारीचो रामेण हतः, कश्चिदाह लक्ष्मणेनेति। तत्र मारीचमृगघाते रामो हीयते लक्ष्मण उपजायते, लक्ष्मणो वा हीयते राम उपजायते, रामायणं **पुनरन्वयीति।**

ननु च वृक्षऋक्ष इति वकारो हीयते (ऋकार) उपजायते वा; पचति पठतीति चकारो हीयते ठकार उपजायत इति वक्तव्ये किमर्थमुच्यते वृक्षशब्दो हीयते ऋक्षशब्द उपजायते, पच्छब्दो हीयते पठशब्द उपजायत इति? शब्दस्यार्थवत्ता यथा स्यात्, न

वर्णानाम्; किं पुनर्न वर्णाः शब्दः? बाढम्; अर्थावसायप्रसवनिमित्तं शब्द इत्यभिहितं पुरस्तात्।

नन्वेवमपि वृक्षादीनामर्थवत्ता नोपपद्यते; किं कारणम्? केवलेनावचनात्।

न हि वृक्षादिना केवलेन कश्चिदर्थो गम्यते; किं तर्हि? सप्रत्ययकेन।

किमुक्तं भवति? पचत्यादिष्वर्थवत्तासहचरिता केवलवचनता दृष्टा; वर्णेषु चानर्थक्यसहचरितं केवलावचनत्वम्। न चैते पचत्यादिवद्दृश्यन्ते, वर्णवत्तु दृश्यन्ते तस्माद् वर्णवद्वृक्षादीनामर्थवत्ता नोपपद्यत इति।

सप्रत्ययस्योपपद्यत इति चेन्नैवम्। इह यद् यस्य निमित्तत्वेनोपादीयते सति तस्मिस्तेन प्रवर्तितव्यम्। अर्थवत्ता च प्रातिपदिकसंज्ञाया निमित्तम्। सा च द्विधा लौकिकी पारिभाषिकीति च। तयोर्लोके विदिता लौकिकी, क्रियाप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि इति। शास्त्रे व्यवहारार्था पारिभाषिकी 'दाधा घ्वदाप्' (१.१.२०), 'तरप्तमपौ घः' (१.१.१२) इति। तत्र लौकिकी तावदर्थोपलब्धिगमया; येषां च प्रातिपदिकसंज्ञा विधीयते ते न कदाचित् केवला उपलभ्यन्ते। पारिभाषिकी तु परिभाषया भवत्यर्थवच्छब्दरूपं, तच्च प्रातिपदिकसंज्ञमिति। एवं च शब्दत्वाविशेषाद्वर्णानामपि प्रसज्यते।

इयं च परिभाषा न प्रवर्तते 'अर्थवद्ग्रहणे नार्थकस्य' इति। तदेवमर्थवत्ताया निमित्तस्याभावे प्रातिपदिकसंज्ञा न प्रवर्तते; तदप्रवृत्तौ तु कथं प्रत्ययोत्पत्तिरिति?

नैवम्। प्रत्ययेन नित्यसम्बन्धात् केवलस्याप्रयोगः; नित्यसम्बन्धावेतावर्थौ प्रकृतिः प्रत्यय इति; अतो नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति।

ननु च भवानाम्रान् पृष्टः कोविदारानाचष्टे, अर्थवत्ता नोपपद्यते केवलेनावचनादिति पृष्टः केवलस्याप्रयोगे हेतुमाह। नाभिप्रायापरिज्ञानात् नन्वेवं ब्रवीमि; यदि तावत् केवलेनावचनादित्येवमयं हेतुरुपन्यस्तः, यस्मात् केवलो न प्रयुज्यते तस्मादनर्थक इति, तदेवं वक्तव्यं केवलस्याप्रयोगादिति, न वक्तव्यं केवलेनावचनादिति। केवलस्य प्रयोगः शास्त्रसमयान्नास्ति, 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय' इति। न च लौकिका एवं प्रयुञ्जते; अत उक्तं नित्यसम्बन्धादयं केवले न प्रयुज्यते न त्वानर्थक्यादिति॥

अथैवमुपन्यस्तः केवलेन प्रयुज्यमानेन नोच्यतेऽसावर्थ इति। क्व पुनरयं भवता केवलः प्रयुज्यमानोऽर्थमब्रुवन् दृष्टः? यदि च प्रयुज्येत न चार्थ उपलभ्येत, स्यादयं हेतुः केवलेनावचनादिति। अन्यद् भवान् पृष्टोऽन्यदेव प्रतिविधत्ते। मया ह्येवमुच्यते,

समुदायस्यार्थे प्रयोगादवयवार्थानामप्रसिद्धिरिति। यतो वर्णास्तावदनर्थका भवताभ्युपगताः; तेषां च समुदायतन्त्राणां केवलानां प्रयोगो नास्ति। यद्यपि प्रयुज्येरन् अनर्थकानामेव प्रयोगः स्यात्। एवं प्रकृतीनामपि समुदायतन्त्राणां नास्ति केवलानां प्रयोगः; योगे वा सत्यनर्थकाः प्रयुज्येरन्।

अथैवम्भूतानामर्थवत्ता, को नाम मत्सरो वर्णेष्विति?

को नाम मत्सरः, यदेषामर्थवत्त्वेऽर्थवत्कार्याणि प्राप्नुवन्ति।

कान्यर्थवत्कार्याणि? अर्थवत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा, 'प्रातिपदिकाद्' इति स्वाद्युत्पत्तिः, 'सुबन्तं पदम्' इति पदसंज्ञा च।

तत्र को दोषः?

प्रत्यवयवं विभक्तेः श्रवणं प्राप्नोति।

नैवं, यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापीति समुदायान्तर्गतत्वात् 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति लुका भाव्यम्। तत्कुतो विभक्तेः श्रवणम्?

ननु च 'कृत्तद्धितसमासाश्च' (१.२.४६) इति समासग्रहणं नियमार्थम्, तेन चार्थवत्समुदायस्य वाक्यस्येव वर्णसमुदायस्यापि प्रातिपदिकसंज्ञा निवार्यत इति कथं तदन्तर्गता विभक्तयो लुप्यन्ते?

नैवम्; नियमस्य तुल्यजातीयापेक्षत्वात् समासस्येव भिन्नार्थसमुदायस्य वाक्यस्यैव प्रातिपदिकसंज्ञा निवर्तते, त्वभिन्नार्थस्य वर्णसमुदायस्येति। अत्र हि येनैवार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति (१.२.४५)।

एवं तर्हि निवृत्तायामपि विभक्तौ पदत्वाद् घनं वनमित्यादौ नलोपादीनि (८.२.७) प्राप्नुवन्ति।

तर्हि 'सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात्' भविष्यति। वृक्ष इत्यत्र ह्येकत्वं विभक्त्या द्योत्यते, तच्चैकमित्येकैव विभक्तिरुत्पद्यते, यथा बहवो द्रष्टार एकेनैव प्रदीपेन दृश्यमर्थं पश्यनित, एवं स च समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते समुदायद्विर्वचनवत्। यथा हि पपाचेत्यादौ प्रथमस्यैकाचो द्विर्वचनप्रसङ्गे येनैवाचा समुदाय एकाच्, नेव तदवयवोऽपि पशब्दश्चेति तत्र पृथगवयवैकाचो न द्विरुच्यन्ते; किं तर्हि? सर्वानुग्रहात् समुदायैकाच एव। तथैहापि समुदायादुत्पत्तौ वर्णात् सुबुत्पत्तिर्न भविष्यतीति तदभावान्न पदसंज्ञा। अपदत्वाच्च नलोपादीनामप्रसङ्ग इति।

सत्यमेतत्। किंतु वर्णेष्वन्वयव्यतिरेकयोः सद्भावेऽप्यर्थान्वयव्यतिरेका-भावादयमस्यार्थ इति प्रविभागो न प्रकल्पते। तथा हि वृक्षः ऋक्षः, पचति पठतीत्यादौ यस्य हानौ यो हीयते, यस्योपजने य उपजायते, यस्यान्वये योऽनुगच्छति स तस्यार्थ इति शक्यते वक्तुम्।

नैवम्, कूपयूपसूपादाविति अनर्थका वर्णाः, अर्थवन्तो वृक्षादय इति।

ननु यत्र बृंहितं हीयते, हेषितमुपजायते, रेणुचक्रमन्वयि, तत्र हस्तिनो हीयन्ते, अश्वा उपजायन्ते, पिपीलिका अन्वयिन्यो, न चैतावता रेणुचक्रस्य निमित्तं भवन्ति। यत्र वा क्षीरं हीयते दध्युपजायते पात्रमन्वयि, तत्र माधुर्यं हीयते अम्लतोपजायते तृप्तिरन्वयिनी, न चान्वयि पात्रं तृप्तिहेतुर्भवति। तदेवमन्वयव्यतिरेके च सत्यपि कार्यकारणभावस्याभावात् कथमुच्यतेऽन्वयव्यतिरेकाभ्यामर्थवत्तावतिष्ठत इति?

नैवम्। अवधारितं हि सामर्थ्यमन्वयव्यतिरेकाभ्यां प्रविभज्यते, न च पिपीलिकानां पात्रस्य वा रेणुचक्रतृप्त्योः सामर्थ्यावधारणमस्ति, तत्सद्भावे- ऽप्यन्यत्राभावात्। यत्रैव चान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते प्रत्यापत्तुं तत्रैव प्रतिपत्तव्या, न सर्वत्र। यद्येवं प्रकृत्यादिष्वपि न शक्यते। बहवो हि शब्दा एकार्था भवन्ति, एकश्च शब्दो बह्वर्थः; यदि हि नियोगत एकः शब्द एकस्मिन्नर्थे वर्तते तत एष प्रविभागः स्यात्। यतस्तु व्यभिचरत्येतत् अनेकश्शब्द एकस्मिन्नर्थे, तद्यथा इन्द्रः शक्रः पुरन्दर इति, एकश्चानेकार्थः अक्षाः पादाः माषाः इति। अनुमानं चैकस्यैवाकार्थवृत्तित्व एव शक्यते कल्पयितुम्; अतो व्यभिचारादनिमित्त- मन्वयव्यतिरेकौ प्रकृतिप्रत्ययार्थप्रविभागे इति प्रकृतिरेव सर्वार्था स्यात्। प्रत्ययो वा सर्वार्थः, उभौ वोभयार्थौ? यथैकौ दृश्यते हि दधि मधु वग्निचिदिति प्रकृतिरेव सर्वानर्थानभिदधाना, 'अधुना' (५.३.१७), इयान् 'अस्यापत्यं इः' इति, प्रत्यय एव वा सर्वार्थाभिधायी, हैयङ्गवीनं (५.२.२३), श्रोत्रियः (५.२.८४), क्षेत्रियः इत्युभयमुभयार्थाभिधायीति। अतः किं न साधीयः, अर्थवत्ता सिद्धा भवति। यदा हि प्रकृतिरेव स्वार्थादिषु वर्तते प्रत्ययो वा, तदा सुतरामर्थवत्ता सिध्यति। न ब्रूमोऽर्थवत्ता न सिध्यति। तौ त्वन्वयव्यतिरेकौ नावतिष्ठेते। ततश्च कुत एतत् यादयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति? न पुनः प्रकृतेरेवोभावर्थौ प्रत्ययस्योभयस्य वेति सामान्यशब्दा एते एवं स्युः; सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेऽवतिष्ठन्ते, यतस्तु खलु नियोगतः प्रकरणादिमन्तरेणापि वृक्ष इत्युक्ते स्वभावतः कश्चिदर्थो गम्यते, अतो मन्यामहे न इमे सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे वर्तत इति। यदि हि

'सु औ जस्' (४.१.२) इत्येत एव स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मादिवचनाः, सहायमात्रं प्रकृतिः, स्वादिभिः सर्वेषामर्थाना– मुपादानात्, वृक्षः वृक्षौ वृक्षा इति। किमर्थं नियोगेन वृक्षार्थ एव गम्यते, न पुनस्सर्वे अर्थाः प्रतीयेरन्, पर्यायेण वा कदाचित् कश्चिद्? न यौगपद्यं न पर्यायः; तस्मादन्वयव्यतिरेकाभ्यां समुदायस्थाः शब्दाश्चापोद्धर्तव्या अर्थाश्चेति व्यवस्थिता अन्वयव्यतिरेकाभ्यां व्यावहारिकी अर्थवत्ता। तत्रेदमपरिहृतम्–'प्रकृतिरेव सर्वानर्थानभिदधाना दृश्यते प्रत्ययः सर्वार्थाभिधायी उभयं वोभयार्थाभिधायीति। तत्र परिहारः–दधि मधु अग्निचिदित्येवमादिषु वचनान्तराणामौकारादीनां श्रूयमाणत्वादन्येषां च सविभक्तिकानां प्रयोगदर्शनात्। अधुना इयानित्येवमादिषु प्रत्ययान्तरपरायाः प्रकृतेरवस्थानात् प्रकृत्यन्तराणां वा लोपदर्शनात्, इहाप्यकेवलस्यैवार्थाभिधानं प्रसक्तं; लोपादिद्वारेण शास्त्रदृष्ट्या केवलय विज्ञायते।

ननु 'न केवला प्रकृतिः प्रयोक्तव्या, न केवलः प्रत्यय' इति शास्त्रसमयः।

सत्यमेतत्; किंतु यत्र प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्र केवलापि प्रकृतिः प्रयुज्यते। यत्र वा प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्र केवलोऽपि प्रत्यय इत्यभ्यनुज्ञायते। हैयङ्गवीनं, श्रोत्रियः, क्षेत्रिय इत्यादिषु तु संज्ञाशब्दे ह्योगोदोहस्य विकार इति, 'श्रोत्रियञ्छन्दोऽधीत' इति, 'परक्षेत्रे चिकित्स्य' इति प्रकृतिप्रत्ययविभागकल्पनया व्युत्पत्तिर्यथाकथंचिद्धर्मनियमाय क्रियते। एवं यावकादिष्वपि स्वार्थिकेषु प्रत्ययार्थस्याव्यतिरेकात् प्रकृत्यन्तरयोगे प्रातिपदिकानां च यावकादीनामर्थभेदात् प्रत्ययान्तरयोगे प्रकृतेः कल्पितायामर्थवत्तायां स्वार्थिकत्वं विज्ञायते। एको द्वौ बहव इत्यत्र प्रत्येकं वचनान्तराभावात् कर्मादिविषयावन्वयव्यतिरेकावाश्रीयेते। सामान्यतो दृष्टाच्चानुमानात् प्रकृत्यन्तरवदेकादीनां प्रवृत्तौ भिन्नरूपाणि वचनान्यसङ्करेण व्यवस्थां प्रकल्पयन्तीति प्रतीयते।

नन्वेवं सति शब्दस्यैकार्थोपक्षयस्यार्थान्तरेण असम्बन्धादर्थस्याप्येकशब्दो– पक्षयस्यान्यत्रासङ्क्रान्तेः कूपसूपयूपादिवदेवान्वयव्यतिरेकौ नावकल्पेते। न हि य एवैकत्वसम्बन्धी स द्वित्वादिसम्बन्धी, यो वा प्रातिपदिकत्वेनार्थमात्रप्रवृत्तिः सशक्त्यन्तरसम्बन्धी न भवितुमर्हति। न खलु शब्दः कश्चिदुत्तरकालमर्थान्तरं परित्यजत्युपादत्ते वा। तदुक्तम् – (वाप. २.१३)

**यदस्य** (शब्दस्य) **न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।**

**विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते ।। २१० ।।**

एवमेतत्। किन्तु त्रिविधः शब्दः – निवर्त्योऽन्वाख्येयः प्रतिपादकश्च[१] (वाप. १.२४, मभा.१.१.५०)। तेष्वधर्महेतुरपभ्रंशो निवर्त्यः, धर्महेतुर्लोकवेदयोः प्रयोगार्होऽन्वाख्येयः। प्रकृतिप्रत्ययादिविभागकल्पनया तत्स्वरूपावबोधकृत् प्रतिपादकः। तदर्थमन्व–यव्यतिरेकाववियमानावपि व्यवस्थार्थं कल्पितौ शास्त्रार्थव्यवहारनिबन्धनं सम्पद्येते। शास्त्रव्यवहारो हि 'अर्थवत् प्रातिपदिकम्' (१.२.४५) 'क्रियावचनो धातुः' (मभा. १.३.१) इत्यादिरनाश्रितयोरन्वयव्यतिरेकयोरसुकर एव। तदाह – (वाप. २.१२)

**भागैरनर्थकैर्भिन्नाः पचतीत्येवमादयः ।**
**अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम् ॥ २११ ॥**

**अभिधा च विवक्षा च तात्पर्यं च विभागवत् ।**
**चतस्रः केवला ह्येताश्शब्दसम्बन्धशक्तयः ॥ २१२ ॥**

**यापेक्षा यच्च सामर्थ्यमन्वयो यश्च तैर्मिथः ।**
**ऐकार्थ्यं यच्च तास्तस्य ससहायस्य शक्तयः ॥ २१३ ॥**

**उक्ताश्चतस्रः प्रथमाः क्रमेण क्रमादथान्याः प्रकटीक्रियन्ते ।**
**अखण्डवाक्यार्थविवेचकानां शब्दार्थसम्वित्परिशुद्धिहेतोः ॥ २१४ ॥**

## इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे केवलशब्दसम्बन्धशक्तिप्रकाशो नाम ॥ सप्तमः प्रकाशः ॥७॥

रेवाप्रसादेन सनातनेन श्रीभोजदेवस्य निबन्ध एषः ।
कृतो विविक्तार्थ इति प्रसीदन्त्वत्रानुवीक्षाचतुरा महान्तः ॥



१. संवादोऽत्र वाप. १.२४, मभा. १.१.५०

अथ

# शृङ्गारप्रकाशे अष्टमः प्रकाशः

सापेक्षशब्दशब्दशक्तिप्रकाशो नाम

## (५. व्यपेक्षा)

**तत्रोद्भूतसम्बन्धव्यतिरेकाणां पदार्थानामितरेतरप्रत्याकाङ्क्षा व्यपेक्षा।**

सा च सन्निहिते योग्ये च भवति। तद्यथा 'देवो वर्षती'—ति वर्षणक्रियाकर्तारमन्तरेणाभवन्ती सन्निहितं योग्यं च देवमपेक्षते। यत्र तु सन्निहितस्य न योग्यता, तत्र व्यवहितमपि योग्यमेवापेक्षते, यथा प्रविश पिण्डीम् इत्यत्र (न) प्रवेशनक्रिया सन्निहितायामप्ययोग्यायां पिण्ड्यामसम्भवन्ती व्यवहितमपि योग्यं गृहादिकमपेक्षते। पिण्डीमित्येतदपि कर्मपदं प्रविशेत्यस्मिन्नसम्भवद्योग्यमेव भक्षयेत्यादिक्रियापदमपेक्षत इति।

सेयं व्यपेक्षा संक्षेपतः पदार्थानां त्रेधा सम्भवति—

**१. आभिधानिकी, २. नैयायिकी, ३. नैषेधिकी** च। तत्र —

श्रुतिसमारोप(समाख्या)वाक्यविकल्पसमुच्चयातिदेशादिभिरभिधीयमाना **आभिधानिकी**।

ऊहविपर्ययविपरिणामायाहारवाक्य(वि)शेषव्यवहितकल्पनादिभिरुपकल्प्यमाना **नैयायिकी**।

वचनासम्भवविरोधकृतार्थपरिसङ्ख्यावधारणादिभिर्निषिध्यमाना **नैषेधिकी**। तासु —

### (१. आभिधानिकी)

आभिधानिकी तावद् यत्र द्वयोः साधर्म्यार्थमावृत्त्या विभक्तिश्रुतिभेदेन च विशेषणविशेष्यनिर्देशः,

१. सा श्रुत्**याभिधानिकी** यथा— (मेघ. ९९)

**अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं**
**सास्रेणास्रद्रवमविरलोत्कण्ठमुत्कण्ठितेन ।**
**उष्णोच्छ्वासं समाधिकतरोच्छ्वासिना दूरवर्ती**
**सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥१॥**

यत्रापि साधर्म्यार्थादेव द्वयोस्तन्त्रेण च विभक्त्यभेदेन च विशेषणविशेष्ययोगः, सा च **श्रुत्याभिधानिकी**। यथा—

**दैवात/दैवादपत्रमच्छायं फलार्थिभिरसेवितम् ।**
**सानुजं शाखिनमिव दृष्ट्वा रामं रुरोद सा ।। २ ।।**[१]

२. यत्र पदेन वाक्येन वा संज्ञार्थो विधीयते, सा **समाख्याभिधानिकी**।

सा पदेन यथा— (रघु. ६.२१)

**असौ शरण्यः शरणागतानामगाधसत्त्वो मगधप्रतिष्ठः ।**
**राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ।। ३ ।।**

वाक्येन यथा—

**सच्चं सण्णा धण्णा जा तइआ केसवेण गिरिधरणे ।**
**गुरुभार–वावडेण वि, अज्जुअच्छं चिरं दिट्ठा ।।४।।**
(सत्यं संज्ञा धन्या या तदा केशवेन गिरिधरणे ।
गुरुभारव्यापृतेनापि ऋज्वक्षं/अनृज्वक्षं चिरं दृष्टा ।।)

३. यत्र व्यपेक्षोत्थापकं वाक्यमभिधाय तदुपपादकमभिधीयते, उपपादकं वाभिधाय व्यपेक्षोत्थापकं, सा **वाक्याभिधानिकी**।

तयोराद्या यथा— (हेमचन्द्रस्य प्राकृतव्याकरणे ४.४२०)

**सा उप्पडी गोट्ठउहि ।। णोक्खी कावि विसगंठि ।**
**भिडिय पचेल्लिउ सो मरइ ।। ज्जस्स ण लग्गइ लंठि ।। ५ ।।**
(सा उत्पन्ना गोष्ठभुवि नवीना कापि विषग्रन्थिः ।
भित्त्वा न पचन् प्रत्युत स म्रियते यस्य न लगति कण्ठे ।।)

द्वितीया यथा—

**वाणिधमोडिअच्चरुणखओ दारेएं तु न दिट्ठ ।**
**माएणजहुके मलडोल्लाहिअ इवइठ्ठ ।। ६ ।।?**

४. वैकल्पिकाभिधानप्रभवा **विकल्पाभिधानिकी** यथा—

**अंबरु अंचि समुद्दु तरि भमडहि डोंगरुआणि ।**
**सहि महु पिउ गउ कलहिअउ जेंव रुच्चइ तेंव आणि ।। ७ ।।**

---

१. दैवमेवातपत्रं रामं दैवात् अपत्रं शाखिनम्, सानुनि जातं वृक्षम्, अनुजसहितं रामम् —रे.।

(अम्बरं गच्छ समुद्रं तर भ्रम कान्ताराणि ।
सखि मम प्रियो गतः कलहायितो यथा रोचते तथाऽऽनया।।)

५. समुच्चयाभिधानप्रभवा **समुच्चयाभिधानिकी** यथा—(हेमचन्द्रस्य प्राकृतव्याकरणे४.३१५)

**हिअइ खुडुक्कइ गोरडी गअणि घुडुक्कइ मेहु ।**
**वासारत्ति पवासुअहं विसमा संकडु एहु ।।८।।**

(हृदये शूल्यायते गौरी गगने गर्जति मेघः।
वर्षायां प्रवासिनां विषमं संकटम् एतत् ।।)

६. सामान्यविशेषातिदेशप्राप्तधर्माणां यत्राग्रतः पश्चाद्वाभिधानं **सातिदेशाभिधानिकी**। तत्र सामान्यातिदेशप्राप्तधर्माभिधानमग्रतो यथा—

**हिअअ तिरिच्छीयइ संमुह पच्छा गहिअकडक्खास्स ।**
**पहिअ एकेज्जे गोरडी णं चउहट्ट उवच्छ ।।९।।**

(हृदये तिरश्चीना संमुखा पश्चाद् गृहीतकटाक्षा।
पथिकस्यैकैव गौरी ननु चतुष्पथे व्रजति।।)

एवं पश्चादपि द्रष्टव्यम्। विशेषातिदेशप्राप्तधर्माभिधानं पश्चाद् यथा—

**महिलत्तणु णिव्वाहिअउ एक्कइ विज्जुपियाइ ।**
**णेहक्कड विअविर हुनम्मे विदट्टणजाइ ।।१०।।**

(महिलावं निर्वाहितमेकया विद्युत्प्रियया ।
.......कदा न अपि विरहः .....न याति ।।)

७. आदिग्रहणाद्यत्रैकमभिदधानः प्रसङ्गेनान्यदप्यभिधत्ते, सा **प्रसङ्गाभिधानिकी**। सापि द्विधा **पदतो वाक्यतश्च**। तयोराद्या यथा—

**साव—सलोणी गोरडी अहरहो महुरउ साउ ।**
**तिक्ख—अप्प—पलोव्वणए—विरहु जि कडुउ कसाउ ।।११।।**

(सर्व—सलवणा गौरी अधरस्य मधुरः स्वादः ।
तिक्ता अम्ला प्रलोकने विरह एव कटुकः कषायः।।)

अत्र रूपं वर्णयन्प्रसङ्गतः षड्रसानभिमतानभिमतत्वं च तेषां निर्दिशति। द्वितीया यथा— (मुरा. ३.२१)

**प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा—**
**मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः ।**

**नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं**
**निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥१२॥**

अत्र **मुद्राराक्षसे** चाणक्येन कौमुदीमहोत्सवे निषिद्धे राक्षस(प्र)युक्तो वैतालिकः प्रभाते मङ्गलानि पठन् शरदवतारो वर्तत इति चन्द्रगुप्तस्य गुप्तमावेदयति।

(२. **नैयायिकी**)

अथ **नैयायिकी**।

१. यत्र पूर्वोक्तमेव वाक्यमर्थान्तरे वक्त्रन्तरादिभिरूहयित्वा निवेश्यते ताम् **ऊहनैयायिकीम्** आमनन्ति। तद्यथा **कालिदासः** 'किं कुन्तलेश्वरः करोति' इति विक्रमादित्येन पृष्ट उक्तवान्—

**असकलहसितत्वात् क्षालितानीव कान्त्या**
**मुकुलितनयनत्वाद् व्यक्तकर्णोत्पलानि ।**
**पिबति मधुसुगन्धीन्याननानि प्रियाणां**
**त्वयि विनिहितभारः कुन्तलानामधीशः ॥**

इदमेवोहयित्वा **विक्रमादित्यः** प्रत्युवाच—

**पिबतु मधुसुगन्धीन्याननानि प्रियाणां**
**मयि विनिहितभारः कुन्तलानामधीशः ॥१४॥**

२. यत्र पाठक्रमेण सम्बन्धानुपपत्तावर्थक्रमेण विपर्यस्य पदानि योजयन्ते, सा **विपर्ययनैयायिकी** यथा— (कुसं. ५.२८)

**स्वयं विशीर्णद्रुमपर्णवृत्तिता**
**परा हि काष्ठा तपसस्तया पुनः ।**
**तदप्यवा/पाकीर्णमतः प्रियंवदां**
**वदन्त्यपर्णेति च तां पुराविदः ॥१५॥**

अत्रातस्तां प्रियंवदामपर्णां वदन्ति पुराविद इति पर्यायेण पदानि योज्यन्ते।

३. यत्र तुल्यार्थपदप्रयोगे विभक्तिविपरिणामेन विशेषणविशेष्ययोर्योज्यन्ते, सा **विपरिणामनैयायिकी**। यथा— (माघ. ४.४०)

**दन्तोज्ज्वलासु विमलोपलमेखलान्ता—**
**स्सद्रत्नचित्रकटकासु बृहन्नितम्बाः ।**

**अस्मिन् भजन्ति घनकोमलगण्डशैला**
**नार्योऽनुरूपमधिवासमधित्यकासु ॥१६॥**

अत्र सप्तम्यन्तानि प्रथमान्तानि च विशेषणानि नारीरधित्यकाश्च विभक्तिविपरिणामतो विशेषयन्ति। एतेन वचनविभक्तिविपरिणामो लिङ्गविपरिणामश्च व्याख्यातः।

तयोराद्यो यथा—(माघ. १२.३)

**हस्तस्थिताखण्डितचक्रशालिनं द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया ।**
**सत्यानुरक्तं नरकस्य जिष्णवो गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥१७॥**

द्वितीयो यथा—(माघ ५.२०)

**रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।**
**भूभर्तुरायतनिरन्तरसन्निविष्टाः पादा इवाभिबभुरावलयो रथानाम् ॥१८॥**

४. यत्र आकाङ्क्षानिवृत्तयेऽर्थान्तरमध्याह्रियते **साध्याहारनैयायिकी**। यथा—

**न दानेन न मानेन न शाठ्येन न सेवया ।**
**न शस्त्रेण न शास्त्रेण सर्वथा किमपि स्त्रियः ॥१९॥**

अत्र वशीभवन्तीत्यादिरध्याहारः।

५. यत्र लिङादेरश्रुतौ विधिर्निषेधो वा सर्ववाक्यानां विधिनिषेधपरत्वेन प्रकल्प्यते, सा **वाक्यशेषनैयायिकी**। यथा—

**तदेतत् काकतालीयं तदेतद् वा घुणाक्षरम् ।**
**यदनात्मवतामायुर्यच्चानीतिमतां श्रियः ॥२०॥**

तस्मादात्मवता नीतिमता भवितव्यमिति वाक्यशेषः।

६. यत्र सन्निहितानुपपत्तौ व्यवहितमाश्रीयते सा **व्यवहितकल्पनानैयायिकी**। यथा—

**दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।**
**पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥२१॥** (रघु. ४.२)

अत्राग्नेर्निशमनक्रियासम्भवात् पूर्वकालत्वायोगे तं निशम्यापि राज्ञां रजतामिति (राजतां प्रति?) व्युत्थितिकालार्थो व्यवहितो व्यपेक्ष्यते। तेनायमर्थः सम्पद्यते— तं राज्ये प्रतिष्ठितं निशम्य राजाभिमानमुद्वहतां हृदयेऽग्निरिवोत्थित इति।

७. एतेन **गुणकल्पनानैयायिकी** अपि व्याख्याता। यथा—

**चंद—णिहिएक्कचलणा णह—भमिर—मरालणिहिणु अवर—वआ ।**
**कमलवण—दिण्णहत्था णहसिरी भुवणमोअरइ ॥२२॥**

(चन्द्रनिहितैकचरणा नभोभ्रमणशील—मराल—निहितापर—पदा ।
कमल—वन—दत्तहस्ता नभश्रीर्भुवनमवतरति ।।)

८. आदिग्रहणादपोद्धारवाक्यभेदादयो गृह्यन्ते। तेषु यत्र वृत्तिच्छन्नस्य सर्वनामादिभि—रपोद्धृत्यानुसन्धानं क्रियते सा **अपोद्धारनैयायिकी**। यथा—(कुसं. ५.७६)

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिषः सतः किमाभिराशोपहतात्मवृत्तिभिः ।। २३ ।।**

अत्र वृत्तिच्छन्नयोर्विपद्विभूतिपदयोराभिरिति सर्वनाम्नानुसन्धाने जगच्छरण्यस्य किं विपद्भिः, निराशिषः किं विभूतिभिरित्यर्थः सङ्गच्छते।

९. एकवाक्यत्वेऽप्यपेक्षितानवाप्तौ यत्र वाक्यान्तरमुपकल्प्यते, सा **वाक्यभेदनैयायिकी**। यथा— (गास. ३.३१)

**तुह असमं सोहग्गं, अमहिलसरिसं च साहसं मज्झ ।**
**जाणइ गोलाऊरो, वासारत्तस्तद्धद्धरत्तो अ ।। २४ ।।**

(तवासमं सौभाग्यममहिलासदृशं च साहसं मम।
जानाति गोदापूरो वर्षारात्रार्धरात्रश्च।।)

अत्र तवासमं सौभाग्यमस्त्रीजनोचितं च मे साहसं गोदावरीपूरो जानातीत्येतावदेकं वाक्यम्। नैकः साक्षी प्रमाणमित्यपेक्षायां वर्षारात्रार्धरात्रश्चेति द्वितीयम्। अन्यथा ह्येकवाक्यतायां 'यथासङ्ख्यमनुदेशः समानाम्'(१.३.१०) इति गोदावरीपूरस्त्वत्सौभाग्यं वर्षारात्रार्धरात्रस्तु मत्साहसं जानातीत्ययमर्थः सम्पद्यते। यदि चायमपि न यथासङ्ख्यस्य विषयः, कोऽन्यो भविष्यति? तत्र को दोष इति चेद् विवक्षितार्थासिद्धिः। यथासङ्ख्यपक्षे हि येषु त्वं पल्लवितलताप्रतानापवारितेषु गोदावरीतटगुहागृहेषु कामपरवशाभिर्वराङ्गना—भिरभिसार्यमाणो विहरसि, पूर एव तेषु यदि प्रवेष्टुमीष्टे, यानि चाहं प्रसुप्ताशेषजनपदे प्रवर्षदम्भोधरान्धकारनिस्सञ्चारे प्रावृण्निशीथे परिभ्रमन्ती महासाहसानि (कृत्वा अभिसारितवत्यस्मि तानि) वर्षारात्रार्धरात्र एव यदि द्रष्टुं शक्नोति, न पुनरन्यस्यैतत् सामर्थ्यमित्ययमर्थः सङ्गच्छते। न चायमस्या विवक्षितः, अपि तु एवं नाम त्वं सुभगोऽसिएवं नाम चाहं साहसिनी यार्धरात्रे वर्षासु पूरपूर्णां गोदावरीमुल्लङ्घ्यागणित—प्राणसंशया त्वामभिसारितवत्यस्मि, तस्मात् कृतज्ञतामनुरुध्यमानेन सौभाग्यातिशययोगाद् बहुवल्लभेनापि त्वयानुरक्तायां मय्यनुक्रोशो न मोक्तव्य इति।।

**(३. नैषेधिकी)**

१. अथ यत्र साधर्म्यादिभिरर्थान्तरेऽनुवृत्तः पदार्थधर्मो वचनेन निवर्त्यते, सा **वचननैषेधिकी**; सा तु प्रतीयमाननिवृत्तिनिमित्ता च। तयोराद्या यथा–

**मूले कण्टकसन्ततिरुपरि च विकचानि रक्तकुसुमानि ।**
**एतावतैव शाल्मलिरनुहरति न पङ्कजवनस्य ।।२५।।**

अत्र शाल्मलिसादृश्यं कण्टककुसुमसाधर्म्यात् पङ्कजवनेऽनुवृत्तं प्रतीयमान–सौगन्ध्यादिगुणाभावसूचकेन वचनेन निवर्त्यते।

द्वितीया यथा–

**कार्यज्ञः प्रष्टव्यो न पुनर्मान्यो मम प्रियो वेति ।**
**गुरुरस्त्रा(रत्रा?)सनसेव्यः प्रियानितम्बः कदा मन्त्री ।।२६।।**

अत्र यो यस्य मान्यः प्रियो वा स तस्य मन्त्रीति सामान्येन मान्यत्वप्रियत्वाभ्यां मान्यप्रियानुवृत्ता प्रष्टव्यता प्रियानितम्बदृष्टान्तावष्टम्भशोभिनाभिधीयमान–कार्यज्ञत्वा भावसूचकेन वचनेन निवर्त्यते।

२. यत्र असम्भवेन विधेयं निषिध्यते सा **असम्भवनैषेधिकी**। सा द्विधा अप्रस्तावनिमित्ता, अनुत्पादनिमित्ता च।

तयोराद्या यथा–(गास. ३.४४)

**वेविर–सिण्ण–करंगुलि–परिग्गह–क्खलिअलेहणी–मग्गे ।**
**सोत्थि च्चिअ ण समप्पइ पिअसहि लेहम्मि किं लिहिमो ।।२७।।**

(वेपनस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे ।
स्वस्त्येव न समाप्यते प्रियसखि लेखे किं लिखामः।।)

अत्र स्वस्तीति पदस्यासमाप्तौ सन्देशदानादेस्तदुत्तरकालभाविनोऽप्रस्ताव इति तन्निमित्तत्वेनासम्भवेन लेख्यस्य विधेयत्वं निषिध्यते।

द्वितीया यथा–

**लइ वप्पुड पिउ दुद्ध कत्तो अम्हाणहुं छासि ।**
**पुत्तहुमत्थे हत्थो जइ दहि–जम्मेवि जअ आसि ।।२८।।**

(गृहाण अनुकम्प्य पिब दुग्धं कुतोऽस्माकं तक्रम्।
पुत्रकमस्तके हस्तो यदि दधिजन्मन्यपि जातमासीत्।।)

अत्र दध्नोऽप्यनुत्पत्तौ तदुत्तरकालभाविनस्तक्रोत्पादनस्यासम्भवेन तक्रपानस्य विधेयत्वं निषिध्यते।

३. यत्र विरोधिना शब्देनार्थेन वा कार्यं निवार्यते सा **विरोधनैषेधिकी।**
तयोराद्या यथा–

**ते पुच्छिज्जहि वत्तडी जे तहि दिसिहि न एंति ।**
**जोंहि स दिट्ठि गोरडी ते दुक्करु जीअंति ॥ २९॥**
(ते प्रष्टव्याः वार्ता ये तस्या दिशो नायान्ति ।
यैस्या दृष्टा गौरी ते दुष्करं जीवन्ति ॥)

अत्र ते वार्तां प्रष्टव्याः ये तस्या दिशो नायान्तीति पूर्वापरविरोधिना वाक्येन केनचित् परिजनविधित्सितः प्रियाप्रवृत्तिप्रश्नो निषिध्यते।

द्वितीया यथा–(हे.प्रा. व्या. ४.४१८)

**पिअसंगम कउ निद्दडी पिअहो परोक्खहो केम्ब ।**
**मइं बिन्नि वि विन्नासिश्चा निद्द न एम्व न तेम्व ॥ ३०॥**
(प्रियसङ्गमे कुतो निद्रा प्रियस्य परोक्षस्य कथम् ।
मया द्वे अपि विनाशिते निद्रा नैवं न तथा ॥)

अत्र समस्तप्राणहृद्भेदसाधारण्येन प्रवृत्तो निद्रार्थस्तद्विरोधिभ्यां प्रियसङ्गम–वियोगाभ्यां निषिध्यते।

४. यत्रार्थित्वा(र्थितत्व?)प्रवृत्तमन्येनैव तत्कार्यसिद्धौ निषिध्यते सा **कृतार्थत्वनैषेधिकी**।
यथा– (गा.स. (वे) ७७२)

**किं तस्स पारएणं किमग्गिणा किं व गब्भहरएण ।**
**जस्स उरम्मि णिसम्मइ/णिमज्जइ उम्हाअंतत्थणी जाआ ॥ ३१ ॥**
(किं तस्य प्रावारकेण किमग्निना किं वा गर्भगृहकेण ।
यस्योरसि निमज्जति ऊष्मायमाणस्तनी जाया ॥)

अत्र प्रावारविलासाग्निगर्भगृहकाणि हैमनशीतार्त्तिनिवृत्तये प्रवृत्तानि तदर्थकारिणोपारूढयौवनोपगूढप्रियाकुचोष्मणा निवर्त्यन्ते।

५. यत्र परिसंख्यातेनार्थेन शेषं निषिध्यते सा **परिसंख्यानैषेधिकी**। यथा–

**वे वावल्ल विउद्धमुहे सज्जिअ–तिलइ ति कंड ।**
**कअ–कण्णुप्पलि पंच सर तहो कामहो कोदंड ॥ ३२॥**
(द्वौ बाणौ विबुद्धमुखे सज्जिततिलके त्रयः काण्डाः ।
कृतकर्णोत्पले पञ्च शरास्तस्य कामस्य कोदण्डः ॥)

अत्र जगज्जिगीषया चक्रीकृतकामकोदण्डानुकारिणि मुखे विबुद्धेऽपि लोचनोत्पलद्वयस्यैव प्रकाशमानत्वात् कुसुमसायकस्य द्वावेव बाणौ न त्रयो न पञ्चेति, सज्जिततिलके त्रय एव, न द्वौ न पञ्चेति, कृतकर्णोत्पले पञ्चैव न द्वौ न त्रय इति परिसंख्यातेनार्थेन शेषं निषिध्यते।

६. यत्रैकावधारणेनान्यत् पराक्रियते सा **नियमनैषेधिकी**। यथा–

**स च्चिअ जीआ ते च्चिअ मग्गणा सा अ जस्स धणुइट्ठी ।**
**दिट्ठिअ कुवलयविलोअणाण सो जअइ कंदप्पो ॥ ३३॥**

(सैव ज्या त एव मार्गणाः सा च यस्य धनुर्यष्टिः।
दृष्ट्या कुवलयविलोचनानां स जयति कन्दर्पः॥)

अत्र ज्यामार्गणधनुर्यष्टीनामन्यत्र भेदेनोपलम्भात् कन्दर्पविषयेऽपि तद्भेदोऽनुवृतः कुवलयविलोचनादृष्टेस्तेन तेन संस्थानेन तत्तत्कार्यकरणात् सैव सर्वात्मिकेत्य–वधारणं(णेन) निवर्त्यते। एतेन नियमसदृशफलो विनिग्रहोऽपि व्याख्यातः। यथा–

**भवतु समदना रतये तिलकवती चारुचम्पकच्छाया ।**
**धनचन्दनधवलकुचा कान्ता तव विद्विषामटवी ॥ ३४॥**

आदिग्रहणात् असम्भवनियमो विशेषे प्रत्यक्षश्रुतिरित्यादयो गृह्यन्ते। तयोः –

**असम्भवनियमो** यथा–

**हारो थणाण सवणाण कुण्डला मेहला णिअंबस्स ।**
**अच्छीण उणो विभवे वि मंडणं कज्जलसलाआ ॥ ३५॥**

(हारः स्तनयोः श्रवणयोः कुण्डले मेखला नितम्बस्य ।
अक्ष्णोः पुनर्विभवेऽपि मण्डनं कज्जलशलाका ॥)

**विशेषप्रत्यक्षश्रुति**र्यथा–(उ.राच. १.३८)

**इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो–**
**रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।**
**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकरसः(सरः)**
**किमस्या न प्रेयो यदिपरमसह्यस्तु विरहः ॥ ३६॥**

सेयमुद्भूतसम्बन्धव्यतिरेकेण इ x x x दं पदार्थानामितरेतरं प्रत्याकाङ्क्षासन्नि–धियोग्यतापेक्षिणी **व्यपेक्षा** इत्युच्यते॥

**(आकाङ्क्षा)**

का पुनरियमाकाङ्क्षा नाम? **प्रतिपत्तुर्जिज्ञासा।**

सा कथं पदार्थानामुपपद्यते? कारणे कार्योपचारात्।

तथा हि– अभिधानपर्यवसानमभिधेयपर्यवसानं च जिज्ञासोत्पत्तिकारणं, तच्चोपचारेणाकाङ्क्षेति व्यपदिशन्ति। तत्राभिधानपक्षे द्वारमित्येकपदप्रयोगेऽभिधानमेव न पर्यवस्यति। न ह्यनुच्चरिते योग्यप्रतियोगिनी सन्निधायिनि पदे संव्रियतामपाव्रियता–मित्यादावन्विताभिधानं भवति। वृद्धव्यवहारे चान्वितार्थान्येव पदानि प्रतीयन्ते; बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवण समनन्तरभाविनीं विशिष्टचेष्टानुमितां शब्दकारणिकां प्रतीतिमन्वितार्थविषयाम(न)वगच्छन्नन्वित एवार्थे पदानामभिधानसामर्थ्य–मवधारयति। विश्वजिता यजेतेत्यादौ पुनरनेकपदप्रयोगाल्लब्धेऽन्विताभिधानेऽभिधेयमेव न पर्यवस्यति, अत्रानुष्ठेयतयावगतस्य वाक्याभिधेयस्यार्थस्यानुष्ठातारमन्तरेणानुपपत्तेः, तदुपपत्तये युक्तैवानुष्ठातृजिज्ञासा; तस्यां च सत्यामपरिपूर्णत्वावगमाल्लोकवदध्याहारे कर्तव्ये योग्यत्वात् स्वर्गकाम एवानुष्ठाताध्याह्रियते। अभिहितान्वयवादिपक्षेऽपि पदार्थान्तरमन्तरेणान्वयासामर्थ्यात्तदुपपत्तये युक्तैव प्रतियोगिजिज्ञासा; तस्यां च सत्यामपरिपूर्णवाक्यपरिपूरकतयान्विताभिधानवदेव प्रकरणादिवशेन योग्याध्याहारः क्रियते।

**(अन्विताभिधानम्)**

नन्वेवं सति यत्र पदत्रयं प्रयुज्यते गामानय शुक्लामिति लोके, तत्राभिधानाभिधेया–पर्यवसानयोरसम्भवान्नाकाङ्क्षास्तीति कथमन्विताभिधानम्? वाक्यस्य गामानयेत्येतावतैव परिपूर्णत्वात् सत्यम्, पदानुच्चारण एवमेतत्। उच्चरिते सत्येतस्मिन्नस्याप्यानयति–सन्निधानात् तदेकवाक्यत्वावगमादानयत्यन्वितस्यार्थाभिधायित्वावधारणादाकाङ्क्षां च विना तदसम्भवादानयतेराकाङ्क्षा परिकल्प्यते। उक्तं च (शाबर–)**भाष्यकृता– 'भवति च सा रक्तं प्रत्याकाङ्क्षा'** (शाभा. १.२.७) इति। तेन तत्रान्विताभिधान–सिद्ध्यर्थमेवाकाङ्क्षा। यदि परमयं विशेषः, द्वारमित्यादौ तस्यैव पदस्यान्विताभिधाना–काङ्क्षा, गामानय शुक्लामिति तु पदान्तरस्येति। उक्तं च–

**अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा।**
**प्रतियोगिषु जिज्ञासा सा साऽऽकाङ्क्षेति गीयते ॥३७॥** (प्रप.९) इति।

सा चेयमाकाङ्क्षा विभागे सति भवन्तीति व्युत्पत्तावुपलक्षणमाश्रीयते। किमिति पुनः सन्निधियोग्यतैव नाश्रीयते?

निराकाङ्क्षेणान्विताभिधानादर्शनात्। अयमेति पुत्रो राज्ञः पुरुषोऽयमपसार्यतामिति पुत्रसम्बन्धनिराकाङ्क्षो राजा न पुरुषेणान्वीयते।

कस्मात् पुनरुभयोः पुत्रपुरुषयोः सन्निधियोग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञः सम्बन्धो न पुरुषेण?

उच्यते, न्यायसापेक्षत्वाद् वााक्यार्थप्रतिपत्तेः नित्यसापेक्षेणैव राजा सम्बध्यते, तेन सम्बन्धनिराकाङ्क्षः न पुरुषेण सम्बन्धमनुभवतीति आकाङ्क्षापि व्युत्पत्तावुपलक्षणमाश्रीयते।

**परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयः ।**
**व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणम् ॥३८॥** (प्रप.८/९)

सा चेयमाकाङ्क्षा प्रतियोगिषु न सर्वेषु सहसैव युगपदुपजायते, अपि तु कारणोपनिपातात् क्रमेण। तथा हि— क्रियया (क्रियायाः) कर्तारमन्तरेणासम्भवात् तदवगतौ कर्ता प्रथममपेक्ष्यते, स च निष्फले व्यापारे न प्रवर्तत इति कर्मपेक्षते, व्यापारश्च करणमन्तरेणाशक्यः साधयितुमिति करणापेक्षा। एवमधिकरणादयः क्रियाकारकविशेषणादयश्चापेक्षणीया इति कारणोपनिपातः स्यात्। क्रियादिषु यथा—

**जिज्ञासा जायते बोद्धुः सम्बन्धिषु तथा तथा ।३९।**
**यद्यदाकाङ्क्षितं योग्यं सन्निधिं प्रतिपद्यते ।**
**तदन्वितः पदेनार्थः स्वकीयः प्रतिपाद्यते ॥४०॥**(प्र.प८/९)

**(सन्निधिः)**

अथ सन्निधिः कः?

**योग्यस्याकाङ्क्षितस्य यदानन्तर्यम्।**

स द्विधा— अभिधानविषयः अभिधेयविषयश्च।

तत्रोच्चारणनिमित्तो**ऽभिधानविषयः**, अविनाभावनिमित्तो**ऽभिधेयविषयः**। तयोः—

आद्यो(ऽभिधानविषयो) यथा—(काव्याद. ३१.४३)

**लीलास्मितेन शुचिना मृदुनोदितेन**
**व्यालोकितेन लघुना गुरुणा गतेन ।**
**व्याजृम्भितेन जघनेन च दर्शितेन**
**सा हन्ति तेन गलितं मम जीवितेन ॥**

अत्र लीलास्मितादिभिः शुच्यादीनि विशेषणानि यथासान्निध्यमभिसम्बध्यन्ते।

**द्वितीयो** यथा— (कासूवृ. ५.१.१४)

**मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।**
**वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ।। ४२।।**

अत्र दहत्वित्यादिका क्रिया तदविनाभावनिमित्तकात् सान्निध्यादध्याहृतानलादिभिः सम्बध्यते।

ननु च सन्निधिवदाकाङ्क्षाप्यविनाभावनिमित्ता किमिति नेष्यते? यद्धि येन विना न भवति नियोगतस्तेन तदाकाङ्क्ष्यते। क्रिया हि कारकाविनाभाविनी; तां प्रतीत्य कारकं जिज्ञासते। एवं कारकमपि बुद्ध्वा क्रियामिति।

तदयुक्तम्, जिज्ञासाविरामानुपपत्तेः; तथा ह्यविनाभावेन कारकजिज्ञासाप्युपपद्यते।

अथ प्रयोजनाभावात् कारकातिरिक्तमन्यन्न जिज्ञास्यते, तर्हि क्रियामात्रावगमेऽपि यत्र कारकज्ञानेन प्रयोजनं नास्ति तत्र जिज्ञासा न स्यात्। अनुष्ठेयतया हि क्रियायामवगतायां कारकोपादानमन्तरेण तदनुष्ठानानुपपत्तेः कारकज्ञानं प्रयोजनवत्। वर्तमानापदेशादौ त्वननुष्ठेयतया नास्ति कारकज्ञानेन प्रयोजनम्।

अथ च यत्रापि वाक्यमपरिपूर्णं मन्यन्ते, साकाङ्क्षार्थाभिधायितया चापरिपूर्णता; अत एव च तत्राध्याहारमपि कुर्वन्ति। यत्रापि च अनुष्ठेयावगतिः, तत्रापि निश्शेषकारक–जिज्ञासा स्यात्। तथा च देवदत्त गामानयेति करणानुपादानादपरिपूर्णता स्यात्।

अथैककारकज्ञानेनापि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा; देवदत्त गामभ्याज दण्डेनेति प्रयुक्तेऽपि दण्डशब्दे तदाकाङ्क्षा न स्यात्। ततश्चानाकाङ्क्षितत्वात् तस्य तदन्वयो वाक्यार्थे न स्यात्।

अथ दण्डपदोच्चारणात् तत्राकाङ्क्षा परिकल्प्यते, अन्यथा दण्डपदस्यानन्वये तत्पदोच्चारणनर्थकं स्यादिति।

एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्य(न)न्वयप्रसङ्गः। न हि वेदपदोच्चारणेनानर्थकेन (न) भवितव्यमिति किंचन प्रमाणमस्ति। न च तत्राकाङ्क्षोदये किंचित् कारणान्तरमस्तीति सोमं क्रीणातीत्यतोऽधिकस्यानन्वितता स्यात्। अतो नाकाङ्क्षायामविनाभावो निमित्तत्वेनाश्रीयत इति।।

आकाङ्क्षावच्च सन्निधावपि सन्निधापकक्रमेणैव क्रमो वेदितव्यः। तदनुसारेण चान्विताभिधानमपि तथैवेति।।

**सन्निधिश्शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ।**
**अध्याहृतेनाप्यर्थेन लोके सम्बन्धदर्शनात् ।। ४३।।**

**सहसैव न सर्वेषां सन्निधिः प्रतियोगिनाम् ।**
**सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥४४॥**
**यथायथा सन्निधानं जायते प्रतियोगिनाम् ।**
**तथातथा क्रमेणैव शब्दैरन्वितबोधनम् ॥४५॥** (प्रप.८/९)

**(योग्यता)**

अथ का योग्यता? **यदेतत् सम्बन्धार्हत्वं नाम**।

तद् द्विधा– **मुख्यार्थद्वारकं जघन्यार्थद्वारकं** च।

कः पुनर्मुख्यार्थो जघन्यार्थ इति?

श्रवणसमनन्तरं साक्षादेव शब्दाद् यत्रार्थः प्रतीयते स मुखमिव प्रथमं भवतीति **मुख्यः**।

यस्तु गुणसम्बन्धादिव्यवधानेन शब्दादवगम्यते स जघनमिव पश्चाज्जायत इति **जघन्यः**। तयोः –

**मुख्यस्त्रिधा** 'जात्यादिमुख्यः, आकृत्यादिमुख्यः, भ्रान्त्यादिमुख्यश्च। तेषु

जातिगुणक्रियाभिधायिभिः शब्दैर्योऽभिधीयते स **जात्यादिमुख्यः**। गौः पदा न स्प्रष्टव्या, शुक्लां गामभ्याज, पाचकमानय, यज्ञदत्तं भोजयेति।

स एवाऽऽलेख्यप्रतिकृतिप्रतिमाप्रतिबिम्बादिविषयः **आकृत्यादिमुख्यः**। यथा– 'भवनभित्तौ का x x x , गावः क्रियन्तां, विष्णुं पञ्चामृतेन स्नपय, अप्सु चन्द्रमसं पश्येति।

विपर्ययाध्यासविवर्तविपरिणामादिविषयो **भ्रान्त्यादिमुख्यः**। कोऽयमनाकाशे शशी, स एष बालाबाहुमूले बालचन्द्रमाः, तदेतदलातचक्रं विस्फुरति, तदिदमिन्द्रा–युधं विलोक्यत' इति।

**जघन्योऽपि** त्रिधा– गौण, उपचरितो लाक्षणिकश्च।

ययोर्द्रव्यशब्दयोस्सामानाधिकरण्यप्रयोगे विशेषणविशेष्यभावः प्रतीयते स **गौणः**। यथा– गौर्वाहीकः, सिंहो माणवकः, तृणं लक्ष्मीः, गोष्पदं समुद्र इति।

समानाधिकरणशब्दप्रयोगे योऽन्यविशेषणत्वेन प्रसिद्धः कुतश्चिन्निमित्ता–दन्यविशेषणत्वं लभते स **उपचरितः**। यथा– शुक्लं यशः, मधुरं वाक्यम्, सुरभि शीलम्, सुभगः स्वभाव इति।

यस्तु शब्दोपात्तेनार्थेन क्रिया x x x समर्थेनाविनाभावात् सहचरणादि स **लाक्षणिकः** । यथा– यष्टीः प्रवेशय, छत्रिणो गच्छन्ति, मञ्चाः क्रोशन्ति, गङ्गायां घोषः प्रतिवसतीति॥

नन्वेवं सति जात्यादिशब्दार्थाः सर्वे लाक्षणिका भवेयुः, तेऽपि हि स्वरूपेण क्रियां साधयितुमपर्याप्तैर्जात्यादिभिरविनाभूतव्यक्तिरूपतयोपलक्ष्यन्ते।

नैवम्; जात्यादिप्रवृत्तिनिमित्तानां क्रियासिद्धिषु x x x तीराद्यर्थानामपि समन्वयो दृश्यते। नैवं गौरालभ्यतां प्रोक्ष्यतां विशस्यतामित्यादौ अनपेक्षितव्यक्तीनां गोत्वादिजातीनामपि। एतेनारुणया क्रीणाति, अभिक्रामं जुहोतीत्यादौ गुणक्रिययोर्द्रव्य–व्यवधानेनापि क्रियासमन्वये द्रव्याणामलाक्षणिकत्वमेवेत्यभिहितं भवति।

ननु च जातिगुणक्रिया x x x पाकेन जीवतीति।

नैवमत्र जात्यादीनां विशिष्यते/विशेष्यता नद्रव्यरूपत्वात्। तदुक्तम्–

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥४६॥**(वाप. ३.४.३)

कृदभिहितश्च भावो द्रव्यवत् प्रकाशत इति। एवं च मुख्यवृत्तीनां जघन्यवृत्तीनां च शब्दानां प्रयोगे सोऽर्थः, यत्र सम्बन्धित्वेन उपलम्भः यद्येवं यजेत स्वर्गकाम इत्यादौ स्वर्गयागयोः सम्बन्धित्वेनानुपलम्भात् कथं योग्यत्वेनावधारणम्, अनवधारित–योग्यतयोश्च कथमन्विताभिधानम्? उच्यते–

**सामान्येनैव योग्यत्वं लोके यदवधारितम् ।**
**तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥४७॥** (प्र.प८/९)

## *(६. सामर्थ्यम्)*

दृष्टं च साध्यसाधनयोर्लो x x x x यात्मकसामर्थ्याख्यसम्बन्धो मुख्यता (तया?) व्यपेक्षेत्युच्यते। व्यपेक्षावतां पदार्थानां मिथः सम्बन्धिरूपता **सामर्थ्यम्**।

तत्त्रिधा **१. भेदः, २. संसर्गः, ३. उभयं** च। तत्र –

(१) राज्ञो भृत्य इत्यादौ यदा तावदेतदवधृतं परायत्तार्थवृत्तिरयं भृत्यशब्दो न स्वतन्त्रार्थ– वृत्तिः, तदा सामान्येन स्वामिसंसर्गस्यावगतत्वात्[1]स्वामिविशेष–ज्ञापनायोपादीयमानो राजशब्दः स्वाम्यन्तरेभ्यो भृत्यशब्दार्थं व्यावर्तयति। सोऽयं स्वाम्यन्तरव्यवच्छेदो **भेद** इत्युच्यते।

१. इत्येव राघवः।

(२) यदा तु राजपुरुष इत्यादावनवगतापरायत्तभावस्य पुरुषस्य स्वामिसम्बन्धद्योतनाय राजशब्दः प्रयुज्यते, तदा विशेषसंसर्गस्य शब्दोपादानत्वादनवकाशो विशेषान्तरसम्पातः, तदा ह्यशब्दा स्वाम्यन्तरनिवृत्तिरर्थादवसीयते। स **संसर्गः**।

(३) यदा त्वर्थावगतसामर्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापेक्षायां समाप्तावेव (समास इव?) भेदसंसर्गेण सामर्थ्यं भवति, यथा नीलं च तदुत्पलं च नीलोत्पलमिति **(तदुभयम्)**।

यत्र तु न सम्बन्धयोग्यता न तत्र सामर्थ्यम्, यथा— क्लिद्यते वस्त्रं, नीलम् उत्पलम्, आलि कर्णे, नेह कश्चित्पुरुषः व्याघ्र सरति पल्लीम्, पश्य सखे कष्टं **X X X**, गच्छ त्वम् यूपाय दारु शोभनं शैले, निवर्तस्व व्याघ्राद् भयं देवदत्तस्य यज्ञदत्तात्, भार्या राज्ञः पुरुषो ब्राह्मणस्य, सक्तस्त्वम् अक्षेषु शौण्डः पिबति पानागारे। अयं दण्डो हरानेन फलानि, अन्तरा त्वां च मां च कमण्डलुः, अन्तरेण तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकारः, ओदनं पच तव भविष्यतीति। अत्र प्रथमेष्वभिन्नवाक्यत्वात् 'तिङ्ङतिङ'(८.१.२८) इति निघातो न भवति।

**(सम्बन्धः)**

कः पुनरयं सम्बन्धो नाम? **अहानिर्व्यपेक्षा व्यतिषङ्ग** इति। तथा हि—

सम्पूर्वो बध्नाति **अहानौ** वर्तते, तद्यथा अस्ति नो गर्गैः सम्बन्धः, अस्ति नो वत्सैः सम्बन्ध इति। तथा व्यतिषङ्गे वर्तते, योऽयसा रज्ज्वा वा कीलादौ व्यतिषक्तो भवति स सम्बन्ध इत्युच्यते। तत्र यदा सम्बन्धस्याहानिरर्थः तदा ऊरीकरोति कारिकाकरोति शुक्लीकरोति पटपटाकरोति चकासाञ्चकार विदाङ्कुर्वन्तु, लुनीहि लुनीहित्येवायं लुनाति, भ्राष्ट्रमट मठमट दूरमट इत्येवायमटति इत्येवमादयः प्रयोगा भवन्ति। न ह्येते कदाचिदप्यन्योन्यं जहतीति।

यदा सम्बन्धशब्दस्य **व्यपेक्षा** अर्थः तदा गुरुकुलं देवदत्तस्य, सूर्यमपि न पश्यन्ति असूर्यम्पश्या राजदाराः, किञ्चिदपि न कुर्वाणः अकिंचित्कुर्वाणः, शङ्कुलया कृतः खण्डः शङ्कुलाखण्डः, दध्नोपसिक्त ओदनो दध्योदनः, अश्रेणयः श्रेणयः कृताः श्रेणीकृताः, कण्ठे कालोऽस्य कण्ठेकालः, केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि इत्यादयः प्रयोगा भवन्ति। एतैः समासावस्थायामपि देवदत्तादीन्यपेक्ष्यन्ते।

यदा तु सम्बन्धशब्दस्य **व्यतिषङ्गोऽर्थः** तदा उपकुम्भम्, नीलोत्पलम्, गोगर्भिणी, पूर्वकायः, सप्तर्षयः, प्लक्षन्यग्रोधौ, कष्टश्रितः, काक X X X च मिथो विशेषणविशेष्यभावेन व्यतिषज्यन्ते।

यत्र हि **पूर्वोत्तरपदयोः सङ्गतार्थता तत्सामर्थ्यं सम्बन्धः**, स च विशेषणविशेष्यभाव इत्याख्यायते; तत्र चैकस्य प्राधान्यमन्यस्योपसर्जनत्वम्।

न हि प्रधानयोरुपसर्जनयोरेव वा सम्बन्धः कल्पते, प्रधानस्या–परार्थत्वादुपसर्जनस्य X X X X X लक्षित(?) परस्परं पदद्वयं प्रधानोपसर्जनभावेन विशेषणविशेष्यभावमासादयति।

स च प्रधानोपसर्जनभावः कदाचिच्छब्दनिबन्धनः, कदाचिदशब्दोपादानः सामर्थ्येनावसीयते।

**शब्दनिबन्धनो** यदा वैयधिकरण्यं XXX उपसर्जनशब्दा हि प्रधानोपकाराय परिणतं स्वार्थमाचक्षाणाः XXX मिदधानाः प्रथमयैव संस्क्रियन्ते।

**अशब्दोपादानो** यदा सामानाधिकरण्यम्, अपरार्थतया हि प्रातिपदिकस्याव्यतिरेके वृथा (यद् आ–)विर्भवति शब्दैः तदुभयोर्द्रव्यशब्दतायामुपपद्यते, सा च गुणादीनां मतुब्लोपादिना भवति।

सोऽयं विभक्तिभेदतः सामर्थ्यतश्च प्रधानोपसर्जनभावो द्विप्रकारः मुख्यवृत्त्या उपचारवृत्त्या च।

**सम्बन्धविभक्त्या** यथा– 'राज्ञः पुरुषः, यूपाय दारु।

**कारकविभक्त्या** तु श्रूयमाणक्रियोऽश्रूयमाणक्रियश्च।

**श्रूयमाणक्रियो** यथा– कष्टश्रितः, व्याघ्राद् भयम्।

**अश्रूयमाणक्रियो** यथा– शङ्कुलया खण्डः, अक्षेषु शौण्डः।

**मुख्यवृत्त्या** यथा– नीलमुत्पलम्, वीरः पुरुषः।

**उपचारवृत्त्या** यथा– पुरुषो व्याघ्रः, सिंहो माणवकः।

विशेषणविशेष्ययोरुपसर्जनप्रधानभावः सामानाधिकरण्ये विभक्त्यभेदादशक्यः शब्दतोऽवधारयितुम्, सम्बन्धसामर्थ्यात्तु प्रतीयते। न हि सम्बन्धः प्रधानयोरेव वा सम्भवति।

ननु च नीलमुत्पलमित्येकैकपदप्रयोगादनवच्छिन्ना X X X प्रथमा न प्राप्नोति यथा नीलशब्दस्तावदयं स्वार्थसामान्यवचनोऽव्यतिरेकात् प्रातिपादिकार्थस्य प्रथमयैव सम्बध्यते, तथैवोत्पलशब्दोऽपि। यदेव केवलमव्यतिरेकार्थाभिधायि पदं पदान्तर–

सन्निधानेऽपि तत् तदेव। ततो यमर्थमभिधातुं योग्यमवधृतमस्य रूपं तमेव पदान्तरसन्निधावपि प्रत्याययति, रूपभेदात्। न हि रसनमसन्निधौ दर्शनस्य मधुरादिव्यञ्जकदर्शनसन्निधौ नीलादिव्यक्तिसामर्थ्यं लभते। किंतु पदयोः परिच्छिन्नार्थः पुमांस्तयोः सन्निधौ प्रयोगसामर्थ्यादर्थयोः परस्परोपश्लेषयोग्यत्वादेकवाक्य–रूपानुग्रहाच्चान्योन्यं प्रधानोपसर्जनभावेन विशेषणविशेष्यभावमुपैति। तथा हि – यत्र विशेषणं विशेष्यं चैकस्मिन्नर्थे सम्भेदं प्रतिलभते तत्र यश्शब्दः स पूर्वोत्तरपदाधिष्ठानमेनं प्रत्याययति। उत्पलशब्दोऽभिप्रवर्तमानः सर्वोत्पलावग्रहरूपेण प्रवर्तते नीलशब्दः प्रवर्तमानो विशिष्टावग्रहरूपेणावच्छिनत्ति।

यदि वा नीलमित्येतत्प्रवर्तमानन्यूनाधिकभावमनपेक्षमाणमनेनैव धर्मेण सर्वयोग्यं सदुत्पलमिति शब्दान्तरेण विशिष्टायां योग्यतायां नियम्यते।

अथवा यथा कृष्णः शुक्लश्चायं मृगः सारङ्गः शबल इति वा, तथा नीलोत्पल इत्युभयरूप एवार्थात्मा ह्युभयत्र सन्निवेश्यते नीलं चोत्पलं चैकं नीलोत्पलमिति; तौ यस्मिन्नुभयगुणमनु विभागमाप्यमानौ संमूर्च्छिताविवार्थौ भवतः, तत्तयोरेकमधिकरणम्।

यदि वा नीलशब्दः प्रवर्तमानो नीलगुणमात्रमुपादाय प्रवर्तते, न त्वनेनोत्पलादय उपात्ताः, नापि परित्यक्ताः। एवमुत्पलशब्दो विजातियोगमात्रमुपादाय प्रवर्तते, न नीलादींस्त्यजति, नोपादत्ते। तत्र यदैव भिन्नेऽर्थरूप इदमिति सर्वनाम्ना प्रत्यवमृश्यमाने उपश्लिष्यते नीलमुत्पलं चेदं द्रव्यमिति, तदा शब्दभेदाद् भिन्नमेकमेव द्रव्यं विशेषणं विशेष्यमधिक x x x क्तः पदद्वयसन्निधानायत्तत्वाद् विशेषणविशेष्यभावस्य वाक्यार्थत्वं, न पदार्थता।

तदिदमुक्तम्–'यदत्राधिक्यं वाक्यार्थः स' इति (मभा. २.३.४६ वा.)। नीलमुत्पलमिति विशेषणविशेष्ययोरुभयस्य च विशेष्यत्वादुपसर्जनत्वाप्रसिद्धिः, यथा ह्युत्पलशब्दो नीलशब्देनाभिसम्बध्यमानो विशेष्यवचनः तथा नीलशब्दोऽप्युत्पल–शब्देनाभिसम्बध्यमानो विशेष्यवचनः सम्बध्यते।

नैवम्; एकस्यात्र प्राधान्यं विवक्षितं, तद्विशेषणत्वम् अपरस्य, उत्पलस्य चात्र प्राधान्यं विवक्षितं नीलशब्दस्योपसर्जनत्वमिति।

यदा तर्हि नीलस्य प्राधान्येन विवक्षा उत्पलस्य चोपसर्जनत्वेन तदा कर्तव्यं सामानाधिकरण्यम् ; न ह्यसौ द्वन्द्वः, उत्पलं च नीलं चेति ; नापि षष्ठीसमास उत्पलस्य नीलमिति; अपि तु द्वाविमौ प्रधानशब्दावेकस्मिन्नर्थे युगपदुपरुध्येते। न च

द्वयोः प्रधानयोरेकस्मिन्नर्थे युगपदुपरोधे प्रयोजनमस्तीति प्रयोगसामर्थ्याद् गम्यते नूनमेकमिह प्रधानं तद्विशेषकं चापरम्।

एतावाँस्तु सन्देहः—किं विशेष्यम्, किं विशेषणमिति? तत्र

द्रव्यं विशेष्यं गुणो विशेषणं, द्रव्यस्यान्यानपेक्षिणः साक्षात्क्रियासूपयोगेन प्राधान्यात्।

ननु गुणस्यापि साक्षात्क्रियासूपयोगो दृश्यते, यथा 'श्वेतं छागमालभेत' इति?

नैवम्; इह श्वेताभावे कृष्णमपि छागमालभते, न तु श्वेतां पिष्टपिण्डीमालभ्य कृती भवति। एवमुपचारप्रवृत्तावपि पुरुषव्याघ्र इत्यादौ यदान्तर्भूतोपमान–सम्बन्धप्रतीतभेदा, व्याघ्रादिशब्दैरुपमेयः पुरुषादिः अभिधीयते तदा सामानाधि–करण्योपपत्तौ 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२.१.५६) इति समासो भवति। एवं प्रपचति साधु पचतीत्यादयो द्रष्टव्याः।

कथं पुनः सामानाधिकरण्येन क्रियाविशेषणत्वे साध्वादयोऽसत्त्ववचना भवन्ति?

उच्यते—उपसर्गाणामिव क्रियाविशेषणानामप्यसत्त्वभूतानामेव क्रियां प्रति गुणभावो भवति, यथा पच्यादिकं विशेषे स्थापयन् असत्त्वार्थः प्रशब्दो विशेषणत्वं लभते, एवं साधुशब्दोऽपि क्रियात्मभूतं धर्ममुत्कर्षादिकं क्रियास्थमसत्त्वभूतं क्रियानुप्रविष्टमभिदधानः क्रियानुरोधादेवासत्त्वभावमापन्नः क्रियाविशेषणत्वं लभते।

कथं पुनः प्रपचतीत्यादौ प्रादेरुभयविशेषणत्वे क्रियाभागेनैव सम्बन्धो भवति? सति वा कथमुभयविशेषणत्वम्?

उच्यते— यथा मासो जातस्येति मासाख्यः क्रियाकलापः (कथं) प्रथमकुक्षिवियोगाख्यस्य जन्मनोऽवधिभावेन परिच्छेदको भवति, जन्मप्रतिलब्धां वा सत्तां समावृत्त्या परिमिमीते, यथा च कष्टश्रित इत्यत्रोपात्तक्रियाविशेषपरिच्छिन्नः कर्ताऽभ्यन्तरीकृतसाध्यसाधनसम्बन्धः क्रियायोगे श्रयतिक्रियासम्बन्धात् कष्टे कर्मत्वमिति श्रयणक्रिया कष्टेन सम्बन्धमनुभवति, यथा च वृकाद् भीत इत्युपात्तक्रियावच्छिन्नः कर्ता भयक्रियासम्बन्धाद् वृकस्यापादानत्वमिति भयक्रियापूर्वकं वृकेन सम्बध्यते, तथेहाप्युपात्तपच्यादिक्रियाविशेषपरिच्छिन्नः कर्ताऽभ्यन्तरीकृतसाध्य–साधनसम्बन्धः क्रियायोगे प्रादीनामुपसर्गत्वम् (मभा. १४.४९) इति क्रियापूर्वकं प्रादिभिः सम्बध्यत इति। सर्वेऽपि च समुदायसम्बन्धिनोऽवयवस्पर्शेनैव तद्वता

समुदायेन सम्बध्यन्ते। तदुक्तम्—

**समुदायेन सम्बन्धो येषां गुरुकुलादिना ।**
**संस्पृश्यावयवाँस्ते तु युज्यन्ते तद्वता सह ॥४८॥** (वाप.३.४८ वृ.)

## *(७. अन्वयः)*

**व्यपेक्षादिभिरेवार्थपरतयोपात्तानां पदार्थानां मिथोऽभिग्रथनमन्वयः।**

स त्रिधा— १. **शाक्तः**, २. **वैभक्तः** ३. **शक्तिविभक्तिमयश्च**। तेषु—

कर्मादिशक्तिभिर्निर्वृत्तः **शाक्तः**,

सम्बन्धादिविभक्तिभिर्**वैभक्तः**,

उभाभ्यां पुनः **शक्तिविभक्तिमयः**।

(१. **शाक्तः**)

तत्राख्यातसुब्विभक्तिभ्यां कर्तृकर्मणोरभिधाने **शाक्तो** यथा—

**अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।**
**तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥४९॥** (माघ. २.५)

कृदाख्याताभ्यां भिन्नकालस्थकर्तृशक्तिद्वयाभिधाने सुब्विभक्तिभिः **कर्मकरण–सम्प्रदानाभिधाने** च शाक्तो यथा— (काव्याद. २.२४८)

**अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।**
**अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥५०॥**

आख्यातविभक्त्या हेतुशक्त्यभिधाने सुब्विभक्तिभिश्च **कर्मकर्त्रपादाना–धिकरणशक्त्यभिधाने** यथा—

**स सेतुं बन्धयामास प्लवगैर्लवणाम्बुधौ ।**
**रसातलादिवोत्तीर्णं शेषं स्वप्नाय शार्ङ्गिणः ॥५१॥** (रघु. १२.७०)[१]

(शार्ङ्गिण इति) कर्तरि षष्ठी न सम्बन्धे, स्वप्नायेति भाव एव चतुर्थी न तादर्थ्ये। आख्यातेन कर्त्रभिधाने तद्धितेन कृता च कर्माभिधाने सुपा **कथिताकथितकर्माभिधाने** च शाक्तो यथा— (माघ. २.३४)

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥५२॥**

---

१. मूलपाठोऽस्माकं कालिदासग्रन्थावल्या १९८६ वर्षीये संस्करणे द्रष्टव्यः।

(२. वैभक्त:)

**सम्बन्धविभक्त्या** वैभक्तो यथा— (वारा. ६.८३, ३५)

**यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवा: ।**
**यस्यार्था: स पुमान् लोके यस्यार्था: स च पण्डित: ॥५३॥**

**शेषविभक्त्या** वैभक्तो यथा—(मनु. १.९६)

**भूतानां प्राणिन: श्रेष्ठा: प्राणिनां बुद्धिजीविन: ।**
**बुद्धिमत्सु नरा: श्रेष्ठा नरेषु ब्रह्मवादिन: ॥५४॥**

**उपपदविभक्त्या** वैभक्तो यथा—(हर्षच १.१)

**नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।**
**त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥५५॥**

**सम्बोधनविभक्त्या** च वैभक्तो यथा—

**अवनिपवनवह्निव्योमतोयान्तरात्म—**
**न्नहिमकरहिमांशो! विश्व! विश्वैकयोने! ।**
**हर! भव! शिव! शर्व! त्र्यम्बकेशान! रुद्र!**
**त्रिनयन! वृषकेतोऽनन्तमूर्ते! नमस्ते ॥५६॥**

(३. शक्तिविभक्तिमय:)

कारकविभक्तिभि: सम्बन्धोपपदशेषसम्बोधनविभक्तिभिश्च **शक्तिविभक्तिमयो** यथा—

**तीर्थेषु सत्सु द्विजसत्तमेभ्य: श्रिय द्विषद्दुष्टजनानुपात्ताम् ।**
**समाधिना मानमनित्य/निद्रमेव कस्य प्रदातुं त्वदृतेऽस्ति शक्ति: ॥५७॥**

यत्र लुप्तास्वपि विभक्तिषु शक्तयोऽवभासन्ते विभक्तयश्च साक्षादुपलभ्यन्ते सोऽपि शक्तिविभक्तिमय:। यथा—

**वित्रस्तशत्रु: स्पृहयालुलोक: प्रपन्नसामन्त उदूढसत्त्व: ।**
**प्रतिष्ठितौदार्यगुणोऽसिपत्रजितावनि: कोऽत्र भवानिवान्य: ॥५८॥**

यत्रैकत: शक्तिरन्यतो विभक्तिस्सोऽपि शक्तिविभक्तिमयो यथा—

**इक्षुदण्डस्य मण्डस्य दध्न: पिष्टकृतस्य च ।**
**वाराहस्य च मांसस्य सैष गच्छति फाल्गुन: ॥५९॥**

यत्र व्यपेक्षोक्ता विभक्तिविपरिणामादयः प्रवर्तन्ते सोऽपि शक्तिविभक्तिमयो यथा– (किराता ३.२१)

**निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।**
**असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ।।६०।।**

अत्र यदि जनिक्रियातो निरीक्षणक्रियायाः पूर्वत्वं तदा कर्तृभेदान्नास्ति क्त्वाप्रत्ययः। अथ पक्षपातक्रियातः, तदा निरीक्षणपक्षपातयोः मृत्युनेति भवति क्त्वाप्रत्ययः, अभिधाव्यापारस्तु विघटते; षष्ठ्यभिहितस्य कर्तुः पक्षपातक्रिययैव सम्बन्धः, न निरीक्षणक्रियया। 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठ्याः 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२.३.६९) इति प्रतिषेधात्। स च विभक्तिविपरिणा–माध्याहारविपर्ययवाक्यभेदव्यवहितकल्पनागुणकल्पनाभिरुपपद्यते। तत्र राधेयं निरीक्ष्य मृत्युरपि भयेषु पक्षपाती भवतीति विभक्तिविपरिणामः; राधेयं निरीक्ष्य स्वसामर्थ्यं विमृशतो मृत्योरपि भयेषु पक्षपातो जायेतेति वाक्यभेदः; राधेयं निरीक्ष्य मारयतीति मृत्योरपि भयेषु पक्षपातो जायेतेति व्युत्पत्तिकालाश्रिताया व्यवहितायाः क्रियायाः व्यवहारकालेऽप्याश्रयणात् व्यवहितकल्पना; निरीक्ष्येव निरीक्ष्येति पक्षपातन–स्याचेतनस्यापि चेतनगुणाध्यारोपेण गुणकल्पना। यदाह–'मुख्याभावे सति प्रयोजने निमित्ते च सत्युपचारः प्रवर्तते' (मभा. ४.१.२७)। दृष्टश्च अचेतनेऽपि प्रेमादौ चेतनादिक्रियोपचारो यथा–

**'प्रेम पश्यति भयान्यपदेऽपि।।६१।।'** (किराता. ९.७०)
**'अवस्था वस्तूनि प्रथयति च सङ्कोचयति च ।।६२।।'**

**(अन्विताभिधानमभिहितान्वयवादौ)**

अथ किमभिहितानां पदार्थानामन्वय उतान्वितानामभिधानम्?

'उच्यते– अस्त्यत्र मतभेदः;

तत्र एके वर्णयन्ति **अन्वितानामभिधानमभिहितानां चान्वयः**।

**(अन्वितानामभिधानम्)**

केचिद् ब्रुवते नान्वितानामभिधानं, न चाभिहितानामन्वय इति।

तत्रान्विताभिधानवादिन एवमाहुः – व्युत्पत्तिबलेन हि शब्दोऽर्थमवबोधयति, व्युत्पत्तिश्च वृद्धव्यवहारात्; वृद्धाश्च वाक्येनैव व्यवहरन्ति न पदेन; यच्चार्थप्रकरणादिगम्य–पदार्थान्तरसहकृतं पदं प्रयुञ्जते तदपि वाक्यमेव।

**यदप्येकं पदं दृष्टं चरितार्थक्रियं क्वचित् ।**
**वाक्यं तदपि मन्यन्ते सम्बोधनपदादिवत् ॥६३॥**
**यच्च कोऽयमिति प्रश्ने गौरश्व इति वोच्यते ।**
**तत्र दृश्यत इत्यादिः प्रश्नोक्तैव क्रियेष्यते ॥६४॥**

(वाप. २.२७०, २७१, ३२६)

वाक्यं चैकार्थपरः पदसमूहः, संहत्यार्थमभिदधति(न्ति) वा पदान्युच्यते। समूहश्चैवमेकार्थः स्यात्। एवं च संहत्यार्थमभिदध्युः पदानि यद्येकैकं पदमभिन्न एवार्थे व्याप्रियेत। तत्र यथा त्रयोऽपि ग्रावाण उखां धारयन्ति, चत्वारोऽप्युद्यन्तारः शिबिकामुद्यच्छन्ति, सर्वाण्यपि कारकाणि पाकं साधयन्ति, तथा पदान्यपि सर्वाणि वाक्यार्थमन्ववगमयन्ति। वाक्यार्थश्च क्रियाकारकसंसर्गरूपः। तत्र कारकाणां क्रियासम्बन्धोन्मुखतया क्रियाणां च कारकविरहासहिष्णुत्वेनान्वितानामेव स्वशब्दै-रभिधानं भवति। एवं च सति वाक्यार्थस्य साक्षादेव शाब्दत्वमुपपद्यते, न त्वभिहितान्वयपक्षवत् पारम्पर्येणेति।

तदभिहितान्वयवादिनो न मृष्यन्ते। ते ह्येवमाहुः— अनवगतपदार्थकस्य वाक्यार्थसम्प्रत्ययादर्शनात् पदार्थप्रतिपत्तिपूर्विकैव (वाक्यार्थ—)प्रतिपत्तिः। पदार्थप्रतिपत्तिश्चैवमवकल्पते। यदि तावानेव सोऽर्थः पदेनाभिधीयते पदार्थान्तरान्विते तु तस्मिन्नभिधीयमाने कदम्बकरूपार्थप्रतिपत्तेः पदार्थप्रविभागो न प्रकल्पेत। अस्य पदस्य जातिरर्थोऽस्य द्रव्यमस्य गुणोऽस्य क्रियेति आवापोद्वापाभ्यां तदवधारणमिति चेत् नैवम्, तत्रापि कदम्बकरूपार्थप्रतीतेरनपायात्॥

किंच प्रतियोगिनामनन्ततयान्वयस्यानन्त्यात् तदन्वयानन्त्येनान्विताभिधायिन्याः सम्बन्धग्रहणमशक्यमिति दुरवगमः पदार्थयोः सम्बन्धग्रहः; तदनपेक्षत्वे प्रथमश्रुतादपि तदर्थप्रतिपत्तिः प्राप्नोति। गामानयेति वाक्यादश्वबन्धननियोगः प्रतीयेत, वृद्धव्यवहारेषु च वाक्यादपि भवन्ती व्युत्पत्तिः पदपर्यन्तैव भवति। इतरथा हि प्रतिवाक्यं व्युत्पत्तिरपेक्ष्येत, सा चानन्त्याद्दुरुपपादेति शाब्दव्यवहारोच्छेदः स्यात्। दृश्यते चाभिनव—कवि—श्लोकात् वाक्यार्थप्रतीतिः; सा च पदपदार्थयोरेव व्युत्पत्तावुपपद्यते न वाक्यवाक्यार्थयोरिति नास्त्यन्विताभिधानम्॥

अपि चान्वयस्यान्वितविशेषणत्वात् तदभिधानमन्तरेणान्वितोऽभिधातुं न शक्यत इत्यन्वयाभिधानमङ्गीकरणीयम्। न च तदेकया शक्त्या शक्यतेऽभिधातुमिति

शकत्यन्तरकल्पनाप्रसङ्गः। अपि च गामानयेत्यत्र यदा गोशब्देनानयत्यर्थविशिष्टः स्वार्थोऽभिधीयते तदा गवार्थस्याप्राधान्यम्, यदा च आनयतिना गवार्थविशिष्टः स्वार्थः तदा तदर्थस्येत्येतस्मिन्वाक्ये प्रधानद्वयोपनिपाताद् वाक्यभेदापत्तिः। अपि च प्रकृतिप्रत्यययोरन्योन्यान्वितस्वार्थाभिधानलब्धपदभावयोः पदार्थान्तरान्वितार्थवाचक-त्वमिति द्विरभिधानं स्यात्। किंच पदेनान्वितः स्वार्थोऽभिधीयमानः किमभिहितेन पदार्थान्तरेणान्वितोऽभिधीयते, उतानभिहितेन? अनभिहितेन चेदेकस्मादेव पदात् तदर्थोपरञ्जकद्वितीयपदार्थावगतेः पदान्तरोच्चारणवैयर्थ्यम्। एवं चैकमेव पदमखिल-पदाभिधेयार्थवादि सम्पन्नमिति तेनैव व्यवहारः स्यात्। न चासौ सम्पद्यते। गौरिति ह्युक्ते सर्वगुणक्रियावगमान्न ज्ञायते किमुपादीयतामिति; नियतगुणक्रियानुरक्त-स्वार्थप्रतिपादने तु न हेतुरस्ति। पदान्तरसन्निधानं नियमहेतुरिति चेत्, तदपि जपमन्त्रादिपदवत् स्वरूपमात्रेण सन्निधानान्न विशिष्यते। अथाभिहितेन, तर्हि पदमन्विताभिधायितया पदान्तरोत्थमर्थाभिधानमपेक्षते; ततश्चेतरेतराश्रयमनवस्था चक्रकं वा प्राप्नोति॥

अथ द्वितीयमनन्वितमेव स्वार्थमभिधत्ते, प्रथमेन किमपराद्धम्। एवं च सर्वपदे स्वार्थमात्राभिधानादभिहितान्वय एव भवति॥

**(अन्विताभिधानम्)**

किंचाङ्गुल्यग्रे हस्तियूथशतमिति नास्त्यन्वयो योग्यत्वाभावात्; अन्विताभिधानवादिनां त्वन्वितस्याभिधानात् तत्राप्यन्वयः प्राप्नोति। अपि चान्विताभिधानवादिनां पुरुषवाक्यादेवमयं पुरुषो वेदेति भवति प्रत्ययो नैवमर्थं प्रति सिद्धान्तः। ते ह्येवमाहुः — वाक्यात् कार्यभूतात् प्रत्ययितस्य वक्तुस्तदर्थविषयं पूर्वविज्ञानं कारणभूतमनुमीयते, तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वात् ज्ञेयभूतार्थनिश्चय इति न वाचकशक्त्याऽर्थावगमः। एवं च वाचकशक्तिरेव नावधार्यते कुतोऽन्विताभिधानमिति। तस्मादभिहितानां पदार्थानामन्वय इति युक्तम्। पदानि हि स्वमर्थमभिधाय निवृत्तव्यापाराणि।

अथेदानीं पदार्था अवगता वाक्यार्थं गमयन्तीति।

अत्रान्विताभिधानपक्षे कदम्बकरूपार्थप्रतिपत्तेः प्रतियोगिनां चानन्ततया सम्बन्धग्रहणस्याशक्त्या दुरवगमः पदार्थप्रविभाग इति; तदिदं व्युत्पत्त्यनभिज्ञस्य चोद्यम्। न ह्येवं व्युत्पत्तिः गोशब्दस्य शुक्लान्वितोऽर्थ इति, स हि व्यभिचरति

कृष्णान्वितस्यापि तदर्थस्योपलम्भात्; नापि सर्वान्वित:, आनन्त्येन दुरवगमत्वात्; किन्त्वाकाङ्क्षितसन्निहितयोग्यार्थान्तरानुरक्तोऽस्यार्थ इति। एतां च व्युत्पत्तिं वाक्यान्येव पदावापोद्वापविरचनावैचित्र्यभाञ्जि सञ्जनयन्ति। यत:—

**ओप्यन्ते चोद्ध्रियन्ते च स्वार्था: स्वान्वयशालिन: ।**
**अन्विते स्वे च सामर्थ्यं पदानां तेन गम्यते ॥६५॥**(प्रप.८)

तत्र च—

**यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।**
**तदन्वितं पदेनार्थ: स्वकीय: प्रतिपाद्यते ॥६६॥** (प्रप.८/९)

पदार्थपर्यन्तापि च भवन्ती व्युत्पत्तिरीदृशी दृश्यते न शुद्धपदार्थविषया। (न्यायमं.) तथा हि—

**नियतं साधनं साध्ये क्रिया नियतसाधना ।**
**स सन्निधानमात्रेण नियम: सम्प्रकाशते ॥६७॥**
**गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते ।**
**साध्यत्वेन निमित्तानि क्रियापदमपेक्षते ॥** (वाप. २.४७,४८)

एवं च सन्निहितयोग्याकाङ्क्षितोपरक्ते स्वार्थे क्वचिद्गृहीतसम्बन्ध: सर्वत्र गृहीतो भवतीति नानन्त्यव्यभिचाराभ्यां सम्बन्धाग्रहणम्। न च कदम्बकार्थप्रतीते: पदार्थात्प्रविभाग:। तदुक्तम्—

**आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान् ।**
**स्वार्थानाहु: पदानीति व्युत्पत्ति: संश्रिता यदा ॥६९॥** (प्रप.८)
**आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन।**
**कदम्बकार्थरूपाया: प्रतीतेश्च न सम्भव: ॥७०॥** (प्रप.८/९)

इति। ततश्च पदपदार्थयोस्सम्बन्धग्रहणोपपत्तौ न प्रथम(म)श्रुतापि पदादर्थप्रतीति:, न गामानयेति वाक्यादश्वबन्धननियोग: (न्यायमञ्जरी) न प्रतिवाक्यं व्युत्पत्त्यपेक्षा, न चाभिनवकविश्लोकवाक्यार्थप्रतीतिर्भवतीति।

यदपि चान्विताभिधाने शक्तिद्वयकल्पनागौरवमाशङ्कितं, तदपि नास्ति। अन्वयवत्ता ह्यन्वितता। तदभिधानेनान्वितोऽभिहित: स्यात्। न हि दण्डीत्यत्र दण्डो नाभिधीयत इति। सम्भवति परं विशेष:; तत्र प्रकृत्या विशेषणाभिधानम्, इह तेनैव,

अन्यतस्तदलाभात्। अतोऽन्विताभिधानशक्त्यैवान्वयोऽप्यभिधीयत इति नास्ति शक्तिद्वयकल्पनागौरवम्। तदुक्तम्—

**व्यतिषक्तार्थबुद्ध्या हि व्यतिषङ्गो निशम्यते ।**
**अपरं तु न संसर्गप्रतीतेरस्ति कारणम् ॥७१॥**
**प्रतिपत्त्याऽन्वयं यस्मात्प्रतीयादन्वितं पुमान् ।**
**व्यक्तिं जातिमिवार्थोऽसाविति सम्परिकीर्त्यते ॥७२॥** (प्रप.१७)

योऽपि प्रधानद्वयशङ्कया वाक्यभेदलक्षणो दोषः, सोऽपि नोपपद्यते। यतोऽन्वितः सम्बन्ध उच्यते। तत्र कश्चित् प्रधानतया सम्बन्धः कश्चिद् गुणतया; यश्च यथा सम्बन्धः स तथैवोच्यत इति नैकस्मिन् वाक्ये प्रधानद्वयप्रसङ्गाद् वाक्यभेदलक्षणदूषणोत्पत्तिः। तदुक्तम्—

**प्रधानगुणभावेन लब्धान्योन्यसमन्वयात् ।**
**पदार्था एव वाक्यार्थं सङ्गिरन्ते विपश्चितः ॥७३॥**
**प्रतिपत्तिर्गुणानां तु प्रधानैकप्रयोजना ।**
**तत्प्रतीत्येककार्यत्वाद् वाक्यमप्येकमुच्यते ॥७४॥** (प्रप.)

यच्च प्रकृतिप्रत्यययोः पदस्य चाभिधाने द्विरभिधानमुक्तं, तदपि न सम्यक्; प्रकृत्यान्वितस्यार्थो विधीयते, प्रत्ययश्च प्रकृत्यर्थान्वितं पदार्थान्वितं च स्वार्थं ब्रवीति, प्रत्ययार्थस्य प्रकृत्यर्थान्वितस्य पदान्तरार्थापेक्षित्वादिति कुतो द्विरभिधानम्।

नन्वेवं पदस्यान्विताभिधायित्वं न स्यात्, प्रत्ययस्यैव प्रकृतिसहितस्य पदत्वात्। किंचायमभिहितान्वयवादिनोऽपि तुल्यो दोषः। ततश्च—

**यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।**
**नैकः पर्यनुयोक्तव्यस्तादृश्यर्थविचारणे ॥७५॥**
**प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति च ।**
**यदाहुः सूरयस्तेन तद् द्वयं पदमिष्यते ॥७६॥** (काशिका १.२.५६)

यच्चानभिहितपदार्थान्तरान्वितस्वार्थाभिधानपक्षे पदान्तरोच्चारणवैयर्थ्यमित्यादि, अभिधानपक्षे पुनरितरेतराश्रयादिदूषणमुक्तं, तदुभयपक्षानभ्युपगमेनैव निरस्तम्। यतो नास्माकमयं पक्षः प्रथमश्रुतान्येव पदानि स्वार्थानन्योन्यमन्वितानभिदधति, अपि तु यस्य यावन्तोऽर्थाः सम्भवन्ति तच्छ्रवणे तावन्तः स्मृतावुपस्थाप्यन्ते, ततश्चाकाङ्क्षासन्निधियोग्यतादिसम्पादितनियतमिथस्समन्वयाः पदैरेव स्मृत्युपारूढैर—

भिधीयन्ते। तथाहि—यस्तावदगृहीतसम्बन्धो यस्य च सम्बन्धग्रहणसंस्कारो नोत्पन्नः प्रध्वस्तो वा स वाक्यार्थप्रतिपत्तौ नाधिक्रियते; यस्त्वनवभ्रष्टसम्बन्धग्रहणसंस्कारः स पदं पदं श्रुत्वा नूनं तावदिदं स्मरति—इदमिदमस्यार्थस्याकाङ्क्षितसन्निहित x x x ताश्रयमाधाराधेयसामान्यं पदद्वयात् तु परस्परोपहितव्यवच्छेदं प्रतीयते, तत x x x।

(अनु—)योग्यप्रतियोग्यन्वितस्य वाचकत्वमिति।

एवं च स्मरता स्मृतमेव अनन्वितमपि स्वरूपमन्वयभाजां भवति।

ननु श्रूयमाणेन पदेन योऽर्थो नावबोधितः स कथमन्तर्हिते तस्मिन् अवबोध्यते?

उच्यते – अभिहितान्वयवादिनोऽपि नायं नियमः श्रूयमाण एव पूर्ववर्णजनित-संस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति। बालिशाधीतात् प्रागनवधृतार्थाद् अपरिज्ञाने संस्कृतस्य (अङ्गपरिज्ञानसंस्कारात्) पश्चात् श्रुतादपि भेदा(वेदाद)र्थावगमदर्शनात्, तेन स्मृत्यारूढस्यावगमकत्वमदोषः; श्रूयमाणेन हि पदेन प्रतियोगिसापेक्षत्वादन्विता-भिधानस्य प्राक् सहकारिविरहादर्थोऽनभिहितः पश्चादभिधीयत इति किमनुपपन्नम्?

तथा चाह—

**पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।**
**न्यायसम्पादितव्यक्ति पश्चादन्वितबोधकम् ।।७७।।** (प्रप.१२)

**स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः ।**
**अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयः ।।७८।।** (प्रप.१५)

कथं पुनरन्विताभिधायिना पदेन स्वरूपमात्रं स्मारयितुं शक्यते? उच्यते—'अन्वितस्याप्यभिधाने स्वरूपमात्रस्य विद्यमानत्वान्नायं नियमः यावद् गृहीतं तावत् स्वकर्तव्यं स्मर्तव्यम्, अपि त्वगृहीतं तु न स्मर्यत इति।

ननु च शब्दस्य स्वरूपाभिधानशक्त्यभावदप्रामाण्ये कथं शब्दश्रवणात् स्वरूपस्मरणं भवति? उच्यते— न हि यत्प्रमाणं तत्स्मृतिक(का)रणं, किंतु (अ)प्रमाणमेव तत्। यस्य तु येन सह काचित् प्रत्यासत्तिः प्रतीतपूर्वा स तत्र संस्कारोद्बोधद्वारेण शक्नोत्येव स्मृतिमाधातुम्। अस्ति च स्वरूपस्यापि तदभिधेयान्तर्गत्या शब्देन सह प्रत्यासत्तिरिति शक्नोति तत्रापि (शब्दः स्मृतिं) जनयितुम्। यथा निर्विकल्पकदशाप्रतीतमर्थस्वरूपमात्रम(न)भिधेयमपि शब्दं स्मारयति तथा शब्दोऽप्यर्थमिति न किंचिदनुपपन्नम्। तथा चाहुः—(प्रकरणपञ्चिकायाम्)

**अन्वितस्याभिधानेऽपि स्वरूपं विद्यते सदा ।**
**तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम् ॥७९॥**

**यथार्थेनाप्रमाणेन स्वपदं स्मार्यते क्वचित् ।**
**पदेनाप्यप्रमाणेन तथार्थः स्मारयिष्यते ॥८०॥**(प्रप.१३–१४)

नन्वेयं यथा (दा)—स्मृतिसन्निहितमाश्रित्यान्विताभिधानं पदैः क्रियते तथा(दा) स्मरणस्य प्रत्यासत्तिनिबन्धनत्वादनेकेषां च (अर्थानां) प्रत्यासत्तिसम्भवात् तेषु स्मृतिसन्निहितेष्वगृह्यमाणविशेषत्वाद् उखायां पचतीति नोखा पचत्यर्थान्वितैव केवलाभिधीयेत, सा हि कुलालनिर्वापाद्यन्वितापि प्रतिपन्नेति स्मरणात् तदन्विताप्युखाभिधीयेत, तथा पचत्यर्थोऽपि पिष्टकादिकर्मकोऽवगत इति तत्स्मरणन्नोखान्वितोऽभिधीयेतेति।

तन्न; शब्दैः स्मारितानामन्वयबोधकत्वाद् वृद्धव्यवहारेऽपि तथा दर्शनाद् य एव हि शब्देन स्मारितोऽर्थस्तेनैवान्विताभिधान—(मिति) कुलालनिर्वापाद्यन्विताप्य—भिधीयत इति॥

किंचान्वितार्थाभिधान एवेदं प्रतिनियतार्थान्वयित्वमुपपद्यते। यत्पदान्तरा—भिधेयतया स्मार्यते तदन्वितस्यैव वृद्धव्यवहारे वाच्यत्वदर्शनात्, यत्रापि चाध्याहारस्तत्रापि सन्निधापकवशेन विशेषान्विताभिधानलाभ इति लोक(त)एव ज्ञानमिति न कश्चिद्दोषः। अपि च ज्ञानं तावदनेनायमर्थोऽन्वितो वाच्य इति। तत्र यद्यनेनाप्यन्विताभिधानं स्यात् वाक्यभेदो भवेत्, न चासावेकवाक्यत्वसम्भवो(वे) न्याय्यः। तदुक्तम्—

**सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते॥८१॥** (श्लोवा. १.१.१,९) इति।

यच्चोक्तमन्विताभिधानपक्षेऽन्वितस्यैव पदार्थस्याभिधानादङ्गुल्यग्रादिवाक्ये—ष्वप्यन्वयः प्राप्नोति। तत्र स्मृतानामप्यर्थानामयोग्यत्वेनान्वयाभावादनभिधानमेव, पदार्थप्रतिपत्तिस्तु स्मृत्यैवोपपद्यत इति। यत्पुनः पुंवचसामर्थे प्रामाण्याभ्युपगमात् पदानां वाचकशक्तिरेव नावधार्यते। कुतोऽन्विताभिधानमित्युक्ते x x x x देव तावद् वक्तव्यं; न वयं पुरुषवाक्यानामर्थे प्रामाण्यमभ्युपगच्छामः। येषामपि चाभ्युपगमस्तेषामपि न दोषः, यतः पदमन्विताभिधायकत्वेन व्युत्पन्नं व्यभिचाराशङ्कया तु लोकेन तन्निश्चायकं पश्चादाप्तत्वालोचनयानुमितेऽर्थेऽनुवादकं तदिति प्रामाण्यमेव नासादयति॥ (प्रप.)

ननु च वाचकत्वमपि जहाति; पश्य– 'बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धव्यवहारस्य शब्दश्रवणानन्तरभाविनीं विशिष्टचेष्टानुमिताम् अर्थप्रतीतिं शब्दकरणिकां तावदवगच्छति। स तथा व्युत्पन्नः कदाचिदनन्वितार्थपदरचनामुपलभते। तत्रोपलभमानस्य तस्यैष विमर्शो जायते सम्भाव्यमानानन्वितार्थपदरचनमिदं वाक्यं कथं वृद्धस्यार्थनिश्चयं कृतवत्। वृद्धस्यापि हि पुरुषायत्ते वाक्ये नान्वितार्थपदरचनाशङ्का ममेव सम्भवतीति। तस्यैवं विचिकित्सोदये पुनरेष निश्चयो जायते– कृतम् अनेनायं वक्ता इत्थमवधारितः अन्विताऽर्थान्येव पदानि प्रयुङ्क्ते इति। तथाविधपदप्रयोगश्च नास्यानुपलब्धेऽन्वय उपपद्यत इत्येवमन्वयोपलम्भमनुमायानेनान्वयो निश्चितः। निश्चिते चान्वये वाक्यमेतदनुवादभूतमध्येति।

एवं चेद् अनुवादकतया तस्यार्थस्य तद्वाक्यं वाचकमेवेति पूर्ववाचकशक्तिज्ञानं नानर्थकमिति मन्यते। यदि परं मया प्रागनुमापुरस्सरोऽर्थनिश्चयोऽस्येति नावगतम्। यापि चेयमस्यानिश्चितेऽन्वये विशिष्टवक्तृज्ञानानुमा, सापि पदानां स्वरूपमात्रावगमादेव नोपपद्यते, किं तु विशेषावगमात्। न च शक्तेरन्यः पदानां विशेषोऽवकल्पते। अतो मयेवानेनाप्यमीषां पदानां वाचकशक्तिरवधारिता। तेन विशिष्टान्वयवाचकपदप्रयोगात् तत्तद्विषयं वक्तुः पूर्वविज्ञानमनुमितवानिति॥

नन्वनन्तप्रतियोग्यन्वितस्वार्थबोधनविषया अनन्ता एव शब्दस्य शक्तयः परिकल्पयितव्याः स्युः। अभिहितान्वयवादे त्वेकस्मिन्नर्थे शब्दस्यैकैकैव शक्तिरिति (प्रप.१०)।

तन्न। एकयैवाकाङ्क्षितसन्निहितयोग्यार्थान्वितस्वार्थभिधानशक्त्या प्रतियोगि-भेदेन चक्षुरादीनामिव कार्यभेदोपपत्तेः। यथैकयैव दर्शनशक्त्या चक्षुः घटादिप्रतियोगिसहायभेदान्नानाज्ञानानि जनयति, तथा शब्दोऽपि प्रतियोगिभेदादिति मन्तव्यम्। एवं च–

**पदैरेवान्वितस्वार्थमात्रोपक्षीणशक्तिभिः ।**
**पदार्था बोधिता बुद्धौ वाक्यार्थोऽपि तथा सति ॥८२॥** (प्रप.२) इति।

एवं चैतदप्युपपद्यते संहत्याऽर्थमभिदधति पदानि वाक्यम्, एकार्थपरः पदसमूहो वाक्यमिति सङ्घातार्थपारतन्त्र्यात् पदानां स्वार्थाभिधानं न सम्भवति। न च सङ्घातकार्यमकुर्वन्ति क्वचिदपि पदानि दृश्यन्ते, न ह्येषां सङ्घातकार्ये स्वकार्ये च पृथक्प्रयोगो विद्यते, सर्वथा सङ्घातकार्य एव प्रयोगात्।

नैवम्। संहतानां सङ्घातकार्यवत् स्वकार्यस्याप्युपलम्भात्; यथा शकटाङ्गानामयमंशोऽनेन कृतोऽयमनेनेति, न च शकटाङ्गान्यपि पृथक्प्रयुज्यमानानि स्वकार्यं कुर्वन्ति दृश्यन्ते।

किं पुनः पदानां स्वकार्यम्?

याऽसौ स्वार्थप्रतिपत्तिः।

किं वा सङ्घातकार्यम्?

याऽसौ वाक्यार्थप्रतिपत्तिः। तच्च पदानामेकैकस्य कृत्स्नफलपर्यन्तव्यापार–कारित्वात्। तथा ह्येकैकस्मिन् सति कृत्स्नफलपर्यन्तो व्यापारो निर्वर्तते, एकैकेन विना न निर्वर्तत इति एवं कृत्स्नकारि भवति।

किमत्र पदान्तरेण क्रियेत इति चेत्, सर्वकारकेष्वपि तुल्योऽयमनुयोगः। तत्र यथा संहत्य कुर्वन्ति कारणादीनि कार्याण्युच्यन्ते तथा संहत्याप्यभिदधति पदान्य–भिधायकान्युच्यन्ते।।

नन्वाकाङ्क्षासन्निधियोग्यताभिश्चेदन्वयोपपत्तिरभिहितान्वय एवास्तु किमन्विता–भिधानेन? पदेषु ह्यनन्वितमपि स्वं स्वमर्थमभिधायोपरतव्यापारेष्वाकाङ्क्षादिभिः पदार्थानामन्वयप्रतीतिर्भविष्यतीति।

उच्यते, कस्येयमाकाङ्क्षा, शब्दस्यार्थस्य प्रमातुर्वा? शब्दार्थयोस्तावद–चेतनत्वान्नाकाङ्क्षा, फलतः प्रमातुरेवेयम्। तत्र वाचोयुक्तिः—'शब्दः शब्दान्तरमाकाङ्क्षत्यर्थोऽर्थान्तरम्। स्वतन्त्रस्याऽऽकाङ्क्षा न प्रमाणं, पुरुषेच्छाया वस्तुस्थितेरयुज्यमानत्वाच्छब्दप्रमाणपृष्ठभावित्वेन त्वर्थेषु पुरुषस्याकाङ्क्षा भवन्ती भवत्यर्थानां संसर्गहेतुरित्येवं शब्दस्यैवायमिषोरिव दीर्घदीर्घो व्यापारः। उपरतव्यापारे तु शब्दे पुरुषस्याकाङ्क्षामात्रं न सम्बन्धकारणम्, अशाब्दत्वप्रसङ्गात्; साक्षाच्च शाब्दत्वसम्भवे व्यवधानाश्रयणस्यायुक्तत्वात्। अतो नान्यदन्विताभिधानात् संसर्गप्रतीतेः कारणमस्ति। न खल्वानय गां शुक्लामित्यादिवाक्येषु संसर्गपदं प्रयुज्यते यतः संसर्गप्रत्ययः स्यात्, प्रयुज्यमानमपि दशदाडिमादिवाक्यवदनन्वितार्थमेव स्यात्। तस्मात् 'पदानानामन्विताभिधानमेव न्याय्यमि'—ति।।

## (अभिहितान्वयवादः)

अभिहितान्वयवादिनः पुनरित्थमाचक्षते —'स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि पदानि भवन्ति। अथेदानीं पदार्था अवगता आकाङ्क्षासन्निधियोग्यताभिरन्वयमुपयन्तो वाक्यार्थमवगमयन्ति।

नन्वेवमशाब्दः स्यात्?

नैवम्; पारम्पर्येणापि प्रतिपादयतां पदानां वाक्यार्थे सामर्थ्यस्याविघातात्। तदुद्देशेन च प्रयुक्तानां पदार्थप्रतिपादनमवान्तरव्यापारो भविष्यति। न चावान्तरव्यापारस्य कारकान्तरेष्वपि व्यवधायकत्वमिष्यते। तदाह—

**न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।**
**तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥८३॥** (श्लोकवा.)
**वाक्यार्थमितये तेषां प्रयुक्ते नान्तरीयकम् ।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥८४॥** (श्लोकवा.) इति।

तत्र च क्रियापदानि क्रियामात्रमभिदधति, कारकपदानि तु कारकमात्रम्, कुतो वैषां मिथस्संसर्ग(ज्ञान—)म्? न ह्येकपदोच्चारणकाले पदान्तरार्थप्रतीतिरस्ति। न चाप्रतीयमानेनापि संसर्गप्रतीतिरस्ति।

न चाप्रतीयमानेनापि संसर्गप्रतीतिप्रसङ्गः।

ननु च वृद्धव्यवहारात् पदानां अर्थावधारणम्, वृद्धाश्च वाक्येनैव व्यवहरन्ति, न पदेन। वाक्ये वान्वितानामेव पदार्थानामुपलम्भात् कथमुच्यते क्रिया x x x मात्रं पदेभ्योऽवगम्यत इति?

उच्यते—'सत्यं वाक्येभ्य एव पदानां व्युत्पत्तिः; सा तु किमेकघटनाकारक—संहतवाक्यार्थनिष्ठा, किं वा पदार्थपर्यन्तेति चिन्तनीयम्।

पूर्वस्मिन् पक्षे प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया, सा चानन्त्यव्यभिचारा—दिभिर्बहुप्रमादा। पदार्थपर्यन्तायां च व्युत्पत्तौ नूनं निर्धारणीयम् 'इयानस्य पदस्यार्थ' इति। अन्विताभिधानवादिनोऽपि नियतः x x x करणीयः। पदार्थनियमानपेक्षणे हि गामानयेति विवक्षुरश्वपदमपि निमित्ततयोपाददीत। न हि तस्यानपेक्षितपदपदार्थप्रविभागो वैयाकरणवद् वाक्यार्थप्रत्यय उदेति। तस्माद् यावानावापोद्वापपर्यालोचनया पदस्यार्थो निर्धार्यते तावानेव तस्यार्थ इति।

नन्वाकाङ्क्षितयोग्यसन्निहितार्थोपरक्तस्तस्यार्थो भवतु, सर्वदा संहत्य व्याप्रियमाणत्वात्।

नैवम्; सर्वदा संहत्य व्याप्रियमाणस्तु तावान्, यावत्यभिधात्री तस्य शक्तिः।

कियती च तस्याभिधात्री शक्ति?

यावन्तमर्थमाकाङ्क्षितैर्योग्यैः सन्निहितैश्च संयुज्यमानं वियुज्यमानं च न मुञ्चति

क्रियामात्रं कारकमात्रं च; अतस्तावत्येवाभिधात्री शक्तिरन्वयव्यतिरेकाभ्यां तस्य निर्धार्यते। तदुक्तम्, 'अव्यभिचाराद्धि तन्मात्रमेव तदर्थो नाधिकं व्यभिचारात्' इति।

नन्वत्र शक्तित्रयकल्पनागौरवलक्षणो दोषः प्राप्नोति। पदार्थानां हि शब्दादन्यतः प्रमाणादवबोधकत्वं दृष्टमिति शब्दाभिधेयानां तदवबोधकत्वशक्तिः कल्पनीया। तस्याश्चोत्पत्तौ शब्दसंस्पर्श एव हेतुरित्याश्रयणीयम्। शब्दो हि विशिष्टार्थ-प्रतिपत्तिपरतया लोके प्रयुज्यमानो दृष्टः, न चासौ साक्षाद् वाक्यार्थप्रतिपादने समर्थ इति पदार्थनवान्तरव्यापारीकरोति। ते च यद्यन्योन्यान्वयबोधनसमर्थास्तदा तेषामवान्तर-व्यापारता स्यात्, नान्यथा। पदार्थानामपि विशिष्टार्थावबोधपरशब्दसंस्पर्शादेषा शक्तिराविर्भवतीति शब्दस्यापि पदार्थगतशक्त्याधानशक्तिरनुमन्तव्येति।

स्यादेतदेवं यदि मानान्तरावसेयानां पदार्थानामन्योन्यान्वयावगमसामर्थ्यं नावधार्यते। अवधार्यते च श्वैत्यस्यानवधारिताश्रयविशेषस्याप्रत्यक्षोपलब्धस्याश्वस्य चाप्रतिपन्नगुणविशेषस्य हेषाशब्दानुमितस्य श्वेतोऽश्वो धावतीत्यन्वयः। तदाह—

**पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।**
**पदनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥८५॥**
**दृष्टा वाक्यविनिर्मुक्ता** (श्लो. वा.)॥८६॥ इति।

आरूपमित्यव्यक्तरूपम्। तेन गुणविशेषो न प्रत्यक्षेणावसीयत इति उक्तं भवति।

अत्रेदं पर्यनुयुज्यते—'किं येन पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिपद-निक्षेपशब्दाववगतौ तस्यैवेयं श्वेतोऽश्वो धावतीति धीः, उत यस्यापादानानध्यवसाय-स्तस्यापीति?

किमतः?

यदि तावदप्रत्याकलितहेषाध्वनिपादविहारनिर्घोषापादानस्येत्युच्यते, तदा प्रतीति-विरोधः; स ह्येवं प्रतिपद्यतेभवितव्यमस्मिन् देशे नूनमश्वेन, भाव्यं च केनचिद् धावतेति।

अथाश्वसम्बन्धिनमेव खुरपुटटङ्काररवमभ्यासपाटववशादवैति, तदासावश्ववर्तिनीं वेगवतीं गतिमनुमिनोति, न पुनः केवलामेवावगम्य तस्यान्वयं पदार्थसामर्थ्येनाव-बुध्यते। योऽप्यस्मिन् देशे नास्त्यन्योऽश्वाद् इति निश्चित्य पारिशेष्यादपादा-नाध्यवसायेऽपि हेषाध्वनेः श्वैत्यसमानाधिकरणमश्वत्वमप्यध्यवस्यति तस्यापि गृहाभावदर्शनमिव बहिर्भावावगतावर्थापत्तिः 'योऽयं श्वेतः स एवाश्व' इति प्रमाणम्। यस्तु श्वेतसमानाधिकरणहेषाध्वनिखुरपुटटङ्काररवावध्यवस्यति तस्याश्वात्वे वेगवति च

गमने श्वेतद्रव्यवर्तिन्येवानुमानं न स्वतन्त्रयोः। अतः प्रमाणान्तरेण असम्बन्धावगतार्थानां न क्वचिदनुमानार्थापत्तिव्यतिरेकेणान्वयबोधकत्वं प्रतीतम्।

अपि च यदि पदार्थावगतिमात्रादेवान्वयावगमस्तदा कस्मिन् प्रमाणेऽस्यान्तर्भाव इति वाच्यम्। न तावच्छाब्दे, शब्दाभावात्; पदार्थाभिधानावान्तरव्यापारेण हि यच्छब्दादन्वयज्ञानं न तच्छाब्दमित्यभिहितान्वयवादिनां सिद्धान्त इति नास्य शाब्देऽन्तर्भावः। प्रमाणान्तराभ्युपमे तु शाब्दस्योच्छेदः, शब्दावगतपदार्थाविषयेऽपि तस्यैव प्रामाण्यप्रसङ्गात्। तस्माच्छब्दाभिहितानां पदार्थानामन्यत्रादृष्टं वाक्यार्थव–बोधनसामर्थ्यं परिकल्पयितव्यम्। तदाधानशक्तिश्च शाब्दानामपीति कल्पनालाघवा–च्छब्दानामेवान्वितस्वार्थबोधनशक्तिमात्रं कल्पयितुं न्याय्यम्।

अथोच्यते–'आकाङ्क्षासन्निधियोग्यतावन्तः पदार्था एव वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमवबोधयन्तीति, तदतिमन्दम्; वाक्यार्थावगतेः कारणाभावप्रसङ्गात्। अनुपायत्वे हि पदानामन्वयप्रतीतौ पदार्था अपि चेन्न कारणं अकारण्येवान्वय–प्रतीतिरापद्येत।

स्यान्मतम्–'क्रियापदेन कारकपदेन वा साकाङ्क्षार्थे पूर्वाभिहिते यदेव पदान्तरेण योग्यं प्रतियोगिपदार्थान्तरं सन्निधाप्यते, तदेव तत्र सम्बन्धित्वेनावतिष्ठत' इति।

सत्यमेवम्; अवगतिस्तु तत्सम्बन्धस्य किंनिबन्धनेति वाच्यम्?

अथ पूर्वपदार्थे साकाङ्क्षे यत्पदान्तरमुच्चरति तत् तत्सम्बन्धितयैव स्वार्थमुपनयति, प्रत्ययवत्। यथा प्रकृत्यर्थे पूर्वप्रतीते प्रत्यय उच्चार्यमाणः स्वार्थं तद्विशिष्टमेवाभिधत्ते तथा पदान्तरमपीति। तदुक्तम्–'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत'–इति (काशिकायां १.२.५६) । प्रकृतिः स्वार्थं प्रत्ययार्थविशेषणत्वेनोपनयन्ती प्रत्ययेन सह तदर्थमाहेत्यर्थः। तथा चोक्तम्–

**नित्यं विशिष्ट एवार्थे प्रत्ययो यत्प्रयुज्यते ।**
**तत्पूर्वतरविज्ञातप्रकृत्यर्थविशेषणात्** ।।८७।।(प्र.प.) इति।

अङ्गीकृतं तर्हि द्वितीयस्यान्विताभिधानं, प्रथमस्य तथापि नास्तीति चेन्न; वाक्ये पदानां प्रयोगक्रमनियमाभावात्। यदेव कदाचित् प्रथमं तदेव कदाचिद् द्वितीयमिति सर्वपदानामन्विताभिधानमापतितम्। किंच प्रत्ययश्चेदन्विताभिधायी तदा तदविशेषात् पदानामन्विताभिधायिता किमिति नाभ्युपेयते? किमर्धवैशसेन?

अत्राभिधीयते; लाक्षणिका एव सर्वे वाक्यार्थाः, ततश्च न पदार्थानामन्वय-बोधने शक्तिगौरवम्। अनन्वितावस्थो हि पदेनार्थोऽभिहितोऽन्वितावस्थां स्वसम्बन्धिनीं लक्षयति। अवस्थावस्थावतोर्हि संबन्धादवस्थावत्यवगते भवत्येवावस्थापि बुद्धिस्था सर्वत्र संबन्धिनि दृष्टे सम्बन्ध्यन्तरे बुद्धिर्भवतीति सिद्धमेव। तेन नास्ति पदार्थानामन्वितबोधने शक्तिकल्पनेति। तदाह—

**वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति लक्ष्यते ॥८८॥** (प्रप.) इति।

कथं पुनरियं लक्षणा?

**वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।**
**तत्सम्बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते ॥८९॥**[१] (प्रप.१०/११)

तद्यथा— 'गङ्गायां घोषः प्रतिवसतीत्यादिश्रौतस्य गङ्गार्थस्य वाक्यान्वयासम्भवात् तत् परित्यज्य तत्सम्बन्धाल्लब्धसन्निधेः कूलस्य वाक्यान्वितताऽध्यवसीयते। अत एव चाहुः—'अनुपपत्त्या सम्बन्धेन च लक्षणा भवति इह च गामानयेत्यादौ न श्रौतस्यान्वया-योग्यत्वं, नाप्यन्वितावस्थस्यानयनसम्बन्धार्हता, अन्वितस्यान्वयान्तराभावात्।

अपि च सर्ववाक्यार्थानां लाक्षणिकत्वे मुख्य x x x।

अथ मा भूदेषा लक्षणा। किंतु क्रियावगतकारकान्वयिनीमात्मनो दशामवगमयत्यविनाभावित्वादिति।

उच्यते—'शाब्दत्वं तावदित्थमपह्नुतमन्वयावगमस्य। किंतु सामान्यतोदृष्टा-नुमानगोचरताऽभ्युगता भवति। तथा च विशेषावगतिरनुपपन्नमूलाऽऽपद्येत।

अथ विशेषान्वयं विना व्यवहारानवकल्पनादनर्थकं शब्दोच्चारणमिति तदाश्रयणम्?

एवमपि प्रेक्षापूर्वकारिणां सार्थकमात्रप्रयोगिणां वचनाद् विशेषान्ययावगमः। वेदे त्वानर्थक्येन न भवितव्यमिति प्रमाणाभावान्न शक्यते विशेषान्वयो वक्तुम्।

न च लोकेऽप्यानर्थक्यमापद्यत इत्येतावता कारणेनोपायान् विनापि विशेषा-ध्यवसानं युक्तम्। न हि दग्धुकामस्यौदनस्योदकोपादानमनर्थकमिति जलस्य दाहकशक्तिराविर्भवतीति काममानर्थक्यम्। न पुनः सामान्यतोदृष्टस्य विशेषान्वयिता।

अथाकाङ्क्षितसन्निहितयोग्यान्वयपरता वृद्धव्यवहारेण पदानामवगतेत्यन्वयावगमः।

तन्न; वृद्धव्यवहार एव कथं तत्परता तत्पदानामुपायाभावे निर्वहतीति चिन्ता।

---

१. नेत्यालङ्कारिकाः, लक्षणा—सामग्र्या अभावात्।

सा हि पदानां पदार्थानां वा शक्तिकल्पनां विनानुपपन्नेति मन्यामहे। सा च पदानामेवोचिता। यदाह–

**प्राथम्यादभिधातृत्वात् तात्पर्यावगमादपि ।**
**पदानामेव सा शक्तिर् वरमित्यवगम्यताम् ॥९०॥** (प्रप.११)

प्रथमभावीनि हि पदान्यतिलङ्घ्य न पदार्थेषु वाक्यार्थावबोधनशक्तिराश्रयितुं युक्ता। किंच पदानि तावद् अभिधायकानीति निर्विवादम्। तेन तेषा– मभिधानशक्तिस्सम्प्रतिपन्नैवेति तस्या एवान्वयपर्यन्तता कल्पयितुं सुकरा। पदार्थानां तु बोधनशक्तिरेव कल्प्या। तेन धर्मिकल्पनातो धर्मकल्पना लघीयसीति अन्विता– भिधानशक्तिः पदानामेव कल्पयितुमुचिता।

किंच पदान्यभिधायकानीष्यन्ते। तत्र यदि स्वरूपमात्रविषयामेव बुद्धिमाद– ध्युरभिधायकता हीयेत, तस्या बुद्धेः सम्बन्धग्रहणसमुपजातसंस्कारप्रभवत्वात्। अवश्यं हि सम्बन्धस्मरणसिद्ध्यर्थं सम्बन्धिभूतार्थसाधारणसंस्कारोद्बोधोऽङ्गीकरणीयः। तस्मात् सम्बन्धग्रहणसमयानधिगतानन्वितार्थप्रतिपादनाभ्युपगम एव शब्दानामभिधायकतेति तामङ्गीकुर्वता पदानामन्विताभिधायिताऽऽश्रयणीया। यस्तु–

**पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ॥९१॥** (श्लोवा. ५.१०७)
**भावनावचनस्तावत् तां स्मारयति लोकवत् ॥९२॥** (श्लोवा. ७.२४८)

इत्याचार्यवचनदर्शनात् अभिधावत् स्मारकतामेव पदानामभिधायकतां मन्यते। नापि तावत् पदानां वाक्यार्थपरताभ्युपगन्तव्या, अन्यथा वाक्यार्थस्याशाब्दत्वप्रसङ्गात्।

एवं चेत् पदानामेव साक्षाद् वाक्यार्थबोधने शक्तिरस्तु, किं परम्पराश्रयणेन?

एवं च पदपदार्थेषु पदानां स्मारकत्वातिरिक्तं येऽभिधायकत्वमाहुस्तेषां शक्तित्रयकल्पना, एका तावत् पदानामभिधान–(शक्तिः, अपरा च पदार्थगतान्वय–) बोधशक्त्याधानशक्तिः, पदार्थानामन्वयज्ञापनशक्तिरिति। स्मारकत्ववादिनां त्वभिधान– शक्तिं हित्वा शक्तिद्वयकल्पना। अन्विताभिधाने पुनरेकैव शक्तिरिति शक्तिकल्पना– लाघवादन्विताभिधायीन्येव पदानीति न्याय्यं, न पुनरभिहितानामन्वय इति।

अत्रोच्यते–यत् तावत् पदार्थानामन्वयबोधकत्वे शक्तित्रयकल्पनागौरवमित्युक्तं, तन्न सम्यक्; प्रमाणान्तरावगतानां पदार्थानामन्वयावबोधकत्वदर्शनात्। दृश्यते–

**पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।**
**खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥९३॥** (श्लोवा. ७.३५८)

न चैतद् वाच्यम्; अर्थापत्त्यनुमानयोरयं व्यापारः, तद्विषयायाः प्रतीतेरिह विवक्षितत्वात्। यत्र ह्याकाङ्क्षादित्रयोपेताः पदार्था एवान्योन्यमन्वयं गमयन्ति, न तत्रार्थापत्त्यनुमानयोर्व्यापारः। यथा सुरभि चन्दनं, स्वादु सहकारमिति। न चात्र विशिष्टप्रतिपत्तौ प्रत्यक्षमेव व्याप्रियते; चक्षुरादीनां रूपादिनैयत्येन परस्परविषयेणाज्ञातत्वात्। तथा हि न गन्धाद्युपलब्धौ चक्षुः व्याप्रियते, नापि रूपाद्युपलब्धौ घ्राणमिति। अस्ति च सुरभि चन्दनमित्यादौ विशिष्टार्थप्रतिपत्तिः, एवं श्वेतोऽश्वो धावतीत्यत्रापि द्रष्टव्यम्।

यच्चात्रोक्तं 'कस्मिन् प्रमाणेऽस्यान्तर्भाव' इति; तत्र न कस्मिंश्चित् प्रमाणेऽन्तर्भावः, किन्तु प्रमाणफलमेतत्। यदि वा पदार्थ एवात्र प्रमाणम्, तेषां च शब्द एवान्तर्भावान्न सप्तमप्रमाणापत्तिः। पदार्था हि शब्दात् प्रमाणान्तरतो वा प्रतिपन्ना आकाङ्क्षासन्निधियोग्यताभिः क्रियाकारकादिरूपेण चेत् प्रतीयमानाः संसर्गबुद्धिं जनयन्ति शाब्दमेवैतद् भवति।

यत् पुनराकाङ्क्षासन्निधियोग्यतावन्तः पदार्था एव वाक्यार्थीभवन्तीत्युपन्यस्य दूषितं, तत्र न वयमेवं ब्रूमः 'पदार्था एव वाक्यार्थीभवन्ति'।

किं तर्हि?

गमयन्ति।

यच्च प्रत्ययदृष्टान्तेन द्वितीयपदस्यान्विताभिधायित्वेऽर्धवैशसमुक्तं, तदपि नास्ति; प्रकृतिप्रत्यययोरपि पदवदेवान्वयव्यतिरेकावधारितव्यतिरिक्तशक्तिकयोर-भिहितान्वयस्यैवोपपत्तेः।

**पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः ।**
**पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥९४॥** (प्रप.)
**प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति च ।**
**भेदेनैवाभिधानेऽपि प्राधान्यादेवमुच्यते ॥९५॥** (न्याम.)

लाक्षणिकवाक्यार्थविषये तु मृषैवोपालब्धाः स्मः।

---

१. मन्ये भोजस्यैवेयं कारिका।

**न हि गामानयेत्यादौ लक्षणास्माभिरिष्यते ।**
**गङ्गायां घोष इत्यादौ न चैषा प्रतिषिध्यते ।। ९६ ।।**[१]

तेन न मुख्यलाक्षणिकवाक्यार्थप्रविभागानुपपत्तिः।

यदपि क्रियाऽवगता कारकान्वयिनीमात्मनो दशामवगमयत्यविनाभावित्वा-दित्यस्मिन् पक्षे विशेषानवधारणमशाब्दत्वं च दोष इत्युक्तं, तदप्यनुमतमेव। न ह्यविनाभावतो विशिष्टा वाक्यार्थप्रतीतिरिति मन्यामहे, अपि त्वाकाङ्क्षासन्निधियोग्यताबलेन। आकाङ्क्षादिसद्भावे च शाब्दत्वं भवत्येवेत्यभिहितं पुरस्तात्।

यच्च प्राथम्यादिभिः पदानामेवान्वयबोधनशक्तिरस्त्विति वादितं, तत्राभिधान-शक्तिः पदानामिष्यत एव, अन्वयपर्यन्तता तु तस्या नेष्यते, वाक्यार्थप्रतीतेरन्य-थाप्युपपद्यमानत्वात्। वाक्यार्थे हि तात्पर्यशक्तिः पदानां व्याप्रियते, नाभिधात्री। तां च पृथगविविञ्चता भवतान्विताभिधानमभ्युपगतम्। तच्च न युक्तम्। सर्वत्राभिधात्र्याः शक्तेरविशेषेण प्रवृत्तौ पदार्थनैयत्यानवधारणे पदान्तरोच्चारणवैयर्थ्यादिदोषप्रसङ्गात्। पदान्तरानुच्चारणे त्रयेणान्वितमर्थमभिदधाति गोशब्दः। स नाभिधीयते, तत्संसर्गश्चा-भिधीयत इति विप्रतिषिद्धम्। तदभिधाने तु तद्वत्संबन्धाभिधानमित्येकमेव गोपदं सर्वार्थं स्यात्। तस्मान्न सर्वत्राभिधात्री शक्तिः शब्दस्योपपद्यत इति नान्विताभिधानम्।

एतेन यदुक्तं पदार्थानां बोधनशक्तिरेव कल्प्या, पदानां तु क्लृप्ताना-मेवान्वयपर्यन्ततेति धर्मिकल्पनातो धर्मकल्पना लघीयसीति अन्विताभिधानमेव युक्तमिति, तदपि निरस्तं भवति। यच्चोक्तं सम्बन्धस्मरणावगतसम्बन्धिप्रतिपत्ति-सिद्धान्वितार्थगोचरैवाभिधानशक्तिरस्त्विति, तदप्यनुपपन्नम्। सम्बन्धस्मरणसव्यपेक्षस्य पदस्याभिधायकत्वात्। न चान्विते सम्बन्धस्मरणं भवति। प्रतियोगिनामानन्त्येन सम्बन्धस्य ग्रहीतुमशक्यत्वात्। तस्मान्निष्कृष्टपदार्थमात्रविषयत्वमेवाभ्युपगमनीयम्।

यत्त्वधिगतविषयत्वं दूषणमुक्तं तदिष्यत एव। अत एव न पदं पदार्थे प्रमाणम्, अधिगतविषयत्वात्, अनधिगतार्थगन्तृ हि प्रमाणं भवति। न च पदस्य स्वार्थे स्मारकत्वमेव। यदाह—

**पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।। ९७।।** (श्लोवा. ५.१०७)

न तु स्मारकमेव भवति। तस्मात् पदानामभिहितान्वय एव न्याय्य इति।

**(उभयवादः)**

उभयवादिनस्त्वेवमामनन्ति, सामान्यतोऽन्विताभिधानं विशेषतोऽभिहितान्वय इति। गोशब्दो हि स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते। तदेतत् सामान्येनान्विताभिधानम्। शुक्लादिगुणविशेषस्तु पदान्तरादवगम्यते। सोऽयं विशेषेणाभिहितान्वय इति।

अपि च क्रियाकारकसंसर्गरूपो वाक्यार्थः, क्रियासम्बन्धमन्तरेण कारकत्वानुपपत्तेः। विशेषेषु चानन्त्यव्यभिचारादिदोषात् क्रियासामान्यान्वित एव कारके कारकपदानां सम्बन्धग्रहणं, संबन्धानुसारेण चाभिधानात् सामान्येऽन्विताभिधानमेव घटते। व्यवहारकाले च क्रियाविशेषान्वितानामेव कारकाणामुपलम्भात्। क्रियाणामपि च कारकविशेषान्वितानां प्रतीतेः शब्दव्यापारस्य सामान्यान्वयाभिधानेनैव परिसमाप्तेर्विशेषेष्वभिहितान्वय एव युज्यते। एवं च पदान्तरोच्चारणमपि न व्यर्थं भवति, अपेक्षितक्रियाकारकविशेष-समर्पकत्वेनार्थवत्त्वात्।

यद्यपि चात्र क्रियाकारकमात्रान्वयाभिधाने क्रियाकारकमात्रसम्बन्धित्वं क्रियाकारकसामान्याभिप्रायम्, तथाऽपि स्वार्थमात्रोपादायिनः सर्वभेदान् प्रति योग्यता; तदेवा–(तद्भेदा–)नुगुण्यमात्रं सामान्यम्, न हि तथा, अन्यथा सर्वथा वेति सामान्यमवस्थितरूपं किंचिदस्ति, सर्व एते विशेषा एव। तस्यास्तु सामान्यावस्थायां भेदस्य कस्यचिदनिरूपणादत्यागाच्च या सर्वभेदोपग्रहयोग्यतायां परिप्लवमानार्थकल्पना तां सम्बन्धो विषयान्तरादवच्छिद्य विशिष्टे विषये नियमयति। तदुक्तम्–

**सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः ।**
**तदर्थान्तरसंसर्गाद् भजते भेदरूपताम् ॥९८॥** (वाप. २.४४)
**भेदानाकाङ्क्षतस्तस्य या परिप्लवमानता ।**
**अवच्छिनत्ति सम्बन्धस्तां विशेषे निवेशयन् ॥९९॥** (वाप. २.४५)

अत एव च नानेकवाक्यार्थप्रतीतिः। सर्वेषां कारकाणां कर्मादिभावेन व्यवस्थितानामेव क्रियासम्बन्धात्। न च प्रथमश्रुतादप्यर्थप्रतीतिः, विद्यमानस्याप्यन्वयस्य सम्बन्धग्रहणमन्तरेणानुपलब्धेः। न चैकपदोच्चारणकाले सकलवाक्यार्थप्रतीतिः, तदानीं विशेषसमर्पकपदप्रयोगायोगात्।

यद्येवं सामान्येनान्विताभिधानमेवास्तु, किं विशेषेणाभिहितान्वयेन।

वृद्धव्यवहारप्रसिद्धसम्बन्धो हि शब्दोऽर्थस्य वाचकः। अन्वयव्यतिरेकाभ्यां च सम्बन्धावधारणम्। न च विशेषान्वयविषयौ तौ सम्भवतः। क्रियापदं हि कारक—सामान्याऽव्यभिचारिण्या क्रियया सहान्वयव्यतिरेकौ भजते, विशेषान्वये विशेषान्तरव्यभिचारात्। एवं कारकपदमपि।

तन्न; विशेषान्वयेऽपि आकाङ्क्षासन्निधियोग्यत्वोपाधिवशेन सम्बन्धग्रहणं सुकरमिति तदभिधायितैव युक्ता पदानाम्। यदि चासौ नेष्यते तदा वाक्यार्थप्रतिपत्तिरेव नोपपद्यते, वाक्यार्थस्य विशेषान्वयरूपत्वात्।

ननु च सामान्यान्वयोऽभिहितो विशेषान्वयमाक्षेप्स्यति, निर्विशेषस्य सामान्यस्यैव प्रत्येतुमशक्यत्वात्।

नैवम्। यथा जातिर्व्यक्तिमाक्षिपन्त्यपि न प्रतिनियतं विशेषमाक्षिपति, तथात्रापि नियतविशेषाभावान्नियतविशेषात्मकवाक्यार्थप्रतीतिरुपपन्ना।

ननु विशेषमात्राक्षेपेऽपि य आकाङ्क्षितः सन्निहितो योग्यश्च विशेषः पदान्तरेण समर्प्यते स एव गृह्यते, तदतिक्रमे प्रमाणाभावात् (इति),

एतदपि न सम्यक्। सामान्यान्विताभिधानवादिनो हि मते पदानि तावत् तन्मात्रपर्यवसितशक्तीनि; पदार्थानामपि चान्वयबोधनशक्तिर्नाङ्गीक्रियते। न च सामान्याक्षेपोऽपि नियतविशेषमास्कन्दति। तेनाकाङ्क्षिते योग्ये च विशेषपदान्तरेण सन्निधापिते तदन्वयबोधकप्रमाणाभावादन्वयो न प्रतीयते। अत आकाङ्क्षासन्निधि—योगयत्वान्यनुपयोगीन्येव।

विशेषान्विताभिधानवादिनस्तु मते सम्बन्धग्रहणं प्रत्युपाधित्वेनानुप्रविष्टानि वाक्यार्थप्रतिपत्तावुपयुज्यन्ते। पदात् पदार्थः पदार्थान्तरसम्बन्धो बोद्धव्य इत्यस्यां व्युत्पत्तावुपाधित्वेन योग्यत्वादिकर्मानुप्रविशद्विशेषान्विताभिधानवादिनः पक्षमपाकरोति, न सामान्यान्विताभिधानवादिन इति। किंच क्रियाकारकस्वभावालोचनयापि कारकमात्रेणा—न्वयसिद्धेर्वृथा सामान्यमात्रान्वयाभिधायकता शब्दस्याङ्गीक्रियते। तस्मात् तदुक्त एव न्यायः श्रेयान्, सामान्येनान्विताभिधानं, विशेषेणाभिहितान्वय इति।

युक्तं चैतत्, पदस्य प्रकृतिप्रत्ययात्मकत्वात्। पदे हि पचतीत्यादौ प्रकृत्यर्थः प्रत्ययार्थश्च सामान्यविशेषावगमरूपमन्योन्यान्वितं प्रतीयते। तत्र पचित्येषा प्रकृतिः सिद्धसाध्यत्वादिधर्मविनिर्मुक्तं प्रत्ययार्थमात्रान्वययोग्यं पाकसामान्यमात्रमभिदधाति।

अतिप्रत्ययस्तु पौर्वापर्यनियमात्र प्रकृतिवत् स्वतन्त्र: सामान्यमात्रे धियमादधाति; अपि तु प्रकृतार्थपेक्षयाऽऽचक्षाण: स्वार्थं विशेषमेव समर्पयतीति।

**अनुभयवादिन:** पुनरित्थं समर्थयन्ते– नान्विताभिधानं, न चाभिहितान्वय:, किं तर्हि? समुदितै: पदैरेको वाक्यार्थ: प्रत्याय्यते। स च गुणभूतेतरपदार्थसंसृष्ट: कश्चित् पदार्थ एवेति।

ननु किमयमन्विताभिधानपक्ष: पुनरुत्थापयितुमिष्ट:?

मैवम्; नेदमन्विताभिधानम्। किं तर्हि संहत्यकारिता पदानाम्?

उच्यते–'संहत्यकारिताप्यस्ति, न चान्विताभिधानम्, अन्वितमर्थं पदानि संहत्य संपादयन्ति, न त्वन्वितमभिदधति।

किमिदानीं कुर्वन्ति वाक्यार्थं पदानि, घटमिव मृदादीनि?

एतदपि नास्ति, ज्ञापकत्वात् तेषाम्।

का तर्हीयं वाचोयुक्ति: संहत्यकारीणि पदानि, न चान्वितमभिदधतीति?

पदान्यन्वितं प्रत्यायन्ति, नाभिदधतीति; इयं नाभिधात्री शक्तिरन्वितविषया, किन्त्वन्वयव्यतरेकावगतनिष्कृष्टस्वार्थविषयैव। तात्पर्यशक्तिस्तु तेषामन्वितावगमपर्यन्ता सहव्यापारात्, व्यापारस्य तदीयनिराकाङ्क्षप्रत्ययोत्पादनपर्यन्तत्वात्। तथा हि–

**अन्यथैव मतिश्शाब्दी विषयेषु विजृम्भते ।**
**प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधि: ॥१००॥**
**अत एव पदं लोके केवलं न प्रयुज्यते ।**
**न हि तेन निराकाङ्क्षा श्रोतुराधीयते मति: ॥१०१॥**(न्यायमं.)

नन्वभिधानव्यतिरिक्त: कोऽन्य: शब्दस्य कृत्स्नफलपर्यन्तप्रत्यायनात्मा व्यापार:?

अस्ति कश्चिद् य: सर्वैरेव संसर्गवादिभिरप्रत्याख्येय:। न हि संसर्गोऽभिधीयते, प्रतीयते च वाक्यात्।

ननु संसृष्टाभिधाने सति संसर्ग: प्रतीयते, नान्यथा।

नैतदेवम्, संहत्यकारित्वादेव संसर्गावगमसिद्धे:। न हि संहत्यकरणम् असंसृष्टं च कार्यं क्वचिद् दृश्यते।

अपि च प्रकृतिप्रत्ययौ हि परस्परसापेक्षमर्थमभिदधाते। न च प्रकृत्या प्रत्ययार्थोऽभिधीयते, नियोगस्य धातुवाच्यत्वात्। न च प्रत्ययेन प्रकृत्यर्थोऽभिधीयते,

यज्यादेर्लिङाद्यर्थानुपपत्तेः। न च तौ पृथक् स्वकार्यं कुरुतः। एवं पदान्यपि परस्परापेक्षीणि संहत्य कार्यं करिष्यन्ति। न च परस्परस्यार्थमभिधास्यन्ति, वाक्यान्यपि प्रकरणपतितान्येवमेव। तदुक्तम्— (श्लोवा.)

**प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् ।**
**पदं पदान्तरं यद्वद् वाक्यं वाक्यान्तरं तथा ॥१०२॥** इति।

अयमेव च पक्षः श्रेयान्। संहत्यकारित्वं पदार्थानाम् असङ्कीर्णार्थत्वं च

(न्यायमं.) **निरपेक्षप्रयोगेऽयःशलाका कल्पना भवेत् ।**
**तदन्विताभिधाने तु पदान्तरमनर्थकम् ॥१०३॥**
**संहत्यकारिपक्षे तु दोषो नैकोऽपि युज्यते ।**
**तेनायमुपगन्तव्यो मार्गो विगतकण्टकः ॥१०४॥**
**अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठिता ।**
**तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः ॥१०५॥**
**तेनान्विताभिधानं हि नास्माभिरिह मृष्यते ।**
**अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते ॥१०६॥** (न्यायमं.)

संहत्यकारित्वाच्च पदानां न स्वार्थाभिधित्सयैव समुच्चारणं, अपि तु प्रधानकार्यमेव कर्तुम्। तदुक्तम्—

**वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥१०७॥** (श्लोवा.)

तस्मान्नान्विताभिधानं नाप्यभिहितानामन्वयः। किंतु यथोपन्यस्तपक्ष एव श्रेयानिति॥

तदेवमाकाङ्क्षासन्निधियोग्यतावन्तः पदार्थश्चितुष्प्रकारमन्वयमनुभवन्तो वाक्यार्थीभवन्ति।

ननु चायोग्यतायामप्यन्वयो दृश्यते, पचति भवति, पश्य मृगो धावतीति। न हि साध्यैकस्वभावायाः साध्यत्वं साधनत्वं च युज्यत इति।

नैवम्; साध्यत्वेनैव साधनत्वात्। क्रियाभ्युपपत्तिरूपेण भवनस्वभावा साध्यस्वभावेनैव कर्मरूपा। यदेव चास्या अनिदन्तानिर्देश्यमपरिनिष्ठितं भवनं साध्यैकरूपं तेनैवैषात्र साध्यभावं साधनभावं च प्रतिपद्यत इति।

सिद्धतावभास: कुत इति चेत्, कर्तर्युत्पन्नो लकारस्तां सिद्धत्वेनावभासयति, यथा चोरस्य रुजतीति धात्वर्थ एव रोगलक्षण:, कर्त्रन्तराश्रवणात् साध्यरूपेणैव कर्तृभावमनुभवसिद्धतयावभासते।

यदि वा पदस्य न पदरूपादेवाधिकार्थता, किं तर्हि?, वाक्यरूपात्; तद्यथा पुरुष इति पदकाले पुरुषो व्यतिरिक्त उच्यते। यदा तु राज्ञ: पुरुष इति विशेषसन्नि–धियोग्यस्तदाऽस्य व्यतिरेको भवति, पुरुषविशेषोऽयं राजपुरुष इति। एवं पचतीति नैतस्मात् पदरूपादेवाधिकार्थत्वम्। यदा तु भवतीति पदान्तरसन्निधि:, तदा वाक्यकाले पुरुषस्येव व्यतिरेक उपजायत इति।

यदि वा न कदाचिदपरा तदतिरेकिणी भवनक्रिया, कश्चिदपरो वा कर्ता विरोधहेतुरस्ति। अपि तु सैव व्यपदेशिवद्भावन्यायेन क्रियारूपतां भवितृत्वं च दर्शयन्ती चकास्ति।

अपि चैकस्याप्यर्थस्य विषयभेदेन द्विधर्मत्वं दृश्यते, यथा राज्ञ: पुरुषस्य पुत्र इति पुरुष: शेषी च भवति शेषश्चेति राजानं प्रति शेषी आविचलितस्वार्थ: पुत्रार्थान्तरे शेषतामापद्यते। एवं भवति पचतीत्यत्र भवतोऽकर्तृत्वं साध्यत्वं च भविष्यति। पश्य मृगो धावतीत्यत्र च मृगे कर्तरि साध्यभावं प्राधान्यं चाजहत्सरणं दृशावङ्गत्वं साधनत्वं च गमिष्यतीति।

अथवा 'अयमर्थ: साधनमयं साध्यमि'–ति रूपसिद्धिमात्रमेतत्, यथा पदे अयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति, एक एवासावर्थो विशिष्टो वा (अ)खण्ड एव प्रतीयते, यथा मुण्डयति चर्चयतीति। अत्र मुण्डयति माणवकमिति मुण्डि: केशच्छेदनवचन:। अस्य तु व्युत्पत्ति: मुण्डं करोतीति करोतिसामान्यप्रवृत्तं विशेषे मुण्डशब्दोऽवस्थापयति। करोतिविशेषोऽयं यस्मिण्णिजुत्पद्यते, न करोतिमात्रम्। एवं चर्चां करोति चर्चयतीति। अत एव केचिन्मुण्डिचर्चादीन् चुरादिषु पठन्ति मुण्ड केशखण्डनेषु मुण्डयति चर्चयतीति।

एवं पश्य मृगो धावतीति 'इदमत्र साधनपदमिदं साध्यमि'–त्युत्प्रेक्षैषा। इदं त्वर्थसतत्त्वम्–'नात्र सरणं, न दर्शनं, न मृग:, किं तर्हि? मृगकर्तृको दृशिकर्मा सरणविशेषोऽयम् अखण्डो वाक्यार्थ इति। एतेन पुत्रमिच्छति पुत्रीयतीत्यादयोऽपि व्याख्याता:।।

## (८. एकार्थीभावः)

व्यपेक्षावतां समर्थानामन्वितार्थानां च पदार्थानां तिलतण्डुलवत् क्षीरनीरवत् पांसूदकवच्च यदविभागरूपेण भवनं स **एकार्थीभावः**। लक्षणं चैतत् समस्तं व्यस्तं च। तेन सापेक्षासमर्थसमासादीनामुपसङ्ग्रहः।

कः पुरस्य व्यपेक्षातो भेदः?

उच्यते व्यपेक्षायां सङ्ख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं चयोगः क्रमानियमो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः शब्दान्तरप्रयोगश्च भवति। एकार्थीभावे त्वैकपद्यमैकशब्द्यमैकस्वर्यमेकविभक्तित्वमेकवद्भाव एकशेषः अनेक– विधानामैक्यमेकविधानां चानैक्यमिति। तद्यथा व्यपेक्षायां सङ्ख्याविशेषः–'राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां वा पुरुषः।' एकार्थीभावे तु तदभावो राजपुरुषः। व्यपेक्षायां व्यक्ताभिधानं राज्ञः पुरुषः; एकार्थीभावे तु राजपुरुष इत्यत्र लोण्मध्यमपुरुषैकवचनं विभक्तिलोपो वेति नाभिधानव्यक्तिः। व्यपेक्षायामुपसर्जनस्य विशेषणं ऋद्धस्य राज्ञः पुरुषः, एकार्थीभावे तदभावः, राजपुरुषः। व्यपेक्षायां चयोगः, राज्ञः पुरुषो ब्राह्मणस्य च, एकार्थीभावे तु राजपुरुषः। व्यपेक्षायां क्रमानियमो राज्ञः पुरुषः, पुरुषो राज्ञः, एकार्थीभावे तु राजपुरुष इत्येव। व्यपेक्षायां व्यवधानमपि राज्ञः, पुरुषोऽयं पुरुषोऽयं राज्ञः; एकार्थीभावे तु राजपुरुष इत्येव। व्यपेक्षायां यथेष्टमन्यतरेणाभिसम्बन्धः, राज्ञः पुरुषो भार्या वेति ; एकार्थीभावे तु नियमतः पुरुषेणैव सम्बन्धो न भार्यया। व्यपेक्षायां शब्दान्तरप्रयोगो दध्नोपसिक्तं, परिग्लानोऽध्ययनाय; एकार्थीभावे तु नैवम्, दध्योदनं पर्यध्ययन इति। एकार्थीभावे ऐकपद्यं यथा–'आत्मनातृतीयः कण्ठेकाल'इति; एकशब्द्यं यथा– 'पितरौ भ्रातराविति; ऐकस्वर्यं यथा–'चित्रगुः, ब्राह्मणकम्बल' इति; एकविभक्तित्वं यथा– 'नीलोत्पलं, राजपुरुष' इति; एकवद्भावो यथा– गवाश्वं, प्लक्षन्यग्रोधा इति। एकशेषो यथा– अक्षा वृक्षा इति। अनेकविधानामैक्यं यथा– पुत्रमिच्छत्यात्मनः पुत्रीयति, मुण्डं करोति मुण्डयतीति। एकविधानामनैक्यं यथा– कंसवधमाचष्टे कंसं घातयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयतीति। व्यपेक्षायां तु नैवमिति।।

सोऽयमेकार्थीभावो व्यपेक्षावैलक्षण्येन विप्रथमानस्समानस्समासतद्धिताख्यादिषु त्रिषु त्रिधा विख्यायते – वाक्यतुल्यार्थः, वाक्याधिकार्थः, वाक्यान्यार्थ इति। तेषु–

**वाक्यतुल्यार्थो** यथा– वीरः पुरुषो वीरपुरुषः, कष्टं श्रितः कष्टश्रित इति।

**वाक्याधिकार्थो** यथा– 'गुडेन मिश्रा धानाः गुडधानाः, शङ्कुलया कृतः खण्डः शङ्कुलाखण्ड' इति।

**वाक्यान्यार्थो** यथा– 'कुशं लातीति कुशलः, प्रकृष्टो वीणायां प्रवीणः'॥

अथायं त्रिप्रकारोऽप्यनेकधा भिद्यते। तद्यथा – नित्यसमासः, नित्यासमासः, असमर्थसमासः, अलुक्समासः, सापेक्षसमासः, निरपेक्षसमासः, पूर्वपदप्रधानः, उत्तरपदप्रधानः, उभयपदप्रधानः, अन्यपदप्रधानः, अन्यथाप्रधानः, अन्यथोपसर्जनः, तिङ्समासः, प्रातिपदिकसमासः, उपपदसमासः, प्रादिसमासः, नञ्समासः, एकदेशिसमासः, सामान्यसमासः, विशेषसमासः, समानाधिकरणः, भिन्नाधिकरणः, उपमानससमासः, उपमेयसमास इति। तेषु –

**नित्यसमासो** यथा– लोहितशालिः, गौरखरः, उद्दालपुष्पभञ्जिका, दन्तलेखक इति।

**नित्यासमासो** यथा– अकिञ्चित्कुर्वाणः, अमाषं हरमाणः, अगाधमुत्सृप्ताः, छात्राणां पञ्चम इति।

**असमर्थसमासो** यथा– असूर्यंपश्या राजदाराः, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मणः, अलवणभोजी भिक्षुरिति।

**अलुक्समासो** यथा– स्तोकान्मुक्तः, आत्मनातृतीयः, पश्यतोहरः, कण्ठेकाल इति।

**सापेक्षसमासो** यथा– यज्ञदत्तस्य भ्रातृभार्या, विष्णुमित्रस्य गुरुकुलम्, चूतस्य फलरसः, प्रियायाः स्तनस्पर्श इति।

**निरपेक्षसमासो** यथा– वर्षशतमायुरस्य शतायुः, शाकप्रधानः पार्थिवः शाकपार्थिवः, अश्वयुक्तो रथोऽश्वरथः, अश्रेणयः श्रेणयः कृताः श्रेणीकृता इति।

**पूर्वपदप्रधानो** यथा– उपकुम्भम्, निर्मक्षिकम्, बहिर्ग्रामम्, पारेगङ्गमिति।

**उत्तरपदप्रधानो** यथा– आरूढवानरो वृक्षः, ऊढरथोऽनड्वान्, चित्रगुर्देवदत्तः, मत्तमातङ्ग वनमिति।

**अन्यथाप्रधानो** यथा– उन्मत्तगङ्गं, पञ्चकपालः, द्वित्राः, कृष्णशार इति।

**अन्यथोपसर्जनो** यथा– शाकप्रति, प्राप्तजीविकः, गोगर्भिणी, अग्निस्तोक इति।

**तिङ्समासो** यथा— अस्तिक्षीरा, एहिवणिजा,अश्नीतपिबता, खादतमोदतेति।

**प्रातिपदिकसमासो** यथा— दधिसेक्, चर्मक्रीति।

**उपपदसमासो** यथा— कुम्भकारः, पङ्कजम्, उष्ट्रक्रोशी, सहयुद्धेति।

**प्रादिसमासो** यथा— निष्कौशाम्बिः, उत्पश्यः, दुरासदः, सुप्रबोध इति।

**नञ्समासो** यथा— अब्राह्मणः, अनेकः, अभार्यः, अपचसीति।

**एकदेशिसमासो** यथा— चन्द्र इव मुखमस्याश्चन्द्रमुखी, मृगीव चपला मृगचपला, शस्त्रीव श्यामा शस्त्रीश्यामा, अनन्येन सदृशी अनन्यसदृशी।

**उपमेयसमासो** यथा— 'व्याघ्र इव पुरुषः पुरुषव्याघ्रः, करीव कलभः करिकलभः, शार्दूल इव राजा राजशार्दूलः, चन्द्र इव मुखं मुखचन्द्र इति॥

**(उपमानमुपमेयञ्च)**

किं पुनरुपमानं किं वोपमेयं, किं यदेवोपमानं तदेवोपमेयम्, आहोस्विदन्यदुपमानमन्यदुपमेयम्?

किंचातः?

यदि यदेवोपमानं तदेवोपमेयम्, उपमार्थो न घटते, न हि भवति गौरिव गौः; अन्यदुपमानमन्यदुपमेयं, तथाप्युपमार्थो न घटते, न हि भवति गौरिवाश्व इति। एवं तर्हि यत्र किंचित्सामान्यं कश्चिच्च विशेषः तत्रोपमानोपमेये भवतः।

किं वक्तव्यमेतत्? न हि। कथमनुक्तं गम्यते?

मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते। यथा प्रस्थादिमानमनिर्ज्ञातस्य धान्यादेर्मेयस्यात्यन्तावच्छेदायोपादीयते।

तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानं, यथा गौरिव गवयः। गौरस्य निर्ज्ञातः गवयोऽनिर्ज्ञातः।

तर्हि यस्य गवयो निर्ज्ञातः स्यात् गौरनिर्ज्ञातः, कर्तव्यं तेन गवय इव गौरिति।

बाढं कर्तव्यम्, यथा भेदसादृश्याध्यासितमूर्तयः पदार्थाः परस्परमनियमेनोप— मानोपमेयभावमधिगच्छन्ति, यथा चन्द्र इव मुखं कामिन्यां, मुखमिव चन्द्रो

यामिन्याम्। यत्र पुनर्भेदसादृश्याध्यासितमूर्तित्वं न, तत्रोपमानोपमेयभावोऽपि न। यथा गौरिव गौः, गौरिवाश्व इति।

ननु य एते भेदसादृश्याध्यासिताः पदार्थास्ते नान्तरेण देशकाल–क्रियादिसम्पादितं विरोधं भवितुमर्हन्तीति सामानाधिकरण्यानुपपत्तिः?

नैवम्; यद्यप्युपमानमुपमेयं च परमार्थतो भिन्नं, तथाप्युपमानशब्दा गौणीं वृत्तिमाश्रित्योपमेये वर्तमानास्तयोर्भेदं तिरोदधति। तथा हि – यदा व्याघ्रादयः शौर्याद्यतिशयनिबन्धनमुपमानोपमेयसम्बन्धमनुभूय ततः उपमानोपमेयसम्बन्धाध्या–रोपिता भेदा उपमेये वर्तन्ते व्याघ्रसदृशोऽयं व्याघ्र इति, तदा पुरुषादिश्रुतिभिरभिन्ना–धिकरणाः समस्यन्त इति।

किं पुनरुपमानोपमेयप्रतिपत्तिनिबन्धनेभ्य एव शब्देभ्यः सादृश्यप्रतिपत्तिः? उत तेभ्यश्चान्येभ्यश्चेति?

किं चातः?

यदि तेभ्य एव, पुरुषं व्याघ्रं च वीक्षस्वेत्यत्रापि स्यात्। इवप्रयोगवैयर्थ्यं च। अथ द्वितीयः पक्षः, पुरुषो व्याघ्र इवेत्येव स्यात्, न पुरुषव्याघ्र इति।

यथेच्छसि तथास्तु।

अस्तु तावत् प्रथमः पक्षः।

ननु चोक्तं पुरुषं व्याघ्रं च वीक्षस्वेत्यत्रापि सादृश्यप्रतिपत्तिः स्यात्। इह हि पुरुषव्याघ्रयोर्वीक्षणक्रियासमावेशमात्रं विवक्षितम्, न सादृश्यम्।

ननु विवक्षातोऽपि सादृश्यप्रतिपत्ताविवादिशब्दोपादानमनर्थकम्। यत्र मुख्यवृत्तिव्यतिक्रमेण गौणीं वृत्तिमाश्रित्योपमानशब्दा उपमेये प्रयुज्यन्ते तत्रैव इवादिशब्दविकलाः सादृश्यं गमयन्ति, यथा कश्चिदव्याघ्रं पुरुषं व्याघ्र इत्याह, तेन मन्यामहे व्याघ्रसदृशोऽयं पुरुषः। ततः व्याघ्रधर्माणां शौर्यबलवत्त्वादीनां व्याघ्रशब्दात् पुरुषे प्रतिपत्तिर्भविष्यति। यदा पुनरुपमानोपमेयशब्दा मुख्यार्थप्रतिपत्तये विवक्षितोपमानोपमेय–भावेषु वाक्येषु स्वरूपाभेदादशक्ताः सादृश्यमवगमयितुं, तदाऽपेक्षन्ते द्वितीयमिवादिशब्दप्रयोगमिति।

किं पुनरिहोदाहरणम्?

शस्त्रीव श्यामा शस्त्रीश्यामेति।

ननु चात्र श्यामाशब्दोपात्तस्य धर्मस्योपमानोपमेययोस्तुल्यतावद्योतनायेवशब्दः प्रयुज्यते। व्याघ्र इव पुरुष इत्यत्र तु सामान्यप्रयोगाभावात् कस्य पुरुषव्याघ्रयो– स्साधारण्यमिवशब्देनावद्योत्यत इति?

उच्यते– शब्दः क्वचिदभिधावृत्त्या अर्थं बोधयति, यथा गुडशब्दो गुडद्रव्यम्; क्वचिद् गमकवृत्त्या, यथा गुडद्रव्याविनाभावि माधुर्यम्, एवमिह व्याघ्रशब्देन व्याघ्राविनाभावि शौर्यादिकं गमितं, तस्य व्याघ्रपुरुषयोस्सादृश्यसिद्ध्यर्थमुभ– याधिकरणतावद्योतनमिवेन क्रियत इति। एतेन शस्त्रीश्यामेत्यपि व्याख्यातम्। अत्राप्यनुपात्तमपि देवदत्ता इति गम्यते।

क्व पुनरयं श्यामाशब्दो वर्तते? शस्त्र्यामित्याह।

केन तर्हीदानीं देवदत्ता गम्यते?

समासेन। यदाह उपमानानि सामान्यवचनैः (२.१.५५) समस्यन्ते; समानत्वं च साधारण्ये सति स्यात्। तत्तु देवदत्तामन्तरेण नोपपद्यत इति।

यद्येवं शस्त्रीश्यामो देवदत्त इति न सिद्ध्यति। उपसर्जनस्य (१.२.४८) इति ह्रस्वत्वं भविष्यति।

यदि तर्हि उपसर्जनान्येवंजातीयकान्यपि भवन्ति, तित्तिरिकल्माषी कुम्भकपाललोहिनीत्यनुपसर्जनलक्षण ईकारो न प्राप्नोति।

एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते, श्यामाशब्दस्तु देवदत्तायाम्। एवमपि गुणोऽनिर्दिष्टो भवति। बहवश्च शस्त्र्यां गुणाः–'सूक्ष्मा श्लक्ष्णा पृथुः श्यामे'ति।

अनिर्दिश्यमानस्यापि गुणस्य भवति लोके सम्प्रत्ययः। तद्यथा– चन्द्रमुखी देवदत्तेति। बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते। यथा च व्याघ्रोऽयं पुरुष इति बहुष्वपि व्याघ्रगुणेषु शौर्यं बलवत्ता वा प्रतीयत इति। एवमपि 'समानाधिकरणेन' इति वर्तते। व्यधिकरणत्वात् समासो न प्राप्नोति।

किं हि वचनान्न भवति?

यद्यपि तावद् वचनात् समासः स्यात्, मृगीव चपला मृगचपलेति समाना– धिकरणलक्षणः पुंवद्भावो न प्राप्नोति। एवं तर्हि तस्यामेवोभयं वर्तते। एतच्चात्र युक्तं यत्तस्यामेवोभयं वर्तते; इतरथा हि बह्वपेक्ष्यं स्यात्। यदा तावदेवं विग्रहः क्रियते 'यथा शस्त्री श्यामा एवं देवदत्ता' इति, तदा श्यामेति देवदत्तायामपेक्ष्यं स्यात्। यदाप्येवं विग्रहः

क्रियते शस्त्रीश्यामा देवदत्तेति, तदापि श्यामेति शस्त्र्यापेक्ष्यं स्यात्। यदा तु शस्त्रीश्यामा चासौ श्यामा च शस्त्रीश्यामेति, तदा न किञ्चिदपेक्ष्यते, सामानाधिकरण्यं च भवति।

नन्वेवं सति शस्त्रीशब्दस्य देवदत्तायां प्रवृत्तिनिमित्तमनिर्दिष्टं भवति;

प्रतीयमानं भविष्यतीति चेत्, किं तदिति पृच्छामि। यदि श्यामत्वमेव, श्यामेति शब्दस्योक्तार्थत्वादप्रयोगः प्राप्नोति। न हि गुणवृत्त्या प्रतिपादितेषु गुणेषु तदभिधानाय गुणवचनः प्रयुज्यते, न हि भवति पुरुषोऽयं व्याघ्रशूर इति। अथानभिहितं तैक्ष्ण्यादिकमुपादाय शस्त्रीशब्दो देवदत्तायां वर्तते, तर्हि तीक्ष्णश्यामगुणवचनयोः खञ्जकूणवत् समासे 'उपमानानि सामान्यवचनैः' इति विरुध्यते, श्यामशस्त्रीति प्रयोगः प्राप्नोति।

ननु पक्षत्रयेऽपि दोषदर्शनात् पक्षान्तराभावाच्च किन्न भवितव्यमेवोपमान–समासेन?

भवितव्यम्, किन्तु पूर्वोत्तरपक्षौ व्युदस्य मध्यमे पक्षे, शस्त्रीव श्यामा देवदत्ते–त्यवैयधिकरण्येऽपि वचनसामर्थ्यात्।

ननूक्तं तत्र मृगचपलेति समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति,

नैवम्। नेह पूर्वपदं शस्त्रीत्वेन (मृगीत्वेन) विवक्षितम्, अपि तु मृगत्वजातिमात्रेण, यथा मृगक्षीरं कुक्कुटाण्डमिति। 'उपामानसमासे गुणवचनस्य विशेषभाक्त्वात् सामान्यवचनत्वाप्रसिद्धिः'। यतः श्यामाशब्दोऽयं सादृश्यसिद्धये शस्त्रीशब्देनाभि–सम्बध्यमानो विशेषवचनः सम्पद्यते।

नैवम्; श्यामत्वस्य उभयत्र भावात् तद्वाचकत्वाच्च शब्दस्य सामान्य–वचनत्वप्रसिद्धेः।

न चावश्यं स एव सामान्यवचनः। यो बहूनां सामान्यमाह; द्वयोरपि यः सामान्यमाह, सोऽपि समान्यवचनः।

अथवा 'सामान्यवचनैः' इत्येतेन सर्वश्च शब्दोऽन्येनाभिसबध्यमानो विशेषवचनः सम्पद्यते। त एवं विज्ञास्यामः – 'प्रागभिसम्बन्धाद्यः सामान्यवचन' इति।

नन्वेवं सति 'उपमितं व्याघ्रादिभिः' इत्यत्र सामान्याप्रयोगग्रहणमतिरिच्यते।

व्याघ्रादयोऽपि भेदोपनिबन्धनस्येवादेः प्रयोगे यदोपमान एव वर्तन्ते तदा सामान्यप्रयोगमपेक्षन्ते–'पुरुषोऽयं व्याघ्र इव शूरः, सिंह इव बलवानिति।' अभेदोपक्रमे

चाभिधाने सम्बन्धनिमित्तस्योपमानशब्दैरेव अन्तर्भावितत्वादप्रयोगः सामान्यशब्दस्येति। अप्रयोगेऽपि च सामान्यधर्मावसायश्चन्द्रमुखवद्भविष्यति। तदुक्तं— 'सिंहो व्याघ्र इति पूजायां, श्वा काक इति कुत्सायाम्' इति।

नैवम्, यद्यन्तर्भूतोपमा न कुत्सार्थसम्बन्धप्रतिपद्व्याघ्रादिशब्दैरुपमेयं पुरुषादि पूजार्थं चाभिधीयते।

तथापि तन्निमित्तस्यानेकत्वानियमाय निमित्ततृतीयान्तशौर्यादिपदप्रयोगो न विरुध्यते, पुरुषोऽयं व्याघ्रः शौर्येणेति।

भिन्नेऽपि वस्तुन्यभेदोपचारः सारूप्यमात्रं गमयेत्, न तस्यात्मातिशयम्; यथा हि सुमनायते दुर्मनायते अभिमनायत इति सुदुरभीनां भवत्यर्थविशेषपक्षे प्रत्ययेनोपात्तार्थानामपि प्रत्ययस्य रूपाभेदादनवसीयमानविभागमुपसर्गार्थमवच्छेत्तुं प्रयोगः। कथं पुरुषव्याघ्रादौ तस्याः पूजाया निमित्तभेदसम्भवे नियमाय सदृशभागोपनिपाती शब्दः प्रयुज्यत इति।

### (तद्धिताख्यातार्थैकार्थीभावाः)

एवमयमेकार्थीभावस्तद्धिताख्यातयोरपि अनन्तप्रकार एव द्रष्टव्यः। तत्र—

#### (तद्धिते)

**तद्धिते** सामान्येन त्रिधा **सम्बन्धविषयः, कारकविषयः, स्वार्थविषयश्च**। तेषु—

**सम्बन्धो** द्विधा— प्रधानमप्रधानं च।

**प्रधानं** यथा—'गावोऽस्य सन्ति गोमान्, सलातुरोऽस्याभिजनः सालातुरीय' इति।

**अप्रधानं** यथा—'वसिष्ठस्यापत्यं वासिष्ठः, चाषाणां समूहश्चाषमि'ति।

**कारकं** द्विधा— प्रधानमप्रधानं च।

**प्रधानं** यथा—'विषेण वध्यो विष्यः शत्रुः, पदमस्मिन् दृश्यं पद्यः कर्दम' इति।

**अप्रधानं** यथा— व्याकरणं वेत्ति अधीते वा वैयाकरणः, अक्षैर्दीव्यत्याक्षिक' इति।

**स्वार्थो** द्विधा—मुख्य उपचरितश्च।

**मुख्यो** यथा—'यव एव यावकः (यवकः), मणिरेव मणिक' इति।

**उपचरितो** यथा— 'कुशाग्रीया बुद्धिः, काकतालीयमिव काकतालीयो न्याय' इति।

(आख्याते)

**आख्यातेऽपि** त्रिधा कारकेण, सम्बन्धिना प्रादिभिश्च।

**कारकेण** यथा—'अभृशो भृशो भवति भृशायते, शब्दं करोति शब्दायते, हस्तिना अतिक्रामति अतिहस्तयति, कष्टाय कर्मणे क्रामति कष्टायते, पाशान् विमोचयति विपाशयति, प्रासाद इवाचरित प्रासादीयतीति।

**सम्बन्धिना** यथा—'व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति, कंसस्य वधमाचष्टे कंसं घातयति, आ रात्रेर्विवासमास्ते रात्रिं विवासयति, पुष्येण चन्द्रस्य योगं जानाति पुष्येण चन्द्रं योजयति, माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयति, कालस्य गमनमुपविष्ट: प्रतिपालयति कालं गमयतीति।

**प्रादय:** पुन: षोढा—वाचका:, द्योतका:, सहाभिधायका:, विशेषका:, कार्यार्थिका: निरर्थकाश्चेति। ते च क्रिययैव सम्बध्यमाना: क्रियाप्रधानत्वादाख्यातस्य तद्व्यपदेशभाजो भवन्ति। तत्रोपसर्गाणां वाचकत्वं यथा—'प्रादयो गताद्यर्थे प्रथमया, प्राचार्य:, प्रान्तेवासीति। अत्यादय: क्रान्ताद्यर्थे द्वितीयया, अतिखट्व:, अतिमाल इति। अवादय: क्रुष्टाद्यर्थे तृतीयया, अवकोकिलम्, अवमयूरमिति। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या, पर्यध्ययन:, परिप्रवचन इति। निरादय: क्रान्ताद्यर्थे पञ्चम्या, निर्वाराणसि:, निष्कौशाम्बिरिति। एवं प्रपतित: पर्ण: प्रपर्ण:, प्राचीनं पलाशं प्रपलाशं, सङ्गता आपोऽस्मिन्निति समीपम्, सङ्गतमक्षेण समक्षमिति।

धातुलीनस्यैवार्थविशेषस्य प्रकाशकत्वं द्योतकत्वम्। द्योत्याश्च 'तदन्य: तत्सदृशस्तद्विरुद्धस्तदभावस्तदुत्कर्षस्तदपकर्ष' इति षडर्था भवन्तीति। तेषु

**तदन्यो** यथा—'प्रतीक्षते, उपक्रमत' इति; तत्सदृशो यथा 'संवदति, अनुकरोती'ति;

**तद्विरुद्धो** यथा—'प्रतिष्ठते, उन्मज्जतीति;

**तदभावो** यथा—'वियुज्यन्ते, प्रस्मरन्ती'ति;

**तदुत्कर्षो** यथा—'प्रगल्भते, अतिक्रामतीति;

**तदपकर्षो** यथा—विहसति, प्राश्नातीति।

अत्र च योऽसौ क्रियात्मभूतो धर्म: कालहरणादिस्तद्धात्वभिहितमेवा—सत्त्वभूतमनभिदधत् प्रादिरवद्योतयति। यथाऽक्षिनिकोचादयोऽनभिदधत एवार्थान् प्रदर्शयन्ति, एवं क्रियास्थान् प्रारम्भादीनब्रुवन्त एव प्रादयोऽवद्योतयन्ति।

धातोरेकाकिनः क्रियाविशेषाभिधानासामर्थ्ये सहकारिभावः सहाभिधायकत्वम्। तत्रान्तरङ्गो, बाह्यः, अव्यभिचारी, व्यभिचारी, व्यवहितः, सविशेषश्च सहाभिधायको भवति। तेषु—

**अन्तरङ्गो** यथा— 'सङ्ग्रामयते, असङ्ग्रामयत।

**बाह्यो** यथा— अनुरुध्यते, अन्वरुध्यत।

**अव्यभिचारी** यथा— अधीते, अध्येति।

**व्यभिचारी** यथा— आचामति, संधुक्षयति।

**व्यवहितो** यथा— पुच्छमुदस्यत्युत्पुच्छयते, व्यस्यति विपुच्छयते।

**सविशेषो** यथा— सेनया अभियाति अभिषेणयति, वीणयोपगायति उपवीणयति।

**सहार्थाभिधाने** तूपसर्गयोर्भेदप्रतिपत्तिः कथम्?

यद्यपि धातुरुपसर्गं न व्यभिचरति, व्यभिचरत्येवोपसर्गो धातुम्। अतः शक्यतेऽन्वयव्यतिरेकाभ्यां भेदः कल्पयितुम्। यावानयं समादिरुपसर्गोऽन्यत्र दृष्टः इहापि तावानेव भवितुर्भवतीति।

सजातीयेभ्यो विजातीयेभ्यश्चावच्छेदको **विशेषकः**। स षोढा— प्रकृतिविशेषकः, प्रकृत्यर्थविशेषकः, प्रत्ययविशेषकः, प्रत्ययार्थविशेषकः, उभयविशेषकः, उभयार्थविशेषकश्चेति। तेषु—

**प्रकृतिविशेषको** यथा— विजयते, पराजयते।

**प्रकृत्यर्थविशेषको** यथा— सङ्क्रीडति, सङ्क्रीडते।

**प्रत्ययविशेषको** यथा— विशालम्, विशङ्कटम्।

**प्रत्ययार्थविशेषको** यथा— अभिमनायते, दुर्मनायते।

**उभयविशेषको** यथा— अनुव्यचलत्, प्रावर्षत्।

**उभयार्थविशेषको** यथा— उपतिष्ठति, उपतिष्ठते।

अत्र च प्रादिः प्रकर्षादिकमर्थं ब्रुवाणः क्रियां सामान्येनोपगृह्णाति, न तु क्रियासामान्यविशेषयोरात्मानं नियमयति।

धातुरपि क्रियां ब्रुवन् प्रकर्षादिकमर्थं सामान्येनोपगृह्णाति, न तु सामान्यविशेषयोरात्मानं नियमयति।

परस्परोपश्लेषे तु तयोर्विशेषणविशेष्यभावो नीलोत्पलादिवद् भवति।

**कार्यार्थत्वं** यथा– प्रयुङ्क्ते, पराकरोति, अभिषुणोति, प्रणमति, वित्तं, समीपम् इति।

आत्मनेपदं, परस्मैपदं, षत्वं, णत्वं, तत्वम्, ईत्वं च कार्याण्युपसर्गयोगे भवन्ति।

**निरर्थकत्वं** यथा–निह्नुते, निखञ्जन्ति, प्रलम्बते, संश्रयतीति। अत्र पदोपचयमात्रे प्रादिः प्रयुक्त इति निरर्थकत्वम्। आहुश्च–(वाप. २.१८८)

**स वाचको विशेषाणां सम्भवे द्योतकोऽपि वा ।**
**शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥१०८॥**
**क्रियाविशेषको वा स्यात् कार्यार्थं वोपदिश्यते ।**
**पदोपचयमात्रे वाऽनर्थकः प्रादिरिष्यते ॥१०९॥** इति

**(वाक्यैकार्थीभावः)**

एवमयमनेकरूपः पदैकार्थीभावः। एवं वाक्यैकार्थीभावोऽपि।

तत्र 'आख्यातं साव्ययकारकविशेषणं वाक्यं, एकतिङ् वाक्यम्' इत्यादयो विकल्पाः। तत्र चैकवाक्यस्थात् पदादुत्तरयोस्तिङामन्त्रितपदयोर्निघातः। युष्मदस्म–दोर्वान्नावादय आदेशाः। 'वाक्यस्य टेः प्लुत उदात्त' इति तु वाक्याचामन्त्यस्य प्लुत इत्यादीनि प्रयोजनान्यभिधीयन्ते। क्रियाकारकाव्ययविशेषणपदार्थानां च परस्परमुपकार्योपकारकभावेनावस्थितानां 'भावना, विधिः, प्रतिभा' वेति वाक्यार्थः प्रथमे। एवं वाक्यानामपि परस्परमुपमानोपमेयभावादिभिरिवादिशब्दप्रयोगे मुक्तकादिष्वेकार्थीभावो भवति। एतेनैकक्रियाकारकाभिनिवेशिनोर्युगलकसन्दानितक–कलापककुलकादयो वाक्यविशेषा व्याख्याताः। तत्र–

द्वाभ्यां चतुष्पदीभ्यां **युगलकम्**,
तिसृभिः **सन्दानितकम्,**
चतुर्भिः **कलापकम्**,
पञ्चादिभिः **कुलक**मिति संज्ञा विज्ञायते।
एतेनैकप्रघट्टकोपनिबन्धानां सुभाषितानां समूहः **सङ्घातः**,
अनेकप्रघट्टकोपनिबद्धानां तु **कोश** इत्यपि व्याख्यातम्।

नगरर्तूद्यानचन्द्रार्कोदयार्णववर्णनादयस्तु सङ्घातरूपा एव प्रबन्धान्तःपातिनो वाक्यसमूहाः प्रकरणव्यपदेशभाजोऽवान्तरवाक्यतां लभन्ते। तदर्थश्चैकार्थीभावमनुभवन्ति।

यस्तु तैरुपक्रियमाणो महावाक्यार्थः सर्गबन्धादावाख्यायिकादौ मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यैः पञ्चसन्धिभिरुपक्षेपपरिकरादिभिश्चतुष्षष्टिसन्ध्यङ्गैरङ्गषोडशकरूपभारत्यादिरूपवृत्तिचतुष्टयेन च यथायोगमुपकृतः कृतान्योन्यविशेषणविशेष्यभावः **सुभद्राहरणं जानकीहरण**मित्यादिना महावाक्यार्थरूपेण प्रथते, स प्रबन्धैकार्थीभावोऽपर इत्याख्यायते। यस्तु तद्रूपरामायणादिप्रबन्धार्थानामवधारणेनोपहितसंस्कारस्य 'रामवद्वर्तितव्यं न रावणादिवद्' इत्यादिविधिनिषेधप्रतिभाविशेष उपजायते, स समस्तविश्वव्यापि चतुर्वर्गैकहेतुः **परा** महावाक्यैकार्थोऽर्थमूर्त्या विपरिणतमनादिनिधनमखण्डं शब्दब्रह्मेत्युच्यते।

**अखण्डः सैष वाक्यार्थः शब्दब्रह्मेति गीयते ।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।।११०।।**

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।१११।।** (वाप. १.१६)

**उक्ताश्चतस्रोऽथ पुनश्चतस्रः शब्दार्थसम्बन्धभिदः क्रमेण ।**
**चतस्र एवाथ वचोविशेषे निषेदुषीस्ताः परिकीर्तयामः ।।११२।।**

## इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे सापेक्षशब्दशक्तिप्रकाशो नाम

## ।। अष्टमः प्रकाशः ।।८।।

सनातनः शीलितसाहितीकः सर्वाङ्गसम्पूर्णतया यथार्थम् ।
प्रकाशमेतं सुपठं विधाय प्रसासदीति श्रितकाव्यतत्त्वः ।।



अथ

## शृङ्गारप्रकाशे नवमः प्रकाशः

दोषहानगुणोपादानप्रकाशो नाम

तत्र अभिधाविवक्षादिभिर्निरूपिते शब्दार्थयोः साहित्ये वाक्यस्य प्रयोगयोग्यता प्रयोगानर्हता च निश्चीयते। यदाह—'एकः शब्दः सम्यक्प्रयुक्तः स्वर्गे लोके कामधुग्भवति' (मभा. ६.१.८४)। दुष्प्रयुक्तः पुनरधर्माय सम्पद्यते। सम्यक्प्रयोगश्चास्य तदोपपद्यते यदा दोषहानं गुणोपादानमलङ्कारयोगो रसावियोगश्च भवति। तेषां च प्रथमं दोषहानमेव विधेयम्। यतः कमनीयरूपादिसम्पदुपेतमपि वपुः कुष्ठबिन्दुनैकेनापि दौर्भाग्यमनुभवति। उक्तं च—(काव्याद. १.७)

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन ।**
**स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥१॥**

किं च— (भामहा. १.१२)

**नाकवित्वमधर्माय मृतये दण्डनाय वा ।**
**कुकवित्वं पुनस्साक्षान्मृतिमाहुर्मनीषिणः ॥ २॥**

## (१. दोषहानम् )

दोषास्त्रिधा **१. पददोषाः, २. वाक्यदोषाः, ३. वाक्यार्थदोषाश्च**।

तत्र च वाक्यस्य प्रयोगयोग्यतायाः प्रयोगानर्हतायाश्च निश्चयार्थं विमर्शे पदगतदोषनिरूपणमनिपुणोपज्ञमिव विज्ञायते। न हि वाक्यावस्थायां पदानि पदार्था वा विद्यन्ते। यथा हि चित्रे नीलपीतरक्तादयः, पानके गुडामलकमरीचादयः, ग्रामरागे षड्जर्षभगान्धारादयः चित्रादिभ्यः पृथक्त्वेन नावभासन्ते, तथा वाक्येऽपि क्रियाकारकविशेषणादिपदानि तदर्था वा न वाक्यवाक्यार्थभ्यां भेदेनैव प्रतीयन्ते।

वाक्यार्थो हि पदपर्यायैरखण्ड एवाभिधीयमानो दृश्यते। तद्यथा— मुण्डं करोति मुण्डयति, श्लोकैरुपस्तौति उपश्लोकयति, श्रुत्वा च्छन्दोऽधीते श्रोत्रियः, परस्य

क्षेत्रेऽतिचरन् चिकित्स्यते क्षेत्रियः, स्रुघ्नमभिनिष्क्रामति द्वारं स्रौघ्नम्, कलापिषूद्भिद्यमानकलापेषु विगतकलापेषु वा देयमृणं कालापकम्, केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि, गौरवाय ह्वायकमिच्छति जिह्वायकीयिषति, अश्नीत पिबत इति सातत्येन यस्यां क्रियायां तामात्मनः इच्छत्यश्नीतपिबतीयति, दक्षिणे पार्श्वे लुब्धेन विषदिग्धेन शरेण मर्मणि निर्मितं व्रणं यस्य मृगस्य स दक्षिणेर्मा, दक्षिणात् समुद्रादद्रिराजं हिमवन्तं यावद् योजनानां दशशतीं विजयमानः समस्तरत्नानां य आयतनं स चक्रवर्ती। यो राजसूययाजी य ईश्वरो मण्डलस्य सकलस्य यश्चाज्ञयैव राज्ञः प्रशास्ति संराट् स विज्ञेय इति। अपि च ललाटं पश्यति लालाटिकः, कुक्कुटीं चरतीति कौक्कुटिकः; तत्र ललाटदर्शनेन दूरे अवस्थानं लक्ष्यते, तेनानुपश्लेषकार्येषु चानुपस्थानम्; यः सेवकः स्वामिनः कार्येषु नोपयुज्यते, ललाटमेव वा यः कोपप्रसादसंरक्षणाय पश्यति स लालाटिक इत्युच्यते। तथा कुक्कुटीशब्देन कुक्कुटीपातो लक्ष्यते, तेन देशस्याल्पता; यो हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छंस्तावत्येव देशे चरति, यो वा तथाविधमात्मानमतथाविधोऽपि संदर्शयति, कुक्कुटीपातानां दाम्भिकानां चेष्टां वाचरति यस्सः कौक्कुटिक उच्यते।

एवं लोके लज्जाकरत्वादप्रकाश्यत्वेन कूपे प्रक्षेपणमिवार्हति यदकार्यं तत्कौपीनम्, तदिव यद्गूहनीयमङ्गं तदपि कौपीनम्; तस्य यदाच्छादकं वस्त्रखण्डं वल्कलादि तदपि कौपीनमेवोच्यते। किं च सिद्धस्यान्नस्य वर्धनायानाहूतापि योपतिष्ठते सा वध्रिका; तद्वदप्रार्थितोऽपि यः परिकर्मणि व्याप्रियते सोऽपि निन्द्यत्वेन वध्रिकेव वध्रिका; प्रशस्योऽपि विरुद्धलक्षणया हतभग्नादिवद्(?) यः तद्व्यपदेशभाग्भवति सोऽपि वर्धिका दर्शनीयो मनुष्य इति वर्धिकेत्येवोच्यते। तथा—

**'अर्धं जरत्याः कश्चित् कामयतेऽर्धं परिहरति, एवं कश्चित् कार्यस्यार्धमाद्रियते अर्धमवजहाति, तत्रार्धमिव जरत्या यदर्धं कार्यस्य तस्य कामिन इव यदनुष्ठानं तदर्धजरतीयमित्युच्यते।'** यथा चाविजानतोऽपि घुणकीटस्य यदृच्छया काष्ठमुत्किरतः कदाचिदक्षरमुत्तिष्ठति, तद्वदशास्त्रज्ञस्य यादृच्छिकं यदनवद्यकर्मनिर्माणं तद्घुणाक्षरीयमित्युच्यते।

एवं च यथा पदपर्यायवाक्यानां अखण्ड एवाविभक्तोद्देशविभाग एकोऽर्थोऽभिधे— यस्तथा देवदत्त गामभ्याज शुक्लां दण्डेनेत्येवमादीनां पदपर्यायाणामपि वाक्यानां सन्निविष्टेऽनेकशक्तिरूपः सर्वोपाधिविशिष्टक्रियात्मा नष्टोद्देशविभाग एक एव

अभिधेयो भवति। पदानां तु प्रकृतिप्रत्ययादिवदविद्वत्प्रतिपत्त्यर्थमेव अन्वयव्यतिरेकाभ्यां व्यावहारिकोऽर्थापोद्धारः शब्दापोद्धारश्च क्रियते। अपोद्धृतानां च विनिविष्टभेदानामिव पुनर्योगो विधीयते। न चैतावता तद्गतदोषगुणनिरूपणमपि विधेयं भवति। न हि दर्शनीयं चित्रं स्वादु पानकं श्राव्यो ग्रामराग इति वक्तव्ये कश्चिदभिधत्ते शोभना नीलादयो गुडादयः षड्जादयो वेति।

उच्यते— अप्यायुष्मान् पदपदार्थानामिव वाक्यावस्थायां, वाक्यवाक्यार्थानामप्यवान्तरवाक्यावस्थायामसत्यत्वं मन्यते? यथा दुह्यतां गौः,उपाध्यायस्तत्पयसा भुक्त्वा मामध्यापयतु, येन मामधीयानं दृष्ट्वा पिता तुष्यति, तुष्टश्च मोदकान्मे ददातीति।

किं चातः?

यदि मन्यते, पदैः किमपराद्धं, येन तद्गतदोषगुणनिरूपणं न मृष्यते?

अथ न मन्यते, तथापि पदैः किमपराद्धम्, येन तुल्येऽप्यारम्भकत्वे पदानामेवासत्यत्वमभ्युपगम्यते, न वाक्यानाम्।

अथ वाक्यान्यप्यवान्तरवाक्यावस्थायामसत्यानि? तर्हि अवान्तरवाक्यानामपि महावाक्यावस्थायां, महावाक्यानामपि विद्यास्थानावस्थायां, विद्यास्थानानामपि शब्दब्रह्मावस्थायां, शब्दब्रह्मणोऽपि परब्रह्मावस्थायां न सत्यत्वमिति न कस्यचित् किंचिदपि विचार्यं भवति।

अथाभेदवादिनामपि व्यवहारार्थमवश्यमेव भेदोऽभ्युपगन्तव्यः तद्गतदोषगुणविचारणा चानुष्ठेया।

तर्ह्यसौ पदात् प्रभृत्येवारभ्यमाणा श्रेयसीति नस्तर्कः। पदेषु हि निर्दोषेषु गुणवत्सु च वाक्यमपि तदारब्धं तथाविधमेव भवति। यदाह—यादृशाद् वै जायते तादृश्येव भवति।

न च पदस्यात्यन्तमसत्यत्वं भवानपि मन्यते, योऽभिद्यमानावप्यविद्वत्प्रतिपत्त्यर्थमन्वयव्यतिरेकाभ्यामपोद्धृत्य पदपदार्थौ भिन्नाविव पुनर्योजयति। यदि च सर्वथैवासत्यत्वमवाचकत्वं च पदानामभ्युपेयते, तत्तदारब्धवाक्यानामपि तथात्वे सर्वव्यवहारोच्छेदः प्राप्नोति।।

अपि चाखण्डवाक्यार्थपक्षे य एते पदार्थोपनिबन्धनाः वाक्यार्थविशेषप्रतिपत्तिहेतवो **वाक्येषु धर्मास्संदृश्यन्ते,** तेऽपि पदानामानर्थक्यात् न प्राप्नुवन्ति।

के पुनरेते?

( वाक्यधर्माः –४८ )

**प्रधानं, शेषः, प्रयोजकम्, अप्रयोजकम्, नान्तरीयकम्, मुख्यम्, गौणम्, व्यापकम्, लघु, गुरु, अर्थवादः, अनुवादः, भेदविवक्षा, अभेदविवक्षा, व्यवहितकल्पना, उपचारकल्पना, तद्भावापत्तिः, योग्यतापत्तिः, सम्बन्धाबाधनं, विकल्पः, समुच्चयः, नियमः, निषेधः, प्रतिनिधिः, ऊहः, बाधः, तन्त्रम्, प्रसङ्गः, आवृत्तिः, भेदः, (अतिदेशः)[१] सामान्यातिदेशः, विशेषातिदेशः, अधिकारः, अध्याहारः, विपरिणामः, वाक्यशेषः, अवधिः, अपोद्धारः, अनिर्ज्ञातप्रश्नः, क्रियान्तरव्युदासः, लिङ्गाद् विभेदः, लिङ्गादिभेदः, शब्दान्तरादिभेदः, शक्त्यादिभेदः, श्रुत्यादिविनियोगः, श्रुत्यादिबलाबलम्, श्रुत्यादिक्रमः, क्रमसम्भेद** इति।

(१–२ प्रधानम्, शेषः)

तत्र साध्यमपरार्थं **प्रधानं**,

सिद्धं पुनः परार्थं **शेषः**।

स चायं प्रधानशेषभावः शब्दशक्तेर्महिम्ना प्रवर्तमानो वस्तुनस्तथात्वमनपेक्ष्यैव प्रकाशते। तथा हि–

**गुरुः प्रधानं परिचर्यमाणः शिष्यानुशिष्टौ स गुणत्वमेति ।**
**तद्वद् गुडो भक्षयतौ प्रधानं, प्रीतौ पुनः स्यात् पुरुषस्य सोऽङ्गम् ॥ ३॥**

इह तु सर्वमेव वाक्यजातमुदाहरणम्। न हि प्रधानगुणभावमन्तरेण वाक्ये पदानां समन्वयो भवति। तत्र साध्यत्वात् प्रधानं क्रिया, सिद्धत्वादप्रधानं कारकाणि।

क्वचित्तु क्रियाया अपि शेषत्वं भवति। यथा–(मामा. १.३०)

**स्तिमितविकसितानामुल्लसद्भ्रूलतानां**
**मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।**
**प्रतिनयननिपाते किञ्चिदाकुञ्चितानां**
**विविधमहमभूवं पात्रमालोकितानाम् ॥४॥**

यथा वा– (सक. ४.१२८)

---

१. मूले अतिदेशस्य स्थाने 'सामान्यातिदेशः विशेषातिदेश' इति लेखः। रा. पृ. ४९७, द्र. अत्र पृ. ४७०

**प्रियोऽसि प्राज्ञोऽसि प्रभुरसि कुलीनोऽस्यसि युवा**
**युवत्यस्त्वामेवं कति न पतिमुर्वीश! वृणते ।**
**अतश्चैतां कीर्तिं रघुनहुषमान्धातृमहिषीं**
**परामष्टुं वृद्धामधिगतनयो नार्हति भवान् ॥५॥**

(३. **प्रयोजकम्**)

येन प्रयुक्तः प्रवर्तते तत् **प्रयोजकम्** (शाभा. ४.१.२२)। तद् यथा–'स्वर्गो यागस्य, गार्हस्थ्यमर्थार्जनस्य, अतिथयः पाकस्य, राजा छत्रच्छायाया' (वाप.२) इति। तच्च न केवलं श्रेयस्येव प्रवर्तयति, अपि त्वश्रेयस्यपि। यथा–(मामा.५.२७)

**त्वत्पादपङ्कजपरिग्रहपुण्यजन्मा भूयासमित्यभिनिवेशकदर्थ्यमानः ।**
**भ्राम्यन्नृमांसपणनाय परेतभूमावाकर्ण्य भीरु रुदितानि तवागतोऽस्मि ॥६॥**

यथा वा–

**अस्याः स्नेहभृतेन वानरपतिस्सेतौ मया क्लेशितो**
**भ्राता मद्वदनैकवीक्षणपरः प्राणानयं त्याजितः ।**
**दायादेन सह प्रवृत्तकलहे जात्यैव मुक्तायुधे**
**निर्वैरे च निरागसि द्विषि तथा मुक्तः शरो वालिनि ॥७॥**

(४. **अप्रयोजकम्**)

स्वयं प्रयोक्तुमसमर्थोऽन्यप्रयुक्तेन कर्मणा यः सम्बध्यते सो**ऽप्रयोजकः**। तद्यथा मांसप्रयुक्ते पाके घृतादिभिरस्थीन्यप्रयोजकानि सम्बध्यन्ते। स्नातृप्रयुक्तेन स्नानीयेना–प्रयोजिका स्नानशाटी युज्यते। राजप्रयुक्तया छत्रच्छाययाऽप्रयोजकोऽपि हस्ती सङ्गच्छत' इति। इदं चाप्रयोजकत्वमवास्तवमपि क्वचिदुक्तिमात्रेण दृश्यते। यथा–

**णोक्खी भल्ली स वंमहेण णिम्मिअ तइलोके वि ।**
**जेहि विमुकी ते वि मुअ जह ण लग्गी ते वि ॥८॥**

(नवीना भल्ली सा मन्मथेन निर्मिता त्रैलोक्येऽपि ।
येभ्यो विमुक्ताः तेऽपि मृताः येभ्यो न लग्ना, तेऽपि ॥)

यथा वा–

**मुक्ताः कन्धरया धृताः, स्तनतटेनोत्तुङ्गता कुम्भयो–**
**रूरुभ्यां परिणाहिता क्रमवती हस्तस्य, पद्भ्यां गतिः ।**

एतद् वः करिघातिनस्तु कठिनं चर्मैव, कोऽयं हठ—
श्चण्डीति त्रिपुरारिकेलिवचनैरार्यास्मितं पातु वः ॥९॥

(५. **नान्तरीयकम्**)

यत्सम्बन्धमन्तरेण क्रिया प्रधानेन सम्बध्यते **तन्नान्तरीयकम्**। तद्यथा— 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्'; (वाजिनस्य) पुनरनुनिष्पादित्वा—न्नान्तरीयकेण वाजिनेन सम्बध्यते। ओदनार्थे च पाके नान्तरीयकेण आचामादिना मक्षिकादयोऽनुगृह्यन्ते, अग्न्यर्थे निर्मथने नान्तरीयकेण धूमेन होतुरक्षिणी उपहन्येते। तदेतत् क्वचित् कविप्रयोगेषु **वास्तवमवास्तवं** च दृश्यते।

**वास्तवं** यथा— (रघु. ७.२६)

**हवि:शमीपल्लवलाजगन्धिः पुण्यः कृशानोरुदियाय धूमः ।**
**कर्णान्तसंसर्पिशिखस्स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥१०॥**

**अवास्तवं** यथा—(गास. ३.१५)

**सच्चं भणामि वालअ णिअअं चिअ वल्लहं जीअं ।**
**तं तुइ विणा ण होइ त्ति तेण कुलअ/कुविअ कुविअंपसाएमि ॥**
(सत्यं भणामि बालक नियतमेव वल्लभं जीवितम् ।
तत् त्वया विना न भवतीति तेन कुलजं कुपितं प्रसादयामि ॥)

**रूढ्या यत्रासदर्थोऽपि लोके शब्दो निवेशितः।**
**स मुख्यस्तत्र तत्साम्याद् गौणोऽन्यत्र स्खलद्गतिः॥१२॥** (प्र.वा.प्रत्य.३७)

(६. **मुख्यम्**)

तत्र **मुख्यं** यथा— गौरनुबन्ध्य इति। अत्र गोशब्दो मुख्यवृत्त्या सास्नादिमत्पदार्थे वर्तते।

(७. **गौणम्**)

**गौणं** यथा— गौर्वाहीक इति। अत्र गोशब्द एव तिष्ठन्मूत्रादिगुणसम्पदा बाहीके वर्तमानो गौणीं वृत्तिमनुभवति। तत्र **कविप्रयोगे मुख्यं** यथा—

**जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दुस्रवदमृतनिवृत्तप्रेतभावैः कपालैः ।**
**विरचितनुतिबन्धो मूर्ध्नि सद्यः पुरारेः परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः ॥१३॥**

गौणं यथा—(उराच. १.३८)

**इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो—**
**रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।**
**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः**
**किमस्या न प्रेयो, यदि परमसह्यस्तु विरहः ॥१४॥**

(८. व्यापकम्)

अनेकविषयं व्यापकम्। तद्यथा— आतुरानातुरयोर्भोजनप्रक्लृप्तावातुरभोजन—मनातुरोऽपि प्रतिपद्यते । यथा— (गास. ३.२५)

**अद्धच्छिपेच्छिअं मा करज्ज साहाइअं पुलोएसु ।**
**सो वि सुदिठ्ठो होहिइ तुमं पि मुद्धा कलिज्जिहिसि ॥१५॥**
(अर्धाक्षिप्रेक्षितं मा कुरु स्वाभाविकं प्रलोकय ।
सोऽपि सुदृष्टो भविष्यति त्वमपि मुग्धा कलयिष्यसे ॥)

एतेन बहुविषयमपि व्याख्यातम्। तद् द्विविधं **क्रियाविषयं कारकविषयं** च। तयोराद्यं यथा— (कुमा. ३.२०)

**द्यूते पणः प्रणयकेलिषु कण्ठपाशः**
**क्रीडापरिश्रमहरं व्यजनं रतान्ते ।**
**शय्या निशीथकलहे हरिणेक्षणायाः**
**लब्धं मया विधिवशादिदमुत्तरीयम् ॥१६॥**

द्वितीयं यथा—

**सीसे सेहरु खणु विणिम्मविदुखणु कंठे पालंबु किदु रइए ।**
**विहिदु खणु मुंडमालिए जं पणएण तं णमहु कुसुमदाम—कोदंडु कामहो ॥१७॥**
(शीर्षे शेखरः क्षणं विनिर्मापितः क्षणं कण्ठे प्रालम्बः कृतो रत्या।
रचिता क्षणं मुण्डमालिका यत् प्रणयेन तन्नमत कुसुमदामकोदण्डं कामस्य॥)

(९. लघु)

**संक्षिप्ताभिधानं लघु** वीप्सा, एकशेषः, संज्ञा, कर्मधारयाद् बहुव्रीहिः इत्यादि।

(१०. गुरु)

**तद्विपरीतं गुरु**, अवीप्सा, अनेकशेषः, असंज्ञा, कर्मधारयान्मत्वर्थीय इति।
तेषु— **वीप्सया लघुर्**यथा—(गास. ६.३०)

जं जं पुलोएमि दिसं पुरओ लिहिअ व्व दीससे तत्तो ।
तुह पडिमापरिपाडिं वहइ व सअलं दिसावलअं ॥१८॥
(यां यां प्रलोकयामि दिशं पुरतो लिखित इव दृश्यसे तत्र ।
तव प्रतिमापरिपाटी वहतीव सकलं दिशावलयम् ॥)

अवीप्सया गुरुर्यथा—(मामा. १.४३)

पश्यामि तामित इतश्च पुरश्च पश्चा—
दन्तर्बहिः पुरत एव च वर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती—
मासङ्ग—तिर्यगपवर्तितदृष्टि वक्त्रम् ॥१९॥

एकशेषेण लघु, अनेकशेषेण गुरु। तदुभयमेकश्लोके पर्यायपरिक्षेपाभ्यां यथा—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्टा
स्पृष्टस्ताभ्यां शिरसि विनतोऽहं च दुश्शासनश्च ।
तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥२०॥(वेसं.४.१५)

संज्ञया लघु यथा—

खात्मेन्दुवह्निमरुदर्कमहीपयोभि—
रष्टाभिरेव तनुभिर्भवता समस्ते ।
ग्रस्ते जगत्यपरमिच्छति योऽत्र वस्तु
कोऽन्यो हतत्रपतया सदृशोऽस्ति तेन ॥२१॥

असंज्ञया गुरु यथा— (शाकु. १.१)

या सृष्टिः स्रष्टुराद्या बहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्न(नाँ)स्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥२२॥

आभ्यामुभययोगे गुरुलघुभेदोऽपि व्याख्यातः। यथा—

---

१. जलमुचां मेघानां यौ पथ्याधारौ जलाकाशौ। पथ्यमशनं जलम्, आधार आकाशः। '०हारावि'ति—जोशेर—राघवौ। हरज० इति, दहवि० इति च जो.

पथ्याधारौ[1] हर! जलमुचां यौ च, यौ पङ्कजानां
मित्रामित्रौ, वरद! हविषां दायकग्राहकौ च ।
यौ गन्धस्य प्रजन–वहनौ तानहं तुष्टिहेतो–
रष्टौ वन्दे त्रिभुवनतनोर्मूर्तिभेदाँस्तवैतान् ॥२३॥

कर्मधारय बहुव्रीहिणा लघुर्यथा–

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥२४॥ मेघ.

कर्मधारयमत्वर्थीयेन गुरुर्यथा–

आकैलासाद् बिसकिसलयच्देदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसास्सहायाः ॥२५॥ मेघ.

आदिग्रहणात् समासवाक्यादिषु गुरुत्वलघुत्वाभ्यां ग्रन्थगौरवलाघवे प्रतिपत्तिगौरवलाघवे च द्रष्टव्ये। तत्र समासगुरुत्वे **ग्रन्थलाघवं प्रतिपत्तिगौरवं** च यथा–

विलासमसृणोल्लसन्मुसललोलदोःकन्दली–
परस्परपरिस्खलद्वलयनिस्वनोद्दन्तुराः ।
हरन्ति कलहुङ्कृतिप्रसभकम्पितोरुस्तन–
त्रुटद्गमकसङ्कुलाः कलमकण्डनीगीतयः ॥२६॥

समासलघुत्वे **ग्रन्थगौरवं प्रतिपत्तिलाघवं** च यथा–

सिकतिल–तलास्सान्द्रच्छायास्तटान्तविलम्बिनः
शिशिरमरुतां लीलावासाः क्वणज्जलरङ्कवः ।
अविनयवतीनिर्विच्छेदस्मरव्ययदायिनः
कथय मुरले! केनामी ते कृता निचुलद्रुमाः ॥२७॥

वाक्यलाघवे **प्रतिपत्तिगौरवं** यथा–

पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे ।
मध्यमेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु ॥२८॥

वाक्यगौरवे **प्रतिपत्तिलाघवं** यथा–

आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं
यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथंचन ततः कर्णावतंसीकृतम् ॥२९॥

एतेन क्वचिद्**वाक्यलाघवेऽपि प्रतिपत्तिलाघवं** व्याख्यातम्। यथा–(सेब.१.४२)

**तं दइआहिण्णाणं जम्मि वि अंगम्मि राहवेण ण णिमिअं ।**
**सीआपरिमट्ठेण व वूढो तेण वि णिरंतरं रोमंचो ।।३०।।**

(तद्दयिताभिज्ञानं यस्मिन्नप्यङ्गे राघवेण न स्थापितम् ।
सीतापरिमृष्टेनेव व्यूढस्तेनापि निरन्तरं रोमाञ्चः ।।)

**(११. अर्थवादः)**

स्तुतिनिन्दार्थमतिशयो**क्तिरर्थवादः**। तद्यथा– मनोजवोऽश्वः, विश्वव्यापिनी तृष्णा इति। यथा च स्तुतौ–

**कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि ।**
**यत्र हंसवयांसीव भुवनानि चतुर्दश ।।३१।।**

यथा वा निन्दायाम्–

**येषां प्राणिवधः क्रीडा नर्म मर्मच्छिदो गिरः ।**
**परापवादः कर्तव्यस्ते मृत्योरपि मृत्यवः ।।३२।।**

**(१२. अनुवादः)**

सिद्धस्य विधिनिषेधार्थमुच्चारण**मनुवादः**। तद् यथा कथमीदृशमनीदृशोऽभिदधीत, कथमेवंविधायास्तवायमेवंविधः पतिरिति। यथा च विधौ–

**तदवितथमवादीर्यन्मम त्वं प्रियेति**
**प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।**
**मदधिवसतिमागाः कामिनां मण्डनश्री–**
**र्व्रजति हि सफलत्वं वल्लभालोकनेन ।।३३।।**

यथा वा निषेधे–

**यदात्थ कामं भवता स याच्यतामिति क्षमं नैतदनल्पचेतसाम् ।**
**कथं प्रसह्याहरणैषिणां प्रियाः परावनतया मलिनीकृताः श्रियः ।।३४।।**

**(१३. भेदविवक्षा)**

यत्राङ्गाङ्गिभावादिना भेदो विवक्ष्यते सा **भेदविवक्षा**। यथा– अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति। यथा च– (कु.सं. २.१०)

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ।।३५।।**

**(१४. अभेदविवक्षा)**

तद्विपर्यये **अभेदविवक्षा** यथा– तानेव शालीन् भुञ्महे ये मगधेषु, तानेव शाटकानाच्छादयामः ये पाटलीपुत्रे, तदेवेदं कार्षापणं यन्मथुरायां दृष्टमिति। यथा–

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।**
**न कारणात्स्वाद् विभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात्।। ३६।।**(रघु.३)

**(१५. व्यवहितकल्पना)**

यत्र सन्निहितस्यायोग्यतायां व्यवहितमाश्रीयते सा **व्यवहितकल्पना**, यथा च प्रविश पिण्डीमिति प्रवेशनक्रिया सन्निहितायामप्ययोग्यायां पिण्ड्यामसम्भवन्ती व्यवहितमपि योग्यं गृहादिकमपेक्षते। एवं पिण्डीमित्येतदपि कर्मपदं सन्निहितायामपि प्रवेशनक्रियायामयोग्यायामसम्भवद् व्यवहितामपि योग्यां भक्षयेत्यादिकां क्रियामपेक्षते। यथा च **मेघदूताद्य**श्लोके कश्चिद् यक्षः शापेनास्तंगमितमहिमा रामगिर्याश्रमेषु वसतिं चक्र इति।

**(१६. उपचारकल्पना)**

यत्रान्यधर्माः सति निमित्तेऽन्यत्रोपचर्यन्ते सा **उपचारकल्पना**। यथा कालोऽतिक्रामति, मञ्चाः क्रोशन्ति। यथा वा–(वारा. ५.३४.६)

**कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् ।**
**एति जीवन्तमानन्दो नरं वर्षशतादपि ।। ३७।।**

**(१७. तद्भावापत्तिः)**

विपर्ययादेरतस्मिंस्तदिति व्यपदेशस्तद्**भावापत्तिः**। यथा शुक्तिकायां रजतमिति, मृगतृष्णिकायां जलमिति, रज्जावहिरिति। यथा च–

**चंद्रहिवपि वाविहि कूपि सरिपल्लति तल्लितलाइ ।**
**चंदहकच चकोडिआकेण हआसे माइ ।। ३८।।**

(चन्द्रवपुषि वाप्यां कूपे सरसि पल्वले तटाकिकायां तटाके ।
चन्द्रस्य कृतोऽग्निः केन हताशेन मातः ।।)

**(१८. योग्यतापत्तिः)**

अधिकारित्वापादनं **योग्यतापत्तिः**। यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यम्,

'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति। यथा च–(मेघ. ५६)

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**
**संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।**
**निर्ह्रादी ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्**
**सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समस्तः ॥३९॥**

### (१९. सम्बन्धाबाधनम्)

विशेषश्रुत्या सामान्यश्रुतेरबाधः **सम्बन्धाबाधनम्** । यथा ब्राह्मणा भुञ्जतां माठरकौण्डिन्यौ परिवेविष्टामिति। यथा च–(कुसं.)

**यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥४०॥**

### (२०. विकल्पः)

द्वयोस्तुल्यबलयोः पर्यायेण प्राप्तिर्विचारणा वा **विकल्पः**। यथा व्रीहिभिर्वा यवैर्वा जुहुयात्, 'हन्ताहं पृथिवीमिमां नि दधानीह वेह वा' (ऋवे. १०.११९.९) इति। यथा च **पर्यायप्राप्तौ**–(वेसं. २.३)

**गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।**
**करोति महतीं प्रीतिमपकारोऽपकारिषु ॥४१॥**

यथा वा **विचारणायाम्**–(कुसं. ५.७८)

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥४२॥**

### (२१. समुच्चयः)

तुल्यबलानामविरोधिनां भिन्नप्रयोजनानामेकार्थपरतयोपादानं **समुच्चयः**। यथा देवदत्तं भोजय, लवणेन सर्पिषा शाकेनेति। गुणादिसमुच्चयः पुनरभेदेन भेदेन च दृश्यते। **अभेदेन** यथा–

**श्लाघ्यान्वयेति नयनोत्सवकारिणीति**
**निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।**
**एकैकमत्र हि वशीकरणं गरीयो**
**युष्माकमेवमियमित्यथ किं ब्रवीमि ॥४३॥**

**भेदेन** यथा—**कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी**
**भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वप्रखण्डितम् ।**
**प्रकृतिसुभगा ह्येते भावा मदस्य च हेतवो**
**व्रजति पुरुषो यैरुन्मादं त एव तवाङ्कुशाः ॥४४॥**

(२२. नियमः)

अनेकप्राप्तावयोगान्ययोगव्यवच्छेदेनावधारणं **नियमः**। यथा शङ्खः पाण्डर एव, पार्थ एव धनुर्धर इति। स च क्वचित् सार्वकालिकः क्वचिन्नियतकालः। यथा— (कुसं. ३.१९)

**अस्मिन् सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥४५॥**

यथा च— (कुसं. ५.६७)

**त्वमेव तावत् परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।**
**वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥४६॥**

(२३. निषेधः)

प्रसज्यप्रतिषेधः पर्युदासो वा **निषेधः**। तयोर्यत्रासामर्थ्यं वाक्यभेदश्च स **प्रसज्यप्रतिषेधः**। यथा असूर्यंपश्या राजदाराः, अब्राह्मणको देशः, 'सुडनपुंसकस्य' (१.१.४३) इति। यत्र सामर्थ्यमेकवाक्यता च स **पर्युदासः**। यथा अब्राह्मणः, अनेकः, अपचसि त्वं वृषलेति। स चोभयरूपोऽपि प्रागभावादिभेदाद् भिद्यते। यथा—(रघु. १८.४३)

**पर्यन्तसञ्चारितचामरस्य कपोललोलोभयकाकपक्षात् ।**
**तस्याननादुच्चरितोऽपवादश्चस्खाल वेलास्वपि नार्णवानाम् ॥४७॥**

यथा च— (रघु. १८.४८)

**अनश्नुवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छनेन ।**
**अस्पृष्टखड्गत्सरुणापि चासीद् रक्षावती तस्य भुजेन भूमिः ॥४८॥**

(२४. प्रतिनिधिः)

मुख्याभावे तदर्थकारिणः सदृशस्य प्रतिनिधानं **प्रतिनिधिः**। यथा व्रीह्यभावे नीवाराः, कुशाभावे काशाः प्रतिनिधीयन्त इति।

ननु च क्रियासु सामर्थ्यमात्रेण प्राप्ता व्रीह्यादयः पुनः श्रुत्यादिभिर्नियम्यमाना नीवारादीनां निवर्तका विज्ञायन्ते। तत्र यथैवान्यानि द्रव्याणि अयज्ञीयानि च

पलाण्ड्वादीनि सत्यप्यर्थित्वे 'दृष्टेऽपि सामर्थ्ये शास्त्रेणापर्युदस्तस्याधिकारो युक्त' इति न्यायाद् वचनान्तराभावाच्च न प्रतिनिधीयन्ते; तथा नीवारादीनामपि व्रीह्यादिर्नियमैर्निषिद्ध-त्वाद् वचनान्तराभावाच्च नास्त्येव प्रतिनिधिरिति किमिदं दूषणं प्रतिनिधिर्न प्राप्नोतीति।

उच्यते – 'यजेतेति यागे द्रव्यत्वमेव यजतिक्रियारूपैकदेशभावादङ्गत्वेन प्राप्तसन्निधानं, व्रीहित्वादयस्तु सामान्यविशेषाः सामर्थ्यप्राप्तसन्निधाना अपि क्रियारूपेणानुपादानाद् द्रव्यत्ववदङ्गभावेन प्रतीयन्ते। तत्र व्रीहिशब्दो हि अधिकार्था-ध्यावापायोपादीयमानो द्रव्यत्वसहचारिणो नीवारादीन्न बाधते। न हि तन्निवृत्तौ तस्य व्यापारोऽस्ति, नाप्यभ्यनुज्ञायाम्। अतः शिष्टाचरितो लोकप्रसिद्धश्च प्रतिनिधिरस्त्येवेति।

यदि तर्हि व्रीहिश्रुतिर्न नियमार्था, नीवारादीनां विकल्पः प्राप्नोति।

नैवम्, असम्भवो नामायं नियमसदृशफलोऽन्य एव बाधविशेषः, यमसम्भवनियम इत्यामनन्ति। तत्र व्रीहित्वमधिकं शब्देनाङ्गभावमापद्यते; अतोऽप्रतिषिद्धान्यपि श्रुत्या नीवारत्वादीनि विरुद्धैकार्थ समवायित्वान्न सम्भवन्ति। सम्भवेऽपि काममविरोधात् सामर्थ्यप्राप्तसन्निधानानि विना शब्दव्यापारेण समुच्चीयेरन्, न तु विकल्प्येरन्।

तत्रैतत् स्यात् यथा द्रव्यत्वं नियतसन्निधानं क्रियापदार्थैकदेशभूतमेव क्रियाशब्देन लक्ष्यते, तथा सर्वेऽपि व्रीहित्वादयो द्रव्यत्वसहचारिणो विशेषाः क्रियापदार्थैकदेशभूता एव क्रियाशब्देन कस्मान्न लक्ष्यन्ते?

नैवम्, न हि सर्वेषां वस्तुत्वेन सतामर्थानां शब्दोऽभिधायको भवति। विवक्षानिबन्धनं हि वस्तुसतामप्यर्थानामभिधानं, विवक्षा च शब्दसामर्थ्यनिबन्धना; तत्र यथैव द्रव्यत्वसहचारिणो नियतसन्निधाना अपि शुक्लादयो गुणाः सत्यपि द्रव्यवदुपयोगे शब्दशक्त्यनुरोधात् क्रियाशब्देनाङ्गत्वेन प्रत्याययितुमशक्यत्वाद-विवक्षिताः, तथैव शब्दशक्त्यनुरोधाद्व्रीहित्वादीनां द्रव्यत्वसहचारिणामुपयोगवतां भेदानामङ्गत्वेनाविवक्षाया नियमाभावाच्छास्त्रेण (अ)पर्युदस्ते विशेषान्तरसहचारिणि द्रव्यत्वे नित्यस्य कर्मणोऽङ्गमात्रासन्निधाने मा भूदप्रवृत्तिः, काम्यस्य वा सन्निहितेष्वङ्गेषु प्रवृत्तस्य मा भूदङ्गभ्रेषे विच्छेद इति शास्त्रेणापर्युदस्तः प्रतिनिधिः प्रथमकल्पाभाव उपादीयते। स तु पदार्थसद्भाव एव युज्यते। यस्य तु पुत्रीयतीतिवत् क्रियाविशेष एव शक्तिद्रव्यसंसर्गभिन्न एको वाक्यार्थः, तस्य अविभक्तशब्दार्थत्वादभ्रेषेऽपि तस्मिन्नर्थात्मन्यविकले निवृत्तेरङ्गान्तरप्रतिनिधानेऽपि पटीयतीतिवदविद्यमानोद्देशविभागं क्रियान्तरं प्रतिनिहितं स्यात्। अप्रतिनिधेया च क्रियेति।

ननु व्रीहित्वादयोऽप्यप्रतिनिधेया एव। यदाह—(वाप.जा. ७८)

**जातीनां च गुणानां च तुल्येऽङ्गत्वे क्रियां प्रति ।**
**गुणाः प्रतिनिधीयन्ते छागादीनां न जातयः ॥४९॥**

मैवं वोचः। कर्तापि नाम नाप्रतिनिधेयः, किं पुनरन्ये। तद्यथा—(रघु. १५.६१)

**श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।**
**अनन्यजानेरासीद् यत् सैव जाया हिरण्मयी ॥५०॥**

यथा वा—(मवीच. १.१५)

**अयं च यजमानेन यक्ष्यमाणस्य मे गृहात् ।**
**प्रहितस्तेन वात्सल्यादनुजन्मा कुशध्वजः ॥५१॥**

क्रियायास्तु प्रतिनिधिर्नास्त्येव, यदि च स्याद् वाक्यान्तरमेव तत् स्यादिति।

(२५. ऊहः)

प्रकृतौ समर्थानां मन्त्रवाक्यानां विकारेषु सामर्थ्याभावात् सर्वलोप एकदेशनिवृत्तावपि क्रियायां मुख्यवृत्तिव्यतिक्रमेण वार्थान्तरोपादाने प्रसक्ते शब्दान्तरस्यार्थान्तरवृत्तेः समर्थस्योपादाने प्रकृतिरूपलिङ्गविभक्तिवचनान्तराणां विमृश्योपादानम् **ऊहः**। तद्यथा—'आग्नेयमष्टाकपालं पुरोडाशं निर्वपेद्' इति प्रकृतियोगे 'अग्नये त्वा जुष्टं निर्वपामि' इत्यत्राग्निशब्दः समर्थो दृष्टः। स 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इति विकृतियागे समर्थः; तत्र यदि तूष्णीमेवोपादानं क्रियेत, शब्दवती प्रकृतिरशब्दो विकारः स्यात्। अथ देवता नैवोपादीयेत, प्रकृतौ देवतायाः श्रवणाद् द्वैगुण्यं प्रसज्येत। तत्र द्रव्यदेवतात्यागो यागो न स्यात्।

अथाग्निशब्द एवोपादीयेत, मुख्यार्थे वृत्तः सूर्यार्थं न प्रत्याययेत्।

अथाप्यस्य गुणादर्थान्तरे सूर्ये मुख्यवृत्तिव्यतिक्रमेण प्रयोग आश्रीयेत, प्रकृतिविपरीता शब्दप्रवृत्तिराश्रिता स्यात्। स्याच्च विकृतिः कर्तव्या; तस्मादत्र शब्दान्तरमेव तद्विभक्तिकमुपादीयते, 'सूर्याय त्वा जुष्टं निर्वपामि' इति। आश्रयभेदाच्च लिङ्गवचनमूहः। तद्यथा— देवीरापः शुद्धा यूयं' 'देव आज्यं शुद्धं त्वम्'।

विभक्त्यन्तराणामपि—'आयुराशास्ते, 'ऊह आयुराशासाते आयुराशासत' इति। येषां तु प्रकृतावेव सामर्थ्यं नास्ति तद्यथा—'वायवः स्थ' इति, प्रकृतावेव बहुवचनेनैको

वत्सोऽभिधीयते, तेषामसामर्थ्याद् विकृतावूहो न भवति; तथैकस्मिन्नेव प्रकृतिपाशे पाशानिति बहुवचनान्तः श्रूयते 'अदितिः पाशान् प्रमुमोक्तु' इति। वाजसनेयिनां त्वेकेषां एकवचनान्तः पठ्यते, 'अदितिः पाशम्' इति, तेषामूहः प्राप्नोति यदि, एतन्नास्ति अदितिरशनापाशेषु नोह इति। क्वचित् पुनरूहः प्राप्तोऽपि निषिध्यते।

**अङ्गानि ज्ञातिनामानि उपमा इन्द्रियाणि च ।**
**एतान्यूहं न गच्छन्ति अध्रिगौ विषमं हि तत् ॥५२॥**

तत्राध्रिगोरन्यत्राङ्गानामनूहो यथा—'यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः' इत्यूहे यत्पशू मायुमकृषातामुरो वा पद्भिराहसातां, यत्पशवो मायुमकृषतोरो वा पद्भिराहसत इति। ज्ञातिनाम्नामनूहो यथा —'अनु त्वा माता मन्यतामनु पितानु भ्रातानु सखा सयूथ्य' इत्यूहे 'अनु वां माता मन्यतामनु वो माता मन्यतामि'ति। उपमानामनूहो यथा 'कश्यपेवासां च्छिद्रे श्रेणी' 'श्येनमस्य वक्षः कृणुतात्' इत्यूहे श्येनमनयोः वक्षः कृणुतात्, श्येनमेषां वक्षः कृणुतादिति। इन्द्रियाणामनूहो यथा—'सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्, अन्तरिक्षममुं दिशः श्रोत्रं पृथिवीं शरीरम्', 'एकधास्य त्वचमाच्छ्यतात्', 'पुरा नाभ्या अपिशसो वपामुत्खिदतात्', 'अन्तरेवोष्माणं वारयतात्' इत्यूहे एकधानयोस्त्वचमाच्छ्यतात् एकधैषां त्वचमाच्छ्यतादिति। तदिदमुक्तम्—(माघ. १४.२३)

**नाञ्जसा निगदितं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ।**
**तत्र कर्मणि विपर्यणीनमन् मन्त्रमूहकुशलाः प्रयोगिणः ॥५३॥**

ऊहश्च मन्त्रादन्यत्रापि भाषायां भवति। तद्यथा—(उराच. ४.२०)

**चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो**
**भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।**
**मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्टकं**
**पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥५४॥**

**इत्युत्तरचरिते** लवमेकमुद्दिश्य **भवभूति**र्जनकमेतच्छ्लोकं **पाठितवान्**। तमेव पश्चाद् **वीरचरिते** धत्तस्त्वचं रौरवीमित्यूहयित्वा रामलक्ष्मणौ द्वावुद्दिश्य कुशध्वजमपीपठत्। अत्राप्युरः पाणिवासः कार्मुकादीनामूहो न भवति, सम्बन्धिभेदेनैव भेदसिद्धेः; भेदेन हि प्रतिपत्तव्येऽर्थे न यावदभेदेऽपि भवति तावन्न भिद्यते।

**(२६. बाधः)**

अर्थित्वात् सामान्योपदेशाभेद सति प्रवृत्तिसम्भवे वचनादसमीवाच्चरितार्थत्वात् फलाभावाद् विशेषे प्रत्यक्षश्रुतेः परिसङ्ख्यादिभ्यश्च दृष्टादृष्टार्थेषु कर्मसु तुल्यबलानां विरोधिनामविरोधिनां वार्थानामप्राप्त्यनुमानं **बाधः**। तद्यथा – अर्थित्वात् सामान्येन प्रवृत्तस्य मांसभक्षणस्य वचनाद् बाधः अभक्ष्यो ग्राम्यकुक्कुट इति; तथा गुरुवद् गुरुपुत्रे वर्तितव्यमिति सामान्योपदेशात् प्रवृत्तस्योच्छिष्टभोजनस्य अन्यत्रोच्छिंष्ट–भोजनादिति। एवम् 'अष्टाश्रिर्यूपो भवति' इति सामान्योपदेशात् प्रवृत्तमष्टाश्रित्वं 'चतुरश्रो वाजपेययूप' इति द्वयोरसम्भवात् तद्विरोधी बाध्यते। 'व्रीहीनवहन्ति' इति सामान्योपदेशादर्थित्वाच्च प्रवृत्तं प्राकृतमवहननं नखनिर्भिन्नानां नखावपूतानां चरुर्भवतीति विकृतौ नखैरेव अवघातप्रयोजनस्य कृतत्वाच्चरितार्थत्वेन अविरोध्यपि बाध्यते। एवं 'शतकृष्णलश्चरुर्भवति' इति कृष्णलेषु फलाभावादेव नावघातः क्रियते। ब्राह्मणेभ्यो दधि दीयतामिति सामान्योपदेशात् कौण्डिन्येऽपि प्रसक्तं दधिदानमनिषिद्धं सम्भाव्य चरितार्थं फलवदविरुद्धं च, तक्रं कौण्डिन्यायेति विशेषे प्रत्यक्षश्रुतेस्तक्रदानेन बाध्यते। अर्थित्वात् पञ्चनखानामपञ्चनखानां च भक्षणं प्रसक्तं, भक्षणमविरुद्धमपि 'पञ्च पञ्चनखा भक्ष्या' इति परिसङ्ख्यया बाध्यते। आदिग्रहणाद् 'वामेनाक्ष्णैष पश्यति', 'काठिन्यमस्याः कुचयोः किमसद् यन्न रोचते', इत्यादिविशेषस्य वाचकमवगन्तव्यम्। भूयांश्च बाधस्य कविवाक्येष्वपि प्रयोगः। सोऽर्थित्वात् प्रवृत्तौ वचनतो यथा–

**मृत्यो! किं मर्तुमिच्छुर्भगवति! भवती न क्षमा, शक्र! चक्री**
**वार्यः, कार्यो न पूषन्नसदृशकलहो, नन्वयं कालकूटः ।**[१]
**इत्यादावेव देवान् दमयितुमनसः पान्तु वश्चन्द्रमौले–**
**स्त्रैलोक्याऽकाण्ड–चण्ड–प्रलय–कर–गर–ग्रास–गृघ्नोर्वचांसि ॥५५॥**

सामान्यश्रुतेः प्रतीतौ वचनतो यथा–

**पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा**
**पार्श्वेषु प्रसभं प्रहृत्य नखरैर्दन्तैर्विलूयाऽधरम् ।**
**सुप्तानप्यवबोध्य युष्मदहितान् भूयोऽपि भुङ्क्ते वने**
**किं कान्ता सुरतैषिणी? न हि न हि व्याघ्री करालानना ॥५६॥**

---

१. अत्र राघवः – मृत्युः किं कर्तुमिच्छुर्भगवति भवती न क्षमा, शक्र चक्री
वार्याः(र्य) कार्यो न पूषन्नसदृशकलहो, नन्वयं कालकूटः ।

२. काठा = कठा, शतपथिका(?), ३. समाजेष्वनेक(?) x x x,

**(२७. तन्त्रम्)**

यत्रार्थिनः सर्वे प्रयोजकाभेदेनावृत्त्या वा प्रतिपत्तव्यमर्थं सम्भवाल्लाघवाच्चैकमेव प्रयोजयन्ति, तत् **तन्त्रम्।** तद्यथा– काठाध्ययनं शतपथिकायां[२], शालायामेकं प्रदीपं व्याकरणाध्यायिनः, समाजेष्वनेकचेतनम्(तेजनम्)[३] वाद्यकर्मतूर्योपजीविनः। अभेदैकत्वसङ्ख्यां सङ्ख्यान्तरेषु तन्त्रिणीं मन्यन्ते यथा आस्यते भवद्भ्यां, आस्यते भवद्भिः। प्रश्ने तु बहुत्वसङ्ख्या पूर्वसंख्यां[१] यथा– कति भवतः पुत्राः। नपुंसकं स्त्रीनपुंसयोः। यथा– किं जातमस्य। सामान्यविशेषसम्बन्धयोर्विभक्तिर्यथा – गोस्वामी व्रजतीति। द्वितीया कर्माख्यं सम्बन्धविशेषम–भिदधानाऽविशिष्ट–सम्बन्धिपदप्रयोगे तन्त्रेण नियते सम्बन्धिनी प्रकृते वर्तमानं शेषसम्बन्धमुपगृह्णाति। यदि तु गवां स्वामी व्रजतीति षष्ठ्या सम्बन्धमात्रमुच्येत निर्ज्ञाते स्वस्वामिभावे व्रजिक्रियाकर्तानियमेन प्रतीयेत तदा इष्यते ग्रामो गन्तुम्, पक्त्वा (अत्र) ओदनो भुज्यत इति प्रधानक्रियाविषयाद् धातोरुत्पद्यमानः प्रत्ययस्तन्त्रेण गुणक्रियाविषयामपि शक्तिमभ्यन्तरीकरोति। अनभिहिता वा गुणविषया शक्तिः प्रधानानुरोधादभिहितवत् प्रकाशत इति।

यच्चैकमेव **पदं ,वाक्यं, प्रकरणं, प्रबन्धो** वा द्वयोरर्थयोः प्रयुज्यते तदपि तन्त्रम्। तत्र– **पदं** यथा– (काव्याद. २.३११)

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥५७॥**

**वाक्यं** यथा–

**द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै–**
**रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।**
**आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे**
**राजन्! सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥५८॥**

कः पुनरस्य पूर्वस्माद् विशेषः?

उच्यते– पूर्वत्र राजेति पदमुभयार्थमुपात्तविषयावच्छिन्नमर्थद्वयेन सम्बध्यते। इह तु 'त्वद्विद्विषां मन्दिरे राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः', इत्येकार्थमेव वाक्यं 'द्वारं खड्गिभिरावृतम्' इत्यादिवाक्यैरुपात्तेनार्थद्वयेन सम्बध्यत इति।

---
१. संख्यापूर्वे पूर्वे संख्ये

**प्रकरणं** यथा शिशुपालवधे— (माघ. १६.२)

**अभिधाय तथा तदप्रियं शिशुपालोऽनुशयं परं गतः ।**
**भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥५९॥**

इत्यादि दूतवचनं सन्ध्यर्थेन च विग्रहार्थेन च सङ्गच्छत इति।

**प्रबन्धो** यथा—

**उदारमहिमा रामः प्रजानां हर्षवर्धनः ।**
**धर्मप्रभव इत्यासीत् ख्यातो भरतपूर्वजः ॥६०॥**

**रामायणमहाभारतयोर्दण्डिद्विसन्धान**मिति। एतेन बहुविषयमपि वाक्यादिकं व्याख्यातम्; तद्यथा— (कुसं. २.१८)

**स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।**
**युगपद् युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥६१॥**

इत्यादि प्रकरणं भगवता चतुर्मुखेन चतुर्भिरपि मुखैर्युगपदुच्चारितं चतसृष्वपि दिक्ष्ववस्थितैरिन्द्रादिभिः सम्बध्यमानं चरितार्थतामापादयति।

(२८. **प्रसङ्गः**)

यत्र सम्भविना कार्येण द्वयोरर्थिनोः प्रयोजकत्वेन निर्ज्ञातसामर्थ्य-योरन्यतरप्रयुक्तेनाप्यपरोऽपि सम्बध्यमानः कृतार्थत्वात् पृथक्प्रयोजकतां न प्रतिपद्यते **तत्प्रासङ्गिकम्**। तद्यथा अयमुपाध्यायोऽस्माभिरात्माध्यापनार्थमानीतः, त्वमप्यत्रैवाधीष्व; एतेन धनवन्तः कान्तारेषु गृहीतानुयात्रिकाः प्रतिष्ठन्ते, तदेतैरेव कृतरक्षासंविधानो गच्छ; अयं चतुष्पथे केनचिद् बलिप्रदीप उपहृतः, एतदुद्द्योतेनैव सन्तमसे रथ्यामतिक्राम; अयं देवतार्थः प्रदीपः, अनेनैव व्याख्यानं चिन्तय; तथा 'वत्स मकरन्द अनेनैव मालतीनैपथ्येनापवारितः प्रवर्तस्व परिणयायात्मानमात्मनः' इति। एवम् 'आम्राश्च सिक्ताः पितरश्च प्रीणिता' इतिं यच्चान्यदाचक्षाणोऽन्यदप्याचष्टे तदपि प्रासङ्गिकम्। तद्यथा **कुमारसम्भवे** कामसंस्थानं कथयन् धनुश्शिक्षामुपदिशति—

**स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥** (कुसं.३.७०)

एवं भट्टिकाव्ये रामकथां वर्णयन् शब्दानुशासनमुदाहरति— (भका. ११.१८)

**भ्रेमुर्ववल्गुर्ननृतुर्जगर्जुर्जगुः समुत्पुप्लुविरे निषेदुः ।**
**आस्फोटयाञ्चक्रुरभिप्रणेमू रेजुर्ननन्दुर्वियुस्समीयुः ॥ ६३॥**

एवं **धर्माभ्युदयादौ** धर्मशास्त्रम्; **मुद्राराक्षसादा**वर्थशास्त्रम्; **मालतीमाधवादौ** कामशास्त्रम्; **अन्तरात्मचरितादौ** मोक्षशास्त्रम्; **महाभारतादौ** धर्मार्थकाममोक्षशास्त्राणि प्रासङ्गिकानीत्यलमतिप्रसङ्गेन।

## (२९. आवृत्तिः)

एकस्य कारकक्रियादेः पदार्थस्याभिन्नरूपस्यैव पर्यायेणानेकत्र वर्तनम् **आवृत्तिः।** तत्र यथैकं पात्रमसहभुजां भुजिक्रियायामधिकरणभावमावृत्त्या प्रतिपद्यते, एकं वस्त्रमाभरणं वा रङ्गभूमिषु नटानामुपयोगाय कल्पते, एवं व्यायामाङ्गमायुधजीविना–मभ्यासं प्रत्युपकरोति, यथा च सहस्रमृषय एकां कपिलामावृत्त्या दत्त्वा सर्वे सहस्रदक्षिणा बभूवुः, तथैकं क्रियापदं कारकपदं वा प्रतिवाक्यमावर्तमानमाकाङ्क्षां निराकरोति। तयोः —

**क्रियापदावृत्ति**र्यथा–

**शशिना च निशा निशया च शशी शशिना निशया च यथा गगनम् ।**
**भवता च सभा सभया च भवान् भवता सभया च विभाति जगत् ॥**

**कारकपदावृत्ति**र्यथा–

**सीतावेश्म यतो निरीक्ष्य हरते दृष्टिं झटित्याकुला–**
**मन्योन्यार्पितचञ्चुदत्तकबलैः पारावतैर्दूयते ।**
**इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं दुःखितः**
**प्रच्छाद्याननमञ्चलेन रजनीष्वस्तत्रपं रोदिति ॥ ६५॥**

## (३०. भेदः)

यत्र अभेदेनाप्युपात्तोऽर्थः शब्दो वा स्वरूपसामर्थ्यादिभिरनेकत्वमापद्यते स **भेदः।**

तत्र **अर्थभेदो** यथा– ब्राह्मणेभ्यः पाद्यमाचमनीयं भोजनं च दीयतामित्यभेदेनापि श्रुतानि पाद्याचमनभोजनानि स्वरूपसामर्थ्याद् भेदेन व्यवतिष्ठन्ते। यथा 'पितॄणां राजतं पात्रं देवानां तु हिरण्मयम्' इत्यभेदेनापि उपादाने भिन्नान्येव पात्राणि ब्राह्मणानां सहभुजां भुजिक्रियायामधिकरणभावं प्रतिपद्यन्ते। गृहस्थान् पत्न्य आर्यावर्ते सम्भोगसम्पादनाय भेदेनैवोपासत इति। अथ कविप्रयोगेषु **क्रियाभेदे** यथा–

**लवङ्गमालाकलितावतंसास्ते नालिकेरान्तरपः पिबन्तः ।**
**आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमापुः ॥ ६६॥**(माघ.३.८१)

**कारकभेदो** यथा—(माघ. १०.३९)

**स्पर्शभाजि विशदच्छविचारौ कल्पिते मृगदृशां सुरताय ।**
**सन्नतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥६७॥**

अथ **शब्दभेदः**। स द्विधा— वाक्यभेदः पदभेदश्च।

तयो**र्वाक्यभेदः** प्राकृतो वैकृतश्च। **प्राकृतो** यथा पश्य मृगो धावति, अयं दण्डो हरानेन फलानि इति। अत्र प्रथमोदाहरणे पश्येत्येकं वाक्यं मृगो धावतीति द्वितीयम्, द्वितीये अयं दण्ड इत्येकं, हरानेन फलानीति च द्वितीयम्, प्रकृतिस्थ एव सन्दर्भे पृथक् क्रियते। अन्यथैकवाक्यतायां पश्येति क्रियायाः कर्मपदाभावादप्रयोगार्हता, हरेत्यस्याश्च 'तिङ्ङतिङः' इति निघातः प्राप्नोति। कविप्रयोगेष्वपि चैतद् दृश्यते, तद्यथा— (कुसं. ८.६४)

**पश्य पार्वति! पयोदपङ्क्तिभिर्व्यस्तपङ्कमिव जातमेकतः ।**
**खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत् सरः ॥६८॥**

**वैकृतस्तु** लोके शास्त्रे वेदे च। यथा—'ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौष–धयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा (तै.सं. ३.४.७)। अत्रैकमेव ताद् वाक्यं, ऋताषाडृतधामाग्निर्गन्धर्वस्स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा, तस्याप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा। अत्र लिङ्गविभक्तिविपरिणामाद् **वैकृतत्वं शास्त्रे** यथा—(मभा. पस्पशा)

**यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥६९॥**

अत्र वाग्योगविदितिपर्यन्तमेकं वाक्यं, दुष्यति चापशब्दैरिति द्वितीयम्।

किं वाग्योगविदेव दुष्यति?

नैवम्, अवाग्योगविदित्यस्य वैकृतत्वाद् वाक्यविशेषः क्रियते।

किं कारणम्?

यो वाग्योगवित् स नापशब्दं करोति, यदाह ज्ञानं तस्य शरणमिति (मभा. पस्प.)।

नन्ववाग्योगविदोऽप्यज्ञानं शरणं यदा ह्यसौ जानन्नपशब्दं प्रयुङ्क्ते तदा दुष्टः स्यात्, न पुनरजानन्नेवम्।

नाज्ञानमत्यन्ताय शरणं भवितुमर्हति। यो हि अजानन् ब्राह्मणं हन्यात् सोऽपि मन्ये पतितः स्यादिति।

अथ लोके वैकृतो वाक्यभेदः प्राकृतश्च पदभेदः। यथा—

**जं तुज्झ सई जाआ असईओ जं च सुहअ अम्हे वि ।**
**ता किं फुट्टउ पिल्लं/बीअं तुज्ज समाणो जुआ णत्थि ॥७०॥**
(यत्तव सती जाया असत्यो यच्च सुभग वयमपि ।
तत् कि स्फुटतु बिल्वं/बीजं तव समानो युवा नास्ति ॥)

**जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।**
**परार्थबद्धकक्ष्याणां त्वादृशामुद्भवः कुतः ॥७१॥** (नागा. ४.१५)

अत्राद्योदाहरणे तत्किं स्फुटतु बिल्वमित्येतत्पर्यन्तमेकं वाक्यम्। तत्र बिल्वस्फुटनेनात्र रहस्यभेदोऽभिमतः, यथा बिल्वमस्फुटितमन्तः पक्वमपक्वं मधुरममधुरं सुरभि न सुरभीति वा न ज्ञायते, एवं यत् तव जाया सती वयमसत्य इत्येतद् रहस्यमभिन्नं न ज्ञायते।

स किं रहस्यभेदो भवतु?

भवत्वित्युक्ते द्वितीयं वाक्यं तव समानो युवा नास्ति। यदि ह्यस्माकमपि त्वत्तुल्यो भर्ता भवेत् त्वज्जायेव वयमप्यसत्यो न स्यामेति। द्वितीयोदाहरणे तु 'क्षुद्रजन्तव' इत्येतत् पदं भिद्यते क्षुद्रेति जन्तव इति च। अन्यथा हि राज्ञा लुप्तशासनग्रामः स्यादग्रजन्मनः, तं प्रत्येतद् वचो न भवतीति॥

### (३१. सामान्यातिदेशः, ३२. विशेषातिदेशः)

अन्यधर्माणामन्यत्र प्रापण**मतिदेशः**। द्विधा— **सामान्यातिदेशो विशेषातिदेशश्च**। तयोर्यत्र अन्यत्र रूढसम्बद्धा धर्माः प्रसिद्धेरनुमेयभेदसम्भवैः सम्बन्धिभिर्व्यपदिष्टा निर्ज्ञातभेदेष्वर्थेषु प्राप्यन्ते स **सामान्यातिदेशः**। यथा— ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति। तत्र यावन्तमर्थं ब्राह्मणशब्दो न व्यभिचरति तावत्यर्थे यानि प्रसिद्धसम्बन्धानि कार्याण्यग्रभोजनादीनि तान्यत्यन्तमलब्धब्राह्मणव्यपदेशे क्षत्रियेऽतिदिश्यन्ते। तत्र सामान्यब्राह्मणशब्दो न व्यभिचरित, माठरत्वादींस्तु व्यभिचरति। न हि कठे माठरत्वमस्ति। सन्निहितेष्वपि च निर्ज्ञातेषु वा विशेषेषु कश्चिदेवार्थात्मा केनचिच्छब्देन संस्प्रष्टुं शक्यते, विशिष्टभागाभिनिवेशीनि हि रूपविशेषयुक्तान्यभिधानानि इति। सामान्येन च ब्राह्मणशब्दस्य प्रत्यक्षोऽभिसम्बन्धः, आनुमानिकस्तु विशेषैः। माठरवदस्मिन् कठे वर्तितव्यमित्ययमपि सामान्यातिदेश एव। न ह्यत्रापि माठरस्याभिरूप्यादयो विशेषा आश्रीयन्ते। एवं विशिष्टवदस्मिन् वर्तितव्यमित्यत्रापि

यद्विशिष्टेषु विशिष्टत्वं तदाश्रीयते। सोऽपि सामान्यातिदेशो, न विशेषातिदेशः। तदाह— **सामान्यमात्रं शब्दार्थो विशेषा व्यभिचारिणः ।**
**सामर्थ्यमन्तरेणातो विशेषो नातिदिश्यते ॥७२॥** (वाप.)

यत्र तु सामर्थ्याद् विशेषधर्माणामन्यत्र प्रापणं स **विशेषातिदेशः**। तद्यथा— ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यमिति। तत्र हि सामान्यकार्यप्रतिपत्तिर्ब्राह्मणादेव सिद्धा; यैनैव हेतुनोपमाने कार्यविशेषसिद्धिरविशिष्टोऽसौ हेतुरुपमेयेऽपि। तस्माद् विशिष्टब्राह्मणविषयाणि कार्याण्यतिदिश्यन्ते। ये च ब्राह्मणेषु ब्राह्मणवदेव वर्तन्ते तान् प्रति अयमेवंभूतोऽतिदेशो विज्ञायते। येषां तु बुद्धिसम्भेदात् प्रमादाद् वा प्रवृत्तिसङ्करस्तेषु नियम एव क्रियते। तथा च ब्राह्मणमर्हति वृत्तमिति 'तदर्हम्' (५.१.११७) इति सूत्रेणाचार्येणायमेवार्थो भेदेन निदर्शनायान्यथैव प्रक्रान्तः। स च तद्धितेषु वत्यर्थप्रस्तावे निर्णीतः पुरस्तादिति?

अथ यत्र ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यतिदेशः, किं तेन क्षत्रियेण तद्वति ग्रामे अब्राह्मणको ग्राम इति व्यपदेशः क्रियते?

नेत्याह, व्यपदेशमात्रमपि कार्यमतिदेशस्येति।

अथ तद्वदेव ब्रह्महत्यादिप्रायश्चित्तं कर्तव्यं,

नेत्याह; यावति हि विषये तस्यातिदेष्टरि सिद्धं तावत्तत्रानुषज्यते; न ह्यस्मादतिदेशाद् ब्राह्मण्युपयमनप्रतिपत्तिर्भवति।

एवंप्रकारेषु ह्यतिदेशस्यातिदेष्टुः न कामचारः, स्मृत्यधीनत्वात्। यदि तु स्मृतिरेवंभूता स्यात् तदपि तदानुष्ठीयेत, यदा/था क्षत्रियवैश्यौ सवनगतौ हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यादिति।

किं पुनरयमतिदेशो वत्यादिमन्तरेणापि भवति?

बाढम्। यथा अब्रह्मदत्तेऽप्येष ब्रह्मदत्त इति। तत्र भूतानां वा ब्रह्मदत्तविषयाणां क्रियागुणानामब्रह्मदत्ते समारोपाद् भाविनां वा रूढसम्बन्धानामिव बुद्ध्यादिभिः संबन्धात् तन्निमित्तमुपमानोपमेयलक्षणं सम्बन्धमभ्यन्तरीकृत्योपचारेण ब्रह्मदत्तशब्दः प्रयुज्यते।

ननु च उशीनरवन् मद्रेषु यवा इति नात्र अन्यधर्माणामन्यत्रारोपणं (मभा. १.१.५७), अपि तु यवा एव मद्रेषु सन्ति न सन्तीति वा गम्यते। तथा हि— यद्युशीनरेषु तन्निष्पत्तिः निर्ज्ञाता तदा सन्तीति गम्यते। अथानिष्पत्तिस्तदा न सन्तीति गम्यते।

नैवम्। अत्राप्यन्यधर्माणामेवान्यत्र प्रापणं यावेवोशीनरयवानां भावाभावौ प्रसिद्धौ तावेव मद्रयवेष्वतिदिश्येते।

कथं पुनरयमभिन्नरूपो वतिः क्वचित् प्रकृत्यर्थधर्मानन्यत्रातिदिशति क्वचित् सम्बन्धिधर्मान्?

उच्यते यत्र 'तेन तुल्यं क्रिया चेद्वतिः' तत्र प्रकृत्यर्थधर्मान्; यत्र तु 'तत्र तस्येव' तत्राधेयसम्बन्धिधर्मानिति।

तदेवमुपमानेषु प्रसिद्धा धर्माः उपमेयेष्वारोप्यन्त इत्यतिदेशार्थः। प्रसिद्धिश्च क्वचिल्लोकापेक्षया, क्वचित्प्रयोक्त्रपेक्षया, क्वचित्प्रत्यक्षादिप्रमाणापेक्षयेति। तत्र

**लोकापेक्षया** यथा—

**जोण्हाए व्व मिअंकं कित्तीएँ सुअरिसं पहाए व्व रइं ।**
**सेलं महाणई व सिरीअ चिरणिग्गआइ वि अमुच्चंतं ।।७३।।**
(ज्योत्स्नयेव मृगाङ्कं कीर्त्त्येव सुपुरुषं प्रभयेव रविम् ।
शैलं महानद्येव श्रिया चिरनिर्गतयाप्यमुच्यमानम् ।।)

यथा वा— (माघ. १४.१६)

**यस्तवेह सवने न भूपतिः कर्म कर्मकरवत् करिष्यति ।**
**तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ।।७४।।**

प्रयोक्त्रपेक्षया यथा—

**अहमिव शून्यमरण्यं वयमिव तनुतां गतानि तोयानि ।**
**अस्माकमिवोच्छ्वासा दिवसा दीर्घाश्च तप्ताश्च ।।७५।।**

प्रत्यक्षादिप्रमाणापेक्षया यथा—(अम.श. १६०)

**दृष्टे लोचनवन्मनाङ् मुकुलितं पार्श्वस्थिते वक्त्रव—**
**न्यग्भूतं बहिरासितं पुलकवत् स्पर्शं समातन्वति ।**
**नीवीबन्धवदागतं शिथिलतां सम्भाषमाणे ततो**
**मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ।।७६।।**

## (३३. अधिकारः)

क्रियासु योग्यत्वम् **अधिकारः**।

कः पुनर्योग्यः?

अर्थी समर्थः शास्त्रेणापर्युदस्त इति। तथा अर्थित्वमधिकारकारणम्; परं हि

पुरुषार्थं मोक्षमाचक्षते, तस्मादप्यनर्थी जुगुप्सते प्रमाद्यति च। तद्यथा—

**अपि बृन्दावने शून्ये सृगालत्वं परीप्सति ।**
**न तु निर्विषयं मोक्षं कदाचिदपि गौतमः ॥७७॥**

सत्यपि चार्थित्वे सामर्थ्यमधिकारकारणं, समुत्पन्नायामप्यतिशयेन दिदृक्षायाम् असमर्थत्वेन अन्धा रूपदर्शने नाधिक्रियन्ते। अर्थिनः खल्वपि क्वचित् समर्थाश्च कर्मसु शास्त्रेण पर्युदासात् क्षुद्रशूद्राः श्रोत्रियादयः त्रय्यादिषु नाधिक्रियन्ते। अदृष्टार्थविषये हि सामर्थ्यासामर्थ्ये शास्त्रादेव समधिगम्येते। तस्मात् प्रधानमधिकारकारणं शास्त्रोपदेशमाचक्षते। तत्रोदाहरणम्— (म.वी.च. १.३१)

**साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते ।**
**किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः ॥७८॥**

यथा च—(माघ. १.३८)

**उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर! विश्वमीशिषे ।**
**ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥७९॥**

**(३४. अध्याहारः)**

वाक्यस्य न्यूनतायामाकाङ्क्षानिवृत्तये विशिष्टक्रियाकारकपदादेरुपादानम् **अध्याहारः**। यथा द्वारं द्वारमित्युक्ते संव्रियतामपाव्रियतां वेत्यध्याह्रियते; तथा वर्षत्युदेतीत्युक्ते देवः सूर्य इति। यथा च—

**यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।**
**यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥८०॥** इति।

यथा वा—

**यो न ददाति न यजते न जयति न जुहोति नात्ति नाधीते ।**
**न धिनोति नाधितिष्ठति न चकास्ति न शास्ति किं तेन ॥८१॥**

**(३५. विपरिणामः)**

लिङ्गविभक्तिवचनादेरन्यथोपात्तस्यार्थान्तरानुरोधादपुनरुच्चारितस्यैवान्यथाभि-सम्बन्धो **विपरिणामः**। तेषु **लिङ्गविपरिणामो** यथा— (मामा. १.३०)

**मा मूमुहत् खलु भवन्तमनन्यजन्मा**
**मा ते मलीमसविकारघना मतिर्भूत् ।**

**इत्यादि नन्विह निरर्थकमेव यस्मिन्**
**कामश्च जृम्भितगुणो नवयौवनं च ॥**

विभक्तिविपरिणामो यथा—(किराता. १.१)

**श्रियः कुरूणामधिपस्य पालिनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।**
**स वर्णिलिङ्गी विदितस्समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥८३॥**

वचनविपरिणामो यथा—(म.वी.च. १.४५)

**सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष—**
**स्तत्सङ्घट्टाद् विघटितबृहत्खण्डमुच्चण्डरोचिः ।**
**एवं वेगात् कुलिशमकरोद् व्योम विद्युत्सहस्रै—**
**र्भर्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥८४॥**

**(३६. वाक्यशेषः)**

सर्ववाक्यानां विधिनिषेधपर्यवसायित्वात् साक्षादश्रुतावपि तदुपकल्पनं **वाक्यशेषः**। तद्यथा — आर्यनिवासोऽयं देश इत्युक्ते इहैव स्थातव्यं, मध्याह्नो वर्तत इत्युक्ते इहैव भोक्तव्यं, सचोरः पन्था इत्युक्ते न गन्तव्यं, ग्राहाः सरित्यस्यामित्युक्ते न स्नातव्यमिति वाक्यशेषो भवति। यथा च— (उराच. ३.२६)

**त्वं जीवितं त्वमसि मे हृदयं द्वितीयं**
**त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।**
**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां**
**तामेव शान्तमथवा किमतः परेण ॥८५॥**

यथा वा— (बा.रा. २.४१)

**वन्द्यः पितेव स भवान्नलकूबरस्य**
**रम्भा स्नुषा धनपतेरिव सा तवापि ।**
**यत्त्वन्यदत्र हृदयान्न तदेति कण्ठं**
**दोषास्तथापि यदि तत्स्मृत एष रुद्र ॥८६॥**

कः पुनरध्याहारवाक्यशेषयोर्विशेषः? शब्दाकाङ्क्षानिवर्तकोऽध्याहारः, अर्थाकाङ्क्षानिवर्तको वाक्यशेष इति। यद्येवमनन्तरश्लोकयोरध्याहारोदाहरणताप्रसङ्गः। तथा हि — तामेव त्वं तथाग्नौ विशुद्धामाहितगर्भामनागसं विस्रब्धां च धर्मपत्नीमत्याक्षीरिति प्रथमश्लोके,

कामयमानायामपि च स्नुषायां अकामतोऽपि यत्प्रधर्षणं तन्महापातकेषु प्रकृष्यते, किमङ्ग! पुनरकामयमानाया: शपन्त्या: क्रोशन्त्याश्च हठेनेति द्वितीयश्लोके वाक्यस्यैवापरिपूर्णभावेनाकाङ्क्षितमध्याह्रियते।

तन्न; 'शान्तमथवा किमत: परेण', 'यत्त्वन्यदत्र हृदयान्न तदेति कण्ठम्', इत्यनेन शब्दाकाङ्क्षाया निवर्तितत्वात्।

अर्थाकाङ्क्षा तु विद्यते। तत्र तु यथोक्त एव वाक्यशेषो भवति अथैव प्रत्यक्षानुमानोपमानशब्दैरनुपलभ्यमान: किंप्रमाणविषय: स्यात्?

अध्याहारवच्छ्रुतार्थापत्तिप्रमेय इति।

ननु श्रुतार्थापत्तिर्नाम वाक्यैकदेशविषयं वाक्यशेषविषयं वा किंचित् प्रमाणमस्ति?

अस्तु वा, तथापि तत्प्रवर्तमानमर्थानुपपत्त्या प्रपत्स्यति। अर्थानुपपत्तिश्चाऽ–र्थान्तरमन्तरेण नोपशाम्यतीति तदेव कल्पनीयं भवति।

अथ शब्दस्यानुपपत्त्या शब्द एव कल्प्यते?

तन्न, श्रोत्रप्रत्यक्षसमधिगतस्य स्वरूपेणानुपपत्तेरभावादर्थानुपपत्तिनिबन्धनमेवानु–पपद्यमानत्वम्, तच्चार्थकल्पन एवोपपद्यते।

न चैतद् वाच्यम्, कल्प्यमानस्यार्थस्यावैदिकत्वं प्राप्नोति। श्रूयमाणस्यैव हि शब्दस्यायमिषोरिव दीर्घदीर्घो व्यापार:। अविरतव्यापार एव हि शब्दे सा प्रतीतिरुदयते; तद्व्यापारविरतौ नोदेति, तदुत्पादकारणानुपलब्धे:। लोकश्च वृद्धव्यवहारत: शब्दार्थेषु व्युत्पद्यमानस्तथाभूतवाक्यव्यवहारिणो वृद्धान् पश्यन् वाक्यस्यैव तादृशि वाक्यार्थे सामर्थ्यमवधारयति। वाक्यार्थश्चेह विधिनिषेधादिरूप आख्याताद्यर्थ:। तदनुवर्तीनि तु पदानि तस्मिन्नैमित्तिके निमित्तानि भवन्ति। नैमित्तिकानुकूलतया च क्वचिदश्रूयमाणान्यपि तानि विश्वजिदादौ स्वर्गकामादिपदवन्निमित्तभावेनाद्रियन्ते, क्वचिच्छ्रूयमाणान्यप्यननुकूलतया 'यस्योभयं हविरार्तिमार्च्छेद्' इत्यादिवत् परिह्रियन्ते। क्वचिदन्यथास्थितानि 'प्रयाजशेषेण हवींष्यभिघारयति' इतिवद् विध्यनुरोधात् प्रयाजशेषं हवींष्यभिधारयेदित्यन्यथावस्थाप्यते। तस्माद् यथा प्रथमावगतघनाकार–वाक्यार्थानुसारेण सतामसतां वा पदार्थानां निमित्तभावव्यवस्था तथैवाश्रूयमाणतथा–विधैकदेशादपि वाक्यात् तदर्थावगतिर्भविष्यतीति किं श्रुतार्थापत्त्या?

एवं च न वाक्यशेषाध्याहारसोपानव्यवहितस्यार्थस्य शाब्दत्वम्, अपि तु साक्षादेव भवति।

नन्वेवमश्रूयमाणेषु निमित्तेषु कुतस्तदर्थमवगच्छामः? अनवगच्छन्तश्च कीदृशं नैमित्तिकमवकल्पयामः?

उच्यते—'श्रुतेष्वपि पदेषु तेषां निमित्तभावो न स्वमहिम्नाऽवकल्पते।

किं तर्हि?

नैमित्तिकानुसारेण। स चाश्रुतेष्वपि भविष्यति। तथा हि— न यजौ करणविभक्तिः श्रूयते, न स्वर्गे कर्मविभक्तिः, अथ चार्थः प्रतीयते। एवं 'विश्वजिता यजेत' इति नैमित्तिकबलादेव स्वर्गकामादिपदाध्याहारार्थमुक्तश्लोकयोश्च यथोपन्य— स्तवाक्यशेषार्थं प्रत्येष्याम इति।

अत्र समाधीयते, यत्तावदुक्तमर्थानुपपत्त्यार्थान्तरमेव कल्पनीयमिति, तत्र नार्थमात्रस्यानुपपत्तिः।

किं तर्हि? शब्दार्थस्य।

स च शब्दकल्पनापूर्वकार्थप्रतिपत्तिव्यतिरेकेण नोपपन्नो भवति। यच्चोक्तं न स्वरूपेण शब्दस्य काचिदनुपपत्तिरिति, सत्यं तत्। किं तु सार्थद्वारिकापि शब्दानुपपत्तिर्न शब्दान्तरकल्पनां विनोपशाम्यति। न ह्योदनं प्रत्यक्षेणापि प्रतियतः पचतीत्युक्ते कर्मपदापेक्षा न भवति।

यच्चोक्तं कल्प्यमानस्यार्थस्यावैदिकत्वं मा भूदिति श्रूयमाणस्यैव शब्दस्यायमिषोरिव दीर्घदीर्घो व्यापार इति, तदपि न सम्यक्, तस्य तथाविधार्थप्रत्यायनासामर्थ्यात्। स हि तमर्थं प्रत्याययन्नभिधाशक्त्या वा प्रत्याययेत् तात्पर्यशक्त्या वा?

न तावदभिधाशक्त्या, तस्याः पदार्थप्रतिपादनमात्र एवोपक्षीणत्वात्।

नापि तात्पर्यशक्त्या। तात्पर्यशक्तिर्हि प्रतीयमानार्थविषया तत्रैव प्रकाशते, यत्र वाक्यवाक्यार्थयोः परिपूर्णत्वं भवति; यथा 'विषं भुङ्क्ष्व, मा चास्य गृहे भुक्था' इति। अत्र तु परिपूर्णे वाक्ये नार्थः परिपूर्ण इति तात्पर्यशक्तेरवकाशः। न हि तां तथाविधां त्वमत्याक्षीरित्यादिपदप्रयोगं विना वाक्यार्थस्य परिपूर्णत्वं भवति, तस्मादवश्यमेवार्थस्य शाब्दत्वसिद्धयेऽध्याहारवाक्यशेषादिशब्दकल्पना अभ्युपेया। तस्यां च सत्यां तत एवार्थसिद्धेः किमर्थकल्पनयेति।

न च श्रूयमाणस्यैव शब्दस्यायमर्थ इति शक्यमभिधातुम्, तस्य ह्यनुपपद्यमान एवार्थो, न पुनरुपपादकः। किंच पदार्थानामेव वाक्यार्थत्वात्, कल्प्यमान— वाक्यार्थगतपदार्थाभिधायिनां पदानां सत्त्वमभिधातव्यम्। न च श्रूयमाणे वाक्ये तानि

तथाभूतानि सन्ति। अपि चायमेवंविधो बोधस्तिरश्चामनुपजायमानत्वान्नाशब्दज्ञस्य भवति। तदस्य सविकल्पकज्ञानात् पूर्वकालभाविना शब्दविज्ञानेन भाव्यम्।

न चेहार्थापत्तेः शब्दविषयत्वं न अभ्युपेयते। न चेहार्थापत्तिव्यतिरेकेण सविकल्पकप्रत्यक्षादिप्रमाणवच्छब्दसहचरितार्थदर्शनादिनिमित्तकं स्मृत्याद्युपायान्तरं शब्दावगतावस्ति। तस्मादर्थापत्त्या पूर्वं शब्द एव प्रत्येतव्यः। तस्मिंश्च प्रतिपन्ने तत एवार्थावगमोऽपि भविष्यतीति न तात्पर्यतः श्रूयमाण एव शब्दः परिक्लेशनीयः। यदि च श्रुतार्थापत्तेः शब्दविषयत्वं नाभ्युपेयते तद् 'उपदेशे यथोपदेश कार्यमतिदेशे तु यथाकार्यमुपदेश (न्या.म.) इति न्यायादतिदेशागताग्न्यादिपदार्थानुपपत्तौ 'अग्नये त्वा जुष्टं निर्वपामि' इत्यादिवाक्येषु सूर्यायेत्यादिपदानामूहो न स्यात्। तस्मादवश्यमेव अध्याहारवाक्यशेषादिसिद्धये श्रुतार्थापत्तिरभ्युपगन्तव्येति।

**(३७. अवधिः)**

अस्यैतावतः शब्दस्यायमर्थोऽस्मिन्नर्थे चायमेतावाञ्छब्द इति बुद्धिनिबन्धनम् **अवधिः**। तद्यथा— काले नदन्ति नागाः, श्वेतो धावति, अलम्बुसानां याता इति। यदा पदानामवधिः तदा समये शब्दायन्ते फणिनः, शुक्लो धावति, अलम्बुसानां गन्तेत्यर्थः प्रतीयते। यदा तु 'कालेन दन्तिना अगाः', 'श्वा इतः धावति', 'अलं बुसानां याता' इति, तदा 'कृष्णेन करिणा गतवानसि', 'कौलेयकोऽत्र वेगेन सरति', 'समर्थो बुसानां गन्ता' इत्यर्थान्तरप्रतीतिः। तमिममलङ्कारेषु तद्विदः शब्दश्लेषमामनन्ति; यथा—

**येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो**
**यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।**
**यस्याहुश्शशिमच्छिरो हर इति स्तुत्यं च नामामराः**
**सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥८७॥**

**(३८. अपोद्धारः)**

पदार्थसमवायिनोऽर्थविशेषस्य शब्दान्तरेण पृथक्करणम् **अपोद्धारः**। यथा—'वायव्यं श्वेतमालभेत, वायुर्वै क्षेपिष्ठा देवता' इति। एवं च वृत्तिच्छन्नस्य सर्वनाम्नानुसन्धानं भवति। तद्यथा— (कुसं. ७.१९)

**पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥८८॥**

अत्रानेनेति सर्वनाम्ना रञ्जयित्वेति श्रुतौ समवेतश्चरणरागः पृथगपोद्ध्रियते।

(३९. अनिर्ज्ञातप्रश्नः)

प्रसिद्धपदार्थावधारणेऽप्रसिद्धपदार्थपर्यनुयोगः **अनिर्ज्ञातप्रश्नः**। यथा वनात् पिक आनीयतां, जीर्णवरासी वृषलाय दीयतामित्युक्ते कोऽयं पिको नाम यो वनादानेयः, का वा वरासी या वृषलाय दातव्येति। एतेन प्रसिद्धाभिधानार्थावधारणे अप्रसिद्धाभिधानार्थपर्यनुयोगो व्याख्यातः। यथा— (शाकु. ५.१३)

**कास्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥८९॥**

(४०. क्रियान्तरव्युदासः)

सामर्थ्यार्थित्वादेः क्वचिदयोग्यता **क्रियान्तरव्युदासः**, यथोच्यते—'क्वचित् कश्चित् प्रगल्भते', 'न सर्वः सर्वं जानाति'; 'किमपि कस्मैचिद्रोचते', 'भिन्नरुचिर्हि लोक' (रघु. ६.३०) इति। यथा च—(शाकु. ५.२८)

**कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।**
**वशिनां हि परपरिग्रहसम्पर्कपराङ्मुखी वृत्तिः ॥९०॥**

(४१. लिङ्गाद् भेदः)

शब्दान्तरोपलब्धवस्तुसामर्थ्यात् सामान्याक्षिप्तस्य विशेषेऽवस्थापनं **लिङ्गाद् भेदः**। यथा 'अक्ताः शर्करा उपदधाति, तेजो वै घृतम्' इति शर्कराणां घृताक्तत्वं प्रतीयते। यथा च—

**न त्वं पुत्र! पितुर्बिभेषि न च मे किंचिद् विधत्से वचः**
**क्वेदं बालविरुद्धसाहसमिति व्याहृत्य सावेगया ।**
**उत्तीर्णस्य जयन्ति दान्तभुजगस्याश्लिष्य मात्रा हरे—**
**र्निर्धूताश्चलकाकपक्षशिखरव्यासङ्गिनोऽम्भःकणाः ॥९१॥**

अत्र दान्तभुजगस्येत्यम्भःकणा इति च लिङ्गाद् यमुनाह्रदादुत्तीर्णस्येति विशेषो गम्यते।

(४२. लिङ्गादिभेदः)

लिङ्गमर्थः प्रकरणमौचित्यं देशः काल इति **लिङ्गादयः**। तेभ्यः सामान्यशब्दानां विशेषाध्यवसायो **लिङ्गादिभेदः**। स

**लिङ्गाद्** यथा— धेनुरानीयतां सवत्सा सबर्करा सकिशोरेति, गौरजा बडबा च प्रतीयते।

**अर्थाद्** यथा— अञ्जलिना सूर्यमुपतिष्ठते, अञ्जलिना पयः पिबति, अञ्जलिना लाजान् जुहोतीति अर्थानुरोधात् तथातथा पाणिसन्निवेशः प्रतीयते।

**प्रकरणा**द्यथा— सैन्धवमानय, गोपालकमानयेत्युक्ते भोजने लवणं, प्रयाणेऽश्वः, अध्यापने पुत्रः, पाशुपाल्ये तु गोपविशेषः प्रतीयते।

**औचित्याद्** यथा— करभोरूः शिखरदशना पुण्डरीकमुखी इति; उपमेयौचित्यात् करभादिशब्दैर्धनुष्कोटिकुन्दकुट्मल—कमलानि प्रतीयन्ते, नोष्ट्राचलाग्रच्छत्राणि।

**देशतो** यथा— हरिररण्ये, हरिर्द्वारकायां, हरिरमरावत्यामिति सिंहविष्णुवासवाः प्रतीयन्ते।

**कालतो** यथा—'दिवा हस्तोऽयमित्युक्ते पाणिः प्रतीयते, न नक्षत्रम्, रात्रौ पतङ्ग इत्युक्ते शलभो, न सूर्यः, त्रेतायामर्जुन इत्युक्ते कार्तवीर्यो न कौन्तेय इति।

अस्य चोपलक्षणत्वात् साहचर्यादिभिरपि पदार्थविच्छेदो भवति। तद्यथा—

**लक्ष्मणानुगतो भाति शशी राम इवापरः ।**
**कौसल्येव बिभर्ति द्यौरभिषेकोज्ज्वलां श्रियम् ॥९२॥**

यथा च—(काव्याद. १.६)

**गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥९३॥**

(४३. शब्दान्तरादिभेदः)

शब्दान्तरमभ्यासः सङ्ख्या संज्ञा गुणः प्रकरणमिति शब्दान्तरादयः; तेभ्यः क्रियादीनामनेकत्वं **शब्दान्तरादिभेदः**। तेषु **शब्दान्तरात् क्रियाभेदो** यथा—

**आरोहत्यवनीरुहः प्रविशति श्वभ्रं नगः स्पर्धते**
**खं व्यालेढि विवेष्टते क्षितितले कुञ्जोदरे लीयते ।**
**अन्तर्भ्राम्यति कोटरस्य विसरत्यालम्बते वीरुधः**
**किं तद् यन्न करोति मारुतवशं यातः कृशानुर्वने ॥९४॥**

**अभ्यासात् क्रियाभेदो** यथा—(गा.स. ९०२)

**जाणिमि कआवराहं जाणिमि अलिआइ भणइ सअलाइं ।**
**अणुणेंते उण जाणे कआवराहं व अप्पाणं ॥९५॥**

(जानामि कृतापराधं जानामि अलीकानि भणति सकलानि ।
अनुनयति पुनर्जाने कृतापराधमिवात्मानम् ॥) इति।

**सङ्ख्याया द्रव्यभेदो यथा–**

**त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।**
**त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु पूजिताः ॥ ९६॥**

**संज्ञातो द्रव्यभेदो** यथा–(म.वी.च. १.२०)

**लाङ्गलोल्लिख्यमानाया यज्ञभूमेः समुद्गता ।**
**सीतेयमूर्मिलेयं तु द्वितीया जनकात्मजा ॥ ९७॥**

**गुणाद् द्रव्यभेदो** यथा–

**इन्द्रनीलनिभः पृष्ठे क्रोडे कुमुदपाण्डरः ।**
**गङ्गायमुनयोरेष सारङ्गस्सङ्गमोपमः ॥ ९८॥**

**प्रकरणात् क्रियाविशेषभेदो** यथा–(रघु. १२.४५)

**एको दाशरथिः कामं यातुधानाः सहस्रशः ।**
**ते तु यावन्त एवाजौ तावद्धा ददृशे स तैः ॥ ९९॥**

### (४४. शक्त्यादिभेदः)

शक्तिः शक्तिव्यापारः क्रियाफलं क्रियासम्बन्धिनः सहचारिण इति शक्त्यादयः। तेषां वास्तव औपाधिको वा भेदेनावभासः **शक्त्यादिभेदः**। तत्र

**वास्तवः शक्तिभेदो** यथा– अग्निः काष्ठानि दहति, ओदनं पचति, पदार्थान् प्रकाशयति; सर्पिरग्निं दीपयति, पित्तं शमयति, शरीरमाप्याययतीति।

**वास्तवः शक्तिव्यापरो** यथा– आभ्यां लब्धम्; आभ्यां क्रीतम्, आभ्यां पक्वः, आभ्यां दत्तमित्यत्राभ्यामित्यस्य लब्धादिपदसन्निधेरपादानकरणकर्तृसम्प्रदान–विषयोऽभिधाव्यापारो भिद्यते। एवं पयः पयो जरयति (मभा. १.२.६४) इति कर्तृकर्मविशेषविषयः, गावौ गावौ श्रयेते इति स एव **द्वित्वावच्छिन्नः**, पयः(यांसि) पयोऽन्वेषयति इति **बहुत्वैकत्वावच्छिन्नः**। एवं **कार्माधिकरणादिविषयोऽपि** कुण्डे कुण्डे निधेहीत्यादिरवगन्तव्य इति।

**वास्तवः क्रियाफलभेदो** यथा– एकस्मिन्नेव यागे यजमानस्य धर्मः, ऋत्विजामर्थः, अन्नभुजां कामः, पशूनां मोक्षः; एकस्मिन्नपि सङ्ग्रामे भृत्यानां धर्मः, राज्ञामर्थः, क्रव्यादां कामः, अभिमुखहतानां मोक्ष इति।

**औपाधिकः क्रियाभेदो** यथा– उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्ते, रैपोषं पुष्यति, समूलकाषं कषति; यथा च भवेदपि भवेत् स्यादपि स्यादिति।

**औपाधिकः सम्बन्धिभेदो** यथा—सम्पन्नो यवो यवनेषु, शुष्कस्तुरुष्केषु, विनष्टः सुराष्ट्रेषु; परुत् भवान् पटुरासीत् पटुतर ऐषमः, अन्य एवासि सम्पन्न इति।

यथा च—(रघु. ६.५)

**तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्षः ।**
**सहस्रधात्मा व्यरुचद् विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥१००॥**

औपाधिकः **सहचारिभेदो** यथा—

**मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे ।**
**बाहू प्रलम्बावङ्गेषु वङ्गेषु चरणौ दृढौ ॥१०१॥**

यथा च—(माघ. ३.१४)

**दैत्याधिपप्राणमुषां नखानामुपेयुषां भूषणतां क्षतेन ।**
**प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥१०२॥**

(४५. **श्रुत्यादिविनियोगः**)

श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्येति श्रुत्यादयः। तैः प्रधानाङ्गत्वापादनं **श्रुत्यादिविनियोगः**। स

**श्रुतितो** यथा— पशुना रुद्रं यजते; अत्र पशुनेति तृतीयाश्रुत्या रुद्रयागे पशोरङ्गभावः प्रतिपाद्यते।

**लिङ्गतो** यथा— 'बर्हिर्देवसदनं दामि' इति; अत्र दामीति लवनलिङ्गादनेन मन्त्रेण बर्हींषि लुनीयादिति प्रतीयते।

**वाक्यतो** यथा— श्वेतं छागमालभेत; अत्रैकवाक्योपादानाच्छ्वेतगुणस्य छागावच्छेदकत्वेन क्रियाङ्गभावो अव गम्यते।

**प्रकरणतो** यथा— समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति, इति प्रयाजानां दर्शपूर्णमासप्रकरणे पठितानां तदङ्गत्वमवगम्यते।

**स्थानतो** यथा— मार्जनाघमर्षणोपस्थानजपहोमादिस्थानेषु पठितानां मन्त्राणां तत्रैवाङ्गभावो भवति।

**समाख्यातो** यथा— हौत्रं कर्म, आध्वर्यवं कर्म, औद्गात्रं कर्मेत्यन्वर्थसंज्ञा—बलाद्धौत्रादीनामेव तेष्वङ्गभावो भवति।

**श्रुत्यादयश्च** क्वचित्समस्ताः क्वचिद्व्यस्ता एव विनियोजयन्ति।

**समस्ता** यथा—(रघु. ६.६३)

**अनेन कल्याणि! करे गृहीते महाकुलीनेन महीव गुर्वी ।**
**रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥१०३॥**

**व्यस्ता** यथा—(किराता ३.४८)

**स क्षत्रियस्त्राणसहः क्षताद् यस्तत् कार्मुकं कर्मसु यस्य शक्तिः ।**
**वहन् द्वयीमप्यफलेऽर्थजाते करोत्यसत्कारहतामिवोक्तिम् ॥१०४॥**

**(४६. श्रुत्यादिबलाबलम्)**

'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौबैल्यमर्थविप्रकर्षाद्' (पू. मी. ३.३.१४) इति **श्रुत्यादिबलाबलं** तदप्यखण्डवाक्यार्थपक्षे असमर्थितमेव भवति। यतः— (वाप. २.७२)

**अखण्डमेव वाक्यं चेदविभक्तार्थमिष्यते ।**
**तत् सर्वं श्रुतिभूतत्वान्न श्रुत्यैव विरोत्स्यते ॥१०५॥**

न च श्रुतिर्लिङ्गवाक्यादि न विरुणद्धि। तत्र श्रुत्या लिङ्गविरोधो यथा—'ऐन्द्रया गार्हपत्यमुपतिष्ठते' (मै.सं. ३.२४); ऐन्द्रया ऋचा इन्द्रप्रकाशनसामर्थ्यलक्षणा—ल्लिङ्गादिन्द्रोपस्थानविनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते; तेनैन्द्रयाप्येतया गार्हपत्यस्यैवोपस्थानं भवति। श्रुत्या वाक्यविरोधो यथा—'पयसा भुङ्क्तां देवदत्तः शृतेन।' अत्र विशेषणविशेष्यभावेन वाक्यप्रापितस्य पयोविषयस्य श्रपणस्यासम्भवेऽपि श्रुतिप्रापितं पयस उपसेचनत्वं न निवर्तते। न चोपसेचनत्वेन यदप्रसिद्धमुदकादिकं, तेन शृतेन श्रपणस्यानुग्रहो भवत्विति युज्यते। श्रुतिवाक्यार्थविकल्पसम्भवे श्रुत्यर्थ एव क्रियते, न वाक्यार्थः, अर्थविप्रकर्षात्। ननु च शृतेनेत्यपि तृतीयान्तमेव। तत्र यथा 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यारुण्यादयः स्वाश्रयमवच्छिन्दन्तः श्रुत्या क्रयेण सम्बध्यन्ते, तथा श्रपणमपि श्रुत्यैव भोजनेन सम्भन्त्स्यत इति।

विषम उपन्यासः। तत्र हि 'अरुणयैकहायन्या पिङ्गाक्ष्या' इति प्रशस्तगवीविषयाणि विशेषणान्येव श्रूयन्ते, न विशेष्यं शाबलेयादि। ततश्च यैरेवा—साधारणविशेषणैररुणादिभिर्नीलग्रीवत्रिलोचनार्धनारीश्वरादिभिरिव महेश्वरादि विशेष्यं शाबलेयादि यदवगम्यते, नैव तेषां बाधो भवति। तदग्रहे तस्याग्रहणात्। नापि

विकल्पः, समुदितानामेवावच्छेदनिमित्तत्वात्। इह तूभयं श्रूयते, विशेष्यं विशेषणं च, पयसेति विशेष्यं, श्रृतेनेति विशेषणम्। विशेषणविशेष्ययोश्च विकल्पसम्भवे विशेष्यमेवोपादीयते, न विशेषणमिति मृषैवोपालब्धाः स्मः।

अपि च द्विविध इहानुष्ठेयः शब्दार्थः दृष्टविषयोऽदृष्टविषयश्च। तत्रादृष्टविषये यथोक्ताकरणेन मा भूद् विफल इति निवापाञ्जलिप्रदानवदन्यूनाधिक एव अनुष्ठीयते। दृष्टविषये पुनरदृष्टनियमाभावेन शक्यते शक्तिरुल्लङ्घयितुम्। तत्र नायं नियमो यदुत श्रृतेनैव पयसा भोक्तव्यं, न चाश्रृतेन पयसा भुजिक्रिया न निर्वर्तते। न च निर्वृत्ता फलं न निर्वर्तयति। तस्माद् अश्रृतमपि पय एवोपादीयते, न तु श्रृतमप्युदकादीति।।

ननु च लिङ्गेनापि श्रुतिबाधो दृश्यते। तद्यथा– **पच्यतां पिष्यतामवहन्यता–मतिथिरायात** इति। अत्र हि पाकपेषणावघाताः श्रुत्यातिथिविषयतयोपस्थापिता लिङ्गेन पाकपेषणावघातार्हव्रीह्यादिविषयतयोपस्थाप्यन्ते।

अत्रापि ब्रूमः–कामं पुनरिहातिथिविषयां श्रुतिमायुष्मान् मन्यते पच्यतामतिथिरायात इति। तत्र यदि पूर्वाम्, उत्तरस्या विषयो वक्तव्यः। अथोत्तराम्, कथमाद्याः पाकादयोऽतिथिविषया इति?

किं ब्रवीषि? अतिथिविशेषणानुकारित्वेनैकवाक्यभ्रान्तिकारिणा आयात इति पदेन विप्रलब्धोऽसि।

कियदिदं ते, यतोऽद्यापि श्रुत्यर्थमपि ना(व)बुध्यसे। श्रुतिर्हि नामानेकपदनिबन्धन एव शब्दविषयो विध्यादिरर्थः। स च स्वार्थसिद्धये कर्मकरणकर्त्र–धिकरणादिकं यदाक्षिपति स सर्वः श्रुत्यर्थो भवति। तद्यथा अवहन्यतामित्युक्ते व्रीह्यादि, 'सोमं क्रीणाति' इत्युक्ते गवादि, वर्षतीत्युक्ते देवादि, सूर्य उदेतीत्युक्ते प्राच्यादि। तच्च द्रव्यमेव न गुणः। स त्वर्थसामर्थ्यात् सन्निहितोऽपि श्रुतिपदानाक्षिप्तः श्रुतारुणादिशब्दसन्निधाने व्यापारवान् प्रतीयत इति यत्नान्तरप्रापितत्वाच्छ्रुत्यर्थविलक्षणो वाक्यार्थविषयता क्रियाङ्गभावमनुभवति।

तदुक्तम् – (वाप. २.७३, ७४)

**सामर्थ्यप्रापितं यच्च व्यक्त्यर्थमनुषज्यते ।**
**श्रुतिरेवानुषङ्गे सा बाधिका लिङ्गवाक्ययोः ।।१०६।।**
**अनाक्षिप्तोऽरुणादिर्यः सन्निधानेन गम्यते ।**
**स यत्नप्रापितो वाक्ये श्रुतिधर्मविलक्षणः ।।१०७।।** इति।

एतेन लिङ्गाद्यनुपात्तयापि श्रुत्या लिङ्गादिबाधो व्याख्यातः।

तद्यथा—(कुसं. ५.६४)

**यथाश्रुतं वेदविदां वर! त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥१०८॥**

यथा वा—(कुसं. ५.८२)

**अलं विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥१०९॥**

**(४७. श्रुत्यादिक्रमः)**

श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्यादिभिः पदार्थानां यागादिकर्मसु परिपाट्यावस्थापनं **श्रुत्यादिक्रमः**। तत्र—

**श्रुतिक्रमो** यथा— 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति'।

**अर्थक्रमो** यथा— 'अग्निहोत्रं जुहोति, यवागूं पचति'।

**पाठक्रमो** यथा— 'धर्मार्थकामानां समवाये पूर्वः पूर्वो गरीयान्'(कामसू. १.२)।

**स्थानक्रमो** यथा— 'भूर्भुवःस्वर्लोकाँस्तर्पयति'।

**मुख्यक्रमो** यथा— 'देवानृषीन् मनुष्यानर्चयति'।

**प्रवृत्तिक्रमो** यथा— 'प्राग्वदनोऽघमर्षणादीनि जपति'।

**(४८. क्रमसम्भेदः)**

एषामन्योन्यसङ्करः **क्रमसम्भेदः**। तत्र—

**श्रौतार्थक्रमसङ्करो** यथा—

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ—**
**स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।**
**प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे**
**सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ११०॥**

**स्थानार्थसङ्करो** यथा— (कुसं. ५.६४)

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सङ्गनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥१११॥**

**पाठस्थानसङ्करो** यथा—

**हृत्कण्ठवक्त्रश्रोत्रेषु कस्य नावस्थितं तव ।**
**श्रीखण्डहारकर्पूरदन्तपत्रप्रभं यशः ॥११२॥**

**श्रौतार्थप्रावर्तिक**क्रमसङ्करो यथा—(माघ. ९.२९)

**प्रथमं कलाभवदथार्धमथो हिमदीधितिर्महदभूदुदितः ।**
**दधति स्फुटं क्रमश एव न तु प्रथितौजसोऽपि सहसोपचयम् ॥११३॥**

**श्रौतार्थपाठसङ्करो** यथा—

**क्वाप्यस्ताद्रिदरीषु पूष्णि पतिते सान्ध्ये च धाम्नि क्रमात्**
**किंचित्किंचिदुदञ्चति प्रतिकलं मन्दासु दृक्छक्तिषु ।**
**एताः पक्वपरूषकच्छविमुषः पूर्वं ततस्त्यायता**
**जायन्ते तमसा दिशः परिणमज्जम्बूफलश्यामलाः ॥११४॥**

**श्रौतार्थमुख्यसङ्करो** यथा—

**श्रुत्वा यं सहसाऽऽगतं निजपुरात् त्रासेन निर्गच्छतां**
**शत्रूणामवरोधनैर्जललवप्रस्यन्दतिम्यत्पुटाः ।**
**शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि**
**क्रीडाद्रौ च सशाद्वले विवलितग्रीवैर्विमुक्ता दृशः ॥११५॥**

**श्रौतार्थस्थानमुख्यसङ्करो** यथा—

**आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घतां**
**गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे ।**
**दत्त्वा पीलुशमीकरीरकबलान् स्वेनाञ्चलेनादरा—**
**दुन्मृष्टं करभस्य केसरजटाभाराग्रलग्नं रजः ॥११६॥**

**श्रौतार्थपाठप्रवृत्तिसङ्करो** यथा—

**दृष्टे लोचनवन्मनाङ् मुकुलितं पार्श्वस्थिते वक्त्रतव्॥११७॥** (द्र.पृ. ४७२)

आदिग्रहणाद्विप्रकर्षादिभिरपि **श्रुत्यादिक्रमसम्भेदो** यथा—(माघ. १.३)

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥११८॥**

**प्राधान्यादिभिरपि** यथा—कुसं. ७.४६

**कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।**
**आलोकमात्रेण सुरानशेषान् सम्भावयामास यथाप्रधानम् ॥११९॥**

**औचित्यादिभिरपि** यथा—(रघु. १३.७२)

**दुर्जातबन्धुरयमृक्षहरीश्वरो मे**
**पौलस्त्य एष समरेषु पुरः प्रहर्ता ।**
**इत्यादरेण कथितौ रघुनन्दनेन**
**व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥१२०॥**

**वयःश्रुतादिभिरपि** यथा—(राच. १५.३६)

**मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती—**
**नाश्वास्याश्रुमुखान्मुहुः प्रियसखान् प्रेष्यान् समादिश्य च ।**
**आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने**
**रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन् मारुतिः ॥१२१॥**

तदेवमेते ये पुरस्तादुपवर्णिताः ये चैवंप्रकाराः समाहारेतरेतरयोगैक—शेषान्वाच्यादयो वाक्यगतानां पदार्थानामनुग्राहिणो धर्माः ते सर्वेऽप्यविद्यमानो—द्देशविभागेन एकेन वाक्याख्येन शब्देनाभिधीयमानेऽवयवाभावाद् अनपोद्धार्य—शक्तिमात्रपरिग्रहे क्रियात्मन्येव केवले प्रतिज्ञाय माने न सम्भवन्ति। तस्मात् प्रविभक्तरूपाणामप्यव्यभिचरितावधि विभागानां चतुर्णां पञ्चानां वा पदजातानाम् असङ्कीर्णैर्वाच्यद्योत्यगमनीयैरर्थैर्भवितव्यमिति। यस्याप्येकः सन्निविष्टानेकशक्तिरूप—सर्वोपाधिविशिष्टः क्रियात्मा व्यावहारिकाभ्यां अन्वयव्यतिरेकाभ्यां प्रकल्पितोद्देश—विभागेनैकेन वाक्याख्येन शब्देनाभिधीयते, तस्यापि यावानयं पदश्रुतिरूपभेदेन पदार्थरूपभेदेन च व्यवहारः पुरस्तादुपन्यस्तः स सर्व एकस्मादर्थात् श्रुतिरूपाणि बुद्ध्यन्तरैः कृतप्रविभागान्यपोद्धृत्यायोद्धृत्य प्रकृतिप्रत्ययादिवत् श्रुतिरूपप्रविभागे क्रियमाणे न विरुध्यते। तत्र च—

**रूपनाशे पदानां स्यात् कथं चावधिकल्पना ।**
**अगृहीतावधौ शब्दे कथं चार्थो विविच्यते ॥१२२॥**
**तथा हि भागे सादृश्यं भागे भेदोऽवसीयते ।**
**भागाभावेऽपि वाक्यानामत्यन्तं भिन्नधर्मणाम् ॥१२३॥**
**एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते ।**
**निर्भागस्य प्रकाशस्य निर्भागेनैव चेतसा ॥१२४॥**

अप्रसिद्धं तु यं भागमदृष्टमनुपश्यति ।
सर्वत्रासंविदं मूढस्तावति प्रतिपद्यते ॥१२५॥

यत: पिकादियोगेन वाक्येऽत्यन्तविलक्षणे ।
सदृशस्येव संज्ञानमसतोऽर्थस्य मन्यते ॥१२६॥
गवये नरसिंहे वाप्येकज्ञानावृते यथा ।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ॥१२७॥
यथैवैकस्य गन्धस्य भेदेन परिकल्पना ।
पुष्पादिषु तथा वाक्येऽप्यर्थभेदस्य कल्पना ॥१२८॥
अतोऽखण्डेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते ।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥ (वाप. २.८८–९५)

तस्माद् युक्तैव पदगतदोषगुणनिरूपणेति।

## (पददोषा: –१६)

तत्र पदवाक्यवाक्यार्थदोषेषु **पददोषा:** षोडश–

**असाधु, अप्रयुक्तं, कष्टम्, अनर्थकम्, अन्यार्थकम्, अपुष्टार्थकम्, असमर्थम्, अप्रतीतं, क्लिष्टं, गूढार्थं, नेयार्थं, सन्दिग्धं, विरुद्धम्, अप्रयोजकं, देश्यं, ग्राम्यमिति।** तेषु –

१. **शब्दानुशासनविरुद्धमसाधु**, यथा–

भूरिभारभराक्रान्ते बाधति स्कन्ध एष ते ।
न तथा बाधते स्कन्धो यथा बाधति बाधते ॥१३०॥

२. **कविभिरनिबद्धमप्रयुक्तम्**, यथा–

कामचीकमथा: केऽमी त्वामजिह्वायकीयिषन् ।
स सस्ति किं वचन्तीमे कम्ब: शम्बं धरिष्यति ॥१३१॥

३. **श्रुतिविरसं कष्टम्**, यथा–(भामहा. १.५३)

वर्वर्ष्टि जलदो यत्र यत्र दर्धर्ष्टि चातक: ।
यत्राश्वकर्ण: पोफुल्ति स कालो मामजिह्लदत् ॥१३२॥

४. **पादपूरणमात्रार्थमनर्थकम्**, यथा–

बिभर्ति यश्च देहार्धे प्रियामिन्दुं तु मूर्धनि ।
स वै देव: खलु त्वां हि पुनातु मदनान्तक: ॥१३३॥

५. रूढिच्युतमन्यार्थकं, यथा—

ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसङ्गमानाम् ।
अत्राङ्प्रपूर्वौ वहतिस्मृधातू स्वार्थे प्रयुक्तौ न च तत्र रूढिः ॥१३४॥

६. तुच्छाभिधेयमपुष्टार्थम्, यथा—

शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचनः ।
विंशत्यर्धार्धमूर्धा वः पुनातु परमेश्वरः ॥१३५॥

७. अवाचकमसमर्थं, यथा—

जलं जलधरे क्षारमयं वर्षति वारिधिः ।
इदं बृंहितमश्वानां ककुद्मानेष हेषते ॥१३६॥

८. शास्त्रमात्रप्रयुक्तमप्रतीतम्, यथा—

किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः ।
गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः ॥१३७॥

९. व्यवहितार्थप्रत्ययं क्लिष्टम्, यथा—(काव्याद. ३.१२०)

विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥१३८॥

१०. अप्रसिद्धार्थप्रयुक्तं गुढार्थं, यथा—

सहस्रगोरिवानीकं भवतो दुस्सहं परैः ।
गोशब्दस्याक्षिवाचित्वादिहेन्द्रो हि सहस्रगुः ॥१३९॥

११. सङ्केतकल्पिताभिधेयं नेयार्थम्, यथा—

सपदि पङ्क्तिविहङ्गमनामभृत्तनयसैन्यमुलूकजिता जितम् ।
अयमिहार्थ उलूकजिदिन्द्रजिद् बलमनेन च दाशरथेर्जितम् ॥१४०॥

१२. अनिश्चयकृत् सन्दिग्धम्, यथा—

नीललोहितमूर्तिर्यो दहत्यन्ते जगत्त्रयम् ।
स एष हि महादेव इत्युक्ते हि न निश्चितम् ।
विभावसुर्विवस्वान्वा वृषाङ्को वा प्रतीयते ॥१४१॥

१३. विपरीतकल्पनं विरुद्धम्, यथा—

अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः ।
इति स्तुत्यर्थमेवैतदस्तुत्यर्थे विकल्प्यते ॥१४२॥

१४. **अविशेषाधायकमप्रयोजकम्**, यथा—

**तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।**
**कालेन लङ्घयामास हनूमानेष सागरम् ॥१४३॥**

१५. **अव्युत्पत्तिमद्देश्यम्**, यथा—

**गल्लौ लावण्यतल्लौ ते लडहौ मडहौ भुजौ ।**
**नेत्रे वोसट्टकंदोट्टमोट्टायितसखे सखि! ॥१४४॥**

१६. अश्लीलामङ्गलघृणावदर्थं **ग्राम्यम्**।

तत्रासभ्यमसभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चा**श्लीलम्**

**तत्रासभ्यं** यथा—

**छत्राकारशिराः सिरालसरलस्थूलप्रकाण्डो महान्**
**मध्येसूर्यसुताभ्रसिन्धु—विपुलाभोगो वटः पातु वः ।**
**कायैक्ये विकटप्रसारितमहाजङ्घं महीसुप्तयो—**
**र्यः खण्डेन्दुकिरीटकैटभजितोः काटश्रियं कर्षति ॥१४५॥**

**असभ्यार्थान्तरं** यथा—

**विद्यामभ्यस्यतो रात्रावेति या भवतः प्रिया ।**
**वनिता गुह्यकेशानां कथं ते पेलवं धनम् ॥१४६॥**

**असभ्यस्मृतिहेतु**र्यथा—(भामहा. १.५९)

**उत्कम्पयसि मां चूत! पिकवाक्कटवेन किम् ।**
**कृतः कृकाटिकायां ते पादः प्राणेन यास्यता ॥१४७॥**

अप्रशस्तमप्रशस्तार्थान्तरमप्रशस्तस्मृतिहेतुश्चा**मङ्गलार्थम्**। तेषु—

**अप्रशस्तं** यथा—

**खेटके भक्तसूपस्य वलभ्यां पत्तनस्य च ।**
**अतृप्तोऽहं मरिष्यामि हेहले भाषितस्य च ॥१४८॥**

**अप्रशस्तार्थान्तरं** यथा—

**प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् ।**
**विनाशपथदानेन पिशाची सा न साऽङ्गना ॥१४९॥**

**अप्रशस्तस्मृतिहेतु**र्यथा–

**मारीचोऽयं मुनिर्यस्य कृत्याः कालान्तकालये ।**
**पत्न्यां सङ्क्रन्दनादीनां सुतानामाप्तयेऽभवन् ॥१५०॥**

**घृणावद्** घृणावदर्थान्तरं घृणावत्स्मृतिहेतुश्च।

**घृणावदर्थं** यथा–

**पर्दते हदते स्तन्यं वपत्येष स्तनन्धयः ।**
**मुहुरुत्कौति निष्ठीवत्यात्तगर्भा पुनर्वधूः ॥१५१॥**

**घृणावदर्थान्तरं** यथा–

**बाष्पक्लिन्नाविमौ गण्डौ विपूयापाण्डरौ तव ।**
**प्रियोऽग्रे विष्ठितः पुत्रि! स्मितवर्चोभिरर्चति ॥१५२॥**

**घृणावत्स्मृतिहेतु**र्यथा–

**प्रत्यार्द्रयन्तो रूढानि मदनेषुव्रणानि नः ।**
**हृदयं क्लेदयन्त्येते पुरीषण्डमहाद्रुमाः ॥१५३॥**

## (वाक्यदोषाः –१६)

वाक्यदोषाः षोडश– **शब्दहीनं, पुनरुक्तिमत्, अपक्रमं, भिन्नवृत्तं, यतिभ्रष्टं, विसन्धि, व्याकीर्णं, सङ्कीर्णं, गर्भितम्, अपदम्, अशरीरम्, ऊनोपमम्, अधिकोपमम्, भिन्नलिङ्गं, भिन्नवचनं, श्लेषादिगुणविपरीतं** चेति। तेषु–

१. अपशब्दव**च्छब्दहीनं** यथा– (किराता. ८.२४)

**समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः ।**
**दधन्ति मध्येषु वलीविभङ्गिषु स्तनातिभारादुदराणि नम्रताम् ॥१५४॥**

२. अभिन्नपदपदार्थं **पुनरुक्तिमद्**, यथा–(काव्याद. ४.१३)

**उत्कामुन्मनयन्त्येते गम्भीराः स्तनयित्नवः ।**
**अम्भोधरास्तटित्वन्तो गम्भीराः स्तनयित्नवः ॥१५५॥**

३. क्रमभ्रष्ट**मपक्रमम्**, यथा–

**कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ।**
**तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम् ॥१५६॥**

४. **छन्दोभङ्गवद्भिन्नवृत्तं**, यथा—(बृ.उ. ५.५.१७)

**यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।**
**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥१५७॥**

५. **अस्थानविरतिर्यत्र तत् यतिभ्रष्टम्**, यथा—

**ब्रह्मेन्द्रोपेन्द्रादिगीर्वाणवन्द्यो भक्तानां भूयाच्छ्रियै चन्द्रचूडः ।**
**स्त्रीणां सङ्गीतं समाकर्णयन्केतूदस्ताम्भोदं सदोऽध्यास्त ईशः ॥१५८॥**

६. विसंहितं विरूपसन्धि च **विसन्धि**, यथा—काव्याद. ४.३७

**मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।**
**मञ्जर्युद्गमगर्भासौ तर्वाल्युर्वी विधूयते ॥१५९॥**

७. विघटितविभक्ति **व्याकीर्णम्**, यथा—(काव्याद. ३.११०)

**दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।**
**मुखं वल्गुरवं कुर्वन् तुण्डेनाङ्गानि घट्टयन् ॥१६०॥**

८. वाक्यान्तरपदव्यामिश्रं **सङ्कीर्णम्**, यथा—

**काअं खाअइ खुहिओ कूरं फेल्लेइ णिब्भरं रुट्ठो ।**
**सुणअं गेण्हाइ कंठे हक्केइ अ णत्तिअं ठेरो ॥१६१॥**
(काकं खादति क्षुधितः क्रूरं क्षिपति निर्भरं रुष्टः ।
श्वानं गृह्णाति कण्ठे भीषयते नप्तारं स्थविरः ॥)

९. वाक्यान्तरगर्भं **गर्भितम्**, यथा—(रुद्रट. ६४४)

**योग्यो यस्ते पुत्रः सोऽयं दशवदन लक्ष्मणेन मया ।**
**रक्षैनं यदि शक्तिर्मृत्युवशं नीयते विवशः ॥१६२॥**

१०. भिन्नभाषाप्रकृत्यादि**कमपदम्**। यथा—

**आउज्झिअ पिट्टिअए जह कुक्कुलि णाम मज्झ भत्ताले ।**
**पेच्छं/क्खंतह लाउलकंणिआह हा कस्य कंदेमि ॥१६३॥**
(आवर्ज्य ताड्यते यथा कुर्कुरी नाम मम भर्ता ।
प्रेक्षन्ते राजकुलभृत्या हा कस्य क्रन्दामि ॥)

११. निष्क्रिय**मशरीरं**, यथा—

**सेलसुआरुद्धद्धं मुद्धाणाबद्धमुद्धससिळेहं ।**
**सीसपडिच्छिअगंगं संझापणअं पमहणाहं ॥१६४॥**

(शैलसुतारुद्धार्धं मूर्धाबद्धमुग्धशशिलेखम् ।
शीर्षप्रतिष्ठितगङ्गं सन्ध्याप्रणतं प्रमथनाथम् ।।)

१२. ऊनोपमानविशेषण**मूनोपमम्**, यथा—(रुद्रट. ११.३६)

**संहअचक्काअ—जुआ विअसिअ—कमला मुणालसंछण्णा ।**
**वावी वहु व्व रोअण—विलित्त—थणआ सुहावेइ ।।१६५।।**

(सङ्गतचक्राह्वयुगा विकसितकमला मृणालसंछन्ना ।
वापी वधूरिव रोचनाविलिप्तस्तनी सुखयति ।।)

१३. अधिकोपमानविशेषणम**धिकोपमम्**, यथा—

**अहिणव-मणहर-विरइअ-वलअ-विहूसा विहाइ णववहुआ ।**
**कुंदलए व्व समुप्फुल्लगुच्छपरिलिंतभमरगणा ।।१६६।।**

(अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूः ।
कुन्दलतेव समुत्फुल्लगुच्छपरिलीयमानभ्रमरगणा ।।)

१४. भिन्नलिङ्गोपमं **भिन्नलिङ्गम्**, यथा—(भामह. २.५३)

**अविगाह्योऽसि नारीणामनन्यमनसामपि ।**
**विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षताम् ।।१६७।।**

१५. भिन्नवचनोपमं **भिन्नवचनम्**, यथा—(काव्याद. २.५५)

**सरांसीवामलं व्योम काशा इव सितः शशी ।**
**शशीव धवला हंसाः हंसीव धवला दिशः ।।१६८।।**

गुणविपर्ययस्त्रिधा—शब्दप्रधानः, अर्थप्रधानः, उभयप्रधानश्च। तत्र श्लेषसमता—

१६. सौकुमार्य**विपर्ययः** शब्दप्रधानः। तेषु—

श्लेषविपर्यया**च्छिथिलं** यथा—(काव्याद. १.४३)

**आलीयं मालतीमाला लोलालिकलिला मनः ।**
**निर्मूलयति मे मूलात् तमालमलिने वने ।।१६९।।**

समताविपर्ययो विषमम्, यथा—(काव्याद. २.५५)

**कोकिलालापवाचालो मामेति मलयानिलः ।**
**उच्चलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ।।१७०।।**

सौकुमार्यविपर्ययोऽसुकुमारम्, यथा—(काव्याद. १.४८)

**असितर्तितुगद्रिच्छित्स्वःक्षितां पतिरद्विदृक् ।**
**अमिद्धिः शुभ्रदृग्दृष्टैर्द्विषो जेघ्नीयिषीष्ट वः ॥१७१॥**

प्रसादार्थव्यक्तिकान्तिविपर्ययोऽर्थप्रधानः। तेषु—

प्रसादविपर्ययो**ऽप्रसन्नम्**, यथा—

**अनङ्गकमलञ्चक्रे मयमाना मरालिका ।**
**पश्/यस्यानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥१७२॥** (काव्याद. १.४४)

अर्थव्यक्तिविपर्ययो **नेयार्थम्**, यथा—(काव्याद. १.७४)

**मही महावराहेण लोहितादुद्धृतोदधेः ।**
**इतीयत्येव निर्दिष्टे नेया लौहित्यहेतवः ॥१७३॥**

कान्तिविपर्ययो **ग्राम्यम्**, यथा—(काव्याद. १.६१)

**कन्ये कामयमानं मां त्वं न कामयसे कथम् ।**
**इति ग्राम्योऽयमर्थोक्तिःवैरस्यायैव कल्पते ॥१७४॥**

ओजोमाधुर्यौदार्यविपर्यय **उभयप्रधानः**। तेषु —

ओजोविपर्ययः खण्डितरीतिर**समस्तं**, यथा—

**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः।**
**च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः॥** (काव्याद. १.५९)

माधुर्यविपर्ययः खण्डितरीतिर**निर्व्यूढम्**, यथा—

**नखिनां च नदीनां च शृङ्गिणां शस्त्रिणां तथा ।**
**विश्वासो नोपगन्तव्यः स्त्रीषु राजकुलेषु च ॥१७६॥**

औदार्यविपर्ययः खण्डितरीतिर**नलङ्कारम्**। यथा—

**दीर्घपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः ।**
**गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः ॥१७७॥**

## (वाक्यार्थदोषाः —१६)

वाक्यार्थदोषा अपि षोडशैव—

**अपार्थं, व्यर्थम्, एकार्थं, ससंशयम्, अपक्रमं, खिन्नम्, अतिमात्रं, परुषं, विरसं, न्यूनोपमम्, अधिकोपमम्, असदृशोपमम्, अप्रसिद्धोपमम्, निरलङ्कारम्, अश्लीलं, विरुद्धं** चेति। तेषु —

१. समुदायार्थशून्य**मपार्थम्**, यथा—

**जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थिति गायति मद्रकाणि ।**
**तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लवणस्य कोऽर्घः ॥१७८॥**

२. निष्प्रयोजनं गतार्थं च **व्यर्थम्**, यथा—(भट्टि ४.४)

**आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं, स च ।**
**अहौषीत् स्वतनुं वह्नौ दृष्टाप्तौ रामलक्ष्मणौ ॥१७९॥**

३. उक्ताभिन्नार्थ**मेकार्थम्**, यथा—(माघ. ३.१२)

**प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।**
**वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ता ह्युरसीतरा तु ॥१८०॥**

**इत्युक्तार्थमेवाह**—(माघ. ३.१३)

**कवाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।**
**आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥१८१॥**

४. अनिश्चयकृत्**संशयम्**, यथा—(काव्याद. ४.१७)

**मनोरथप्रियालोकरसलोलेक्षणे सखि! ।**
**आराद्वृत्तिरियं माता न क्षमा द्रष्टुमीदृशम् ॥१८२॥**

५. कमच्युतम**पक्रमम्**, यथा—

**काराविऊण खउरं गामउडो मज्जिओ अ जिमिओ अ ।**
**णक्खत्ततिहिवारे जोइसिअं पुच्छिउं चलिओ ॥१८३॥**

(कारयित्वा क्षौरं ग्रामवृद्धो मज्जितश्च भुक्तवांश्च ।
नक्षत्रतिथिवारान् ज्यौतिषिकं प्रष्टुं चलितः ॥)

६. जात्याद्युक्तावनिर्व्यूढं **खिन्नम्**, यथा—

**वेवाहिऊण वहुआ साअरअं दोलिआए णिज्जंती ।**
**रोअइ दिअरो तं संठवेइ पासेण वच्चंतो ॥१८४॥**

(विवाह्य वधूः श्वाशुरकं दोलिकया नीयमाना।
रोदिति देवरस्तां संस्थापयति पार्श्वेन व्रजन्॥)

७. लोकातीतार्थ**मतिमात्रम्**, यथा—

**भृङ्गेण कलिकाकोशस्तथा भृशमपीड्यत ।**
**ववर्ष विपिनोत्सङ्गे गोष्पदप्रं यथा मधु ॥१८५॥**

८. अतिक्रूरार्थं **परुषम्**, यथा–(स.क. १.५८)

**खाहि विसं, मुत्तं पिअ णिज्जसु मारीए पडउ दे वज्जो ।**
**दंतक्खंडिअथणिआ खिविऊण सुअं सवइ माआ ॥१८६॥**
(खाद विषं, मूत्रं पिब नीयस्व मार्या पततु ते वज्रम् ।
दन्तखण्डितस्तनी क्षिप्त्वा सुतं शपति माता ॥)

९. अप्रकृतरसं **विरसम्**, यथा–(रुद्रटस्य ११.१३)

**तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किं तपसा ।**
**सफलय यौवनमेतन्नन्वनुरक्तेन सुतनु मया ॥१८७॥**

१०. हीनोपमानं **हीनोपमम्**, यथा–(भामहा. २.५४)

**क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ।**
**शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥१८८॥**

११. अधिकोपमानम**धिकोपमम्**, यथा–(भामहा. २.५५)

**अयं पद्मासनासीनश्चक्रवाको विराजते ।**
**युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥१८९॥**

१२. अतुल्योपमानम**सदृशोपमम्**, यथा–

**णमह हरं रोसाणल–णिद्दद्ध–विअद्ध–मम्मह–सरीरं ।**
**वित्थअ–णिअंब–णिग्गअ–गंगासोत्तं व हिमवंतं ॥१९०॥**
(नमत हरं रोषानलनिर्दग्धविदग्धमन्मथशरीरम् ।
विस्तृतनितम्बनिर्गतगङ्गास्रोतसमिव हिमवन्तम् ॥)

१३.. अप्रसिद्धोपमानम**प्रसिद्धोपमम्**, यथा–

**कुमुदमिव मुखं तस्या गौरिव महिषः शशीव काव्यमिदम् ।**
**शरदिव विभाति तरुणी विकसत्पुलकोत्करेयमिति ॥१९१॥**

१४. अलङ्कारहीनं **निरलङ्कारम्**, यथा–

**कोला खणंति मोत्थं खाअंति मअअमंसाइँ ।**
**उलुआ हणंति काए काआ उलुए वि वाहं/यंति ॥१९२॥**
(कोलाः खनन्ति मुस्तां गृध्राः खादन्ति मृतकमांसान् ।
उलूका घ्नन्ति काकान् काका उलूकानपि वाधन्ते ॥)

१५. असभ्यार्थ**मश्लीलम्**, यथा—(भामहा. १.५१)

**उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः।**
**पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥१९३॥**

१६. विरोधस्त्रिधा— प्रत्यक्षविरोधोऽनुमानविरोध आगमविरोधश्च। तत्र—

देशकाललोकादिप्रतीतः **प्रत्यक्षविरोधः**। तेषु —

**देशविरुद्धं** यथा—

**सुराष्ट्रेष्वस्ति नगरी मधुरा नाम विश्रुता।**
**अक्षोट नारिकेलाङ्का यस्याः पर्यन्तभूमयः ॥१९४॥**

**कालविरुद्धं** यथा—(काव्याद. ४.४५)

**पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुदती।**
**मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥१९५॥**

**लोकविरुद्धं** यथा—(काव्याद. ४.५०)

**आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः।**
**गुरुसारोऽयमेरण्डो निस्सारः खदिरद्रुमः ॥१९६॥**

युक्त्यौचित्यप्रतिज्ञादिकृतो**ऽनुमानविरोधः**। तत्र—

**युक्तिविरुद्धं** यथा—

**सुरहि—महु—पाण—लंपड—भमर—गणाबद्ध—मंडलीबंधं।**
**कस्स मणं णाणंदह कुम्मीपुट्टट्ठिअं कमलं ॥१९७॥**
(सुरभिमधुपानलम्पटभ्रमरगणाबद्धमण्डलीबद्धम्।
कस्य मनो नानन्दयति कूर्मीपृष्ठस्थितं कमलम् ॥)

**औचित्यविरुद्धं** यथा—

**पट्टंसुउत्तरिज्जेण पामरो पामरीए वरिमुसइ।**
**अइगरुअ—कूर—कुंभीभरेण सेओल्लिअं वअणं ॥१९८॥**
(पट्टांशुकोत्तरीयेण पामरः पामर्याः प्रोञ्छति।
अतिगुरुककूरकुम्भीभरेण स्वेदार्द्रितं वदनम् ॥)

**प्रतिज्ञाविरुद्धं** यथा—

**यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता।**
**माता च मम वन्ध्यासीत्स्मराभोऽनुपमो भवान् ॥१९९॥**

धर्मार्थकामादिशास्त्रकृत **आगमविरोधः**। तत्र—

**धर्मशास्त्रविरुद्धं** यथा—(काव्याद. ४.५६)

**असावनुपनीतोऽपि वेदानधिजगे गुरोः ।**
**स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ।। २०० ।।**

**अर्थशास्त्रविरुद्धं** यथा—

**कामोपभोगसाफल्यफलो राज्ञां महीजयः ।**
**अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया ।। २०१ ।।**

**कामशास्त्रविरुद्धं** कलाशास्त्रविरुद्धं कामविरुद्धम्, यथा—

**तवोत्तरोष्ठे बिम्बोष्ठि! दशनाङ्कोऽतिशोभते ।**
**पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्तते ।। २०२ ।।**

## *(१०. गुणोपादानम्)*

निर्दोषस्य च काव्यस्य शरीरवस्तुनः (शरीरस्येव) कामनीयकोपपत्ता—वयमुपायो यद्गुणोपादानमलङ्कारयोगश्च। तदाह—

**युवतेरिव रूपमङ्ग! काव्यं स्वदते शुद्धगुणं तदप्यतीव ।**
**विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ।। २०३ ।।**

तत्र च गुणोपादानालङ्कारयोगयोर्**गुणोपादानं** गरीयः। अतस्तदेव प्रथममुच्यते। तदाह—

**यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।**
**अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ।। २०४ ।।**

अयमेव **गुणालङ्कारयोर्विशेषो यद्गुणोपादाने नियमोऽलङ्कारयोगे तु कामचार** इति।

गुणाश्च युवत्याः शरीरेषु त्रिविधास्तदर्थिनामादरातिशयहेतवो भवन्ति बाह्या आन्तरा वैशेषिकाश्च। तत्र—

अन्ववायवयोरूपलावण्यादयो **बाह्याः**,

शीलवैदग्ध्यमाहाभाग्यसौभाग्यादय**श्चान्तराः**,

ये तु दोषा अप्याश्रयविशेषावस्थाविशेषाद्युपाधेर्गुणत्वमाश्रयन्ते ते **वैशेषिकाः**।

यथोच्यते—

**सामण्णसुंदरीणं विब्भममावहइ अविणओ च्चेअ ।**
**धूमो च्चिअ पज्जलिआहि बहुमओ सुरहिदारूणं ।। २०५ ।।**

(सामान्यसुन्दरीणां विभ्रममावहत्यविनय एव ।
धूम एव प्रज्वलितानां बहुमतः सुरभिदारूणाम् ।।)

**(१. शब्दगुणाः –२४)**

काव्यशरीरेऽपि ते त्रिधैव। तत्र –

बाह्याः **शब्दगुणाः**, ते ह्यन्ववायादिवद् बाह्यत्वेनावभासन्ते।

आन्तरा **अर्थगुणाः**, ते सौशील्यादिवद्विमर्शेन ज्ञायन्ते।

वैशेषिका **दोषगुणाः**, ते हि पात्रविशेषाद्युपाधेः दोषा अपि गुणत्वेन विख्यायन्त इति। तत्र

शब्दगुणाश्चतुर्विंशतिः–

**श्लेषः, प्रसादः, समता, माधुर्यं, सौकुमार्यम्, अर्थव्यक्तिः, कान्तिः, उदारता, उदात्तत्वम्, ओजः, और्जित्यं, प्रेयः, सुशब्दता, समाधिः, सौक्ष्म्यं, गाम्भीर्यं, विस्तरः, संक्षेपः, संमितत्वं, भाविकत्वं, गतिः, रीतिः, उक्तिः, प्रौढिरिति**। तेषु–

१. सुश्लिष्टपदता **श्लेषः**, यथा–(माघ. ३.८)

**उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।**
**तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ २०६॥**

२. प्रसिद्धार्थपदता **प्रसादः**, यथा–(शाकु. २.६)

**गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**
**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।**
**विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्लवे**
**विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २०७॥**

३. मृदुस्फुटोन्मिश्रवर्णबन्धानामवैषम्यं **समता** यथा–

**यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य ।**
**तद् वः पुनातु हिमशैलशिलानिकुञ्जझात्कारडम्बरविरावि सुरापगाम्भः ॥**

४. पृथक्पदता **माधुर्यं**, यथा–(कुसं. ५.२४)

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥**

५. अनिष्ठुराक्षरप्रायता **सौकुमार्यम्**, यथा–(काव्याद. १.७०)

**मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभि: ।**
**कलापिन: प्रनृत्यन्ति काले जीमूतमालिनि ।। २१० ।।**

६. सम्पूर्णवाक्यत्व**मर्थव्यक्ति:**, यथा–(रघु. १.१)

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**
**जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ ।।२११ ।।**

७. बन्धोज्ज्वलता **कान्ति:**, यथा–

**निरानन्द: कौन्दे मधुनि विधुरो बालवकुले**
**न साले सालम्बो लवमपि लवङ्गे न रमते ।**
**प्रियङ्गौ नासङ्गं रचयति न चूते विचरति**
**स्मरन् लक्ष्मीलीलाकमलमधुपानं मधुकर: ।। २१२ ।।**

८. बन्धविकटत्व**मुदारता**, यथा–

**आरोहत्यवनीरुह: प्रविशति श्वभ्रं नगै: स्पर्धते**
**खं व्यालेढि विवेष्टते क्षितितले कुञ्जोदरे लीयते ।**
**अन्तर्भ्राम्यति कोटरस्य विसरत्यालम्बते वीरुध:**
**किं तद्यन्न करोति मारुतवशं यात: कृशानुर्वने ।। २१३ ।।**

९. श्लाघ्यविशेषणयोग **उदात्तत्वं**, यथा–

**श्रुत्वा यं सहसाऽऽगतं निजपुरात्त्रासेन निर्गच्छतां**
**शत्रूणामवरोधनैर्जललवप्रस्यन्दतिम्यत्पुटा: ।**
**शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि**
**क्रीडाद्रौ च सशाद्वले विवलित ग्रीवैर्विमुक्ता दृश: ।। २१४ ।।**

१०. समासभूयस्त्व**मोज:**, यथा–

**जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दुस्रवदमृतनिवृत्तप्रेतभावै: कपालै: ।**
**विरचितनुतिबन्धो मूर्ध्नि सद्य: पुरारे: परिणतबहुकल्पब्रह्मणां ब्रह्मघोष: ।।**

११. बन्धगाढत्वमौर्जित्यं, यथा–

**अस्मिन्नीषद्वलितविततस्तोकविच्छिन्नभुग्न:**
**किञ्चिल्लीलोपचितवितत: पुञ्जितश्चोच्छ्रितश्च ।**
**धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्ने:**
**स्वैरं सर्पन् सृजति गगने गत्वरान् पत्रभङ्गान् ।। २१६ ।।**

१२. वार्ताभिधानवर्णनादौ मन:प्रियार्थपदोपाख्यानं **प्रेय:**, यथा—(भोजस्य)

**सौजन्याम्बुनिधे! बुधप्रिय! गुणप्राकार! धर्मद्रुम**
**प्रारोह! प्रतिपन्नवत्सल! महात्यागिन्! विवेकाश्रय! ।**
**लक्ष्म्यावास! मनस्विनीमनसिजव्यापारलीलागुरो!**
**श्रीमन्मुञ्ज! किमित्यमुं जनमुपस्प्रष्टुं दृशा नार्हसि ।। २१७।।**

१३. सुप्तिङ्व्युत्पत्ति: **सुशब्दता**, यथा—

**तस्याजीवनिरस्तु मातरवमा जीवस्य मा जीवतो**
**भूयाद् वा जननि: किमम्ब! जनिना जन्तोर्वृथा जन्मन: ।**
**यस्त्वामेव न वन्दते न यजते नोपैति नालोकते**
**नोपस्तौति न मन्यते न मनुते नाध्येति नो ध्यायति ।। २१८।।**

१४. अन्यधर्मस्यान्यत्रारोपणं **समाधि:**, यथा—

**प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधर:**
**कपोल: पाण्डुत्वादवतरति तालीपरिणतिम् ।**
**परिम्लानप्रायामनुवदति दृष्टि: कमलिनीं**
**नवीनस्तन्वङ्ग्या मनसिजविकारो विजयते ।। २१९।।**

१५. शब्दानामन्त:सञ्जल्परूपता **सौक्ष्म्यम्**, यथा—(माघ. १८.६६)

**केवलं दधति कर्तृवाचिन: प्रत्ययानिह न जातु कर्मणि ।**
**धातव: सृजतिसंहशास्तय: स्तौतिरत्र विपरीतकारक: ।। २२०।।**

१६. ध्वनिमत्ता **गाम्भीर्यम्**, यथा—

**मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं**
**चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर ।**
**लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान् दिवौकस्पते:**
**विश्वान्त:करणैकचोर! तदपि ज्ञातो हरि: खल्वसि ।। २२१।।**

१७. व्यासाभिधानं **विस्तर:** यथा—

**जन: पुण्यैर्यायाज्जलधिजलभावं जलमुच:**
**तथावस्थं चैनं निदधतु शुभै: शुक्तिवदने ।**
**ततस्तां श्रेयोभि: परिणतिमसौ विन्दतु यया**
**रुचिं तन्वन् पीनस्तनि! हृदि तवायं विलुठति ।। २२२।।**

१८. समासाभिधानं **संक्षेपः**, यथा—(रघु. १२.७८)

**स मारुतिसमानीतमहौषधिहतव्यथः ।**
**लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥२२३॥**

१९. यावदर्थपदता **सम्मितत्वम्**, यथा—

**केचिद् वास्तुनि नो वाचि, केचिद् वाचि न वस्तुनि ।**
**वाचि वस्तुनि चाप्यन्ये, नान्ये वाचि न वस्तुनि ॥२२४॥**

२०. भावतो वाक्प्रवृत्ति**र्भाविकत्वम्**, यथा—(म.वी.च. १.५५)

**एह्येहि वत्स! रघुनन्दन! रामचन्द्र! चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम्।**
**आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते॥**

२१. आरोहावरोहक्रमो **गतिः**, यथा—

**वराहः कल्याणं वितरतु स वो यस्य शशभृ—**
**त्कलाकोटीकान्तं क्रमविगलदभ्युद्धतिभिया ।**
**मिथः संमूर्छद्भिश्चतुरुदधि—कल्लोल—पटलै—**
**रनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥२२६॥**

२२. उपक्रमाभेदो **रीतिः**, यथा—

**ग्राव्णा नासि गिरेः क्षता न पयसा नार्तासि न म्लापिता**
**न श्वासैः फणिनोऽसि न त्वदनुगा नायासिता कापि न ।**
**स्वं वेश्म प्रति गच्छतोरिति मुहुः श्रीशार्ङ्गिणोः सस्पृहं**
**सा प्रश्नोत्तरयुग्मपङ्क्तिरुभयोरत्यायता पातु वः ॥२२७॥**

२३. भणितिविशेष **उक्तिः**, यथा—

**कुशलं तस्याः जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम् ।**
**पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति ॥२२८॥**

२४. उक्तिपरिपाकः **प्रौढिः**, यथा—

**अभ्युद्धता वसुमती दलितं रिपूरः क्षिप्तक्रमं कबलिता बलिराजलक्ष्मीः ।**
**अत्रैकजन्मनि कृतं तदनेन यूना जन्मत्रये यदकरोत् पुरुषः पुराणः ॥**

## (२. अर्थगुणाः –२४)

अर्थगुणा अप्येत एव चतुर्विंशतिः। तेषु –

१. संविधान(सु)सूत्रता **श्लेषः**, यथा–

**दृष्ट्वैकासनङ्गते प्रियतमे पश्चादुपेत्यादरा–**
**देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।**
**ईषद्वक्रितकन्धरः सपुलकं स्वेदोल्लसन्मानसा–**
**मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥२३०॥** (अमरु.)

२. अर्थस्य प्राकट्यं **प्रसादः**, यथा–

**अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।**
**विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥**

३. क्रमवतामवैषम्यं **समता**, यथा–(विक्र. २.७)

**अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो–**
**र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।**
**ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी**
**मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥२३२॥**

४. क्रोधादावप्यतीव्रता **माधुर्यम्**, यथा–(रत्नाव. २.१९)

**भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता–**
**मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।**
**अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विष्फारितं**
**कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥२३३॥**

५. अनिष्ठुरता **सौकुमार्यम्**, यथा–(बा.रा. ६.३४)

**सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी गत्वा जयात् त्रिचतुराणि पदानि सीता ।**
**गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम् ॥**

६. स्वरूपाभिधान**मर्थव्यक्तिः**, यथा–

**पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिताभिः ।**
**गोरोचनाहरितबभ्रुबहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥**

७. दीप्तरसत्वं **कान्तिः**, यथा–

**मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वस्तलिखिता मम मञ्जरीति ।**
**अन्यापि किं सखि न भाजनमीदृशानां वैरी न चेद् भवति वेपथुरन्तरायः ॥**

८. विभवोत्कर्ष **उदारता**, यथा–(शाकु. ७.१२)

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।**
**ध्यानं रतनशिलातलेषु विबुधस्त्रीसन्निधौ संयमो**
**यद् वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ २३७॥**

९. आशयोत्कर्ष **उदात्तत्वम्**, यथा–

**पात्रे पुरोवर्तिनि विश्वनाथे क्षोदीयसि क्ष्मावलये च देये ।**
**व्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥ २३८॥**

१०. अर्थाध्यवसायविशेष **ओजः**, यथा–(मवीच. २.३४)

**तान्येव यदि भूतानि ता एव यदि शक्तयः ।**
**ततः परशुरामस्य न प्रतीमः पराभवम् ॥ २३९॥**

११. रूढाहङ्कार**तौर्जित्यम्**, यथा–(कुसं. ६.८२)

**उमा वधूर्भवान् दाता याचितार इमे वयम् ।**
**वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ २४०॥**

१२. अर्थस्याभीष्टता **प्रेयः**, यथा–

**रसवदमृतं कस्सन्देहो मधून्यपि नान्यथा**
**मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।**
**सकृदपि पुनर्मध्यस्थस्सन् रसान्तरविज्जनो**
**वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥ २४१॥**

१३. दारुणार्थस्यादारुणार्थपर्याय**स्सुशब्दता**, यथा–

**देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे ।**
**लक्ष्मीसहायस्य तवाद्य वत्स! वात्सल्यवान् द्रौणिरयं सहायः ॥ २४२॥**

१४. व्याजावलम्बनं **समाधिः**, यथा–(शाकु. २.१३)

**दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे**
**तन्वी स्थिता कतिचिदेव पदानि गत्वा ।**

आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ २४३॥

१५. सूक्ष्मार्थदृष्टिः **सौक्ष्म्यम्**, यथा–

अन्योन्यसंवलितमांसलदन्तकान्ति सोल्लासमाविरलसं वलितार्धतारम् ।
लीलागृहे प्रतिकलं किलकिञ्चितेषु व्यावर्तमानविनयं मिथुनं चकास्ति ॥

१६. शास्त्रार्थसव्यपेक्षता **गाम्भीर्यम्**, यथा–(माघ. ४.५५)

मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥ २४५॥

१७. अर्थविकासो **विस्तरः**, यथा–

संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत्समासादितम् ।
कोदण्डेन शराश्शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च सप्ताब्धयः ॥ २४६॥

१८. अर्थसङ्कोचः **सङ्क्षेपः**, यथा–

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ २४७॥

१९. तुल्यशब्दार्थविभागः **सम्मितत्वम्**, यथा–

इन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्रो नखाङ्कः स्तने
देयाद् वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः ।
संवादः प्रणवेन यस्य दलता कायैकतायां तयो–
रूर्ध्वद्वारविचिन्तितेन च हृदि ध्यातः स्वरूपेण च ॥ २४८॥

२०. साभिप्रायोक्तिः **भाविकत्वम्**, यथा–

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद् वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जठरच्छेदा नलग्रन्थयः ॥ २४९॥

२१. अर्थादर्थान्तरावगमो **गतिः**, यथा–

**शुभे कोऽयं वृद्धो गृहपरिबृढः किं तव पिता**
**न मे भर्ता रात्रौ व्यपगतदृगन्यच्च बधिरः।**
**हुहुंहुं श्रान्तोऽहं शिशयिषुरिहैवापवरके**
**क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके ॥ २५०॥**

२२. अर्थोत्पत्त्यादिक्रियाक्रमो **रीतिः**, यथा–

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ–**
**स्तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।**
**प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे**
**सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ २५१॥**

२३. भङ्ग्या इष्टाभिधान**मुक्तिः**, यथा–

**त्वमेवंसौन्दर्या स च रुचिरतायां परिचितः**
**कलानां सीमानं परमिह युवामेव भजथः।**
**अपि द्वन्द्वं दिष्ट्या तदिति सुभगे् संवदति वा–**
**मतः शेषं चेत् स्याज्जितमिह तदानीं गुणितया ॥ २५२॥**

२४. विवक्षितार्थनिर्वहणं **प्रौढिः**, यथा–

**त्वद्वक्त्रेन्दुविलोकनाकुलधिया धात्रा त्वदीयां श्रियं**
**निक्षिप्य प्रतिराजकेषु विदुषां लक्ष्म्या त्वमापूरितः।**
**तेनैते नियतं दरिद्रति गृहेष्वेषामियं दृश्यते**
**नैनामाद्रियसे त्वमिच्छसि तु तां त्वामेव सा धावति ॥ २५३॥**

## (३. दोषगुणाः)

पदादिदोषाणामनुकरणादिषु गुणत्वापत्तये दोषगुणाः। तेऽपि प्राग्वदेव त्रिविधा अपि प्रत्येकं चतुर्विंशतिधा। तत्र – **पददोषेषु** –

**(पददोषानामदोषत्वम्)**

१. असाधोर्म्लिष्टम्लेच्छितादेरनुकरणे गुणत्वं, यथा–

**उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या।**
**हुंहु मुञ्च मममेति च मन्दं जल्पितं जयति मानवतीनाम् ॥ २५४॥**

२. अनुकरण एवाप्रयुक्तस्य गुणत्वं, यथा—(मभा. ३.१.४८)

**दिवं पत्काषिणो यान्ति येऽचीकमत भाषिणः ।**
**पत्काषिणोऽपि नो यान्ति ये वचन्ति प्रयुञ्जते ।। २५५।।**

३. श्रुतिविरसं कष्टम्; तस्य दुर्वाचकानुप्रासे गुणत्वं, यथा—

**त्वाष्ट्रास्त्वाष्ट्रारिराष्ट्रे न भ्राष्ट्रे नादंष्ट्रिणो जनाः ।**
**धार्तराष्ट्राः सुराष्ट्रे न महाराष्ट्रे तु नोष्ट्रिणः ।। २५६।।**

४. पादपूरणाद्यर्थमनर्थकम्; तस्य यमकादौ गुणत्वं, यथा—

**'योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।'**
**'बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न ।। २५७।।'**

५. रूढिच्युतमन्यार्थम्; तस्य प्रहेलिकादिषु गुणत्वं, यथा—

**खातयः कनि काले ते स्फातयः स्फार्हवल्गवः ।**
**चन्द्रे साक्षाद्भवन्त्यत्र तायवो मम धारिणः ।। २५८।।**

६. तुच्छाभिधेयमपुष्टार्थम्; तस्य छन्दोऽनुरोधादौ गुणत्वं, यथा—

**'द्विरष्टवर्षाकृतिमेनमर्थिनामुशन्ति कल्पोपपदं महीरुहम् ।। २५९।।'**
**'यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ।। २६०।।'**

७. अवाचकमसमर्थम्; तस्य सीत्कृतादौ गुणत्वं, यथा—(माघ. १०.६४)

**आशु लम्बितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या ।**
**रक्तवैणिककराहततन्त्रीमण्डलक्वणितचारु चुकूजे ।।२६१।।**

८. शास्त्रमात्रप्रसिद्धम**प्रतीतम्**; तस्य तद्विद्यसम्भाषणादौ गुणत्वं, यथा—(माघ.२.२८)

**सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।**
**सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ।। २६२।।**

९. व्यवहितार्थप्रत्ययकृत् **क्लिष्टम्**; तस्य झटित्यर्थप्रतीतौ गुणत्वं, यथा— (रघु.१३.१)

**'अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।। २६३।।'**
**'पितुः पदं मध्यममुत्पतन्ती'।। २६४।।** (विक्र. १.२०)
**काञ्चीगुणस्थानमनिन्दितायाः'।। २६५।।** (कुसं. १.२७)

१०. अप्रसिद्धार्थप्रयुक्तं **गूढार्थम्**; तस्य तद्व्याख्यानादौ गुणत्वं, यथा–

**अम्हारिसा वि कइणो कइणो हलिबुद्ढसालिपमुहा इ ।**
**मंडुक्कमक्कडा वि हु होंति हरी–सप्प–सीहा वि ॥ २६६॥**

(अस्मादृशा अपि कवयः कवयो हरिवृद्धशालिप्रमुखा अपि ।
मण्डूकमर्कटा अपि खलु भवन्ति हरिः सर्पसिंहा अपि ॥)

११. सङ्केतकल्पिताभिधेयं **नेयार्थम्**; तस्य प्रहेलिकादिषु गुणत्वं, यथा–

**मोरु कलावेण वहइ तह णामह सरिणाउ ।**
**उस्सीसा पाअंतिगओ अणुणत्तिहिं जणु णाउ ॥ २६७॥**

(मयूरः कलापेन वहति तस्य नाम्नः सदृशनामा ।
उच्छीर्षात् पादान्तगतोऽनुनक्तं यथा नौका ॥)

१२. अनिश्चयकृत् **सन्दिग्धम्**; तस्य प्रकरणादिभिर्विशेषावगमे गुणत्वं, यथा–(कुसं. १.२७)

**'महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ॥ २६८॥**
**'स शार्ङ्गचक्रासिगदाब्जपाणिर्मेघच्छविः पातु जगन्ति शौरिः ॥ २६९॥'**

१३. विपरीतकल्पनं **विरुद्धम्**; तस्य तद्विधाभिधाने गुणत्वं, यथा– (माघ. १६.२)

**अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।**
**भवतोऽभिमनास्समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ २७०॥**

१४. अविशेषाभिधायकम**प्रयोजकम्**; तस्य स्वरूपाभिधानादौ गुणत्वं, यथा–(कुसं. ६.३६)

**'त आकाशमसिश्याममुत्पत्य परमर्षयः ॥ २७१॥'**
**'साग्रं वर्षसहस्रं स तपस्तेपे महामनाः ॥ २७२॥'**

१५. अव्युत्पत्तिम**देश्यम्**; (तस्य) कविभिरङ्गीकृतत्वे गुणत्वं, यथा–(मामा. ५.२२)

**षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला–**
**मालम्ब्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ।**
**पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं**
**वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीडितम् ॥ २७३॥**
**'किरन्तः कावेरीलडहलहरीशीकरकणान् ॥ २७४॥'**

१६. अश्लीलामङ्गलघृणावदर्थं **ग्राम्यम्**; तस्य संवीतगुप्तलक्षितादौ न दोषः।

**संवीतस्य हि लोके तु न दोषान्वेषणं क्षमम् ।**
**शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना ॥ २७५॥**

तत्रासभ्यमसभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्। तत्र–

१७. आद्यस्य तु गुणत्वं, यथा–

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥** (कुसं. ३.१६)

१८. द्वितीयस्य गुणत्वं, यथा–

**'सुदुस्त्यजा यद्यपि जन्मभूमिः'॥ २७७॥,**
**'जनैरसम्बाधमयांबभूवे ॥ २७८॥'**
**'स तेऽनुनेयः सुभगोऽभिमानी'॥ २७९॥,**
**'भगिन्ययं नः प्रथमाभिसन्धिः ॥ २८०॥'**

१९. तृतीयस्य **गुणत्वं**, यथा–

**ब्रह्माण्डकारणं योऽप्सु निदधे वीर्यमात्मनः ।**
**उपस्थानं करोम्येष तस्मै शेषाहिशायिने ॥ २८१॥**

अमङ्गलार्थममङ्गलार्थान्तरममङ्गलस्मृतिहेतुश्चामङ्गलार्थम्; तत्र–

२०. आद्यस्य **गुणत्वं**, यथा–

**भद्रे! मारि प्रशस्तं वद सदसि मुदा नृत्य कृत्ये! मुहूर्तं**
**मृत्यो! रत्नैश्चतुष्कं विरचय रचयारात्रिकं कालरात्रि! ।**
**चामुण्डे! मुण्डमालामुपनय विनयस्वायतां भैरवीर्ष्या–**
**मेवं देवे भवानीं वहति परिजनव्याहृतिस्त्रायतां व ॥ २८२॥**

२१. द्वितीयस्य **गुणत्वं**, यथा–(वेसं.१.६)

**सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।**
**निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ २८३॥**

२२. तृतीयस्य **गुणत्वं**, यथा–

**कोऽभिप्रेतः सुसंस्थानस्तस्या इति न निश्चयः ।**
**आशापिशाचिकैषा तु कुमारी मां वरिष्यति ॥ २८४॥**

२३. **घृणावद्** घृणावदर्थान्तरं घृणावत्स्मृतिहेतुश्च घृणावदर्थम्।

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते ॥ २८५॥ (काव्याद. १.२४)

यथा—(काव्याद. १.९६)

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ २८६॥

किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥ २८७॥ (काव्याद. १.५५)

यथा—(म.वी.च. १.३५)

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण—
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतोचछर्दितरक्तकर्दमघनप्रारभारघोरोल्ललद्—
व्यालोलस्तनभारभैरववपुर्बन्धोद्धतं धावति ॥ २८८॥

सन्निवेशविशेषाच्च दुरुक्तमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥ २८९॥ (भामहा. १.५४)

यथा—(मामा. ५.१८)

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल—
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब—
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ २९०॥

२४. एतेन द्वितीयतृतीययोरपि गुणत्वं व्याख्यातम्।

यथा—

मुखमापाण्डुगण्डं ते मदक्लिन्नकटः करी ।
विशांपते! विशिष्टोऽपि सफलं ब्रह्मवर्चसम् ॥ २९१॥

यथा च—

वर्षिष्ठाय यविष्ठाय प्रवीर्याय प्रचेतसे ।
नमः कपर्दिने नीललोहितायाग्निरेतसे ॥ २९२॥

**(वाक्यदोषाणामदोषत्वम्)**

अथ वाक्यदोषाणामदोषः, तत्र

१. शब्दहीनस्य क्वचिद् विवक्षातो **गुणत्वम्**। यथा—

**आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।**
**कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ २९३॥** (काव्याद. २.३६१)
**इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।**
**अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥ २९४॥** (काव्याद. ४.२८)
**अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते ।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया ॥ २९५॥** (काव्याद. ४.१४)

यथा—(काव्याद. ४.१५)

**हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।**
**हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ २९६॥**

२. **यत्नः सम्बन्धनिर्ज्ञातहेतुः कोऽपि कृतो यदि ।**
**क्रमलङ्घनमप्याहुर्निर्दोषं सूरयो यथा ॥ २९७॥** (काव्याद. ४.२३)
**बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।**
**आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ २९८॥** (काव्याद. ४.२४)
**यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।**
**न च्छन्दोभङ्गमप्याहुस्तददोषाय सूरयः ॥ २९९॥**
**जह ण्हाउं ओइण्णे अब्भन्तमुल्हासिअमंसुअद्धन्तं ।**
**तह अण ण्हाओ सि तुमं सच्छे गोलाणईतूहे ॥ ३००॥**
(यथा स्नातुमवतीर्णे आर्द्रीभूतमुल्लासितमंशुकार्धान्तम् ।
तथा च न स्नातो भवसि त्वं स्वच्छे गोदानदीतीर्थे ॥)

३. अस्थानविंरति **यतिभ्रष्टम्**—

**स्वरसन्ध्यकृते प्रायो धातुभेदे तदिष्यते ।**
**नामभेदे च शेषेषु न दोष इति तद्विदः ॥ ३०१॥**

यथा—

**'शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः' ॥ ३०२॥**

'किञ्चिद् भावालसमसरलप्रेक्षितं कामिनीनाम् ।। ३०३।।
कार्याकार्याण्ययमविकलान्यागमेनैव पश्यन् ।
वश्यामुर्वीं वहति नृप इत्यस्ति चैवं प्रयोगः ।। ३०४।। (काव्याद. ४.३०)

अत्र च– (काव्याद. ४.३१)

लुप्ते पदान्ते शेषस्य पदत्वं निश्चितं यथा ।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ।। ३०५।।

४. विरूपसन्धि **विसन्धि**– (काव्याद. ४.३६)

न संहितां विवक्षामीत्यसन्धानं पदेषु यत् ।
तद् विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ।। ३०६।।

यथा–(कासूवृ. २.२.८)

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः।। ३०७।।'
'स इतोऽन्य ऋतावृतप्रियो
न ऋचस्त्वं न यजूंषि ऊहसे ।। ३०८।।'

पदानां व्युत्क्रमो यत्र क्रमेण व्युत्क्रमेण वा ।
तद् व्याकीर्णं विदुस्तस्य न दोषः कोऽपि तद् यथा ।। ३०९।।
जुगुप्सत स्मैनमदुष्टभावं मैवं भवानक्षतसाधुवृत्तः ।
इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनोः ।। (जाह. १.८५)

५. पर्यायेण द्वयोर्यत्र वाक्यं प्रश्नोत्तरादिषु ।
सङ्कीर्णं <u>तत्र दोषाय</u> वाकोवाक्यविदो विदुः ।। ३११।।

(यथा)– (अमरुक. ५७)

बाले! नाथ! विमुञ्च मानिनि! रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ।। ३१२।।

६. वाक्यान्तरसगर्भं यत् तद् वाक्यं गर्भितं विदुः ।
रसान्तरविरस्कारे तदिष्टं <u>नेष्टमन्यथा</u> ।। ३१३।।

यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते. (पृ. ३६२)

७. देशभाषाप्रभेदेन प्रकृत्यादिभिदापि वा ।
अपदं तस्य चानुज्ञा भाषाचित्रेषु तद्यथा ।। ३१४।।
हा तो जो ज्जलदेउ नैव पदन: साक्षादयं भूतले
तत्किं दीसइ सच्चमा हतवपु: काम: किल श्रूयते ।
ऐ पच्छा किअलेउ भूतपतिना गौरीविवाहोत्सवे
ऐसें सच्च जि बोल्लु हस्तकटक: किं दर्पणेनेक्ष्यते ।। ३१५।।

८. अशरीरं क्रियाहीनं क्रियापेक्षा न यत्र तु ।
यत्रास्त्यादेरपेक्षा वा न दोषस्तत्र तद्यथा ।। ३१६।।
कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते न सर्वत्र भवादृशा: ।। ३१७।।
यत्रोपमाने धर्मा: स्युर्नोपमेयेन सम्मिता: ।
तदूनोपममित्याहुस्तत्प्रसिद्धौ न दुष्यति ।। ३१८।।

यथा— (भामहा. २.४१,४२,४३,४४)

स मारुताकम्पितपीतवासा बिभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीर: प्रगृहीतशार्ङ्ग: सेन्द्रायुधो मेघ इवाबभासे ।। ३१९।।
शक्रचापग्रहादत्र दर्शितं किल कार्मुकम् ।
वास: शङ्खानुपादानादूनमित्यत्र चोच्यते ।। ३२०।।
सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिरुपमानं प्रयुज्यते ।। ३२१।।
अखण्डमण्डल: क्वेन्दु: क्व कान्ताननमद्युति ।
यत्किंचित्कान्तिसाम्यात्तु शशिनेवोपमीयते ।। ३२२।।

९. तेनाधिकोपमं व्याख्यातम्। यथा—(भामहा. २.५८, ५९)

स पीतवासा: प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्ण: ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमान: शशिनेव मेघ: ।।३२३।।

शशिनो ग्रहणादेतदाधिक्यं किल न ह्ययम् ।
निर्दिष्ट उपमेयेऽर्थे वाच्यो वा जलजोऽत्र तु ॥ ३२४॥
न सर्वसारूप्यमयं विस्तरेणोदितो विधिः ।
अभिप्रायात्कवेर्वात्र विधेया जलजे मतिः ॥ ३२५॥ (भामहा. २.६०)
भिन्नलिङ्गत्वमप्याहुरुपमादूषणं तथा ।
वचोभेदो न दोषाय यत्रोद्वेगो न धीमताम् ॥ ३२६॥ (काव्याद. २.५१)

तत्र लिङ्गभेदे न दोषो यथा—

अन्यदा भूषणं पुंसः शमो लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ३२७॥ (माघ. २.४४)

वचनभेदे न दोषो यथा—

आज्ञा इव जगन्मृत्योः प्राणा इव नयश्रियः ।
गृहा इव तपस्सिद्धेर्दारा इव विभोर्गतिः ॥ ३२८॥

१०. श्लिष्टमस्पृष्टशैथिल्यं शिथिलं तद्विपर्ययः ।
गौडीयैरिष्यते तत्तु बन्धप्राशस्त्यगौरवात् ॥ ३२९॥ (काव्याद. १.४३)

यथा—(काव्याद. १.४४)

लीलाविलोलललनाललितालकलालसाः ।
विलुप्तमालतीमाला जलकालानिला ववुः ॥ ३३०॥

११. अनालोच्यैव वैषम्यमर्थालङ्कारडम्बरौ ।
अवेक्षमाणा ववृधे पौरस्त्या काव्यपद्धतिः ॥ ३३१॥ (काव्याद. १.५०)

यथा—(काव्याद. १.४९)

चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।
स्पर्धते रुद्धमद्धैर्यो वररामानननानिलैः ॥ ३३२॥
दीप्तमित्यपरैर्भूम्ना कठोरमपि बध्यते ।
न्यक्षेण पक्षः क्षपितः क्षत्रियाणां क्षणादिति ॥ ३३३॥ (काव्याद. १.७२)

१२. आविद्वदङ्गनाबालप्रसिद्धार्थं प्रसादवत् ।
विपर्ययोऽस्याप्रसन्नं चित्रादौ तन्न दुष्यति ॥ ३३४॥ (भामह. २.३)

यथा—(देवीश.)

याश्रिता पावनतया यातनाच्छिदनीचया ।
याचनीया धिया मायायामायासं स्तुता श्रिया ॥ ३३५॥

१३. अध्याहारादिगम्यार्थे नेयार्थमिति तद्विदुः ।
प्रसिद्धेर्गम्यते यस्मिन्न च तद्दोषवद्यथा ॥ ३३६॥

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥ ३३७॥

१४. असभ्यार्थं मतं ग्राम्यं तद् ग्राम्योक्त्यैव दुष्यति ।
विदग्धोक्तौ तु तस्याहुर्गुणवत्त्वं मनीषिणः ॥ ३३८॥

यथा—(काव्याद. १.६४)

कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्येत्येवमादि यथोदितम् ॥ ३३९॥

१५. ओजः समासभूयस्त्वं तद्दीप्तार्थेषु बध्यते ।
विपर्ययोऽस्यासमस्तं दीप्तार्थं चेन्न दोषभाक् ॥ ३४०॥

यथा—(वेसं. ३.२२)

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ ३४१॥

१६. समस्तमसमस्तं वा न निर्वहति यद् वचः ।
तदनिर्व्यूढमस्यापि न दोषः क्वापि तद्यथा ॥ ३४२॥

प्रसीद चण्डि! त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥ ३४३॥

१७. अनलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।
पूर्वोत्तरानुसन्धाने तस्य साधुत्वमिष्यते ॥ ३४४॥

यथा—(माघ. २.६८)

निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद् दृशा ॥ ३४५॥

**(वाक्यार्थदोषाणामदोषः)**

अथ वाक्यार्थदोषाणामदोषः। तत्र च –

१. **समुदायार्थशून्यं यत् तदपार्थं प्रचक्षते ।**
**तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥ ३४६॥** (काव्याद. ४.५)

यथा–

**क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा**
**दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।**
**किं वक्ष्यन्त्यपकल्पषाः कृतधियो रेखैव सान्यादृशी**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ३४७॥**

२. **यदप्रयोजनं यच्च गतार्थे व्यर्थमेव तत् ।**
**तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथा ॥ ३४८॥**
**गीता विदुरवाक्यानि धर्माः शान्तनवेरिताः ।**
**न श्रुता भारते येन तस्य जन्म निरर्थकम् ॥ ३४९॥**
**हृत्कण्ठवक्त्रश्रोत्रेषु कस्य नावस्थितं तव ।**
**श्रीखण्डहारकर्पूरदन्तपत्रप्रभं यशः ॥ ३५०॥**

३. **अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।**
**तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति ॥ ३५१॥**

यथा–(मामा. ५.३०)

**असारं संसारं परिमुषितरत्नं त्रिभुवनं**
**निरालोकं लोकं मरणशरणं बान्धवजनम् ।**
**अदर्पं कन्दर्पं जननयननिर्माणमफलं**
**जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ ३५२॥**

४. **संशयायैव सन्दिग्धं यदि जातु प्रयुज्यते ।**
**स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥ ३५३॥**
**कत्तो लम्भइ पंथिअ सत्थरअं एत्थ गामणिघरम्मि ।**
**उण्णअपओहरे पेक्खिऊण जइ वससि ता वससु ॥ ३५४॥**(गास.वे. ८७९)

(कुतो लभ्यते पथिक स्रस्तरकमत्र ग्रामणीगृहे ।
उन्नतपयोधरान् प्रेक्ष्य यदि वससि तद् वस ।।)

५. वाक्ये प्रबन्धे चार्थानां पौर्वापर्यविपर्ययः ।
दोषः सोऽपक्रमो नाम चित्रहेतौ न दुष्यति ।। ३५५।।

यथा—(काव्याद. २.२५७)

पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ।। ३५६।।

६. यस्मिन् रीतेरनिर्वाहः खिन्नं तदभिधीयते ।
न दोषस्तस्य तु क्वापि यत्र च्छाया न हीयते ।। ३५७।।

यथा—

अभिनववधूरोषस्वादुः करीषतनूनपा—
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे—
र्विरहिवनितावक्त्रक्लैब्यं बिभर्ति निशाकरः ।। ३५८।।

७. लोकातीत इवार्थो यः सोऽतिमात्र इहेष्यते ।
वार्तादौ तेन तुष्यन्ति विदग्धा नेतरे जनाः ।। (काव्याद. १.८५, ८९)
तच्च वार्ताभिधानेषु वर्णनास्वपि विद्यते ।
कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।। ३६०।। (काव्याद. १.८९)

वार्ताभिधाने यथा—

गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।
सम्भावयति यान्येवं पावनैः पादपांसुभिः ।। ३६१।। (काव्याद. १.८६)

वर्णनायां यथा—

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ।। ३६२।। (काव्याद. १.८७)
इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।
कान्तं भवति सर्वस्व लोकसीमानु वर्तिनः ।। ३६३।। (काव्याद. १.८८)

तदतिक्रमे वार्ताभिधानं यथा—(काव्याद. १.९०)

देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम् ।
युष्मत्पादरजःपातधौतनिश्शेषकल्मषम् ॥ ३६४॥

वर्णना यथा—(काव्याद. १.९१)

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्यास्स्तनजृम्भणम् ॥ ३६५॥

८. इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम् ।
प्रस्थानं प्राक्प्रणीतं तु सारं वैदर्भवर्त्मनः ॥ ३६६॥ (काव्याद. १.९२)
परुषं निष्ठुरार्थं यदतीव हि विगर्हितम् ।
विरुद्धलक्षणाद्यासु तदुक्तिषु न दुष्यति ॥ ३६७॥

यथा—

हालाहलं विषं भुङ्क्ष्व सखि मा तत्र विश्वसीः ।
यद्वा न दह्यसे काष्ठैः स्वल्पैस्त्वमिति मे मतिः ॥ ३६८॥

९. अप्रस्तुतरसं प्राहुर्विरसं वस्तु सूरयः ।
इष्टं तस्याप्यनुज्ञानमप्राधान्ये तयोर्यथा ॥ ३६९॥
क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ (अमरुक.२)

१०. हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम् ।
हीनोपमं तदप्याहुर्न दोषः क्वापि तद्यथा ॥ ३७१॥
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ (महाभा. द्रोण. १८४.४६)

यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते ।
ज्ञेयं तदधिकौपम्यमस्यापि क्वाप्यदोषता ॥ ३७३॥

यथा—(काव्याद. २.५०)

कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।
राजन्ननुकरोषि त्वं सौभाग्येनापि मन्मथम् ।।३७४।।

११. उपमानेन वैषम्याद् भवेदसदृशोपमम् ।
तस्याभ्यनुज्ञामिच्छन्ति व्यतिरेकोपमादिषु ।। ३७५।।
प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ।। (माघ. १६.५२)
यस्योपमानं लोकेषु न प्रसिद्धं तदिष्यते ।
अप्रसिद्धोपमं नाम तत्क्वचिन्नैव दुष्यति ।। ३७७।।

यथा— उद्गर्भहूणरमणीरमणोपमर्दभग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ।। ३७८।।

१२. निरलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।
अर्थौर्जित्येषु तस्यापि क्वचिन्निर्दोषता यथा ।। ३७९।।
याच्ञां दैन्यपराभवप्रणयिनीं नेक्ष्वाकवः शिक्षिताः
सेवासंवलितः कदा रघुकुले मौलौ निबद्धोऽञ्जलिः ।
सर्वं तद् विहितं तदाप्युदधिना नैवोपरोधः कृतः
पाणिः सम्प्रति मे हठात् किमपरं स्प्रष्टुं धनुर्वाञ्छति ।। ३८०।।

१३. असभ्यार्थं यदश्लीलं यदर्थान्तरवाचि वा ।
तस्येह दृश्यते भूम्ना प्रयोगो नापि दुष्यति ।। ३८१।।

यथा— अद्यापि तत्कनककुण्डलघृष्टगण्डं
वक्त्रं स्मरामि विपरीतरताभियोगे ।
आन्दोलनश्रमवशस्फुटघर्मबिन्दु—
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ।। ३८२।।(चौप.१२)

१४. देशोऽद्रिवनराष्ट्रादिः कालो रात्रिंदिवर्तवः ।
नृत्तगीतप्रभृतयः कलाः कामार्थसंश्रयाः ।। ३८३।।(काव्याद. ४.४०—४२)
चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिश्रुतिरागमः ।। ३८४।।

तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्तते ।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते ॥ ३८५॥
विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
व्युत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥(काव्याद. ४.५७)

तत्र **देशविरुद्धस्य** गुणभावो यथा–

तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥ ३८७॥(काव्याद. ४.५८)

**कालविरुद्धस्य** यथा–

राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
धून्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥ ३८८॥ (काव्याद. ४.५९)

**लोकविरुद्धस्य** यथा–

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ ३८९॥ (काव्याद.४.६१)

**युक्तिविरुद्धस्य** यथा–

स सङ्कोचश्चन्द्रादिव कुमुदराशेरशरणः
स सूर्यात् कोकानां विरह इव लुप्तप्रतिविधिः ।
गुणेभ्यस्ते खेदप्रशमनपरेभ्योऽपि यदयं
खलानामुद्वेगस्तदिदममृतादेव मरणम् ॥ ३९०॥

**औचित्यविरुद्धस्य** यथा–(रा.च.१९.८९)

तेनाथ नाथ दुरुदाहरणातपेन
सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती
वागर्चिषस्तपनकान्तिशिलेव सीता ॥ ३९१॥

**वचनविरुद्धस्य** यथा–(काव्याद. ४.१०)

अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः ।
यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥ ३९२॥
परदाराभिषङ्गो मे कथमार्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥ (काव्याद. ४.११)

**धर्मविरुद्धस्य** गुणीभावो यथा—(काव्याद. ४.६३)

**पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका।**
**सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥३९४॥**

**अर्थविरुद्धस्य** गुणीभावो यथा—

**नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये।**
**विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥३९५॥** (माघ. २.६१)

**कामविरुद्धस्य** गुणीभावो यथा—

**दोलातिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।**
**कामिनां लयवैषम्याद् गेयं रागमवर्धयत् ॥३९६॥** (काव्याद. ४.६०)

एवमन्येऽपि द्रष्टव्याः। तद्यथा शिरश्शेखरः, कर्णावतंसः, श्रवणकुण्डलं, पुष्पमाला, धनुर्ज्या, टङ्कारध्वनिः, करिकलभ इत्यादिना पुष्टार्थत्वमर्थविशेषप्रतीतेः। तथा हि— शिरश्शेखरादीनां प्रभृतियोगः(?), पुष्पमालायां वैशा x x x दिप्राशस्त्यं, धनुर्ज्यायामारूढिः, करिकलभे करिप्रमाणता प्रतीयते। भुवनशिरश्शेखरः, पृथ्वीकर्णावतंसः, सरस्वतीश्रवणकुण्डलं, रत्नमाला, धनुर्ज्या, टङ्कारध्वनिः, कुचकुम्भः, करिकलभकः इत्यादिषूपचारः।

ननु च गुणकल्पनेयं नोपचारकल्पना। तथा हि— विशेष्येषु गुणकल्पना विशेषणेषूपचारकल्पनेति प्रदर्शितं पुरस्तात्।[1] न च गुणवृत्तिरुपचारवृत्तावन्तर्भवति, अपि तूपचारवृत्तिर्गुणवृत्तौ। द्विधा हि गौणी, गुणनिमित्ता उपचारनिमित्ता च। सत्यमेतत्। किंतु व्यवहितप्रतिपत्तिसाधनत्वसाधर्म्याददूरविप्रकर्षेण गौणीमप्युपचरितामेवाचक्षते।

**अक्षपादस्तु** 'सहचरणस्थानतादर्थ्यादिभ्यस्तद्वदुपचार' इति ब्रुवाणो (न्यायसू. २.२) यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, मल्लिका प्रदीप इत्यादिषु लक्षणामप्युपचारपक्षे प्रतिक्षिपति। न च लक्षणागौण्योरभेद इति वक्तव्यम्। यदाह **भट्टः** —

**अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते ।**
**लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥३९७॥** (तवा. १४.२२)

---

१. पृष्ठ ४४।

तत्र लक्षणायां यथैवाकृतिवचनः शब्दः तत्सहचरितां व्यक्तिं लक्षयति तथैव यष्टिमञ्चप्रदीपादयस्तत्सम्बद्धपुरुषादिलक्षणार्थाः प्रथन्ते। गौण्यां पुनरग्निर्माणवकः, सिंहो देवदत्तः, गौर्बाहीकः, इत्यादिषु नाग्नित्वाद्यविनाभावेन माणवकादयः प्रतीयन्ते। किं तर्हि—

**वह्नित्वलक्षणादर्थाद् यत्पैङ्गल्यादि गम्यते।**
**तेन माणवके बुद्धिः सादृश्यादुपजायते ॥३९८॥** (तवा. १४.२२)

ननु च न गौणमुख्ययोर्विवेको युज्यते। तथा हि— एक एवायं गोशब्दो वाक्ये क्वचिज्जातिविशेषाभिधायी गौरनुबन्ध्य इति, क्वचिज्जात्युपसर्जनद्रव्यमात्रवाची गौरानीयतामिति, क्वचित्परिच्छिन्न एव द्रव्यविशेषे वर्तते, अस्त्यत्र कांचिद् गां पश्यसीति (मभा. १.२.५८); क्वचित्तु रूढसम्बन्धेषु क्रियागुणेषु गोशब्दः प्रयुज्यमानो दृश्यते, यथा— जाड्यादौच्छिष्ट्यात् सर्वसहत्वान्महाशनत्वाद् वा गौर्बाहीक इति। तदेवं सर्वशक्तेर्गोशब्दस्यार्थप्रकरणादिभिरवच्छिद्यमानसामर्थ्यस्य पृथिव्यादाविव बाहीकेऽपि वर्तमानस्य न गौणत्वमुपपद्यते। तदाह—(वाप. २.२५३)

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेककर्मणः।**
**प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं वा प्रकल्प्यते ॥३९९॥**

तथा हि— (वाप. २.२५२)

**यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते।**
**तथा जाड्यादिगुणवान् बाहीकोऽप्यभिधीयते ॥४००॥**

यत्र स्वविषय एव शब्दः प्रयुज्यते तत्र मुख्यः। यत्र तु कुतश्चिन्निमित्तात् प्रवृत्तिनिमित्तमर्थान्तरेऽध्यस्य प्रयुज्यते तत्र गौणः।

यद्यपि जातिशब्दः तया जात्या स्वनिबन्धनभूतया विनात्यन्तानभिधेये क्रियागुणमात्रद्वारेण नान्यत्र वर्तितुमर्हति, न च शब्देनाप्रवर्तमानेन गौर्बाहीक इति सामानाधिकरण्यप्रयोगो घटते, तथापि यथा— कथंचित् सम्मोहाद् रज्जुद्रव्ये प्राप्ते बुद्धिविपर्ययादर्थान्तरेऽर्थान्तररूपमध्यारोप्य स्वविषय एव सर्पशब्दं प्रयुङ्क्ते तथा कस्यचिदेव सदृशस्य धर्मस्य भूतस्य दर्शनाद् भाविनो वा भूतासङ्गात् प्राप्तरूपविपर्यासायां बुद्धौ बाहीके गोत्वमासज्य गोशब्दं सास्नादिमत्येव पिण्डे प्रयुङ्क्ते।

एवमप्यर्थरूपमात्रविपर्ययः, शब्दस्य तु स्वविषयव्यभिचारो न विद्यते।

न चाध्यारोपः शक्यते कर्तुम्। तथा हि – यदा तावद् भ्रान्त्या मृगतृष्णायां तोयं शुक्तिकायां रजतमध्यारोप्य तच्छब्दं प्रयुङ्क्ते तदोभयोः प्रतिपाद्यप्रतिपादकयो–र्मुख्याध्यवसानरूपेणैव तोयादिप्रतीतेस्तद्भावापत्तिर्मुख्यत्वम्; अथापि वक्ता विवेकी सन् इतरवञ्चनार्थं प्रयुङ्क्ते, श्रोता च न विविङ्क्ते, तदा तु एकस्य विवेकेना–ध्यारोपाभावादितरस्य च विपर्ययमुख्यत्वान्नैकमपि प्रति गौणत्वोपपत्तिः।

यदा तु द्वावप्यभ्रान्तौ तदोभयोः सादृश्यादिनिमित्तात् तन्निमित्तवत्य–र्थध्यवसानादध्यारोपाभावः। यथैव ह्यसदृशानामर्थानां तिक्तमधुरादीनां न कथंचिदपि प्रतीत्यभावात् परस्पराध्यारोपणम्, एवं सदृशानामपि विवेकज्ञानात् नोपपद्यते। न च प्रतीतिविपरीतं ज्ञानं व्यवहाराङ्गं भवति।

न च प्रवृत्तिनिमित्तमन्तरेण शब्दो न प्रवर्तते, बुद्धिस्तु विषयमन्तरेणापि प्रवर्तत इति वक्तुमुचितम्।

न चार्थरहिता बुद्धिरात्माकारमात्रमनुभविष्यतीति वक्तव्यम्। नीलमिद–मित्यादिबुद्धिषु ग्राह्यस्य बाह्यत्वेनैवावभासात्।

अपि चायं गौणमुख्यविभागः श्रोतॄणामर्थविशेषावधारणे व्याप्रियते। ते च पदश्रवणवेलायामनध्यारोपितस्वार्थवृत्त्यैव गवादिपदमध्यवसाय बाहीकादिपदसामाना–धिकरण्यान्यथानुपपत्त्या गौणतां परिकल्पयन्ति। तत्र चैषां स्वयमनध्यारोप्यैव गोत्वं, तत्सादृश्यप्रतीतिर्भवति। सा च किं शब्दाद् अर्थाद् वेत्यन्विच्छतामन्वयव्यति–रेकाभ्यामर्थादिति निश्चयो जायते।

कथम्?

**सिंहशब्दे ह्यनुक्तेऽपि सिंहार्थसदृशी मतिः।**
**जायते न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि नः॥४०१॥** (तवा. १.४.२५)

यदा च श्रोतॄणां स्वयमेवाध्यारोपाभावस्तदा वक्तर्यपि नैवैषामियं कल्पना भवति; यथा कृतमनेन सिंहत्वमध्यारोपितमिति।

कथं तर्हि सिंहत्वाविनाभूतानेकक्रियागुणसमुदायोऽनेन देवदत्ते विवक्षितः? यत्नगौरवभयान्न स्वैरभिधानैर्ब्रवीति। न चास्य समस्तस्य किंचिदेकं वाचकं

१. पृष्ठ ३३४

पदमस्ति। तेनाविनाभावितया कथं नु सिंहत्वात् तत्प्रतीतिर्भवेदिति तत्तावदभिधीयते यत: स्थितया शब्दशक्त्या पुंसां व्यवहारो न तद्वशेन शक्त्यन्तरोपजन इति। किंच—(तवा. १.४.२२)

**यदध्यासेन वक्तॄणां गौणी वृत्ति: प्रकल्प्यते ।**
**वेदे सा न कथंचित् स्यादध्यारोपयितुर्विना ।।४०२।।**

एवं तर्हि सर्व एते गवादिशब्दा जातिद्रव्यगुणक्रियासमुदायवाचिन: समस्तार्थसम्भवे सास्नादिमदादौ प्रयुज्यमाना मुख्या:, बाहीकादौ तु कतिपयगुणक्रियायोगात् प्रवर्तमाना गौणतां लभन्ते। तत्राभिधीयते—

**समुदायार्थवाचित्वे नैकदेशे भवेद् गति: ।**
**शतशब्दान्न पञ्चाशन्मुख्यरूपेण गम्यते ।।४०३।।**(तवा.)

भवति तु जातिमात्रे दृष्टे सर्वक्रियागुणप्रत्यस्तमयेऽपि प्रयोग: प्रत्ययश्च मुख्यात्मनैव, न बाहीकादिष्विव गोशब्दादुपचरित:। अप्रसह्यकार्यपि हि कदाचिद् रोगेणोपहत: सिंह्या: पुत्र: सिंह एव। जातिवाचिता च गवादिशब्दानां [1] पुरस्तादुक्ता बाध्येत। क्रियागुणानां त्वानन्त्यान्न शक्यं प्रतिव्यक्ति गुणसम्बन्धोऽनुभवितुम्।

**एकस्यामेव च व्यक्तौ बाल्यादिषु गुणक्रिया: ।**
**अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसङ्गते: ।।४०४।।** (तवा.)

न चान्यत् सामान्यं शक्यते कल्पयितुम्, जात्यन्तरेऽपि क्वचित् कासांचित्सम्भवात्। न चानभिहितं गोत्वं गुणक्रियाणां व्यवच्छेदकं भवति, अप्रतीते:। अभिहितं चेत् तत्प्रत्ययादेवाशेषगुणक्रियावगमादभिधानशक्तयनवसर इति।(तन्त्रवा.)

अन्ये तु शक्तिप्रमाणादिभिर्न्यूनं गौणम्, अतिशयवन्तं सम्पूर्णं मुख्यमित्याचक्षतें न्यूना हि देवदत्ते शक्ति: सम्पूर्णा सिंहे, अल्पं प्रमाणं कूपे महत् समुद्र इति। (वाप. २.२५३)

तत्रापरे ब्रुवते (तवा.)—शब्दाभिधेयतया न्यूनमधिकं वा विज्ञायते, न तु शक्तिप्रमाणाद्युपचयापचयेन। यो हि शब्दो येनार्थेनावबद्धोऽर्थान्तरं नीयते तदुपचितमप्यर्थरूपं तच्छब्दं प्रति न्यूनमेव। तथा हि—'कूप: समुद्र:, पाटलीपुत्र: स्वर्ग' इत्यादौ अल्पप्रमाणशक्त्यादावपि स्वार्थे कूपादिशब्दानां मुख्यत्वमेव। अत: 'स्वार्थे प्रवर्तमानो मुख्योऽर्थान्तरे तु गौण' इति न्याय्यम्।

तत्र जातिः गवादिशब्दानां प्रवृत्तिनिमित्तं, जातौ हि स्वार्थे प्राप्तस्वरूपाण्य–भिधानानि तत्सहचरितांस्तद्वारेणैव धर्मान् संस्पृशन्ति। तत्र रूढसम्बन्धस्य प्रसिद्धसाहचर्यस्य क्रियागुणादेर्धर्मान्तरस्य दर्शनादतज्जातीयेषु जातिशब्दः प्रयुज्यमानो गौण इत्युच्यते। डित्थादिष्वप्यनाश्रिताकृतिषु क्रियागुणनिमित्तायां शब्दप्रवृत्तावर्थान्तर–समुद्भवाद् गवादिवदेव गौणमुख्यत्वे।

अत्राहुः—अजहत्स्वार्थाः सर्वा वृत्तयः पूर्वशक्त्यनुसारसम्भवे शक्त्यन्तरकल्पने प्रमाणाभावात्; सम्भविष्यति चात्र गोत्वावगतव्यक्त्युपस्थापितजाड्याद्यनेक–धर्मप्रत्ययाद् बाहीके प्रत्यय इति पूर्वैव शक्तिर्निमित्तम्। अतो न संशयहेतुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पनमाश्रयणीयम्।

अपि च यथा गौर्बाहीक इति कृतप्रत्ययलोपो गोशब्दो बाहीकार्थान्तरे प्रवर्तमानो गौण इत्युच्यते, तथा गर्गस्यापत्यानि बहूनि गर्गाः, विदा इति प्रत्ययलोपात् प्रकृतिशब्दाः प्रत्ययार्थे वर्तमाना अर्थान्तरवचनत्वाद् गौणा भवेयुः (वाप. २.२२१) तस्मादेक एव शब्दोऽनेकमर्थं यौगपद्येन पर्यायेण वाभिधत्ते, न तु स्वार्थमुत्सृज्यार्थान्तरे प्रवर्तते। प्रसिद्ध्यप्रसिद्धिभ्यां च तस्य मुख्यगौणव्यपदेशो जायते (वाप. २.२६३)। तत्र यौगपद्येऽपि यदा प्रसिद्धेनार्थेनावच्छिद्यते शब्दस्तदा मुख्यव्यपदेशं लभते। अप्रसिद्धेन त्वर्थेन प्राप्तावच्छेदस्य गौणव्यपदेशो भवति। पर्यायेणापि यस्मिन् वाक्ये प्रसिद्धार्थः शब्दस्तत्र मुख्यः, अन्यत्र तु गौणः। तदाह—

**विपर्यासादिवार्थस्य यत्रार्थान्तरतामिव ।**
**मन्यते स गवादिस्तु गौण इत्युच्यते क्वचित् ॥४०५॥** (वाप. २.२७४)

तस्माल्लब्ध्वा भवतु सोऽयमिति वा संबन्धः क्रियताम्। सर्वथा यत्रार्थान्तरवाची शब्दः कुतश्चिन्निमित्तात् परित्यज्यैव स्वार्थमर्थान्तरे वर्तते, 'यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते।' (वाप. २.२५१) इति प्रसिद्धिः, तस्य तथाभूतोऽर्थो गौण इति व्यपदिश्यते। यत्र तु लोकेऽर्थान्तरत्वेन प्रसिद्धिस्तत्र मुख्यत्वमेव। यथैव रूपादेव केचित् पदार्थाः केषुचित् कर्मसु योग्यत्वेनाश्रितशक्तयः साधनत्वेन प्रसिद्धसम्बन्धाः, ते च दर्शनमात्रादेव विशिष्टविषयास्तत्रतत्राव्यभिचारेण प्रतीयन्ते। तद्यथा—सीरासिमुसलादयः कृषिवधावहननादिषु प्रयोगैकदेशरूपत्वमिव प्रतिपन्ना गृह्यन्ते (वाप. २.२७५)।

न चैषां कर्मान्तरेषु शक्तयो न प्रभवन्ति। प्रसिद्धा तु रूपपरिकल्पितमेषां नियतक्रियाविषयसाधनत्वं व्यवस्थितं लोके। तेषु कर्मान्तरेषूपादीयमानाः साधयन्तोऽपि तदर्थं न तदङ्गत्वेन व्यपदेशं लभन्ते। तथैवैते गवादयः शब्दाः प्रत्यायकत्वस्य विच्छेदाभावाद् रूपपरिग्रहेण प्रत्यायनशक्तिमात्रपरिग्रहेण च केषुचिदर्थेषु लोके प्रसिद्धसम्बन्धाः श्रुतिमात्रादेव तद्विषयत्वेनावतिष्ठन्ते। प्रत्यायनशक्तिमात्रं तूपादायान्यत्र प्रयुज्यमानाः प्रत्याययन्तोऽपि तानर्थान् तत्संबन्धित्वेन लोकव्यवस्थाप्रसिद्धिं न लभन्ते।

तस्माच्छ्रुतिमात्रेण शब्दानां येष्वर्थेषु तादर्थ्यमवसीयते तमेषां प्रसिद्धं मुख्यमर्थमाचक्षते (वाप. २.२७८)। यत्र तु श्रुतिमात्रविषयं कृतं यत्नमभिक्रम्य निमित्तान्तरतः प्रतीतिः तमप्रसिद्धं गौणमित्याहुः (वाप. २.२६६)। अत्राप्युच्यते— 'प्रसिद्धिर्नाम प्रज्ञानं, न च प्रज्ञाने कश्चिद् विशेषोऽस्ति। तदुक्तम्—

**प्रसिद्धिरिति विज्ञानं न चास्योनातिरिक्तता।**
**तस्मान्न तत्कृतः शक्यो विशेषो वक्तुमञ्जसा ॥४०६॥** (तवा. ३.२.१)

अपि च पुरारात्प्रभृतीनामाख्यातसरूपाणां च प्रसिद्धार्थाभिधायिनां गौणमुख्यप्रविभागः प्रसज्येत यथा— 'पुरा विद्योतते, नडेन स्म पुरा ब्राह्मणा अधीयते (काशिका३.२.११८) आराद्दवीयो अपसेध शत्रून् (मैसं. ३.१६३), आराच्छत्रुमप वाधस्व दूरं (ऋवे.१०.४२.७), वायुर्वायुरश्वोऽश्वस्तेन तेनेति (मभा.दी. १६०)।

किं च गवादिशब्दानामपि वागादिष्वप्रसिद्धेर्गौणताप्रसङ्गः। तस्माच्छ्रोत्रगत— प्रसिद्धेर्मूलं तद्वक्तृगतं बह्वल्पप्रयोगित्वं मुख्यगौणप्रविभागाय प्रकल्पते। यस्य बहुशः प्रयोगः स मुख्यः, अल्पशस्तु प्रयुज्यमानो गौण इति।

तदपि न सम्यक्। अल्पशोऽपि प्रयुज्यमानो नासति सामर्थ्ये प्रत्याययेद्, अतः सोऽपि शब्दात् प्रतीयत इति मुख्य एव। अत्रापि च गवादीनां वागादिषु गौणताप्रसङ्गो वक्तव्यः। न च बह्वल्पप्रयोगिता मुख्यगौणत्वे हेतुः। तथा हि—

**मण्डकैर्बहुशस्तृप्तिः कदाचित्खण्डमोदकैः।**
**न तस्य मण्डका मुख्या गौणा वा खण्डमोदकाः ॥४०७॥**(तवा.३.२.१)

एवं तर्हि केवलादेव शब्दाद् योऽर्थः प्रतीयते स मुख्यो, यस्तु सोपपदात्

स गौण: (शाभा. ३.२.१) न हि यथा केवलादग्निशब्दाद् ज्वलनप्रत्ययो भवत्येवं माणवकप्रत्यय:, पदान्तराधीनत्वात्। यत्रापि पदान्तरं न श्रूयते तत्राप्यर्थप्रकरणापेक्षं तदेव व्याप्रियते (तवा.)। तदुक्तम्–(वाप. २.२६४)

**अर्थप्रकरणापेक्षो यो वा शब्दान्तरैस्सह।**
**प्रयुक्तो गमयत्यर्थं स गौण इति गीयते॥४०८॥**

एतदप्ययुक्तं–'यस्य हि शब्दस्य यद्रूपं कस्यचिदर्थस्य निमित्तं सोपपदस्यापि तत्तदेव। न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम्। उपपदं तु विद्यमानमपि द्योतकतवेनापेक्ष्यते। यथैव चक्षुष: प्रकाशानुग्रहापेक्षित्वे रूपमर्थो, यथा वा मुक्तसंशयस्य मुख्यस्य वर्णक्रममात्राऽग्रहणसंस्कारस्मृतिसम्बन्धानुभवाद्यपेक्षित्वं तथात्रोपपदमपि नैव विना सामर्थ्येनापेक्षितुं शक्यते। अपेक्ष्यमाणमपि द्योतकत्वेनेति–कर्तव्यतास्थानीयत्वान्न मुख्यतां विहन्ति। तेन विनाप्युपपदेन स तस्यार्थो भवत्येव, कथंचित्तु नाभिव्यज्यते, तद्यथा गवादिशब्दानां पृथिव्यादि:।

एवं तर्हि नित्यं माणवकाग्निशब्दसमुदायादस्यार्थस्य प्रतीते: अश्वकर्णादिवत् समुदायवाच्यत्वे सत्यग्न्यादेरवयवस्य तत्र गौणत्वमिति।

तदपि नास्ति। अन्वयव्यतिरेकाभ्यामर्थभेदप्रतीतेस्तत्र समुदायप्रतीतिर्भवति। यत्रावयवार्थौ तिरोधाय त्यक्तभेद: समुदायार्थ (भेद) एव प्रतीयते, गमयते त्वत्राग्निशब्दस्य पैङ्गल्यं, माणवकशब्दस्य तु पिण्डस्वरूपं विविक्तं वाच्यम्। अत: प्रात्यात्मिकयोरुभावपि वाच्यत्वान्मुख्याविति।

तत्रैतत्स्यात् अनुगतस्वार्थपदद्वयगम्यत्वान्नीलोत्पलवत् वाक्यार्थोऽयम्। अतश्च तस्यावयवापेक्षया गौणत्वमिति।

तदपि न। न ह्यत्राग्निपदार्थेऽग्नित्वमस्ति; न चानन्वितपदार्थो वाक्यार्थ: सम्भवति।

अस्ति तर्हि स्वरूप एव शब्दो नित्यं वर्तते; स एवास्यान्तरङ्गोऽव्यभिचारी शब्दान्तरैश्च असाधारणोऽर्थ:। तत्र चानुपदेशा प्रवृत्ति: सर्वेषाम्। स्वरूपं तु शब्दानामर्थेष्वध्यारोप्यते। यो गोशब्द: सोऽयं पिण्ड:। तद्यथा– यो वृद्धिशब्द: स आदैच् इति। तत्र स्वरूपेष्वेव श्रुतयो नित्यावरुद्धा:। अर्थस्वरूपयोस्तु रूपविपर्यासमात्रे सकललोकव्यवहार: क्रियते। नियतस्वरूपं श्रूयते; द्वितीयस्थानापन्नविपर्यासं हि स्वरूपं गौणव्यपदेशे निमित्तत्वं प्रतिपद्यते। तदाह–

**तत्र स्वरूपं शब्दानां सर्वार्थेष्वनुषज्यते ।**
**अर्थमात्रं विपर्यस्तं स्वरूपे तु श्रुतिः स्थिता ॥४०९॥** (वाप. २.२५६)

**रूढ्या यत्रासदर्थोऽपि लोके शब्दो निवेशितः ।**
**स मुख्यस्तत्र तत्साम्याद् गौणोऽन्यत्र स्खलद्गतिः ॥** (प्र.वा.प्रत्य. ३७)

अत्रापि पञ्चालस्यापत्यानि पञ्चालाः, तेषां निवासो जनपदः पञ्चालाः, पाणिनिना प्रोक्तो ग्रन्थः पाणिनीयः, तमधीते वेत्ति वा पाणिनीयः शिष्य इत्यादिषु शब्दस्वरूपस्य द्वितीयस्थानापन्नविपर्यासत्वाद् गौणत्वं प्राप्नोति। एवं तर्ह्यर्थभेदान्नामाख्यातशब्दानामिव श्रुतिरूपसादृश्येऽपि गवादिशब्दानां भेद एव नित्यो मुख्यः परमर्थेन विज्ञायते, दुर्ज्ञानत्वाच्च भेदस्य स्वरूपाश्रयेणैकत्वेन। प्रकृतिशब्दानां प्रत्ययार्थेषु लुबादिव्यवहारमात्रं शास्त्रेण क्रियते, गौरिव गौर्बाहीकः, चञ्चेव चञ्चा देवदत्तः। तत्र यथास्वमप्यर्थाभिधाने शास्त्रप्रवृत्त्यपेक्षया मुख्यगौणविभागः; स्वतोऽर्थे प्रवर्तमानो मुख्यः, शास्त्रेण तु नियुक्तो गौण इति।

ननु च शुक्लादिशब्दानां मतुब्लोपात् तद्वति द्रव्ये वर्तमानानां गौणताप्रसङ्गः। यतो न निमित्तवत्सु अर्थेषु निमित्तं स्वरूपप्रत्ययनिमित्तत्वं, निमित्तानि प्रतिपाद्यमानानि प्रतिलब्धरूपसम्प्रहाणीव (ण्येव?) गौणमुख्यव्यवहारमवतरन्ति। तेषां हि सत्यप्यात्मान्तरानात्मत्वे तदात्माश्रय एव व्यवहारः प्रसिद्धो लोके। एवमपि गर्गा बिदाः पञ्चाला इति प्रकृतिशब्दानां प्रत्ययार्थे शास्त्रद्वारेण प्रवृत्तेर्गौणताप्रसङ्गः। तस्मान्न कथंचिद्गौणमुख्यप्रविभागः प्रकल्पत इति।

अत्रोच्यते—'यः साक्षादेव शब्दात् प्रतीयते सोऽर्थो मुखमिव भवतीति मुख्य इत्युच्यते। तथा हि— 'शाखादिभ्यो य' (५.३.१०३) इत्येवमिवार्थे मुख्य इत्ययं शब्दप्रयोगो भवति। यस्तु खलु प्रतीतार्थावलम्बिगुणसम्बन्धव्यवधानेन गम्यते स गुणेभ्य आगत इति गौणो भवति। (शाभा. ३.२.१)

ननु च यद्गिरिशिखरमारुह्य प्रेक्षते तदपि प्रत्यक्षमेवेति न्यायाद् गुणव्य-वधानेनापि शब्दतः प्रतीयमानोऽर्थो मुख्य एवेति युज्यते। न हि सामग्रीव्यवधानं कारकाणां कारकत्वं विहन्ति; अश्वेनापि ग्रामं गच्छन् गन्तैव भवति। नैवम्; अस्त्यत्रापरोऽपि विशेषः। अनादृत्यैव माणवकप्रत्ययं ज्वलनमग्निशब्दात्प्रतियन्तो दृश्यन्ते। न त्वनादृत्य ज्वलनप्रत्ययं माणवकं प्रतियन्ति। कुतः पुनरेतत्? यो यो

ऽग्निसदृशो विवक्ष्यते, तत्र तत्राग्निशब्दो निपतति, विगतसादृश्याच्च अपयन्नुपलक्ष्यते, अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम्। न च ज्वलने अप्रतीते तत्सादृश्यं प्रतीयते। तस्माज्ज्वलने अग्निशब्दो मुख्यो माणवके तु गौण इति। तदाहुः—

**प्राक्प्रतीतस्य मुख्यत्वं मुखवत्प्रथमोद्गतेः ।**

**पश्चाद्गम्यस्य गौणत्वं गुणागमनहेतुकम् ॥ ४११ ॥ स्वार्थे**

**प्रवर्तमानोऽपि यस्यार्थं योऽवलम्बते ।**

**निमित्तं तत्र मुख्यः स्यान्निमित्ती गौण इष्यते ॥ ४१२ ॥**

नन्वेवं सति खपुष्पशशविषाणादीनां स्वार्थाविनाभूतगुणाभावात् गौणप्रयोगाभावप्रसङ्गः। तथा हि—यस्तावत्खपुष्पमात्मा शशविषाणं भवत्सिद्धान्त इति प्रयोगस्तत्र कतरत् त्वयान्यत्खपुष्पादिकमात्मादिव्यतिरिक्तमग्निसिंहगवादिवदवधारितं यद्गुणद्वारेणात्मादिषु प्रवर्तमाना खपुष्पादयो गौणा भवेयुः। अतः प्रथमप्रतीतत्वात् खपुष्पादेरात्मादिरर्थो न मुख्यत्वादपैति। कथमसतो मुख्यत्वमिति चेत्तुल्यमिदं गौणत्वेऽपि। उच्यते— खपुष्पशशविषाणादयः शब्दा अत्यन्ताभावाद्युपाधिषु पदार्थेषु लब्धमुख्यव्यपदेशा नास्तीत्यादिधर्मयोगादात्मादिषु प्रयुज्यमाना गौणभावं लभन्ते। तथा हि— सदसती तत्त्वे इति न्यायात्पुष्पमित्युक्ते अस्ति नास्तीति प्रसङ्गः। तत्र यथा लतादिसम्बन्धादस्तीति गम्यते तथाऽऽकाशादिसम्बन्धान्नास्तीति गम्यते। कथं तर्हि खपुष्पं नास्तीति प्रयोगः?

पूर्वेणैवावगतेऽभावे नास्तिशब्दोऽनुवादक इति केचित्, बाधक इति केचित्।

यदि वा खस्य पुष्पमित्यवयवार्थौ प्रसिद्धौ, समासाच्च राजपुरुषादिवत् सामान्यतोदृष्टेनानुमानेन षष्ठ्यर्थस्मृतिः प्रसक्ता। न च कदाचिदाकाशस्य कुसुमानाश्रयत्वमवधारितपूर्वं तस्यैतत्संसर्गानुसन्धानं वार्यते।

एतेन नास्ति शशविषाणमित्यपि व्याख्यातम्।

अथवा शशमूर्धवर्तिनां पृथिव्यवयवानामुपर्युपरिचीयमानदृढदीर्घसन्निवेशरूपेणा— परिणतानां नीचैर्वृत्त्या यदवस्थानं सोऽस्य वाक्यस्य विषयः सम्भवतीत्यविरोधः।

न चैतद् वाच्यम् अभावो भावशब्दैर्नाभिधीयत इति। यतः—

**यां निषेधाः क्रियामाहुर्न यातीत्येवमादयः ।**

**तिष्ठतीत्यादिभिस्तैस्तु शब्दैः सैवाभिधीयते ॥ ४१३ ॥**(तवा.)

अतो लब्धमुख्यार्थानां खपुष्पशशविषाणादिशब्दानामन्यत्रापि प्रसिद्धान्यथा–वस्थायिन्यर्थे गौणः प्रयोग उपपन्नो भवति। (तवा)

ननु च सादृश्येन प्रवर्तमानो गौण इत्यभ्युपगमे – प्रकृतिषु मृद्गवकादय इति, प्रतिमासु वासुदेवादय इति, चित्रेषु पर्वतादय इति, शुक्तिकायां रजतमिति, रज्जावहिरिति, मृगतृष्णायां तोयमिति, अलातसम्पाते चक्रमिति, पयःपृषत्सूर्यरश्मिषु सुरायुधमिति, क्षुपातपादिषु गन्धर्वनगरमिति, प्रतिबिम्बे स्तम्बेरम इति, कर्णक्ष्वेडायां घोष इति आलोकाभावेऽन्धकार (वाप. २.२८७–२९५) इति च यो व्यपदेशः, तस्यापि गौणत्वं प्राप्नोति। एतेषामपि हि प्रवृत्तौ सादृश्यमेव निमित्तम्। तथा हि–मृद्गवकादयः कस्यचिदेव सदृशस्य धर्मस्य भावादुपमानोपमेयसम्बन्धे सति 'इवे प्रतिकृतौ' (५.३.९६) इत्येतत् प्रकरणविहितानां प्रत्ययानामुत्पत्तौ निमित्तत्वं लभन्ते। युक्तं चैतत्। यतः– (वाप. २.२९३)

**मृगपश्वादिभिर्यावान् मुख्यैरर्थः प्रसाध्यते ।**
**न तावान् मृन्मयेष्वस्ति तस्मात् ते विषयाः कनः ।।४१४।।**

एतेन प्रतिमादिषु वासुदेवादयो व्याख्याताः। तथा हि ते मुख्या वरप्रदानदानवोच्छेदादिकर्मसु साधनत्वेन व्यवतिष्ठन्ते न तथा ग्रावमया वा दारुमया वा। तदुक्तम्–

**त्रैलोक्यत्राणसामर्थ्यं साक्षाद् विष्णोर्यदुच्यते ।**
**शिल्पिभिः कल्प्यमानस्य न तदर्चासु दृश्यते ।।४१५।।**

एवं चित्रे पर्वतादिस्वरूपस्य निम्नोन्नतादित्वेन यद् ग्रहणं तदपि तत्सहचरितप्रपातप्रतिघातादेरभावादधः क x x x x वावस्थाने निम्नोन्नतवृत्तेर्निवृत्तिदर्शनादयथार्थमेवावस्थाप्यते। तदुक्तम्–

**यत्र निम्नोन्नतं चित्रे [१]सरूपं पर्वतादिभिः ।**
**न तत्र प्रतिघातादिकार्यं तद्वत्प्रवर्तते ।।४१६।।** (वाप. २.२९०)

शुक्तिकायां तु प्रत्ययाधीनेऽपि रजतरूपावधारणे क्वचित् तद्विषयाणां प्रत्ययानां व्यभिचारेण या प्रवृत्तिः सैवामुख्यभावं व्यवस्थापयति। यदाह–

**यद्यपि प्रत्ययाधीनमर्थतत्त्वावधारणम् ।**
**न सर्वः प्रत्ययस्तस्मिन् प्रसिद्ध इव जायते ।।४१७।।** (वाप. २.२८६)

---

१. स्वरूप० HOS

रज्जुद्रव्ये यद्यपि वर्णसंस्थानद्वारेण सर्पबुद्धिः पुनःपुनरुत्पद्यते, तथापि यत्साधारणं कार्ष्ण्यदैर्घ्यादि तदपास्य श्वासदंशादिभिरसाधारणधर्मैर्मुख्यविषयं परिच्छिद्य गौणत्वमवधार्यते। उक्तं च—

**यदसाधारणं कार्यं प्रसिद्धं रज्जुसर्पयोः ।**
**तेन भेदपरिच्छेदस्तयोः तुल्येऽपि दर्शने ॥ ४१८॥** (वाप. २.२८८)

मृगतृष्णायां पुनर्यद्यपि सलिलनिर्भासा चक्षुर्द्वारिका तथाभूतैव बुद्धिरुत्पद्यते, तथापि स्पर्शनस्नानपानादीनामभावात् तद्देशप्राप्तौ चादर्शनान्नेदं सलिलमिति प्रत्ययेन बाध्यते। आहुश्च—

**दर्शनं सलिले तुल्यं मृगतृष्णादिदर्शनैः ।**
**भेदात्तु स्पर्शनादीनां न जलं मृगतृष्णिका ॥ ४१९॥** (वाप. २.२८७)

अलातचक्रेऽपि चक्रबुद्धौ चक्षुषा रूपप्रबन्धावग्रहवन्न हस्तेन स्पर्शप्रबन्धोऽव-गृह्यते। क्रियाविरामे च तस्य ज्योतिषश्चक्रवदाकारो नोपलभ्यते। अविच्छिन्ना-भिनिपातेनैव हि ज्योतिषा नित्यावरुद्ध इव प्रायेण तत्र रूपग्रहणदेशो रूपग्रहणकालश्च विभाव्यते। तस्मादपार्थं तद्ग्रहणमविषयो मुख्यस्य शब्दस्येति। उक्तं च—

**स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।**
**न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥ ४२०॥** (वाप. २.२९१)

एवमिन्द्रायुधेऽपि यथा रात्रौ [1]प्रदीपदीप्तिसन्निपातान्नीलपीतादीनां वर्णभेदो लक्ष्यते तथा हि न सूर्यरश्मिसम्पर्काद् घनारघट्टादिपयःपृषताम् इति मिथ्यात्वान्मुख्यत्वम्। तदाह—

**प्रसिद्धार्थविपर्यासनिमित्तं यच्च दृश्यते ।**
**यस्तस्माल्लक्ष्यते भेदस्तमसत्यं प्रचक्षते ॥ ४२१॥** (वाप. २.२८९)

एतेन क्षुपातपादिषु गन्धर्वनगरादयो व्याख्याताः। देशविशेषेषु क्षुपग्रावादौ विप्रकीर्यमाण आतप उपर्यवस्थिताभ्रप्रतिघातात् प्रतिनिवृत्तः क्षुपादीनामपचित-परिमाणानां परिमाणोपचयमावहन् गृहप्राकारतोरणोपवनसन्निवेशेनावभासमानो

---

१. रात्रौ प्रदीप दी.=रात्रौ(रवेः) प्रदीप(पृषत्सु)दी.'—राघवः

गन्धर्वनगरमित्युच्यते। तत्र यथा वप्रादिभिर्मुख्येषु नगरेषु गच्छतां प्रतिघातो दस्युभयरक्षादीनि च कार्याणि प्रकल्पन्ते न तथा गन्धर्वनगरेषु, तद्देशस्थैरेव च तानि न दृश्यन्त इति न तेषां मुख्यशब्दविषयत्वम्। तदाह—

**वप्रप्राकार[1]कल्पैश्च स्पर्शनावरणे यथा।**
**नगरेषु तथा नैवं गन्धर्वनगरेषु ते ॥४२२॥** (वाप. २.२९२)

प्रतिबिम्बं तु हस्त्यादिसरूपमादर्शादिषु दृश्यमानमपि प्रमाणभेदेनायथार्थम-वसीयते। हस्त्यादिप्रमाणेन प्रकृष्टदेशव्यापिना भवितव्यम्। न चादर्शस्यान्तरियान् देशः सम्भवति। तदुक्तम्—

**महानाव्रियते देशो मुख्यैः स्तम्बेरमादिभिः।**
**अल्पदेशान्तरावस्थं प्रतिबिम्बं तु दृश्यते ॥४२३॥** (वाप. २.२९४)

कर्णक्ष्वेडायामप्यश्रवणत्वेन घोष इति व्यपदेशो न मुख्यः। तदाह—

**कर्णौ पिधाय यः शब्दः श्रूयतेऽनाहताह्वयः।**
**न तस्य घोष इत्याख्या मुख्यवृत्त्योपपद्यते ॥४२४॥**

एतेनालोकाभावेऽन्धकारव्यपदेशोऽपि गौणार्थविषय एवेत्युक्तं भवति। तदुक्तम्—

**यत्र न प्रथते किंचित्तत्र तावन्न विभ्रमः।**
**सुषुप्त इव, भूच्छाया तमोभावोऽथवेक्ष्यते ॥४२५॥**

अत्रोच्यते—'आकृतिवादिनो मते प्रतिकृतिप्रतिमाचित्रादिमृद्गवकादिषु गवादिव्यपदेशा मुख्या एवेति न गौणतां विगाहन्ते। न हि तत्र गौणताहेतुः सादृश्यं परिस्फुरति। शुक्तिकारज्जुमृगतृष्णादिषु विपर्ययज्ञानतो य एते रजतोरगजला-दिव्यपदेशाः, तेऽपि भ्रान्तिमुख्यत्वेन तत्तद्भावापत्तयो न गौणाः। यतः—

**अत्यन्तविपरीतोऽपि यदा[2] योऽर्थोऽवधार्यते।**
**यथासम्प्रत्ययं शब्दस्तत्र मुख्यः प्रयुज्यते ॥४२६॥** (वाप. २.२८५)

आचार्याश्च पूर्वेऽपि सर्वत्र तुल्यमेव शब्दस्य प्रवृत्तिनिमित्तं भवितुमर्हतीति मन्यमाना बुद्धिप्रतिभासमात्रेणैव शब्दस्यार्थेषु प्रवृत्तिं मन्यन्ते। तद्यथा—

---

१. त HOS  २. था HOS

**सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।**
**भेदानध्यवसाये शुक्तावपि तादृशी स्फुरति ।।४२७।।**

अलातचक्रादिषु च त्रिषु चक्रमिव चक्रमायुधमिवायुधं नगरमिव नगरमित्यवयवशब्दानां यद्यपि गौणत्वं घटते, तथापि समुदायशब्दानामेतेष्वेवार्थेषु स्वरूपासङ्गाद् मुख्यत्वमेव।

**[१]अग्नीषोमादयः शब्दा ये स्वरूपपदार्थकाः ।**
**संज्ञिभिः संप्रयुज्यन्ते तेषां सर्वत्र मुख्यता ।।४२८।।**

**अग्निदत्ते[२] तु योऽग्निस्स्यात् तत्र स्वार्थोपसर्जनः ।**
**शब्दो दत्तार्थवृत्तित्वाद् गौणत्वं प्रतिपद्यते ।।** (वाप. २.२८१–२८२)

एवं गन्धर्वनगरादयोऽपि यदा दृष्टनष्टादिपदार्थेषु तत्साधर्म्यात् प्रयुज्यन्ते तदा गौणा भवन्ति। प्रतिबिम्बेषु यदादर्शादिप्रतिहतनयनरश्मिना स्वमुखादय एव दृश्यन्ते तथापि न गौणत्वम्, अपि तु देशान्तरावस्थानेन प्रतिभासाद् भ्रान्तिमुख्यत्वमेव; अर्थान्तरमेव च्छायारूपमुत्पद्यते; तस्य प्रतिबिम्बं मुखच्छायेति व्यपदेशे मुख्यत्वं, मुख्यमित्यादौ तु गौणत्वं भवति। कर्णक्ष्वेडायामपि यदा श्रोत्रेन्द्रियस्य बहिर्वृत्ति निरोधाज्जाठराग्निपच्यमानान्नरसादिशब्दः श्रूयते, अनाहताख्यं वा शब्दब्रह्मोन्मिषति, तदा तयोः घोषव्यपदेशो मुख्य एव।

किं पुनरनाहताख्यं शब्दब्रह्म?

उच्यते– 'शब्दब्रह्मणश्चतस्रोऽवस्थाः, **वैखरी, मध्यमा, पश्यन्ती, सूक्ष्मेति**। तत्र

## (वैखरी)

येयं स्थानकरणप्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायात्मिका वाक् सा **वैखरी**। तत्र विशिष्टं खं सुखमिति दुःखमिति वा राति प्रयच्छतीति विखरो देहेन्द्रियसङ्घातः। तथा च श्रुतिः, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत' (छान्दो. उ. ८.१२.१) इति। तत्र भवा वैखरी।

---

१. यथा ह्यग्न्य J. त(य)था ह्यग्न्या HOS, अग्निसोमा
२. 'अग्निदत्तस्तु' HOS,

**(मध्यमा)**

या पुनरन्तस्सञ्जल्परूपा क्रमवती श्रोत्रग्राह्यवर्णाभिव्यक्तिरूपा सा **मध्यमा**।

**(पश्यन्ती)**

या तु वर्णविभागाभावादक्रमा स्वयंप्रकाशा च सा **पश्यन्ती**।

**(सूक्ष्मा)**

या पुनरनाद्यविद्यावासनोपप्लवमानशब्दार्थभेदरहितावबोधरूपब्रह्मशब्दवाच्या स्वरूपज्योतिरेवात्मनोऽन्तरनपाया प्रकाशते सा **सूक्ष्मा**। तदुक्तम्—

**स्थानेषु विधृते वायौ वृत्तवर्णपरिग्रहा ।**
**वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ।। ४३० ।।**

**केवलं बुद्ध्युपादानक्रमरूपानुपातिनी ।**
**प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ।। ४३१ ।।**

**अविभागा तु पश्यन्ती सर्वत: संहृतक्रमा ।**
**स्वरूपज्योतिरेवान्त: सूक्ष्मा वागनपायिनी ।।** (वाप.वृ १.१४३ पृ. २१५)

श्रुतिरप्याह—

**चत्वारि वाक् परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिण: ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मुनष्या वदन्ति ।। ४३३ ।।** (ऋवे. १.१६४.४५)

तत्र गुहाशयेषु त्रिषु यदेतत् सूक्ष्मेति गीयते ते तदनाहतमित्यामनन्ति। एवमालोकाभावेऽन्धकार इति प्रतीतेर्विपर्ययज्ञानत्वाच्छुक्तिकादौ रजतादिबुद्धेरिव भ्रान्तिमुख्यत्वमेव न गौणता।

ननु चोत्तरकालभाविना सम्यग्ज्ञानेन यस्य बाध:, तदेव विपर्ययज्ञानम्; अन्धकारे तु तदभावात् कथमिवैतद्युज्यते?

तत्र हीदमीदृशम्, अल्पं बहु, बहुलमच्छं, गच्छति तिष्ठति, उत्पद्यते विनश्यत्यर्थक्रियां करोतीति वस्तुधर्मनिबन्धनेन देशकालपुंविशेषेषु सर्वेष्वाबाध्यमानो प्रत्ययव्यपदेशो दृश्यते। तथा हि यत्तदानीं गिरिगुहास्वपि तम: अतसी—कुसुमश्याममासीत् तदानीमुपवनेष्वप्यञ्जनचयप्रौढं वर्तते, सम्प्रत्याच्छादिता दिश:

सन्तमसेनेति यादृगेतत् तत्रैकदा प्रतीतिस्तादृगन्यत्रान्यदापि, यादृगेकस्य तादृगन्यस्यापि परिदृश्यते। आलोकोत्पत्तावपि विनष्टं तम इति प्रतीतिर्, न पुनर्मिथ्यैतदिति।

किमस्याः प्रतीतेः कारणमिति चेद्, व्यवहिततमःप्रतिभासे विस्फारिते चक्षुषि दर्शनात्, तदभावे चादर्शनात्। तदेवात्र कारणम्। चक्षुष्मन्तो हि तमसि निलीयन्ते, तमः परिहरन्तोऽन्येन पथा वा गच्छन्ति।

ननु निमीलिताक्षस्यापि तमःप्रतिपत्तेर्न चक्षुषः कारणत्वम्।

अत्रैके वर्णयन्ति– निमीलिताक्षस्य बहिर्वृत्तिनिरोधादन्तःसंविलीनेन्द्रियवृत्तिः पक्ष्मणोरेव छायां गृह्णातीति।

न च गोलकशौक्ल्यस्यापि ग्रहणमस्ति, सामीप्यात्। अन्धस्यापि च तमः–प्रतिपत्तेर्नैतदेवमिति चेत् तन्न जानीमः। त एवात्र प्रष्टव्याः।

अन्ये त्वाहुः यथा विस्फारिताक्षस्येदमिदमीदृशं चेति स्पष्टरूपतयावगतिः, नैव निमीलिताक्षस्य, तस्य न किंचित्पश्यामीति, प्रतिपत्तिप्रत्यस्तमयात्। यद्यपि चात्र प्रतिभासः, तथापि निमित्तपर्यालोचनया तस्य मिथ्यात्वे, अन्धस्य किमायातम्? न हि स्वप्ने रजतज्ञानमिथ्यात्वेऽन्यदापि रजतज्ञानं मिथ्या भवितुमर्हति। अत एव चोन्मीलिताक्षस्य बाधकं विज्ञानमुत्पद्यते, न पुनस्तमसीति।

मूर्तद्रव्यच्छाया च तमः; पार्थिवं हि द्रव्यं यस्यां दिश्यालोकस्तदन्यतः छायामारभते। सा च सर्वैरपि वस्तुत्वेन प्रतीयते, व्यपदिश्यते च इयं छाया गम्यताम्, अस्यां छायायामुपविशामः, छाया मधुरशीतलेति। तदेवमखिलवस्तु–साधर्म्येणैव चक्षुषोपलक्ष्यमाणे कृष्णरूपे तमसि कथमभिधीयते न तमो नाम किंचिद् वस्तुरूपमस्तीति?

उच्यते–'अस्त्येतत्, किंतु युक्त्या न संगच्छते। तथा हीदं तम इति साक्षात्कारेण प्रतिभासाल्लिङ्गादन्य एवायम्।

यदि परं प्रत्यक्षमेतद् विज्ञानं स्यात्?

तत्तु त्रेधा–आत्मप्रत्यक्षं मनःप्रत्यक्षमिन्द्रियप्रत्यक्षं चेति। तत्र विनैव ग्राहकान्तरमात्मनो यदपरोक्षलक्षणं विज्ञानं **तदात्मप्रत्यक्षम्**। तच्चानुभवस्येव स्वप्रकाशतया वा स्याद्, विषयस्येव अनुभूयमानतया (वा)। न तावत् स्वप्रकाशतया,

तमसोऽनुभूयमानत्वेन प्रतिभासात्। नाप्यनुभूयमानतया, विनैवेन्द्रियैरयोगिनो विषये ग्रहणायोगात्।

केवलमनस्सहायस्यात्मनो यद्विज्ञानं **तन्मनःप्रत्यक्षम्**; तदप्यन्तरनुभूयमान–सुखदुःखादिविषयं वा स्यात्, बहिरनुभूतप्रियस्रगादिविषयं वा। न तावदान्तरम्, इदमिति बहीरूपतया तमसः प्रतिपत्तेः। नापि बाह्यम्, इन्द्रियान्तरनिरपेक्षस्य मनसो बहिर्विषयेषु ग्रहणासामर्थ्यात्।

इन्द्रियार्थमनस्सन्निकर्षजमात्मन एव यद्विज्ञानं **तदिन्द्रियप्रत्यक्षम्**। तत्र च चक्षुरेव रूपं गृह्णातीति नियमः। न चैतच्चक्षुषैव गृह्यते, निमीलिताक्षस्यापि कृष्णरूपतमःप्रतिभासात्।

निमीलिताक्षस्य न किंचित् पश्यामीति प्रतिपत्तिप्रत्यस्तमय इति चेत्,

तन्न। किमक्षिणी निमील्यान्धकारं करोषीत्यादिप्रवादानामुपलब्धेः।

ननु च यदि चक्षुरिदं विज्ञानं नाधिगच्छति तद् वरमिन्द्रियान्तरकल्पना, न पुनरुपलब्धस्यापलापः?

तन्न। कृष्णरूपग्राहकेन्द्रियान्तरकल्पनायामचक्षुषोऽपि रूपोपलब्धिप्रसङ्गात्। तस्य तमस्येव शक्तिरिति चेत् रूपाविशेषे कोऽत्र व्यवस्थाहेतुः? ततश्च दूरस्थिततमोदर्शिनां निमीलिताक्षाणामपि तद्दर्शनप्रसङ्गः। विस्फारिते च चक्षुषि चक्षुषा पश्यामीति प्रतीतेरप्रसङ्गः। न च क्वचिदपि प्रवादे मनसोऽन्यत् षष्ठमिन्द्रियं दृश्यते।

## (छाया + तमःपदार्थ)

यत्र तन्निमीलिताक्षपक्ष्मच्छायायां गृह्णातीति, तदाचष्टामायुष्मान् केयं छाया नामेति?

ननूक्तं पार्थिवं द्रव्यं यस्यां दिश्यालोकस्तदन्यतश्छायामारभते।

तन्न, तस्यास्तदारब्धत्वे तद्गुणयोगप्रसङ्गात्। ततश्च रूपमनेकप्रकारं शुक्लादि। रसः षड्विधो मधुरादिः। गन्धो द्विविधः सुरभिरसुरभिश्च। स्पर्शोऽनुष्णाशीतत्वे सति पाकजः। 'सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवताऽद्भिस्सामान्यम्' (वै.सू. २.१.१) इति नैमित्तिकद्रवत्वम्, अन्येऽपि च गुरुत्वकठिनत्वादयः पृथिवीधर्माः छायायां प्रसज्येरन्।

कथं तर्हि छाया आगच्छति, अस्यां छायायामुपविशामः, छाया मधुरशीतलेति च व्यपदेशो भवति?

उच्यते—'यत्र यत्र चारकद्रव्येण तेजःप्रसरो निरूप्यते तत्र तत्र तेजोद्रव्याभावे छायेति विपर्ययप्रतीतेरुदयः। छाया मधुरशीतलेति तस्यामेवोपचरितो व्यवहारः। यथा— 'आनन्दो ब्रह्मणो रूपम्' (न्यायभूषणम्) इति। एतेनैतदपि निरस्तम्। तस्य मिथ्यात्वेऽन्यस्य किमायातमिति। उक्तन्यायेन द्वयोरपि मिथ्याप्रत्ययत्वात्। यदि ह्यमिथ्यैव तमो नाम वस्तुविशेषः स्यात् तदालोकसद्भावे ऽप्यन्यवस्तुवद् गृह्येत।

विरोधित्वादालोकस्य तदग्रहणमिति चेत् किमस्य विरोधिनालोकेन क्रियते,

तिरोधानम्, अपसारणं, विनाशो वा?

न तावत् तिरोधानं, रूपवस्तुग्रहणे तस्यानुग्राहकत्वादतोऽन्यनीलद्रव्यवदालोके सुतरां तमसोऽपि ग्रहणप्रसङ्गः। यदि च विद्यमानमेव तमस्तिरोधीयते तस्य पदार्थाच्छादकस्वभावत्वात् तमसीवालोकेऽपि न कश्चित् कञ्चनापि पश्येत्। तमसा हि सर्वे पदार्थाः पिहितास्तमोऽप्यालोकेनेति।

न चोपलभ्यमानानामेव तिरोधायकत्वं, शब्दतिरोधायकेषु स्तिमितेषु वायुषु रूपपिधायकेषु पटलादिषु च व्यभिचारात्।

अथापसारणम्?

तदपि न; प्रदीपार्चिषान्तर्गृहमपसारिते तमसि बहिरन्धकारप्रसङ्गात्।

नापि विनाशः, आलोकेन हि विनाशिते आलोकापसारसमनन्तरमुत्पत्ति-कारणाभावे कुतस्तमसामुपलब्धिः?

न चालोकाभाव एव कारणम्, अभावस्य शून्यरूपत्वेन अनाकारकत्वात्। न चान्यदुत्पादे कारणं पश्यामः।

नन्वेवमालोकाभावमात्रमेव तम इति स्यात्।

नैवम्; न ह्यलोकाभाव एवात्र गृह्यते, अभावस्याप्रमेयत्वात्। आलोकज्ञानप्रत्यस्तमयमात्रादेव चालोकाभावव्यवहारसिद्धेः। यदि वात्राभावः प्रतिभासत इत्युच्यते, ततो यस्याभावो यत्र चाभावस्तत्पदार्थद्वयपुरस्सरमत्र प्रतिभासेन

भवितव्यम्, अनवच्छिन्नस्याभावस्याप्रतिपत्तेः। न च तमसि गृह्यमाणे नियमेनालोक-स्मरणम्, अस्मर्यमाणस्य न व्यवच्छेदकत्वम्। प्रतिभासानुगुणं चालम्बनं परिकल्प्यते, न चाभावस्यातद्रूपस्य कृष्णरूपविशेषावभासिन्या तमस्सञ्चित्यानुगुण्यमस्ति।

अपि चास्मिन् पक्षे आलोकाभावपर्यायता तमश्शब्दस्य। ततश्च हस्तकरशब्दयोरिव तदर्थप्रतिभासभेदो न स्यात्। तस्मान्न किंचिदनुगृह्यते। किन्त्वग्रहण एवायं ग्रहणाभिमानः, मिथ्याज्ञानस्य विपर्ययस्वरूपत्वात्। आह च विपर्ययोदाहरणं **प्रशस्तपादः** 'व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरतलमञ्जनचूर्णपुञ्जश्यामलं शार्वरं तम' (प्रपाभा.) इति।

नन्वेवमन्धकारप्रतीतेर्विपर्ययत्वे विपर्ययात्मिकायास्तद्भावापत्तेरिदमुदाहरणं युज्यते, न तु प्रवादात्मिकायाः। प्रवादात्मिकायां त्विदमुदाहृतं पुरस्तात् (शृप्र. ३५७)।

तद्यथा— (शृप्र. ३५७)

**गन्धर्वपुरसुरायुधकुरङ्गतृष्णान्धकाररूपाणि ।**
**असतामसत्यदुर्ग्रहदुरापमलिनानि वृत्तानि ।।४३४।।**

उच्यते—(वाप. २.२९६)

**देशकालेन्द्रियगतैर्भेदैर्यद् दृश्यतेऽन्यथा ।**
**यथा प्रसिद्धिर्लोकस्य तथा तद्व्यपदिश्यते ।।४३५।।**

तत्र प्रसिद्धार्थविपर्ययहेतुभ्यो मद्यविषपानमरुदेशावस्थानादिभ्यः प्रसिद्धा-कारेष्वर्थेषु दर्शनविपर्यासो जायते। निशायां रक्तकम्बलहस्तिवनादिषु वर्णप्रमाण-संहत्यादिभेदो दृश्यते। तिमिरोपघात–काच–कामलादिभ्यः केशोण्डुकद्विचन्द्रा-दिष्वयथार्था प्रतीतिरुदयते। अर्धनिमीलिते चक्षुषि रूपभेदप्रतिपत्तिर्भवति। भ्रमणावस्थाननौयानादिषु च पृथिवीपर्वतादीनामन्यथाक्रमः उपलभ्यते। कारणापगमे च पुनर्यथार्थैव प्रतिपत्तिरुदेति। तत्र सन्देहे सति यद्यत् समधिगतनिमित्तमन्यत्राविपर्यये दृष्टसामर्थ्यं प्रसिद्धं **लोको हि सर्वेषां विदुषामविदुषां च व्यवहारव्यवस्था-हेतुरलङ्घनीयः प्रमाणम्**। तदतिक्रमात् सर्वत्र वैरस्यं लभते। लोके च केशोण्डुकद्विचन्द्रशुक्तिकारजतादीनामेव विपर्ययत्वेन प्रसिद्धिः,गन्धर्वनगरेन्द्रायुधमृग-तृष्णान्धकारादीनां विपर्ययत्वेऽपि वा गन्धर्वनगरादिप्रवादोऽभ्यधिकं रूपमेतेषामिति।।

तदेतद् दोषहानं च गुणोपादानमेव च ।
ज्ञात्वा कुर्वन् कविः काव्यं प्रेत्य चेह च नन्दति ॥४३६॥

निर्दोषं गुणवद् यस्य सालङ्कारं रसान्वितम् ।
सतां वसति चेतस्सु वचः स दिवि मोदते ॥४३७॥

इत्येष दोषपरिवर्जनया गुणाना–
मावर्जनेन च किलोभयथान्तरङ्गः ।
काव्ये यथायथमलङ्कृतियोग उक्त–
स्तत्रैव बाह्यमथ तं क्रमशोऽभिधास्ये ॥४३८॥

इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे
दोषहानगुणोपादानप्रकाशो नाम
॥ नवमः प्रकाशः ॥९॥

दर्शनान्तरगोक्षीरमिदं भोजोपपादितम् ।
साहित्यतत्त्वजिज्ञासुष्वलं दृगुपशोधने ॥



अथ

## शृङ्गारप्रकाशे दशमः प्रकाशः

शब्दार्थोभयालङ्कारप्रकाशो नाम

### *(११. अलङ्कारयोगः)*

अथ अपास्तदोषस्य उपात्तगुणस्य च काव्यशरीरस्य चारुत्वोत्कर्षसिद्धये प्राप्तकालः अलङ्कारयोग उच्यते। यतः—

**दीर्घापाङ्गं नयनयुगळं भूषयत्यञ्जनश्रीः**
**तुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः ।**
**मध्यक्षामे वपुषि लभते स्थाम कूर्पासलक्ष्मीः**
**श्रोणीबिम्बे गुरुणि रशनादामशोभां बिभर्ति ॥१॥**

अलङ्काराश्च त्रिधा— बाह्याः, आभ्यन्तराः, बाह्याभ्यन्तराश्च। तेषु —

**बाह्या** वस्त्रमाल्यविभूषणादयः।

**आन्तरा** दन्तपरिकर्मनखच्छेदालककल्पनादयः।

**बाह्याभ्यन्तराः** स्नानधूपविलेपनाञ्जनमुखवासताम्बूलोपयोगादयः शरीरे।

काव्यशरीरेऽपि —

१. वस्त्रमाल्यभूषणादिस्थानीया जात्यादयः **शब्दालङ्काराः**।

२. दन्तपरिकर्मादिस्थानीयाः स्वभावाख्यानादयः **अर्थालङ्काराः**।

३. स्नानधूपविलेपनादिस्थानीया उपमादयः **उभयालङ्काराः** बाह्याभ्यन्तरोभयालङ्कारव्यपदेशं लभन्ते।

### (१. शब्दालङ्काराः —२४)

ये शब्दमेव व्युत्पत्त्यादिना भूषयन्ति ते शब्दालङ्काराः चतुर्विंशतिः —

**'जातिः, गतिः, रीतिः, वृत्तिः, रचना, घटना, मुद्रा, छाया, युक्तिः, उक्तिः, भणितिः, पठितिः, श्रव्यत्वं, प्रेक्ष्यत्वम्, अभिनेयत्वम्, अध्येयत्वं, वाकोवाक्यं, प्रश्नोत्तरं, प्रहेलिका, गूढं, चित्रं, श्लेषः, यमकम्, अनुप्रास'** इति। तेषु —

(१. जातिः —६)

**संस्कृतप्राकृतादिर्जातिः।** सा षोढा—

शुद्धा, मिश्रा, सङ्कीर्णा, साधारणी असाधारणी, अपभ्रष्टा चेति। तत्र —

**शुद्धा** यथा—

**स एष भुवनत्रयप्रथितसंयमशशङ्करो**
**बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।**
**अनेन किल निर्जिता वयमिति प्रियायाः करं**
**करेण परिताडयन् जयति जातहासः स्मरः ।। २।।**

**मिश्रा** यथा—

**इति स्तुतगुणः शिवो हरिविरिञ्चिनारायणैः**
**करोतु भवतां विभुर्भवसमुद्रपोतायितम् ।**
**उमाअ उवणे उवो सअलकज्जकल्लाणिणी**
**सिवा सिवपरा परं परममङ्गला मङ्गलम् ।। ३।।**

**सङ्कीर्णा** यथा—

**अकट—गुमटी चन्द्रज्योत्स्ना कलं किल कोइलो**
**लवइ अ मुहुर्याम्यो वायुर्निवाअर वाइ अ ।**
**अवि सखि अला रक्ताशोकस्तवापि मनोमुदे**
**नकजनकजं मानेनाद्य प्रियं प्रति जाहुदा ।। ४।।**

(अहो मनोज्ञा चन्द्रज्योत्स्ना कलं किल कोकिलो
लपति च मुहुर्याम्यो वायुः निर्वारको वाति च ।
अपि सखि आगतो रक्ताशोकस्तवापि मनोमुदे
नार्थोनार्थ मानेनाद्य प्रियं प्रति यामः ।।)

**साधारणी** यथा—(रुद्रट. ४.२१)

**क्रीडन्ति प्रसरन्ति मधु कमलप्रणयि लिहन्ति ।**
**भ्रमरा मित्र सुविभ्रमा मत्ता भूरि रसन्ति ।।५।।**

**असाधारणी** यथा—

**भीष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते ।**
**गोसे तिविञ्छिरिच्छोली तल्ल तूहे विवल्लिदा ।। ६।।**

**अपभ्रष्टा** यथा–

**मुद्धे गहणअ गेण्हउ तं धरि मुद्दं णिए हत्थे ।**
**णिच्चउ सुन्दरि तुह उवरि मम सुरअप्पहा अत्थि ।।७।।**
(मुग्धे ग्रहणकं (रतमूल्यं) गृहाण त्वं धारय मुद्रां निजे हस्ते ।
निश्चयः सुन्दरि तवोपरि मम सुरतस्पृहा अस्ति ।।)

अस्या अपि ह्यनुकरणे साधुत्वमिष्यते।।

(२. गतिः –६)

**गद्यपद्यमिश्रादिर्गतिः**। सा षोढा–

द्रुता, मध्या, विलम्बिता, द्रुतमध्या, द्रुतविलम्बिता, मध्यविलम्बितेति। तत्र–

पद्ये **द्रुता** यथा–

**अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु! वल्लभम् ।**
**अरुणकरोद्गम एष वर्तते वरतनु! सम्प्रवदन्ति कुक्कुटाः ।।८।।**

**मध्या** यथा–

**आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।**
**प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ।।९।।**

**विलम्बिता** यथा– (प्रप्राभा. मङ्गलश्लोकः)

**प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।**
**पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ।।१०।।**

**द्रुतमध्या** यथा–(रघु. ९.६७)

**अथ तुरगसमीपादुत्पतन्तं मयूरं**
**न स रुचिरकलापं बाणलक्ष्मीचकार ।**
**सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे**
**रतिविगलितबन्धे केशपाशे प्रियायाः ।।११।।**

**द्रुतविलम्बिता** यथा–

**अवतु वः सवितुस्तुरगावली समभिलङ्घिततुङ्गपयोधरा ।**
**स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभःश्रियः ।।१२।।**

**मध्यविलम्बिता** यथा–(राच. ११.११६)

**दुन्दुभयो दिवि दध्वनुरुच्चैरुच्चकराः कपयश्च ववल्गुः ।**
**सिद्धनिकायकराब्जविमुक्तं माल्यमथाङ्गदमूर्ध्नि पपात ।।१३।।**

एवं गद्येऽपि लघुगुरुमिश्रवर्णविन्यासभूयस्त्वेन द्रुतविलम्बितमध्यादिगतयो गवेषणीयाः।।

(३. रीतिः –६)

**विदर्भादीनां वाक्यरचनावर्त्म रीतिः।** सा षोढा–

वैदर्भी, पाञ्चाली, गौडीया, आवन्तिका, लाटीया, मागधी च। तासु –

असमस्तपदा **वैदर्भी**, यथा–(कुसं. ५.४)

**मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।**
**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ।।१४।।**

समस्तपञ्चषपदा **पाञ्चाली**, यथा–

**गात्राभिघातदलिताङ्गदजर्जराणां गण्डस्थलीलुठितकुण्डलताडितानाम् ।**
**क्षोभस्फुटन्मुकुटकोटिविघट्टितानां नादोऽभवज्झणझणामुखरो मणीनाम् ।।१५।।**

यथाशक्ति समस्तपदा **गौडीया**, यथा–

**यस्यावस्कन्दलीलाचलितबलपरिस्पन्दखर्वीकृतोर्वी–**
**संरम्भस्तम्भनाग्रोन्नमितभरनमत्कन्धरासन्धिरासीत् ।**
**शेषो विस्फारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग–**
**स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नखण्डः ।।१६।।**

वैदर्भादीनामन्तरालरीति**रावन्तिका**, यथा

**एतानि निस्सहतनोरसमञ्जसानि**
**शून्यं मनः पिशुनयन्ति पदानि तस्याः ।**
**एते च मार्गतरवः प्रथयन्ति ताप–**
**मालम्बितोज्झितपरिग्लपितैः प्रवालैः ।।१७।।**

मिश्ररीति**र्लाटीया**, यथा–

**अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।**
**विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ।।१८।।**

खण्डरीति**र्मागधी**, यथा–

**करिकबलनशिष्टैः शाखिशाखाग्रपत्रैररुणसरणयोऽमी सर्वतो भीषयन्ते ।**
**चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः ।।१९।।**

(४. वृत्तिः –६)

**विकासविक्षेपविस्तरसङ्कोचेषु चेतसो वर्त्तयित्री वृत्तिः**। सा षोढा–

कैशिकी, आरभटी, भारती, सात्वती, मध्यमारभटी, मध्यमकैशिकी च। तासु सुकुमारसन्दर्भार्था **कैशिकी**, यथा–

**शशिरुचिषु दलेषु नागवल्ल्या विचकिलदामनि चन्दने च हृद्ये ।**
**कुवलयिनि पुराणसीधुपात्रे तरलदृशामपतन् दृशः प्रिये च ॥ २०॥**

प्रौढसन्दर्भार्था **आरभटी**, यथा–(पृ. ३४१ (वेसं. ३.३२) )

**'यो यश्शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्'** इत्यादि।

सुकुमारेऽर्थे नातिप्रौढसन्दर्भा **भारती**, यथा–(वेसं. १.३)

**उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा**
**धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः ।**
**भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः**
**शय्यामालम्ब्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ २१॥**

प्रौढेऽर्थे नातिसुकुमारसन्दर्भा **सात्वती**, यथा–

**वन्द्यौ द्वावपि तावनार्यचरितप्राप्तप्रतिष्ठोदयौ**
**भीमो भीमपराक्रमः स च मुनिर्भास्वत्कुठारायुधः ।**
**एकेनामृतवद् विदार्य करजैः पीतान्यसृञ्जि द्विषा–**
**मन्येनापि हताहितास्रसरसि स्नातं क्रुधः शान्तये ॥ २२॥**

सुकुमारेऽर्थे प्रौढोक्तिः **मध्यमकैशिकी**, यथा–

**किं द्वारि दैवहतिके! सहकारकेण**
**संवर्धितेन विषपादप एष पापः ।**
**अस्मिन् मनागपि विकासविकारभाजि**
**भीमा भवन्ति मदनज्वरसन्निपाताः ॥ २३॥**

प्रौढेऽर्थे सुकुमारोक्तिर्**मध्यमारभटी**, यथा–(कामी.)

**त्वं नागराज! बहुशोऽस्य नितम्बभागं**
**भोगेन गाढमभिवेष्ट्य मन्दराद्रेः ।**
**सोढाविषह्यवृषवाहनयोगलीला–**
**पर्यङ्कबन्धनविधेस्तव कोऽतिभारः ॥ २४॥**

(५. रचना –६)

**यथावच्छब्दार्थयोर्निवेशो रचना।** सा षोढा –

शब्दरचना, अर्थरचना, पर्यायरचना, पदरचना, वाक्यरचना, क्रमरचना चेति। तासु–

**शब्दरचना** यथा–

**तवाभिषेके मदनातुराया हस्ताच्च्युतो हेमघटो युवत्याः ।**
**सोपानमासाद्य करोति शब्दं टटं टटटं टटटं टटंटम् ॥ २५॥**

**अर्थरचना** यथा–

**दिक्कालात्मसमैव यस्य[१] विभुता, [२]यस्तत्र विद्योतते,**
**यत्राऽमुष्य सुधीभवन्ति किरणा[३], राशेः स यासामभूत्[४] ।**
**यस्तत्पित्तमुषःसु[५] यश्च [६]हविषे, यश्चास्य* जीवातवे[७]**
**वोढा यद्गुणमेष[८] मन्मथरिपोस्ताः पान्तु वो मूर्त्तयः ॥ २६॥[१]**

**पर्यायरचना** यथा–

**कणइल्लि च्चिअ जाणइ कुंतपलप्पाइ कीरसंलवइ ।**
**पूसअभासं मुंचसु ण हु रे हं धव्ववाआढी ॥ २७॥**
(शुक्येव जानाति शुकप्रलपितानि कीरसंलापिनि !
कीरभाषां मुञ्च न खलु रे अहं धृष्टशुकी ॥)

**पदरचना** यथा–(कामी.)

**लोलल्लाङ्गूलवल्लीवलयितवकुलानोकहस्कन्धलोलै–**
**र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।**
**खण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला–**
**मालम्ब्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥ २८॥**

**वाक्यरचना** यथा–

**पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे ।**
**मध्यमेषु च पाञ्चाल्याः त्रितयं त्रितयं त्रिषु ॥ २९॥**

---

१. व्योम २. सूर्य ३. चन्द्रः ४. आपः ५. अग्नि ६. यजमानः ७. वायुः ८. पृथिवी ।
* ज्योशेरावघयोस्तु पाठः– **यत्तत्पित्तमुषः स यस्य हविषे** द्र.स.क. २.५३ उ. रत्नेश्वरः।

**क्रमरचना** यथा–

**नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः**
**कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार ।**
**भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्**
**वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ।। ३० ।।**

(६. घटना –६)

**पदार्थानां परस्परमुपश्लेषो घटना ।** सा षोढा–
प्रक्रान्तघटना, अप्रक्रान्तघटना, अतिक्रान्तघटना, पदघटना, वाक्यघटना, प्रकीर्णघटना चेति। तासु –

**प्रक्रान्तघटना** यथा–(कुसं. ६.३)

**स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।**
**ऋषीञ् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ।। ३१ ।।**

**अप्रक्रान्तघटना** यथा–

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**निषादस्य च संवादमृषेः संवरणस्य च ।। ३२ ।।**

**अतिक्रान्तघटना** यथा–(राच.१.१८)

**तस्य चक्रुश्चमत्कारं व्यतीतसमया अपि ।**
**स्मितार्द्रमुकुलोद्भेदाः कदम्बवनराजयः ।। ३३ ।।**

**पदघटना** यथा–

**छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते ।**
**स्वेति हेति हरेणोक्तेः स्वाहाऽऽसीत् सैष रावणः ।। ३४ ।।**

**वाक्यघटना** यथा–(विक्र.४.३३)

**हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।**
**विभावितैकदेशेन देयं यदभियुज्यते ।। ३५ ।।**

**प्रकीर्णघटना** यथा–(माघ. ३.७४)

**साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।**
**तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान् पिबतो ददर्श ।। ३६ ।।**

(७. मुद्रा –६)

**साभिप्रायवचनविनिवेशो मुद्रा।** षोढा–

पदमुद्रा, विभक्तिमुद्रा, वचनमुद्रा, वाक्यमुद्रा, समुच्चयमुद्रा, संवृतिमुद्रा चेति। तासु

**पदमुद्रा** यथा–(बारा. १.४०)

**निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी**
**भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः।**
**सङ्गीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः**
**सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥ ३७॥**

**विभक्तिमुद्रा** यथा–(विसा. १.८)

**श्रियः प्रसूते विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि।**
**संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ ३८॥**

**वचनमुद्रा** यथा–(उराच. १.९)

**विश्वम्भरा भगवती भवतीमसूत**
**राजा प्रजापतिसमो जनकः पिता ते।**
**तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां**
**येषां कुलेषु सविता च गुरुर्वयं च ॥ ३९॥**

**वाक्यमुद्रा** यथा–

**यत् स्वच्छे सलिलात्मनि प्रतिफलद्देवे त्रियामापतौ**
**पीयूषाकृति पर्यवस्यति किल ज्योत्स्नेति तत्त्वान्तरम्।**
**तिग्मं धाम चिरं चकास्ति दिवि यत् तत्रास्ति दिव्यः पुमान्**
**यं विज्ञातवतां त्रुटनित निखिला भूयो भवग्रन्थयः ॥ ४०॥**

**समुच्चयमुद्रा** यथा–(हव.)

**जातश्चायं मुखेन्दुस्ते भ्रुकुटीप्रणयी पुरः।**
**गतं च वसुदेवस्य कुलं नामावशेषताम् ॥ ४१॥**

**संवृतिमुद्रा** यथा–

**मणिरत्नं प्रसेनस्य तच्चानार्येण विष्णुना।**
**लब्धं येनाद्य योगेन तन किं कीर्तितेन वः ॥ ४२॥**

(८. छाया –६)

**अन्योक्तीनामनुकरणं छाया।** सा षोढा–

लोकोक्तिच्छाया, छेकोक्तिच्छाया, मुग्धोक्तिच्छाया, पोटोक्तिच्छाया, स्खलितोक्तिच्छाया, असमञ्जसोक्तिच्छाया चेति। तासु –

**लोकोक्तिच्छाया** यथा–(मेघ.१०७)

**शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ**
**मासानन्यान् गमय चतुरो लोचने मीलयित्वा।**
**पश्चादावां विरहगुणितं तं तमात्माभिलाषं**
**निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥४३॥**

**छेकोक्तिच्छाया** यथा–

**यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः।**
**कान्तामुखस्यावशगस्तस्मै नृपशवे नमः॥४४॥**

**मुग्धोक्तिच्छाया** यथा–

**किं स स्वर्गे तरुः कोऽपि यस्य पुष्पं निशाकरः।**
**ते वृक्षाः कीदृशा मातर्येषां मुक्ताफलं फलम्॥४५॥**

**पोटोक्तिच्छाया** यथा–

**तिलकमसहास्मि सोढुं घनसारेणातिसारदोषो मे।**
**लम्भयति च दौर्वर्ण्यं कुङ्कुमरागो ममाङ्गानि॥४६॥**

**स्खलितोक्तिच्छाया** यथा–

**पिपि प्रिय सस स्वयं मुमु मुखासवं देहि मे**
**तत त्यज दुदु द्रुतं भभभ भाजनं काञ्चनम्।**
**इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः**
**प्रगे हसितहेतवे सहचरीभिरध्यैयत॥४७॥**

**असमञ्जसोक्तिच्छाया** यथा–

**दृष्टः कथं सुतनु किं कुरुते किमस्मद्–**
**वार्तां स पृच्छति शृणोति निवेद्यमानाम्।**
**आस्तां किमस्य कथया कथयाशु ताव–**
**दत्रागमिष्यति न वा खलु सोऽभिमानी॥४८॥**

(९. युक्तिः –६)

**शब्दस्यार्थस्य वा परस्परमयुज्यमानस्य योजनं युक्तिः।** सा षोढा– पदविषया, पदार्थविषया, वाक्यविषया, वाक्यार्थविषया, प्रकरणविषया, प्रबन्धविषया चेति। तासु –

योगवृत्तिपरम्परा अङ्गाङ्गिभावपरम्परा पर्यायपरम्परेत्यादि। **पदविषया** यथा–(सूश.)

**जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणु ।**
**रक्ताः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य ॥४९॥**
**लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।**
**भक्तिप्रह्वाय दातुं मुकुलपुटकुटोकोटरक्रोटरक्रोडलीनाम् ॥५०॥** (सूश.)
**तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥५१॥** (माघ. ३.३३)

जातिक्रियागुणद्रव्याणां **युक्तिः, पदार्थविषया** यथा–

**स्त्रीपुंनपुंसमनघं भवमानतोऽस्मि ॥५२॥**
**शैलाधिराजतनया न ययौ न तस्थौ ॥५३॥** (कुसं. ५.८५)
**साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥५४॥** (मेघ. ८९)
**पायादेकं मदनविजयद्वेषिणस्तद् वपुर्वः ॥५५॥**

वाक्यगर्भो वाक्यसमुच्चयः वाक्यसंवृतिरित्यादिः **वाक्यविषया**, यथा–

**दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते** (द्र. ७.१४८)

क्रियासमुच्चयसमभिव्याहाराभ्यासादिभिः **वाक्यार्थविषया**, यथा–(माघ. १.५१)

**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।**
**विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥५६॥**

अश्रद्धेयपर्वतादिवर्णनोत्पत्तिहेतुः **प्रकरणविषया**, यथा–(माघ. ४.१०)

**मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।**
**भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥५७॥**

प्रबन्धव्यापिवस्तूपपत्तिहेतुः **प्रबन्धविषया**, यथा–(मेघ.५)

**धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघ–**
**स्सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।**
**इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे**
**कामार्ता हि प्रकृति(प्रणय)कृपणाश्चेतनाचेतनेषु ॥ ५८॥**

(१०. उक्तिः –६)

विधिनिषेधादेरभिधाम् **उक्तिः**। षोढा–

विधिः, निषेधः, अधिकारः, परिसङ्ख्या, विकल्पः, नियम इति। तेषु–

अप्राप्तौ प्रापणवचनं **विधिः**, यथा–(शाकु. ४.१८)

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने॥५९॥** इत्यादि

प्राप्तौ निवारणं **निषेधः**, यथा–(शाकु. ४.१८)

**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः॥६०॥**

विधिनिषेधयोग्यताधिकारः, यथा–(शाकु. ४.१८)

**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी।**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥६१॥**

विधिनिषेधाभ्यां शेषप्रतिषेधाभ्यनुज्ञाने **परिसङ्ख्या**, यथा–

**पञ्च पञ्चनखा भक्ष्या वामेनाक्ष्णा न पश्यति।**
**काठिन्यमस्याः कुचयोः किमसद्यन्न रोचते॥६२॥**

जातिक्रियागुणद्रव्येषु उभयावलम्बी **विकल्पः**, यथा–(मनु. ६.६)

**पुत्रेषु दारान्निक्षिप्य वनं गच्छेत् सहैव वा॥६३॥**
**धर्मार्थकामान् धर्मं वा ब्रह्म वा ब्राह्मणश्चरेत्॥६४॥**

अयोगान्ययोगात्यन्तायोगव्यवच्छेदो **नियमः**, यथा–

**विवादोऽपार्थ एवायं पार्थ एव धनुर्धरः।**
**यो न केवलमात्मीयैः परैरप्यभिनन्द्यते॥६५॥**

(११. भणितिः –६)

**उक्तेरेव प्रकारान्तराख्यानं भणितिः**। सा षोढा–

सम्भावनाभणितिः, असम्भावनाभणितिः, कल्पनाभणितिः, आश्चर्यभणितिः, संवृतिभणितिः, विशेषभणितिरिति। तासु –

**सम्भावनाभणितिः**–(विसा. ३.१४)

**सद्योद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती**
**येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्।**
**उत्सेक्या कलशीभिरञ्जलिपुटैः पेया मृणालाङ्कुरै–**
**र्मातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका॥६६॥**

**असम्भावनाभणितिर्**यथा—(विसा. १.२०)

**क्व पेयं ज्योत्स्नाम्भो वदनबिसवल्लीसरणिभि–**
**मृणालीतन्तुभ्यः सिचयरचना कुत्र भवति ।**
**क्व वा पारीमेयो बत बकुलदाम्नां परिमलः**
**कथं स्वप्नः साक्षात् कुवलयदृशं कल्पयतु ताम् ॥६७॥**

**कल्पनाभणितिः** यथा—

**दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च ।**
**सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवः स्वदते ॥६८॥**

**आश्चर्यभणितिर्**यथा—

**ज्योतिर्ध्र्यस्तदिदं तमस्समुदितं जातेऽयमद्भ्यश्शिखी**
**पीयूषादिदमुत्थितं विषमयं छायाप्तजन्माऽऽतपः ।**
**को नामास्य विधिः प्रशान्तिषु भवेद् गाढं द्रढीयानयं**
**ग्रन्थिर्यत् प्रियतोऽपि विप्रियमिदं सख्यः कृतं सान्त्वनैः ॥६९॥**

**संवृतिभणितिर्**यथा—(विक्र. २.३)

**आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।**
**उपमानस्यापि सखे! प्रत्युपमानं वपुस्तस्याः ॥७०॥**

**विशेषभणितिर्**यथा—(माघ. २.१६)

**रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ।**
**वहन् हली मदक्षीबः पानगोष्ठ्यां पुनातु वः ॥७१॥**

(१२. **पठितिः** —६)

**काक्वादिना वाक्योच्चारणं पठितिः।** सा षोढा—

काकुः, स्वरः, विच्छेदः, कान्तिः, अभिनयः, अपदेश इति। तासु—

**काकुर्**यथा—(वेसं. २.२०)

**न्यस्ता न भ्रुकुटिर्न बाष्पसलिलेनाच्छादिते लोचने**
**नीतं नाननमन्यतः सशपथं नाहं स्पृशन् वारितः ।**
**तन्व्या मग्नपयोधरं भयवशादाविद्धमालिङ्गितं**
**भङ्क्तास्या नियमस्य भीषणमरुन्नायं वयस्यो मम ॥७२॥**

**स्वरो** यथा–

**सुभ्रु! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां।।७३।।** (पृ.३६०)

**विच्छेदो** यथा–(ध्वन्यालोक २.२२/२३)

**येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः।।७४।।**

**कान्तिर्**यथा–(कीव.१.१०)

**यस्यारिजातं नृपतेरपश्यदवलम्बनम् ।**
**ययौ निर्झरसम्भोगैरपश्यदबलं वनम् ।।७५।।**

**अभिनयो** यथा–

**एद्दहमेत्तत्थणिआ।।७६।।** (पृ० ३६४)

**अपदेशो** यथा–

**इतः स दैत्यः प्राप्तश्रीः।।७७।।** (कुसं. २.५५)

**(१३. श्रव्यम् –६)**

**श्रुतिसुखमात्रजननं श्रव्यम्।** तत्षोढा–

आशीः, नान्दी, नमस्कृतिः, वस्तुनिर्देशः, ध्रुवा, आक्षिप्तिकेत्यादि। तत्र लिङ्लोड्वाच्योऽर्थविशेष **आशीः**, यथा–

**भूयाद् वः श्रेयसे देवः पार्वतीदयितो हरः ।।७८।।**
**पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ।।७९।।** (काव्याद. २.३५७)

रङ्गमङ्गलान्तस्वस्त्ययनं **नान्दी**, यथा–(कम. १.१)

**भद्दं भोदु सरस्सईअ कइणो णंदंतु वासाइणो**
**अण्णाणं पि परं पअट्ठदु वरा वाणी छइल्लप्पिआ ।**
**वच्छोमी तह माअही फुरदु णो सा किं अ पंचालिआ**
**रीदीयो विलिहंतु कव्वकुसला जोह्णं चओरा विअ ।।८०।।**

(भद्रं भवतु सरस्वत्याः कवयो नन्दन्तु व्यासादयः
अन्येषामपि परं प्रवर्ततां वरा वाणी विदग्धप्रिया ।
वैदर्भी तथा मागधी स्फुरतु नः सा किं च पाञ्चालिका
रीतिका विलिहन्तु काव्यकुशला ज्योत्स्नां चकोरा इव ।।)

स्तुतिर्नमोवाक्यं वा **नमस्क्रिया**, यथा–

**जयति ब्रह्मभूः शम्भुः।।८१।।**

**वन्देमहि महेश्वरम्॥८२॥**
**इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे॥८३॥** (उराच. १.१)

कथाशरीरव्यापिनो नायकादेरभिधानं **वस्तुनिर्देशः**, यथा—

**अस्त्युद्दामजटाभारभ्रान्तगङ्गाम्बुशेखरः।**
**आदिदेवो हरो नाम सृष्टिसंहारकारणम्॥८४॥**

पात्रप्रवेशादिसूचकं वाक्यं **ध्रुवा**, यथा

**मअ–वह–णिमित्त–णिग्गअ–मइन्द–सुण्णं गुहं णिएऊण।**
**लद्धावसरो गहिऊण मोत्तिआइं गओ वाहो॥८५॥**
(मृगवधनिमित्तनिर्गतमृगेन्द्रशून्यां गुहां निरूप्य।
लब्धावसरो गृहीत्वा मौक्तिकानि गतो व्याधः॥)

अभिधित्सितरागविशेषप्रयोगमात्रफलं वचनमा**क्षिप्तिका**, यथा—

**पअपीडिअमहिसासुरदेहेहिं भुअणभअलुआवअ/ससिलेहिं।**
**सुरसुहदेत्तवलिअधवलच्छिहिं जअइ सहासं वअणु महलच्छिहिं॥८६॥**
(पदपीडितमहिषासुरदेहाया भुवनभयलावकशशिलेखायाः।
सुरसुखदातृवलितधवलाक्ष्या जयति सहासं वदनं महालक्ष्म्याः॥)

**(१४. प्रेक्ष्यम् –६)**

**प्रेक्षानिमित्तं वाचिकाद्यभिनयरहितमाङ्गिकैकनिर्वर्त्यं प्रस्थानडोम्बलिकादिवाक्यं प्रेक्ष्यम्।** तत्षोढा— लास्यं, ताण्डवं, छलिकं, शम्या, हल्लीसकं, रास इति। तेषु शृङ्गाररसप्रधानं **लास्यं**, यथा—

**उच्चिउ वालीयिअ पन्थहिं जंतउ।**
**पेक्खमि हत्थं होइ जइ लोअणवंतउ॥८७॥**
(उच्चा पालिः प्रियः पथा याति।
प्रेक्षे हस्तो भवति यदि लोचनवान्॥)

रौद्रवीरप्रधानं **ताण्डवं**, यथा—

**सुअवहवइअरु णिसुणिउ दारुणु रोसविसट्ठपहाररुहिरारुणु।**
**जलिउ जाणइ णरु रिउसंतावणु अणलसरिच्छ जइ होइ महारणु॥८८॥**
(सुतवधव्यतिकरं निशम्य दारुणं रोषविसृष्टप्रहाररुधिरारुणः।
ज्वलितो जायते नरो रिपुसंतापनोऽनलसदृशो यदि भवति महारणः॥)

उभयात्मकं **छलिकम्**, यथा—

**णिसुणिउ पच्छा त्तुरअरउ भुण्डि हिंसि हसंति ।**
**णिअकंतडाढजुअलेहिं पुणु पुणु णअण वलंति ॥८९॥**

(निशम्य पश्चात्तुरगरवं शूकर्याः सहसा इति ।
निजकान्तदंष्ट्रायुगले पुनःपुनर्नयने वलतः ॥)

लास्यमेव देवकिन्नरविषयं **शम्या**, यथा—

**वीहेसि हरिमुहि अवि होहि मं गले लेहि सइ ।**
**कन्दइ रिठ्ठासुरमारिउ कण्ठवलिउ ण पइ ॥९०॥**

{बिभेषि हरिमुखि अपि भव मां गले गृहाण स्वयम् ।
क्रन्दति अरिष्टासुरो मारितः कण्ठवलितो न पतिःत्वया ॥}

**मण्डलेन हि यत् स्त्रीणां गीतं/नृत्यं हल्लीसकं तु तत् ।**
**तत्र नेता भवेदेको गोपस्त्रीणां हरिर्यथा ॥ ९१ ॥**

तद् यथा—

**चंदणधूसरअं आउलिअलोअणअं हासपरम्मुहअं णीसासकिलालिअं ।**
**दुम्मणदुम्मणअं सङ्कामिअमण्डणअं माणिणि आणणअं किं तु करठ्ठिअं ॥९२॥**

(चन्दनधूसरकमाकुलितलोचनं हासपराङ्मुखं निःश्वासक्लान्तम्।
दुर्मनसां दुर्मनस्कं संक्रामितमण्डनं मानिनि! आननकं किं तव करस्थितम्॥)

तदेव तालबन्धविशेषयुक्तं **रासः**, यथा—

**अइ दुम्मण दुम्मणआ अज्ज किणो पुच्छामि तुमं ।**
**जेण जिविज्जइ जेण विलासो पलिहिज्जइ कीस जणो ॥ ९३॥**

(अयि दुर्मनः दुर्मनस्क! अद्य किं नो पृच्छामि त्वाम् ।
येन जीव्यते येन विलासः परिह्रियते कस्माज्ज ॥)

(१५. **अभिनेयम्** –६)

**दशरूपकविषयमेव अभिनेयम्।** अभिनयस्तु षोढा—
आङ्गिकः, वाचिकः, आहार्यः, सात्त्विकः, सामान्यः, चित्र इति। तत्र

**आङ्गिको** यथा—(उरा. २.१०)

**दोर्दण्डाः क्व धृताङ्गदाः क्व नु शिरानद्धौ भुजौ द्वाविमौ**
**वक्त्राणि क्व नु कान्तिमन्ति वलिमत् क्वेदं ममैकं मुखम् ।**

वाचस्ताः क्व जितार्णवध्वनिघनाः क्वायं वचस्संयमो
हेलाकम्पितभूधरः क्व चरणन्यासः क्व मन्दा गतिः ॥ ९४॥

वाचिको यथा—(रत्ना. २.१)

दुर्वारां मदनशरव्यथां वहन्त्या तन्वङ्ग्या यदभिहितं पुरः सखीनाम् ।
तद् भूयः शिशुशुकशारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥ ९५॥

आहार्यो यथा—

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतः (उराच. ४.२०)

सात्त्विको यथा—(मामा. १.३५)

वारंवारं तिरयति दृशोरुद्वमन् बाष्पपूर—
स्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ९६॥

उक्तानां चतुर्णामपि प्रयोगे **सामान्यः**, यथा—(मामा. ५.३८)

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया—
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥९७॥

हस्ताध्यायपदाध्याययोः अकथिताङ्गिकाद्यभिनयविशेष**श्चित्रः**, यथा—)

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।
कथमिह न वयस्यस्तत् किमेतत् किमन्यत्
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥ ९८॥ (मामा.९.५४,१०.८)

(१६. अध्येयम् —६)

**विधिनिषेधव्युत्पत्तिहेतुरध्येयम्।** तत्तु षोढा—

काव्यं, शास्त्रम्, इतिहासः, काव्यशास्त्रं, काव्येतिहासः, शास्त्रेतिहास इति। तेषु

उक्तिप्रधानं **काव्यं**, यथा—

यदि स्मरामि तां तन्वीं जीविताशा कुतो मम ।
अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ९९॥

विधायकादिशब्दप्रधानं **शास्त्रं**, यथा—(बृहत्सं ७०.१)

**स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः**
**पादौ समोपचितचारुनिगूढगुल्फौ ।**
**श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या—**
**स्तामुद्वहेद् यदि भुवोऽधिपतित्वमिच्छेत् ॥१००॥**

अर्थप्रधान **इतिहासः**, यथा—

**हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाऽप्युदैक्षत ।**
**भयभ्रान्तैस्सुरैश्चक्रे तस्यै तस्यै दिशे नमः ॥१०१॥**

'शास्त्रे काव्यविनिवेशः **काव्यशास्त्रं**, यथा—

**नान्दीपदानि रतनाटकविघ्नशान्तावाज्ञाक्षराणि परमाण्यथवा स्मरस्य ।**
**दष्टेऽधरे प्रणयिना विधुताग्रपाणिसीत्कारशुष्करुदितानि जयन्ति नार्याः ॥१०२॥**

इतिहासे काव्यविनिवेशः **काव्येतिहासः**, यथा—(माघ. १.४६)

**स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रियदाश्रयः श्रियः ।**
**अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥१०३॥**

इतिहासे शास्त्रार्थविनिवेशनं **शास्त्रेतिहासः**, यथा—(महाभा. १८.५.३८)

**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥१०४॥**

**(१७. वाकोवाक्यम् —६)**

**उक्तिप्रत्युक्तिर्वाकोवाक्यम्** । सा षोढा—

ऋजूक्तिः, वक्रोक्तिः, वैयात्योक्तिः, गूढोक्तिः, प्रश्नोत्तरोक्तिः, चित्रोक्तिः इति। तासु **ऋजूक्तिर्यथा**—(अमरु. ५७, पृ. ५११)

**बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं ॥१०५॥**

**वक्रोक्तिर्**यथा—

**केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते**
**कान्ताप्यत्रैव कामिन्ननु भवति मया पृष्ठमेतावदेव ।**
**नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी—**
**मेवं प्रोक्ते भवान्या प्रतिवचनजडः पातु वो मन्मथारिः ॥१०६॥**

वैयात्योक्तिर्यथा—

कुशलं राधे! सुखितोऽसि कंस! कंसः क्व, स क्व, सा राधा ।
इति पालीप्रतिवचनैर्विलक्षहासो हरेर्जयति ॥१०७॥

गूढोक्तिर्यथा—

केशव! यमुनातीरे व्याहृतवानुषसि हंसिकां कोऽद्य ।
कान्ताविरहभयातुरहृदयः प्रायः प्रियेऽहं सः ॥१०८॥

प्रश्नोत्तरोक्तिर्यथा—(अमरु. ७१)

क्व प्रस्थितासि करभोरु! घने निशीथे
प्राणेश्वरो वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले!
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥१०९॥

चित्रोक्तिर्यथा—

कोऽयं कामिनि! भूषणं कितव ते शोणः कथं कुङ्कुमात्
स्कूर्पासान्तरितः प्रिये विनिमयं पश्यापरं क्वास्ति मे ।
पश्यामीत्यभिधाय सान्द्रपुलको मृद्नन् मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरवतात् द्यूते हसन् वो हरः ॥११०॥

(१८. प्रश्नोत्तरम् —६)

विदग्धगोष्ठीविनोदहेतुः पर्यनुयोगनिर्भेदः प्रश्नोत्तरम्। तत्षोढा— बहिःप्रश्नम्, अन्तःप्रश्नम्, बहिरन्तःप्रश्नम्, जातिप्रश्नम्, पृष्टप्रश्नम्, उत्तरप्रश्नमिति। तेषु —

बहिःप्रश्नं यथा—(मज्जन्मकरः)

भद्र! माणवकाख्याहि कीदृशः खलु ते पिता ।
वेलान्दोलितकल्लोलः कीदृशश्च महोदधिः ॥१११॥

अन्तःप्रश्नं यथा—

काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन् किमुत्तरम् ।
कथमुक्तं न जानासि कदर्थयसि यत्सखे ॥११२॥[1]

---

१. कथमुक्तं 'क+थ'—वर्णाभ्यां 'कदर्थयसी'—ति क्रियापदे विद्यमानाभ्यां मुक्तं ताभ्यां हीनं 'दर्यसि' इति यत् तदेवात्रोत्तरम्।

**बहिरन्तःप्रश्नं** यथा—

**सुभद्रां क उपायंस्त प्रश्नेऽमुष्मिन् य उत्तरः।** ('नर' इति)
**स कीदृक्कपिमाचष्टे व्योम्नि पर्णस्थितिः कुतः**[1]**॥** ('वा'–पर इति)

**जातिप्रश्नं** यथा—(हैमवार–करञ्जिना)

**कीदृशा भूमिभागेन राजा स्नातोऽनुमीयते।**
**प्राङ्गणं कुरुतेत्युक्ताः किमाहुस्तदनिच्छवः ॥११४॥**

सेयं गतप्रत्यागतजाति।

**पृष्टप्रश्नं** यथा— (सक. पृ.३०३–४)

**को सो जोअणवाओ को दंडाणं दुवे सहस्साइं।**
(कस्स योजनपादः को दण्डानां द्वे सहस्रे।)
**का काली का मधुरा किं शुकपृथुकाननच्छायम् ॥११५॥**

**उत्तरप्रश्नं** यथा—

**किं वसन्तसमये वनभक्षः पृष्टवान् सपृथुलोमविलेखः।**
**उत्तरं च किमवापतुरेतौ काननादतिमिरादपि कालम् (ली) ॥११६॥**

(१९. प्रहेलिका –६)

**प्रश्न एवानुत्तर प्रहेलिका।** सा षोढा—

च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा, अक्षरमुष्टिः, बिन्दुमती, अर्थप्रहेलिका च। तासु

**च्युताक्षरा** यथा— (विहङ्गिका हारेण)

**पयोधरभराक्रान्ता संनमन्ती पदे पदे।**
**पदमेकं न का याति यदि हारेण वर्जिता ॥११७॥**

**दत्ताक्षरा** यथा—(शम्बरः)

**प्ररूढयौवनः कोऽयं कान्तयानुगतः सुखी।**
**वने प्रयाति निश्शङ्कं शबरः सत्त्वसंकुले ॥११८॥**

**च्युतदत्ताक्षरा** यथा—

**विदग्धः सरसो रागी नितम्बोपरि संस्थितः।**
**तन्वङ्ग्यालिङ्गितः कण्ठे कलं कूजति को विटः ॥११९॥** (घटः)

---

१. व्योम्नि पर्णस्थितिर्वायुतो भवति। स नरयुक्तः 'वानर'–रूपः कपिमाचष्टे।

श्लोकादेरक्षरव्यत्यासेन कथन**मक्षरमुष्टिः**। यथा—

**अतिः अतिः अन्म अलं प्रीद्य रद्य जद्य फद्य ।**
**मेलामेला मेलं मेलं फसफसफसफसः ॥१२०॥**
**अद्य मे सफला प्रीतिरद्य मे सफला रतिः ।**
**अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥१२१॥**

यथास्थितस्वरानुस्वारविसर्गसंयोगस्योक्तार्थस्य च श्लोकादेः कादिवर्णस्थाने बिन्दुविनिवेशो **बिन्दुमती**। तद्यथा—

**तवापवादः प्रत्यब्धि पताका प्रतिसङ्गरम् ।**
**फलं प्रत्यद्भुतोपायं यशांसि न तु न क्वचित् ॥१२२॥**

अत्रार्थे,

{० ०।० ०।०ः० ० ०ि ० ०।०।०ि ० ० ० $\frac{0}{0}$
० $\frac{0}{0}$ ० ० ० ०ा० । $\frac{0}{0}$ ००ं ि०००० ० ० ०ि ०्}

**निर्भेदः —**

**ठुठठा ठुठठा ठाठा ठुंठुठे ठुंठठे ठठा ।**
**ठाठठे ठाठठे ठिंठिं ठंठंठिठठिठीठठः ॥१२३॥**
**उदधावुदधावाज्ञा संयुगे संयुगे जयः ।**
**साहसे साहसे सिद्धिः सर्वत्र तव कीर्त्तयः ॥१२४॥**

**अर्थप्रहेलिका** यथा—(पक्वमाम्रफलम्) (सक. २.३५८—३६५)

**उत्तप्तकाञ्चनच्छायं संदष्टदशनच्छदम् ।**
**सरसं चुम्ब्यते हृष्टैर्वृद्धैरपि किमुज्ज्वलम् ॥१२५॥**

**(२०. गूढम् —६)**

**गुप्तक्रियापदादिप्रयोगो गूढम्** । तत्षोढा—

क्रियागूढं, कारकगूढं, संबन्धगूढं, वस्तुगूढं, पादगूढम्, अभिप्रायगूढं चेति। तेषु **क्रियागूढं** यथा—(न स्थ)

**स्तनजघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।**
**कथमिव सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥१२६॥**

**कारकगूढं** यथा—

**पिबतस्ते शरावेण वारि कह्लारशीतलम् ।**
**केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ ॥१२७॥** (शरौ)

**सम्बन्धगूढं** यथा—(काव्याद. ३.१०८)

**न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।**
**अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥१२८॥**

**वस्तुगूढं** यथा—(दासी असि)

**पानीयं पातुमिच्छामि श्यामे कमललोचने ।**
**यदि दास्यसि नेच्छामि न दास्यसि पिबाम्यहम् ॥१२९॥**

**पादगूढं** यथा—(किराता. १५.४३)

**द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।**
**हैमीषुमाला शुशुभे 'विद्युतामिव संहतिः' ॥१३०॥**

**अभिप्रायगूढं** यथा—

**जइ देवरेण भणिआ खग्गं घेत्तूण राउलं वच्च ।**
**ता किं सेवअवहुए हसिऊण वलोइअं असणं ॥१३१॥**
(यदि देवरेण भणिता खड्गं गृहीत्वा राजकुलं व्रज ।
तत्किं सेवकवध्वा हसित्वावलोकितं शयनम् ॥) (सक.२.३६६–३७०)

**निरीक्षितमनेनेह पुरुषायितलक्ष्म च ।**
**पादलाक्षादिकं तेन नियुङ्क्ते मां न कर्मणि ॥१३२॥** इति।

(२१. चित्रम् –६)

**स्वरस्थानवर्णगतिबन्धाकारनियमश्चित्रम्।** तत् षोढा स्वरादिनियमभेदात्। तेषु—

**चतुस्स्वरं** यथा—(काव्याद. ३.८४)

**आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीभीतीः ।**
**भोगो रोगो मोहो मोदो ध्येये वेच्छेत् क्षेमे देशे ॥१३३॥**

**त्रिस्थानं** यथा—(काव्याद. ३.८९)

**अलिनीलालकलतं कं न हन्ति घनस्तनि! ।**
**आननं नलिनच्छायनयनं शशिकान्ति ते ॥१३४॥**

**द्विवर्णं** यथा—(माघ. १९.६६)

**भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।**
**भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥१३५॥**

**गतिचित्रं** यथा—(माघ. १९.४४) **गतप्रत्यागतार्थ(र्ध)म्**

**वारणागगभीरा सा साराभीगगणारवा ।**
**कारितारिवधा सेना नासेधावरितारिका ॥१३६॥**

**बन्धचित्रं** यथा—(माघ. १९.२९) **मुरजबन्धः**

**सा सेना गमनारम्भे रसेनासीदनारता ।**
**तारनादजना मत्तधीरनागमनामया ॥१३७॥**

**याश्रिता पावनतया यातनाच्छिदनीचया ।**
**याचनीया धिया मायायामायासं स्तुता श्रिया ॥१३८॥** (देश. ४) **पद्मम्**

(२२. श्लेषः —६)

**द्वयोस्तन्त्रेणाभिधानं श्लेषः।** स षोढा—

प्रकृतिश्लेषः, प्रत्ययश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, पदश्लेषः, भाषाश्लेषः इति। तेषु —

**प्रकृतिश्लेषो** यथा—

**त्वमेव धातुः पूर्वोऽसि त्वमेव प्रत्ययः परः ।**
**अनाख्यातं न ते किञ्चिदतस्त्वं नोपमीयसे ॥१३९॥**

**प्रत्ययश्लेषो** यथा—

**तस्या विनापि हारेण निसर्गादेव हारिणौ ।**
**जनयामासतुः कस्य विस्मयं न पयोधरौ ॥१४०॥**

**विभक्तिश्लेषो** यथा—

**विषं निजगले येन बभ्रे च भुजगप्रभुः ।**
**देहे येनाङ्गजो दध्रे जाया च स जयत्यजः ॥१४१॥**

**वचनश्लेषो** यथा—

**तनुत्वरमणीयस्य मध्यस्य च भुजस्य च ।**
**अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥१४२॥**

**पदश्लेषो** यथा—(काव्याद. २.२९)

**अरिमेदः पलाशश्च बाहुः कल्पद्रुमश्च ते ।**
**बालेवोद्यानमालेयं सालकाननशोभिनी ॥१४३॥**

**भाषाश्लेषो** यथा—(रुद्रटा. ४.१५)

**धीरागच्छदुमे हतमुदुद्धरवारिसदस्सु ।**
**अभ्रमदप्रसराभरणुरविकिरणा तेजस्सु ॥१४४॥**

(२३. यमकम् —६)

**भिन्नार्थैकरूपा च वर्णसङ्घातावृत्तिर्यमकम्।** तत् षोढा—
स्थानयमकम्, अस्थानयमकं, व्यपेतम्, अव्यपेतं, समुद्गकः, पादयमकमिति।
तत्र पादानामादिमध्यान्ताः स्थानम्। तेषु —

**शब्दसङ्घातावृत्ति स्थानयमकं**, यथा—(काव्याद. ३.३४)

**सालं सालम्बकलिकासालंसालं न वीक्षितुम् ।**
**नालीनालीनवकुलानाली नालीकिनीरपि ॥१४५॥**

**अस्थानयमकं** यथा—(रुद्रटा. ३.५७)

**कमलिनीमलिनी दयितं विना न सहते सह तेन निषेविताम् ।**
**तमधुना मधुना निहितं हृदि स्मरति सा रतिसारमहर्निशम् ॥१४६॥**

**व्यवहितं व्यपेतयमकं** यथा—(काव्याद. ३.२९)

**कमलेः समकेशं ते कमलेर्ष्याकरं मुखम् ।**
**कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥१४७॥**

**अव्यवहितमव्यपेतयमकं** यथा—(काव्याद. ३.१८)

**रमणी रमणीया मे पाटलापाटलांशुका ।**
**वारुणीवारुणीभूतसौरभाः सौरभास्पदम् ॥१४८॥**

**समुद्गको** यथा—(पृ०द्र. ३६२)

**कान्तारतरुतलासितमृगयुवरचितान्तरा हरति वनान्ता॥१४९॥**

**पादयमकं** यथा—

**कमलमलिरमुञ्चदुत्पलकलिकातरलोलमुत्पलाशकान्ते ।**
**कान्ते स्म चक्षुरलिकुलकलिकातरलोलमुत्पलाशकान्ते ॥१५०॥**

(२४. अनुप्रासः –६)

**वर्णानामनतिदूरान्तरमावृत्तिरनुप्रासः**। स षोढा– वर्णानुप्रासः, स्थानानुप्रासः, पदानुप्रासः, नामानुप्रासः, पादानुप्रासः, व्यवहितानुप्रास इति। तत्र–

**वर्णानुप्रासो** यथा–

शिञ्जानमञ्जुमञ्जीरकाञ्चीसञ्चारचारवः ।
रमयन्ति मनः कान्ता नितान्तं योगिनामपि ॥१५१॥

**स्थानानुप्रासो** यथा–(काव्याद. १.५३)

एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।
तदाप्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥१५२॥

**पदानुप्रासो** यथा–

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसंकरं
तदियमबला धत्ते लक्ष्मीं कथं सकलात्मिकाम् ॥१५३॥

**नामानुप्रासो** यथा–

कृत्वा कृत्वा कलकलं मारुतेन चलाचलः ।
मातर्गुलुगुलायन्ते गजा इव घनाघनाः ॥१५४॥

**पादानुप्रासो** यथा–(काव्याद. १.३)

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
तावेव यदि न स्यातां तपसा किं प्रयोजनम् ॥१५५॥

**व्यवहितानुप्रासो** यथा–

प्रकाशो यशसा देवः प्रकाशो महसा रविः ।
दुस्सहो द्विषतां स्वामी दुस्सहस्तमसां स च ॥१५६॥

चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः ।
जात्यादिभेदतः पद्ये गद्येऽप्यासामयं क्रमः ॥१५७॥
इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥१५८॥(काव्याद.१.३,४)

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते ॥१५९॥
गतयस्तस्य यास्तिस्रो द्रुतमध्यविलम्बिताः ।
लयान् पदगतेः प्राहुस्तान् गीते गीतवेदिनः ॥१६०॥
रीतयो वाङ्मयप्राणा हृदयं तस्य वृत्तयः ।
रचनादित्रयं मूर्तिरनुप्रासस्तु जीवितम् ॥१६१॥
उक्तयो दैवतं छायामुद्राभणितयो वृतिः ।
पठितिः श्रव्यता प्रेक्षाभिनयोऽध्ययनं धृतिः ॥१६२॥
श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् ।
वाकोवाक्येन हृष्यन्ति मनांसि कृषतामपि ॥१६३॥ (काव्याद.२.३६२)
विनयेन विना का श्री. का निशा शशिना विना ।
विना यमकचित्राभ्यां कीदृशीव विदग्धता ॥१६४॥(काव्यालङ्कार १.४)
गूढं गूढचतुर्थादि वादिनां दर्पशान्तये ।
प्रश्नोत्तरं तु नाम्नापि विदग्धमुखमण्डनम् ॥१६५॥
क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥१६६॥(काव्याद.३.९७)
यथामति यथायुक्ति यथौचित्यं यथारुचि ।
कवेः पात्रस्य चैतासां प्रयोग उपपद्यते ॥१६७॥
यादृग् गद्यविधौ बाणः पद्यबन्धे न तादृशः ।
प्रतिमार्गमियं देवी विचित्रा हि सरस्वती ॥१६८॥
संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः ।
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥१६९॥(काव्यमीमांसा)
पैशाच्या शौरसेन्यान्यो मागध्यान्यो निबध्यते ।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥१७०॥
कश्चिद् गद्येन पद्येन कश्चिन्मिश्रेण शक्यते ।
निबद्धुं कश्चन द्वाभ्यां कश्चित्तु पथिभिस्त्रिभिः ॥१७१॥

संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन ।
साधारण्यादिभिः केचित् केचन म्लेच्छभाषया ॥१७२॥

न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् ।
सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥१७३॥

वदन्ति संस्कृतं देवा प्राकृतं किन्नरादयः ।
पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥१७४॥

केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः ।
काले श्रीसाहसाङ्कस्य के न संस्कृतवेदिनः ॥१७५॥

नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया ।
कथा गोष्ठीषु कथयन् लोके बहुमतो भवेत् ॥१७६॥

शृण्वन्ति लटहं लाटाः प्राकृतं संस्कृतद्विषः ।
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन घूर्जराः ॥१७७॥(काव्यमीमांसा)

ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥१७८॥

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्या वधूं सुखग्राह्यनिबन्धनेन ॥ (कुसं. ७.९०)

एतद् ग्राह्यं सुरभि कुसुमं ग्राह्यमेतन्न धेयं
धत्ते शोभां विरचितमिदं स्थानमेवैतदस्य ।
मालाकारो रचयति यथा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥१८०॥ (भामहा. १.५९)

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विदग्धानामिष्टे मगधमथुरावासिभणिती
निबन्धा यस्तेषां स खलु कविराजो विजयते ॥१८१॥ (बारा. १.११)

## (२. अर्थालङ्काराः –२४)

अर्थमेव ये व्युत्पत्त्यादिना भूषयन्ति तेऽर्थालङ्काराश्चतुर्विंशतिः। तद्यथा–

**जातिः, सूक्ष्मः, सारः, समाहितं, भावः, विभावना, हेतुः, अहेतुः, सम्भवः, विरोधः, दृष्टान्तः, व्यतिरेकः, अन्योन्यं, परिवृत्तिः, मीलितं, वितर्कः, स्मरणं, भ्रान्तिः, उपमानम्, अनुमानम्, अर्थापत्तिः, अभावः, आगमः, प्रत्यक्षमिति।** तत्र–

(१. जातिः)

**नानावस्थानि जायन्ते यानि रूपाणि वस्तुनः ।**
**स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥१८२॥** (काव्याद. २.८)
**अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।**
**जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥१८३॥**
**स्वरूपमाश्रयो हेतुरिति तद्भेदहेतवः ।**
**ते संस्थानादयस्तेषु सा विशेषेण शोभते ॥१८४॥** (स.क. ३)

तत्र – संस्थानम्, अवस्थानं, वेषो, व्यापार इत्यादयः स्वरूपं, मुग्धाङ्गनाः, शिशवः, तिर्यञ्चः, हीनपात्राणीत्यादय आश्रयः, देशः, कालः, शक्तिः, साधनमित्यादयो हेतुः (सक.३.७)। तेषु –

**संस्थानं** यथा–(कुसं. ३.७०)

**स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥१८५॥**

**अवस्थानं** यथा–(सक. ३.८.२)

**पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलं**
**शूलं प्रोल्लासयन्त्याः सुललितवपुषो मध्यभागस्य चण्ड्याः ।**
**विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला–**
**स्तिस्रो वः पान्तु लेखाः क्रमवशविकसत्कञ्चुकप्रान्तमुक्ताः ॥१८६॥**

**वेषो** यथा–(गास. ८२६ वे.)

**छणपिट्ठधूसरत्थणि महुमअतंबच्छि कुवलआहरणे ।**
**कण्णकअचूअमंजरि पुत्ति तुए मंडिओ गामो ॥१८७॥**

(क्षणपिष्टधूसरस्तनि! मधुमदताम्राक्षि! कुवलयाभरणे! ।
कर्णकृतचूतमञ्जरि! पुत्रि! त्वया मण्डितो ग्रामः ।।)

व्यापारो यथा—(माघ. ५.१५)

अग्रे गतेन वसतिं परिगृह्य रम्या—
मापात्य सैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा—
दुद्‌वाहुना जुहुविरे मुहुरात्मवर्ग्याः ।।१८८।।

मुग्धाङ्गना यथा—(गास. २.४५)

सहिआहिं भण्णमाणा थणए लग्गं कुसुंभपुप्फं ति ।
मुद्धवहुआ हसिज्जई पप्फोडंती णहवआइं ।।१८९।।
(सखीभिर्भण्यमाना स्तने लग्नं कुसुम्भपुष्पमिति ।
मुग्धवधूर्हस्यते प्रस्फोटयन्ती नखपदानि ।।)

शिशुर्यथा—(भामहा. २.९४)

आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलं रुदन् ।
गाः कालयति दण्डेन डिम्भः सस्यावतारिणीः ।।१९०।।

तिर्यग् यथा—(सक. ३.८.७)

लीढव्यस्तविपाण्डुराग्रनखयोराकर्णदीर्णं मुखं
विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः ।
एतस्मिन् मदगन्धवासितसटः सावज्ञतिर्यग्वल—
त्सृक्क्रान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ।।१९१।।

हीनपात्रं यथा—(सक. ३.८.८)

भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्‌गीयते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः ।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ।।१९२।।

देशो यथा—(सक. ३.८.९)

इमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना
भुवः क्रीडालोलद्विरदरदनारुग्णतरवः ।

लताकुञ्जे यासामुपनदि रतिक्लान्तशबरी–
कपोलस्वेदाम्भः–परिचयनुदो वान्ति मरुतः ॥१९३॥

कालो यथा–(सक. ३.८.१०)

कम्पन्ते कपयो भृशं जडकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोऽपि नैवोज्झति ।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥१९४॥

शक्तिर्यथा–(काव्याद. २.११, सक. ३.८.११)

बन्धन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।
नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥१९५॥

साधनं यथा–(सक. ३.८.१२)

उपनिहितहलीषासार्गलद्वारमारात् परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम् ।
पवनरयतिरश्चीर्वारिधाराः प्रतीच्छन् विशतिवलितशृङ्गः पामरागारमुक्षा ॥

(२. सूक्ष्मः)

इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मः सूक्ष्मगुणात्तु सः ।
सूक्ष्मात् प्रत्यक्षतः सूक्ष्मोऽप्रत्यक्ष इति भिद्यते ॥१९७॥

स द्विधा– अभिधीयमानः प्रतीयमानश्च। तत्र –

अभिधीयमान इङ्गितलक्ष्यो यथा–(रघु. ६.१२)

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥१९८॥

स एव आकारलक्ष्यो यथा–(रघु. ६.८१)

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥१९९॥

स एव उभयलक्ष्यो यथा–(सक. ३.५०)

त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।
उद्दामरागपिशुना छाया कापि मुखाम्बुजे ॥२००॥

प्रतीयमान इङ्गितलक्ष्यो यथा–(गास. ५.१६)

वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कस्स ।
असई कज्जेण विणा पइप्पमाणे णईकच्छे ॥२०१॥

(व्याहता प्रतिवचनं न ददाति रुष्यत्येकैकस्मिन् ।
असती कार्येण विना प्रदीप्यमाने नदीकच्छे ।।)

स एव **आकारलक्ष्यो** यथा—(गास. २.८०)

**सामाइ सामलीए अद्धच्छिपलोअरीअ मुहसोहा ।**
**जंबूदलकअकण्णावअंसभमिरे हलिअउत्ते ।।२०२।।**

{श्यामायाः श्यामलतया लायते अर्धाक्षिप्रलोकनशीलाया मुखशोभा।
जम्बूदलकृतकर्णावतंसभ्रमणशीले/कर्णावतंसभृते हालिकपुत्रे।।}

स एव **उभयलक्ष्यो** यथा—(किराता. ७.१४)

**प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।**
**न किंचिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ।।२०३।।**

(३. सारः)

**फल्गुनिरासेन अफल्गुनिर्धारणं सारः।**

स द्विधा— धर्मरूपो धर्मिरूपश्च। तयोः —

**धर्मरूपो** यथा—

**दानं वित्तादृतं वाचः ।।२०४।।** (पृ.द्र. ३६६)

यथा वा—(सक. ३.५६)

**पोढमहिलाण जं जं सुसिक्खिअं तं रए सुहावेइ ।**
**जं जं असिक्खिअं णववहूण तंतं रइं देइ ।।२०५।।**

(प्रौढमहिलानां यद्यत्सुशिक्षितं तद् रते सुखयति ।
यद्यदशिक्षितं नववधूनां तत्तद् रतिं ददाति ।।)

**धर्मिरूपो** यथा—(रुद्रट. ७.९७)

**राज्ये सारं वसुधा वसुधायां पत्तनं पुरे सौधम् ।**
**सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ।।२०६।।**

यथा वा—

**मधु च विकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम् ।**
**मदनजनितविभ्रमा च कान्ता सुखमिदमर्थवतां विभूतयोऽन्याः ।।२०७।।**

(४. समाहितम्)

**कार्यारम्भे सहकारिकारणावाप्तिः समाहितम्।** सा द्विधा—
आकस्मिकी, बुद्धिपूर्विका च। तयोः —

**आकस्मिकी** यथा–(काव्याद. २.२९९)

**मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।**
**उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ २०८॥**

यथा वा–(किराता. २.५४)

**अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।**
**स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ २०९॥**

**बुद्धिपूर्विका** यथा–

**कल्पान्ते शमितत्रिविक्रममहाकङ्कालबद्धस्फुर–**
**च्छेष-स्यूत-नृसिंह-वक्र-नखर-प्रोतादिकोलामिषः ।**
**विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ**
**कर्षन् धीवरतां गतः स्यतु जगन्मोहं महाभैरवः ॥ २१०॥**

यथा वा–(सक. ३.१०५)

**मूले पञ्च ततश्चतुष्टयमिति स्रक्संनिवेशैः शिरः–**
**पुष्पैरन्यतमावलोकनमितैरुच्छोणितैरर्चिते ।**
**हस्तस्पर्शवशेन मूर्ध्नि दशमं मूर्धानमारोपयन्**
**शम्भोरद्भुतसाहसैकरसिकः कैर्न स्तुतो रावणः ॥ २११॥**

(५. भावः)

**अभिप्रायानुकूलः प्रवृत्तिविशेषो भावः।** स द्विधा– सोद्भेदो निरुद्भेदश्च। तयोः

**सोद्भेदो** यथा–(गास. २.३०)

**सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।**
**णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स ॥ २१२॥**

(सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा ।
अनिच्छतोऽपि पादौ धावति हसन्ती हसतः ॥)

यथा वा–(गास. २.१००)

**भद्द/गेण्ह पुलोएह इमं विअसिअवअणा पिअस्स ओप्पेइ ।**
**घरिणी सुअपढमुब्भिण्णदंतजुअलंकिअं बोरम् ॥ २१३॥**

(भद्र प्रलोकयेमं विकसितनयना प्रियायार्पयति ।
गृहिणी सुतप्रथमोद्भिन्नदन्तयुगलाङ्कितं बदरम् ॥)

**निरुद्भेदो** यथा—(गास. २.७)

**गोला—अड—ट्ठिअं पेच्छिऊण गहवइ—सुअं हलिअसोण्हा ।**
**आढत्ता उत्तरिउं दुक्खुत्ताराए पअवीए ॥ २१४॥**

(गोदातटस्थितं प्रेक्ष्य गृहपतिसुतं हालिकस्नुषा ।
आरब्धा उत्तरितुं दु:खोत्तारया पदव्या ॥)

यथा वा—(सक. ३.१४०)

**सालिवणगोविआए उड्डीयं/वंतीअ पूसविंदाइं ।**
**सव्वंगसुंदरीएं वि पहिआ अछीइ पेच्छंति ॥ २१५॥**

(शालिवनगोपिकाया उड्डाययन्त्या: शुकबृन्दानि ।
सर्वाङ्गसुन्दर्या अपि पथिका अक्षिणी एव प्रेक्षन्ते ॥)

**हृद्यं सूक्ष्मं** च भाव एव। तयो**र्हृद्यं** यथा— (गास. ९१६ वे.)

**हिअए रोसुग्गिण्णं पाअप्पहरं सिरेण पत्थंतो ।**
**ण हओ दइओ माणंसिणीए थोरस्सुअं रुण्णं ॥ २१६॥**

(हृदये रोषोद्गीर्णं पादप्रहारं शिरसा प्रार्थितवान् ।
न हतो दयितो मनस्विन्या स्थूलाश्रुकं रुदितम् ॥)

**सूक्ष्मो** यथा—(काव्याद. २.२६१)

**कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम् ।**
**अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥ २१७॥**

**(६. विभावना)**

**प्रसिद्धहेतुत्यागेन हेत्वन्तरविभावनम् ।**
**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ २१८॥**

तयोराद्या यथा—(कुसं. १.३१)

**असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथ वय: प्रपेदे ॥ २१९॥**

यथा वा—(काव्याद. २.२००)

**अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।**
**अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥ २२०॥**

**द्वितीया** यथा—

**णमह अवट्ठिअतुङ्गं ॥ २२१॥** (सेब. १.१) (द्र० ३.६०; ७.२०१)

यथा वा—(कुसं. १.१०)

**वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ २२२॥**

(७. हेतुः)

**प्रवृत्तिनिवृत्त्योर्निबन्धनं हेतुः।** स षोढा—

प्रवर्तकः, निवर्तकः, प्रयोजकः, ज्ञापकः, अभावहेतुश्चित्रहेतुश्च। तत्र —

**प्रवर्तको** यथा—

**जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।**
**गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवाश्च सम्पदः ॥ २२३॥**

**निवर्तको** यथा—(शाकु. ६.२२)

**प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।**
**बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२४॥**

**प्रयोजको** यथा—(काव्याद. २.१४३)

**मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीम् ।**
**बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ २२५॥**

**ज्ञापको** यथा—(सक. ३.१५३)

**गज्जंते खे मेहा फुल्ला णीवा पणच्चिआ मोरा ।**
**णट्ठो चंदुज्जोओ वासारत्तो हला पत्तो ॥ २२६॥**
(गर्जन्ति खे मेघाः, फुल्ला नीपाः, प्रणर्तिता मयूराः ।
नष्टश्चन्द्रोद्द्योतो वर्षर्तुः सखि प्राप्तः ॥)

**अभावहेतुर्**यथा—(काव्याद. २.२४७)

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।**
**अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ २२७॥**

**चित्रहेतुर्**यथा—(अमरु. ३४)

**सा बाला वयमप्रगल्भमनसः, सा स्त्री वयं कातराः,**
**सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् ।**
**साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं,**
**दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ २२८॥**

(८. अहेतुः)

सत्यपि सामर्थ्येऽनुत्पादितस्वकार्यो व्याहतश्च हेतुरहेतुः। तयोः–

**अनुत्पादितस्वकार्यो** यथा–

न विरचिता ललाटतटलास्यकरी भ्रुकुटि–
र्न परुषहुङ्कृतेन मधुरस्मितमन्तरितम्।
न तव निशुम्भसम्भ्रमवशादपि दारुणया
भगवति चेष्टया कलुषितं वदनाम्बुरुहम् ॥२२९॥ (सक.३.४३)

यथा वा–(ध्व. १.१३,१४)

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥२३०॥

**व्याहतो** यथा–(मेघ.६९)

नीवीबन्धोच्छ्वसितशिथिलं यत्र यक्षाङ्गनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥२३१॥

यथा वा–(सक. ३.४६)

शम्भोरुद्धतनृत्तकर्मणि करे कङ्कालमाद्यं हरेः
संघट्टस्फुटितेन्दुमण्डलगलत्पीयूषसञ्जीवितम्।
तत्कालप्रणते मुरद्विषि नवे दृष्ट्वा विलासं श्रियः
कुर्वत्कोपकषायितेन मनसा मिथ्योत्प्लुतीः पातु वः ॥२३२॥

(९. सम्भवः)

**प्रबलकारणकलापदर्शनादिदमेवं भवेदिति ज्ञानं सम्भवः।**

स चतुर्धा– विधिरूपो, निषेधरूप उभयरूपोऽनुभयरूपश्च। तेषु –

**विधिरूपो** यथा– (मेघ.४६)

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी–
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥२३३॥

**निषेधरूपो** यथा—(किराता. १६.२३)

परस्य भूयान् विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा न सम्भवत्येव वनेचरेषु ॥२३४॥

**उभयरूपो** यथा—(मेघ. २२)

उत्पश्यामि द्रुतमपि सखे! मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥२३५॥

**अनुभयरूपो** यथा—(मेघ.५१)

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया सा
स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा ॥२३६॥

(१०. विरोधः)

**पदार्थानां परस्परासङ्गतिर्विरोधः** । यथा— (सक. ३.६०)

क्व युवतिमार्दवं क्व च महाहवदारुणता
क्व च वलयी करः क्व करिदन्तजमुष्टिरसिः ।
क्व च नवयौवनं क्व कुसुमायुधनिस्स्पृहता
तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥२३७॥

यथा वा—

दिग्वासा यदि तत् किमस्य धनुषा सास्त्रस्य किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥२३८॥

विषमम्, असङ्गतिः, प्रत्यनीकम् अधिकं च विरोध एव। तेषु —

**विषमं** यथा— (काद.)

दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयोमलीमसः शुक्लतरं निजं यशः ॥२३९॥

**असङ्गतिर्**यथा— (सक. ३.६२)

**सा उप्पडी गोट्ठउहि ॥ २४० ॥** (द्र० ८.०५, पृ.३९८)

प्रत्यनीकं यथा—(रुद्रटा. ७.५५)

**उत्कण्ठा सन्तापो रणरणको जागरस्तनोस्तनुता ।**
**फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥ २४१ ॥**

**अधिकं** यथा—(रघु. १२.४५)

**एको दाशरथिः कामं यातुधानाः सहस्रशः ।**
**ते तु यावन्त एवाजौ तावद्धा ददृशे स तैः ॥ २४२ ॥**

**(११. दृष्टान्तः)**

**उक्तार्थप्रसिद्धये प्रसिद्धतत्तुल्यार्थप्रदर्शनं दृष्टान्तः।**

स चतुर्धा— पूर्वः, उत्तरः, समः, विपरीतश्च। तेषु —

**पूर्वो** यथा—(सक. ३.८९)

**ण उव वरकोअण्डदण्डए पुत्ति माणुसे वि एमेअ ।**
**गुणवज्जिए ण जाअइ वंसुप्पण्णे वि टङ्कारो ॥ २४३ ॥**
(न पुनर्वरकोदण्डदण्डके पुत्रि! मानुषेऽप्येवमेव ।
गुणवर्जिते न जायते वंशोत्पन्नेऽपि टङ्कारः ॥)

**उत्तरो** यथा—(सक. ३.८६)

**हिअअ तिरच्छीयइ संमुह ॥ २४४ ॥** (द्र. ८.०९; पृ.३९९)

**समो** यथा—(काव्याद. २.३५०)

**याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ।**
**सद्यो राजविरुद्धानां दर्शयन्ती दुरन्तताम् ॥ २४५ ॥**

**विपरीतो** यथा—(मुरा. १.२१)

**उपरिघनं घनपटलं दूरे दयिता किमेतदापतितम् ।**
**हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥ २४६ ॥**

**(१२. व्यतिरेकः)**

**सदृशयोर्भेदकथनं व्यतिरेकः।**

स षोढा— एकव्यतिरेकः, उभयव्यतिरेकः, सदृशव्यतिरेकः, असदृशव्यतिरेकः, स्वजातिव्यतिरेकः, स्वव्यक्तिव्यतिरेक इति। तत्र—

**एकव्यतिरेको** यथा– (रुद्रटा. ५.८७)

**सकलङ्केन जडेन च साम्यं दोषाकरेण ते कीदृक् ।**
**अभुजङ्गः समनयनः कथमुपमेयो हरेणासि ॥ २४७॥**

**उभयव्यतिरेको** यथा– (काव्याद. २.१८३)

**अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।**
**असावञ्जनसंकाशस्त्वं तु चामीकरच्छविः ॥ २४८॥**

**सदृशव्यतिरेको** यथा– (काव्याद. २.१९४)

**चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।**
**नभो नक्षत्रमालीदमिदमुत्कुमुदं पयः ॥ २४९॥**

**असदृशव्यतिरेको** यथा– (काव्याद. २.१९९)

**अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम् ।**
**इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥ २५०॥**

**स्वजातिव्यतिरेको** यथा– (काव्याद. २.१९७)

**अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।**
**दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ २५१॥**

**स्वव्यक्तिव्यतिरेको** यथा– (सक. ३.९१)

**अण्णोण्णेहिं सुचरिअसअहिं अणुदिण वड्ढिइअ माणु ।**
**अप्पण वि ण हु महु पि अह अप्पाणेण समाणु ॥ २५२॥**
(अन्योन्यैः सुचरितशतैरनुदिनं वर्धते मानः ।
आत्मापि न खलु महानपि अथात्मना समानः ॥)

## (१३. अयोन्यम्)

**परस्परमुपकार्योपकारकादिभावोऽन्योन्यम्।**

तत्त्रिधा– अभिधीयमानं, प्रतीयमानम् उभयरूपं चेति। तेषु –

**अभिधीयमानं** यथा– (कुसं. १.४२)

**कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।**
**अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः ॥ २५३॥**

**प्रतीयमानं** यथा-- (गास. २.६१)

**उद्धच्छो पिअइ जलं जह जह विरलंगुली चिरं पहिओ ।**
**पावालिआ वि तह तह धारं तणुअं पि तणुएई ॥२५४॥**
(ऊर्ध्वाक्षः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः ।
प्रपापालिकापि तथा तथा धारां तनुकामपि तनूकरोति ॥)

**उभयरूपं** यथा–(गास. २.९३)

**गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को ।**
**अणुअंपाणिद्दोसं तेण वि सा गाढमुअवऊढा ॥२५५॥**
(गोदाविषमावतारच्छलेन आत्मा उरसि तस्य मुक्तः ।
अनुकम्पानिर्दोषं तेनापि सा गाढमुपगूढा ॥)

अन्योन्यचूलिका, अन्योन्यभ्रान्तिः, अन्योन्यैकता **चान्योन्यमेव**। तत्रात्र–

**अन्योन्यचूलिका** यथा–(सक. ३.७५)

**शशिना च निशा निशया च शशी**
**शशिना निशया च यथा गगनम् ।**
**भवता च सभा सभया च भवान्**
**भवता सभया च विभाति जगत् ॥२५६॥**

**अन्योन्यभ्रान्तिर्**यथा–

**जम्बूनां कुसुमोदरे नवमधुन्यारब्धपानोत्सवाः**
**कीराः पक्वफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।**
**एतेषामपि नीलकिंशुकदलैरेभिः समानत्विषां**
**पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥२५७॥**

**अन्योन्यैकता** यथा–(माघ. १.२२)

**प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।**
**परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतुः ॥२५८॥**

## (१४. परिवृत्तिः)

**गुणद्रव्याणां व्यत्ययविनिमयौ परिवृत्तिः**। सा त्रिधा–
व्यत्ययवती, विनिमयवती, उभयवती च । तेषु –

**व्यत्ययवती** यथा–(गास. २.६)

**जो तीअ अहरराओ रत्तिं उव्वासिओ पिअअमेण ।**
**सो च्चिअ दीसइ गोसे सवत्तिणअणेषु संकंतो ।। २५९ ।।**

(यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन ।
स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ।।)

यथा वा–(माघ. ११.६४)

**कुमुदवनमपश्रि श्रीमदम्भोजषण्डं**
**त्यजति मुदमुलूकः प्रीतिमाँश्चक्रवाकः ।**
**उदयमहिमरश्मिर्याति शीतांशुरस्तं**
**हतविधिलसितानां ही विचित्रो विपाकः ।। २६० ।।**

**विनिमयवती** यथा–(किराता. ७.३५)

**प्रश्च्योतन्मदसुरभीणि निम्नगायाः क्रीडन्तो गजपतयः पयांसि कृत्वा ।**
**किञ्जल्कव्यतिकरताम्रदानलेखैरुत्तेरुः सरसिजगन्धिभिः कपोलैः ।। २६१ ।।**

यथा वा–(राच. २.७)

**तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिह शोच्यतेऽधुना ।**
**येन जर्जरकलेबरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ।। २६२ ।।**

**उभयवती** यथा–(किराता. ९.६०)

**लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा ।**
**वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ।। २६३ ।।**

यथा वा–(सक. ३.८३)

**किं चित्रं यदि देवेन भूभृतः करदीकृताः ।**
**देवोऽपि दापितः किं तैर्न पुनः पृष्ठतः करम् ।। २६४ ।।**

**(१५. मीलितम्)**

**वस्तुना वस्त्वन्तरतिरस्कारो मीलितम्।** यथा– (सक. ३.१२६)

**एंतो वि ण सच्चविओ गोसे पसरंतपल्लवारुणच्छाओ ।**
**मज्जणतंबेसु मओ तह मअतंबेसु लोअणेसु अमरिसो ।। २६५ ।।**

(आगच्छन्नपि न दृष्टः प्रातः प्रसरत्पल्लवारुणच्छायः ।
मज्जनताम्रयोर्मदस्तथा मदताम्रयोर्लोचनयोरमर्षः ।।)

यथा वा– (गास. ४.२३)

**पिअदंसणेण सुहरस–मुउलिअ जइ से ण होंति णअणाइं ।**
**ता केण कण्णरइअं लक्खिज्जइ कुवलअं तिस्सा ।। २६६।।**
(प्रियदर्शनेन सुखरसमुकुलिते यद्यस्या न भवेतां नयने ।
तत् केन कर्णरचितं लक्ष्येत कुवलयं तस्याः ।।)

पिहितम्, अपिहितं, तद्गुणोऽतद्गुण इतीमान्यपि मीलितान्येव। तेषु –

**पिहितं** यथा–

**पअडिअसणेहसब्भावविब्भमं तीअ जह तुमं दिट्ठो ।**
**संवरणवावडाए अण्णो वि जणो तह च्चेअ ।। २६७।।**
(प्रकटितस्नेहसद्भावविभ्रमं तया यथा त्वं दृष्टः ।
संवरणव्यापृतया अन्योऽपि जनस्तथा चैव ।।) (गास.२.९९)

**अपिहितं** यथा–(गास. ७२० वे.)

**दिट्ठा इ जंण दिट्ठो आलविआए वि जंण आलविओ ।**
**उवआरो जं ण कओ तं चिअ कलिअं छइल्लेहिं ।। २६८।।**
(दृष्टयापि यन्न दृष्ट आलपितयापि यन्नालपितः ।
उपचारो यन्न कृतस्तदेव च कलितं छेकैः ।।)

**तद्गुणो** यथा–(सक. ३.१३०)

**गोरंगउ तरुणीअणु जोण्हइ अहिसरइ**
**सिअणेवच्छपडिच्छिउ वल्लहवद्धरइ ।**
**तच्छाअहिं पुणु चलिअउ**
**सामलगत्तु तहिं मअणु मंतिअहिं ।। २६९।।**
(गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरति
सितनेपथ्यपरिच्छन्नो वल्लभबद्धरतिः ।
तच्छायासु पुनश्चलितः
श्यामलगात्रस्तत्र मदनो मन्त्र्यभूत् ।।)

**अतद्गुणो** यथा–(सक. ३.१३१)

**कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया**
**क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते ।**

कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल! लक्ष्मीः पुरः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति ॥ २७० ॥

(१६. वितर्कः)

**सन्देहनिर्णयान्तरालवर्त्यूहो वितर्कः।**

स द्विधा— निर्णयान्तोऽनिर्णयान्तश्च। तयोः —

निर्णयान्तस्त्रिधा तत्त्वानुपाती, अतत्त्वानुपाती, उभयात्मकश्च।

अनिर्णयान्तोऽपि त्रिधा मिथ्यारूपः, अमिथ्यारूपः उभयात्मकश्च। तेषु —

**निर्णयान्तस्तत्त्वानुपाती** यथा—(उराच. २.२९)

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतस्स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आ ज्ञातं स जटायुरेव जरसा क्लिष्टो वधं वाञ्छति ॥ २७१ ॥

**अतत्त्वानुपाती** यथा—(विक्र. १.८)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तप्रभः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ २७२ ॥

**उभयात्मको** यथा—(शाकु. २.९)

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन रचिता मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥२७३॥

**अनिर्णयान्तमिथ्यारूपो** यथा—(मेघ. १४)

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि—
र्दृष्टोच्छ्रायश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ २७४ ॥

**अमिथ्यारूपो** यथा— (किराता. १८.९)

**अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना ।**
**समधिरूढमजेन नु जिष्णुना स्विदिति वेगवशान्मुमुहे गणैः ।। २७५।।**

**उभयात्मको** यथा—(किराता. १६.१८)

**माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः ।**
**गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न शराः किराते ।। २७६।।**

**(१७. स्मरणम्)**

**सादृशादृष्टचिन्तादेरनुभूतपदार्थज्ञानोत्पत्तिः स्मरणम्।** तत् —

**सदृशाद्यथा**—(राच. १.१९)

**अदृश्यन्त पुरस्तेन खेलत्खञ्जनपङ्क्तयः ।**
**अस्मर्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः ।। २७७।।**

**अदृष्टाद्** यथा—(शाकु. ६.८)

**मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः ।**
**मनसिजेन सखे! प्रहरिष्यता धनुषि चूतशरश्च निवेशितः ।। २७८।।**

**चिन्ताया** यथा—(उराच. २.२७)

**पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां**
**विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।**
**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**
**निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ।। २७९।।**

आदिग्रहणा**त्परप्रयत्नतो** यथा—(शाकु. ६.२१)

**दर्शनपथमायाता साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ।। २८०।।**

स्वप्नस्मृतिः, प्रत्यभिज्ञानं च स्मरणमेव। तयोः —

**स्वप्नस्मृति**र्यथा—(विसा. १.१५)

**जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्**
**प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः ।**
**तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकै—**
**र्दृष्टा काप्यबला बलात् कृतवती सा मन्मथं मन्मथम् ।। २८१।।**

**प्रत्यभिज्ञानं** यथा—(उराच. ३.४०)

**गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः**
**सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः ।**
**स एवायं तस्यास्तदितारकरौपम्यसुभगो**
**मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ २८२॥**

**(१८. भ्रान्तिः)**

**विपर्ययज्ञानं भ्रान्तिः।** सा द्विधा— अतत्त्वे तत्त्वरूपा, तत्त्वे अतत्त्वरूपा च। अतत्त्वे तत्त्वरूपा त्रिधा— अबाधिता, बाधिता कारणबाधिता च। तासु—

**अबाधिता** यथा—(सक. ३.१०८)

**मोहविरमे सरोसं थोरत्थणमंडले सुरवहूणं ।**
**जेण करिकुंभसंभावणाइ दिट्ठी परिट्ठविआ ॥ २८३॥**

(मोहविरमे सरोषं स्थूलस्तनमण्डले सुरवधूनाम् ।
येन करिकुम्भसम्भावनया दृष्टिः परिस्थापिता ॥)

**बाधिता** यथा—(गास. ३.६३)

**हसिअं सहत्थतालं सुक्खवडं उवगएहि पहिएहि ।**
**पत्थप्फलसारिच्छे उड्डीणे पूसवंदस्सिं/म्मि ॥ २८४॥**

(हसितं सहस्ततालं शुष्कवटमुपगतैः पथिकैः ।
पत्रफलसदृक्षे उड्डीने शुकवृन्देऽस्मिन्/वृन्दे ॥)

**कारणबाधिता** यथा—(सक. ३.११०)

**कनककलशस्वच्छे राधापयोधरमण्डले**
**नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।**
**असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्**
**जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥ २८५॥**

तत्त्वे अतत्त्वरूपापि त्रिधा— हानहेतुः, उपादानहेतुः, उपेक्षाहेतुश्च। तासु—

**हानहेतुर्**यथा—(सक. ३.१११)

**सो मुद्धमओ मअतण्हिआहिं तह दूमि तुह आसाहिं/दूमिओ हआसाहिं ।**
**जह संभावमईण वि णईण परंमुहो जाओ ॥ २८६॥**

(स मुग्धमृगो मृगतृष्णिकाभिस्तथा दूनस्त्वदाशाभिः ।
यथा सद्भावमयीष्वपि नदीषु पराङ्मुखो जातः ॥)

**उपादानहेतुर्**यथा—(विक्रमो. ४.३९)

**समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा ।**
**अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः ।। २८७।।**

**उपेक्षाहेतुर्**यथा—(माघ. ३.५१)

**चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ।**
**मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ।। २८८।।**

भ्रान्तिमान्, भ्रान्तिमाला, उपमाभ्रान्तिः, भ्रान्त्यतिशयश्च भ्रान्तिरेव। तेषु —

**भ्रान्तिमान्** यथा—

**कपाले मार्जारः पय इति करॉंल्लेढि शशिन—**
**स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ।**
**रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति**
**प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ।। २८९।।**

**भ्रान्तिमाला** यथा—(सक. ३.११५)

**नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे**
**पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।**
**लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा**
**दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ।। २९०।।**

**उपमाभ्रान्तिर्**यथा—(विक्रमो. ४.७)

**हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।**
**च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ।। २९१।।**

**भ्रान्त्यतिशयो** यथा—(सक. ३.११७)

**दिश्याद् धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी**
**शाशाङ्की कलिका जलभ्रमिवशाद् द्राग्दृष्टनष्टा मुदम् ।**
**यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन् फणालीं मुहु—**
**र्मुह्यँल्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः ।। २९२।।**

अनध्यवसायोऽपि **भ्रान्तिरेव**। यथा—(सक. ३.११९)

**उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो—**
**स्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि तत् ।**

**ततः कुम्भौ पश्चाद् बिसकिसलये कन्दलमये**
**तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥ २९३॥**

यथा वा—(सक. ३.११८)

**विरहिणिजणह दअंतेण णावइ तक्खणि**
**छाइज्जइ अलिणिवहेहिं चेत्तेण चूअवणी ।**
**तह तासु वि मअरंदेहिं संदाणिअइ**
**जह ण क्लंबु ण अंबु ण जंबू जाणिअइ ॥ २९४॥**

(विरहिणीजनस्य दयमानेन प्रतिभाति ननु तत्क्षणे
छाद्यतेऽलिनिवहैश्चैत्रेण चूतवनी ।
तथा तास्वपि मकरन्दैः सन्दान्यते
यथा न कदम्बो नाम्रो न जम्बूर्ज्ञायते ।।)

(१९. उपमानम्)

**सदृशात् सदृशप्रतिपत्तिरुपमानम्।** यथा—

**तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।**
**समूहस्तारकाणां यः शकटाकारमाश्रितः ॥ २९५॥**

यथा वा—(मवीच.१.४५)

**सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष—**
**स्तत्संघट्टाद् विघटितबृहत्खण्डमुच्चण्डरोचिः ।**
**एवं वेगात् कुलिशमकरोद् व्योम विद्युत्सहस्रै—**
**र्भर्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥ २९६॥**

अभिनयो**ऽप्युपमानमेव**। यथा—(गास. ३.५७)

**वइविवरणिग्गअदलो एरंडो साहइ व्व तरुणाणं ।**
**एत्थ घरे हलिअबहू एद्दहमेत्तत्थणी वसइ ॥ २९७॥**

(वृतिविवरनिर्गतदल एरण्डः साधयतीव तरुणानाम् ।
अत्र गृहे हलिकवधूरेतावन्मात्रस्तनी वसति ।।)

एतेन प्रतिबिम्बमुद्रालेख्यादयो व्याख्याताः। तेषु —

**प्रतिबिम्बो** यथा—(कुसं. ८.११)

**दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।**
**वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥ २९८॥**

**मुद्रा** यथा—(किराता. १०.७)

**सचकितमिव विस्मयाकुलाभिः शुचिसिकतास्वतिमानुषाणि ताभिः ।**
**क्षितिषु ददृशिरे जिष्णोरुपहितकेतुरथाङ्गलाञ्छनानि ।। २९९।।**

**आलेख्यं** यथा—

**तवालेख्ये कौतूहलतरलतन्वीविरचिते**
**विधायैका चक्रं रचयति सुपर्णासुतमपि ।**
**अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा**
**करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ।। ३००।।**

**अथास्योपमाभेदः। को भेदः?**

उच्यते—'पदार्थयोर्गुणलेशेन सादृश्यप्रतिपत्तिरुपमा'। यदाह— (काव्याद. २.१४)

**यथाकथंचित् सादृश्यं यत्रोद्भूतं प्रतीयते ।**
**उपमां नाम तामाहुर्यथेन्दुरिव ते मुखम् ।। ३०१।।**

**उपमैव तिरोभूतभेदा रूपकमिष्यते ।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवम् ।। ३०२।।** (काव्याद. २.६६)

**यदप्रसिद्धौ सादृश्यमुक्तिभङ्गेन केनचित् ।**
**तत्सादृश्यं प्रकाराणामस्य संख्या न विद्यते ।। ३०३।।**

तद्यथा—(सक. ४.७१)

**दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः**
**सन्तश्चेदमृतं वृथा यदि खलास्तत्कालकूटेन किम् ।**
**किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया**
**संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ।। ३०४।।**

यथा वा—(रघु. २.६)

**स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।**
**जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ।। ३०५।।**

एवमन्येऽप्यन्योक्त्यादयो वक्तव्याः। ते चोभयालङ्कारे विशेषेणाग्रतो वक्ष्यन्ते। तेषूभयोः सादृश्यमिवादयः प्रतिपादयन्ति। इह तु सदृशेन सदृशः प्रतीयत इत्यस्ति भेदः।

(२०. अनुमानम्)

लिङ्गदर्शनाद् लिङ्गिज्ञानम् **अनुमानम्**। यथा—(रुद्रटा. ७.५७)

**सावज्ञमागमिष्यन् नूनं पतितोऽसि पादयोस्तस्याः ।**
**कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥ ३०६॥**

यथा वा—(रुद्रटा. ७.६०)

**अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।**
**अयमायातः कालो हन्त मृताः पथिकगेहिन्यः ॥ ३०७॥**

**कोऽस्य ज्ञापकाद् भेद इति चेदुच्यते**—'जानन्तं प्रयुङ्क्त इति ज्ञापकः; अनु पश्चान्मीयते अनेनेत्यनुमानम्। नन्विदमपि ज्ञापयति, सत्यम्। किंत्विदमजिज्ञासुमपि ज्ञापयति, स तु जिज्ञासुमेव। यथा—(गसा.६.४२)

**दीसइ ण चूअमउलं अत्ता ण अ वाइ मलअगंधवहो ।**
**एत्तं वसंतमासं सहि जं उक्कंठिअं चेअं ॥ ३०८॥**

(दृश्यते न चूतमुकुलमद्य न च वाति मलयगन्धवहः ।
एति वसन्तमासः सखि! यदुत्कण्ठितं चेतः ।।)

अथवा प्रमितिरूपं **फलमनुमानम्**। यथा—

**अइ सहि वक्कुलजाविरि, छुहिहिसि गोत्तस्स मत्थए छारं ।**
**अच्चंत—दत्त—दिट्ठेण सामि वलिस्ण हसिएण ॥ ३०८a॥**

(अयि सखि वक्रोल्लपनशीले क्षप्स्यरिन गोत्रस्य मस्तके क्षारम्।
अत्यन्तदत्तदृष्टेन सामि=अर्ध—वलितेन हसितेन।।)(द्र.जो.४०७)

**अंबाण मंजरी णिगअ त्तिअ कस्स णु कहेमि पोद्दाए ।**
**चित्तपरिअत्तणेण पुढमं अंहेहि विण्णाअं ॥ ३०९॥**

(आम्राणां मञ्जरी निर्गता इति कस्य नु कथयामि पुत्र्याः ।
चित्तपरिवर्त्तनेन प्रथममस्माभिर्विज्ञातम् ।।)(द्र.रा.पृ.६२१)

प्रमाणरूपो हेतु**र्ज्ञापकः**। यथा—(काव्याद. २.२४५)

**अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।**
**देहोष्मभिः सुबोधं ते सखि! कामातुरं मनः ॥ ३१०॥**

यदि वा उपात्तव्यापारोऽनुमानहेतुः यथा—(सक. २.२८)

**एतानि निस्सहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति पदानि तस्याः ।**
**एते च मार्गतरवः कथयन्ति तापमालम्बितोज्झितपरिग्लपितैः प्रवालैः ।।**

अनुपात्तव्यापारो **ज्ञापकः**। स त्रिधा—त्रिकालार्थविषयभेदात्। तेषु **भूतार्थविषयो** यथा—(काव्याद. २.१२)

**कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः ।**
**जटाभिः स्निग्धताम्राभिराविरासीद् वृषध्वजः ।। ३१२ ।।**

यथा वा—(माघ. १.७०)

**स बाल आसीद् वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।**
**युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ।। ३१३ ।।**

**वर्तमानार्थविषयो** यथा—(विसा. १.२३)

**पर्वग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा**
**वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।**
**किं च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो**
**देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ।। ३१४ ।।**

यथा वा—(सक. १.९०)

**मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं**
**चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर ।**
**लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान् दिवौकस्पते—**
**र्विश्रान्तःकरणैकचोर! तदपि ज्ञातं हरिः खल्वसि ।। ३१५ ।।**

**भविष्यदर्थविषयो** यथा—(मभा. २.३.१३)

**वाताय कपिला विद्युदातपायातिलोहिनी ।**
**पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ।। ३१६ ।।**

यथा वा—(विसा. १.३)

**गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः**
**कण्ठस्थाय विषाय वीर्यमहते पाणौ मणीन् बिभ्रती ।**
**भर्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा**
**रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ।। ३१७ ।।**

(२१. अर्थापत्तिः)

**प्रत्यक्षाद्यधिगतोऽर्थस्तथानुपपद्यमानोऽर्थान्तरं गमयतीत्यर्थापत्तिः।** यथा–

**निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।**
**अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥ ३१८॥** (काव्याद.२.२१८)

यथा वा–(सक. ३.१७१)

**एतदालोक्य लोलाक्षि रूपमप्रतिमं तव ।**
**कल्पयामः कलातत्त्वगुरुतामादिवेधसः ॥ ३१९॥**

(२२. अभावः)

**पदार्थानामविद्यमानता अभावः,** यथा– (सेब. ४.२०)

**सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरं ।**
**सुमरामि महणपुरओ अमुद्धअंदं च हरजडापब्भारं ॥ ३२०॥**
(स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरः ।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥)

यथा वा–(रघु. ८.६५)

**धृतिरस्तमिता रतिश्च्युता गलितं गेयमृतुर्निरुत्सवः ।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ ३२१॥**

(२३. आगमः)

आप्तवचन**मागमः**। यथा–

**न कश्चिदवमन्येत सर्वस्य शृणुयान्मतम् ।**
**बालस्याप्यर्थवद् वाक्यमुपयुञ्जीत पण्डितः ॥ ३२२॥**

यथा वा–(कुसं. ५.८३)

**निवार्यतामालि! किमप्यसौ वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतां विभाषते शृणोति तस्मादपि यः स पापभाक् ॥ ३२३॥**

(२४. प्रत्यक्षम्)

**ऐन्द्रियं मानसं वा ज्ञानं प्रत्यक्षम्।** यथा–(माघ. १०.३)

**क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।**
**स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ ३२४॥**

यथा वा—(मामा. १.४३)

**पश्यामि तामित इतश्च पुरश्च पश्चादन्तर्बहिः परित एव च वर्तमानाम् ।**
**उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्तितिर्यगपवर्तितदृष्टि वक्त्रम् ॥ ३२५॥**

**इमाश्चतुर्विंशतिरर्थसंश्रयाः पृथग्विभक्ताः कविभिः स्वलङ्क्रियाः ।**
**श्रुतीतिहासप्रभवान् विशेषतो महाप्रबन्धानुपकर्तुमीशते ॥ ३२६॥**

**अनेकधाऽयं कविभिश्चिरन्तनैः प्रपञ्चितो भामह—वामनादिभिः ।**
**यतोऽत्र जात्यादिरलंक्रियागणोऽभिधेयतस्तेन कृतो न विस्तरः ॥ ३२७॥**

**अथोभयालंकृतयो मनोहराः प्रपञ्चिता यद्यपि पूर्वसूरिभिः ।**
**तथापि तेभ्यः सविशेषमुच्यते स्वरूपमासामिह तन्निशम्यताम् ॥ ३२८॥**

## (३. उभयालङ्काराः —२४)

**शब्दविशेषद्वारकोऽर्थविशेषो येषु प्रतीयते ते उभयालङ्काराः।**

तेऽपि चतुर्विंशतिरेव। तद्यथा—

**उपमा, रूपकं, साम्यं, संशयः, समाधिः, समासोक्तिः, सहोक्तिः, समुच्चयः, तुल्ययोगिता, लेशः, अपह्नुतिः, अप्रस्तुतप्रशंसा, उत्प्रेक्षा, अर्थान्तरन्यासः, दीपकं, परिकरः, क्रमः, पर्यायः, अतिशयः, आक्षेपः, विशेषः, श्लेषः, भाविकः, संसृष्टिरिति।** तत्र —

### (१. उपमा)

प्रसिद्ध्यनुरोधेनार्थयोर्मिथः प्रतीयमानाभिधीयमानभूयोवयवसामान्ययोग **उपमा।**

सा त्रिधा— पदोपमा, वाक्योपमा प्रपञ्चोपमा च। तासु

**पदोपमा** द्विधा— समासोपमा, प्रत्ययोपमा च। तयोः

**समासोपमा** चतुर्धा— अन्तर्भूतेवार्था, अन्तर्भूतसामान्या, अन्तर्भूतोभयार्था सर्वसमासा चेति। तासु—

**प्रथमा** यथा—(रुद्रटा. ८.१८)

**मुखमिन्दुसुन्दरं ते बिसकिसलयकोमले भुजालतिके ।**
**जघनस्थली च सुन्दरि तव शैलशिलाविशालेयम् ॥ ३२९॥**

**द्वितीया** यथा—(गास. ३.१३)

**चन्दसरिसं मुहं से अमअसरिच्छो अ मुहरसो तिस्सा ।**
**सकअग्गहरहसुज्जलचुंबनअं कस्स सरिसं से ॥ ३३० ॥**

(चन्द्रसदृशं मुखं तस्या अमृतसदृक्षश्च मुखरसस्तस्याः ।
सकचग्रहरभसोज्ज्वलचुम्बनकं कस्य सदृशं तस्याः ॥)

**तृतीया** यथा—(सक. ४.३)

**कमलकरा रम्भोरू कुवलअणअणा मिअंकवअणा सा ।**
**कह णु णवचंपअंत्री मुणालबाहू पिआ तवइ(दहइ) ॥ ३३१ ॥**

(कमलकरा रम्भोरूः कुवलयनयना मृगाङ्कवदना सा ।
कथं नु नवचम्पकाङ्गी मृणालबाहुः प्रिया तपति(दहति) ॥)

**चतुर्थी** यथा—(रुद्रट. ८.२०)

**शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।**
**दहति मनः कथमनिशं रम्भागर्भाभिरामोरूः ॥ ३३२ ॥**

**प्रत्ययोपमापि** चतुर्धैव।

प्रत्ययो हि कश्चिदुपमेये, कश्चिदुपमाने, कश्चित्सामान्ये, कश्चिदिवार्थे विधीयते। तत्र,

**उपमेये** यथा—(सक. ४.५)

**हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।**
**खरनादी मयूरोऽपि त्वं चेद् वदसि वाग्मिनि! ॥ ३३३ ॥**

**उपमाने** यथा—(सक. ४.६)

**पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।**
**चक्रदेशीयजघना सा स्वप्नेऽपि न दृश्यते ॥ ३३४ ॥**

**सामान्ये** यथा—(सक. ४.७)

**सूर्यीयति सुधारश्मिरनाथति मृतायते ।**
**मृतस्य कान्ताविरहे स्वर्गोऽपि नरकीयति ॥ ३३५ ॥**

**इवार्थे** यथा—(सक. ४.८)

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ३३६ ॥** (उपनिषद्)

**वाक्योपमा**पि द्विधा– पदार्थयोर्वाक्यार्थयोश्च। तत्र–

**पदार्थयो**श्चतुर्धा– पूर्णा, लुप्ता, लुप्तपूर्णा, पूर्णलुप्ता चेति। तत्र–
उपमानोपमेयसामान्यधर्मद्योतकानां चतुर्णामपि प्रयोगे **पूर्णा**। यथा–(रुद्रटा. ८.६)

**कमलमिव चारु वदनं मृणालमिव कोमलं भुजायुगलम् ।**
**अलिमालेव च नीला तवैव मदिरेक्षणे कबरी ।।३३७।।**

सामान्यधर्मद्योतकलोपे **लुप्ता**। यथा–(काव्याद. २.३६)

**न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।**
**न केसराणि कान्ताया इमास्ता दन्तपङ्क्तयः ।। ३३८।।**

सामान्यधर्मलोपे **लुप्तपूर्णा**। यथा–(काव्याद. २.१६, सक. ४.११)

**राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।**
**रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ।। ३३९।।**

द्योतकलोपे **पूर्णलुप्ता**। यथा–(काव्याद. २.१९३, सक. ४.१२)

**त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी ।**
**कोमलापाटलौ तन्वि! पल्लवश्चाधरश्च ते ।। ३४०।।**

**वाक्यार्थयोरपि** चतुर्धैव।

एकेवादिशब्दा, अनेकेवादिशब्दा, अनिवादिशब्दा असादृश्या च। तत्र–
**एकेवादिशब्दा** यथा–(रघु. ६.६०)

**पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।**
**आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ।। ३४१ ।।**

**अनेकेवशब्दा** यथा–(काव्याद. २.४५)

**नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।**
**मया मधुव्रतेनेव पायम्पायमरम्यत ।। ३४२।।**

**अनिवादिशब्दा** यथा–(काव्याद. २.४९)

**दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।**
**असुरास्तेन हन्यन्ते सावलेपा नृपास्त्वया ।। ३४३।।**

**असादृश्या** यथा–(माघ. १६.५२)

**प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा ।**
**न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ।। ३४४।।**

वाक्योपमाया एव प्रकारः **प्रपञ्चोपमा**।

सापि द्विधा— प्रकृतरूपा विकृतरूपा च। तयोः

प्रकृतरूपा चतुर्धा— समस्तोपमा, एकदेशोपमा, मालोपमा रशनोपमा च। तासु

**समस्तोपमा** यथा—(रुद्रटा. ८.३०)

**अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते।**
**भान्ति लता ललना इव पाणिभिरिव किसलयैः सपदि ॥ ३४५॥**

**एकदेशोपमा** यथा—(रुद्रटा. ८.३१)

**कमलदलैरधरैरिव दशनैरिव केसरैर्विराजन्ते।**
**अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः ॥३४६॥**

**मालोपमा** यथा—(सेब. १.४८)

**सोह व्व लक्खणमुहं वणमाल व्व विअडं हरिवइस्स उरम्।**
**कित्ति व्व पवणतणअं, आण व्व बलाइँ से विलग्गइ दिदठी ॥ ३४७॥**
(शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः।
कीर्त्तिरिव पवनतनयमाज्ञेव बलान्यस्यतस्य विलगति दृष्टिः ।।)

**रशनोपमा** यथा—(रुद्रटटीका ८.२८)

**चन्द्रायते शुक्लरुचाथ हंसो हंसायते चारुगतेन कान्ता।**
**कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ ३४८॥**

**विकृतरूपापि** चतुर्धैव— विपर्यासोपमा, उभयोपमा, उत्पाद्योपमा, अनन्वयोपययोपमा च। तासु —

**विपर्यासोपमा** यथा—(रत्ना.)

**यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं**
**मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।**
**येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता—**
**स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षमयते ॥ ३४९॥**

**उभयोपमा** यथा—(काव्याद. २.१८)

**त्वदाननमिवाम्भोजमम्भोजमिव ते मुखम्।**
**निलीनां नलिनीखण्डे कथं नु त्वां लभेमहि ॥ ३५०॥**

**उत्पाद्योपमा** यथा—

**सुवृत्तमुक्ताफलजालचित्रकं भवेदखण्डं यदि चन्द्रमण्डलम् ।**
**श्रमाम्बुबिन्दूत्तरशोभि तारकं ततो मुखं तेन तवोपमीयते ॥ ३५१ ॥**

**अनन्वयोपमा** यथा—(काव्याद. २.२५९)

**त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।**
**त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥ ३५२ ॥**

**(२. रूपकम्)**

उपमैवोत्पन्नसादृश्यात् तिरोभूतभेदा **रूपकम्**। तत् षोढा—
शब्दप्रधानम्, अर्थप्रधानम्, उभयप्रधानं, सावयवं, निरवयवं, सङ्कीर्णं च। तेषु

**शब्दप्रधानं** चतुर्विधम्— समस्तम्, असमस्तं, समस्तव्यस्तं, रूपकरूपकं च। तत्र

**समस्तं** यथा—(काव्याद. २.२५९)

**पाणिपद्मानि भूपानां संकोचयितुमीशते ।**
**त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥ ३५३ ॥**

**असमस्तं** यथा—(काव्याद. २.६७)

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।**
**बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ३५४ ॥**

**समस्तव्यस्तं** यथा—

**स्मितं मुखेन्दौ ज्योत्स्ना ते प्रभाम्बु कुचकुम्भयोः ।**
**दोर्लतापल्लवे पाणौ पुष्पं सखि नखार्चिषः ॥ ३५५ ॥**

**रूपकरूपकं** यथा—(काव्याद. २.९३)

**मुखपङ्कजरङ्गेऽस्मिन् भ्रूलता नर्तकी तव ।**
**लीलानाट्यामृतं दृष्टौ सखि! यूना निषिञ्चति ॥ ३५६ ॥**

**अर्थप्रधानं** चतुर्धा— समस्तविषयम्, एकदेशविषयं, युक्तिमत् अयुक्तं च। तत्र

**समस्तविषयं** यथा—(काव्याद. २.६९)

**ताम्राङ्गुलिदलश्रेणिनखदीधितिकेसरम् ।**
**ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ३५७ ॥**

**एकदेशविषयं** यथा—(काव्याद. २.७१)

**अकस्मादेव ते चण्डि! स्फुरिताधरपल्लवम् ।**
**मुखं मुक्तारुचो धत्ते घर्माम्भः—कणमञ्जरीः ॥ ३५८॥**

**युक्तिमद्** यथा—(काव्याद. २.७७)

**स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।**
**न कस्यनन्दनं सुभ्रु! सुरभिश्वसितानिलम् ॥ ३५९॥**

**अयुक्तं** यथा—(काव्याद. २.७८)

**इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।**
**जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते ॥ ३६०॥**

**उभयप्रधानं** चतुर्धा— शुद्धं, सविशेषणं, रशना माला च। तत्र

**शुद्धं** यथा—

**वेल्लितभ्रु गलद्घर्मजलमालोहितेक्षणम् ।**
**विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ३६१॥**

**सविशेषणं** यथा—(काव्याद. २.८१)

**हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।**
**जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ३६२॥**

**रशना** यथा—(रुद्रटा. ८.५०)

**किसलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति ।**
**नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ३६३॥**

**माला** यथा—(उ.रा.च. १.३८)

**इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो—**
**रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।**
**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः**
**किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ३६४॥**

**सावयवं** चतुर्धा— सहजावयवम्, आहार्यावयवम्, उभयावयवं विषमं च।

**सहजावयवं** यथा—

**पप्फुरिअउठ्ठदलअं तक्खणविगलिअरुहिरमहुविच्छड्डु ।**
**उक्खडिदअंठणालं पडिअं फुडदसणकेसरं मुहकमलं ॥ ३६५॥**

(प्रस्फुरितोष्ठदलं तत्क्षणविगलितरुधिरमधुविच्छर्दम् ।
उत्खण्डितकण्ठनालं पतितं स्फुटदशनकेसरं मुखकमलम् ।।)

**आहार्यावयवं** यथा—

**तो कुंभअण्णपडिवअणदंडपडिघट्टिआमरिसघोरविसो ।**
**गलिअंसुअणिम्मोओ जाओ भीसणअरो दसाणणभुअओ ।। ३६६ ।।**

(ततः कुम्भकर्णप्रतिवचनदण्डपरिघट्टितामर्षघोरविषः ।
गलितांशुकनिर्मोको जातो भीषणनरो दशाननभुजगः ।।)

**उभयावयवं** यथा—(रुद्रटटीका ८.४३)

**यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेति ग्रहो**
**नित्यत्वस्मृतिरङ्कुरः सुतसुहृद्ज्ञात्यादयः पल्लवाः ।**
**स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः**
**सा मे तवच्चरणार्हणापरशुना तृष्णालता लूयताम् ।। ३६७ ।।**

**विषमं** यथा—(काव्याद. २.८०)

**मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।**
**नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ।। ३६८ ।।**

**निरवयवं** चतुर्धा— साधारं, निराधारं, परम्परितं व्यतिरेकवच्च।

**साधारं** यथा—(सेब. १.२२)

**सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो ।**
**तारामुत्तावअरो फुडविहडिअमेहसिप्पिसंपुडविमुक्को ।। ३६९ ।।**

(शोभते विशुद्धकिरणो गगनसमुद्रे रजनीवेलालग्नः ।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसंपुटविमुक्तः ।।)

**निराधारं** यथा—

**वणराइकेसहत्था कुसुमाउहसुरहिसंचरंतधअवडा ।**
**ससिअरमुहुत्तमेहा तमपडिहत्था विणेंत्ति धूमुप्पीडाः ।। ३७० ।।**

(वनराजिकेशहस्ताः कुसुमायुधसुरभिसंचरद्ध्वजपटाः ।
शशिकरमुहूर्तमेघास्तमः—प्रतिहस्ता विनिर्यन्ति धूमोत्पीडाः ।।)

**परम्परितं** यथा—

**ववसाअरइपओसो.** (सेब. १.१४; द्र. पृ.३३९)

**व्यतिरेकवद्** यथा—(शाकु. २.१०)

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—**
**रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ।। ३७१ ।।**

**सङ्कीर्णं** चतुर्धा— सावयवसङ्कीर्णं, निरवयवसङ्कीर्णम्, उभयसङ्कीर्णं, श्लेषान्वितं च।

**सावयवसङ्कीर्णं** यथा—(सेब. १.१७)

**रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअं ।**
**महुमहदंसणजोग्गं पिआमहुप्पत्तिपंकअं व णहअलं ।। ३७२।।**
(रविकरकेसरनिवहं शोभते धवलाभ्रदलसहस्रपरिगतम् ।
मधुमथनदर्शनयोग्यं पितामहोत्पत्तिपङ्कजमिव नभःस्थलम् ।।)

**निरवयवसङ्कीर्णं** यथा—

**दीहो दिअहभुअंगो/विअसंतो रइबिंबफणामणिप्पहं पइरंतो ।**
**अवरसमुद्दमुवगओ मुंचंतो कंचुअं व घम्मअ—आअवणिवहं ।। ३७३।।**
(दीर्घो दिवसभुजङ्गो रविबिम्बफणामणिप्रभां प्रकिरन्/विकसमानः ।
अपरसमुद्रमभिगतो मुञ्चन् कञ्चुकमिव धर्म/आतपनिवहम् ।।)

**उभयसङ्कीर्णं** यथा—(सेब. १.१९)

**धुअमेहमहुअराओ घणसमआअड्ढिओणअविमुक्काओ ।**
**णहपाअअसाहाओ णिअअट्ठाणं व पडिगआओ दिसाओ ।। ३७४।।**
(धुतमेघमधुकरा घनसमयाकृष्टावनतविमुक्ताः ।
नभःपादपशाखा निजकस्थानमिव प्रतिगता दिशः ।।)

**श्लेषान्वितं** यथा—(सेब. १.२४)

**पीणपओहरलग्गं दिसाणं पवसंतजलअसमअविइण्णं ।**
**सोहग्गपढमइण्हं पम्माअइ/पव्वाअइ सरसणहवअं इंदधणुं ।। ३७५।।**
(पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम् ।
सौभाग्यप्रथमचिह्नं प्रम्लायति/प्रशुष्यति सरसनखपदमिन्द्रधनुः ।।)

(३. साम्यम्)

**प्रसिद्धसाधर्म्याभावे द्योतकाभावे उभयाभावे वा उक्तिचातुर्यादौपम्यप्रतीतिः साम्यम्।** सा त्रिधा– प्रसिद्धसाधर्म्याभावः, द्योतकाभावः, उभयाभावः। तत्र

**प्रसिद्धसाधर्म्याभावे** यथा–(रघु. ६.६७)

**संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ३७६॥**

**द्योतकाभावे** यथा–

**नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु।**
**ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ ३७७॥**

**उभयाभावे** यथा–(स.क. ३.१८४)

**न मर्त्यलोकस्त्रिदिवात् प्रहीयते म्रियेत नाग्रे यदि वल्लभो जनः।**
**निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति ॥ ३७८॥**

अस्य च साम्योत्कर्षादिभिरनन्त उक्तिप्रपञ्चः। साम्येन यथा–(शाकु. १.१६)

**शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।**
**दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ ३७९॥**

**उत्कर्षेण** यथा–(बारा. २.१७)

**तद् वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा**
**तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद् गिरो धिङ् मधु।**
**हा कन्दर्पधनुर्भुवौ च यदि ते किं वा बहु ब्रूमहे**
**यत्सत्यं पुनरुक्तवस्तुविरसः' सर्गक्रमो वेधसः ॥ ३८०॥**

**साम्योत्कर्षाभ्यां** यथा–(विसा. ३.२७)

**तरङ्गय दृशोऽङ्गने! पततु चित्रमिन्दीवरं**
**स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्।**
**क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका–**
**मुदञ्चय मनाङ् मुखं भवतु च द्विचन्द्रं नभः ॥ ३८१॥**

**उपमेयापकर्षेण** यथा–(रुद्रटा. ८.७८)

**गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं भद्रे!।**
**सन्तीदृशानि दिशि सरःसु ननु नीलनलिनानि ॥ ३८२॥**

**उपमानापकर्षेण** यथा—

**एक्कोण्णामिअमुअभंगे विमलकवोले**
**वअणम्मि तुअ मअच्छि तिरिञ्छणअणे ।**
**एहु ससिबिबउ कलंगगारउ पण्डर उखित्तउ**
**उप्परेण भमाइ अणिमञ्छणखप्परउ ॥३८३॥**

(एकोन्नामितभ्रूभङ्गे विमलकपोले
वदने तव मदाक्षि तिर्यङ्नयने ।
एतच्छशिबिम्बं कलङ्कागारं पाण्डरमुत्क्षिप्त—
मुपरि भ्रामयित्वा निर्मञ्छनकर्परम् ॥)

**उभयापकर्षेण** यथा—(गा.स. १.१३)

**घरिणीए महाणसकम्मलग्गमसिमलिइ/मइलि—एण हत्थेण ।**
**छित्तं मुहं हसिज्जइ, चंदावत्थं गअं पइणा ॥ ३८४॥**

(गृहिण्या महानसकर्मलग्नमषीमलिनितेन/मलिनेन हस्तेन ।
स्पृष्टं मुखं हस्यते चन्द्रावस्था गतं पत्या ॥)

**उपमानस्य साम्यापकर्षो** यथा—

**अन्यतो नय मुहूर्तमाननं चन्द्र एष सरले! कलामयः ।**
**मा कदाचन कपोलयोर्मलं संक्रमय्य समतां नेष्यति ॥ ३८५॥**

**अनुत्कर्षापकर्षं** यथा—(रुद्रटा. ८.१०८)

**मृगं मृगाङ्कः सहजं कलङ्कं बिभर्ति तस्यास्तु मुखं कदाचित् ।**
**आहार्यमेकं मृगनाभिपत्रमियानशेषेण तयोर्विशेषः ॥ ३८६॥**

एवमन्यदपि यथा—(रुद्रटा. ८.७३)

**किं मरणं! दारिद्र्यं, को व्याधिर्जीवितं दरिद्रस्य ।**
**कस्स्वर्गः! सन्मित्रं, सुकलत्रं, सुप्रभुः, सुसुतः, ॥ ३८७॥**

**(४. संशयः)**

उपमानोपमेययोः अत्यन्तसादृश्यात् सन्देहः **संशयः**। यथा—(स.क. ४.७५)

**वाली भंभुरभोली उल्लसिअ णिअंसिणी**
**गहणं सुणिअ विनिक्कन्ता णिद्दाए भेम्भली ।**
**राहु वि तीअ मुहु जोहई पुणु जोहई गंअणु**
**भुल्लल्लेओ ण हु आणई दोण्हवि चन्दुकं वणु ॥ ३८८॥**

(बाला अतीव मुग्धा स्खलितनिवसना
ग्रहणं श्रुत्वा विनिष्क्रान्ता निद्रया विह्वला।
राहुरपि तस्या मुखं पश्यति पुनः पश्यति गगनं
भ्रान्तिमान् न खलु जानाति द्वयोश्चन्द्रः कः ।।)

यथा वा—(सक. ४.७९)

**मुहे मअखलिउल्लावे ण्हाणोल्लए चिउरे**
**वेणीअंसणसारे समोत्तिअहारे उरे।**
**कालान्तरे तरलाच्छिहु मअणु/ण समुल्लसइ**
**माहउ पुणु त्थणगुडरे ण मुणइ कहिं वसइ ।। ३८९।।**

(मुखे मदस्खलितोल्लापे स्नानोत्प्लुते चिकुरे
वेणीनिवसनसारे समौक्तिकहारे उरसि।
कालान्तरे तरलाक्ष्णोर्मदनः समुल्लसति
माघे पुनः स्तनगृहे न ज्ञायते कुत्र वसति ।।)

**(५. समाधिः)**

**अन्यधर्माणामन्यत्रारोपणं समाधिः।**

यथा—(सक. ५.३५७)

**अवऊहिअपुब्बदिसे समअं जोण्हाए सेविअपओसमुहे।**
**माइ ण झिज्जउ रअणी वरदिसाइतपच्छिअम्मि मिअङ्के ।। ३९०।।**

(अवगूहितपूर्वदिशे समकं ज्योत्स्नया सेवितप्रदोषमुखे।
मातर्न क्षीयते रजनी अपरदिशाभिमुखप्रस्थिते मृगाङ्के ।।)

यथा वा—

**वल्लहे लहु वोलन्तइ पत्तइ पुणु बहु बलि**
**किज्जमि तामरसिणि तुज्झ रोसहु थिरहु।**
**जेण णिरग्गलु जम्पइ किम्पि ण जाव जणु**
**ताव हिमेण विसित्ति झत्थि पुलुट्ठतनु ।। ३९१।।**[१]

(वल्लभे लघु व्यपक्रामत्यागच्छति पुनर्बहु बलिः
क्रिये तामरसानि तव रोषस्य स्थिरस्य।
येन निरर्गलं जल्पति किमपि न यावज्जन—
स्तावद्धिमेन विशीर्णा झटिति प्लुष्टतनुः ।।)

---

१. अत्र राघवः—'मातृकासु भूयसा अपपाठः।' इति। साधु। मूलं तु किमाधृतमिति ज्ञेयम्।

मेलितमपि **समाधिरेव**। यथा–

**देहो व्व पडइ दिअहो कण्ठच्छेओ व्व लोहिओ होइ रई ।**
**गलइ रुहिरं व्व संझा घोलइ केसकसणं सिरम्मिअ तिमिरं ।। ३९२।।**
(देह इव पतति दिवसः कण्ठच्छेद इव लोहितो भवति रविः ।
गलति रुधिरमिव सन्ध्या घूर्णते केशकृष्णं शिर इव तिमिरम् ।।)

यथा च–(७.५७, १०.४१७) **पल्लविअं विअ करपल्लवेहिं ।। ३९३।।**

**(६. समासोक्तिः)**

**उपमानोपमेययोरत्यन्तप्रसिद्धेरुपमानेनैव संक्षेपतोऽभिधानं समासोक्तिः।**

सा द्विधा – अभिधीयमानसादृश्या, प्रतीयमानसादृश्या च। तयोः–

**अभिधीयमानसादृश्या** यथा–

**नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचि–**
**र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः ।**
**आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषागमे/करे**
**यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ।। ३९४।।**

यथा च–(बारा. १.४२)

**इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव**
**प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा ।**
**पारुष्यं कलया च कोकिलवधूकण्टेष्विव प्रस्तुतं**
**सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ।। ३९५।।**

**प्रतीयमानसादृश्या** यथा–

**उत्तुङ्गे कृतसंश्रयस्य शिखरिण्युच्चावचग्रावणि**
**न्यग्रोधस्य किमङ्ग तस्य वचसा श्लाघासु पर्याप्यते ।**
**बन्धुर्वा स पुराकृतः किमथवा सत्कर्मणां संचयो**
**मार्गे रूक्षविपत्रशाखिनि जनो यं प्राप्य विश्राम्यति ।। ३९६।।**

यथा च–(भ.श. ३९)

**किं जातोऽसि चतुष्पथे यदि घनच्छायोऽसि किं छायया**
**संपन्नः फलितोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः ।**
**हे सद्वृक्ष! सहस्व सम्प्रति सखे शाखाशिखाकर्षण–**
**क्षोभामोटनभञ्जनानि जगतः स्वैरेव दुश्चेष्टितैः ।। ३९७।।**

(७. सहोक्ति:)

**द्रव्यगुणाक्रियादीनां सहाभिधानं सहोक्तिः।**

सा द्विधा– सादृश्यवती, असादृश्यवती च तयो:

**आद्या (सादृश्यवती)** यथा–(सेब. २.१४)

**धीरं व जलसमूहं तिमिणिवहमिव सपक्खपव्वअलोअं ।**
**णइसोत्ते व्व तरङ्गे रअणाइ व गरुअगुणसआइ वहहंतं ॥ ३९८॥**

(धैर्यमिव जलसमूहं तिमिनिवहमिव सपक्षपर्वतलोकम् ।
नदीस्रोतांसीव तरङ्गान् रत्नानीव गुरुकगुणशतानि वहन्तम् ॥)

द्वितीया **(असादृश्यवती)** यथा–(सेब. ५.७)

**धीरेण समं जामा हिअएण समं अहिट्ठिआ उवएसा ।**
**उच्छाहेण सह भुआ बाहेण समं गलन्ति से उल्लावा ॥ ३९९॥**

(धैर्येण समं यामा हृदयेन सममनिष्ठिता उपदेशा: ।
उत्साहेन सह भुजौ बाष्पेण समं गलन्त्यस्योल्लापा: ॥)

(८. समुच्चयोक्ति:)

**द्रव्यगुणक्रियाणामेकत्र बहूनामारोपणं समुच्चयोक्तिः।**

सा चतुर्धा– एकद्योतका, अनेकद्योतका, एकानेकद्योतका, अद्योतका च।

**एकद्योतका** यथा–

**कला: प्रलापा गतयो मदालसा विशुद्धविस्रम्भरसा: समागमा: ।**
**तदङ्गनानां रमणीयतां ययुर्विसर्पिलज्जाविभवाश्च विभ्रमा: ॥ ४००॥**

**अनेकद्योतका** यथा–

**अप्राकृतस्स कथमस्तु न विस्मयाय यस्मिन्नुवास करुणा च कृतज्ञता च ।**
**लक्ष्मीश्च सात्त्विकगुणोज्ज्वलितं च तेजो धर्मश्च मानविनयौ च पराक्रमश्च॥४०१॥**

**एकानेकद्योतका** यथा–

**विचिन्त्यमानं मनसाऽपि देहिनामिदं हि लोकेषु चकास्ति दुर्लभम् ।**
**निशा सचन्द्रा मदिरा च सोत्पला प्रियानुरागोऽभिनवं च यौवनम् ॥ ४०२॥**

**अद्योतका** यथा–

**पुरं त्रिकूटं परिखा पयोनिधि: प्रभुर्दशास्य: सुभटा निशाचरा: ।**
**नरोऽभियोक्ता रिपव: प्लवङ्गमा: किमत्र वो हास्यपदे महद् भयम् ॥ ४०३॥**

(९. तुल्ययोगिता)

**विवक्षितगुणोत्कर्षैः स्तुतिनिन्दार्थं सहाभिधानं तुल्ययोगिता।** सा **स्तुत्यर्था** यथा—(काव्याद. ३.२८)

**शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।**
**यदलङ्घितमर्यादाश्चलन्तीं बिभृथ क्षितिम् ॥४०४॥**

**निन्दार्था** यथा—(काव्याद. २.३३२)

**सङ्गतानि मृगाक्षीणां तटिद्विलसितानि च ।**
**क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ ४०५॥**

(१०. लेशः)

**दोषस्य गुणीभावो गुणस्य च दोषीभावो लेशः।** तत्र **दोषस्य गुणीभावो** यथा—(काव्याद. २.२७१)

**चपलो निर्दयश्चासौ जनः किं तेन मे सखि! ।**
**आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥४०६॥**

**गुणस्य दोषीभावो** यथा—(काव्याद. २.२६९)

**युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।**
**रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥४०७॥**

**व्याजस्तुतिरपि** लेश एव। यथा—(काव्याद. २.३४५)

**पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।**
**राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते ॥४०८॥**

यथा च—

**इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि—**
**र्दिङ्नागानां घनमदमषीभाञ्जि गण्डस्थलानि ।**
**अद्याप्युर्वीवलयतिलक! श्यामलिम्नानुलिप्ता—**
**न्याभासन्ते वद धवलितं किं त्वदीयैर्यशोभिः ॥४०९॥**

(११. अपह्नुतिः)

**पदार्थापलापोऽपह्नुतिः।**

सा द्विधा— औपम्यवती, अनौपम्या च।

**औपम्यवती** यथा—(गास. १.७०)

**गिह्मे दवग्गिमसिमइलिआइँ दीसंति विंझसिहराइं ।**
**आससु पउत्थवइए ण होंति णवपाउसब्भाइं ।। ४१० ।।**

(ग्रीष्मे दवाग्निमषीमलिनानि दृश्यन्ते विन्ध्यशिखराणि ।
आश्वसिहि प्रोषितपतिके! न भवन्ति नवप्रावृडभ्राणि ।।)

यथा च—

**न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।**
**तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विजृम्भते ।। ४११ ।।**

**अनौपम्या** यथा—(काव्याद. २.२६६)

**राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।**
**अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम् ।। ४१२ ।।**

यथा च—(काव्याद. २.३६७)

**आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।**
**अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम् ।। ४१३ ।।**

**(१२. अप्रस्तुतप्रशंसा)**

**अस्तोतव्यस्याभिनन्दनमप्रस्तुतप्रशंसा।** यथा—

**कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।**
**धनिषु न दैन्यं विदधति ते किल पशवो, वयं सुधियः ।। ४१४ ।।**

यथा वा—

**पङ्गो! वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां**
**धन्योऽन्ध! त्वं धनमदवतां नेक्षसे यो मुखानि ।**
**श्लाघ्यो मूक! त्वमपि कृपणं स्तौषि नार्थाशया यः**
**स्तोतव्यस्त्वं बधिर! न गिरं यः खलानां शृणोषिः ।। ४१५ ।।**

**(१३. उत्प्रेक्षा)**

**अन्यथावस्थितस्यान्यथोत्प्रेक्षणम् उत्प्रेक्षा।**

सा त्रिधा— द्रव्यविषया, गुणविषया, क्रियाविषया च। तत्र—

**द्रव्यविषया** यथा—

देहस्था दर्पणे यस्य पश्यति प्रतिमामुमा ।
अन्यार्धार्धमिवोत्पन्नमर्धनारीश्वरान्तरम् ॥४१६॥

**गुणविषया** यथा–

पल्लविअं विअ करपल्लवेहिं॥४१७॥ (१०.३९३ इहैव)

**क्रियाविषया** यथा–

सेनागजाः स्वकरपुष्करलेखनीभिर्गण्डस्थलान्मदमषीं मुहुराददानाः ।
मन्ये नरेन्द्र! तव तोयधितीरतालीपत्रोदरेषु विजयस्तुतिमालिखन्ति ॥४१८॥

मतमुत्प्रेक्षोपमोत्प्रेक्षावयवश्च **उत्प्रेक्षैव**। तेषु–

**मतं** यथा–

यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः शश इति, न तन्मां प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहक्लान्ततरुणी–
कटाक्षोल्कापात–व्रण–किण–कलङ्काङ्कित–तनुम् ॥४१९॥

**उत्प्रेक्षोपमा** यथा–(भामहा. २.९२)

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धामरण्यानीं पश्यतीव विभावसुः ॥४२०॥

**उत्प्रेक्षावयवो** यथा–(कुसं. ८.५३)

अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥४२१॥

## (१४. अर्थान्तरन्यासः)

वस्तूपन्यस्य तत्साधनसमर्थस्य वस्तुनोऽयस्य न्यसन**मर्थान्तरन्यासः**।
स त्रिधा– साधर्म्येण, वैधर्म्येण, विपर्ययेण च।

**साधर्म्येण** यथा–(काव्याद. २.१७३)

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥४२२॥

**वैधर्म्येण** यथा–(किराता. ८.३७)

प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

**विपर्ययेण** यथा–(गास. १.१००)

**जो जस्स हिअअदइओ दुक्खं देंतो वि सो तहा तस्स/सुहं देइ ।**
**दइअणहदूमिआणं वि वड्ढइ थणाणँ रोमञ्चो ॥४२४॥**
(यो यस्य हृदयदयितो दुःखं दददपि स तथा तस्य/सुखं ददाति ।
दयितनखदूनयोरपि वर्धते स्तनयो रोमाञ्चः ॥)

उभयन्यासः, प्रत्यनीकन्यासः, प्रतीकन्यासोऽपि **चार्थान्तरन्यास** एव। तत्र

**उभयन्यासो** यथा–(सेब. ३.९)

**ते विरला सप्पुरिसा जे अभणंता घडंति कज्जालावे ।**
**थोअ च्चिअ ते वि दुमा जे अमुणिअकुसुमणिग्गमा देंति फलं ॥४२५॥**
(ते विरलाः सत्पुरुषा येऽभणन्ता घटयन्ति कार्यालापान् ।
स्तोका एव तेऽपि द्रुमा येऽज्ञातकुसुमनिर्गमा ददति फलम् ॥)

**प्रत्यनीकन्यासो** यथा–

**विरला उवआरि च्चिअ णिरवेक्खा जलहर व्व वट्टंति ।**
**झिज्जंति ताण विरहे विरल च्चिअ सरिप्पवाह व्व ॥४२६॥**
(विरला उपकारिण एव निरपेक्षा जलधरा इव वर्तन्ते ।
क्षीयन्ते तेषां विरहे विरला एव सरित्प्रवाहा इव ॥)

**प्रतीकन्यासो** यथा–(शाकु. ३.१)

**का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।**
**हुङ्कारेणेव धनुषः स हि विघ्नानपोहति ॥४२७॥**

## (१५. दीपकम्)

जात्यादिवाचिना पदेन सर्ववाक्योपकारो **दीपकम्**।

तत्त्रिधा– क्रियादीपकं, कारकदीपकं, मालादीपकं च। तत्र–

**क्रियादीपकं** यथा–(काव्याद. २.१०६)

**त्वया कर्णोत्पलं कर्णे स्मरेणास्त्रं शरासने ।**
**मया च मरणे चेतस्त्रयमेतत् समं कृतम् ॥४२८॥**

**कारकदीपकं** यथा–(काव्याद. २.९८)

**पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।**
**स एव च नताङ्गीनां मानभङ्गाय कल्पते ॥४२९॥**

**मालादीपकं** यथा—

**इमिणा सरएण ससी ससिणा वि णिसा णिसाइ कुमुअवणं ।**
**कुमअवणेण अ पुलिणं पुलिणेण अ सोहए हंसउलं ।।४३०।।**
(अनया शरदा शशी शशिनापि निशा निशाया कुमुदवनम् ।
कुमुदवनेन च पुलिनं पुलिनेन च हसति हंसकुलम् ।।)

आवृत्तिरपि **दीपकमेव**। सापि त्रिधा – शब्दावृत्तिरर्थावृत्तिरुभयावृत्तिश्च।

**शब्दावृत्ति**र्यथा—(काव्याद. २.११८)

**उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् ।**
**यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ।।४३१।।**

**अर्थावृत्ति**र्यथा—

**हृष्यति चूतेषु चिरं तुष्यति बकुलेषु मोदते मरुति ।**
**इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामी ।।४३२।।**

**उभयावृत्ति**र्यथा—(मामा. ९.४)

**जय देव! भुवनभावन! जय भगवन्! निखिलवरद! निगमनिधे! ।**
**जय चारुचन्द्रशेखर! जय मदनान्तक! जयादिगुरो! ।।४३३।।**

(१६. **परिकरः** (एकावली च) )

**क्रियापदादीनामुपस्कारः परिकरः।**

स त्रिधा— क्रियापरिकरः, कारकपरिकरः, वस्तुपरिकरश्च।

**क्रियापरिकरो** यथा—(सेब. ४.५७)

**ववसिअणिवेइअत्थो सो मारुइलद्धपच्चआगअहरिसं ।**
**सुग्गीवेण उरत्थलवणमालामलिअमहुअरं उवऊढो ।।४३४।।**
(व्यवसितनिवेदितार्थः स मारुतिलब्धप्रत्ययागतहर्षम् ।
सुग्रीवेणोरःस्थलवनमालामृदितमधुकरमुपगूढः ।।)

**कारकपरिकरो** यथा—(सेब. ११.५४)

**पडिआ अ हत्थसिढिलिअणिरोहपंडरसमूससंतकवोला ।**
**पेल्लिअवामपओहरविसमुण्णअदाहिणत्थणी जणअ—सुआ ।।४३५।।**
(पतिता च हस्तशिथिलितनिरोधपाण्डुरसमुच्छ्वसत्कपोला ।
प्रेरित/पीडितवामपयोधरविषमोन्नतदक्षिणस्तनी जनकसुता ।।)

**वस्तुपरिकरो** यथा—

**देवी पुत्रमसूत नृत्यत गणाः! किं तिष्ठतेत्युद्भुजे**
**हर्षाद् भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते ।**
**पायाद् वो जितदेवदुन्दुभिघनध्वानप्रवृत्तस्तयो—**
**रन्योन्याङ्गनिपातजर्जरतरस्थूलास्थिजन्मा रवः ॥ ४३६॥**

**(एकावली)**

**एकावल्यपि परिकरविशेष एव।**

सा त्रिधा— शब्दैकावली, अर्थैकावली, उभयैकावली च।

**शब्दैकावली** यथा—(न.च. ६.२९)

**पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम् ।**
**हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी ॥ ४३७॥**

**अर्थैकावली** यथा—(काव्याद. २.१०७)

**शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः ।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥ ४३८॥**

**उभयैकावली** यथा—(रुद्रटा. ७.११०)

**सलिलं विकासिकमलं कमलानि सुगन्धिमधुसमृद्धानि ।**
**मधु लीनालिकुलाकुलमलिकुलमपि मधुररणितमिह ॥ ४३९॥**

**(१७. क्रमः)**

**शब्दार्थो**भयानां परिपाटिः **क्रमः**। तेषु—

**शब्दपरिपाटि**र्यथा—

**तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः ।**
**जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः ॥ ४४०॥**

**अर्थपरिपाटि**र्यथा—

**पायाद् वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको**
**यस्याकस्मिकवर्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।**
**मौलौ रत्नरुचि श्रुतौ परिलसत्ताटङ्ककान्ति क्रमा—**
**ज्जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम् ॥ ४४१॥**

**उभयपरिपाटि**र्यथा—

**पङ्कअ पङ्कि वहेलिअ कुवलअ खित्तउ हदहिं**
**वालिहिं बिम्ब विविल्लिओ घत्तिओ चन्दु णहहि ।**
**करणअणाहरवअणहिं तहिं लीलावइहिं**
**णिअसिट्ठि वि उच्चिट्ठीणा इं पआवइहिं ॥४४२॥**

(पङ्कजं पङ्केऽवहेल्य कुवलयं क्षिप्त्वा ह्रदे
वृन्ते बिम्बं विप्रकीर्णं निरस्तश्चन्द्रो नभसि ।
करनयनाधरवदनैस्तत्र लीलावत्यां
निजसृष्टिरप्युत्सृष्टा किं प्रजापतिना ॥)

**(१८. पर्यायः)**

मिषमुक्तिप्रकारोऽवसर इति **पर्याय**स्त्रिधा। तत्र

**मिषं** यथा—(काव्याद. २.१६८)

**दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।**
**तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥४४३॥**

**उक्तिप्रकारो** यथा—(खप्र.)

**राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः**
**कुब्जे भोजय मां कुमार कुशलं नाद्याज्जुके भुज्यते ।**
**इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा—**
**च्चित्रस्थानवलोक्य वेश्मवलभीष्वेकैकमाभाषते ॥४४४॥**

**अवसरो** यथा—(कुसं.४.२५)

**अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः ।**
**रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥४४५॥**

**(१९. अतिशयः)**

विशेषस्य विवक्षया लोकवृत्तानतिक्रमेणात्युक्तेरभिधान**मतिशयः**, यथा—

**अहो विशालं भूपाल भुवनत्रितयोदरम् ।**
**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥४४६॥**(काव्याद.२.२१९)

यथा वा—(काव्याद. २.२१७)

**स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये! तव ।**
**अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥४४७॥**

**(२०. आक्षेपः)**

विधिनिषेधाभ्यां प्रतिषेधोक्तिर**आक्षेपः**। स द्विधा— शुद्धमिश्रभेदात्। तत्र—

**विध्याक्षेपः शुद्धो** यथा—(काव्याद. २.१४१)

**गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥४४८॥**

**मिश्रो** यथा—(कुसं. ५.८२)

**अलं विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥४४९॥**

**निषेधाक्षेपः शुद्धो** यथा—(काव्याद. २.१२३)

**कुतः कुवलयं कर्णे करोषि कलभाषिणि! ।**
**किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥४५०॥**

**मिश्रो** यथा—

**सच्चं गुरुओ गिरिणो को भणइ जलासआ ण गम्भीरा ।**
**धीरेहिं उवमाउँ तह वि खु मह ण त्थि उच्छाहो ॥४५१॥**
(सत्यं गुरवो गिरयः को भणति जलाशया न गम्भीराः ।
धीरैरुपमातुं तथापि खलु मम नास्त्युत्साहः ।।)

रोधोऽपि **निषेधाक्षेप** एव। यथा—

**किं जम्पिएण दहमुह जम्पिअसरिसं अणिव्वहन्तस्स भरं ।**
**एत्तिअ जम्पिअसारं णिहणं अण्णे वि वज्जधारासु वआ ॥४५२॥**
(किं जल्पितेन दशमुख जल्पितसदृशमनिर्वहतो भरम् ।
एतावद् जल्पितसारं निधनमन्येऽपि वज्रधारासु गताः ।।)

यथा च—

**पउरजुआणो गामो महुमासो जोव्वणं पई ठेरो ।**
**जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥४५३॥**
(प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः ।
जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम् ।।)

(२१. **विशेषोक्तिः**)

आधिक्येन न्यूनतया वोत्कर्षविवक्षा **विशेषोक्तिः**। तत्र–

**आधिक्येन** यथा–(विक्र. ३.११)

**अयं तया रथक्षोभादंसेनांसो निपीडितः ।**
**एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥ ४५४॥**

**न्यूनतया** यथा–(काव्याद. २.३२४)

**न कठोरं न वा तीक्ष्णं शस्त्रं कुसुमधन्वनः ।**
**तथापि जितमेवाभूदमुना भुवनत्रयम् ॥४५५॥**

(२२. **श्लेषः**)

**एकपदेनानेकार्थाभिधानं श्लेषः।**

स षोढा – अभिन्नपदो, भिन्नपदश्च; अभिन्नक्रियो भिन्नक्रियश्च; अभिन्नकारको भिन्नकारकश्चेति। तेषु –

**अभिन्नपदो** यथा–(काव्याद. २.३२४)

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥४५६॥**

**भिन्नपदो** यथा–(काव्याद. २.३१२)

**दोषाकरेण संबध्नन् नक्षत्रपथवर्तिना ।**
**राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते ॥४५७॥**

**अभिन्नक्रियो** यथा–(काव्याद. २.३१६)

**स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्बणम् ।**
**दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान् ॥४५८॥**

**भिन्नक्रियो**[1] यथा–(काव्याद. २.३१७)

**मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः ।**
**आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥४५९॥**

**अभिन्नकारको** यथा–(काव्याद. २.३१९)

**कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।**
**याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥४६०॥**

---

१. भिन्नकारको इति राघवः।

**भिन्नकारको** यथा—(काव्याद. ४.२२९)

**गतिर्वेणी च नागेन वपुरूरू च रम्भया ।**
**ओष्ठौ पाणी प्रवालैश्च तस्यास्तुल्यत्वमाययुः ॥४६१॥**

(२३. भाविकम्)

स्वाभिप्रायकथनमन्यापदेशोऽन्यभावना च **भाविकम्**। तेषु—

**स्वाभिप्रायकथनं** यथा—

**णावज्झइ दुग्गेज्झिआ दिठ्ठम्मि जम्मि भिउडिआ**
**जत्थ ण अव्वाहारओ घिप्पइ आहासत्तए ।**
**विच्छुहइ अहिणिंत(द)ए जत्थ ण सो वअस्सिआ**
**तं मे कहउ माणअं जइ मे इच्छदु(हि) जीअअं ॥४६२॥**

(नाबद्ध्यते दुर्गृहीता दृष्टे यस्मिन् भ्रुकुटिको
यत्र नाव्याहारो गृह्यते आभाषमाणे ।
विक्षुभ्यतेऽभिनिन्द्यते यत्र न स वयस्यया
तं मे कथय मानं यदि मे इच्छसि जीवनम् ॥)

**अन्यापदेशो** यथा—

**आसाइअमण्णाएण जेत्तिअं चिअ विहीण ।**
**ओरमसु वसह एह्णिं रक्खिज्जइ गहवइच्छेत्तं ॥४६३॥**

(आस्वादितमज्ञातेन यावत् तावदेव व्रीहीणाम् ।
उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥)

**अन्यभावना** यथा—(वज्जाल ५३८)

**दंसणवलिअं दढकं विबन्धणं दीहरं सुपरिणाहं ।**
**होइ घरे साहीणं मुसलं घण्णाण महिलाणं ॥४६४॥**

(दंशनवलितं दृढकं विबन्धनं दीर्घं सुपरिणाहम् ।
भवति गृहे स्वाधीनं मुसलं धन्यानां महिलानाम् ॥)

**उद्भेदोऽपि भाविकमेव**। स त्रिधा—अव्यक्तो व्यक्त उभयात्मकश्च।

**अव्यक्तो** यथा—(अमरु. १०५)

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**

**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥४६५॥**

**व्यक्तो** यथा–

**अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहनालकर्कशम् ।**
**वहति स्फुटमेतदेव ते वचनं शाकपलाशदेश्यताम् ॥४६६॥**

**उभयरूपो** यथा–

**प्रम्लानोत्पलकोमले! सखि! दृशौ नीलाञ्जनेनाञ्चिते**
**कर्पूरच्छुरणाच्च गण्डफलके संवेल्लितः पाण्डिमा ।**
**श्वासाः सन्तु च कन्दुकभ्रमिभुवः किन्तु प्रभावाहिना–**
**मङ्गानां क्रशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ॥४६७॥**

**(२४. संसृष्टिः)**

**नानालङ्कारसङ्करः संसृष्टिः।**

सा त्रिधा– व्यक्तरूपा, अव्यक्तरूपा, व्यक्ताव्यक्तरूपा च। तासु **व्यक्तरूपा** तिलतण्डुलवत् छायादर्शवच्च। तयो**राद्या** यथा–

**पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।**
**तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥४६८॥**

अत्रोत्प्रेक्षाद्वयं रूपकद्वयं च तिलतण्डुलवत् सङ्कीर्णम्।

**द्वितीया** यथा–(राच.१.५)

**निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः ।**
**परं पर्यश्रुनयनौ मम्लतुर्भ्रातरावुभौ ॥४६९॥**

अत्रादर्शे च्छायेव हेत्वलङ्कारे रामलक्ष्मणमुखयोरिन्दुपद्मौपम्यं दृश्यते। अव्यक्तरूपा क्षीरजलवत् पांसूदकवच्च। तयो**राद्या** यथा–

**क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च ।**
**टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥४७०॥**

अत्रोपमोत्प्रेक्षे क्षीरनीरवन्मिथः संसृष्टे न व्यज्येते।

**द्वितीया** यथा– **कृष्णार्जुनानुरक्तापि.॥४७१॥** (६०९ पृ.)

अत्र पांसूदकयोरिव मृत्पिण्डे श्लेषविरोधयोरव्यक्तरूपयोरेव व्याजस्तुतावङ्ग–भावोऽवगम्यते। व्यक्ताव्यक्तरूपा नरसिंहवच्चित्रवर्णवच्च। तयो**राद्या** यथा–(रघु. ४.२९)

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।**
**भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ।।४७२।।**

अत्र नरसिंहजाताविव सिंहनरशरीरभागयोः परिवृत्त्यलङ्कारहेतूपमयोरङ्गभावो व्यक्ताव्यक्तरूपः परिस्फुरन्नुपलभ्यते।

**द्वितीया** यथा— **मयूरारावमुखरां प्रावृषं सतडिल्लताम् ।**
**महाटवीमिवोल्लङ्घ्य तोयानि मुमुचुर्घनाः ।।४७३।।**

अत्र पटावयवस्थानां नीलादीनामिव पटावयव्याश्रिते चित्रवर्णे श्लेषरूपकोपमार्थ—श्लेषाणां पदपदार्थाश्रयाणां शरद्वर्णनवाक्याश्रयिणि समाध्यलङ्कारे व्यक्ताव्यक्त—रूपोऽङ्गाङ्गिभावः प्रतीयते।।

**चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रिताः ।**
**काव्यालङ्कृतयः प्रोक्ता यथावदुपमादयः ।।४७४।।**

**इह हीवादिभिः शब्दैस्सादृश्यादिः प्रतीयते ।**
**अर्थोऽस्मात् सूरयः प्राहुरुभयालङ्कृतीरिमाः ।।४७५।।**

**अलङ्क्रिया यास्त्विह शब्दसंश्रयास्ततोऽर्थभूषाभ्यधिकं प्रकृष्यते ।**
**ततोऽभिरूपामुभयोरलङ्कृतिं वदन्ति, संसृष्टिरतोऽपि शोभते ।।४७६।।**

**इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे**
**उभयालङ्कारप्रकाशो नाम**
**।। दशमः प्रकाशः ।।१०।।**

भग्नो मम्मटभट्टकोऽत्र महति श्रीभोजराजोद्गते—
ऽलङ्कारे त्रिविधोत्तमप्रसरणे दिव्यैः प्रबन्धाकरैः ।
ध्वन्यध्वन्यतया प्रथां गतवतामानन्दगुप्तप्रभृ—
त्यार्याणामपि भाषितान्यहह नो पर्याप्तिमाबिभ्रति ।।
रेवाप्रसादोऽस्म्यहमुच्चभाग्यो यस्यासकौ वै सुलभोऽस्ति राशिः ।
विधिप्रसादादथ यस्य लभ्योऽवकाशकालेऽनवकाशकोऽपि ।।



अथ

## शृङ्गारप्रकाशे एकादशः प्रकाशः

रसावियोगप्रकाशनप्रकाशो नाम

### *(१२. रसावियोगः)*

निर्दोषस्य गुणवतोऽलङ्कृतस्य च काव्यशरीरस्य कामिनीशरीरस्येव शोभातिशयनिष्पत्तौ **रसावियोग** एव प्रकृष्ट उपायो गीयते। यतः,

**कल्या मूर्तिः कुलममलिनं यौवनं रूपसम्पत्**
**सौभाग्यर्द्धिः प्रियवचनता शीलवैदग्ध्ययोगः।**
**शालीनत्वं विनयपरतेत्यङ्गनाभूषणं यत्**
**तत् प्रेमार्द्रं प्रणयिनि मनो नास्ति चेन्नास्ति किञ्चित् ॥१॥**

किं च—

**अलङ्कृताप्यन्वयशीलभूषणैर्न शोभते मां प्रति तावदङ्गना।**
**बिभर्ति यावत् प्रमदा समागमे न शूरभार्यादृतगर्वितं शिरः ॥२॥**

**रसं त्विह प्रेमाणमेवामनन्ति, सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियो अमर्षप्रियः परिहासप्रिय इति प्रेमण्येव पर्यवसानात्।**

**अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।**
**स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥३॥** (उराच. ५.१७)

ततो हि—

**यदेव रोचते मह्यं तदेव कुरुते प्रिया।**
**इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥४॥**

अपि च— (उराच. २.१९, ६५)

**अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
**तत् तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥५॥**
**दुक्खं दन्तो वि सुहं जणेइ जो जस्स वल्लहो होइ।**
**दइअ-णह-दूमिआण वि वड्ढइ त्थणआण रोमञ्चो ॥६॥**(गास.१.१००)

(दुःखं ददपि सुखं जनयति यो यस्य वल्लभो भवति।
दयितनखदूयमानयोरपि वर्धते स्तनयो रोमाञ्चः ॥)

तदुक्तम्—

**अप्रातिकूलिकतया मनसो मुदादे—**
**र्यस्संविदोऽनुभवहेतुरिहाभिमानः ।**
**ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्ते(/रक्तेः)[१]**
**रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥७॥**

ननु 'इदानीमेवोक्तं रतिप्रियो रणप्रियोऽमर्षप्रियः परिहासप्रिय इति रत्यादिप्रकर्षाणां प्रेमण्येव पर्यवसानात् रसमिह प्रेमाणमामनन्ती'ति तत् कथमुच्यते रत्यादिभूमनि पुनर्वितथा, रसोक्तिरिति? उच्यते, न रत्यादिभूमा रसः। किं तर्हि? **शृङ्गारः।**

(रसलक्षणम्)

**शृङ्गारो हि नाम विशिष्टेष्टदृष्टचेष्टाभिव्यञ्जकानाम् आत्मगुणसम्पदामुत्कर्षबीजं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस** इत्युच्यते। यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति॥८॥

(भावाः – ५१)

**तदाविर्भावहेतवश्च तत्प्रभवा एव भावाः**। ते चैकोनपञ्चाशत्—

(१) **रतिः**, (२. **प्रीतिः**), (३) **हर्षः**, (४) **रोमाञ्चः**, (५) **धृतिः**, (६) **गर्वः**, (७) **हासः**, (८) **मदः**, (९. **मोहः**), (१०) **उत्कण्ठा**, (११) **चिन्ता**, (१२) **स्मृतिः**, (१३) **मतिः**, (१४) **वितर्कः**, (१५) **उत्साहः**, (१६) **क्रोधः**, (१७) **अमर्षः**, (१८) **असूया**, (१९) **ईर्ष्या**, (२०) **उग्रता**, (२१) **जुगुप्सा**, (२२) **विस्मयः**, (२३) **निद्रा**, (२४) **सुप्तम्(/स्वप्नः)**, (२५) **प्रबोधः**, (२६) **चपलता**, (२७) **आलस्यं**, (२८) **भयं**, (२९) **शङ्का**, (३०) **त्रासः**, (३१) **वेपथुः**, (३२) **व्रीडा**, (३३) **अवहित्थं**, (३४) **स्तम्भः**, (३५) **ग्लानिः**, (३६) **स्वेदः**, (३७) **व्याधिः**, (३८) **उन्मादः**, (३९) **श्रमः**, (४०) **शोकः**, (४१) **विषादः**, (४२) **वैवर्ण्यं**, (४३) **दैन्यं**, (४४) **स्वरभेदः**, (४५) **आवेगः**, (४६) **अश्रु**, (४७. **मोहः/स्नेहः**), (४८) **प्रलयः**, (४९) **जाड्यं**, (५०) **निर्वेदः**, (५१) **शम**[२] इति।

---

१. द्र. अत्रैव पृ. १ पादटिप्पणी ३ ।

२. भरतनिर्दिष्टौ मरणापस्मारावत्र न भवतः, भवतश्च भरतानिर्दिष्टौ 'ईर्ष्या–शमौ'। संख्या तु समैव। एतेषां विभावादीनां रतेश्च विशद्य विवेचनं त्रयोदशप्रकाशे (द्र.पृ.७९४), शेषाणाञ्च चतुर्दशे प्रकाशे भावि।

तत्र केचिदाचक्षते रतिप्रभवः शृङ्गार इति।

**वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति।** शृङ्गारिणो हि रत्यादयो जायन्ते, नाशृङ्गारिणः। शृङ्गारी हि रमते, स्मयते, उत्सहते, स्निह्यतीति।

**ते तु भाव्यमानत्वाद् भावा एव, न रसाः।**

**यावत्सम्भवं हि भावनया भाव्यमानो भाव एवोच्यते।**

**भावनापथमतीतस्तु रस** इति।

**मनोऽनुकूलेषु हि [१]सुखादिषु आत्मनः सुखानुभवाभिमानो रसः।**

स तु पारम्पर्येण सुखहेतुत्वात् रत्यादिभूमसूपचारेण व्यवह्रियते। अतो न रत्यादीनां रसत्वं, अपि तु भावनाविषयत्वाद् भावत्वमेव।

यदप्युक्तं परप्रकर्षगामी रत्यादिभावो रस इति, तदप्यसारम्, ग्लान्यादिष्वपि तदुपपत्तेः। ग्लान्यादयोऽपि श्रमादिभिः परं प्रकर्षमारोप्यन्ते। न ते स्थायिन इति चेत्, स्थायित्वमेषामुत्पन्नतीव्रसंस्कारात्। संस्कारोत्पत्तिश्च विषयातिशयान्नायकप्रकृतेश्च। प्रकृतिश्च त्रिधा सात्त्विकी, राजसी, तामसीति। तद्वशाच्च तथाविधानुभवभावनोत्पत्तिः। ततश्चैषां स्थायित्वव्यपदेश इति।

नन्वष्टौ स्थायिनोऽष्टौ सात्त्विकास्त्रयस्त्रिंशद् व्यभिचारिण इति ब्रुवते?

न तत्साधु।

यतोऽमीषामन्यतमस्यैतैरेव परस्परं निर्वर्त्यमानत्वात्। कश्चित् कदाचित्स्थायी, कदाचित्तु व्यभिचारी। अतोऽवस्थावशात् सर्वेऽप्यमी व्यभिचारिणः, सर्वेऽपि च स्थायिनः, सात्त्विका अपि सर्व एव मनःप्रभवत्वात्। **अनुपहतं हि मनस्सत्त्व**मित्युच्यते।

यच्चोक्तं **विभावानुभावव्यभिचारिसंयोगात् स्थायिनो रसत्वमिति**[२], तदपि मन्दम्,

---

१. 'सुख.=दुःखा.' राघवः, लेष्वपि सुखदुःखा. इति तत्र पाठान्तरम्। मनसा गृहीतमात्मना रस्यते इति तु विवक्षितमत्र।

२. भरतोक्ते 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति'–रिति रससूत्रे स्थायिशब्दो नास्ति। ध्वनिवादिनामुचित एव स्थाय्यभावोऽत्र, उल्लेख एव प्रत्युत शल्यभूतो भवेत्। तन्मते स्थायिनां रत्यादीनां लाभो विभावतावच्छेदकतया, रतिमत एव दुष्यन्तादेः सामाजिकान् प्रति विभावत्वात्। एवं च भावो रस इति प्रथमं रससूत्रम्, 'विभावानुभावव्यभिचारिसंयोगो रस' इति द्वितीयं, विभावानुभावव्यभिचारिस्थायिसंयोगो रस इति तृतीयं, चतुर्थं पुनर्विभावानुभावव्यभिचारिस्थायि सात्त्विकसंयोग इति, पञ्चमं 'भावसंयुक्तः स्थायी'–ति। स्थायी चाऽत्र न रत्यादिः, न च निर्वेदादिः, अपितु प्रत्यक्चैतन्यमेव रसिकस्य। द्रष्टव्यः अत्रास्माकं रसभोगः, काव्यालङ्कारकारिका च।

हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्। तस्माद् रत्यादयः सर्व एवैते भावाः, **शृङ्गार एवैको रस** इति। तैश्च सविभावानुभावैः प्रकाशमानः शृङ्गारो विशेषतः स्वदते।

तत्र केचनाहुः – 'नायं रसः शृङ्गाराख्यो रत्यादिभिरभिव्यज्यते, अपित्वालम्बन–विभावादुत्पन्नो रत्यादिरेवोद्दीपनविभावादिभिः परं प्रकर्षमारोप्यमाणो रसीभवन् शृङ्गारादिसंज्ञां लभत' इति।

त एवं प्रष्टव्याः – 'किमेते रत्यादयः स्वेभ्यः आलम्बनेभ्यः उत्पद्यमानाः सर्वस्याप्युत्पद्यन्ते, उत कस्यचिदेवेति?'

**यदि तावत् सर्वस्य**, तदा सर्वं जगद् रसिकं स्यात्। न चैतदस्ति। यतः कश्चिद्रसिकः कश्चित्तु नीरसो दृश्यते। न च दृष्टविपरीतं शक्यमनुज्ञातुम्। अतो न सर्वस्य रत्यादयो जायन्ते।

**अथ कस्यचित्,** तत्र निमित्तमभिधानीयम्। तद् दृष्टमदृष्टं वा स्यात्।

न तावत् दृष्टमनुपलभ्यमानत्वात्।

अदृष्टं तु साधारणमसधारणं वा।

**साधारणे** पूर्व एव दोषः, सर्वं जगद्रसिकं स्यादिति।

**असाधारणं** तु प्रत्यगात्मगतानादिवासनानुबन्धिधर्मकार्यं भवितुमर्हति। तं चात्मनोऽहङ्कारगुणविशेषं ब्रूमः। स शृङ्गारः, सोऽभिमानः, स रसः। तत एते रत्यादयो जायन्ते। तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिरर्चिश्चयैरिव प्रकाशमानः शृङ्गारिणामेव स्वदत' इति।

तदुपाधिश्चायमुपजायमानो रसस्त्रिधा विख्यायते–

**'प्रकृष्टो, भावरूप, आभासश्च'** । तत्र–

यः कथाशरीरव्यापिन उत्तमनायकस्य तथाविध एव विषये जायते, स **प्रकृष्टः**।

मध्यमस्य य उपजातो (जायते) न प्रकर्षमासादयति स **भावरूपः**।

यश्च तिरश्चां प्रतिनायकादीनां चोपजायते स **शृङ्गाराभासः**[१]।

तस्यावियोगो द्विधा– **(१) वाक्यविषयः,**
**(२) प्रबन्धविषयश्च।**[२] तयोः –

---

१. रसाभास इत्यर्थः – रे.

२. अत्रैव द्र. पृ. ६५८

## (१. वाक्यविषयः रसावियोगः)

**वाक्यविषयो**ऽश्लीलामङ्गलघृणावदर्थं ग्राम्यमित्यादिदोषहानेन, दीप्तरसत्वं कान्तिरित्यादिगुणोपादानेन कैशिकीवैदर्भ्याद्यलङ्कारयोगेन च यद्यपि प्रसङ्गतस्तन्त्रयुक्त्या तत्रतत्रोपवर्णितस्तथापि गुणालङ्कारसन्निवेशविशेषजन्यत्वान्नानालङ्कारसंसृष्टावेव **प्रकृष्टत्वं** लभते।

प्रायेण हि गुणानामिव शब्दार्थोभयालङ्काराणामनुप्रासजातिरूपकादीनां **काव्यशरीरेषु** कामिनीशरीरेष्विव कटककेयूरकुण्डलादीनां केवलानामदर्शनात् संसृष्टिरेव प्रकृष्टं भूषणमवधार्यते। ततश्च—

भोजने मधुराम्ललवणषाडवानां,
वेष इव वस्त्रानुलेपनमाल्यविभूषणानां,
धूप इव चन्दनागरुकर्पूरसिद्धकानां,
सङ्गीत इव नृत्तवाद्यपाठ्यानां,
प्रेमणीव कोपानुशयप्रसादसङ्गमसुखानां,
गार्हस्थ्य इव धर्मार्थकाममोक्षसाधनानुष्ठानानां, **काव्यशरीरेऽपि** रूपकादीनां संसृष्टिरेव विशेषतः स्वदमाना **रसावियोगहेतुर्भवति।** अतः प्रागुपदिष्टापि यत्नतः प्रपञ्च्यते।

स तु द्विधा **प्रधानाङ्गभावेन, समकक्ष्यतया** च। यदाह— (काव्याद. २.३६०)

**अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्ष्यता ।**
**इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥९॥**

तत्र प्रधानस्योपकारित्वेन यद् वर्तते **तदङ्गम्**।

यत्तेनोपक्रियते तत्**प्रधानम्** (शाभा.३.१.२, वाप. २.८२)

तद्यथा— (काव्याद. २.३६१)

**आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।**
**कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥१०॥**

अत्रारविन्दानि मुग्धे तव मुखश्रियमाक्षिपन्तीत्युपमा। कोशदण्डसमग्राणां किमेषामस्ति दुष्करमिति श्लेषोपसर्जनोऽर्थान्तरन्यासः। भवन्ति चारविन्दानि कोशदण्डसमग्राणि, तेन तेषां न किंचिदशक्यमस्ति। कोशदण्डयोर्विजयसाधनत्वात्। एतेन श्लेषस्य साधनभूतार्थसमर्पकत्वादुपमायास्तु प्रकृतसाध्यवस्तुविशेष—कत्वादर्थान्तरन्यासं **प्रत्यङ्गभावो** विज्ञायते।

ननु चैतद् वाक्यदोषाणामदोषप्रस्तावे शब्दहीनस्य क्वचिद् विवक्षातो गुणत्वमिति वर्णितम्। उक्तं च– (काव्याद. ४.२८)

**इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।**
**अपभाषणवद् भाति न च सौभाग्यमुज्झति ।।११।।**

तत्किमत्रापभाषणं, का वा सौभाग्यत्यागहेतुविवक्षेति?

उच्यते। किमेषां दुष्करमिति षष्ठ्यनुपपत्तिरपभाषणं, 'कर्तृकर्मणोः कृति (२.३.६५)' इति षष्ठ्याः 'न लोकाव्ययनिष्ठाखलर्थतृनाम् (२.३.६९)' इति प्रतिषेधात्। केह सौभाग्यत्यागहेतुविवक्षा?

तत्रैके वर्णयन्ति 'अनन्तः खल्वेष शब्दसमाम्नायः। तत्र यथा—अन्नम् अजिरं विचक्षणः समाह्वयः(३.३.११८) इत्यादिषु 'अदो जग्धिः' (२.४.३६), 'अजेर्व्यं' (२.४.५६), 'चक्षिङः ख्याञ्' (२.४.५४), 'एतदोऽश्' (५.३.५) इत्यादयो विशेषविधयः क्वचिद् वार्त्तिकेष्टिज्ञापकादौ प्रतिषेधान्न भवन्ति, तथेह षष्ठीप्रतिषेधोऽपि क्वचिद् विशेषवचनान्न भविष्यति। दृश्यते चेह महाकवीनामविभागेन प्रयोगः। तद्यथा—

**अपि वागधिपस्य दुर्वचं वचनं तद् विदधीत विस्मयम् ।।१२।।**

इति भारवेः (किरात. २.२)

**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ।।१३।।**

इति कालिदासस्य (रघु. १.७२)

विषम उपन्यासः। **लक्षणास्मरणे हि शिष्टप्रयोगो लक्षणमनुमापयति**। यत्र तु न लक्षणस्मरणाभावमात्रं, अपि तु तद्विपरीता स्मृतिः 'न लोकाव्ययनिष्ठा–खलर्थतृनाम्' (२.३.६९) इति, तत्र किं महाकविप्रयोगस्य शक्यम्? अतः पूर्वोक्तश्लोकार्धयोस्तद्व्याख्यातारोऽन्यथा व्याख्यानमकुर्वन्। द्रौपदी यदवोचत्तद् दुर्वचं वचनं वागधिपस्यापि विस्मयं विदधीतेति, दुरापेऽर्थे इक्ष्वाकूणां त्वदायत्ताः सिद्धय इति। एवं तर्हि शेषषष्ठी भविष्यति।

**(शेषपदार्थः)**

**कः पुनरयं शेषः?** किं कारकेभ्योऽन्यः, उत कारकाणामविवक्षेति?

किं चातः?

यदि **कारकेभ्योऽन्यः शेषः**, स नास्ति, सर्वत्र क्रियाकारकसम्बन्धस्य भावात्।

यथा राज्ञः पुरुष इति राजा पुरुषं बिभर्ति इति कर्तृकर्मणोर्भरणक्रियाकृतः सम्बन्धः, पितुः पुत्र इति पितापुत्रयोः जननकृतः सम्बन्धः। वृक्षस्य शाखेति वृक्षे शाखा शाखासु वा वृक्षस्तिष्ठतीति कर्त्रधिकरणयोः स्थितिक्रियाजनितः संबन्धो भवति।

अस्तु तर्हि **कारकाणामविवक्षा शेषः**।

तन्न, सतः अविवक्षाऽभावात्। न हि सन् घटः अविवक्षातः असन् भवति।

यथेच्छसि तथास्तु।

अस्तु तावत्कारकेभ्योऽन्यः **शेषः**।

ननु चोक्तं कारकाणां सर्वत्र भावान्न ततोऽन्यः कश्चिदस्ति **शेष** इति?

अस्त्येवेति ब्रूमः।

**यदा तावत्कारकाधिकरणेषु क्रियाकारकसम्बन्धः सम्बन्धान्तरं जनयति तदा भवति सम्बन्धः कारकेभ्योऽन्यः।** तथा हि – 'राज्ञः पुरुष इत्यत्र कर्तृकर्मणोः भरणक्रियाकृतेन जन्यजनकलक्षणः, वृक्षस्य शाखेत्यत्र स्थितिक्रियाकृतेनावयवा–वयविलक्षण' इति, तत्र षष्ठी भविष्यति।

एवमन्येऽप्यश्रूयमाणक्रियापदाः षष्ठ्यर्थाः समुन्नेयाः। श्रूयमाणक्रियापदाः खल्वपि यथा नटस्य शृणोति, न ग्रन्थिकस्येति सम्बन्धिश्रवणं षष्ठ्यर्थः प्रतीयते। न माषाणामश्नीयादिति प्रतिषेधो गम्यते। 'न ते सुखस्य जानन्ति ये न वत्स्यन्ति नन्दने' इति सुखसंबन्धितया ज्ञानप्रतिषेधोऽवधार्यते', एवमिह (आक्षिपेति पद्ये) दुष्करो मुखश्रिय आक्षेपः।

श्रूयमाणक्रियापदाः षष्ठ्यर्थाः समुन्नेयाः, कोशदण्डसमग्रत्वात् सुकरत्वं वाक्यार्थत्वेनावबोधयन्नरविन्दानां संबन्धितया न शेषलक्षणां षष्ठीं विघ्नयति इति। तदेतस्मिन् दर्शन इदमुक्तम्– (वाप. ३.७.१५६)

**सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।**
**श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥१४॥**

तथा हि– (वाप. २.१९७)

**जनयित्वा क्रिया काचित् सम्बन्धं विनिवर्तते ।**
**श्रूयमाणे क्रियाशब्दे सम्बन्धो जायते क्वचित् ॥१५॥**

एवं कारकेभ्योऽन्यः शेष इति दर्शने किमेषामस्ति दुष्करमिति न षष्ठ्यनुपपत्तिः। अथवा पुनरस्तु कारकाणामविवक्षा शेषः।

ननु चोक्तं सतः कथमविवक्षा?

सतोऽप्यविवक्षा दृश्यते। यथा— अनुदरा कन्या, अलोमिका एडकेति।

असतोऽपि विवक्षा यथा— विन्ध्यो वर्धितकः, समुद्रः कुण्डिकेति।

एवमिह किमेषामस्ति दुष्करमिति सतोऽपि कर्तुरविवक्षायां न तृतीया, अपि (तु) शेषषष्ठ्येव।

यदि तर्हि श्रूयमाणक्रियापदोऽपि कारकेभ्योऽन्यः कारकविवक्षा वा शेषः, किमर्थं 'ज्ञोऽविदर्थस्य करणे' इत्येवमादिः षष्ठीविधानार्थः सूत्रप्रबन्धः **पाणिनेः**?

न; तस्य अन्यार्थत्वात् समासप्रतिषेधार्थः स **वार्त्तिककृता** व्याख्यातः 'प्रतिपदविधाना च षष्ठी न समस्यत' (२.२.१०) इति। अन्यैरप्युक्तम्—

**[१]कारकैर्व्यपदिष्टे च श्रूयमाणक्रियापदे ।**
**शेषे प्रोक्ता पुनः षष्ठी[२] समासस्य निवृत्तये ॥१६॥** (वाप. ३.७.१५९)

एवमियमुपमाश्लेषार्थान्तरन्यासानामुपकार्योपकारितया प्रधानगुणभावेन संसृष्टिः। युक्तमिदम्। अयुक्तं तु तुल्यकक्ष्यतयेति।

वाक्ये पदार्थानां समकक्ष्यता प्रधानानां वा भवेदप्रधानानां वा?

न तावत् प्रधानानाम्, परस्परमनपेक्षत्वेन सम्बन्धाभावात्।

नाप्यप्रधानानाम्, प्रधानापेक्षत्वेन परस्परानपेक्षायामसम्बन्धादेव। तदुक्तं 'असम्बन्धः समत्वात् स्याद्' (पूमी. ३.१.२२) इति। तत्कथमुच्यते तुल्यकक्ष्यतेति? एवं मन्यते — 'यदोत्प्रेक्षोपमादयोऽलङ्कारा विभावानुभावव्यभिचार्यादिनिर्वर्तनपरतया रसादेरङ्गतां प्रतिपद्यन्ते, तदा भवत्येव तुल्यकक्ष्यते'ति। यथा—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥१७॥**

(काव्याद.२.२२६, मृच्छ.१.३४)

**'अत्र लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ'** इति द्वे उत्प्रेक्षे। **'असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता'** इत्युपमा च वर्णनीयस्य तमस उद्दीपनविभावभूतस्य समतयैवोत्कर्षापादकत्वेनाङ्गभावमुपगता इति नास्ति लक्षणानुपपत्तिः। ननु च—

---

१. कारकैः = साधनैः ऐयरः।

२. शेषे प्रोक्ता पुनः = प्रोक्ता प्रतिपदं — ऐयर।

(इवार्था:)

इववद्वायथाशब्दा समाननिभसन्निभा: ।
तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपका: ॥१८॥ (काव्याद. २.५७)
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिन: ।
सदृक्सदृशसंवादिसजातीयानुवादिन: ॥१९॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसप्रभा: ।
सलक्षणसदृक्षाभसपक्षोपमितोपमा: ॥२०॥
(सलोहितसनाभिसपिण्डसब्रह्मचारिणौ ।
सवर्णतुलितौ शब्दौ प्रख्यप्रतिनिधी अपि ॥)
कल्पदेशीयदेश्याद्या ये च न्यूनार्थवाचिन: ।
समासश्च बहुव्रीहि: शशाङ्कवदनादिषु ॥२१॥
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ।
आक्रोशत्यवजानाति कदर्थयति निन्दति ॥२२॥
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ।
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ॥२३॥
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ।
तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते ॥२४॥
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ।
तस्य चानुकरोतीति शब्दा: सादृश्यसूचका: ॥२५॥ (काव्याद. २.५८–६४)

तत्कथमुच्यते **'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ'** इति द्वे उत्प्रेक्षे, न तूपमे, इति? इवो हि वाक्यान्तरप्रयुज्यमान उपमानोपमेययो: सादृश्यावद्योतने निरूढशक्ति:, स इहापि तदर्थ एव भवितुमर्हतीति।

नैवम्। उपमानोपमेयशब्दप्रतिपन्नस्य सादृश्यावद्योतनमिवेन क्रियते। न च लिम्पतीत्येवमादौ तमसो नभसो वा द्वितीयमुपमेयमुपमानं वास्ति, येन तयो: सादृश्यावद्योतनाय इव: प्रयुज्यते।

एवं तर्हि इवश्रुतिसामर्थ्यात् तमसो नभसश्च द्वितीयमुपमानद्वयमुपस्थापयिष्यते। यथा प्रविश पिण्डीमिति प्रवेशनक्रिया स्वयोग्यं कर्मोपस्थापयति– प्रविश गृहं, पिण्डीकर्मापि स्वयोग्यां क्रियां पिण्डीं भक्षयेति। एवमिहापि इव: तमसि नभसि वोपमेये उपमानमपरमुपस्थापयिष्यतीति।

नैवम्। न हि तिङन्तेनोपमानमस्ति।

का पुनरत्रोपपत्तिः?

उच्यते— **सत्युपमेये सति चोपमाने तयोश्च तुल्ये धर्मे सत्युपमानोपमेयभावः,** नासति। न चेह तमसो नभसो वा संबन्ध्युपमानमुपमेयं वास्ति, यदाश्रय उपमानोपमेयभावः कल्प्यते।

ननु च इवश्रुतिरेव तमसो नभसश्च योग्यमुपमानमुपस्थापयिष्यति प्रविशपिण्डीन्यायेन। विषम उपन्यासः। प्रवेशनक्रिया स्वसिद्धये सर्वं कर्मकारकमाक्षिपति। तत्र प्रसिद्धितः प्रत्यासन्नं गृहमेव गम्यते। न चैवमिवस्य किंचित् सामर्थ्यमस्ति, येन स्वार्थसिद्धये प्रसिद्धमुपमानं तमसो नभसो वा समुपस्थापयति। उपमानोपमेयभावमन्तरेणाप्यस्य प्रयोगदर्शनात्। यथा 'कथमिवैतद् भविष्यति' इति। अस्तु तर्हि लिम्पतितमसोर्वर्षतिनभसोश्चोपमानोपमेयभावः। भवत्वेवम्। किं तु उपमानोपमेययोस्तुल्यधर्मो न दृश्यते, य उपमानोपमेयभावाय प्रभवति। किमन्येन लेपनं लिम्पतेर्, वर्षणं वा वर्षतेः, धर्मिणोऽन्यः कश्चिद् धर्मो भवितुमीष्टे।

ननु च यथा राहोः शिर इति भेदाभावेऽप्यवयवावयविभावः तन्निबन्धना च व्यतिरेकषष्ठी, एवं लिम्पतेर्लेपनं वर्षतेश्च वर्षणं धर्मो भविष्यतीति।

मैवम्। इह द्वयं चकास्ति, धातुर्लिम्पतिर्वर्षतिश्च, तदर्थो लेपनं वर्षणं च। तयोर्यद्युपमेयस्य तमसो नभसो वा लिम्पतिर्वर्षतिर्वा धातुरुपमानं स्यात् तस्य तेन सादृश्यं किं स्यात्?

अथ यथामी भावाः सर्वे सारूप्यं न दधति एवमसारूप्यमपि न। ततश्चास्तित्वा- भिधेयत्वज्ञेयत्वादिभिः सर्वत्र प्रवर्ततामुपमानोपमेयभाव इति न्यायात् तमसो **लिम्पतिर्नभसो वर्षतिरुपमानं** भविष्यति। यद्येवं **लिम्पतिरिव तमः वर्षतिरिव नभ** इति प्राप्नोति, न **लिम्पतीव वर्षतीवेति**। ततो लेपनं वर्षणमेव अवशिष्यते। तत्किमस्तु तुल्यो धर्म उपमानधर्मी वा? यदि तुल्यो धर्मः मार्गणीय उपमानधर्मी, यद्युपमानधर्मी मार्गणीयस्तुल्यो धर्मः। स चेह नास्ति।

अथ यथा राहोः शिर इति भेदाभावेऽप्यवयवावयविभावः, तथेह धर्मधर्मिभावोऽपि भविष्यति।

नैवम्। उपमानोपमेयभावस्य भेदसादृश्यप्रतिपत्तिनिबन्धनत्वात् तदभावेऽपि यस्तं मन्यते स कथं नोन्मत्तः स्यात्? तदुक्तम्— (काव्याद. २.२२९)

**'स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते'**।। २६।।

अस्तु तर्हि तिङ्वाच्यः कर्तोपमानमिति।

न्यग्भूतोऽसौ क्रियापदे।

कथं पुनरसौ क्रियापदे न्यग्भवति?

श्रूयताम् षडर्थास्तिङन्तेन प्रतीयन्ते– **'क्रिया, कालः, उपग्रहः, साधनं, सङ्ख्या, पुरुष'** इति। तेषु क्रियाकालात्मनेपदनिमित्तानि प्रकृतिरभिधत्ते। प्रत्ययः, साधनं, सङ्ख्यां, पुरुषं च। एतेषां तु क्रियार्थत्वात् क्रिया प्रधानं, कालात्मनेपदनिमित्ते क्रियाविशेषणत्वेन, संख्यापुरुषौ साधनविशेषणत्वेन तयोरेव न्यग्भवतः। साधनं पुनः 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति न्यायात् प्रधानभूतमपि 'भूतं भव्यायोप–दिश्यते' इति न्यायेन क्रियासिद्धावुपात्तव्यापारं परार्थतया क्रियायां न्यग्भवति। तेनायं कर्ता स्वक्रियासिद्धावाकुलः कथमुपमानत्वेनोपमेयत्वेन वान्यदपेक्षितुं क्षमते? एवं तर्हि योऽङ्गानि लिम्पति योऽञ्जनं वर्षति तेन क्रियोपलक्षितेन कर्त्रा तुल्यं तमो नभश्चेत्यर्थः प्रतिपत्स्यते।

नैवम्। क्रियोपलक्षितस्य कर्तुरुपमानभूतस्य शब्दन्यायबलाद् अप्रतिपत्तेः। तदुक्तम्– (काव्याद. १.७५)

**न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥ २७॥**

अथाध्याहारादिभिरिदमपि स्यात्। तथापि तुल्यधर्मो मार्गणीयः। तद्वदेव विप्रतिपत्तेः। न च चन्द्रमुखादिवदनभिधीयमानस्यापि तुल्यगुणस्य संप्रत्ययो भवतीति वाच्यम्।

**यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते।**
**न तथा लेपवर्षाभ्यामन्यदत्र प्रतीयते ॥ २८॥** (काव्याद. २.२३२)
**तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः।**
**अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥ २९॥** (काव्याद. २.२३३)
**एवमञ्जनकर्मापि वर्षतिर्व्योमकर्तृकः।**
**क्षरणार्थश्च विद्वद्भिरुत्प्रेक्ष्यत इतीष्यताम् ॥ ३०॥** [1]
**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ ३१॥** (काव्याद. २.२३४)

अतः स्थितमेतत्। उत्प्रेक्षाद्वयस्योपमायाश्च तमोवर्णनपरतया तुल्यकक्ष्यत्वेनैषां संसृष्टिरिति। सा च नानालङ्कारसङ्कर इत्युक्तम्।

---

१. श्लोक एष काव्यादर्शे नोपलभ्यत इति राघवः, इतः २.२३४ तमरूपेण योज्य इति वयम्।

**(गुणरसादीनामलङ्कारत्वम्)**

तत्रालङ्कारसङ्करः (अलङ्कार–)संसृष्टिरित्येव वक्तव्ये नानाग्रहणं गुणरसादीनामप्यलङ्कारताप्रतिपत्त्यर्थम्। तेषामपि काव्यशोभाकरत्वेनालङ्कारत्वात्। यदाह–

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कात्स्न्येन वक्ष्यति ॥ ३२॥** (काव्याद. २.१,३)

अपि च–

**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः ।**
**साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥ ३३॥** (काव्याद. २.१,३)

तत्र काव्यशोभाकरानित्यनेन श्लेषोपमादिवद् गुणरसभावतदाभासतत्प्रशमानप्युपसंगृहणाति। मार्गविभागकृद्गुणानामलङ्क्रिया(यो)पदेशेन श्लेषादीनां गुणत्वमिवालङ्कारत्वमपि बोधयति। किं च–

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।**
**अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ ३४॥**

**इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।**
**तेषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि ॥ ३५॥**(काव्याद. १.४१,४२)

इति श्लेषादीनां दशानामेव मार्गप्रविभागकारितां ब्रुवता काव्यशोभाकरत्वेन गुणान्तराणामप्यलङ्कारत्वमुक्तं भवति। तदाह–'कस्तान् कात्स्न्येन वक्ष्यती'ति।

युक्तमिदम्, अयुक्तं तु रसादीनामलङ्कारतेति, तेषां गुणानामिवालङ्कारव्यपदेशाभावात्

नायुक्तम्, युक्तोत्कर्षाणाम् ऊर्जस्विरसवत्प्रेयसामलङ्कारेषूपदेशात्। तद्यथा–

**प्रेयः प्रियतराख्यानं रसवद् रसपेशलम् ।**
**ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत्त्रयम् ॥ ३६॥** (काव्याद. २.२७५)

तत्र ऊर्जस्वि रूढाहङ्कारमित्यनेनात्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेकजन्मानुभवसंस्काराऽऽसादितद्रढिम्नः समग्रात्मगुणसम्पदुदयातिशयहेतोरहङ्कारविशेषस्योपसंग्रहादहङ्काराभिमानशृङ्गाराद्यपरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः **पूर्वां कोटिमुपवर्णयति**। यदाह–

**सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः ।**
**सर्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति कोऽपि हृदि मानमयो विकारः ॥**

**अहो अहो नमो मह्यं यदहं वीक्षितोऽनया ।**
**मुग्धया त्रस्तसारङ्गतरलायतनेत्रया ॥ ३८॥**

तथा च—

**तिष्ठन्त्या जनसंकुलेऽपि सुदृशा सायं गृहप्राङ्गणे**
**तत्कालं मयि निस्सहाकुलतनौ बाहौ मृदु प्रेङ्खति ।**
**ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे**
**प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ॥ ३९॥**

रसवद् रसपेशलमित्यनेन विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाऽविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य **मध्यमामवस्थामवस्था**पयति। यदाह—

**रत्यादयोऽर्धशतमेकविवर्जिता हि भावाः पृथग्विधविभावभुवो भवन्ति ।**
**शृङ्गारतत्त्वमभितः परिवारयन्तः सप्तार्चिषं द्युतिचया इव वर्धयन्ति ॥**

तद्यथा—

**अत्रान्तरे किमपि वाग्विभवातिवृत्त—**
**वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।**
**तद् भूरिसात्त्विकविकारमपास्तधैर्य—**
**माचार्यकं किमपि मान्मथमाविरासीत् ॥ ४१॥** (मामा. १.२९)

यथा च— **राहोश्चन्द्रकलामिवाननचरीमित्यादि**'। (मामा. ५.२८)

'प्रेयः प्रियतराख्यानमि'त्यनेन च समस्तभावमूर्धाभिषिक्ताया रतेः परप्रकर्षाधिगमाद् भावनापथातिक्रमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिणताया उपादानाद् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञाप**यन्नहङ्कारस्योत्तरां कोटिमुपलक्षयति**। यदाह—

**आभावनोदयमनन्यधिया जनेन यो भाव्यते मनसि भावनया स भावः ।**
**यो भावनापथमतीत्य विवर्त्तमानः साहंकृते हृदि परं स्वदते रसोऽसौ ॥**

तद्यथा—

**यदेव रोचते मह्यं तदेव कुरुते प्रिया ।**
**इति वेत्ति न जानाति तत् प्रियं यत् करोति सा ॥ ४३॥**

यथा च–(उ.रा.च. १.३९)

**अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्**
**विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।**
**कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं**
**भद्रं तस्य सुमानुषस्य कथमप्येकं हितं प्राप्यते ॥४४॥**

**'युक्तोत्कर्षं च तत्त्रयमि'त्यनेनायुक्तोत्कर्षाणां त्रयाणामप्यूर्जस्विरसवत्प्रेयसां गुणत्वमेव, नालङ्कारत्वमिति ज्ञापयति। तथा ह्यौर्जित्यं भाविकत्वं प्रेय'** इति पदैस्त्रयोऽप्येते गुणेषूपदिष्टाः।

कुतः पुनरेतत्, यदेकदोर्जस्विरसवत्प्रेयसामलङ्कारत्वम्, अन्यदा गुणत्वम्?

उच्यते–(मभा. ५.२.९४)

**भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।**
**संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥४५॥** इति।

यथा– गोमान् देशः, वाचालो वटुः, वग्मी विपश्चित्, क्षीरिणो वृक्षाः, बलवान् मल्लः, दण्डिमती शालेति। तत्रोर्जस्विरसवतोरलङ्कारत्वविवक्षाया**मतिशायने भूम्नि** वा मत्वर्थीयः। गुणत्वविवक्षायां तु प्रशंसानित्ययोगयोरित्यपि द्रष्टव्यम्। नित्यो हि काव्ये गुणयोग इव रसावियोगः। गुणवतो रसवतश्च निश्चितैवास्य **प्रशंसा**, संसर्गस्तु गुणानामवश्योपादानेन। **निन्दा** पुनर्दोषहानेन बाधिता नावतरति। प्रेय इत्ययं त्वातिशायनिकः। तदाह 'प्रेयः प्रियतराख्यानम्' इति।

नन्वलङ्कारेषु गुणेषु वा प्रेय इति रूपाभेदात् कथमलङ्कारत्वे तदुत्कर्षप्रतीतिः?

यथा 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' इति। तत्रातिशायनिकान्तरेण तद्गतिरिति चेदिहापि युक्तोत्कर्षं च तत् त्रयमिति वाक्यान्तरेण भविष्यति। न वातिशायनिकाः स्वार्थातिरिक्तं किमपि ब्रुवते, अपि तु प्रकृत्युपात्तमेव प्रकर्षादिकं गमयन्ति, स्वार्थिकेषु तेषां विधानात्।

**अथ रसवदिति किं मत्वर्थीयः, उत वतिः?**

किंचातः?

**यदि मत्वर्थीयः,** मत्वर्थानुपपत्तेस्तदभावः। रसा हि सुखदुःखावस्थारूपाः। ते च शरीरिणां चैतन्यवताम्, न काव्यस्य, तस्य शब्दार्थरूपतया अचेतनत्वेन भूमनिन्दादीनामभावात्।

**अथ वतिः,** वत्यर्थानुपपत्तेस्तदभावः। 'तेन तुल्यं क्रिया चेद्वतिः', 'तत्र तस्येव'। न च रसैस्तुल्यं वर्तत इति रसवत्। नापि रस इवात्र रसस्येवास्य किञ्चिदस्तीति।

यथेच्छसि तथास्तु।

अस्तु तावन्मत्वर्थीयः।

ननु चोक्तं मत्वर्थाभावात् तदनुपपत्तिः? रसवतो रामादेर्यद् वचनं तद् रसमूलत्वाद् रसवत्, अभेदसमध्यारोपाच्च कविना अनुक्रियमाणस्य तस्यानुकरणमपि रसवत्।

अथवा पुनरस्तु वतिः।

ननु चोक्तं वत्यर्थानुपपत्तेर्न वतिः।

अत्रापि नानुपपत्तिः। 'तदर्हम्' (५.१.११७) इति वचनाद् वतिर्भविष्यति। रसान् प्रतिपादयितुं यदर्हति तद् रसवत्। अर्हति च रसवद् रामादिवचनमनुक्रियमाणमभेद–समध्यारोपाद् रसान् प्रतिपादयितुमिति रसवद् भवति।

ननु च सर्वेषामप्युपादेयानां काव्यशोभाकरत्वादलङ्कारत्वे व्यवच्छेद्याभावात् सङ्करः संसृष्टिरित्येतावदेव वाच्यं भवति।

नैवम्; एवं सति विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति विभावादिसङ्करस्यापि संसृष्टित्वं प्राप्नोति। तदलङ्कारग्रहणेन निवर्त्यते। न हि विभावादयोऽलङ्काराः, अपि तु भावरसतदाभासानामलङ्काराणामभिनिष्पत्ति–हेतवोऽर्थविशेषाः।

नन्वेवमप्यर्थगुणत्वादमीषामप्यलङ्कारत्वं प्राप्नोति।

सत्यमेतत् किन्त्वन्यपरतया त उपादीयमानास्तत्रैव न्यग्भवन्ति, न वाक्यार्थप्रतीतौ पदार्थाः पृथक् स्फुरन्तीति।

तत्र भावानामलङ्कारैर्गुणैर्भावैश्च संकरो भवति, न रसतदाभासैः, तेषां तदङ्गत्वात्। रसानामलङ्कारैर्गुणै रसभावैश्च सङ्करो भवति, न भावरसाभासैः, भावानां रसाङ्गत्वादाभासानां तु रसविरोधात्। आभासानामलङ्कारैर्गुणैराभासैश्च सङ्करो भवति, न रसभावैर्विरोधिभावाङ्गभावाभ्यामेवेति।

ननु चाङ्गाङ्गिनोः संकरव्यवहाराभावे कथमुक्तम्–(काव्याद. २.२६०)

**अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्ष्यता ।**

**इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥४६॥** इति।

उदाहृतं च आक्षिपन्त्यरविन्दानीत्यादि।

उच्यते— यत्र पृथक्सिद्धयोरुक्तिबलादुपकार्योपकारकत्वादिनाङ्गाङ्गिभावोऽवस्थाप्यते तत्रैव संसृष्टिः। यत्र पुनरपृथक्सिद्धयोरेवालङ्कारयोः (रसभावयोः) वागारम्भकत्वेनारभ्यत्वेन वावस्थितयोः स्वाभाविक उपश्लेषः तत्र संकरव्यवहारो न प्रवर्तते। यथा अनन्तर एवोदाहरणे हेत्वर्थान्तरन्यासयोः; अर्थान्तरन्यासो हि हेतुनैवारभ्यते। यदाह— (काव्याद. २.१६९)

**ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन ।**
**तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥४७॥**

तत्रार्थान्तरन्यास इति लक्ष्यनिर्देशः। वस्तु प्रस्तुत्य किंचन, तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति लक्षणनिर्देशः। वस्तु प्रस्तुत्यान्यस्य वस्तुनः एतावत्युच्यमाने घटोऽस्तीत्यत्रापि प्रसङ्गः, तदर्थमाह तत्साधनसमर्थस्येति। न चैतद् वाच्यं धूमोऽयमग्नेरित्यत्राप्यर्थान्तरन्यासः प्रसज्येत्। यद्यपि धूमस्योत्पाद्यस्य साधनसमर्थोऽग्निः, तथापि 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इत्येतदपि सर्वालङ्कारसाधारणं लक्षणमनुसर्त्तव्यम्। अस्मिन् सति सर्वालङ्कारजातयो वक्रोक्त्यभिधानवाच्या भवन्ति। तदुक्तम्— (काव्याद. २.३६३)

**'वक्रत्वमेव काव्यानां परा भूषेति भामहः ।'** (इति)
**श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् ॥४८॥** (इति च)

नन्वेवं सति विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरित्यादिना न भवितव्यमेवालङ्कारेण।

नैवम्।

त्रिविधः खल्वलङ्कारवर्गः — **वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिरिति।**

१. तत्रोपमाद्यलङ्कारप्राधान्ये **वक्रोक्तिः,**

२. श्लेषादिगुणप्राधान्ये **स्वभावोक्तिः,**

३. विभावानुभावव्यभिचारिसंयोगात् तु रसनिष्पत्तौ **रसोक्तिरिति।**

तत्र द्विविधो विभावः — **आलम्बनविभाव उद्दीपनविभावश्च।**

तयोरालम्बनविभाव इष्टानिष्टसंदर्शनादिः, यमालम्ब्य सुखं दुःखं चोत्पद्यते। तेन सुखदुःखविषयेणानुभावेन स्मरणहेतुः संस्कारो जन्यते।

संस्कारप्रबोधहेतवः पुनरुद्दीपनविभावाः ऋतुमाल्यविलेपनादयः। तैः प्रतिबुद्धसंस्कारस्य स्मरणेच्छाद्वेषप्रयत्नाः तेभ्यो मनोवाग्बुद्धिशरीरारम्भाः तेऽनुभूयमानत्वादनुभावाः। तैरयमभिप्रवर्धमान ईप्सितमर्थमासादयन् जिहासितं जिहानः सुखात्मकैर्व्यभिचारिभिः हर्षधृतिस्मृतिमतिप्रभृतिभिः संसृज्यमानः समासादितोत्तरोत्तर–रत्यादिस्थायिभावः शृङ्गारप्रभव एव सम्भोगशृङ्गारादिरसरूपतामधिगच्छति। स एव त्वीप्सितानवाप्तौ जिहासितस्य अहानात्, दुःखात्मकैर्व्यभिचारिभिश्चिन्तौत्सुक्या–वेगनिर्वेदादिभिः संसृज्यमानो दुःखात्मकविप्रलम्भशृङ्गारादिरसरूपतामध्यास्ते। तत्र–

**(भावेभ्यो रसनिष्पत्तिः)**

**रतेः शृङ्गारनिष्पत्ति**र्यथा– (काव्याद. २.२८०)

**मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम्।**
**सैषावन्ती मया लब्धा कथमत्रैव जन्मनि ॥४९॥**

अत्रावन्त्या वासवदत्ताया आलम्बनविभावभूतायाः सकाशादुत्पन्ने वत्सेश्वरस्य रतौ स्थायिभावे तस्याः पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दीप्यमाने, समुत्पन्नेषु हर्षधृतिस्मृति–वितर्कप्रभृतिषु सुखात्मकेषु व्यभिचारिषु सम्भोगशृङ्गारतां प्राप्ते स्थायिनि यदेतदनुभावरूपं मृतेत्यादिवचनं वत्सेश्वरस्य तच्छृङ्गाररसादुपजायमानं रसवदुच्यते।

**हासाद्धास्यनिष्पत्ति**र्यथा– (काव्याद. २.२८९)

**इदमम्लानमानाया लग्नं स्तनतटे तव।**
**छाद्यतामुत्तरीयेण नवं नखपदं सखि! ॥५०॥**

अत्र कांचित्सखीं पूर्वं भर्तरि परिगृहीतमानां तेनैव नवनखपदाङ्कितस्तनीमालम्बन–विभावभूतामुपालभमानायाः कस्याश्चित् सख्या उत्पन्ने हासस्थायिभावे तदीयमान–परिग्रहस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु शङ्कावहित्थहर्षगद्गदादिषु व्यभिचारिषु परप्रकर्षाधिगमाद् धास्यरसतामापन्ने स्थायिनि यदेतदम्लानमानादिवचनं तद्धास्यरससमुद्भूतं रसवदुच्यते।

**उत्साहाद् वीरनिष्पत्ति**र्यथा–(काव्याद. २.२८४)

**अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः।**
**अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥५१॥**

अत्र वसुधाविजयादेरालम्बनविभावादुत्पन्ने स्थायिन्युत्साहभावे तेजःस्थैर्यधैर्यादि–

भिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु स्मृतिमतिवितर्कप्रभृतिषु व्यभिचारिषु परप्रकर्षाधिगमाद् वीररसतामापन्ने स्थायिनि वीररसात्मनः पुंसो यदेतदजित्वेत्यादिवचनं तद् वीररसादुपजायमानं रसवदुच्यते।

**विस्मयादद्भुतनिष्पत्तिर्यथा**--(काव्याद. २.२९०)

**अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।**
**फलं मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥५२॥**

अत्र शाखिनां प्रवालपुष्पफलशाखासम्पत्तिर्निजं रूपं; नन्दनशाखिनां पुनः प्रवालादिस्थानेषु अंशुकहारमणिमन्दिराणि, तदेतदाश्चर्यमेतेषामतश्चैतेभ्य आलम्बनविभावेभ्यः कस्यचिद् देवभूमिगतस्योत्पन्ने विस्मयस्थायिभावे तदीयावयवदर्शनादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु परप्रकर्षाधिगमादद्भुतरसत्वमापन्ने स्थायिनि यदेतदंशुकानि प्रवालानीत्यादिवचनं तदद्भुतरसादुपजायमानं रसवदुच्यते।

**क्रोधाद् रौद्रनिष्पत्तिर्यथा**— (काव्याद. २.२८२)

**निगृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः ।**
**सोऽयं दुश्शासनः पापो लब्धः किं जीवति क्षणम् ॥५३॥**

अत्र दुश्शासनालम्बनविभावाय क्रुध्यतो भीमसेनस्य पूर्वमुत्पन्ने क्रोधस्थायिभावे तदवाप्तेः स्मर्यमाणसमक्षकृतद्रौपदीकेशकर्षणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु असूयावेगवेपथुश्रमादिषु दुःखात्मकेषु व्यभिचारिषु परं प्रकर्षमधिरूढे रौद्ररसतामापन्ने स्थायिनी यदेतद् भीमसेनस्य निगृह्येत्यादिवचस्तद् रौद्ररसादुपजायमानं रसवदुच्यते।

**भयाद् भयानकनिष्पत्तिर्यथा**— (काव्याद. २.२९१)

**इदं मघोनः कुलिशं धारासन्निहितानलम् ।**
**स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥५४॥**

अत्र महेन्द्रकुलिशाद् धारासन्निहितानलादालम्बनविभावात् स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्ने भयस्थायिभावे तद्विदीर्णदानवमरणस्मरणादिभिः उद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु स्वेदस्तम्भवैवर्ण्यवेपथुप्रभृतिषु व्यभिचारिषु स्थायिनो भयानकरसतामापन्नस्य गर्भपातादिभिरनुभावैर्विभाव्यमानस्य स्वरूपसूचकं यदेतदिदं मघोनः कुलिशमित्यादिवचनं तदपि तन्मूलत्वाद् रसवदुच्यते।

**शोकात् करुणनिष्पत्ति**र्यथा—(काव्याद. २.२८६)

**यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।**
**साधिशेते कथं देवी हुताशनवतीं चिताम् ॥५५॥**

अत्र चालम्बनविभावभूताद् देवीमरणादुत्पन्ने शोकस्थायिभावे चितानिवेशन—हुताशनज्वालादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु निर्वेदग्लानिचिन्तास्तम्भादिषु व्यभिचारिषु परप्रकर्षात् करुणरसतामापन्ने स्थायिनि करुणरसवतो नायकस्य यदेतद् यस्याः कुसुमशय्यापीत्यादिवचनं तत् करुणरसादुपजायमानमनुभावरूपं रसवदुच्यते।

**जुगुप्साया बीभत्सनिष्पत्ति**र्यथा—(काव्याद. २.२८८)

**पायं पायं तवारीणां शोणितं पाणिसम्पुटैः ।**
**कौणपास्सह नृत्यन्ति कबन्धैरान्त्रभूषणाः ॥५६॥**

अत्रालम्बनविभावभूतेभ्यः कौणपेभ्यः कस्यचिद्राज्ञो विजयशंसिनः पुंस उत्पन्ने जुगुप्सास्थायिभावे शिरश्छेदविगलद्रुधिरधारापरिप्लुतप्रनर्तितकबन्धान्त्रभूषणशोणित—पानादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु भयावेगशङ्कावहित्थादिषु व्यभिचारिषु परां कोटिमधिरूढे बीभत्सरसतामापन्ने स्थायिनि यदेतत् पायंपायमित्यादिवचनं तद् बीभत्सरसादुपजायमानं रसवदुच्यते। एवमेते अष्टावेव रत्यादयो भूमानमापन्नाः शृङ्गारवीरादिव्यपदेशं लभन्ते।

**(रसेभ्यो रसनिष्पत्तिः)**

यथा चैते भावेभ्यो रसाः रसेभ्यो भावाः तथा **रसेभ्यश्च रसा** भवन्तीति **भरताचार्यः**। तत्र—

**शृङ्गाराद्धास्यरसनिष्पत्ति**र्यथा— (द्र. अत्रैव १०.२)

**स एष भुवनत्रयप्रथितसंयमशशङ्करो**
**बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।**
**अनेन किल निर्जिता वयमिति प्रियायाः करं**
**करेण परिघट्टयन् जयति जातहासः स्मरः ॥५७॥**

**वीरादद्भुतनिष्पत्ति**र्यथा—

**सम्प्रत्येव हि गोग्रहे यदभवत् तत् तावदाकर्ण्यता—**
**मेतत् ते हृदयं स्पृशामि यदि वा साक्षी तवैवात्मजः ।**

एकः पूर्वमुदायुधैस्सुबहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवप्रणयिनः तावन्त एवार्जुनाः ॥ ५८॥

रौद्रात् करुणनिष्पत्तिर्यथा—(मवीच. २.२०)

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तैः क्षणं वेत्रिभि—
र्दृष्टो दृष्टिनिपातजिह्मितमुखैरव्याहतप्रक्रमः ।
रामान्वेषणतत्परः परिजनैरुन्मुक्तहाहारवं
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥ ५९॥

बीभत्साद् भयानकनिष्पत्तिर्यथा—(मवीच.१.३५)

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण—
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्—
व्यालोलस्तनभारभैरववपुर्बन्धोद्धतं धावति ॥६०॥

एतच्चायुक्तं, यतोऽमी रत्यादयः परं प्रकर्षमारूढा भावा एव, न रसाः, तथात्वे हर्षादीनामपि रसत्वप्रसङ्गात्। तदाह—

रत्यादयो यदि रसाः स्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्विभिन्नैः ।
न स्थायिनस्त इति चेद् भयहासशोक—
क्रोधादयो वद कियच्चिरमुलसन्ति ॥ ६१ ॥

न चाष्टावेवेति नियमः, यतः शान्तं प्रेयांसमुद्धतमूर्जस्विनं च केचिद् रसमाचक्षते। तन्मूलाश्च किल नायकानां धीरप्रशान्तधीरललितधीरोद्धतधीरोदात्त—व्यपदेशाः। तेषु —

धीरप्रशान्ताश्रयः शान्तो यथा—

सर्वास्सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ६२॥

धीरललिताश्रयः प्रेयान् यथा—

यदेव रोचते मह्यं तदेव कुरुते प्रिया ।
इति वेत्ति न जानाति तत् प्रियं यत् करोति सा ॥ ६३॥

**धीरोद्धताश्रय उद्धतो** यथा–(वेसं. ३.४६)

**धृतायुधो यावदहं तावदन्यैः किमायुधैः ।**
**यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ॥ ६४॥**

**धीरोदात्ताश्रय ऊर्जस्वी** यथा–(काव्याद. २.२९३)

**अपकर्ताहमस्मीति मा ते मनसि भूद् भयम् ।**
**विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥ ६५॥**

अत्र च शमप्रकृतिः शान्तः, स्नेहप्रकृतिः प्रेयान्, गर्वप्रकृतिरुद्धतः, अहङ्कारप्रकृतिः पुनरूर्जस्वीति शृङ्गारादिवदेतेष्वपि विभावानुभावव्यभिचारिसंयोगो द्रष्टव्यः।

अन्ये त्वाहुः – सर्व एव रत्यादयो विभावानुभावव्यभिचारिसंयोगादुत्पद्यमानाः भूमानमापन्ना रसीभवन्ति। तथा हि– (रुद्रटा. १२.४)

**रसनाद् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः ।**
**निर्वेदादिष्वपि तत् प्रकाममस्तीति तेऽपि रसाः ॥ ६६॥**

सर्वेषां च तुल्ये रसत्वे रत्यादीनामेव परप्रकर्षगामिनां शृङ्गारवीरादिव्यपदेश इति न घटते। तथात्वे वा नाममात्रं भिद्यते। तदुक्तम्–

**वीराद्भुतादिषु च येह रसप्रसिद्धिः**
**सिद्धा कुतोऽपि वटयक्षवदाविभाति ।**
**लोके गतानुगतिकत्ववशादुपेता**
**मेतां निवर्तयितुमेष परिश्रमो नः ॥ ६७ ॥**

यदि च रत्यादयः प्रकर्षगामिनो भावा एव रसाः, कथमुच्यते भावेभ्यो रसा इति?

**रसेभ्यो भावा इत्यप्ययुक्तम्।** न हि बहवो रसाः, अपि त्वेक एव शृङ्गारो रस इत्यग्रतोऽपि प्रबन्धेन प्रतिपादयिष्यते।

**यच्चोक्तं रसेभ्यश्च रसा** इति, तत्र यद्यालम्बनविभावभूतेभ्य इति मतं, तदा

**शृङ्गारात् तु भवेद्धास्यो रौद्रात् तु करुणो रसः ।**
**वीराच्चैवाद्भुतो नाम बीभत्सात् तु भयानकः ॥ ६८॥** (नाशा. ६.३८)

इति नियमो न घटते,

यतः शृङ्गारादन्यतोऽपि **हास्य** उत्पद्यमानो दृश्यते, यथा—

**हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं**
**स्रस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च।**
**सन्नद्धा जघने च वल्कलपटी पाणिश्च धत्ते धनुः**
**दृष्टं भो जनकस्य योगिन इदं दान्तं विरक्तं मनः॥ ६९॥**(बारा.१.५३)

शृङ्गारादपि न दृश्यते, यथा—(गास. १.६०)

**चिन्ताणिअदइअसमागमम्मि कअमण्णुआइँ भरिऊण।**
**सुण्णं कलहाअन्ती सहीहि रुण्णा ण ओहसिआ॥ ७०॥**
(चिन्तानीतदयितसमागमे कृतमन्युकानि स्मृत्वा।
शून्यं कलहायमाना सखीभी रुदिता न उपहसिता॥)

रौद्रादन्यतोऽपि **करुणो** दृश्यते, यथा—

**आर्द्रं नागाजिनमवयवग्रन्थिमद् बिभ्रदंसे**
**रूपं प्रावृड्घनरुचि महाभैरवं दर्शयित्वा।**
**पश्यन् गौरीं भयचलकरालम्बितस्कन्दहस्तां**
**मन्ये प्रीत्या द्रुत इव भवान् वज्रदेहोऽभिजातः॥ ७१॥**

रौद्रादपि न दृश्यते, यथा—(किराता. ३.२१)

**निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम्।**
**असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः॥ ७२॥**

वीरादन्यतोऽप्य**द्भुतो** दृश्यते, यथा—

**कासुखहेहु कोत्ति आइ अज्जणण उप्पाओ।**
**पिअसंगम सहणट्टाणिसस संघाणिसुपुड जाइ॥ ७३॥**

वीरादपि न दृश्यते, यथा—(शाकु. २.१५)

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री—**
**मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।**
**आशंसन्ते सुरयुवतयः सक्तवैरा हि दैत्यै—**
**रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे॥ ७४॥**

बीभत्सादन्यतोऽपि **भयानको** दृश्यते, यथा—(किराता. ३.१९)

**यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि ।**
**धुन्वन् धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥७५॥**

बीभत्सादपि न दृश्यते, यथा—(मवीच. ५.२९)

**तत्क्रूरदन्तकरपत्रनिकृत्तसत्त्वसङ्घातनिस्सरदसृक्प्लुतकूर्चगुच्छम् ।**
**वक्त्रं वपुश्च विकृताकृति दीर्घबाहोरार्येण राक्षसकुतूहलिना न दृष्टम् ॥**

**अथ प्रकृतिभूतेभ्य इति पक्षः ।**

तत्रापि किं शृङ्गाराद्धास्यो जायते? उत शृङ्गार एव हास्यो भवति?

किं चातः?

यदि शृङ्गाराद्धास्यो जायते, तदिष्यत एव।

**न ह्यशृङ्गारिणः कश्चिदपि प्रकर्षगामी अप्रकर्षगामी वा भावः सम्भवति। शृङ्गारी हि** 'रमते, उत्सहते, हसति, विस्मयते, जुगुप्सते, शोचते, बिभेति, शाम्यति, स्निह्यति, गर्वायते, अभिमन्यत' इति।

अथ रतिप्रकृतिरेव शृङ्गारो हास्यरसीभवति, तन्न घटते, शृङ्गारस्य हास्यव्यपदेशाभावात्। अथोच्यते—

**शृङ्गारानुकृतिर्येह स हास्यो रस इष्यते ॥७७॥** (नाशा. ६.३९)

तर्हि,

**वीरस्यानुकृतिर्येह सोऽपि हास्य इतीष्यताम् ॥७८॥**

एतेन 'रौद्रात्तु करुणो रस' इत्यपि प्रत्युक्तम्। न हि रौद्रात् करुणो जायते, नापि रौद्रः करुणो भवति।

**अथ रौद्रस्य यत् कर्म करुणस्स निगद्यते ॥७९॥** (नाशा. ६.३९)

तथापि,

**न रौद्रकर्म करुणः कारणं करुणस्य तत् ।**
**एतेन वीरकर्मापि न भवेदद्भुतो रसः ॥८०॥**
**हेतुत्वं तु तदुत्पत्तौ तस्यापि न निवार्यते ।**
**बीभत्सदर्शनाद् यः स्यात् स भवेत् तु भयानकः ॥** (नाशा. ६.४०)
**इत्यालम्बनहेतुभ्यो विभावेभ्यो न भिद्यते ॥८२॥**

अतो यत्किंचिदेतद् **'भावेभ्यो रसा, रसेभ्यो भावा, रसेभ्यश्च रसा'** इति। किं पुनरिह न्याय्यम्?

यथोपवर्णितं पुरस्तात्—

**अप्रातिकूलिकतया मनसो मुदादे—**
**र्यस्संविदोऽनुभवहेतुरिहाभिमानः ।**
**ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्तेः(/रक्तेः)[१]**
**रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥ ८३॥**

एतेन रूढाहङ्कारता[२] रसस्य **पूर्वा कोटिः**। रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभावव्यभिचारिसंयोगात् परप्रकर्षाधिगमे रसव्यपदेशार्हता रसस्यैव **मध्यमावस्था**। 'प्रेयः प्रियतराख्यानम्' इत्युपलक्षणेन यथा रतेः प्रेमरूपेण परिणतिस्तथा भावान्तराणामपि परमपरिपाके प्रेमरूपेण परिणतौ रसैकायनमिति रसस्य **परमा काष्ठेति** प्रतिष्ठितं भवति। तथा हि — यथोर्जस्विन्यपकर्ताहमिति यत्ते चेतसि भयं, न मे खङ्गः पराङ्मुखेषु कदाचिदपि प्रहर्तुमुत्सहत इति रूढोऽहङ्कारः प्रतीयते, सैषावन्ती मयात्रैव जन्मनि लब्धेति धिक् ते वृथाप्रतिज्ञो मानपरिग्रह इति, उर्वीविजयाद्यकृत्वा कथं पार्थिवो भवेयमिति, न मयेदृशाः शाखिनः क्वचिदपि दृष्टा इति, अनेन मे द्रौपदी केशेष्वाकृष्टेति, धन्यो मघवा यस्यैतदायुधमिति, सा मे देवी चितामध्यास्त इति, धिक् कौणपाः शोणितमान्त्रभूषणाः पिबन्तीति, अस्ति मे सन्तोषो मनस इति, यथेयं मे प्रिया तथाहमप्यस्या यतो मदनुकूलमेवैषापि चेष्टत इति, मयि धृतायुधे किमायुधान्तरैरिति सर्वत्रैवाहङ्कारः प्रतीयते।

कथं पुनर्विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः?

उच्यते, यथेन्दुसन्निधेर्गण्डकः स्यन्दते, यथार्कसन्निधेस्सूर्यकान्तो ज्वलति, यथा कर्पूरसन्निधेः स्फटिको विलीयते तथा तेभ्यस्तेभ्य आलम्बनविभावेभ्यस्तत्तदाकार—परिणतेन्द्रियबुद्ध्युपाधियोगिनोऽभिमानिमनसस्ते ते रतिक्रोधशोकादयो भावाः समुत्पद्यन्ते। ते रत्यादयो यथा—(मामा. ३.५)

**आश्चर्यमुत्पलदृशो वदनामलेन्दुसान्निध्यतो मम मुहुर्जडिमानमेत्य ।**
**जात्येन चन्द्रमणिनेव महीधरस्य सन्धार्यते द्रवमयो मनसो विकारः ॥ ८४॥**

---

१. द्र. अत्रैव १.८ ; ११.७

२. अहमित्येवाहङ्कारः यथा ओमित्येव ओङ्कार इति 'कारः' स्वार्थक एवेति नात्र गर्वदोषः।

क्रोधादयो यथा— (राच. १९.८९)

**तेनाथ नाथ दुरुदाहरणातपेन**
**सौम्यापि नाम परुषत्वमभिप्रपन्ना ।**
**जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती**
**वागर्चिषस्तपनकान्तशिलेव सीता ॥८५॥**

शोकादयो यथा—(उराच. १.२८)

**अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना**
**तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि ।**
**जनस्थाने शून्ये विशदकरुणैरार्यचरितै—**
**रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥८६॥**

अथ यथेन्दूदये समुद्रः क्षुभ्यति, यथाऽपथ्यसेवया व्याधिरभिवर्धते, यथानार्यसन्निधेः साधुः सुतरां दुःखाकरोति, तथा तेभ्यस्तेभ्य उद्दीपनविभावेभ्य—स्तत्तदनुभवसंस्कारयोगिनो मनसस्तत्तद्भावाभिवृद्धये ते ते विकारा उपजायन्ते। ते तत्क्षोभे यथा—(रघु. ८.४३)

**विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।**
**अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥८७॥**

तदभिवृद्धौ यथा—(कुसं. ४.२६)

**तमुदीक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।**
**स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥८८॥**

तत्प्रातिकूल्ये यथा—(विक्रमो. २.६)

**इदमसुलभवस्तुप्रार्थनादुर्निवारं**
**प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।**
**किमुत मलयवातोन्मूलितापाण्डुपत्रै—**
**रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ ८९॥**

अथ यथैकस्यापि भूरुहादेः काण्डस्कन्धशाखाविटपादयः प्रकाराः, पल्लवपत्रपुष्पफलसम्पदादयो विकाराः, एकस्याप्यम्भसः प्रवाहावर्तबुद्बुदतरङ्गादयो विवर्ताः, मुक्ताफलफेनलवणकारकादयो विपरिणामाः, एकस्यापि ध्वनेस्तारमध्यमन्द्र—क्रुष्टादयो भेदाः, वर्णपदवाक्यकूजितादयो अवच्छेदाः, एकस्यापि वायोः प्रवहावहपरिवहादयः स्कन्धाः प्राणापानव्यानादयोऽनुबन्धाः तेभ्यस्तेभ्य उपाधिभ्यो

जायन्ते, तथैकस्यापि रतिक्रोधशोकादेस्तेभ्यस्तेभ्य उपाधिभ्यस्ते तेऽनुभावा व्यभिचारिणश्चाभ्यन्तरा बाह्याश्च व्यवस्थासम्प्लवाभ्यामुपप्लवन्ते। तत्राभ्यन्तरा व्यभिचारिषु चिन्तौत्सुक्यावेगवितर्कादयः, बाह्याः स्वेदरोमाञ्चाश्रुवैवर्ण्यादयः; अनुभावेष्वाभ्यन्तराः स्मरणेच्छाद्वेषप्रयत्नाः, बाह्या मनोवाम्बुद्धिशरीरारम्भाः; त उभये अप्यनुक्रियमाणाः सात्त्विकाङ्गिकवाचिकचित्रसामान्याभिनयव्यपदेशं लभन्ते। तेषु

**रतिप्रभवा** यथा—(कुसं. ३.६८)

**विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।**
**साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ।।९०।।**

**क्रोधप्रभवा** यथा—(पृ. ८३५)

**प्रत्यग्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः**
**कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयः ।**
**पार्थस्याकृतशात्रवप्रतिकृतेरन्तः शुचा मुह्यतो**
**हा वत्सेति गिरः स्फुरन्ति, न पुनर्निर्यान्ति कण्ठाद् बहिः ।। ९१ ।।**

**शोकप्रभवा** यथा—(मामा. ९.२०)

**मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः**
**शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।**
**सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा**
**विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि ।।९२।।**

अथ यथेक्षुभ्यो रसः, सर्षपेभ्यस्तैलं धातुभ्यो हिरण्यं, अश्मभ्यो लोहं, दध्नो नवनीतं, काष्ठतोऽग्निस्तेभ्यस्तेभ्यो यन्त्राग्निमन्थसंयोगेभ्यो निष्पतन्ति तथा स्वेभ्यः स्वेभ्यो विभावानुभावव्यभिचारिसंयोगेभ्यो रतिक्रोधशोकादिभ्यस्ते **ते रसा निष्पद्यन्ते।**

यथा—(मामा. ५.२८)

**राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे**
**दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।**
**आतङ्काद् विकलं, द्रुतं करुणया, विक्षोभितं विस्मयात्,**
**क्रोधेन ज्वलितं, मुदा विकसितं, चेतः कथं वर्तते ।।९३।।**

अथ यथा लवणाम्लादयः स्वसंयोगिनो मृद्वीकादीनप्यात्मरूपतां नयन्त उपचीयन्ते, तथा रत्यादिजन्मानो रसाः विभावादीनप्यात्मरूपतां नयन्त उपचीयन्ते। यथा—(गास. ४.८९)

**कस्स भरिसि त्ति भणिए को मे अत्थि त्ति जप्पमाणाए ।**
**उव्वेगरोइरीए अम्हे वि रुआविआ तीए ॥ ९४॥**
(कस्य स्मरसीति भणिते को मेऽस्तीति जल्पमानया ।
उद्विग्नरोदनशीलया वयमपि रोदितास्तया ॥)

अथ यथा (वै.सू. २.१.६) सर्पिर्जतुमधूच्छिष्टादीनां पार्थिवानां घनतुहिनकरकादीनामाप्यानां त्रपुसीसरजतादीनां तैजसानामग्निसंयोगाद् द्रवता अद्भिस्सामान्यं भवति, तथा विभावानुभावव्यभिचारिणां रससंयोगाद् रसता रसेनैव सामान्यं भवति। यथा–(रघु. ८.७०)

**विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।**
**अकरोत् पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनान् ॥ ९५॥**

अथ यथा ओषधिरसेभ्यो मधुनिष्पत्तिः, यथा मधुरादिभ्यः षाडवोत्पत्तिः, यथा गुडादिभ्य आसवोत्पत्तिः; तथा तेभ्यस्तेभ्यो रससामान्येभ्यः रसविशेषाभिनिर्वृत्तिः भवति। यथा–(रत्ना. ४.१९)

**यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले**
**सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।**
**देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः**
**किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥ ९६॥**

अथ यथैकस्याप्यग्रेर्भौमदिव्यौदर्यादयो जातिभेदाः दाहालोकपाकादयोऽर्थक्रियाः धूमार्चिरङ्गारादयोऽवस्थाः संदृश्यन्ते, तथैकस्यापि रसस्य भावरसतदाभासादयो जातिभेदा उत्कण्ठाभिषङ्गनिर्वृत्यादयोऽर्थक्रिया उत्पादाभिवृद्धिस्थैर्यादयोऽवस्थास्स–मुपलभ्यन्ते। तत्र–

**भावो** यथा–(कुसं. ३.६७)

**हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ ९७॥**

**रसो** यथा–(कुसं. ५.८५)

**तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः विक्षेप एव पदम् ॥ ९८॥** इत्यादि।

आभासो यथा—

आः सीते! पतिगर्वविभ्रमभरभ्रान्तभ्रमद्बान्धव
प्रध्वंसस्मितकान्तिमत् तव तदा जातं यदेतन्मुखम् ।
संप्रत्येष हठात् तदेव कुरुते केशोच्चयाकर्षण—
त्र्यश्रोत्तानितलोललोचनपतद्बाष्पप्लुतं रावणः ।। ९९।।

उत्कण्ठा यथा—(कुसं. ६.९५)

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ।।१००।।

अभिषङ्गो यथा—(मामा. ५.१०)

लीनेव प्रतिबिम्बितेव लिखितेवौत्कीर्णरूपेण च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि—
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ।।१०१।।

निर्वृतिर्यथा—(मामा. १.३६)

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ।।१०२।।

उत्पादो यथा—(मवीच. १.२१)

उत्पत्तिर्देवयजनाद् ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे ।।१०३।।

अभिवृद्धिर्यथा—

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
तद् वासः श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत् सखि वेद्मि साम्प्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं च किं कथमिति स्वल्पापि मे न स्मृतिः ।।१०४।।

स्थैर्यं यथा—(उराच. १.३९)

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत् ।।१०५।।

**भावविशेषो** यथा–(उरा. ५.४)

**शत्रोस्सागरलङ्घनं किमपरं द्वारोपरोधः पुरे**
**दोर्दण्डा अपि मे त एव कुलिशक्षुण्णाङ्गदग्रन्थयः।**
**सर्वं सोढमिदं वृथैव हि मया सीताप्रसक्तात्मना**
**पापो ध्वस्तमनोरथस्तु सरलं दृष्टोऽपि नाहं तया ॥१०६॥**

(मनोरथोऽत्र कर्तृ)

**रसविशेषो** यथा–(अमरुक. ३८)

**कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं**
**यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।**
**तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं**
**त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥१०७॥**

**आभासविशेषो** यथा–

**आपृष्टासि व्यथयसि मनो दुर्बला वासरश्री–**
**रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकी।**
**नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा**
**दैवाधीनस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥१०८॥**

## (अलङ्कारसङ्करः –६)

एवमवस्थापिते गुणरसतदाभासभावानामलङ्कारत्वे षट्प्रकारोऽलङ्कारसङ्कर सम्भवति– **गुणसङ्करः, रससङ्करः, अलङ्कारसङ्करः, गुणरससङ्करः, गुणालङ्कारसङ्करः, रसालङ्कारसङ्कर** इति।

### (१. गुणसङ्करः)

ननु च गुणानां सङ्करव्यवहारो नोपपद्यते, बहुष्वपि गुणेषु गुणवदित्येव व्यपदेशात्।

नैवम्; त्रिविधा गुणाः **शब्दगुणा, अर्थगुणा दोषगुणाश्च**।

ते तु प्रत्येकं द्विधा **उल्लेखवन्तो निरुल्लेखाश्च**। तत्र –

**शब्दगुणेषु** समाधिमाधुर्यौदार्यगाम्भीर्यादयः **सोल्लेखाः**।

श्लेषप्रसादसमतासौकुमार्यादयो **निरुल्लेखाः**।

**अर्थगुणेषु** श्लेषप्रसादरीतिकान्त्यादयः **सोल्लेखाः**,

अर्थव्यक्तिसौक्ष्म्यगाम्भीर्यसम्मितत्वादयो **निरुल्लेखाः**।

**दोषगुणेषु** ग्राम्यपुनरुक्ततापार्थव्यर्थादयः **सोल्लेखाः**, शब्दहीनसंशयापक्रमविसन्ध्यादयो **निरुल्लेखाः**।

तत्र सजातीयानां सोल्लेखानामिव विजातीयानां तु निरुल्लेखानामपि सङ्करः प्रवर्तते। तत्र **सजातीयानां** –

**शब्दगुणेषु समाध्यादीनां** यथा–

**णवपल्लवेसु लोलइ घोलइ विडवेसु वलइ सिहरेसु ।**
**ठवइ थवएसु चलणे वसंतलच्छी असोअस्स ॥१०९॥**

(नवपल्लवेषु लोलति घूर्णते विटपेषु वलते शिखरेषु ।
स्थगति स्तबकेषु चरणौ वसन्तलक्ष्मीरशोकस्य ॥)

अत्र अन्यधर्माणामन्यत्रारोपणं **समाधिः**, पृथक्पदता **माधुर्यं**, बन्धविकटत्व**मुदारता**, ध्वनिमत्ता **गाम्भीर्यमिति** सजातीयास्सङ्कीर्यन्ते। यतो वसन्तलक्ष्मीरशोकस्येति पदयोः शब्दध्वनिरपि परिस्फुरति; यथा कस्यचिदशोकस्य कामिनोऽङ्गेषु प्रियाङ्गना सविलासं चेष्टते तथास्येयमिति।

**अर्थगुणेषु श्लेषादीनां** यथा–

**जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचः ॥११०॥**

अत्र संविधानकसुसूत्रता श्लेषः, अर्थस्य प्राकट्यं प्रसादः, उत्पत्त्यादि क्रियाक्रमो रीतिः, दीप्तरसत्वं कान्तिः इत्यर्थगुणास्सजातीयास्संकीर्यन्ते।

**दोषगुणेषु ग्राम्यादीनां** यथा– (काव्याद. ४.१५)

**हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।**
**हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥१११॥**

अत्र हन्यत इत्यमङ्गलार्थं वरारोहेत्यश्लीलार्थं हन्यते हन्यत इति पुनरुक्तं चारुसर्वाङ्गीत्युक्त्वा वरारोहेति व्यर्थम्, अत एते सजातीयाश्चत्वारोऽपि दोषगुणाः सङ्कीर्यमाणाः कस्यचिदुन्मत्तभाषिणो अनुकम्पाद्यतिशयविवक्षायामभ्यनुज्ञायन्ते। यदाह–

**अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते ।**
**न दोषः पुनरुक्तादौ प्रत्युतेयमलङ्क्रिया ॥११२॥** (काव्याद. ४.१४)

अथ **असजातीयानां**

**शब्दगुणानाम् अर्थगुणानां** च सङ्करो यथा–

**को नाम नोदयति नास्तमुपैति को वा**
**लोकोत्तरः पुनरयं सविता जगत्सु ।**
**यत्रोदयास्तमयभाजि रुचां निधाने**
**द्वेधा भवत्यहरिति क्षणदेति कालः ॥११३॥**

अत्र यावदर्थपदता सम्मितत्वं, बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणाः; उक्तार्थनिर्वहणं प्रौढिः, अर्थस्य प्राकट्यं प्रसादः, रूढाहङ्कारतौर्जित्यमित्यर्थगुणाश्च सङ्कीर्यन्ते।

**शब्दगुणानां दोषगुणानां** च यथा—

**एह्येहि वत्स! रघुनन्दन! पूर्णचन्द्र!**
**चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।**
**आरोप्य वा हृदि दिवानिशमुद्वहामि**
**वन्देऽथवा चरणपुष्करकद्वयं ते ॥११४॥** (मवीच. १.५५)

अत्र भावतो वाक्प्रवृत्तिर्भाविकत्वं, प्रसिद्धार्थपदता प्रसादः, प्रेयार्थपदोपाख्यानं प्रेय इति शब्दगुणाः, एह्येहीति पुनरुक्तं, वत्सेत्युक्त्वा त्वत्पादाब्जद्वयं वन्द इति विरुद्धं, मूर्ध्नि चुम्बामि हृदि वहामि पादौ वन्द इति क्रियास्वनुपयोगात् पूर्णचन्द्रेति दर्शनादिक्रियोपयोगि व्यर्थं चेति दोषगुणाः परस्परं सङ्कीर्यन्ते। रसाक्षेपादौ हि पुनरुक्तादयो न दुष्यन्ति।

**अर्थगुणानां दोषगुणानां** च यथा—

**किं द्वारि दैवहतिके सहकारकेण संवर्धितेन विषपादप एष पापः ।**
**अस्मिन् मनागपि विकासविकारभाजि भीमा भवन्ति मदनज्वरसन्निपाताः ॥११५॥**

अत्र दीप्तरसत्वं कान्तिः, अर्थप्राकट्यं प्रसादः, उक्तार्थनिर्वहणं प्रौढिरित्यर्थगुणाः; दैवहतिके विषपादपोऽयं पाप इत्याद्यमङ्गलार्थं ग्राम्यम्, किमनेन संवर्धितेनेत्यत्र मदनज्वरसन्निपात इत्यत्र च कर्तव्यप्रयोजनादेर्विरहिणो द्रष्टुरित्यादेश्चा—ध्याहारादसम्पूर्णवाक्यतायामर्थव्यक्तिविपर्ययः, अस्मिन् विकासविकारभाजीति विकासशब्दस्य पुष्पविषयत्वाद् वृक्षेऽपि प्रयोगेऽवाचकत्वादसमर्थमिति दोषगुणा मिथः सङ्कीर्यन्ते। यतो रसाक्षपात् परिहासलेशोक्त्योरमङ्गलं, प्रविश पिण्डीद्वारं द्वारमिति न्यायात् प्रसिद्धाध्याहारः, दरी वदति, मञ्चाः क्रोशन्तीति प्रयोगदर्शनादा—धाराधेययोरभेदोपचारश्च विरुद्धलक्षणादिभिः प्रयुज्यमानो न दोषायेति।

**(२. रससङ्करः –६)**

अस्तु नाम गुणानां शब्दार्थदोषगुणभेदात् त्रैविध्ये निरुल्लेखतया सोल्लेखतया च सङ्करव्यवहारः, रसानां तु वीराद्भुतादीनां निरस्तत्वात् कथमिवैकः शृङ्गारो अनेकसाध्यं सङ्करव्यवहारं वर्तयति?

उच्यते – यद्यपि शृङ्गार एवैको रसः; तथापि तत्प्रभवा ये रत्यादयः; तेऽप्युद्दीपनविभावैरुद्दीप्यमानास्तदनुप्रवेशादेव सञ्चारिणामनुभावानां च निमित्तभाव– मुपयन्तो रसव्यपदेशं लभन्ते। यथा –

**ह्यभिमानो रत्यादीनां निमित्तं चेतसा रस्यमानो रसः तथा रत्यादयोऽपि हर्षधृतिचिन्तौत्सुक्यादीनां मनोवाक्कायबुद्धिशरीरारम्भाणां च निमित्तमभिमानानुप्रवेशेनैव चेतसा रस्यमाना रसा इत्युच्यन्ते।** युगपदभिधाने च सङ्करव्यवहारं कल्पयन्ति। ते तूत्पत्तौ भावाः, प्रकर्षे रसाः, विपर्यये भावरसाभासाः, प्रविलये तत्प्रशमा इति प्रभिद्यमानाः सङ्कीर्यन्त इति।

तत्सङ्करः षोढा – भावसङ्कर, रससङ्कः, भावाभाससङ्करः, रसाभाससङ्करः, भावप्रशमसङ्करः, रसप्रशमसङ्कर इति। तेषु

**भावसङ्करो** यथा– (मवीच. ५.३२)

**न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते**
**घोरान्धे तमसीव मज्जति मनः संमीलितं लज्जया।**
**शोकस्तातविपत्तितो दहति मां नास्त्येव यस्मिन् क्रिया**
**मर्माण्येव पुनश्छिनत्ति करुणा सीतां वराकीं प्रति ॥११६॥**

अत्रामर्षलज्जाशोकप्रीतयः समकक्ष्यतया मिथस्तिलतण्डुलवत् सङ्कीर्यमाणा रामस्य विरहिणो वागारम्भानुभावोक्तिपरतया प्रतीयन्ते।

**रससङ्करो** यथा–

**क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं ॥११७॥** (पृ.५५२)

अत्र शृङ्गारकरुणौ हरप्रभाववर्णनायां मृत्पिण्डे पांसूदकवत् प्रधानाङ्गभावेन संकीर्येते।

**भावाभाससङ्करो** यथा–

**आः सीते! पतिगर्वविभ्रमभरभ्रान्तभ्रमद्बान्धव०॥११८॥** (पृ. ६९१)

अत्र क्रोधाभासे छायादर्शन्यायेन रत्याभासः उपलभ्यते।

रसाभाससङ्करो यथा—

**एकेनार्कं प्रविततरुषा पाटलेनास्तसंस्थं**
**पश्यत्यक्ष्णा सजलतरलेनापरेणात्मकान्तम् ।**
**अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी**
**द्वौ सङ्कीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥११९॥**

अत्र नरसिंहजाताविव सिंहनरभागौ नर्तकीचक्रवाक्युपमाने रोषशोकप्रकर्षा-वाभासमानौ मिथः संकीर्येते।

भावप्रशमसङ्करो यथा—

**दृष्टे लोचनवन्मनाक्०॥१२०॥** (पृ. ५००)

अत्र कस्याश्चित् सखीविख्यातमानसंविधानकाया मानवत्याः प्रियदर्शना-लम्बनविभावादुत्पन्ने प्रकृष्टरतिप्रभवे प्रहर्षस्थायिभावे तत्पार्श्वोपसर्पणादिभिरुद्दीपन-विभावैरुद्दीप्यमाने समुत्पद्यमानेषु पुलकादिषु सुखात्मकेषु व्यभिचारिषु नयननि-मीलनाधोमुख्यनीवीस्त्रंसनादिभिरनुभावैः परप्रकर्षारोपणादानन्दरसतामापद्यमाने स्थायिनि प्रबलविरोधिभावान्तरोदयादेतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयोर्लज्जारोषयोः प्रशमौ समकक्ष्यतया क्षीरनीरवत् सङ्कीर्यमाणौ प्रतीयेते।

रसप्रशमसङ्करो यथा—(उराच. ६.११)

**विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-**
**स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।**
**झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा**
**महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ १२१॥**

अत्र वीरौद्धत्यस्वातन्त्र्यरसानामानन्दप्रशमपारवश्यरसैस्तिरस्क्रियमाणानां पट इव नीलादिभिः सितादीनां प्रशमे रामदर्शनप्रभावोद्भवे लवस्य विस्मयातिशयप्रशमजन्मनि वागारम्भानुभावोपमादौ चित्रवर्णवत् सङ्कीर्यमाणः समुपलभ्यते।

**(३. अलङ्कारसङ्करः —६)**

**अथालङ्कारसङ्करः**। स यद्यपि व्यक्ताव्यक्तोभयात्मतया तिलतण्डुलकादिभेदैः प्रधानाङ्गभावसमकक्ष्यताभ्यां पुरस्तादुक्तः, तथापि तेषां गुणादिसङ्करसाधारणत्वात् सम्प्रत्यसाधारणः प्रकार उच्यते।

स षोढा— **'शब्दालङ्कारसङ्करः, अर्थालङ्कारसङ्करः, उभयालङ्कारसङ्करः, शब्दार्थालङ्कारसङ्करः, शब्दोभयालङ्कारसङ्करः, अर्थोभयालङ्कारसङ्कर'** इति। तेषु

**शब्दालङ्कारसङ्करो** यथा—

**हंसाली भयतरला सारासरसा सरासतारसरासा ।**
**अम्बरतलमारूढा सारासरसा सरासतारसरासा ।।१२२।।** (सक.)

अत्र संस्कृतप्राकृतभाषाश्लेषः गतप्रत्यागतं चित्रं पादावृत्ति यमकं वर्णानुप्रासश्चेति चत्वारः शब्दालङ्काराः सङ्कीर्यन्ते।

**अर्थालङ्कारसङ्करो** यथा—

**वासावस्थितताम्रचूडवयसामायामिभिः कूजितै—**
**र्दूरादप्यनुमीयमानवसतिर्ग्रामोऽयमग्रेवणम् ।**
**यत्रादीप्तकुकूलकूटविसरद्धूम्याघनं घूर्णते**
**सन्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालं तमः ।।१२३।।** (सक.)

अत्र ताम्रचूडवयसां कूजितैरित्यनुमानं, यत्र तमो घूर्णत इति ज्ञापकहेतुः, आदीप्तकुकूलकूटविसरद्धूम्याघनमिति सन्ध्यान्तोल्लसदच्छभल्लपटलच्छाया— जटालमिति च कारकहेतुः, जायमानपदार्थस्वरूपाभिधानं जातिरित्यर्थालङ्कारा— श्चत्वारो मिथः सङ्कीर्यन्ते।

**उभयालङ्कारसङ्करो** यथा—

**ण हु णवरं दीवसिहासारिच्छं चंपएहिं पडिवण्णं ।**
**कज्जलकज्जं पि कअं उअरि भमंतेहिं भमरेहिं ।।१२४।।**

(न खलु केवलं दीपशिखासादृश्यं चम्पकैः प्रतिपन्नम् ।
कज्जलकार्यमपि कृतमुपरि भ्रमद्भिर्भ्रमरैः ।।)

अत्र चम्पकानां प्रदीपशिखाभिराकारकान्तिभ्यामुपमा, विरहिणीहृदयदाहोद्यान— द्योतनार्थक्रियाभ्यां साम्यं, कज्जलपटलानामिव भ्रमरपटलानामुपरिमेलनान्मेलितं, चम्पकप्रदीपकलिकयोरिव भ्रमरकज्जलपटलयोरप्यौपम्यादिसम्बन्धात् समुच्चय इत्युभयालङ्काराश्चत्वारो मिथः सङ्कीर्यन्ते।

**शब्दार्थालङ्कारसङ्करो** यथा—

**सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि**
**क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।**

**शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि**
**ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ! व्रजन् जीवसि ॥१२५॥**

अत्रावन्त्या रीतिः, पदमुद्रा, विभक्तिमुद्रा, अनुप्रासश्चेति शब्दालङ्काराः; जातिः, कारकज्ञापकहेतू चित्रहेतुश्चेत्यर्थालङ्काराः मिथः सङ्कीर्यन्ते।

**शब्दोभयालङ्कारसङ्करो** यथा–

**स्तोकस्तोकममूभिरम्बरतले तारामिरस्तं गतं**
**गच्छत्यस्तगिरेः शिरस्तदनु च च्छायादरिद्रः शशी।**
**प्रत्यासन्नतरोदयस्य तरणेर्बिम्बारुणिम्ना ततो**
**मञ्जिष्ठारसलोहिनी दिगपि च प्राची समुन्मीलति ॥१२६॥**

अत्र च्छायादरिद्रः मञ्जिष्ठारसलोहिनीति पदमुद्रा, ताराभिरस्तं गतं प्राची समुन्मीलतीति विभक्तिमुद्रा, तदनु च दिगपि चेति समुच्चयमुद्रा, स्तोकस्तोकमस्तं गतं गच्छतीत्यादिरनुप्रासश्च शब्दालङ्काराः, हेतूपमासमाधिरर्थक्रमः, समुच्चयोक्तिश्चेत्युभयालङ्कारा मिथः सङ्कीर्यन्ते।

**अर्थोभयालङ्कारसङ्करो** यथा–

**खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं**
**चर्चा पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम्।**
**गन्धं मुञ्चति सिक्तलाजसुरभिं वर्षेण दग्धा स्थली**
**दुर्लक्षोऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥१२७॥**

अत्र जातिरनुमानं कारकज्ञापकहेतू चेत्यर्थालङ्काराः, रूपकमुपमा हेतूपमोत्प्रेक्षोपमेति च उभयालङ्कारा मिथः सङ्कीर्यन्ते।

**(४. गुणरससङ्करः –६)**

भवतु नाम गुणानां रसानामलङ्काराणां च सङ्करः ; गुणरससङ्करस्तु कथंकारमुपपन्नो भवति? यतो दोषहानमिव गुणोपादानमपि नियमनिर्वर्त्यम्, अलङ्कारयोग इव रसावियोगोऽप्यवश्यविधेयः।

कदाचिदलङ्कारयोगोऽपि त्यज्यते, न तु रसावियोगो गुणयोगश्च। व्यभिचरित–सम्बन्धा एव च पदार्थाः पदार्थान्तरैस्तिलतण्डुलक्षीरनीरादिवत् संसृज्यमानाः सङ्कर–बुद्धिमुत्पादयन्तो दृश्यन्ते, नावयवावयविवज्जातिव्यक्तिवच्चाव्यभिचरितसम्बन्धा इति।

अत्रापि ब्रूमः — यत्र चित्रवर्णवन्नरसिंहवत् पांसूदकवच्च अवयवावयविन्यायेन जातिव्यक्तिन्यायेन चापृथक्प्रयत्ननिर्वर्त्यानां गुणरसानां वाक्ये सन्निवेशः, तत्र सङ्करव्यवहारो न प्रवर्तते। तद्यथा— (काव्याद. १.५१)

**मधुरं रसवद् वाचि वस्तुन्यपि रसस्थितिः ।**
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥१२८॥**
**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चतु ।**
**तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥१२९॥** (काव्याद. १.६२)
**शृङ्गार एव मधुरः परप्रह्लादनो रसः ।**
**तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥१३०॥** (ध्व. २.८)

**शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥१३१॥** (ध्व. २.९)
**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।**
**तद्व्यक्तिहेतू शब्दार्थावोजोऽधिष्ठाय तिष्ठति ॥१३२॥** (ध्व. २.१०)
**समर्पकत्वं वाक्यस्य यत्तु सर्वरसान् प्रति ।**
**स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥१३३॥** (ध्व. २.११)

सेयं गुणानां रसारम्भकत्वे सङ्करप्रसिद्धिः। एवं रसानां गुणारम्भकत्वेऽपि। तद्यथा — रूढाहङ्कारतौर्जित्यं, भावतो वाक्यवृत्तिर्भाविकत्वं, क्रोधादावप्यतीव्रता माधुर्यम्, आशयोत्कर्षः उदात्तत्वम्, अर्थस्याभीष्टतमता प्रेयः, दीप्तरसत्वं कान्तिरिति। यत्र तु तिलतण्डुलवत् क्षीरनीरवच्छायादर्शवच्च तुल्यकक्ष्यतयैव गुणरसानां वाक्ये पृथक्प्रयत्ननिर्वर्त्यानां विनिवेशस्तत्र **सङ्करव्यवहारः** प्रवर्तत एव।

स षोढा— **गुणप्रधानः, रसप्रधानः; उभयप्रधानः, उभयाप्रधानः, गुणाधिकः, रसाधिक** इति। तेषु

**गुणप्रधानो** यथा— (विसा. १.१९)

**अत्रान्तरे ललितहारलतानितम्बसंवाहनस्खलितवेगतरङ्गिताङ्गी ।**
**देवी व्यपास्य शयनं धृतमानतन्तुरन्तःपुरं गतवती सह सौविदल्लैः ॥१३४॥**

अत्रार्थप्राकट्यौदार्ययोरर्थशब्दगुणयोः प्राधान्यम्, न रतिक्रोधयोरिति गुणप्रधानः।

**रसप्रधानो** यथा—(किराता. ५.३३)

**अस्मिन्नगृह्यत पिनाकभृता सलीलमारब्धवेपथुरधीरविलोचनायाः ।**
**विन्यस्तमङ्गलमहौषधिरीश्वरायाः स्त्रस्तोरगप्रतिसरेण करेण पाणिः ॥१३५॥**

अत्र श्लाघ्यविशेषणयोग उदात्तत्वम्, बन्धविकटत्वमुदारता, अर्थप्राकट्यं प्रसादः, दीप्तरसत्वं कान्तिरिति गुणाः, साध्वसविलासानुरागसङ्गमरसैरतिशय्यन्त इति रसप्रधानः।

**उभयप्रधानो** यथा—

**आपातमात्ररसिके सरसीरुहस्य**
**किं बीजमर्पयितुमिच्छसि वापिकायाम् ।**
**कालः कलिर्जगदिदं न कृतज्ञमज्ञे!**
**स्थित्वा हरिष्यति तवैव मुखस्य लक्ष्मीम् ॥१३६॥**

अत्र भणितिविशेष उक्तिः, संविधाने सुसूत्रता श्लेष इति शब्दगुणयोः लावण्यविलासवर्णनीयरसयोश्च तुल्यकक्ष्यतया निर्देश इत्युभयप्रधानः।

**उभयाप्रधानो** यथा—

**अभिनववधूरोषस्वादुः करीषतनूनपात्०॥१३७॥** (पृ. ५१६)

अत्र स्वादुक्रूरमसृणक्लैब्यमित्यन्यधर्माणामन्यत्रारोपणं समाधिः, अभिनव- वधूरोषादीनां चतुर्णामप्यर्थानां स्वाद्वादीनां च लक्षणादिलक्षितानां प्राकट्यं प्रसादः, अभिनववधूरोषस्वादुः करीषतनूनपात् इति विशेषणविशेष्याणामुपक्रमक्रमेण निर्वहणं रीतिः, पादचतुष्टये चतुर्णामप्यर्थानां विभज्य समत्वेन निवेशः सम्मितत्वमिति चत्वारो गुणाः, चत्वारश्च रत्यमर्षविषादजुगुप्सात्मानो रसाः कालावस्थानिवेदनपरत्वेन प्रतीयन्त इत्युभयाप्रधानः।

**गुणाधिको** यथा—

**अजननिरस्तु विभूतेरपूरणिर्भवतु सर्वकामानाम् ।**
**मा याचिषि मा सेविषि मा सहिषि पराभवं धनिनः ॥१३८॥**

अत्र सुप्तिङ्व्युत्पत्तिः सौशब्द्यम्, वाक्यानां परिपूर्णत्वमर्थव्यक्तिः, अर्थस्य प्राकट्यं प्रसादः, विभूतेरनुत्पत्तौ कामा न पूर्यन्ते, अपरिपूर्णकामो याचते, याचमानस्तदनाप्नुवन् धनिनः सेवते, सेवमानस्तु तैः परिभूयत इत्युत्पत्त्यादिक्रियाक्रमो रीतिरिति गुणाश्चत्वारः, रसस्तु निर्वेद एवैक इति गुणाधिकः।

**रसाधिको** यथा—

**कमलमनम्भसि कमले०॥१३९॥** (पृ. ३३६)

अत्र 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्' इत्यन्य-धर्माणामन्यत्रारोपणं **समाधिः**, 'सा च सुकुमारसुभगेत्युत्पातपरम्परा केयमि'-त्यश्लीलामङ्गलार्थौ दोषगुणावपि, श्लाघ्यविशेषणयोग उदात्तत्वम्, बन्धविकट-त्वमुदारता, उपक्रमाभेदो रीतिः, अर्थस्य प्राकट्यं प्रसादः, अनिष्ठुरता सौकुमार्यं, अभीष्टतमता प्रेयः,दीप्तरसत्वं कान्तिरिति गुणा दश, रसास्तु रत्युत्कर्षहर्षधृत्युत्कण्ठा-वेगविस्मयमतिवितर्कचिन्ताचपलताहासोत्साहस्तम्भगद्गदोन्मादव्रीडावहित्थभयशङ्का विंशतिर्वागारम्भानुभावे शृङ्गारिणः प्रियाचाटुकारस्य कस्यचित् प्रतीयन्त इति रसाधिकः।

**ननु चान्यधर्माणामन्यत्रारोपणं समाधिः।** इह तु कमलमनम्भसि इत्यादौ धर्मिण एवाध्यासे तद्भावापत्तौ कथं समधित्वोपपत्तिः।

उच्यते— अन्यस्य च धर्माणां चान्यत्रारोपणं **समाधिरिति।** एतेन गुणालङ्कारसंकरेऽपि षट्प्रकारस्यैव समाधेः प्राधान्यमभिहितं भवति। यदाह—

**तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः।**
**कविसार्थः समग्रोऽपि तमेवमनुधावति ॥१४०॥** (काव्याद. १.१००)

स त्रिधा— एकधर्माध्यासेऽनेकधर्माध्यासे धर्म्यध्यासे च। तत्र—

**अनेकधर्माध्यासे** समाधेरुभयालङ्कारत्वमुक्तम्।

**एकधर्माध्यासे** समाधिस्तु द्विधा— **शब्दगुणरूपो दोषगुणरूपश्च।**

**शब्दगुणरूपो** यथा—(काव्याद. १.९४)

**कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च।**
**इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥१४१॥**

**दोषगुणेषु** तु—(काव्याद. १.९५)

**निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।**
**अतिसुन्दरम्, अन्यत्तु ग्राम्यकक्षां विगाहते ॥१४२॥**

तद्यथा—(काव्याद. १.९६)

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥१४३॥**

**इति हृद्यम्; अहृद्यं तु निष्ठीवति वधूरिति ।**
**युगपन्नैकधर्माणामध्यासोऽलङ्कृतिर्यथा ॥१४४॥** (काव्याद. १.९७)
**गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥१४५॥** (काव्याद. १.९८)
**उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः ।**
**इतीह गर्भिणीधर्मा बहवोऽन्यत्र दर्शिताः ॥१४६॥** (काव्याद. १.९९)

**(५. गुणालङ्कारसङ्करः –६)**

धर्म्यध्यासस्तु गुणालङ्कारसङ्करे प्रधानं भवति। यतो यद्यपि गुणवत्येव वाक्येऽलङ्कारयोगः, तथापि कवचिद् गुणस्य प्राधान्यं क्वचिदलङ्कारस्येति प्रधानाङ्गभावेन गुणालङ्कारयोः संकरव्यवहारः प्रवर्तते।

स षोढा– **शब्दगुणप्रधानः, अर्थगुणप्रधानः, दोषगुणप्रधानः, शब्दालङ्कारप्रधानः, अर्थालङ्कारप्रधानः, उभयालङ्कारप्रधानः**। तेषु–

**शब्दगुणप्रधानो** यथा–

**प्राप्तश्रीरेष कस्मात्०॥१४७॥** (पृ. ३३२)

अत्र हेतूत्प्रेक्षाभिधाने त्वयीत्यादौ पदे विष्णोः स्वरूपाध्यासेन तद्‌भावापत्तौ समाधेरिह प्राधान्यं प्रतीयते।

ननु चायमर्थस्य प्राकट्यात् प्रसादोऽर्थगुणः कस्मान्न भवति?

अतस्मिन्नपि तद्‌व्यपदेशेन शब्दशक्तेराधिक्यात्।

ननु च'त्वयि इति, एष इति अस्य इति युष्मदेतदिदमां न कश्चन विष्णुवाची; स कथं वर्णनीये अध्यस्तमर्थमभिदधीत,

सर्वनामत्वेनैषां सर्ववाचित्वात्। सर्वनामानि हि सर्वाभिधायीन्यपि प्रकरणाधिगम्यं विशेषमेव ब्रुवते। स च इह प्राप्तश्रीरित्येवमादिभिरभिव्यक्तमेवावगम्यत इति।

**अर्थगुणप्रधानो** यथा–(दे.प.घटस्तबे१८)

**लक्ष्मीवशीकरणचूर्णसहोदराणि–**
**त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।**
**यानि प्रणाममिलितानि नृणां ललाटे**
**लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ १४८॥**

अत्र हेतुसाम्योभयालङ्कृत्यभिधानेऽपि प्राधान्येनार्थप्राकट्यमर्थगुणः प्रतीयते।

**दोषगुणप्रधानो** यथा—(किराता. ५.३०)

**येनापविद्धसलिलस्फुटनागसद्मा—देवासुरैरमृतमम्बुनिधिर्ममन्थे ।**
**व्यावर्तनैरहिपतेरयमाहिताङ्कः खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥१४९॥**

अत्र 'व्यावर्तनैरहिपतेरयमाहिताङ्कः' इति ज्ञापकहेतोः 'खं व्यालिखन्निव' इति उत्प्रेक्षावयवाच्च, देवासुरैरिति नित्यवैरविवक्षायां बहुवचनम्, 'अमृतमम्बुनिधिर्ममन्थे' इति 'द्विकर्मकेषु जिप्रभृतीनामुपसंख्यानम्' इति अमृतशब्दाद् द्वितीया इति दोषगुणयोः प्राधान्यं प्रतीयते।

ननु चात्राप्यर्थस्य प्राकट्यात् प्रसादस्य प्राधान्यं कथं न भवति?

तद्विषयस्य ज्ञापकहेतुनापहृतत्वात् सोऽपि ह्यर्थालङ्कार एव।

**गुणालङ्कारयोश्च तुल्यकक्ष्यतायामलङ्कारः प्रधानं भवति, न गुणः।** गुणैर्हि गुणभूतैरेवालङ्काराः प्राय आरभ्यन्ते। तद्यथा—

**अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।**
**विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥१५०॥**
**समस्तात्युद्भटपदामोजःकान्तिसमन्विताम् ।**
**गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥१५१॥**
**आश्लिष्टश्लथभावां तु पुराणच्छाययाश्रिताम् ।**
**मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥१५२॥**
**माधुर्यमभिवाञ्छन्ति/न्तः प्रसादं च सुमेधसः ।**
**समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥१५३॥** (भामहा. २.१)
**लाटीयावन्त्ययोर्वृत्त्यो[१]-र्मागध्यां च क्वचित् क्वचित् ।**
**केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ॥** (भामहा. २.२)
**प्रतीतशब्दमोजस्वि सुश्लिष्टपदसन्धि च ।**
**प्रसादि स्वाभिधानं च यमकं कृतिनां मतम् ॥** इति। (भामहा. २.१८)

मा भूदलङ्कारतुल्यकक्षतया अर्थगुणस्य प्राधान्यं, शब्दगुणस्य श्लाघ्यविशेषणयोग उदात्तत्वमित्यादेः किमिति प्राधान्यं न भवति?

दोषगुणानामतीवोल्लेखवत्त्वेन प्राधान्यात्।

---

१. वृत्त्यो = रीत्योरिति तु वक्तव्यम्।

**सा वामनप्रसिद्धिर्लङ्घितनभसो बलिद्विषोऽद्यापि ।**
**मत्सरिणः खलु लोका मर्माण्येवानुबध्नन्ति ॥१५६॥**

दोषस्य यो गुणीभावः स ततोऽप्यधिकं प्रकाशत इति।

**शब्दालङ्कारप्रधानो** यथा–(स.क.)

**यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य ।**
**तद् वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविरावि सुरापगाम्भः ॥१५७॥**

अत्रार्थस्य प्राकट्यं प्रसादः, विभवोत्कर्ष उदारता, मृदुस्फुटोन्मिश्र–वर्णानामवैषम्यं समता, बन्धगाढता और्जित्यमित्यादिभ्यो गुणेभ्यः प्राधान्येन शब्दालङ्कारानुप्रासः प्रतीयते।

**अर्थालङ्कारप्रधानो** यथा–

**आश्लेषिणः पृथुतरक्लमपीतशीतमायामिनीर्घनमुदो रजनीर्युवानः ।**
**ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥१५८॥**

अत्र बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तत्वम्, विभवोत्कर्ष औदार्यम्, दीप्तरसत्वं कान्तिरित्यादिभ्यो गुणेभ्यः प्राधान्येन जातिरर्थालङ्कारः प्रतीयते।

**उभयालङ्कारप्रधानो** यथा–

**अभ्युद्धता वसुमती दलितं रिपूरः०॥१५९॥** (पृ. ५०१)

अत्रोक्तिपरिपाकः प्रौढिः, बन्धविकटत्वमुदारता, आशयोत्कर्ष उदात्तत्वम्, अर्थस्य प्राकट्यं प्रसाद इत्यादिभ्यो गुणेभ्यः श्लेषोपसर्जना विशेषोक्तिरुभयालङ्कारः प्राधान्येन प्रतीयते।

**(६. रसालङ्कारसङ्करः –६)**

अथ **रसालङ्कारसङ्करः**–

**रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् ।**
**एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥१६०॥** (ध्व. २.१७)
**रसभावादिविषयविवक्षाविरहे सति ।**
**अलङ्कारनिबन्धो यः स [1]कविभ्यो न रोचते ॥१६१॥** (ध्व. ३.४२ सं.)

---

१. 'स चित्रविषयो मतः' ध्व. ३.४२ संका. २. प्रकृष्यते = ध्वनौ मतः – ध्व. २.१६

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारः [१]प्रकृष्यते ॥१६२॥ (ध्व. २.१६)
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥१६३॥ (ध्व. ३.४३)
यया कयाचिच्छ्रुत्या यत्समानमनुभूयते ।
तद्रूपादिपदासक्तिस्सानुप्रासा रसावहा ॥१६४॥ (काव्याद. १.५२)
नवोऽर्थः सूक्तिरग्राम्या श्रव्यो बन्धः स्फुटा श्रुतिः ।
अलौकिकार्थानुक्तिश्च रसमाहर्तुमीशत[१] ॥१६५॥ (ह.च.)

तत्र रसालङ्कारसङ्करः षोढा सम्भवति—

'शब्दालङ्कारप्रधानः, अर्थालङ्कारप्रधानः, उभयालङ्कारप्रधानः, भावप्रधानः, आभासप्रधानः रसप्रधानश्चेति'। तेषु —

शब्दालङ्कारप्रधानो यथा—(पृ. ६०५)

कमलमलिरमुञ्चदुत्पलकलिकातरलोलमुत्पलाशङ्कां ते ।
कुरुते स्म चक्षुरलिकुलकलिकातरलोलमुत्पलाशङ्कां ते ॥१६६॥

अत्र रतिरसप्रभवं वागारम्भमभिभूय यमकानुप्रासौ शब्दालङ्कारौ प्राधान्येन प्रतीयेते।

अर्थालङ्कारप्रधानो यथा— (सेब. १५.६६)

पुलअं जणेंति दहकंधरस्स राहवसरा सरीरअडंता ।
जणअसुआपओहरप्फंस—करजुअलाणिव्वूढा ॥१६७॥
(पुलकं जनयन्ति दशकन्धरस्य राघवशराः शरीरे पतन्तः ।
जनकसुतापयोधरस्पर्शमहार्घित—कर—युगल—निर्व्यूढा ॥)

अत्र रसाभासमभिभूय हेतुरर्थालङ्कारः प्राधान्येन प्रतीयते।

उभयालङ्कारप्रधानो यथा—

किं गुरु जहणं अह थणभरो त्ति भाअ-कर-अलग्ग-तुलिआए ।
विहिणो खुत्तंगुलि-मग्ग-विब्भमं वहइ से तिवली ॥१६८॥
(किं गुरु जघनमथ स्तनभर इति भागकरतलाग्रतुलितायाः ।
विधेः खाताङ्गुलिमार्गविभ्रमं वहत्यस्यास्त्रिवली ॥)

१. इह उत्तरार्धम् 'विकटाक्षरबन्धस्तु कृत्स्नमेकत्र दुष्करम्' इति।

अत्र रतिप्रभवान् विस्मयादीनभिभूय पर्यायसंशयहेतूत्प्रेक्षोपमा उभयालङ्काराः प्राधान्येन प्रतीयन्ते।

**भावप्रधानो** यथा—

**तीए दंसणसुहए पणअ-क्खलण-जणिओ मुहम्मि मणहरे।**
**रोसो वि हरइ हिअअं मअपंको व्व मअलंछणम्मि णिसण्णो ॥१६९॥**
(तस्या दर्शनसुभगे प्रणयस्खलनजनितो मुखे मनोहरे।
रोषोऽपि हरति हृदयं मदपङ्क इव मृगलाञ्छने निषण्णः ॥)

अत्र हेतूपमातिरस्कारेण रसवतो हरेर्वचसि वागारम्भरूपे रुक्मिणीदत्त—पारिजातमञ्जरीविलोकनप्रभवं सत्यभामाया रोषभावरामणीयकं प्राधान्येन प्रतीयते।

**आभासप्रधानो** यथा—

**कह मा झिज्जउ मज्झो इमीअ कंदोट्टदलसरिच्छेहिं।**
**अच्छीहिं जो ण दीसइ घण-थणहर-रुद्ध-पसरेहिं ॥१७०॥**
(कथं मा क्षीयतां मध्य एतस्या कन्दोष्ठ/नीलोत्पल—दलसदृशाभ्याम्।
अक्षिभ्यां यो न दृश्यते घनस्तनभररुद्धप्रसराभ्याम् ॥)

अत्र हेतूपमोत्प्रेक्षासमाधितिरस्कारेण कस्यचिदनवाप्तदयिताप्रत्यभियोगा—भिमानसुखस्य सुभगमानिनः प्रतिनायकादेः प्रत्यहं सीदतः रसाभासवागारम्भः प्राधान्येन प्रतीयते।

**रसप्रधानो** यथा—

**मा गर्वमुद्वह कपोलतले चकास्ति० ॥१७१॥** (पृ. ५३५ H.O.S.)

अत्राक्षेपहेत्वहेतुपर्यायोक्तिभ्यः प्रकृष्टरतिरसप्रसवः प्रियप्रेमाभिमानविकत्थनायाः प्रियवयस्यायाः पुरस्तात् स्वकान्तप्रेमनिवेदनापरः वेपथुव्यभिचारसूचको वागारम्भः प्राधान्येन प्रतीयते।

एवमियमनेकप्रकारा संसृष्टिर्गुणरसालङ्कारसंकरप्रभवाभिमन्तव्या। तत्रापि प्रधानाङ्गभावेन समकक्ष्यतया च व्यक्ताव्यक्तोभयात्मकरूपायाः तिलतण्डुलक्षीर—जलच्छायादर्शकादयो भेदा यथायोगमवगन्तव्याः।

ते किं वक्तव्याः?

न वक्तव्याः।

कथमनुक्ता गम्यन्ते?

उक्तेष्वेवान्तर्भावात्। तद्यथा—अर्थोभयालङ्कारसङ्कराभिधाने 'खं वस्ते' इति 'चर्चां पारयति' इति **विभक्ति**मुद्रा 'कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलम्' इति **पदमुद्रा** च शब्दालङ्कारावपि संकीर्यमाणौ प्रतीयेते।

किं पुनरमी सङ्करा द्वयोर्बहूनामपि भवन्तीति?

द्वयोरेवेति ब्रूमः।

नन्विदानीमेवोक्तं बहूनामपि भवन्तीति? द्वयोर्द्वयोः सर्वप्रकारैरप्युदाहृतत्वाद् वाक्ये च गुणरसयोगस्य नित्यत्वादुल्लेखवन्त एव सङ्करा गृह्यन्ते, नानुल्लेखवन्तः।

तद्यथा— (कुसं. २.१२)

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥१७२॥**

अत्र श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणे अर्थप्राकट्यं प्रसादः, विशेष्यानुपादानादसम्पूर्णवाक्यता नेयत्वमिति दोषगुणश्च नोल्लिखति, विभाव्यमानस्तु प्रतीयते। ज्ञापकहेत्वर्थालङ्कारे 'तासां त्व प्रभव' इति कारकहेतुरर्थालङ्कारः क्रमरचनेति शब्दालङ्कार [1]नोल्लिखति विभाव्यमानस्तु प्रतीयते। प्रेयसि रसे विस्मयप्रकर्षो हर्षोत्कर्ष (र्षश्च?) नोल्लिखति विभाव्यमानस्तु प्रतीयते। एवं

**किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।**
**अथ यस्तस्य संहर्ता भागः कतम एष ते ॥१७३॥** (कुसं. ६.२३)

अत्र वितर्कालङ्कारे कारकहेतुः क्रमरचना च नोल्लिखति, प्रसादार्थगुणे सुशब्दता बन्धवैकट्यं च नोल्लिखति, मतिप्रकर्षे प्रीत्युत्कर्षो वितर्कश्च नोल्लिखति। विभाव्यमानास्तु सर्व एव प्रतीयन्ते। तथा

**शिञ्जानमञ्जुमञ्जीरकाञ्चीसञ्चारचारवः ।**
**रमयन्ति मनः कान्ता नितान्तं योगिनामपि ॥१७४॥**

अत्र सौकुमार्यशब्दगुणे समासभूयस्त्वमोजः श्लाघ्यविशेषणयोग उदात्तत्वं च नोल्लिखति। अनुप्रासशब्दालङ्कारे हेतुरर्थालंकारो जातिश्च नोल्लिखति। विस्मयभावे रतिर्मतिश्च नोल्लिखति। विभाव्यमानाश्च सर्व एव प्रतीयन्ते। अपि च

**पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका ।**
**कस्य कामातुरं चेतो वारुणी न करिष्यति ॥१७५॥** (काव्याद. १.८४)

अत्र हेतुसमाध्यलङ्कारयोः श्लेषरूपकालङ्कारौ कान्त्युदात्तत्वगुणयोरोजः—

---

१. नोल्लिखतीत्येवाऽत्रासौ वाक्ययोगः।

प्रसादगुणौ आलम्बनविभावोद्दीपनविभावयोर्मतिवितर्कौ च नोल्लिखति। ते तु विभाव्यमानाः प्रतीयन्ते। किंच –

**हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं**[१]
**नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः।**
**चूडापाशे नवकुरवकं चारु कर्णे शिरीषं**
**सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥१७६॥** (मेघ. ६५)

अत्र ज्ञापकहेत्वलङ्कारे कारकहेतुर्जातिश्चार्थालङ्कारौ, आवन्त्या रीतिः क्रमरचना च शब्दालङ्कारौ, दीपकक्रमश्लेषहेतूक्तिपर्यायाश्च उभयालङ्कारौ(रा) नोल्लिखन्ति। श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणे यावदर्थपदता संमितत्वम्, अनिष्ठुराक्षरप्रायता सौकुमार्यमिति शब्दगुणौ, दीप्तरसत्वं कान्तिरर्थप्राकट्यं प्रसाद इत्यर्थगुणो, कालविरोधि निष्क्रियमशरीरमिति दोषगुणौ च नोल्लिखन्ति। स्वनिवासवर्णनोत्कर्षे पतिप्रभावोपवर्णनं निवासिजनवैदग्ध्याभिधानं च विभावौ प्रियतमास्थान (?) प्रेयोरसे सर्वोपकरणप्रागुण्यस्मृतिः विलासाद्यभिनन्दनं चानुभावौ प्रियसुहृत्प्ररोचनोत्साहे घनागमनीपविकासस्मृतिरुत्कण्ठेति च व्यभिचारिणौ नोल्लिखन्ति। विभाव्यमानास्तु सर्व एव प्रतीयन्ते। अन्यच्च –

**शिखण्डे खण्डेन्दुः शशिदिनकरौ कर्णयुगले**
**गले तारा हारः तरलमुडुचक्रं च कुचयोः।**
**तटित्काञ्ची सन्ध्या सिचयरुचयः कालि! तदयं**
**तवाकल्पः कल्पव्युपरमविधेयो विजयते ॥१७७॥**

अत्रारोहावरोहक्रमो गतिः, श्लाघ्यविशेषणयोग उदात्तत्वमिति शब्दगुणयोर्बन्ध–वैकट्यादयः शब्दगुणाः, दीप्तरसत्वं कान्तिरर्थप्राकट्यं प्रसाद इत्यर्थगुणयोः रूढाहङ्कारतौर्जित्यमित्यादयोऽर्थगुणाः, कालादिविरोध्यप्रकृतरसत्वमिति दोषगुणयोः निष्क्रियत्वादयो दोषगुणा नोल्लिखन्ति। वाक्यमुद्रानुप्रासशब्दालङ्कारयोः क्रमरचनादयः शब्दालङ्काराः, जातिहेत्वर्थालङ्कारयोः ज्ञापकहेत्वादयोऽर्थालङ्कारा; समासोक्तिरूप–कोभयालङ्कारयोः समुच्चयोक्त्यादय उभयालङ्काराः नोल्लिखन्ति। प्रेयश्शान्तर–सयोर्भयानकादयो रसाः रौद्रशृङ्गाराभासयोर्वीराभासादयः आभासा मतिस्मृतिभाव–योर्हर्षादयश्च भावा नोल्लिखन्ति। विभाव्यमानाश्च ते सर्व एव प्रतीयन्ते।

**सोऽयं वाक्यविषयो रसावियोग उक्तः॥**

१. द्र. अस्माकं कालिदासग्रन्थावलीगतः पाठः।

## (२. प्रबन्धविषयो रसावियोग)*

**प्रबन्धविषय** उच्यते– सोऽपि दोषहानेन गुणोपादानेन अलङ्कारसङ्करेण च प्रकाशमानो मनीषिणां मनःप्रकर्षहेतुर्भवति। तत्र

**दोषहानमनौचित्यादिपरिहारेण** यथा– मायाकैकेयीदशरथाभ्यां रामः प्रवासितो न मातापितृभ्यामिति **निर्दोषदशरथे**;

राममेव योधयन् रामेण वाली निहतो न सुग्रीवमिति **महावीरचरिते;**

रुधिरप्रियराक्षसेन दुश्शासनस्य रुधिरं पीतं [१]न भीमसेनेनेति **वेणीसंहारे;**

अनङ्गावतारस्य प्रद्युम्नस्यैव जन्मान्तरपत्नी रतिर्मायावती न गुर्वङ्गनेति **हरिवंशे;**

दुर्वाससो अवध्यानाद् दुष्यन्तः शकुन्तलास्वीकारं विसस्मार, नानवस्थिता–नुरागतयेति **शाकुन्तले;**

लवणप्रयुक्तराक्षसाभ्यां राम उपह्वरे तत्तदभिधाय सीता परित्याजिता न कैकेयीमन्थराभ्यामिति **छलितरामे;**

दग्धायामपि वासवदत्तायां वैरप्रतिचिकीर्षया पद्मावती मयोढा, सिद्धे च समीहिते तया विना क्षणमपि न जीवामीत्यविज्ञातवासवदत्तासन्निधेर्वत्सराज–स्याग्निप्रवेशाध्यवसायः प्रियाहृदयतो व्यलीकशल्यमुच्चखानेति **तापसवत्सराजे;**

नीचाक्षः स्वामिकार्यं साधयामीति प्रभुभक्त्या निरपराधामपि प्रेयसीं हित्वा स्वामिकार्यापेक्षया अहमेतावन्ति दिनानि जीवितः, अद्य तु कृतस्वामिकार्य–स्तामेवानुगच्छामीति शिवगणः शूद्रकविनिर्मितां मायामयीं चितां प्रियासमक्षं प्रविवेश, सापि तत्प्रेमापदानदर्शनापह्नुतप्रियव्यलीका तद्वियोगकातरा तत्रैवात्मानं प्रचिक्षेपेति **विक्रान्तशूद्रके।**

एवमन्यदपि दोषहानमुदाहार्यम्। गुणोपादानं तु वक्ष्यमाणप्रबन्धभेदानां सम्यग्लक्षणयोगेन संविधानकसुसूत्रता; तेष्वेव नगरार्णववर्णनादीनां सन्निवेश–प्राशस्त्यमलङ्कारसङ्कर इति। तदुक्तम्– (रामाभ्युदये प्रस्तावनायाम्)

**औचित्यं वचसां प्रकृत्यनुगतं, सर्वत्र पात्रोचिता**
**पुष्टिः स्वावसरे रसस्य च, कथामार्गे न चातिक्रमः।**
**शुद्धिः प्रस्तुतसंविधानकविधौ, प्रौढिश्च शब्दार्थयोः,**
**विद्वद्भिः परिभाव्यतामवहितैरेतावदेवास्तु नः ॥१७८॥**

---

* द्र० अत्रैव पृ० ६१६

तत्रेष्टार्थव्यवच्छिन्ना पदपङ्क्तिर्वाक्यपद्धतिः प्रकरणावली वा **प्रबन्धः**। यतः पदानां सुबन्तानां तिङन्तानां च सर्वार्थसाधारणत्वान्न स्वरूपनिबन्धनो विशेषः प्रतीयते। नापि वाक्यानां, सर्वव्यवहारसाधारणत्वात् परस्परावच्छेदहेतुः भेदः संभवति। न च प्रकरणानां शैलर्तुनगरार्णववर्णनादिरूपाणां सकलकाव्यशरीराङ्गत्वे तद्गतो व्यतिरेक उपपद्यते। अतो य एव तैः उपक्रियमाणो महावाक्यार्थः प्रतिनियतरूपः स परमनेकवाक्यप्रकरणादिसमुदायरूपस्य महाकाव्यादेरवच्छेदहेतुः, तेन व्यवच्छिन्ना विशेषेऽवस्थापिता पदपङ्क्तिर्वाक्यपद्धतिः प्रकरणावली वा प्रबन्धः। यथा **जानकीहरणं, कुमारसम्भव** इति।

ननु च जानक्या हरणमस्मिन्, कुमारस्य सम्भवोऽस्मिन्निति बहुव्रीहौ प्रबन्धेऽन्यपदार्थे जानकीहरणमिति न प्राप्नोति, काव्ये तु कुमारसम्भव इति। न चैकत्र काव्यमेवान्यपदार्थत्वेनाश्रीयते, अन्यत्र प्रबन्ध एवेति नियमहेतुरस्ति। तर्हि नायं बहुव्रीहिः, अति तु तत्पुरुषः, जानक्या हरणं जानकीहरणं, कुमारस्य सम्भवः कुमारसम्भव इति। अभिधेयेन चाभिधायकमपि व्यपदिशन्ति कवयः; यथा अभिज्ञानशाकुन्तलं नाटकं, हर्षचरितमाख्यायिकेति।

प्रबन्धश्चेह द्विधा– **प्रेक्ष्यः, श्रव्यश्च**। तयोः –

**अभिनेयः प्रेक्ष्यः**। स च नाटकादिभेदाच्चतुर्विंशतिप्रकारो भवति–

नाटकं, प्रकरणं, व्यायोगः, ईहामृगः, समवकारः, डिमः, उत्सृष्टिकाङ्कः, भाणः, प्रहसनं, वीथी, नाटिका, सट्टकः, श्रीगदितं, [1]दुर्मिलिका, प्रस्थानं, काव्यं, भाणकं, भाणिका, गोष्ठी, हल्लीसकं, नर्तनकं, प्रेक्षणकं, रासकं, नाट्यरासकमिति।

**अनभिनेयः श्रव्यः**। सोऽप्याख्यायिकादिभेदाच्चतुर्विंशतिप्रकारो भवति–

आख्यायिका, उपाख्यानम्, आख्यानं, निदर्शनं, प्रवह्लिका, मन्थु(न्थु)ल्लिका, मणिकुल्या, कथा, परिकथा, खण्डकथा, उपकथा, बृहत्कथा, चम्पूः, पर्वबन्धः, काण्डबन्धः, आश्वासकबन्धः, सन्धिबन्धः, अवस्कन्धबन्धः, काव्यशास्त्रं, सर्गबन्धः, शास्त्रकाव्यं, कोशः, संङ्घातः, संहिता, [2]**साहित्यप्रकाश** इति। तत्र

---

१. अग्रेऽपि दुर्मिलिकेत्येव नाम।

२. इदमेव हि वस्तुभूतं नाम ग्रन्थस्यास्य।

(प्रेक्ष्यप्रबन्धः (वाक्यार्थाभिनयः) –२४)

अभिनेयभेदेषु–

(१. नाटकम्)

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव ।
राजर्षिचरितवंशानुचरितदिव्याश्रयोपेतम् ॥१७९॥[1] (नाशा.१८.९)
सर्वाभिर्भाषाभिः समन्वितं गद्यपद्यमिश्राभिः ।
सर्वैश्चालङ्कारैर्लक्षणषट्त्रिंशता[2] युक्तम् ॥१८०॥
नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैर्युक्तम् ।
अङ्कप्रवेशकाढ्यं रूपकमिह नाटकं नाम ॥१८१॥ (२०.११)
नृपतीनां यच्चरितं नानारसभावसंश्रितं बहुधा ।
सुखदुःखोत्पत्तिकृतं वाच्यं तन्नाटके भवति ॥१८२॥ (२०.१२)
तत्रावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात् ।
कर्तव्योऽङ्कः सम्यग्गुणान्वितो नाट्यतत्त्वज्ञैः ॥१८३॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥१८४॥
ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥१८५॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्क इति बुधैः स विज्ञेयः ॥१८६॥
शोकप्रसादविद्रवशापोत्सर्गप्रसादनक्रोधाः ।
उद्वाहो[3]ऽद्भुतदर्शनमङ्के प्रत्यक्षजानि स्युः ॥१८७॥
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव ।
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ॥१८८॥

---

१. ना.शा. काशीसं.।
२. भोजमतेन लक्षणानि चतुष्षष्टिर्भवन्ति।
३. उद्वाहो = उत्साहो

भावा रसाश्च यस्मिन्नारोहन्त्यङ्कवद् भवेत् सोऽङ्कः ।
नानाविधानयुक्तो लक्ष्मेव च यः प्रबन्धस्य ॥१८९॥
एकदिवसप्रयोज्यः कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रबन्धेषु ॥१९०॥
एकाङ्केन कदाचिद् बहूनि कार्याणि योजयेद् धीमान् ।
आवश्यकाविरोधेन तत्र कार्याणि कार्याणि ॥१९१॥
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम् ।
विभजेत् कार्यं मतिमान् पृथक्पृथक् सर्वमङ्केषु ॥१९२॥
रङ्गं तु ये प्रविष्टास्सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तियुक्तं कृत्वा कार्यं यथार्थरसम् ॥१९३॥
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद् विधातव्यम् ॥१९४॥
सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा ।
परिजनकथानुबन्धः प्रवेशकस्तत्र विज्ञेयः ॥१९५॥
अङ्कच्छेदं कृत्वा मासकृतं वर्षसञ्चितं वापि ।
तत् सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥१९६॥
यदि किञ्चित् कार्यवशाद् गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्वतन्त्रज्ञैः ॥१९७॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशकस्संविधातव्यः ॥१९८॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रयोगमासाद्य कर्तव्यः ॥१९९॥
विटमुनिदैवतपुरुषैः कञ्चुकिभिश्चार्थयुक्तिमासाद्य ।
संस्कृतवाग्भिरपीत्थं प्रवेशकः संविधातव्यः ॥२००॥

कालोत्थानगतिरस—व्यत्यासारम्भकामविषयाणाम् ।
अर्थाभिधानभूतः प्रवेशकः स्यादनेकार्थः ॥ २०१ ॥
बह्वाश्रयमप्यर्थं प्रवेशकैः संक्षिपेत् प्रबन्धेषु ।
अङ्केषु संप्रयुक्तो जनयति खेदं प्रयोगस्य ॥ २०२ ॥
यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् ।
वृत्तान्तः स्वल्पकथैः प्रवेशकैस्सोऽभिधातव्यः ॥ २०३ ॥
शुद्धस्सङ्कीर्णो वा द्विविधो विष्कम्भकश्च विज्ञेयः ।
मध्यमपात्रश्शुद्धः सङ्कीर्णो मध्यनीचकृतः ॥ २०४ ॥
अङ्कमुखं गर्भाङ्कः कार्योऽस्मिंश्चूलिकापि वा कुशलैः ।
मा भूदितिवृत्तानां विच्छेदो विस्तरो वेति ॥ २०५ ॥
अङ्कमुखं विश्लिष्टं यत्रोपश्लिष्यते स्त्रिया वाक्यैः ।
पुरुषस्य वा तदस्मिन्नङ्कमुखमिति व्यपदिशन्ति ॥ २०६ ॥
अङ्कान्तरे पराङ्को निपतति यस्मिन् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो गर्भाङ्को नाम स ज्ञेयः ॥ २०७ ॥
अन्तर्यवनिकसंस्थैर्मागधसूतादिभिस्तु यः क्रियते ।
अर्थस्योपक्षेपोऽनेकविधश्चूलिका सापि ॥ २०८ ॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् ।
प्रकरणमतः परमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ २०९ ॥

(२. प्रकरणम्)

यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते तज्ज्ञेयं प्रकरणं नाम ॥ २१० ॥
यदनार्षमप्रयुक्तं परेण यत् स्यादभूतगुणबन्धम् ।
प्रकरणमिति तद्विद्यादौद्भिजबीजार्थसंयुक्तम् ॥ २११ ॥
यन्नाटके मयोक्तं वस्तुशरीरं रसाश्रयोपेतम् ।
तत्प्रकरणेऽपि कार्यं केवलमुत्पाद्यवस्त्विह तत् ॥ २१२ ॥

विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यन्नैकविधं तज्ज्ञेयं प्रकरणं कृतिभिः ॥ २१३॥
नोदात्तनृपोपेतं न दिव्यचरितं न राजसम्भोगम् ।
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं लोके ॥ २१४॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं कार्यं कार्यं प्रकरणे तु ॥ २१५॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥ २१६॥
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमर्हति कदाचित् ।
अथ कुलवधूप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ २१७॥
यदि वा कारणयुक्त्या वेशकुलस्त्रीसमागमोऽपि स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥ २१८॥
मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तन्त्रज्ञैः ।
संस्कृतवचनानुगतः संक्षेपार्थः प्रवेशकवत् ॥ २१९॥
अङ्कान्तरालविहितप्रवेशकोऽर्थक्रियामभिसमीक्ष्य ।
संक्षेपात् सन्धीनामर्थानां चैव कर्तव्यः ॥ २२०॥
अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटकं वापि ।
न वधः कर्तव्यो वै यस्तत्र तु नायकः ख्यातः ॥ २२१॥
अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः ।
कार्यं श्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः ॥ २२२॥
प्रकरणनाटकविषये पञ्चाद्या दशपरा भवत्यङ्काः ।
अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः ॥ २२३॥
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥ २२४॥
व्यायोगेहामृगसमवकारडिमसंज्ञितानि काव्यानि ।
दशभिर्द्वादशभिर्वा षोडशभिर्वापि पुरुषैः स्युः ॥ २२५॥

(३. व्यायोग:)

व्यायोगस्तत्र बुधैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तः स्यादेकाहप्रयोज्यश्च ॥ २२६॥
बहवस्तत्र तु पुरुषा व्यायच्छन्ते कथाशरीरवशात् ।
न च तत्प्रमाणनियमः किञ्चैकाङ्कौ विधातव्यः ॥ २२७॥
न स दिव्यनायककृतः कार्यो राजर्षिनायकनिबन्धः ।
युद्धनियुद्धाधर्षणसङ्घर्षयुतश्च कर्तव्यः ॥ २२८॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ॥ २२९॥

(४. ईहामृग:)

वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ।
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ॥ २३०॥
सुविहितवस्तुनिबन्धो विप्रत्ययकारकश्चैव ।
उद्धतपुरुषप्रायस्त्रीरोषग्रथितकाव्यबन्धश्च ॥ २३१॥
संक्षोभविद्रवकृतः संस्फोटकृतश्च स ज्ञेयः ।
तत्र च वधेप्सितानां वधोऽप्युदग्रो भवेन्न पुरुषाणाम् ॥ २३२॥
किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ।
स्त्रीभेदनापहरणोपमर्दनप्राप्तवस्तुशृङ्गारः ॥ २३३॥
ईहामृगो विधेयश्चतुरङ्कविभूषितस्तज्ज्ञैः ।
यद् व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव ॥ २३४॥
ईहामृगेऽपि ते स्युः केवलममरस्त्रिया योगः ।
ईहामृगस्य लक्षणमित्युक्तमिदं मया समासेन ॥ २३५॥

(५. समवकार:)

वक्ष्याम्यतःपरमहं लक्षणयुक्त्या समवकारम् ।
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव ।
त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः ॥ २३६॥

द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च ।
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र ॥ २३७॥
अङ्कोऽत्र सप्रहसनः सविद्रवः सकपटः सवीथीकः ।
द्वादशनाडीयुक्तः प्रथमः कार्यः क्रियोपेतः ॥ २३८॥
कार्यस्तथा द्वितीयस्समाश्रितो नाडिकाश्चतस्रस्तु ।
वस्तुसमापनविहितो द्विनाडिकः स्यात् तृतीयोऽस्मिन् ॥ २३९॥
नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् ।
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ॥ २४०॥
अङ्केऽङ्के सम्बन्धः कर्तव्यः काव्यबन्धमासाद्य ।
अर्थं हि समवकारेष्वप्रतिसम्बन्धमिच्छन्ति ॥ २४१॥
वस्तुगतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटोऽत्र विज्ञेयः ॥ २४२॥
युद्धजलसंभ्रमो वा वाय्वग्निगजेन्द्रसंभ्रमकृतो वा ।
नगरोपरोधजो विज्ञेयो विद्रवस्त्रिविधः ॥ २४३॥
विविधश्चात्र विधिज्ञैः पृथक्पृथकक्काव्यबन्धविहितार्थः ।
त्रिविधकृतः शृङ्गारो ज्ञेयो धर्मार्थकामेषु ॥ २४४॥
यस्मिन् धर्मप्रापकमात्महितं भवति साधनं बहुधा ।
व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः ॥ २४५॥
अर्थस्याप्तिर्यस्मिन् भवति च बहुधा स चार्थशृङ्गारः ।
स्त्रीसंप्रयोगविषये ह्यर्थार्थमपीष्यतेऽभिरतिः ॥ २४६॥
कन्याविलोभनकृतः प्राप्तौ स्त्रीपुंसयोः स रत्यैव ।
निभृतं सावेगं वा विज्ञेयः कामशृङ्गारः ॥ २४७॥
उष्णिग्गायत्र्याद्यान्यन्यानि च यानि बन्धकुटिलानि ।
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि ॥ २४८॥
एवं कार्यः प्राज्ञैर्नानारससंश्रयः समवकारः ।

(६. डिम:)

डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि ॥ २४९॥
श‍ृङ्गारहास्यवर्जं शेषै: सर्वै रसैस्समायुक्त: ।
दीप्तरसकाव्ययोनिश्चतुरङ्को वै डिम: कार्य: ॥ २५०॥
प्रख्यातवस्तुविषय: प्रख्यातोदात्तनायकश्चैव ।
रौद्रभयानकबीभत्सवीरकरुणाद्भुतोपेत: ॥ २५१॥
मायेन्द्रजालबहुलो बहुपुंसो(पुस्तो)त्थानसंयुक्त: ।
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥ २५२॥
निर्घातोल्कापातैरुपरागैश्चन्द्रसूर्ययोर्युक्त: ।
युद्धनियुद्धनिबद्ध: संस्फो(सम्फे)टकृतश्च कर्तव्य: ॥ २५३॥
सात्वत्यारभटीभ्यां वृत्तिभ्यामन्वितो डिम: कार्य: ।
षोडशनायकबहुलस्तज्ज्ञैर्नानाश्रयविशेष: ॥ २५४॥
डिमलक्षणमप्यभिहितमिदमुद्देशक्रमेण संक्षेपात् ।
उत्सृष्टिकाङ्कभाणप्रहसनवीथीरथो वक्ष्ये ॥ २५५॥

(७. उत्सृष्टिकाङ्क:)

प्रख्यातवस्तुविषयस्तेष्वप्रख्यातवस्तुविषयो वा ।
दिव्यपुरुषैर्वियुक्तश्शेषैश्च समन्वित: पुंभि: ॥ २५६॥
करुणरसप्रायकृतो नियुद्धयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवितबहुलो निर्वेदितवाक्यभाषश्च ॥ २५७॥
नातिव्यायतचेष्ट: सात्वत्यारभटिकैशिकीहीन: ।
कार्य: काव्यविधिज्ञैस्सततमिहोत्सृष्टिकाङ्कस्तु ॥ २५८॥

(८. भाण:)

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
वस्तुसमाङ्क: कार्य: सततं काव्ये बुधैर्भाण: ॥ २५९॥

आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषयुतः ।
विविधाश्रयश्च भाणो विज्ञेयः सैकहार्यश्च ॥ २६० ॥
परवचनमात्मसंस्थं परवचनैः सोत्तरैर्ग्रथितवाक्यम् ।
आकाशपुरुषकथितैरङ्गविकारैरिहाभिनयेत् ॥ २६१ ॥

(९. प्रहसनम्)

<u>प्रहसनमिह</u> विज्ञेयं द्विविधं शुद्धं च सङ्कीर्णम् ।
वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ॥ २६२ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ।
स प्रहसने प्रयोज्यो धूर्तजनविवादसम्पन्नः ॥ २६३ ॥
भगवत्तापसविप्रैरन्यैरपि हासवादसम्पन्नम् ।
नीचजनसंप्रयुक्तं परिहासाभाषणप्रायम् ॥ २६४ ॥
वेश्यानपुंसकविटैर्वातिकदासीजनेन संकीर्णम् ।
अनिभृतवेषपरिच्छदचेष्टितकरणैश्च संपन्नम् ॥ २६५ ॥
अविकृतभाषाचारं विशेषभाषोपहासरचितपदम् ।
नियतगतिवस्तुविषयं शुद्धमिह प्रहसनं भवति ॥ २६६ ॥
उद्घात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवेन्मिश्रम् ।

(१०. वीथी)

<u>वीथी</u> स्यादेकाङ्का द्विपात्रहार्यैकहार्या वा ॥ २६७ ॥
सर्वरसलक्षणाढ्या समन्विताङ्गैरियं त्रयोदशभिः ।
प्रथमो(अधमो)त्तममध्यमाभिर्युक्तः स्यात् प्रकृतिभिस्तिसृभिः ॥ २६८ ॥
इति दशरूपकमेतद् भरताचार्यानुसारतो गदितम् ।

(११. नाटिका)

प्रकरणनाटकभेदो रूपकमिह <u>नाटिका</u> भवति ॥ २६९ ॥
स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी।
बहुगीतनृत्तवाद्या रतिसंभोगात्मिका चैव ।
राजोपचारयुक्ता शृङ्गाराभिनयभावसंयुक्ता ॥ २७० ॥
नायकदेवीपरिजनसमन्विता नाटकप्रकृतिः ।

(१२. सट्टक:)

प्रकरणसमुद्भवा पुनरुत्पाद्यं वस्तु नायकं नृपतिम् ॥ २७१ ॥
अन्त:पुरसङ्गीतककन्यामधिकृत्य कर्तव्या ।
विष्कम्भकप्रवेशकरहितो यस्त्वेकभाषया भवति ॥ २७२ ॥
अप्राकृत—संस्कृतया स सट्टको नाटिकाप्रतिम: ।
काव्यं गोपुच्छाग्रं कर्तव्यं नाटिकादिषु प्राज्ञै: ॥ २७३ ॥
ये तूदात्ता भावास्ते सर्वे पृष्ठत: कार्या: ।
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ॥ २७४ ॥
निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञै: ।
यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम् ॥ २७५ ॥
तद् भारतेऽत्र वर्षे कर्तव्यं काव्यबन्धेषु ।
तस्माद् भारतमिष्टं वर्षेष्वन्येषु नित्यकालं हि ॥ २७६ ॥
हृद्या सर्वा भूमि: शुभगन्धा हेमरत्नमयी ।
उपवनगमनक्रीडाविहारनारीरतिप्रमोदा: स्यु: ॥ २७७ ॥
तेषु हि वर्षेषु सदा न तत्र दु:खं न वा शोक: ।
ये चैषामधिवासा: पुराणवादेषु पर्वता: कथिता: ।
सम्भोगस्तेषु भवेत् कर्मारम्भस्तथा तस्मिन् ॥ २७८ ॥
वाक्यार्थाभिनयोऽयं प्रकीर्तितो नाटकादिभेदेन ।
द्वादशविधपदार्थाभिनयमथ यथास्थितं वक्ष्ये ॥ २७९ ॥

(पदार्थाभिनय:)

तत्र श्रीरिव दानवशत्रोर्यस्मिन् कुलाङ्गना पत्यु: ।
वर्णयति शौर्यधैर्यप्रभृतिगुणानग्रतस्सख्या: ॥ २८० ॥
पत्या च विप्रलब्धा गातव्ये तं क्रमादुपालभते ।
श्रीगदितमिति[१३] मनीषिभिरुदाहृतोऽसौ पदाभिनय: ॥ २८१ ॥

चौर्यरतप्रतिभेदं यूनोरनुरागवर्णनं वापि ।
यत्र ग्राम्यकथाभिः कुरुते किल दूतिका रहसि ॥ २८२॥
मन्त्रयति च तद्विषय(ये) न्यग्जातित्वेन याचते च वसु ।
लब्ध्वापि लब्धुमिच्छति दुर्मिलिका[१४] नाम सा भवति ॥ २८३॥
प्रथमानुरागमानप्रवासशृङ्गारसंश्रयं यत् स्यात् ।
प्रावृड्वसन्तवर्णनपरमन्यद् वापि सोत्कण्ठम् ॥ २८४॥
अन्ते वीररसाढ्यैर्निबद्धमेतच्चतुर्भिरपसारैः ।
प्रस्थानमिति[१५] ब्रुवते प्रवासमुपलक्षयेत् सुधियः ॥ २८५॥
आक्षिप्तिकाथ वर्णो मात्रा ध्रुवकोऽथ भग्नतालश्च ।
पद्धतिकाच्छर्धनिका यत्र स्युस्तदिह [१६]काव्यमिति ॥ २८६॥
युक्तं लयान्तरैर्यच्च ध्वनिकास्थाननिर्मितैर्भवति ।
काव्यमिति; विविधरागं चित्रमिति तदुच्यते कृतिभिः ॥ २८७॥
हरिहरभानुभवानीस्कन्दप्रमथाधिपस्तुतिनिबन्धः ।
उद्धतकरणप्रायः स्त्रीवर्जो वर्णनायुक्तः ॥ २८८॥
धवलगुणकीर्तनपरैर्गाथारम्भादिभिः स्तुतिनिबन्धः ।
गायनसहोक्तियुक्तोदन्तेन विभूषितप्रायः ॥ २८९॥
त्रिचतुःपञ्चवितालैर्विश्रामैः सप्तभिः परिच्छिन्नः ।
अर्धोद्ग्राहनिवारणसंख्यातैः कुत्रचिन्नियतः ॥ २९०॥
समविश्रामैर्द्विपथैर्विभूषितः पञ्चमे विपरिवर्ते ।
गाथामात्राद्विपथकपाठ्येनालङ्कृतो भवति ॥ २९१॥
वर्णोऽथ मत्तपाली सभग्नताला त्वनन्तरं गाथा ।
अनुभग्नतालमात्रे प्रथमे स्याद् भग्नतालश्च ॥ २९२॥
मात्रानु च मार्गणिका मात्राथ ततोऽनु भग्नतालश्च ।
गाथाद्विपथवहन्तो विश्रामे स्याद् द्वितीये तु ॥ २९३॥
मात्रा विषमच्छिन्ना सभग्नतालाथ भवति रध्वाथ्या च ।
मार्गणिकेत्येवं स्यात् तालविधानं तृतीये तु ॥ २९४॥

मात्राद्विपथवहन्तो रध्वाथ्यावस्थापनं चतुर्थे स्युः ।
रध्वा/थ्याथ भग्नतालो मार्गणिकाद्विपथविषमाश्च ।। २९५ ।।
पञ्चमके षष्ठेऽप्यथ रध्वा/थ्यानु च भग्नतालः स्यात् ।
द्विपथकमार्गणिके च स्यातामथ सप्तमे शृणुत ।। २९६ ।।
रध्वा/थ्याथ भग्नतालश्शुद्धे भाणे क्रमः प्रदिष्टोऽयम् ।
सङ्कीर्णभाणभणितिः कार्या स्यादुभयसंयोगात् ।
किञ्चिदनुद्धतभावात् तालक्रमवर्जनाच्च चित्रोऽयम् ।। २९७ ।।
इति शुद्धः संकीर्णश्चित्रश्च मतस्त्रिधा भाणः ।
यदि वैष शुद्धवाचा शुद्धः संकीर्णयाथ संकीर्णः ।। २९८ ।।
सर्वाभिर्भाषाभिश्चित्रैश्च विचेष्टितैश्चित्रः ।
अयमुद्धतोऽथ ललितो भाणो ललितोद्धतश्च सम्भवति ।। २९९ ।।
अर्थानामौद्धत्याल्लालित्यादुभयभावाच्च ।
यद् दुष्करमभिनेयं चित्रं चात्युद्भटं च यद् भवति ।
तद्भाणकेऽभिधेय[१७] युतमनुतालैर्वितालैश्च ।। ३०० ।।
सोऽत्रैवान्तर्भाव्यो यो भाणो नन्दिमालिनामा स्यात् ।
भिन्नः कैश्चित् कथितो भरतमतं सम्यगविदित्वा ।। ३०१ ।।
आकाशपुरुषमुद्दिश्य वस्तु यत् पठ्यतेऽथवा क्रियते ।
विश्लिष्टोद्भटभावप्रयोगमिह नन्दिमाली सः ।। ३०२ ।।
प्रायो हरिचरितयुता स्वीकृतगाथादिवर्णमात्रा च ।
सुकुमारतः प्रयोगाद् भाणोऽपि हि भाणिका[१८] भवति ।। ३०३ ।।
दिव्याभिश्चारीभिर्विवर्जिता ललितकरणसंयुक्ता ।
तालान्तरालनृत्ता क्वचिदपि रध्वा/यादिसङ्कलिता ।। ३०४ ।।
अर्धोद्ग्राहनिवारणगायनसहवचनमत्तपालीभिः ।
विश्रामैश्च विहीना स्त्रीयोज्या वर्जितैः/तस्तालैः ।। ३०५ ।।
वस्तूनि भाणिकाया नव दश वा नियमतो विधीयन्ते ।
नवमाद्यपञ्चमेषु स्थानेषु च भग्नतालः स्यात् ।। ३०६ ।।

स्थानान्तरेषु चास्यां लयतालविधिर्यदृच्छया क्रियते ।
विविधवचोविन्यासैस्सभ्यजनोत्साहसम्पत्तिः ॥ ३०७॥
गोष्ठे यत्तु विहरतश्चेष्टितमिह कैटभद्विषः किंचित् ।
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति [19]गोष्ठीति ॥ ३०८॥
यन्मण्डलेन नृत्तं स्त्रीणां [20]हल्लीसकं तु तत् प्राहुः ।
तत्रैको नेता स्याद् गोपस्त्रीणामिव मुरारिः ॥ ३०९॥
यस्य पदार्थाभिनयं ललितलयं सदसि नर्तकी कुरुते ।
तन्नर्तनक[21] शम्यालास्यच्छलिकद्विपद्यादि ॥ ३१०॥
रथ्यासमाजचत्वरसुरालयादौ प्रवर्त्यते बहुभिः ।
पात्रविशेषैर्यत् तत् प्रेक्षणक[22] कामदहनादि ॥ ३११॥
षोडश द्वादशाष्टौ वा यस्मिन् नृत्यन्ति नायिकाः ।
पिण्डीबन्धादिविन्यासै रासकं[23] तदुदाहृतम् ॥ ३१२॥
पिण्डनात्तु भवेत्पिण्डी गुम्फनाच्छृङ्खला भवेत् ।
भेदनाद् भेद्यको जातो लता जालापनोदनः ॥ ३१३॥
एते नृत्तात्मकाः कार्या नाट्यवन्तः क्रियाविधौ ।
सुकुमारोद्धतैरङ्गैर्गायिकाभिर्विलक्षणाः ॥ ३१४॥
वाक्यस्यावधयो ह्येते पिण्ड्याद्या ब्रह्मणोऽङ्गजाः ।
न पदैरभिधीयन्ते ह्यनुकार्यानुरूपिणः ॥ ३१५॥
कामिनीभिर्भुवो भर्तुश्चेष्टितं यत्तु नृत्यते ।
रागाद् वसन्तमासाद्य स ज्ञेयो नाट्यरासकः[24] ॥ ३१६॥
चर्चरीति च तामाहुर्वर्णतालेन तत्र तु ।
प्रविशेत् कामिनीयुग्मं समचार्यादिशिक्षितम् ॥ ३१७॥
वामदक्षिणसञ्चारैरङ्गैस्तेन परिष्कृतम् ।
ततस्तदेव वर्णं तदालीढद्वयसंस्थितम् ॥ ३१८॥
छोटिकाभिर्द्रुतं तालं वादकानां प्रदर्शयेत् ।
पञ्चघातकसंज्ञोऽर्थश्छेदः तस्मात् प्रवर्तते ॥ ३१९॥

नृत्तेन विभजेत् खण्डैश्चतुर्भिस्त्रिभिरेव वा ।
अन्योन्याङ्गिकसञ्चारैर्हस्ततालैर्मिथः कृतैः ॥ ३२० ॥
परिक्रम्य च निष्क्रामेत् ततोऽन्यद् द्वितयं विशेत् ।
एककालं तु निस्सन्धिप्रवेशो निर्गमस्तयोः ॥ ३२१ ॥
पुष्पाञ्जलिप्रयोगं तु मात्रातालेन योजयेत् ।
उभयोः पार्श्वयोः पश्चात् पात्राणि प्रविशन्ति च ॥ ३२२ ॥
यद् दार्पणकतालेन रथ्यावर्णादिवर्णकैः ।
शुष्कगीतप्रयोगं तु ततो गायन्ति गायनाः ॥ ३२३ ॥
लताख्यैर्भेद्यकैर्गुल्मैर्नानावृ/नृत्तप्रदर्शकैः ।
पात्रैरेकत्र संयुक्तं पिण्डीबन्धं तु कारयेत् ॥ ३२४ ॥
ततो वलिनिकातालं शुष्कवर्णप्रयोगतः ।
मुरजाक्षरवाद्यैस्तु हन्याद्दण्डं तु दण्डकैः ॥ ३२५ ॥
एवं नृत्तक्रमेणान्यो ह्यपसारस्समाप्यते ।
अपसारत्रयं चान्यत् कल्प्यते साम्प्रतं मया ॥ ३२६ ॥
तत्रापि पूर्ववन्नृत्तं कामतस्तु लयक्रमः ।
कथितो रासकप्रान्ते शुभार्थो वचनक्रमः ॥ ३२७ ॥
लब्ध्वा दुग्धमहोदधौ सुरगणैः पीत्वाऽमृतं यस्तदा
पिण्डीशृङ्खलिकाविशेषविहितो युक्तो लताभेद्यकैः ।
चित्रातोद्यपदक्रमैर्लययुतो भेदद्वयालङ्कृत–
श्चारीखण्डसुमण्डलैरनुगतः सोऽयं मतो रासकः ॥ ३२८ ॥

(श्रव्यप्रबन्धः –२४)

अथानभिनेयभेदाः। तेषु–

कन्यापहारसङ्गरसमागमाभ्युदयभूषितं यस्याम् ।
नायकचरितं ब्रूते नायक एवास्य वानुचरः ॥ ३२९ ॥
वक्त्रापरवक्त्रवती सोच्छ्वासा संस्कृतेन गद्येन ।
साऽऽख्यायिकेति कथिता माधविका–हर्षचरितादि ॥ ३३० ॥

नल—सावित्री—षोडशराजोपाख्यानवत् प्रबन्धान्तः ।
अन्यप्रबोधनार्थं यदुपाख्याति तदुपाख्यानम् ।। ३३१ ।।
आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन् ।
ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ।। ३३२ ।।
निश्चीयते तिरश्चामतिरश्चां वा यत्र चेष्टाभिः ।
कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादि ।। ३३३ ।।
धूर्तविट—कुट्टनीमतमयूरमार्जारिकादि यल्लोके ।
कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि ।। ३३४ ।।
यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि ।
सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृति ।। ३३५ ।।
क्षुद्रकथा मन्थुल्ली येह महाराष्ट्रभाषया भवति ।
गोरोचनेव कार्या सानङ्गवतीव वा कविभिः ।। ३३६ ।।
यस्यामुपहासः स्यात् पुरोहितामात्यतापसादीनाम् ।
प्रारब्धानिर्वाहे सापि हि मन्थुल्लिका भवति ।। ३३७ ।।
मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु ।
पश्चात् प्रकाशते सा मणिकुल्या मत्स्यहसितादि ।। ३३८ ।।
याऽनियमितगतिभाषा दिव्यादिव्योभयेतिवृत्तवती ।
कादम्बरीव लीलावतीव वा सा कथा कथिता ।। ३३९ ।।
पर्यायेण बहूनां यत्र प्रतियोगिनां कथाकुशलैः ।
श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु ।। ३४० ।।
ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः ।
मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ।। ३४१ ।।
यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः ।
चरितं विचित्रमन्यत् सोपकथा चित्रलेखादि ।। ३४२ ।।
लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया ।
नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति ।। ३४३ ।।

याऽऽख्यायिकैव साङ्का सोच्छ्वासा दिव्यपद्यगद्यमयी ।
सा दमयन्ती—वासवदत्तादिरिहोच्यते चम्पूः ।। ३४४।।
यस्मिन्नितिहासार्थाश्छन्दोभिस्संस्कृतेन बध्यन्ते ।
बहवः स पर्वबन्धो भवति महाभारतप्रभृतिः ।। ३४५।।
यत्रेतिहासमखिलं यथास्थितं चैकमेव भाषन्ते ।
ऋषयस्य काण्डबन्धो रामायणसन्निभो भवति ।। ३४६।।
यस्मिन्नितिहासार्थान् अपेशलान् पेशलान् कविः कुरुते ।
स हयग्रीववधादिप्रबन्ध इव सर्गबन्धः स्यात् ।। ३४७।।
यः सर्गबन्धतुल्यो निबध्यते प्राकृतेन शुद्धेन ।
आश्वासकबन्धोऽसौ विज्ञेयः सेतुबन्धादिः ।। ३४८।।
योऽपभ्रंशनिबन्धो मात्राच्छन्दोभिरभिमतोऽल्पधियाम् ।
वाच्यस्स सन्धिबन्धश्चतुर्मुखोक्ताब्धिमथनादि ।। ३४९।।
य इह द्विचारिकावाग्ग्राम्यगिरा गीयते गभीरोक्तः ।
सोऽवस्कन्धकबन्धोऽभिधीयते भीमकुल्यादि ।। ३५०।।
यत्रार्थशशास्त्राणां काव्येऽभिनिवेश्यते महाकविभिः ।
तद्भट्टिकाव्यमुद्राराक्षसवत् काव्यशास्त्रं स्यात् ।। ३५१।।
शास्त्रं यत्र कवीनां रहस्यमुपकल्पयन्त्यनल्पधियः ।
तद्रतिविलासकामन्दकीयवच्छास्त्रकाव्यं तु ।। ३५२।।
कोश इव यः सुभाषितरत्नसमूहात्मकः समुद्ध्रियते ।
महतः काव्याम्भोधेः स कोश इह सप्तशतिकादि ।। ३५३।।
एकप्रघट्टके यस्त्वेककृतो भवति सूक्तिसमुदायः ।
सङ्घातस्स निगदितो बृन्दावनमेघदूतादि ।। ३५४।।
यस्यां सन्धीयन्ते मनीषिभिर्विप्रकीर्णवृत्तान्ताः ।
सा संहितेति गदिता यदुवंशदिलीपवंशादि ।। ३५५।।
यस्मिन्नशेषविद्यास्थानार्थविभूतयः प्रकाशन्ते ।
संहत्य स साहित्यप्रकाशः [१]एतादृशो भवति ।। ३५६।।

---

१. एतादृश शृङ्गारप्रकाशसदृशः।

**एतस्मिन् हि शृङ्गारप्रकाशे सुप्रकाशमेवाशेषशास्त्रार्थसम्पदुपनिषदाम् अखिलकलाकाव्यौचित्यकल्पनारहस्यानां च सन्निवेशो दृश्यते।**

अथैतेषामुभयेषामपि प्रबन्धस्कन्धभेदानामवैशेषिको वैशेषिकश्च गुणालङ्कार–लक्षणयोगो रसावियोगहेतुर्भवति। तत्र

गुणो द्वेधा – **शब्दगुणोऽर्थगुणश्च।**

अलङ्कारोऽपि **शब्दालङ्कारोऽर्थालङ्कारश्च।** ताभ्यामुभयगुणालङ्कारा व्याख्यात:(ता:)।

त एते गुणा अलङ्काराश्चाविशेषेण। लक्षणं तु त्रिविधमपि विशेषेण व्याख्यायते। तत्र– महाकाव्यादौ यथासम्भवम्, असंक्षिप्तग्रन्थत्वमविषमबन्धत्वं, श्रव्यवृत्तत्वम्, अनतिविस्तीर्णसर्गादित्वम्, सुश्लिष्टसन्धित्वं चेति **शब्दगुणाः**।

चतुर्वर्गसुफलायत्तत्वं, चतुरोदात्तनायकत्वं, रसभावनिरन्तरत्वं, विधिनिषेधव्यु–त्पादकत्वं, सुसूत्रसंविधानकत्व**मित्यर्थगुणाः**।

रसानुरूपसन्दर्भत्वं पात्रानुरूपभाषत्वमर्थानुरूपच्छन्दस्त्वं समस्तलोकरञ्जकत्वं सदलङ्कारवाक्यत्व**मित्युभयगुणाः**;

नमस्काराद्युपक्रमत्वं, संबन्धादिमदादिवाक्यत्वं, दुष्कर(सम)संस्कृतादिवाक्यत्वं, भिन्नवृत्तसर्गान्तत्वं, कविभावाङ्कितसमाप्तित्वमिति **शब्दालङ्काराः**।

नगराश्रमशैलसैन्यावासार्णवादिवर्णनम्, ऋतुरात्रिन्दिवार्कास्तमयचन्द्रोदयादि–वर्णनं, नायकनायिकाकुमारसहायवाहनादिवर्णनम्, मन्त्रदूतप्रयाणसङ्ग्रामाभ्युदया–दिवर्णनं, वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णन**मित्यर्थालङ्काराः**।

बीजबिन्दुपताकाप्रकरीकार्योपकल्पनं, गर्भाङ्कचूलिकाङ्कावतारविष्कम्भक–प्रवेशकविधानं, देशकालपात्रचेष्टाकथान्तरानुषञ्जनं, द्विसन्धानं, मार्गद्वयानुवर्तन–**मित्युभयालङ्काराः**।

**तत्रासङ्क्षिप्तग्रन्थत्वमित्यनेन** ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति।

**अविषमबन्धत्वमित्यनेन** शब्दसन्दर्भवेदिनां मनोमुदमादधाति।

**श्रव्यवृत्तत्वमित्यनेन** यद्यपि पद्यभेदत्वान्महाकाव्यादेः सर्वापि चतुष्पदी समाकृष्टा,

तथापि यान्येव श्रुतिसुखमुपजनयन्ति वृत्तानि तान्येव निबन्धनीयानीति दर्शयन् श्रोतृजनं प्रोत्साहयति।

**अनतिविस्तीर्णसर्गादित्वमित्यनेन** ग्रन्थविस्तरभीरूणां चित्तमाकर्षयति। सुश्लिष्टसन्धित्वमित्यनेन तु सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारित्वं दर्शयति।

**चतुर्वर्गफलायत्तत्वमित्यनेन** चत्वारो वर्गा धर्मार्थकाममोक्षाः, त एव व्यस्ताः समस्ता वा फलं, तत्साधनोपायविषयं महाकाव्यादीति ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे।

**चतुरोदात्तनायकत्वमित्यनेन** कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आशयविभूत्योरप्युत्कर्षमभिदधाति।

**रसभावनिरन्तरत्वमित्यनेन** रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद् रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य, रसभावबहुत्वस्यान्वयेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति।

**विधिनिषेधव्युत्पादकत्वेन** तु गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं, न दोषवतेति व्युत्पादयति।

**सुसूत्रसंविधानकत्वमित्यनेन** प्रोक्तलक्षणा वक्ष्यमाणलक्षणाश्च पदार्थास्तथा निबन्धनीयाः, यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति।

**रसानुरूपसन्दर्भत्वमित्यनेन** रतिप्रकर्षे कोमल उत्साहप्रकर्षे प्रौढः क्रोधप्रकर्षे कठोरः शोकप्रकर्षे मृदुः विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो विरचनीय इत्युपदिशन् 'नैकमोजः प्रसादो वा रसभावविदः कवेः' (माघ. २.८३) इति ख्यापयति।

**पात्रानुरूपभाषत्वमित्यनेन** उत्तमपात्राणि संस्कृतेन [1]उत्तमाधमानि प्राकृतेन, मध्यमानि शौरसेन्या जघन्यान्यपभ्रंशेन तदपराणि मागधिकया भाषन्त इति ज्ञापयन् भिन्नभाषेषु भाषाचित्राणामवकाशं ददाति।

---

१. चेट्याद्यपेक्षयोत्तमत्वं नायकाद्यपेक्षया चाधमत्वमिति राजमहिष्यादयोऽत्र ग्राह्याः उत्तमेष्वधमानीति विगृह्य।

**अर्थानुरूपच्छन्दस्त्वमित्यनेन** शृङ्गारे द्रुतविलम्बितादयो, वीरे वसन्ततिल–कादय:, करुणे वैतालीयादय:, रौद्रे स्रग्धरादय:, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति।

**समस्तलोकरञ्जकत्वमित्यनेन** अलौकिकतां परिहरन् कीर्त्तिप्रीतिनिबन्धनस्य प्रबन्धस्य लोके प्रतिष्ठया कवे: प्रयासवैयर्थ्यमपाकरोति।

**सदलङ्कारवाक्यत्वमित्यनेन** तु यद्यप्युपात्तलक्षणानां शब्दार्थोभयगुणानां स्वरूपसौन्दर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवत्तैवैनं भारमुद्वोढुमलमित्येतदुपर्युप–देशेनोपपादयति।

तेऽमी शब्दार्थोभयगुणा महाकाव्येषु रसावियोगहेतवो भवन्ति।

एवमलङ्कारा अपि।

तत्र **नमस्काराद्युपक्रमत्वमित्यनेन** नमस्कार: स्तुतिराशीर्वस्तुनिर्देशो वस्तूपक्षेप इत्युपलक्ष्यन्ते। तत्र

**नमस्कारो** यथा **हर्षचरिते**–

**नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।**
**त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ।। ३५७।।**

**स्तुतिर्**यथा रघुवंशे–(रघु.१.१)

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**
**जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ ।। ३५८।।**

**आशीर्**यथा **हरिविलासे**–

**ओमित्येतत्परं ब्रह्म श्रुतीनां मुखमक्षरम् ।**
**प्रसीदतु सतां स्वान्तेष्वेकं त्रिपुरुषीमयम् ।। ३५९।।**

**वस्तुनिर्देशो** यथा **हयग्रीववधे**–

**आसीद् दैत्यो हयग्रीव: सुहृद्वेश्मसु यस्य ता: ।**
**वदन्ति स्म बलं बाह्वो: सितच्छत्रस्मिता: श्रिय: ।। ३६०।।**

**वस्तूपक्षेपो** यथा **मारीचवधे**–

**मअवह-णिमित्तणिग्गअ-मइंदसुण्णं गुहं णिएऊण ।**
**लद्धावसरो गहिऊण मोत्तिआइं गओ वाहो ।। ३६१।।**

(मृगवधनिमित्तनिर्गतमृगेन्द्रशून्यां गुहां निरूप्य ।
लब्धावसरो गृहीत्वा मौक्तिकानि गतो व्याधः ।।)

**संबन्धादिमदादिवाक्यत्वमित्यनेन** स्ववंशादिकीर्तनं, वक्तव्यार्थप्रतिज्ञानं, तत्प्रयोजनोपन्यासः, कविप्रशंसा, दुर्जनसुजनस्वरूपमित्यादयः संगृह्यन्ते। तत्र—

**स्ववंशादिकीर्तनं** यथा कादम्बर्याम्—**'बभूव वात्स्यायनवंशसंभव'** इत्युपक्रम्य,

**द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया ।**
**अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ।। ३६२ ।।**

**वक्तव्यार्थप्रतिज्ञानं** यथा सेतुबन्धे—(१.१२)

**तं तिअसबंदिमोक्खं समत्थतेल्लोक्कहिअअसल्लुद्धरणं ।**
**सुणह अणुराअइण्हं सीआदुक्खक्खअं दहमुहस्स वहं ।। ३६३ ।।**
(तं त्रिदशबन्दिमोक्षं समस्तत्रैलोक्यहृदयशल्योद्धरणम् ।
श्रृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ।।)

**प्रयोजनोपन्यासो** यथा तत्रैव—(सेब. १.१०)

**परिवड्ढइ विण्णाणं संभाविज्जइ जसो विढप्पंति गुणा ।**
**सुव्वइ सुउरिसचरिअं किं तं जेण ण हरंति कव्वालावा ।। ३६४ ।।**
(परिवर्धते विज्ञानं संभाव्यते यशोऽर्ज्यन्ते गुणाः ।
श्रूयते सुपुरुषचरितं किं तद् यन्न हरन्ति काव्यालापाः ।।)

**कविप्रशंसा** यथा रावणविजये—

**सअलं चेअ णिबंधं दोहि पएहि कलुसं पसण्णं च ठिअं ।**
**जाणंति कईण कई सुद्धसहावेहि लोअणेहि व हिअअं ।। ३६५ ।।**
(सकलमेव निबन्धनं द्वाभ्यां पदाभ्यां कलुषं प्रसन्नं च स्थितम् ।
जानन्ति कवीनां कवयः शुद्धस्वभावाभ्यां लोचनाभ्यामिव हृदयम् ।।)

**दुर्जनसुजनस्वरूपं** यथा कादम्बर्याम्—

**कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव ।**
**मनस्तु साधुध्वनिभिः पदेपदे हरन्ति सन्तो मणिनूपुरा इव ।। ३६६ ।।**

**दुष्करसमसंस्कृतादिसर्गत्वमित्यनेन** गोमूत्रिकामुरजबन्धैकाक्षरपादयमकमाषा–चित्रादय उपलक्ष्यन्ते। तेषु –

**गोमूत्रिका** यथा **किरातार्जुनीये**–(किराता. १५.१२)

**नासुरोऽयं नवा नागो धरसंस्थो न राक्षसः ।**
**नासुखोऽयं नवाभोगो धरणीस्थो हि राजसः ।। ३६७।।**

**मुरजबन्धो** यथा **शिशुपालवधे**–(माघ.१९.२९)

**सासेना गमनारम्भे रसेनासीदनारता ।**
**तारनादजनामत्तधीरनागमनामया ।। ३६८।।**

**एकाक्षरपादो** यथा **(तत्रैव)**–(माघ. १९.३)

**जजौजोजाजिजिज्जा जी तं ततोऽतितताततितुत् ।**
**भाभोऽभीभाभिभूभाभूरारारिररिरीररः ।। ३६९।।**

**यमकं** यथा तत्रैव–(माघ.१९.९)

**पृथोरध्यक्षिपद् रुक्मी यया चापमुदायुधः ।**
**तयैव वाचापगमं ययाचापमुदा युधः ।। ३७०।।**

**भाषाचित्रं** मालतीमाधवे–(मामा. ६.११)

**किं वा भणामि विच्छेददारुणायासकारिणि ।**
**कामं कुरु वरारोहे देहि मे परिरम्भणम् ।। ३७१।।**

**भिन्नवृत्तसर्गान्तत्वमित्यनेन** भिन्नपर्वान्तत्वं, भिन्नकाण्डान्तत्वं, भिन्नसर्गान्तत्वं, भिन्नाश्वासकान्तत्वं, भिन्नसन्ध्यन्तत्वमित्यादीन्युपसंगृह्यन्ते। सर्गग्रहणस्य छत्रिणो गच्छन्तीतिवत् सहचरितोपलक्षणत्वात्। एतेन वृत्तग्रहणेन न केवलं गणच्छन्दो मात्राक्षरच्छन्दोऽपि परिगृहीतं भवति।

ननु चाश्वासकबन्धेषु तत्समाप्तावपि न च्छन्दोभेद उपलभ्यते। तथा हि रावणविजय–हरिविजय–सेतुबन्धेषु आदितस्समाप्तिपर्यन्तमेकमेव च्छन्दो भवति। गलितकानि तु तत्र [1]**व्यासकष्टवत्** कैरपि विदग्धमानिभिरुपक्षिप्तानीति तद्विदो भाषन्ते।

मैवम्; मात्राच्छन्दसां स्कन्धकादीनां छन्दोविचितिष्वेकैकस्याप्यनन्तभेदत्वात्। **अन्ये** तु भिन्नवृत्ताः सर्गान्ताः पर्वकाण्डसर्गा एतेष्विति व्याचक्षते। तेनायमर्थः संपद्यते

१. व्यासाष्टकवदिति तु स्यात्।

पर्वणिपर्वणि काण्डेकाण्डे सर्गेसर्गे चान्यदन्यच्छन्दो निबन्धनीयमिति। आश्वासकसन्धिबन्धयोस्तु सर्वत्र एकमेव च्छन्दो भवति।

तन्न सम्यक्; आश्वासकबन्धेऽपि भिन्नवृत्तान्तत्वदर्शनात्। तद्यथा हरिप्रबोधे आर्यागीतिच्छन्दोनिबन्धक आश्वासकान्ते पुष्पिताग्रा—

**भगवति शयिते विभावरीणां द्युतिमपहृत्य यशोविभावरीणाम् ।**
**गतमससितया(?) विभावरीणां सघनमहस्समताविभावरीणाम् ।। ३७२।।**

सन्धिबन्धेषु च नाराचतोटकादीनि विचित्राणि च्छन्दांसि दृश्यन्ते। एकेनेव अनुष्टुब्जात्यादिना छन्दसा बहवः सर्गकाण्डादयो **रघुवंश—रामायणादि**षूपलभ्यन्ते। तस्मादुपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तरैरुपसंहारः कर्तव्य इत्येतदेव व्याख्यानं श्रेयः। तद्यथा कुमारसम्भवे—(कुसं. २.६४)

**अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं**
**रतिवलयपदाङ्के चापमासज्य कण्ठे ।**
**सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः**
**शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ।।३७३।।**

**कविभावाङ्कितसमाप्तिवाक्यत्वमित्यनेन** 'स्वाभिप्रायाङ्कता स्वनामाङ्कता इष्टनामाङ्कता, मङ्गलाङ्कता, आशंसाङ्कता' च संगृह्यन्ते। तेषु —

**अभिप्रायाङ्कता** यथा धैर्यमाढ्यराजस्य, उत्साहः सर्वसेनस्य, अनुरागः प्रवरसेनस्येति।

**स्वनामाङ्कता** यथा स्वप्रबन्धेषु गोविन्दचतुर्मुखादीनां, यथा च राजशेखरस्य हरविलासे।

**इष्टनामाङ्कता** यथा लक्ष्म्यङ्कता किराते भारवेः, श्र्यङ्कता शिशुपालवधे माघस्य, चतुर्मुख—गोविन्द—चन्द्रशेखरेष्टदेवतानामाङ्कता च पूर्वोक्तेषु पूर्वोक्तानामिति।

**मङ्गलाङ्कता** यथा— अभ्युदयः कृष्णचरिते, जय उषाहरणे, आनन्दः पञ्चशिखशूद्रककथायामिति।

**आशंसा(ङ्कता)** धर्मार्थकाममोक्षविषया। तासु

**धर्मविषया** यथा **उत्तररामचरिते**—(उ.रा.च. ७.२१)

**पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि येयं कथा**
**मङ्गल्या च मनोहरा च जगतां मातेव गङ्गेव च ।**

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमपि ।। ३७४।।

**अर्थविषया** यथा–(विक्रमो. ५.२४)

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
संगतं श्रीसरस्वत्योर्भूतयेऽस्तु सतां भुवि ।। ३७५।।

**कामविषया** यथा–

मम हृदयमशङ्कितव्यलीकं समसुखदुःखमजातविप्रयोगम् ।
अनुभवतु मुदः सदैव यूनां मिथुनमभीष्टतमास्तव प्रसादात् ।। ३७६।।

**मोक्षविषया** यथा–(शाकु. ७.३५)

प्रवर्ततां प्रकृतिहिताय पार्थिवः, सरस्वती श्रुतिमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः ।। ३७७।।

एतेनान्यदपि व्याख्यातम्। तद्यथा–

यावल्लीलावतीनामनणुमणिरणत्किङ्किणीक्वाणकूजत्–
काञ्चीदामोपनद्धाः पृथुजघनतटीः पञ्चबाणोऽधिशेते ।
यावच्च भ्रूविलासस्सकलजनमनोहारिणः सुन्दरीणां
तस्यैवास्त्रीभवन्ति त्रिभुवनविजये तावदेवास्तु कीर्त्तिः ।। ३७८।।

**नगराश्रमशैलसैन्यावासार्णववर्णनमित्यनेन** अर्थालङ्कारेषु देशप्रशंसामुपदिशति। तत्र –

**नगरवर्णनं** यथा सेतुबन्ध–हरिविजय–शिशुपालवध–कुमारसम्भवादौ।

**आश्रमवर्णनं** यथा रघुवंश–किरातार्जुनीय–कादम्बरी–शाकुन्तलादौ।

**शैलवर्णनं** यथा किरातार्जुनीय–शिशुपालवध–सेतुबन्ध–हरिविजयादौ।

**सैन्यावासवर्णनं** यथा शिशुपालवध–किरातार्जुनीय–रावणविजय–रघुवंशादौ।

**अर्णववर्णनं** यथा सेतुबन्ध–हरिविजय–रघुवंशादौ।

**ऋतुरात्रिन्दिवार्कास्तमयचन्द्रोदयादिवर्णनमित्यनेन** कालावस्थोपवर्णनं लक्षयति। तत्र

**ऋतुवर्णनं** शरद्वसन्तग्रीष्मवर्षादिवर्णनानि सेतुबन्ध–हरिविजय–रघुवंश–हरिवंशादौ।

**रात्रिवर्णनं** यथा किरातार्जुनीय–कुमारसम्भव–शिशुपालवध–हयग्रीववधादौ।

**दिवसवर्णनं** x x x x x x

**प्रभातपूर्वाह्णापराह्णमध्याह्नवर्णनानि** शिशुपालवध—रामचरित—उत्तररामचरित—किरातार्जुनीयादौ।

**अर्कास्तमयवर्णनं** यथा कुमारसम्भव—हरिविजय—सेतुबन्धादौ।

**चन्द्रोदयवर्णनं** यथा कुमारसम्भव—किरातार्जुनीय—शिशुपालवध—सेतुबन्धादाविति।

**नायकनायिकाकुमारसहायवाहनादिवर्णनमित्यनेन** पात्रविशेषाभिनन्दनं सूचयति। तत्र

**नायकवर्णनं** यथा हरिविजय—रावणविजय—जानकीहरण—रघुवंशादौ।

**नायिकावर्णनं** यथा कुवलयाश्वचरित—कुमारसम्भव—जानकीहरण—सुभद्राहरणादौ।

**कुमारवर्णनं** यथा रघुवंश—उत्तरचरित—कादम्बरी—हर्षचरितादौ।

**सहायवर्णनं** यथा रामायण—महाभारत—बृहत्कथा—मालतीमाधवादौ।

**वाहनवर्णनं** यथा हर्षचरित—कादम्बरी—हरिविजय—रावणविजयादौ। हस्त्यश्वगरुत्मत्पुष्पकादिवर्णनादि।

**मन्त्रदूतप्रयाणसङ्ग्रामाभ्युदयवर्णनमित्यनेन** अर्थप्रधानचेष्टानामुपदेशात् 'चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृत्' महाकाव्यादिकं भवतीत्यभिधत्ते। पुरुषकारायत्तां च नायकस्य सिद्धिं सूचयति। तत्र

**मन्त्रः** पञ्चाङ्गः कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिश्चेति। स यथा किरातार्जुनीय—शिशुपालवध—हयग्रीववध—भट्टिकाव्यादौ।

**दूत**स्त्रिधा— निसृष्टार्थः, परिमितार्थः, शासनहरश्च। तत्र

**निसृष्टार्थो** यथा उद्योगपर्वणि वासुदेवः, हरिविजये वा सत्यकः।

**परिमितार्थो** यथा रामायणेऽङ्गदः।

**शासनहरो** यथा कादम्बर्यां केयूरक इति।

**प्रयाणं** त्रिधा— स्वशक्त्युपचये, परव्यसने, अभिमतार्थसिद्धये च। तत्र

**स्वशक्त्युपचये** यथा रघुवंशे।

**परव्यसने** यथा जरासन्धव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य शिशुपालवधे।

**अभिमतार्थसिद्धये** यथा विष्णोः पारिजातहरणाय हरिविजये, यथा वा दिव्यास्त्रलाभायार्जुनस्य किरातार्जुनीय इति।

**सङ्ग्राम**स्त्रिधा— समो, विषमः, समविषम इति। तत्र

**समो** द्वन्द्वयुद्धे चतुरङ्गयुद्धे च। द्वन्द्वयुद्धं यथा रामरावणयोः। चतुरङ्गं यथा कुरुपाण्डवानाम्।

**विषमो** यथा रामस्य खरदूषणत्रिशिरोभिः सह।

**चतुर्दशसहस्राणि चतुर्दश च रक्षसाम् ।**
**हतान्येकेन रामेण मानुषेण पदातिना ।। ३७९ ।।** (वारा. ३.२६.३५)

**समविषमो** यथा महेश्वरार्जुनयोः किरातार्जुनीये, रघुमघोनोर्वा रघुवंश इति।

**अभ्युदय**स्त्रिधा— अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिरिति। तत्र—

**अरिविजयो** द्विधा— शत्रूच्छेदेन, तदुपनत्या च। स पूर्वो यथा **रावणवधादौ।** द्वितीयो यथा **हरिविजयादौ।**

**स्त्रीलाभो** यथा इन्दुमतीस्वयंवरे।

**पुत्रलाभो** यथा दिलीपस्य **रघुवंश** इति।

**वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णनमित्यनेन** रसोद्दीपनविभावस्य सम्भोगशृङ्गारस्य उपदेशान्मन्त्रदूतप्रयाणसङ्ग्रामाभ्युदयादिभिस्तांस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति। तत्र

**वनविहारो** द्विधा— मृगयादिभिः पुष्पापचयादिभिश्च।

**तत्राद्यो** यथा दशरथस्य रघुवंशे, दुष्यन्तस्य शाकुन्तले।

**द्वितीयो** यथा यदूनां शिशुपालवधे, अप्सरसां वा किरातार्जुनीये इति।

**जलक्रीडा** द्विधा— एकस्य वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिः यथास्वमङ्गनाभिः।

**तत्राद्या** यथा कार्तवीर्यस्य नर्मदायां, कुशस्य वा सरय्वाम्।

**द्वितीया** यथा अप्सरसां वा सिद्धसिन्धौ, यदूनां वा रैवतकह्रद इति।

**मधुपानं** द्विधा; गोष्ठीगृहे वासभवने च।

**तत्राद्यं** यथा हरिविजये शिशुपालवधे च।

**द्वितीयं** यथा कुमारसम्भवे किरातार्जुनीये च।

**मानापगमो** द्विधा— प्रायत्निको नैमित्तिकश्च ।

**प्रायत्निको** यथा हरिविजये सत्यभामायाः, रत्नावल्यां वासवदत्तायाः;

**नैमित्तिको** यथा रामातङ्कान्निशाचरीणां सेतुबन्धे, यथा वा मलयमारुतेन्दूदयादिभ्यो महाप्रबन्धेषु।

**रतोत्सवो**ऽपि द्विधा— सामान्यतो विशेषतश्च।

**सामान्यतो** यथा किरातार्जुनीये शिशुपालवधे च।

**विशेषतो** यथा कुमारसम्भवे जानकीहरणे चेति।

**बीजबिन्दुपताकाप्रकरीकार्योपकल्पनमित्यनेन पञ्चानामर्थप्रकृतीनां** प्रयोगे संपूर्णम्। प्रबन्धशरीरमध्य एवैकद्वित्रिलोपे त्वपरिपूर्णमिति उपवर्णयति। तत्र

**अल्पमात्रमुपक्षिप्तं बहुधा यद् विसर्पति ।**
**फलावसानं यच्च स्यात् तद् बीजमिह कीर्तितम् ।।** (नाशा. १९.२२)

तद्यथा—

**धूर्तैर्यच्छ्वपचीकृतो वररुचिः सर्वज्ञकल्पोऽपि सञ्**
**जीवन्नेव पिशाचतां च गमितो भत्स्युर्यदभ्यर्च्यधीः ।**
**छन्दोगोऽयमिति प्रभाकरगुरुर्देशाच्च निर्वासितो**
**मद्वृत्तान्तविजृम्भितेन महता तत् सर्वमल्पीकृतम् ।। ३८१ ।।**
**प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।**
**यावत्समाप्ति सम्बन्धः स बिन्दुरिति कीर्तितः ।। ३८२ ।।**

यथा—

**ध्वस्ताः क्षुद्राः धार्तराष्ट्रास्समस्ताः पीतं रक्तं स्वादु दुश्शासनस्य ।**
**पूर्णा कृष्णाकेशबन्धप्रतिज्ञा तिष्ठत्येकः कौरवस्योरुभङ्गः ।। ३८३ ।।**
**यस्या वृत्तं परार्थं स्यात् प्रधानस्योपकारकम् ।**
**आत्मानुबन्धफलवत् सा पताकेति कीर्तिता ।। ३८४ ।।**

यथा— (उराच. १.३२)

**दिष्ट्या सैष महाबाहुरञ्जनानन्दवर्धनः ।**
**यस्य वीर्येण कृतिनो वयं च भुवनानि च ।। ३८५ ।।**
**फलं प्रकल्पते यस्याः परार्थायैव केवलम् ।**
**अनुबन्धविहीनां तां प्रकरीति विनिर्दिशेत् ।। ३८६ ।।**

यथा—

**सन्ध्याभ्रकपिशस्तत्र विराधो नाम राक्षसः ।**
**अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ ३८७॥**

**यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।**
**यदर्थश्च समारम्भस्तत् कार्यमिति कीर्तितम् ॥ ३८८॥**

यथा—

**आज्ञा कृता गुरूणां सुहृद्भिरपरिक्षतैरहं युक्तः ।**
**दृष्टो भगवान् साक्षाद्देवी प्राप्ता प्रियं किमतः ॥ ३८९॥**

एषां त्वेकद्वित्रिलोपे नियम उच्यते—(नाशा. १९.१८)

**एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः ।**
**द्वितृतीयचतुर्थानां त्रिलोपे लोप इष्यते ॥ ३९०॥**

**गर्भाङ्कचूलिकाङ्कमुखविष्कम्भकप्रवेशकविधानमित्यनेन** संक्षेपाभिधानेनापि कथाशरीरस्याविच्छेदाद् रसाविच्छेदं रसान्तरतिरस्कारं च सूचयति। तत्र—

**बीजार्थयुक्तिमान् अङ्को योऽङ्केष्वङ्कः प्रयुज्यते ।**
**स नाटकेषु गर्भाङ्कोऽङ्कावतारश्च कथ्यते ॥ ३९१॥**

यथा बालरामायणे—(३.१२)

**श्रवणैः श्रव्यमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।**
**भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥ ३९२॥**

**अन्तर्यवनिकासंस्थैः सूतादिभिरनेकधा ।**
**अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥ ३९३॥**

यथा वेणीसंहारे नेपथ्ये—(वेसं. ३.१९)

**आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्**
**द्रोणस्याजौ नयनसलिलच्छादिताक्षाननस्य ।**
**मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं**
**धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वे ॥ ३९४॥**

**विशिष्टं मुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।**
**यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥ ३९५॥**

यथा— मालतीमाधवे— 'एषास्मि सौदामनी भगवतः श्रीपर्वतादुपेत्य' इत्यादि।।

**नीचमध्यमपात्राभ्यां मध्यमाभ्यां प्रयुज्यते ।**
**तदङ्कमुखमेवेह विष्कम्भक इति स्मृतम् ।। ३९६।।**

यथा—

{कामन्दकी— वत्से! अवलोकिते !

अवलोकिता— आणवेदु भअवदी (आज्ञापयतु भगवती ।)}

कामन्दकी— अपि नाम कल्याणिनोरनयोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधव— योरभिमतः पाणिग्रहः स्यादित्यादि। (मामा. १)

**हीनाभ्यामेव पात्राभ्यामङ्कादौ यः प्रयुज्यते ।**
**प्रवेशकस्स विज्ञेयः शौरसेन्यादिभाषया ।। ३९७।।**

यथा— ततः प्रविशतश्चेट्यौ।

एका— सहि! संगीदसालापरिसरे अवलोइदादुदिआ भअवदी मंतअंती आसी। (सखि! संगीतशालापरिसरे अवलोकिताद्वितीया भगवती मन्त्रयन्ती आसीत् ।)

द्वितीया— सहि! तेण किल माहवपिअवयस्सेण मअरन्देण सअलो मअरंदउज्जाणउत्तंतो भअवदीए णिवेदिदो। (सखि तेन किल माधवप्रियवयस्येन मकरन्देन सकलो मकरन्दोद्यानवृत्तान्तो भगवत्यै निवेदितः।) इत्यादि।

**देशकालपात्रचेष्टाकथान्तरानुषञ्जनमित्यनेन** परिपूर्णाङ्गेऽपि संविधानके देशकालाद्यविरोधेन तद्वर्णनादिकं निर्दिशति। तत्र

**देशान्तरानुषञ्जनं** यथा शिशुपालवधे— (माघ. ४.१०)

**मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।**
**भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ।। ३९८।।**

**कालान्तरानुषञ्जनं** यथा **किरातार्जुनीये**—(किराता. १०.१८)

**सपदि हरिसखैर्वधूनिदेशाद् ध्वनितमनोरमवल्लकीमृदङ्गैः ।**
**युगपदृतुगणस्य सन्निधानं वियति वने च यथायथं वितेने ।। ३९९।।**

**पात्रान्तरानुषञ्जनं** यथा—(किराता. ३.२९)

**करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि ।**
**शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ।। ४००।।**

**चेष्टान्तरानुषञ्जनं** यथा— (किराता. १६.२)

**मदस्रुतिश्यामितगण्डरेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।**
**सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥४०१॥**

**कथान्तरानुषञ्जनं** यथा कुमारसम्भवे—(कुसं. ४.४०)

**कुसुमायुधपत्नि! दुर्लभस्तव भर्ता न चिराद् भविष्यति ।**
**शृणु येन गतः स कर्मणा शलभत्वं हरलोचनार्चिषि ॥४०२॥**

**द्विसन्धानमित्यनेन वाक्यप्रकरणप्रबन्धानामनेकार्थानुसन्धानेन** कवेः शक्तिविशेषं व्यञ्जयति। तत्र —

किञ्चिदेकमेव वाक्यं प्रकरणं प्रबन्धो वा द्वयोरर्थयोः संगच्छते।

किंचिदभिन्नार्थमेवोच्यमानमनेकेन श्रोत्रा सम्बन्धमनुभवति।

किञ्चित्पुनरेकमुद्दिश्याभिधीयमानमर्थभेदादन्येनापि सम्बध्यते। तत्र—

**आद्यस्योदाहरणं** यथा मालतीमाधवे —

'महाभाग! सुश्लिष्टगुणतया रमणीय एष सन्निवेशः। कुतूलिनी च नो भर्तृदारिका वर्तते तस्यामभिनवो विचित्रकुसुमेषुव्यापारः। तद्भवतु कृतार्थता वैदग्ध्यस्य। फलतु निर्माणस्य रमणीयता। समासादयतु सरस एव (ष) भर्तृदारिकायाः कण्ठावलम्बनमहार्घतामिति।'

**द्वितीयस्य** यथा शिशुपालवधे— (माघ. १६.१)

**दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ।**
**उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद् वचः ॥४०३॥**

**तृतीयस्य** यथा दण्डिनो धनञ्जयस्य वा द्विसन्धानप्रबन्धौ रामायणमहाभारतार्थावनुबध्नाति।

**चतुर्थस्य** यथा कुमारसम्भवे—(कुसं. २.१८)

**स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।**
**युगपद् युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥४०४॥**

इत्यादिप्रकरणं चतसृष्वपि दिक्ष्ववस्थितैर्दिवौकोभिर्ब्रह्मणाभिधीयमानमभिसम्बध्यते।

**पञ्चमस्य** यथा कीचकवधे द्रौपदी विराटमभिभाषमाणा तेनैव वाक्येन युधिष्ठिरादीनभिभाषत इति।

**मार्गद्वयानुवर्तनमित्यनेन** महाकवीनां समयमुपलक्षयति। तत्र—

**गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।**
**निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ।। ४०५ ।।** (काव्याद. १.२१)

**वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।**
**तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ।। ४०६ ।।** (काव्याद. १.२२)

किं पुनरयं नायकेन रिपोरुच्छेदः क्रियमाणो **दोषवतो** वा स्याद्? **गुणवतो** वा? किं चातः?

यदि **दोषवतस्त**दा तत एवोच्छेदः। न हि शीर्यमाणनदीतटोपविष्टप्रक्षेपणे पुरुषकारः साफल्यमनुभवति। तदुक्तं 'काष्ठमिव च घुणजग्धमविनीतपुत्रं राजकुलमनियुक्तमात्रं 'भज्येत'।

नापि **गुणवतः**, तस्यानुच्छेद्यत्वात् नायकस्य द्विषतो वा न कश्चिद्विशेष इति।

नैवम्; विधिनिषेधव्युत्पत्तिफलत्वात् प्रबन्धानाम्। तथा हि— **रामायणादिषु** गुणवतो नायकस्य उत्कर्षप्रदर्शने न दोषः। को हि गुणार्जनं प्रति यतेत यदि गुणवतोऽप्युच्छेदः स्यात्? अपि च गुणवत्त्वे तुल्ये एकस्य जयोऽन्यस्य पराजय इति नियमनिमित्तमभिधानीयम्; तन्नान्तरेण दैवं भवितुमर्हति। दैवसम्पादितायां च सिद्धौ पुरुषकारशून्यस्य नायकस्य द्विषतो वा न कश्चिद्विशेष इति।

नैवं; **विधिनिषेधव्युत्पत्तिफलत्वात् प्रबन्धानाम्**। तथा हि **रामायणादिषु** गुणवतो नायकस्य उत्कर्षप्रदर्शनेन दोषवतश्चोच्छेदप्रकाशेन एतद्व्युत्पाद्यते रामवद् वर्तितव्यं न रावणवत्, यथा रामस्य पितुराज्ञां परिपालयतो वनवासिनोऽपि विजयः संपन्नः, रावणस्य च परदारानभिलषतस्त्रैलोक्यविजयिनोऽप्युच्छेदः, तथान्यस्यापि संपत्स्यत इति विधिनिषेधव्युत्पत्तिः। तदनुविधानेन च महाकाव्यादिप्रबन्धानां विरचनेति।

यत्पुनरिदमुक्तं दोषवतः समुच्छेदे स्वत एव विशीर्यमाणत्वात् क इव नायकस्योत्कर्षः? को वा गुणार्जनं प्रति यतेत, यदि गुणवतोऽप्युच्छेदः स्यात्?

तत्र न पुरुषार्थविषयत्वेन दोषवत्त्वम्; नाप्युच्छेदनिमित्तत्वेन गुणवत्त्वम्; अपि तूच्छेदनिमित्तत्वेन दोषवत्त्वं, नायकोत्कर्षप्रकाशकत्वेन च प्रतिपक्षस्य च गुणसमृद्धिर्वर्ण्यते। स्थित्यतिक्रमश्च तस्योच्छेदनिमित्तं भवति। तथा च पुराणेषु हिरण्यकशिपुप्रभृतीनां देवताराधनप्राप्तमहावीर्याणां त्रैलोक्यकण्टकत्वेन समुच्छेदो दृश्यते। वंशवीर्यश्रुतादिवर्णनजनितश्च तदुत्कर्षस्तज्जयान्नायकस्यैवोत्कर्षहेतुर्भवति।।

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि? समुच्चयप्रयोज्यानीति चेत् **किरातार्जुनीयादौ** नगरार्णवार्कोदय–कुमारविवाहाभ्युदयादीनां भणनं; अथ विकल्पेन यथेष्टकल्पनायाम्, अलक्षणप्रसङ्गः।

तन्न; अङ्गकल्पनस्योभयथापीष्टत्वात्। यदा कथाशरीरस्य परिपूर्णाङ्गसम्भवः तदा समुच्चयेन, यदान्यथा तदा विकल्पेनेति। तत्रापि केषांचिदेवाङ्गानां विकल्पः, अपरेषां नियमेन प्रयोगः। यानि पुरुषार्थस्य कामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते। यथा– **'मन्त्रदूतप्रयाणाजिनायकाभ्युदयादयः।'** (भामहा. १.२०)

यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः। तानि च यदि कथाशरीरे न स्युः, तदा कथान्तराद्यनुषङ्गेनापि कर्तव्यानीति प्रचक्षते। तदेतदुभयमपि तत्र तत्र नियम्यमानं शब्दलक्षणमर्थलक्षणं च वेदितव्यम्। तद्यथा–

**सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।**
**आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।।** (काव्याद. १.१४–२०)
**इतिहासकथोद्भूतमितरद् वा सदाश्रयम् ।**
**चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ।।४०८।।**
**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।।४०९।।**
**विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।**
**मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ।।४१०।।**
**अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ।**
**सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ।।४११।।**
**सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम् ।**
**काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ।।४१२।।**
**न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।**
**यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ।।४१३।।** इति।

यथा च– (नाशा. १९.१३९–१४१)

वृत्तिप्रत्यङ्गसम्पन्नं पञ्चार्थप्रकृतिक्षमम् ।
पञ्चावस्थाभिनिष्पन्नैः पञ्चभिस्सन्धिभिर्युतम् ॥ ४१४॥
सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसंयुतम् ।
महारसं महाभोगमुदात्तवचनान्वितम् ॥ ४१५॥
महापुरुषसञ्चारं साध्वाचारजनप्रियम् ।
सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम् ॥ ४१६॥
मृदुशब्दाभिधानं च गुणालङ्कारसंयुतम् ।
लक्षणैश्च चतुष्षष्ट्या युक्तं कुर्वीत नाटकम् ॥ ४१७॥
नाटके लक्षणं यत्तु तत् स्यात् प्रकरणेऽपि च ।
सट्टके नाटिकायां च किञ्चिदूनं तदुच्यते ॥ ४१८॥
महाकाव्येषु ग ग ग ग ग ग ग तत् ।
काव्यशास्त्रादिषु तथा तथैवाख्यायिकादिषु ॥ ४१९॥
महाकाव्यादयः पद्यं गद्यमाख्यायिकादयः ।
गद्यपद्यमयी चम्पूः पद्यगद्ये तथा पृथक् ॥ (काव्याद.१.३१)
पञ्चसन्धि महाकाव्यं नाटकं नाटिका तथा ।
आख्यायिका प्रकरणं पर्वबन्धादयश्च ये ॥ ४२१॥
डिमस्समवकारश्च चतुस्सन्धी प्रकीर्तितौ ।
व्यायोगेहामृगौ प्राज्ञैः संविधेयौ त्रिसन्धिकौ ॥ ४२२॥
द्विसन्धि स्यात् प्रहसनं वीथ्यङ्कौ भाण एव च ।
प्रवह्लिकादिषु ज्ञेया यथेष्टं सन्धिकल्पना ॥ ४२३॥
न सन्धिकल्पना कोशसङ्घातादिषु विद्यते ।
काव्यवर्जं समस्तेषु पदार्थाभिनयेषु च ॥ ४२४॥
कैशिकीवृत्तिहीनानि डिमादीन्यष्ट लक्षयेत् ।
कथादिषु यथायोगं विज्ञेया वृत्तिकल्पना ॥ ४२५॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत् ।
अवस्कन्धान्यपभ्रंशो नाटकादि तु मिश्रकम् ॥ (काव्याद. १.३७)

इति संक्षेपतः प्रोक्तं महाकाव्यादिलक्षणम् ।
शेषं यद् यत्र निर्दिष्टं तत् तत्रैवोपलक्षयेत् ॥४२७॥

तन्महाकाव्यमित्याहुर्महतां च महच्च यत् ।
निरुक्तमवगन्तव्यमित्थमेवापरेष्वपि ॥४२८॥(भामहा. १.१९)

चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृत् ।
महाकाव्यं भवेत् कामप्रधानास्तु कथादयः ॥४२९॥(भामहा. १.२१)

वाक्यप्रबन्धानुगतोऽयमुक्तो
मया समासेन रसावियोगः ।
अथेह येऽर्था न विवेचिताः पृथग्
विभज्य ते केचिदुदाह्रियन्ते ॥४३०॥

**इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे रसावियोगप्रकाशो नाम**

**॥ एकादशः प्रकाशः॥ ११ ॥**

रेवाप्रसादेन सनातनेन प्रकाश एकादश एष दिष्ट्या ।
साहित्यतत्त्वं प्रणिधाय चित्ते व्यशोधि, धाराधिपतेः प्रकाशे ॥



अथ

## श्रृङ्गारप्रकाशे द्वादशः प्रकाशः

प्रबन्धाङ्गचतुषष्टिचतुष्टयो नाम

तत्र च—(काव्याद. १.१५)

**इतिहासकथोद्भूतमितरद् वा सदाश्रयम् ।**
**चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥ १ ॥**
**पञ्चावस्थाभिनिष्पन्नैः पञ्चभिः सन्धिभिर्युतम् ।**
**वृत्तिवृत्त्यङ्गसंपन्नं पञ्चार्थप्रकृतिक्षमम् ॥ २ ॥**
**महारसं महाभोगमुदात्तवचनान्वितम् ।**
**महापुरुषसञ्चारं साध्वाचारजनप्रियम् ॥ ३ ॥**
**सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम् ।**
**मृदुशब्दाभिधानञ्च गुणालङ्कारभूषितम् ॥ ४ ॥**
**सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसंयुतम् ।**
**लक्षणैश्च चतुष्षष्ट्या युक्तं कुर्वीत नाटकम् ॥ ५ ॥**

इति यदुक्तं [१](नाशा. १९.२७) तत्र यथा काव्यादेः प्रबन्धस्य—

१. (१) **शरीराणि** पञ्च, (२) **आरम्भविधयः** पञ्च, (३) **अर्थप्रकृतयः** पञ्च, (४) **अवस्थाः** पञ्च, (५) **संस्थाः** पञ्च, (६) **समवस्थाः** पञ्च, (७) **सन्धयः** पञ्च, (८) **वृत्तयः** पञ्च, (९) चतुर्विंशतिः **प्रवृत्तयः इत्येका चतुष्षष्टिः ।**

२. (१) दश **लास्याङ्गानि,** (२) त्रयोदश **वीथ्यङ्गानि,** (३) षोडश **वृत्त्यङ्गानि,** (४)एकविंशतिः **सन्ध्यन्तराणि,** (५)चत्वारि **पताकास्थानानि** इति **द्वितीया चतुष्षष्टिः,**

३. सन्ध्यङ्गानि **चतुष्षष्टिः इति तृतीया,**

४. काव्यलक्षणानि [१]**चतुष्षष्टिरिति चतुर्थी।**

इमाश्**चतस्रोऽपि चतुष्षष्टयः** क्रमेण क्रियन्ते। तत्र—

---

१. अत्र द्रष्टव्यमस्मत्संपादिते नाट्यशास्त्रे १९.१२७, बड़ौदासंस्करणे १९.१३९। आभिरेव कारिका-भिर्महाकाव्यसर्गबन्धादिलक्षणमपि भरतोक्तं फलति।

## (१. प्रथमा चतुष्षष्टिः)

**(१. प्रबन्धशरीराणि—५)**

प्रथमचतुष्षष्टौ—

इतिहासाश्रयम्, कथाश्रयम्, उत्पाद्येतिवृत्तम्, अनुत्पाद्येतिवृत्तम्, प्रतिसंस्कार्येतिवृत्तमिति पञ्च प्रबन्धशरीराणि,

१.(१.१) **इतिहासाश्रय**मित्यनेन वृत्तदेवादिचरितसंश्रिता। शंसितामाह, यथा **कुमारसम्भव—हयग्रीववधादयो** महादेवादीनामैतिहासिकं चरितमावेदयन्ति।

२.(१.२) **कथाश्रय**मित्यनेन **बृहत्कथादि**प्रतिपन्नप्रख्यातोदात्तनायकचरितविषयतामपि महाकाव्यादेः प्रबन्धस्याभिधत्ते, यथा **बृहत्कथायां** कथामुख—प्रतिपन्न—वत्सेश्वरचरितम् उदयनोदये।

३.(१.३) **उत्पाद्येतिवृत्त**मित्यनेन कविमनीषाप्रकल्पितचतुर्वर्गावबोधहेतुदिव्यादित्वं ब्रूते, यथा चन्द्रापीडपुण्डरीकादिचरितवर्णनं **कादम्बर्याम्**।

४.(१.४) **अनुत्पाद्येतिवृत्त**मित्यनेन यथावगतवर्तमानातीतमहाराजादिवृत्तवर्णन—विषयतामस्याचष्टे, यथा हर्षवर्धनराज्यवर्धनादीनां च वर्णनं **हर्षचरिते**।

५.(१.५) **प्रतिसंस्कार्येति**वृत्तमित्यनेनेतिहासेषु यथास्थितवृत्तोपनिबन्धने न्यायप्रवृत्तेरप्य—फलत्वमनिष्टावाप्तिफलत्वं च दृश्यते, अन्यथा प्रवृत्तेरपि फलयोगोऽ—वधार्यते, तत्र तथा प्रतिसंस्कारो विधेयः, यथा न्यायप्रवृत्तेरेव फलयोगाभिनिर्वृतिः, विपरीतस्य निष्फलत्वानिष्टावाप्ती भवत इति व्युत्पादयति।

ते च धर्मशृङ्गारार्थशृङ्गारकामशृङ्गारमोक्षशृङ्गाराधिकारिणः धीरोदात्तधीरललित—धीरोद्धतधीरप्रशान्तसात्त्विक—राजस—तामसोत्तममध्यमकनिष्ठसाधारणानुकूलदक्षिण—शठधृष्टादिभेदभिन्ना नायकानुनायकोपनायकप्रतिनायका अग्रतः प्रबन्धेन प्रतिपादयिष्यन्त इति नेह प्रतन्यते।

**(२. आरम्भविधयः—५)**

**प्रमाणं, प्रमेयं, विमर्शः, निर्णयः, प्रवृत्तिः** इत्येताः **पञ्चारम्भविधयः(धाः)**। ताश्च प्रत्येकं पञ्चप्रकारत्वात् पञ्चविंशतिर्भवन्ति। तत्र—

---

१. लक्षणानि भरतशास्त्रे षट्त्रिंशदेव। तेषामेव नामपरम्पराद्वयम्, ययोरष्टादश नूतनानि (१८+१८+१८=५४) इत्येवं वर्धिष्णौ संख्यायां गुप्तपादानामानन्त्यं परायणं भोजस्य पुनश्चतुष्षष्टित्वम्।

६.(२.१) युक्तिरुक्तिर्दृष्टं निदर्शनमर्थापत्तिरिति **प्रमाणानि।**

७.(२.२) धर्मोऽर्थः कामो लोको लोकयात्रेति **प्रमेयाणि।**

८.(२.३) कर्मणामारम्भोपायः, पुरुषद्रव्यसंपद्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति **विमर्शाः।**

९.(२.४) अनुपलब्धस्य ज्ञानम्, उपलब्धस्य निश्चयबलाधानम्, अद्वैधस्य संशयोच्छेदन(अर्थ)म्, एकदेशदृष्टस्य शेषोपलब्धिः, विपर्ययचिकित्सा चेति **निर्णयाः।**

१०.(२.५) अलब्धलाभार्था, लब्धपरिरक्षार्था, रक्षिताभिवृद्ध्यर्था, वर्धितोपयोगार्था, उपयोगपर्याप्त्यर्था चेति **प्रवृत्तयः।** प्रमाणेन प्रमेयमुपलभ्य विमृश्यावधार्य उपेक्षा(प्रेक्षा)पूर्वकारिणो अभीष्टकर्माणि प्रारभन्ते।

ता इमाः पञ्चविंशतिरारम्भविधयः कथ्यन्ते।

## (३. अर्थप्रकृतयः — ५)

अथैतासु कथाशरीरोपादानकारणभूताः पञ्चार्थप्रकृतयो भवन्ति। चतसृषु हि विधासु तत्त्वं परिसमाप्यते— 'कर्ता कर्म करणं क्रिये'ति। ताश्च प्रकृतिपञ्चकोपलक्षणेन प्रतिपाद्यन्ते। तद्यथा—

**बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।**
**अर्थप्रकृतयः पञ्च कथादेहस्य हेतवः ॥६॥** (नाशा. १९.२०)

११.(३.१) **(बीजम्)**

कथाशरीरव्यापिनि नायके कर्तरि कर्मणि वावतिष्ठमान आरम्भो **बीजमि**त्युच्यते, यथा **रामचरितं शिशुपालवध** इति। एतेन नायिका अपि व्याख्याताः, यथा **लक्ष्मीस्वयंवरः, सुभद्राहरण**मिति। उक्तं च—(नाशा. १९.२१)

**अल्पमात्रमुपक्षिप्तं बहुधा यद् विसर्पति ।**
**फलावसानं यच्च स्यात् तद् बीजमिति संज्ञितम् ॥७॥**

बीजमिव च बीजम् यथा बीजमुप्तमङ्कुरमूलप्रकाण्डपत्रस्कन्धशाखा—प्ररोहपल्लवपुष्पादिना प्रकारेण बहुधा विसर्पद् अन्ते फलाय कल्पते, तथा यो महावाक्यार्थो नायकोपनायकानुनायकप्रतिनायकसुहृत्सहायादिव्यापारभेदाद् बहुधा विसर्पन्नन्ते फलाय जायते स बीजमित्युच्यते। कथाशरीरव्यापिषु

गुरुज्ञातिपुरोहितामात्यभृत्यदासपीठमर्दविटविदूषकशकारसिद्धतापसादिनायक– प्रतिनायकसहायेषु कर्तृभूतेषु पर्यस्तमान आरम्भो **बीजमि**त्युच्यते।

१२.(३.२) **(बिन्दु)**

स हि विष्कम्भप्रवेशकादिभिरसम्बद्धः सम्बद्धो वा कथाशरीराऽविच्छेद– हेतुतयावतिष्ठमानो **बिन्दुरि**त्याख्यायते। उक्तं च–

**प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।**

**यावत्समाप्ति यद्बन्धः स बिन्दुरिति कीर्तितः ॥८॥** (नाशा. १९.२२)

बिन्दुरिव च बिन्दुः। यथा पयोबिन्दुश्च्योतन् पयोऽभिष्यन्दलक्षणायाः क्रियाया अविच्छेदहेतुः, यथा वा धृतबिन्दुरग्निज्वलनलक्षणायाः, एवं विच्छिन्नाविच्छिन्नेषु कथाशरीरेषु योऽनुसन्धाता स बिन्दुरित्युच्यते।

१३.(३.३) **(पताका)**

कथाशरीरव्यापिनि पुनः सहायविशेषे साधकतमत्वेन करणभूते वर्तमान आरम्भः **पताके**त्युच्यते। कथाशरीरव्यापिनो हि नायकस्य प्राधान्येन यदुपकारकं च फलेन च फलवत् सा पताका। उक्तं च–

**यस्या वृत्तं परार्थं स्यात् प्रधानस्योपकारकम् ।**

**तत्सम्बन्धाच्च फलवत् सा पताकेति कीर्तिता ॥९॥** (नाशा. १९.२३)

यथा हि पताका कस्यचिच्चिह्नरूपेण प्रकर्षशोभायै भवति, एवं तेषु यदुपनायकादेश्चरितं तत्प्रधानस्यात्मनश्च शोभाप्रकर्षाय जायमानं पताकेत्युच्यते।

१४.(३.४) **(प्रकरी)**

कथाशरीरव्यापिनि पुनः सहायविशेष एव साधकत्वात् करणाभासभूते वर्तमान आरम्भः **प्रकरी**त्युच्यते। पताकैव ह्यफलवत्यनुबन्धविहीना च प्रकरी। यथोच्यते–

**फलं प्रकल्पते यस्याः परार्थायैध केवलम् ।**

**अनुबन्धविहीनां तां प्रकरीति विनिर्दिशेत् ॥१०॥** (नाशा. १९.२४)

प्रकरीव प्रकरी; लघुर्हि प्रकरः प्रकरीत्युच्यते। स तु पुष्पादीनामेव स्यात्। यथा च पुष्पप्रकरः परार्थोऽपवरकादेः शयनस्थानस्य अन्यस्य वा शोभायै भवति एवं महाप्रबन्धस्य ऋतुवर्णनादिः, अन्यो वा कोऽपि तद्विधो व्यापारः सा प्रकरीति कथ्यते।

१५.(३.५) **(कार्यम्)**

कथाशरीरव्यापिन्यां नायकसहायादिक्रियायामुपलभ्यमानं प्रधानसम्बन्धी प्रारम्भफलविशेषः **कार्यमि**त्युच्यते। धर्मार्थकामानामन्यतमं हि पुरुषार्थ–कार्यमित्यामनन्ति। तदाह–

**यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।**
**यदर्थश्च समारम्भस्तत्कार्यमिति कीर्तितम् ।।११।।** (नाशा. १९.२५)

अथैतेषामुदाहरणानि[१]– (मावीच. १.७)

**प्राचेतसो मुनिवृषा प्रवरः कवीनां**
**यत्पावनं रघुपतेः प्रणिनाय वृत्तम् ।**
**भक्तस्य तत्र समरन्त ममापि वाचः**
**ताः सुप्रसन्नमनसः कृतिनो भजन्ताम् ।।१२।।** इति **बीजस्य।**

**हा वत्साः खरदूषणप्रभृतयो वध्याः स्थ पापस्य मे**
**हा हा वत्स! विभीषण! त्वमपि मे कार्येण हेयः स्थितः ।**
**हा मद् वत्सल! वत्स! रावण! महत् पश्यामि ते सङ्कटं**
**वत्से! कैकसि! हा हतासि न चिरं त्रीन् पुत्रकान् द्रक्ष्यसि ।।१३a।।**

इति **बिन्दोः**। (मावीच. ४.११)

**'मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापतीन्'।।१३b।।**

इति **पताकायाः**, (राच. १५.६७, अत्रैव पृ.५१४)

**मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं**
**शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।**
**तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं**
**आः ज्ञातं स जटायुरेष जरसा क्लिष्टो वध वाञ्छति ।।**(उरा. २.३१)

इति **प्रकर्याः**।

**नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले**
**सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।**
**प्रत्यावृत्तिमुपागता च भगिनीलाभेन देवी पुनः**
**किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ।।**१५।।(रत्ना. ४.१९)

इति **कार्यस्य**।

---

१. णानि। बीजस्य यथा प्राचेत. जोशेर। एवमग्रेऽपि।

(४. अवस्थाः —५)

काव्या(र्या)र्थं च नेतारो यत्नमध्यासते। तस्य तस्य दैवपौरुषोभय–प्राधान्यादवस्थाः संस्थाः समवस्थास्त्रयो व्यपदेशाः जायन्ते। अवस्थादीनां च तिसृणामप्यारम्भप्रार्थनादीनि पञ्च पञ्च पर्वाणि भवन्ति। तत्र दैवप्राधान्ये अवस्थास्तासामारम्भादयः पञ्च पर्वाणि।

१६.(४.१) **आरम्भप्रसवोद्भेदकिञ्चिच्छेषसमाप्तयः ।**
**निर्दिष्टाः सूरिभिस्ते तु तेषां लक्षणमुच्यते ॥१६॥**
**(महतः) फलयोगस्य स खल्वारम्भ इष्यते ।** (नाशा. १९.८)

१७.(४.२) **अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।**
**परं त्वौत्सुक्यगमनं प्रसवः स उदाहृतः ॥१७॥** (नाशा. १९.९)

१८.(४.३) **ईषत्प्राप्तिर्यदा काचित् फलस्य परिकल्प्यते ।**
**भावमात्रेण तं प्राहुरुद्भेदमिह सूरयः ॥१८॥** (नाशा. १९.१०)
**नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।** (नाशा. १९.११)

१९.(४.४) **किञ्चिच्छेष–समाप्तिं तामाक्षिपन्तः प्रचक्षते ।**

२०.(४.५) **अभिप्रेतं समग्रं च प्रतिरूपं निगद्यते ॥१९॥** (नाशा. १९.१२)

(५. संस्थाः —५)

पौरुषप्राधान्ये **संस्थाः**। तासां तु प्रारम्भादयः पञ्च पर्वाणि।

२१–२५.(५.१–५.५)

**प्रारम्भश्च प्रयत्नश्च तथा वै प्राप्तिसम्भवः ।**
**नियता तु फलप्राप्तिः फलयोगश्च पञ्चमः ॥२०॥** (नाशा. १९.७)

अत्र प्रत्येकं प्रोपसर्गयोगात् पौरुषप्रकर्षोऽवभासते। पुरुषव्यापारेण बलात्कार्यसिद्धिः संस्थाप्यते इति इमाः संस्था उच्यन्ते। अर्थस्तु यः पूर्वेषां स एषामपीति।

(६. समवस्थाः —५)

(उभयप्राधान्ये **समवस्थाः**। तासां तु) प्रार्थनादयः पञ्चैव पर्वाणि।

२६–३०.(६.१–६.५) **प्रार्थना लाभसंयोगौ नाशस्संप्राप्तिरेव च ॥**

अत्र लाभनाशयोर्दैवस्य प्राधान्यं, प्रार्थनासंयोगयोः पौरुषस्य, संप्राप्तौ

दैवपौरुषयोरिति न सर्वत्र प्रकर्षवाची प्रोपसर्गयोगो भवति। तत्र आरम्भप्रसवादयो अवस्था **उषाहरणादिषु**, प्रारम्भप्रयत्नादयः संस्थाश्च**तुर्दारिकालाभादिषु** प्रबन्धेषु उपवीथयो (उपाधयो) गृह्यन्ते।

**(७. सन्धयः—५)**

अथैतदुपाधेः कथाशरीरभागानां मुखादयः पञ्च व्यपदेशा भवन्ति— **मुखं, प्रतिमुखं, गर्भो, विमर्शो, निर्वहणम्**इति। ते च बीजबिन्द्वादीनामर्थप्रकृतीनां सन्धानात् **सन्धय** उच्यन्ते।

तदाह— (नाशा. १९.३५)

**मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि ।**
**तथा निर्वहणं चेति सन्धयः पञ्च नाटके ॥ २१ ॥**

३१.(७.१) तत्राधिकारिणो नायकादेः यत्र निरूपणं तत्र रससम्भवाः।

**यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।**
**कथाशरीरानुगतं तन्मुखं परिकीर्तितम् ॥ २२ ॥** (नाशा. १९.३६)

३२.(७.२) यत्र फलार्थायाः प्रवृत्तेरुपक्रमस्कन्धे तु यन्निरूपणं तत्प्रतिमुखम्। यथोच्यते—

**बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।**
**मुखे न्यस्तस्य दृश्येत तद्वै प्रतिमुखं स्मृतम् ॥ २३ ॥** (नाशा. १९.३७)

३३.(७.३) यत्र क्रियाफलस्योद्भेदलाभनाशान्वेषणादयो जायन्ते स **गर्भः**। यथोच्यते—

**उद्भेदः कार्यबीजस्य प्राप्तिरप्राप्तिरेव वा ।**
**पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ २४ ॥** (नाशा. १९.३८)

३४.(७.४) क्रियाफलावाप्तये विचारनिर्णयो **विमर्शः**। यथोच्यते—

**गर्भनिर्भिन्नबीजार्थः क्रोधव्यसनजोऽपि वा ।**
**विप्रलम्भकृतो वापि विमर्श इति संज्ञितः ॥ २५ ॥** (नाशा. १९.३९) इति।

३५.(७.५) क्रियाफलेन सम्यग्योगो **निर्वहणम्**। यथोच्यते—

**यत्रानयनमर्थानां मुखाद्यानां महौजसाम् ।**
**फलोपबृंहितानां स्याज्ज्ञेयं निर्वहणं तु तत् ॥ २६ ॥** (नाशा. १९.४०)

एते च महावाक्येषु **रत्नावल्या**दिषूपक्षेपपरिकराद्यङ्गचतुष्षष्टिप्रविभागप्रस्तावादन्यत्र विस्तरादुदाहरिष्यन्त इति नेह प्रतन्यते। तथा चोपक्षेपादयः प्रबन्धेष्वाधिकारिकाः आनुषङ्गिकाः प्रासङ्गिका वा प्रयोक्तव्याः, यथा सन्दर्भस्य शोभायै भवन्ति। तेनानुसन्ध्यादीनामपि समावेशो व्याख्यातः।

तत्र किमाधिकारिकं किमानुषङ्गिकं किं प्रासङ्गिकमिति चेत्—

**यत् कार्यं हि फलप्राप्तौ समर्थं परिकल्प्यते ।**
**तदाधिकारिकं ज्ञेयमन्यत् स्यादानुषङ्गिकम् ॥ २७॥** (नाशा. १९.३)

**कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम् ।**
**तस्योदाहरणार्थं तु प्रासङ्गिकमिहोच्यते ॥ २८॥** (नाशा. १९.४)

एवमेते **पञ्च सन्धयः** परिपूर्णप्रबन्धे भवन्ति। तदुक्तम्—

**एते तु सन्धयः कार्या नाटकेषु प्रयोक्तृभिः ।**
**तथा प्रकरणेष्वेवं कथास्वाख्यायिकासु च ॥ २९॥** (नाशा. १९.४४)

**महाकाव्येषु चम्पूषु तथैवाख्यानकेषु च ।**
**क्रियन्ते यत्र नैते तु सर्वे ते स्युर्डिमादयः ॥ ३०॥**

**एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः ।**
**द्वितृतीयचतुर्थानां त्रिलोपे लोप इष्यते ॥ ३१॥** (नाशा. १९.१७)

## (८. वृत्तयः — ५)

मुखादिसन्धिषु च व्याप्रियमाणानां नायिका'— नायकोपनायकादीनां मनोवाक्कायकर्मनिबन्धनाः पञ्च वृत्तयो भवन्ति— **'भारती, आरभटी, कैशिकी, सात्त्वती, विमिश्रा'** चेति। तासु— (नाशा.२०.२३)

३६.(८.१) **या वाक्प्रधाना नृवरप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।**
**स्वनामधेयैर्भरतप्रयोज्या सा <u>भारती</u> नाम भवेत्तु वृत्तिः ॥ ३२॥**

३७.(८.२) **प्रस्तावपातप्लुतलङ्घनानि छेद्यानि मायाकृतमिन्द्रजालम् ।**
**चित्राणि युद्धानि च यत्र वृत्तिं तां तादृशी<u>मारभटीं</u> वदन्ति ॥** (नाशा.२०.५३टि.)

३८.(८.३) **या श्लक्ष्णनेपथ्यविशेषयुक्ता स्त्रीसंयुता या बहुगीतनृत्ता ।**
**कामोपभोगप्रभवोपचारा तां <u>कैशिकीं</u> वृत्तिमुदाहरन्ति ॥** (नाशा.२०.४५)

३९.(८.४) **या सात्त्वतेनेह गुणेन युक्ता त्यागेन वृत्तेन समन्विता च ।**
**हर्षोत्कटा संहतशोकभावा सा <u>सात्त्वती</u> नाम भवेत्तु वृत्तिः ॥ ३५॥**(नाशा.२०.३६)

४०.(८.५) **यत्रारभट्यादिगुणास्समस्ताः मिश्रत्वमाश्रित्य मिथः प्रथन्ते ।**
**मिश्रेति तां वृत्तिमुशन्ति धीराः साधारणीमर्थचतुष्टयस्य ॥ ३६॥**[१]

सोऽयं पञ्चप्रकारोऽपि चेष्टाविशेषविन्यासक्रमो **वृत्तिरित्याख्यायते।**

## (९. प्रवृत्तयः –२४)

**वेषविन्यासक्रमः प्रवृत्तिः**। सापि चतुर्धा– **'पौरस्त्या, मागधी, दाक्षिणात्या, आवन्त्या'** च। तासां च लक्षणान्यग्रतो वक्ष्यामः। (द्र. पृ. ९७७)

अन्ये पुनरन्यथा प्रवृत्तिं व्याचक्षते– दशविधा पुण्यप्रवृत्तिः, दशविधा पापप्रवृत्तिरिति। सा चाग्रतो व्याकरिष्यते।

केचित्तु तामप्यन्यथा आहुः– पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि तद्द्वारिका च धर्मा च वादस्थाने च पृथक्पृथक् दशप्रकारा प्रवृत्तिः भवति।

अथान्यन्मतम्– **'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भा'**। तत्र **वागारम्भा** द्वादश आलापप्रलापादयः, **बुद्ध्यारम्भा** द्वादश भावहावादयः, **शरीरारम्भा** द्वादश विलासादयः। त एते षट्त्रिंशदप्यग्रत उदाहरिष्यन्ते। (द्र. पृ. ९६९)

अन्यत्तु दर्शनम्– वेषविन्यासक्रमः प्रवृत्तिरित्युक्तम्। तत्र च पौरस्त्यौढ्रमागधी–त्यादिना देशोपलक्षणेन **देशकालपात्रवयोऽवस्थाशक्तिसाधनाभिप्रायप्रत्यय(/व्यत्यास)–विपरिणामनिमित्ताभिगमसङ्ग्रामविहारोपहारच्छलच्छद्माश्रमजातिवृत्तिव्यक्तिविभव–प्रकीर्णसंकीर्णविप्रकीर्णा**दयो **वेषविशेषप्रवृत्तिहेतवः** संगृह्यन्ते। तत्र–

४१.(९.१) **देशो** यथा–

**ताटङ्कवल्गनतरङ्गितगण्डलेखम् आनाभिलम्बि दरदोलिततारहारम् ।**
**आश्रोणिगुल्फपरिमण्डलितान्तरीयं वेषं नमस्यत महोदयसुन्दरीणाम् ।। ३७।।**

४२.(९.२) **कालो** यथा–

**कर्णे स्मेरं शिरीषं, शिरसि विचकिलस्रग्लताः पाटलिन्यः,**[१]
**कण्ठे मार्णालहारो, वलयितबिसिनीमूलकाण्डाः कलाच्योः ।**
**सामोदं चन्दनाम्भः स्तनभुवि, नयने म्लानमाञ्जिष्ठपृष्ठे**
**गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ।। ३८।।**

४३.(९.३) **पात्रं** यथा–

**छणपिट्ठधूसरत्थणि**। (अत्रैव पृ. ११२७)

४४.(९.४) **वयो** यथा–

**विरचितविशेषकाणां शेखरिणामिक्षुकाण्डहस्तानाम् ।**
**वृन्दैः कुमारकाणां विहितवतंसा इव ग्रामाः ।। ३९।।**

---

१. भोजस्यैवेदं पदम्।

४५.(९.५) **अवस्था** यथा—(शाकु. ७.२१)

**वसने परिधूसरे वसाना नियमक्षामतनुः कृशैकवेणी ।**
**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्यथां बिभर्ति ॥४०॥**

४६.(९.६) **शक्तिर्यथा**—

**आर्द्राः स्रजो मलयजोदकमच्छमेकं वासश्च वासवरिपुर्मृषेऽलसाङ्गः ।**
**सञ्चिक्लिशे कलितरुद्रनिकेतनाद्रिभारेण तत्क्षणमसौ मणिभूषणानाम् ॥४१॥**

४७.(९.७) **साधनं** यथा—

**वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणं**
**हस्तस्वस्तिकदानमंशुकविधिर्धातुद्रवो मण्डनम् ।**
**उत्तंसः शितिकण्ठपिञ्छलतिकावेषोऽयमल्पैर्दिनैः—**
**र्यस्यारातिवधूजनेन शबरीसंवासतः शिक्षितः ॥४२॥**

४८.(९.८) **अभिप्रायो** यथा—(गास. २.७३)

**सिहिपेहुणावअंसा वहुआ वाहस्स गव्विरी भमइ ।**
**गअ-मोत्तिअ-रइअ-पसाहणाण मज्झे सवत्तीणं ॥४३॥**
(शिखिपिञ्छावतंसा वधूर्व्याधस्य गर्विणी भ्रमति ।
गज-मौक्तिक-रचित-प्रसाधनानां मध्ये सपत्नीनाम् ॥)

४९.(९.९) **व्यत्यासो** यथा—(माघस्येव)

**प्रतिमूर्धजं निहितकर्णपूरका रभसेन हारपददत्तकाञ्चयः ।**
**परिवर्तिताम्बरयुगा समापतन् वलयीकृतश्रवणकुण्डलाः स्त्रियः ॥४४॥**

५०.(९.१०) **विपरिणामो** यथा—(कुसं. ७.३२)

**बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।**
**उपान्तभागेषु च रोचनाङ्कः सिंहागजाजिनस्यैव दुकूलभावः ॥४५॥**

५१.(९.११) **निमित्तं** यथा—(रत्ना. १.२०)

**प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।**
**विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपिप्रभवा लतेव ॥४६॥**

५२.(९.१२) **अभिगमो** यथा–

**गोरङ्गउ तरुणीअणो जोण्हाइं अहिसरइ**
**सिअणेवच्छपडिच्छिउ वल्लहबद्धरइ ।**
**तच्छाआहिं पुण चलिअउ**
**सामलगत्तो तह मअणु मन्तिअहिं ॥४७॥**

(गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरति
सितनेपथ्यपरिच्छन्नो वल्लभबद्धरतिः ।
तच्छायासु पुनश्चलितः
श्यामलगात्रस्तत्र मदनो मन्त्र्यभूत् ॥)

५३.(९.१३) **सङ्ग्रामो** यथा–(किराता. ३.५६)

**अथाभिपश्यन्निव विद्विषः पुरः पुरोधसारोपितहेतिसंहतिः ।**
**बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम् ॥ ४८॥**

५४.(९.१४) **विहारो** यथा–(माघ. ८.३०)

**शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ।**
**मार्द्वीकं प्रियतमसन्निधानमासन् नारीणामिति जलकेलिसाधनानि ॥४९॥**

५५.(९.१५) **उपहारो** यथा–(मामा. ५.२४)

**न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः**
**पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।**
**सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते**
**हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥५०॥**

५६.(९.१६) **छलं** यथा–(कुसं. ५.३०)

**अथाजिनाषाढधरः प्रगल्भवाग् ज्वलन्निव ब्रह्ममयेन वर्चसा ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबन्धः प्रथमाश्रमो यथा ॥५१॥**

५७.(९.१७) **छद्म** यथा–(उरा. २.११)

**जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं**
**हारो वक्षसि यज्ञसूत्रमुचितं चीनांशुकं वल्कलम् ।**
**रुद्राक्षैः सकलैस्सरत्नवलयाः[१] क्लिष्टा जटाकुन्तला–**
**स्सीता[२]लोचनहारि कल्पितमहो रम्यं वपुः कामिनाम्[३] ॥५२॥**

५८.(९.१८) **आश्रमो** यथा—(उराच. ४.२०, पृ. ४६४)

**चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतः० ॥ ५३ ॥**

५९.(९.१९) **जातिर्यथा**—

**गलनिहितकुसुममालश्चन्दनचर्चार्चितस्सनिस्रावः ।**
**भट्टः प्रविशति हृष्टः कुटीरकं हट्टकुट्टिन्याः ॥ ५४ ॥**

६०.(९.२०) **व्यक्तिर्यथा**—(किराता. १८.१५)

**अथ हिमरुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया ।**
**स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः ॥ ५५ ॥**

६१.(९.२१) **विभवो** यथा—

**शिरसि जण्डीलो अडीगणिमणिअडाणगीसतो ।**
**विगोधडाकर विआमुद्धएउ ईरस्स ॥ ५६ ॥ (?)**

६२.(९.२३) **प्रकीर्णं** यथा—

**मलिणवसणाण कअवेणिआण आपंडुगंडपालीण ।**
**पुप्फवइआण कामो अंगेसु कआउहो वसइ ॥ ५७ ॥**
(मलिनवसनानां कृतवेणिकानामापाण्डुगण्डपालीनाम् ।
पुष्पवतीनां कामोऽङ्गेषु कृतायुधो वसति ॥)

६३.(९.२४) **सङ्कीर्णं** यथा—

**क्व युवतिमार्दवं क्व च महाहवदारुणता**
**क्व च वलयी करः क्व करिदन्तजमुष्टिरसिः ।**
**क्व च नवयौवनं क्व कुसुमायुधनिस्स्पृहता**
**तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥ ५८ ॥**

६४.(९.२४) **विप्रकीर्णं** यथा—(कुसं. २.६४)

**अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं**
**रतिवलयपदाङ्के चापमासज्य कण्ठे ।**
**सहचर-मधु-हस्त-न्यस्त-चूताङ्कुरास्त्रः**
**शतमखमुपतस्थे प्राञ्जलिः पुष्पकेतुः ॥ ५९ ॥**

एवमियं प्रथमा चतुष्षष्टिः ॥

---

१. सकलै००कुन्तलाः=सकिलै तरौ (सकलैस्सरत्न) वलय(याः) क्लिष्टा जटा कुन्तला=राघवः।

२. लोचनहारि = कुन्तलहारि राघवः ३. नाम् = ना(नाम्) राघवः

## (२. द्वितीया चतुष्षष्टिः)

### (१. लास्याङ्गानि — १०)

अथ द्वितीया। तस्यां **गेयपदं, स्थितपाठ्यम्, आसीनं, पुष्पगन्धि(ण्डि)का, प्रच्छेदकं, सैन्धवं, द्विमूढकम्, उत्तमोत्तमम्, उक्तप्रत्युक्तमिति** लास्याङ्गानि। तेषु—

१.(१.१) **आसनेषूपविष्टैर्यद्भाण्डवाद्योपबृंहितम् ।**
**गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥ ६० ॥** (नाशा. १९.११४)

यथा **नागानन्दे** प्रथमेऽङ्के वीणां वादयन्ती मलयवती गायति—(नागा. १.१४)

**उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!**
**अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन ॥ ६१ ॥**

२.(१.२) **प्राकृतं यन्नियुक्ते/वियुक्ता तु पठेदासनसंस्थिता ।**
**मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥ ६२ ॥**(नाशा. १९.११४)

यथा रत्नावल्यां द्वितीयेऽङ्के—

'सागरिका (निःश्वस्य)—'हिअअ, पसीद, किं इमिणा आआसमेत्तफलएण दुल्लहजणप्पत्थणाणुबंधेण। अण्णच्च—जेण एव्व दिट्ठमेत्तेण अअं ईदिसो संदावो तं एव्व पुणो पेक्खिदुं अहिलससि त्ति अहो दे मूढदा। किं च—अइ णिसंस! जम्मपहुदि सह वड्ढिअं मं परिवंइअ क्खणमत्तदंसणं जणं अणुगच्छंतो कहं ण लज्जेसि? अहवा अणंगसरसणिबंधणभीदेण तुए एदं व्ववसिदं। भअवं कुसुमाउह! णिज्जिअसअलसुरासुरो भविअ इत्थिआजणं पहरंतो ण लज्जेसि। सव्वहा म इमिणा णिमित्तेण उवट्ठिदं। ता जाव इह ण को वि आअच्छदि दाव आलेक्खगदं वि तं जणं पेक्खिअ जहासमीहिदं करइस्सं' (रत्ना. २)[१] इति।

३.(१.३) **आसीनमास्यते यत्र सर्वातोद्यविवर्जितम् ।**
**अप्रसारितमात्रं च चिन्ताशोकसमन्वितम् ॥ ६३ ॥** (नाशा. १९.११६)

---

१. हृदय, प्रसीद। किममुनायासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन? अन्यच्च—येनैव दृष्टमात्रेण अयम् ईदृशः सन्तापः तमेव पुनः प्रेक्षितुं अभिलषसीत्यहो ते मूढता। किं च अयि नृशंस! जन्मप्रभृति सह वर्धितं मां परिवर्ज्य क्षणमात्रदर्शनं जनमनुगच्छत् कथं न लज्जसे? अथवा अनङ्गशर—निबन्धनभीतेन त्वयैतद् व्यवसितम्। भगवन् कुसुमायुध! निर्जितसकलसुरासुरो भूत्वा स्त्रीजनं प्रहरन् न लज्जसे। सर्वथा मम अनेन निमित्तेन उपस्थितम्। तद्यावदिह न कोऽपि आगच्छति तावदालेख्यगतं तं जनं प्रेक्ष्य यथासमीहितं करिष्यामि।

यथा **रत्नावल्यां** तृतीयेऽङ्के राजा आसनस्थ एव प्रविष्टः पठति–(रत्ना. ३.१)

**संतापो हृदय! स्मरानलकृतः संप्रत्ययं सह्यतां**
**नास्त्येवोपरमोऽस्य तां प्रति पुनः किं त्वं मुधा खिद्यसे ।**
**यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं**
**विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ।। ६४।।**

न च तथाहमेवंविधमात्मानं चिन्तयामि यथान्तर्निगूढकोपसम्भाराया देव्या गोचरगतां तामेव तपस्विनीं सागरिकाम्। तथा हि–(रत्ना. ३.४)

**ह्रिया सर्वस्याधो नयति विदितास्मीति वदनं**
**द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम् ।**
**सखीषु स्मेरासु प्रकटयति वैलक्ष्यमिति मे**
**प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ।। ६५।।** इति।

४.(१.४) **वृत्तानि विविधानि स्युर्गेयं चातोद्यसंश्रितम् ।**
**चेष्टा च विविधा पुंसा यत्र सा पुष्पगण्डिका ।। ६६।।** (नाशा. १९.११७)

यथा **रत्नावल्यां** द्वितीयेऽङ्के विदूषकेण नलिनीपत्रशयने दर्शिते

राजा– वयस्य, निपुणमुपलक्षितम्।

**परिम्लानं पीनस्तनजघनसङ्गादुभयत–**
**स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।**
**इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः**
**कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ।। ६७।।** (रत्ना. २.११)

अपि च–

**स्थितमुरसि विशालं पद्मिनीपत्रमेतत्**
**कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।**
**अतिशयपरितापग्लापिताङ्ग्या यथास्याः**
**स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ।। ६८।।** (रत्ना. २.१२)

५.(१.५) **प्रच्छेदकस्स विज्ञेयो यत्र चन्द्रातपाहताः ।**
**स्त्रियः प्रियेषु सज्जन्ते अपि विप्रियकारिषु ।। ६९।।** (नाशा. १९.११८)

यथा **रासकाङ्के** – 'साधु रे चंदायण पडु अणसु एव x x x णच्चाण अक्खंक (त) हिअअं x x x तनोदीरयाव च्चिअ ईदिसे चुद्धचन्दालोए वदो

उ(स)मए(समए) णिद्दिट्ठसंकेअं पिअवअस्सं कदणु अ X X X चपलादियं वेसअन्तेण णिव्वूढं ते जहा समत्थिदं ति।
(साधु रे चन्द्रायण X X X आक्रान्तहृदयं X X X इव ईदृशे शुद्धचन्द्रालोके प्रदोषसमये निर्दिष्टसङ्केतं प्रियवयस्यं X X X निर्व्यूढं ते यथा समर्थितम्) इति विदूषकादेव प्रकृतिभेदमवगम्य तथाकृतापराधमपि चन्द्रातपाहता प्रियमभिससार राधा, 'यत्र वा पालितका गता' इति।

६.(१.६) **अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम् ।**
**नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ ७० ॥** (नाशा. १९.११९)

यथा **रत्नावल्यां** द्वितीयेऽङ्के राजा सागरिकामेवावलोक्याह—(रत्ना. २.१४)

**दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषः**
**चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।**
**शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेधसो**
**विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ ७१ ॥**
**दृष्टिं रुषा क्षिपसि यद्यपि भामिनीमां**
**स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।**
**त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयं ते**
**खेदं गमिष्यति गुरुर्नियतं नितम्बः ॥ ७२ ॥** (रत्ना. २.१५)
**श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।**
**कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥ ७३ ॥** (रत्ना. २.१६)

७.(१.७) **रूपादिवाद्यसंयुक्तं पाठ्येन च विवर्जितम् ।**
**नाट्यं हि तत्तु विज्ञेयं सैन्धवं नाट्यकोविदैः ॥ ७४ ॥**(नाशा. ब.स. १९.१२३)

**रत्नावल्यां** द्वितीयेऽङ्के विदूषकः—'भो अवस्स जिदं अम्हेहिं' (भो वयस्य, जितं अस्माभिः।) इत्युक्त्वा बाहू प्रसार्य नृत्यति। कक्षायाः चित्रफलकं पतति, विदूषकः विषादं नाटयति। राजा अपवार्य विदूषकम् अङ्गुल्या तर्जयतीति। ॥ ७५ ॥ (रत्ना. २.१७/१८)

८.(१.८) **मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम् ।**
**स्पष्टभावरसोपेतं चित्रार्थं चेद् द्विमूढकम् ॥ ७६ ॥** (नाशा. १९.१२१)

**रत्नावल्यां** द्वितीयेऽङ्के राजा चित्रगतां सागरिकां दृष्ट्वा आह—

**लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं मे ।**
**मानसमुपैति केयं चित्रगता राजहंसीव ॥७७॥** (रत्ना. २.७)

इत्याद्यभिहितं यावत् सुसङ्गता आगच्छति, एतन्मुखोपक्षिप्तबीजोद्भेदान्मुखमिव मुखम्। तथा सुसङ्गतायामागतायां राजनि साशङ्के विच्छिन्नमिव तद् बीजमिति दृश्यते।

**'बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित्॥७८॥'** (नाशा. १९.३७) इति।

अत एवाभिहितं राज्ञा 'सुसङ्गते क्रीडामात्रकमेवैतद्' (रत्ना. २.१३) इत्यादि। अत एव द्वे मुखप्रतिमुखे मूढे घटिते यत्र तद् **द्विमूढकमिति**।

९.(१.९) **<u>उत्तमोत्तमकं</u> विद्यादनेकरससंश्रयम् ।**
**विचित्रश्लोकबन्धैश्च हेलाहावविभूषितम् ॥७९॥** (नाशा. १९.१२२)

यथा **रत्नावल्यां** तृतीयेऽङ्के,

राजा सागरिकाबुद्ध्या वासवदत्तामाह— 'प्रिये सागरिके!

**शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ**
**रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।**
**इत्याह्लादकराखिलाङ्गि! रभसान्निश्शङ्कमालिङ्ग्य मा—**
**मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥८०॥**

(रत्ना. ३.११) इत्यादि।

१०.(१.१०) **कोप-प्रसाद-जनितमधिक्षेपसमाश्रयम् ।**
**<u>उक्तप्रत्युक्तमेवं</u> स्याल्लास्याङ्गं दशमं त्विह ॥८१॥** (नाशा. १९.१२३)

यथा **रत्नावल्यां** तृतीयेऽङ्के राज्ञा प्रत्यभिज्ञातायां वासवदत्तायां 'प्रिये वासवदत्ते' इत्याद्यभिहिते वासवदत्ता सकोपमाह,

'अज्जउत्त, मा एव्वं भण। अदिक्कंदाइं दाणिं एदाइं अक्खराइं'। (आर्यपुत्र, मा एवं भण। अतिक्रान्तानीदानीमेतान्यक्षराणि।) एवमुक्ते तदा विज्ञापनानन्तरं पादयोः पतन्तं राजानं दृष्ट्वा वासवदत्ता पुनरनुभावान्नायकप्रसादमुररीकृत्य प्रविष्टाह— 'कंचणमाले, तं तहा चलणणिपडिदं अज्जउत्तं अवधीरिअ आअच्छंतीए मए अदिनिठ्ठुरं एव्व किदं। दाणिं सअं ता गदुअ अलक्खिदा एव्व कंठे गेण्हिअ पसादइस्सं।' (रत्ना. ३.१७)

(काञ्चनमाले, तं तथा चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरम् एव कृतम्। इदानीं स्वयं तं गत्वा अलक्षितैव कण्ठे गृहीत्वा प्रसादयिष्ये।) इत्यादि।

**(२. वीथ्यङ्गानि—१३)**

अथ वीथ्यङ्गानि — **उद्घात्यकम्, अवलुण्ठितम्(अवलगितम्), अन्वस्यन्दितम्, असत्प्रलापः, नालिका, वाक्केलिः, अधिबलं, छलं, व्याहारः, त्रिगतं, गण्डः, मृदवं, प्रपञ्च** इति।

११.(२.१) **पदानि त्वगतार्थानि तदर्थगतये नराः ।**
**पर्यायैरवबोध्यन्ते तदुद्घात्यकमुच्यते ॥८२॥** (नाशा. १८.१०८)

यथा **मालतिकायां** वीथ्याम्—मालतिका—

**को विसमो संसारे को वा दुक्खेन पीरए तरिउं ॥८३॥**

(को विषमः संसारे को वा दुःखेन पार्यते तर्तुम्।)

राजा— **कुसुमशरस्तरलाक्षीवियोगदुःखाम्बुधिश्चैव॥ ८४॥**

यथा वा **वेणीसंहारे**—

**सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।**
**निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥८५॥** (वेसं. १.५)

इति सूत्रधारेण पठिते प्रविश्य संभ्रान्तः

पारिपार्श्वकः— 'भाव, शान्तं पापं, प्रतिहतममङ्गलम्।'

सूत्रधारः— ननु शरत्समयवर्णनाशंसया हंसान् धार्तराष्ट्रानिति व्यपदिशामि।

पारिपार्श्वकः— भाव, न खलु न जाने। किन्त्वमङ्गलत्वादस्य वो वचसः कम्पितमिव मे हृदयम् इति।

१२.(२.२) **यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते ।**
**तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥८६॥** (नाशा. १८.१०९)

यथा **रत्नावल्यां** द्वितीयेऽङ्के

सुसङ्गता—सहि, जस्स किदे तुमं आअदा सो अअं चिट्ठदि। (सखि, यस्य कृते त्वमागता सोऽयं तिष्ठति।)

सागरिका— (सासूयं) सहि, कस्स किदे अहं आअदा? (सखि, कस्य कृतेऽहमागता?) सुसङ्गता—(विहस्य), चित्रफलकस्य कृते आगताहमिति प्रतिपादयन्त्या छायान्तरेण राजार्थोऽपि प्रतिपादित इत्यवलगितम्।

१३.(२.३) **आकाङ्क्षिते तु कस्मिंश्चिच्छुभाशुभसमुत्थिते ।**
**कौशलादुच्यतेऽन्योऽर्थस्तदवस्यन्दितं भवेत् ॥ ८७॥** (नाशा. १८.११०)

यथा **वेणीसंहारे** प्रथमेऽङ्के सूत्रधारः—(वेसं. १.६)

**निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।**
**रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥**

इति सूत्रधारवचनममृष्यमाणः क्रुध्यन्

भीमसेनः प्राह — आः दुरात्मन् वृथामङ्गलपाठक शैलूषापसद!

**लाक्षागृहानलविषान्नसभाप्रवेशैः**
**प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।**
**आकृष्टपाण्डववधूपरिधानकेशाः**
**स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः? ॥ ८९॥** (वेसं. १.७)

इति भीमसेनेनोक्ते

सहदेव आह— 'आर्य! अनुमतमेवास्य नो भरतपुत्रवचनम्। तथाहि—'निर्वाण वैरदहना इत्यन्यथास्य व्याख्यानम्' इत्युक्त्वा, ' रक्तप्रसाधितभुवः क्षतविग्रहाः स्वर्गस्था भवन्तु' इति अन्यथा व्याचष्टे।

१४.(२.४) **मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् ।**
**न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥ ९०॥**(नाशा. १८.१११)

यथा— **रामाभ्युदये** द्वितीयेऽङ्के

रावणः — 'प्रायः श्रुतमेव भवद्भिः। यथा कलत्रमात्रसाधनोऽसौ तापसः, तदपहार एव तावन् निरूप्यताम्। न च कलत्रापहरणादृते पुरुषस्यापरं परिभवस्थानमस्ति। तत्र च मारीचेन साहाय्यकं क्रियमाणमिच्छामि।

मारीचः— स्वामिन्, जीवतो रामस्य परिभव इत्यशक्यमेतत्। न खलु तापस इति मा तमवज्ञातुमर्हति देवः। अन्यदेव किमपि वस्त्वन्तरं तत्।

रावणः— (सक्रोधम्) आः, किन्नाम वस्त्वन्तरं तत्? मूढ!

**युक्त्यैव क्षत्रबन्धोः परिभवममसमं जीवतः कर्तुमिच्छन्**
**मायासाहाय्यके त्वं निपुणतर इति प्रार्थये, नासमर्थः ।**
**यच्चान्यत् तत्र वज्रप्रहतिमसृणितस्फारकेयूरभाजः**
**सज्जास्त्रैलोक्यलक्ष्मीहठहरणसहा बाहवो रावणस्य ॥ ९१॥**

१५.(२.५) **यत्रात्मनः परस्य च वचनं स्यादुत्तरोत्तरप्रभवम्।**
**अन्योन्यार्थविशेषकमधिबलमिति तद् बुधैर्ज्ञेयम्॥ ९२॥** (नाशा. १८.१०९)

यथा – **कृत्यारावणे**–'हा भ्रातर्लक्ष्मण परित्रायस्व मां परित्रायस्व' इति श्रुत्वा सीतावेषधारिणी शूर्पणखा मोहमुपागता, तस्यां च मूढायां

लक्ष्मणः – आर्ये, समाश्वसिहि, समाश्वसिहि।

शूर्पणखा – {अक्षिणी नि(उन्)मील्य, सक्रोधं सकरुणं च} आ अणय्य! अज्जवि तुमं चिट्ठसि य्येव। अहो दाणिं सि तुमं निसंसो निस्सिनेहो। चिट्ठदु दाव भादुअसिनेहो, कहं इक्खाउकुलसंभवेण महाखत्तिएण भविअ एव्वं तुए ववसिदं? णं भणामि एवं अक्कंदंतो सत्तू वि ण उवेक्खीअदि, किं पुण अय्यउत्तो?
{आ अनार्य! अद्यापि त्वं तिष्ठस्येव। अहो इदानीमसि त्वं नृशंसो निःस्नेहः! तिष्ठतु तावत् भ्रातृस्नेहः, कथम् इक्ष्वाकुकुलसम्भवेन महाक्षत्रियेण भूत्वा एवं (त्वया) व्यवसितम्? ननु भणामि एवमाक्रन्दन् शत्रुरपि नोपेक्ष्यते, किं पुनरार्यपुत्रः?}

लक्ष्मणः – आर्ये ननु त्वदर्थ एव आर्येण स्थापितोऽस्मि?

शूर्पणखा – एवं मम अत्थो कदो होदि? एवं च परिरक्खिदा होमि? त्ति। (एवं ममार्थः कृतो भवति। एवं चाहं परिरक्षिता भवामि इति)॥ **९३**॥

१६.(२.६) **अन्यार्थमेव वाक्यं छलमभिसन्धानहास्यरोषकरम्** ॥ ९४॥ (नाशा.१८.११५)

यथा– **रत्नावल्यां** चित्रफलके राजानं सागरिकां चावलोक्य 'कस्स एदं विण्णाणं?' (कस्येदं विज्ञानम्?) इति वासवदत्ताप्रश्ने,

राजा – देवि! अलमन्यथा सम्भावितेन। इयं हि मया स्वचेतसैव विकल्प्यालिखिता, न तु दृष्टपूर्वा।

विदूषकः सच्चं सवामि बम्हसुत्तेण जइ अम्हेहिं ईदिसी दिट्ठपुव्वा। (सत्यं शपे ब्रह्मसूत्रेण यदि अस्माभिरीदृशी दृष्टपूर्वा) इति॥

१७.(२.७) **प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः॥ ९५॥** (नाशा. १८.११६)

यथा– **रत्नावल्यां** तृतीयेऽङ्के

राजा– 'वयस्य, कथं दर्शनमपि भविष्यति' इत्युक्तः (रत्ना. ३.४/५)

विदूषकः – कहं ण भविस्सदि, जस्स दे ओहसिदबुहप्पदिबुद्धिविहवो अअं अमच्चो। (कथं न भविष्यति यस्य त उपहसितबृहस्पति–बुद्धिविभवोऽयममात्यः)॥ ९६॥

अत्र विदूषकेणानुभूतस्यार्थस्य हास्यलेशाय **व्याहार** इति।

१८.(२.८) **श्रुतिसारूप्याद् यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते ।**
**यद्धास्यमहास्यं वा तत् <u>त्रिगतं</u> नाम विज्ञेयम् ॥ ९७॥** (नाशा.१८.११५)

यथा **इन्दुलेखायां वीथ्याम्** राजा–वयस्य!

**किं नु कलहंसनादो मधुरो मधुपायिनां तु झङ्कारः ।**
**हृदयगृहदेवतायास्तस्या नु सनूपुरं चरणम् ॥ ९८॥**

यदि वा–(नाशा. १८.११५)

**यत्रानुदात्तवचनं त्रिधा विभक्तं भवेत् प्रयोगे तु ।**
**हास्यरससंप्रयुक्तं तत् <u>त्रिगतं</u> नाम विज्ञेयम् ॥ ९९॥**

यथा **पुल्लसके रूपके**–तरलं हि भट्टा तुंह एअं अवत्थं सोऊण चिन्ता अआमाउळहराओ आगदेहिं सिधत्थवरेण्णो x x x सुरुषच मालइआए मालं सअंवरत्थेण विरइअं गइऊण एसा देवी इह एव्वायद्दे त्ति। x x x भर्तः! तवेमामवस्थां श्रुत्वा चिन्ता (?) x x x राजा आगत मालतिकाया मालां स्वयंवरत्वेन विरचितं ग्रहीतुम् एषा देवी इहैवागता इति।

१९.(२.९) **संरम्भसम्भ्रमयुतं विषादयुक्तं तथापवादकृतम् ।**
**बहुवचनाक्षेपकृतं <u>गण्डमि</u>ति वदन्ति तत्त्वज्ञाः ॥१००॥** (नाशा. १८.११६)

यथा– **वेणीसंहारे** द्वितीयेऽङ्के दुर्योधनो भानुमतीमुद्दिश्य–(वेसं. २.२३)

**लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।**
**अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु! ममोरुयुग्मम् ॥१०१॥**

कञ्चुकी– देव, भग्नम्।

दुर्योधनः– केन?

कञ्चुकी– भीमेन।

दुर्योधनः– आः, किमेवं प्रलपसि?

कञ्चुकी—(सभयं) ननु कथयामि, भग्नं भीमेन भवतः—

दुर्योधनः—हा धिक्, प्रलापिन्, वृद्धापसद, कोऽयममद्य ते व्यामोहः?

कञ्चुकी—देव न खलु कश्चिद् व्यामोहः, सत्यमेवम्—॥१०२॥

**भग्नं भीमेन भवतो मरुता रथकेतनम् ।**

**पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥१०३॥** (वेसं. २.२३) इति।

ननु च बहोः वक्ष्यमाणस्य अशुभवार्ताबहुलमत्वर्थो(?) बहुवचनाक्षेपकृतं गण्डमित्यनेनोच्यते; तच्च पताकास्थानकस्यापि, आगामिवस्तुसूचनात्मकत्वात्, ततोऽस्य को भेदः?

उच्यते। पताकास्थानकेन धर्मादेर्नाटकशरीरभूतस्य साध्यस्य वस्तुनः साधनभूतानामाक्षेपः क्रियते; अत एव तद्विघ्नभूतानामिति विशेषः। अत एव गण्ड इव गण्डको **गण्डो** ज्ञेयः यथा हि गण्डो गण्डरूपः प्रथममुद्भिद्यमानो व्या वर्त्तको भवति तथा गण्डो ज्ञेयः। तदाह—(नाशा. १८.११८)

२०.(२.१०) वचसा[1] सम्बन्धानामन्ते यत्पदं त्वसम्बन्धम् ।

**सम्बद्धमिवाभाति हि तद् गण्डं नाम वीथ्यां स्यात् ।**

**हास्येनोपगतार्था प्रहेलिका <u>नालिके</u>ति + विज्ञेया ॥१०४॥**

*यथा **मालतिकायां वीथ्याम्—**

**सिअकुसुमहासिणि जप** x x x x x x x **मं जा उण मुहंखमणअस्स ।**

**उज्जाणवि ए आ** x x x x x x x **का सा दिट्ठा मए अज्ज ॥**

(सितकुसुमहासिनि x x x x x x x ।

उद्यान x x x x x x x का सा दृष्टा मया अद्य ॥)

२१.(२.११) एकद्विप्रतिवचना **<u>वाक्केली</u>**+ ।

विदूषकः— हा सा चच्चरी ।

मदनिका—(हदास, न सा होदि चच्चरी।) दुपदीखण्डं क्खु एदम्। (हताश, न सा भवति चर्चरी। द्विपदीखण्डं खल्वेतत्।)

---

१. जोशेरस्तु 'बहुवचनस०० पदं च सम्बद्धम्।' इति पठति।

** ताराद्वयमध्यगतो ग्रन्थो जोशेरे नास्ति।

++ नालिका वाक्केलीति च द्वे अपि अधिबलात्पूर्वमुल्लिखिते वीथ्यङ्गेषु ।

विदूषकः—किं एदं क्खु तं खण्डं, जेण मोणके करीअंति? (किमेतत् खलु
तत् खण्डम्, येन मोदकाः क्रियन्ते?)

मदनिका – णहि णहि। पढीअदि क्खु एदं। (नहि नहि। पठ्यते खल्वेतत्)
(रत्ना. १.१६/१७)

यथा वा—* ॥१०५॥

**कोऽयं द्वारि? हरिः, प्रयाह्युपवनं शाखामृगस्यात्र किम्?**
**कृष्णोऽहं दयिते! बिभेमि सुतरां कृष्णः कुतो वानरः?**
**मुग्धेऽहं मधुसूदनो, व्रज लतां तामेव तन्वीमलं**
**मिथ्या सूचयसीत्युपेत्य धनिकां ह्रीतो हरिः पातु वः ॥१०६॥**

यथा **मृच्छकटिकायां**

वसन्तसेना – कधं परिअणो त्ति मं अवगच्छदि। होदु, एव्वं दाव करइस्सं। (गृह्णाति, आघ्राय) अणुदासीणं से जोव्वणं पडिहासेदि—(अनुदासीनमस्य यौवनं प्रतिभासते।)

नायकः – रदनिके! रोहसेनं गृहीत्वा अभ्यन्तरचतुश्शालं प्रवेशय।

वसन्तसेना – अणब्भंतरा क्खु अहं अब्भंतरचउस्सालस्स। (अनभ्यन्तरा
खल्वहं अभ्यन्तरचतुश्शालस्य।

नायकः – कथमुत्तरोत्तरप्रतिवादिनी रदनिका। कष्टम्!॥१०७॥

**यदा हि भाग्यक्षयपीडितो नरो दशां कृतान्तोपहितां प्रपद्यते।**
**तदाऽस्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥१०८॥**

२२.(२.१२) **यद्गुणदोषीकरणं दोषगुणीकरणमेव वा वादे।**
**हेतुभिरुपपन्नार्थैस्तन्मृदवं नाम विज्ञेयम् ॥१०९॥** (नाशा. १८.११३)

तत्र दोषस्य गुणीकरणं यथा **शाकुन्तले**—(शाकु. २.५)

**मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामुपलक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।**
**उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले**
**मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥ ११०॥**

गुणस्य दोषीकरणं यथा—**मालतीमाधवे**— (मामा. ६.१५/१६)

**पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता–**
**तनुग्लानिर्यस्य त्वयि समभवद् यत्र च तव ।**
**युवा सोऽयं प्रेयानिह सुवदने! मुञ्च जडतां**
**विधातुर्वैदग्ध्यं विलसति सकामोऽस्तु मदनः ॥१११॥**

इति कामन्दकीवचनादनन्तरं–

लवङ्गिका–भअवदि! किसण–चउद्दसीरअणीमसाणसंचारणिपडिद णिव्वत्तिअ विसमववसाअणिट्ठाविदचंडपासंडवअंडदोद्दंडसाहसो साहसिओ क्खु एसो। अदो पिअसही उक्कंपिदा।
(भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चारनिपतित विषमव्यवसाय–निष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खल्वेषः। अतः प्रियसखी उत्कम्पिता।)

कामन्दकी–साधु लवङ्गिके! साधु। अवसरे खलु अनुरागोपकारयोर्गरीयसोरुपन्यासः॥**११२**॥ (मामा. ६.१५)

२३.(२.१३) **यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु ।**
**एकस्य वाऽर्थहेतोः स हास्यजननः <u>प्रपञ्च</u>स्तु ॥११३॥**(नाशा. १८.११२)

यथा **प्रयोगद्वये (प्रयोगाभ्युदये)**–

तरङ्गदत्तकचेटी– अम्मो! अयं क्खु एसो संचारिमं उवहासपट्टणं अय्यभंडीरवो इदो य्येव आगच्छदि। (अहो! अयं खल्वेष सञ्चरिष्णूपहासपत्तनमार्यभण्डीरव इत एवागच्छति।)

विदूषकः– (उपसृत्य) भोदी! सागदं दे। (भवति! स्वागतं ते।)

चेटी– (स्वगतम्) परिहासइस्सं दाव णं। (परिहासयिष्यामि तावदेनम्।) (प्रकाशम्) को दाणि एसो अम्हाणं पेसणआरओ चेडउ त्ति?। (क इदानीमेषोऽस्माकं प्रेषणकारश्चेटक इति?)

विदूषकः–अहं घटदासीणं सामिणो। (अहं घटदासीनां स्वामी।)

चेटी – किं चेडउ त्ति भणिदे कुविदो तुमं? (किं चेटक इति भणिते कुपितस्त्वम्?)

विदूषकः –को दाणि विसेसो घटदासीणं कुंभदासीणं च? (क इदानीं विशेषो घटदासीनां कुम्भदासीनां च?)

चेटी – मा कुप्प, भट्टउत्तो त्ति भणिस्सं। (मा कुप्य, भट्टपुत्र इति भणिष्यामि।)

विदूषक: – भोदी! तुवं पि मा कुप्प, अज्जा इत्ति भणिस्सं। (भवति, त्वमपि .मा कुप्य, आर्या इति भणिप्यामि।)

चेटी–अहो! भट्टपुत्तस्स गदी! (अहो! भट्टपुत्रस्य गति:!)

विदूषक:–अहो!अदिरूआ अज्जया।। (अहो! अतिरूपा आर्या।।)

**एकस्य वाऽर्थहेतो:**–यथा **मृच्छकटिकायाम्**–

नायक:–(मैत्रेयं दृष्ट्वा) दिष्ट्या भवान् दृश्यते?

विदूषक:– सट्टु x x x x x कं चोरकं तो रा दोणी समिदुण्ण तारि सादो गणिआ–कं ता रा दो। क्खु उच्चदि–अकंदसमुत्थिता पउमिणी, अवञ्चओ वाणिओ, अचोरो सुवण्णआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति दुक्करं एदे संभावीअन्ति। ता पिअवअस्सं गदुअ इमादो गणिआपसङ्गादो णिवत्तावेमि। (परिक्रमय दृष्ट्वा) कथं पिअवअस्सो रुक्खवाडिआए उवविट्ठो चिट्ठदि। ता जाव उवसप्पामि। (उपसृत्य) सोत्थि भवदे। वड्ढदु भवं।

नायक: – वयस्य! कथय वृत्तान्तम्[१]।

विदूषक: – तं क्खु कज्जं विणट्ठं।

चारुदत्त: – किं तया न गृहीता सा रत्नावली?

विदूषक: –कुदो अम्हाणं एत्तिअं भाअहेअं। णवणलिणकोमलं अंजलिं मत्थए कदुअ पडिच्छिआ।।११४।।

## (३. वृत्त्यङ्गानि[२] – १६)

अथ वृत्त्यङ्गानि।

### (भारत्यङ्गानि–४)

उद्घात:(त्यक:)/कथोद्घात:, प्रयोगातिशय:, प्रवृत्तकोऽवलगितमिति **भारत्यङ्गानि**। तत्र –

---

१. अत्र राघवपाठ:– विदूषक:– कुदो एत्ति उत्ती आ भि पडिगिण्हिसि। एदं एव्व पसाधिअ विरल विण्णि अंगुली करिइअ अंजलिउडं तहु क्खिदाए विलपज्जरविहीए मं स पेसी वितिणो तावती एसा मुक्तावली अक्खित्तो।

२. 'प्रत्यङ्गानि' जोशेर:

२४.(३.१) **उद्घात्यको** यथा—

**को जयति? जयति शर्वः; केन जितं? जितमनङ्गदहनेन ।**
**त्रिपुरारिणा भगवता बालशशाङ्काङ्कितजटेन ॥११५॥**

**कथोद्घातो** यथा—

**साकं पङ्कजजन्मना सुरपतेरभ्यर्थनाया वशा-**
**दिक्ष्वाकोः शरदिन्दुबिम्बविमले वंशेऽवतीर्य स्वयम् ।**
**निश्शेषाभयदस्त्रयीपथजुषां विद्वेषिणां रक्षसां**
**यः पौलस्त्यमहन् स पातु भवतो रामाभिधानो हरिः ॥११६॥**

२५.(३.२) **प्रयोगातिशयो** यथा—

**यूथायितमवतु हरेः क्ष्मामुद्धरतो वराहवपुषो वः ।**
**शेषफणरत्नदर्पणसहस्रसङ्क्रान्तबिम्बस्य ॥११७॥**

२६.(३.३) **प्रवृत्तको** यथा—(छलितरामके.)

**आसादितप्रकटनिर्मलचन्द्रहासः**
**प्राप्तः शरत्समय एष विशुद्धकान्तः ।**
**उत्खाय गाढतमसं घनकालमुग्रं**
**रामो दशास्यमिव सम्भृतबन्धुजीवः ॥११८॥**

२७.(३.४) **अवलगितं** यथा—

अमुमेव शरत्समयमधिकृत्य गीयताम्। अस्यां हि शरदि—(वेसं.१.५)

**सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।**
**निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥११९॥**

**(आरभट्यङ्गानि—४)**

संक्षिप्तिका, अवपातः, वस्तूत्थापनं, संस्फोट इति चत्वार्यारभट्यङ्गानि। तेषु

२८.(३.५) मायेन्द्रजालशिल्पनैपथ्यादिभिः वस्तुसंक्षेपः **संक्षिप्तिका।**

यथा—(रघु.१२.५३)

**रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।**
**जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥१२०॥**

२९.(३.६) भयादिभि विद्रवादिकर्मसु प्रवेशनिर्गमन**मवपात:**।

यथा—(उरा. २.२२)

**मृगरूपं परित्यज्य विधाय विकटं वपु: ।**
**नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ।।१२१।।**

३०.(३.७) अविद्रव: सविद्रवो वा सर्वरसभावसमासो **वस्तूत्थापनम्**। यथा—

**राहोश्चन्द्रकलाम् इत्यादि।।१२२।।** (मामा. ५.२८, पृ. ६३८)

३१.(३.८) नानास्त्रयुद्धनियुद्धादिभि: संरम्भसंप्रहार: **संस्फोट:**।

यथा—(वेसं. ३.४२)

**कृष्टा येन विलोलकेशनिवहा पाञ्चालराजात्मजा**
**येनास्या: परिधानमप्यपहृतं राज्ञां कुरूणां पुर: ।**
**यस्योरस्स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्**
**सोऽयं मद्‌भुजपञ्जरे निपतित: संरक्ष्यतां कौरवा:! ।।१२३।।**

**(कैशिक्यङ्गानि–४)**

नर्म, नर्मस्फिज:, नर्मस्फोट:, नर्मगर्भ इति चत्वारि **कैशिक्यङ्गानि**। तेषु –

३२.(३.९) आस्थापितशृङ्गारं वचो विचेष्टितं वा सपरिहासं **नर्म**। यथा—(मामा. ६.९)

**वयं तथा नाम यदात्थ किं वदा—**
**म्ययं त्वकस्माद् विकल: कथान्तरे ।**
**कदम्बगोलाकृतिमन्त्रितं/माश्रित: कथं**
**विशुद्धमुग्ध: कुलकन्यकाजन: ।।१२४।।**

३३.(३.१०) प्रथमसम्भोगे नवावस्थानं सम्भोगाश्रयवाक्यादिकर्म नर्म संज्ञा **स्फिज:**। यथा—

**प्राप्ताऽसौ वृषपर्वण: प्रियसुता सङ्केतषण्डं सखे!**
**वृष्टि: सेयमनम्बुदामृतमयी गात्राणि मे सिञ्चति ।**
**किं जानासि विनोदयिष्यसि मन: सन्तप्तमेषा च मे**

विदूषक:—

**दुर्वात्येव विनोदयिष्यति न भोस्तां देवयानी यदि ।।१२५।।**

३४.(३.११) आविर्भूताभिलाषानुभावयोरकाण्ड एव सम्भोगभङ्गो **नर्मस्फोट:**।

यथा— (रघु. ७.६७)

**इतः परानर्भकहार्यशस्त्रान् वैदर्भि! पश्यानुपता मयाऽसि ।**
**एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥१२६॥**

३५.(३.१२) कार्यहेतोः स्वरूपविज्ञानादिप्रच्छादनं **नर्मगर्भः**। यथा— (कुसं. ५.३०)

**अथाजिनाषाढधरः प्रगल्भवाग् ज्वलन्निव ब्रह्ममयेन वर्चसा ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥१२७॥**

**(सात्त्वत्यङ्गानि–४)**

उत्थापकः, परिवर्तकः, संलापकः, संघात्यक इति चत्वारि सात्त्वत्यङ्गानि। तेषु

३६.(३.१३) परस्परीभूतार्थेषु उत्थापनम् **उत्थापकः**। यथा—(मवीच. २.४९)

**प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहं**
**मयि तु कृतनिघाते किं विदध्यात् परेण ।**
**झटिति विततवह्न्युद्गारभास्वत्कुठार–**
**प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥१२८॥**

३७.(३.१४) प्रस्तुतार्थत्यागादन्यार्थभजनं **परिवर्तकः**। यथा—(किराता. १०.४०)

**मुनिमभिमुखतां निनीषवो याः समुपययुः कमनीयतागुणेन ।**
**मदनमुपदधे स एव ताभ्यो दुरधिगमा हि गतिः प्रयोजनानाम् ॥१२९॥**

३८.(३.१५) सदसि नानावाक्यैर्मिथोऽधिक्षेपः **संलापकः**। यथा—(वेसं. ३.३५)

**कथमपि न निषिद्धो दुःखिना भीरुणा वा**
**द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।**
**तव भुजबलदर्पाध्मायमानस्य वामः**
**शिरसि चरण एष न्यस्यते वारयैनम् ॥१३०॥**

३९.(३.१६)कार्यमन्त्रार्थप्रभावदैवादिभिः संघातभेदः **संघात्यकः** (नाशा. २०.४९)।

यथा— (किराता.१५.२)

**अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।**
**मुह्यत्येव हि कृच्छ्रेषु सम्भ्रमज्वरितं मनः ॥१३१॥**

## (४. सन्ध्यन्तराणि—२१)

अथ सन्ध्यन्तराण्येकविंशतिः। तद् यथा—

**साम, भेदः, दण्डः, प्रदानम्, वधः, प्रत्युत्पन्नमतित्वम्, गोत्रस्खलितम्, साहसम्, भयम्, ह्रीः, माया, क्रोधः, ओजः, संवरणम्, भ्रान्तिः, हेत्ववधारणम्, दूतः, लेखः, स्वप्नः, चित्रम्, मद** इति। तत्र

४०.(४.१) **साम** यथा— **पार्थविजये** भगवान् वासुदेवो दूत्येन गतो दुर्योधनमाह—

**क्षीरोदादमृतद्युतिः क्षितिभुजां वंशस्ततो भारतः**
**श्लाघ्यः श्लाघ्यगुणश्च किं च बहुना यत्रोद्भवस्त्वादृशाम् ॥१३२॥** इत्यादि

४१.(४.२) **भेदो** यथा मुद्राराक्षसे—

**चाणक्येन तन्मुद्रालाञ्छितलेखालङ्कारादिदर्शनेन राक्षसात् मलयकेतुर्भेदितः।**

४२.(४.३) **दण्डो** यथा तत्रैव राक्षससङ्ग्रहार्थं वधबन्धादिकं तन्मित्रे श्रेष्ठिनि चन्दनदासे प्रयुक्तम्।

४३.(४.४) **प्रदानं** यथा मृच्छकट्याम्—

**शकारो गणिकां व्यापादयितुं विटाय दानमुपन्यस्तवान्। (शकारः) भाव!**

**जदिच्छसे लंबदसाकलापं पावाइअं सुत्तसतेन जुत्तं।**
**मंसं च खादुं तह तुट्ठि काहिं चुहू चुहू चुक्कु चुहू चुहूत्ति ॥१३३॥**

{यदीच्छसि लम्बदशाकलापं प्रावारकं सूत्रशतेन युक्तम्।
मांसं च खादितुं तथा तुष्टिं कर्तुं (चुहू चुहू चुक्कु चुहू चुहू)इति ॥}

विटः— ततः किम्?

शकारः— मम पिअं कहेहि। (मम प्रियं कुरु।)

विटः— बाढं करोमि, वर्जयित्वा त्वकार्यम्।

शकारः— अकज्जस्स गंधो वि ण त्थि। (अकार्यस्य गन्धोऽपि नास्ति।)

विटः— उच्यतां तर्हि।

शकारः— मालेहि वसंतशेणिअं ति। (मारय वसन्तसेनाम् इति।) तथा मम स्वामिनानेनार्येण (अनार्येण) वसन्तसेना व्यापादिता; न चारुदत्तेन इति ब्रुवते स चेटाय कटकं प्रयच्छन्नाह च—पुतक (एदं गेह्णिअ अण्ण) धा भण। (पुत्रक! एतद् गृहीत्वाऽन्यथा भण।)॥१३४॥

४४.(४.५) **वधो** यथा— रामायणीयेषु नाटकेषु ताटकाविराधवालिजटायु:प्रभृतीनां, भारतीयेषु बकहिडिम्बकीचकाभिमन्युप्रभृतीनामिति।

४५.(४.६) **प्रत्युत्पन्नमतित्वं** यथा तापसवत्सराजे वसन्तकेन राजा भौतिकनैष्ठिक— वृत्तयोर्विशेषं पृष्टः कथयित्वाऽऽह – किं च भवान् नैष्ठिकं प्रपन्नः?

विदूषकः – भो णाहं भोदिअं जाणामि। ण हि (ण)ट्ठिअं। जदा तुमं एद व्व पदं परिच्चअसि तदा x x x x जा एसा दासीए लिभा अस्स थविअ x x x x एदाविअ अख x x x x विमेधा दोणेद्दरदि। एदं परिव्वाअअभंडिअं सदसक्कारं णइअ ता अज्जेव देवीए वासवदत्ताए सहत्थोवणीदमोदए अण्हंतो पढमकालादो वि अव्भुअं विलसिस्सं। (भो नाहं भौतिकं जानामि, न हि नैष्ठिकम्। यदा त्वम् एतदेव पदं परित्यजसि तदा x x x x या एषा दास्याः x x x x तरति। एवं परिव्राजकभण्डिलं शतसत्कारं नीत्वा तद् अद्यैव देव्या वासवदत्तया स्वहस्तोपनीतमोदकान्यश्नन् प्रथमकालादपि अद्भुतं विलसिष्यामि।)

राजा— ससम्भ्रमौत्सुक्यं कथमिव? ततः x x x x

विदूषकः—{प्रकाशितदाहाया वासवदत्ताया रभसात् जीवनोच्छेदं (?) कृत्वा, हस्तमवधूय, आत्मगतम्} किं दाणिं एत्थ करिस्सं? (किमिदानीमत्र करिष्यामि?) (प्रत्युत्पन्नमतित्वात् चिन्तयन् आह) अहवा एव्वं दाव। (अथवा एवं तावत्)। (प्रकाशम्) भो वअस्स! किं ण सुरमदि भवं जं भणिदं तेण भअवदा सिहादेसेण देवीसरिसाकिदीए कण्णआए पाणिग्गहणं णिच्चतिअ देवीसमागमो दे भविस्सिदि त्ति। (भो वयस्य! किं न स्मरति भवान्—यद् भणितं तेन भगवता सिद्धादेशेन देवीसदृशाकृत्याः कन्यकायाः पाणिग्रहणं निर्वर्त्य देवीसमागमस्ते भविष्यतीति।)॥**१३५**॥

४६.(४.७) **गोत्रस्खलितं** यथा— विक्रमोर्वश्याम्— अप्सरसा अन्यस्यै कथितम् ऊर्वश्या शक्रसदसि प्रेक्षणीये 'पुरुषोत्तम' इति वक्तव्ये तद्गतमनसा 'पुरूरवाः' इत्यभिहितम् इति प्रवेशके सूचितम्।

४७.(४.८)**साहसं** यथा— (देवी)चन्द्रगुप्ते— स्त्रीवेषनिह्नुतश्चन्द्रगुप्तः शत्रोः स्कन्धावारम् अलिपुरं गतवति (शकपति)वधायागमद् इति प्रयोगे दर्शितम्, शकपतिमघातयद् इति च वृत्तं सूचितम्।

४८.(४.९)**भयं** यथा— वेणीसंहारे नेपथ्ये सूचितम्—'भो भो भयस्खलितकार्मुक—कृपाणतोमरशक्ति(क्तय:) कौरवबलपक्षपाततृणीकृतप्राणद्रविणसञ्चया नरपतयः। संस्तभ्यताम्। निर्हतदुश्शासनपीतशेषशोणितस्नपित—बीभत्सवृकोदरदर्शनपरिस्खलत्प्रहरणानि रणाद् विद्रवन्ति बलानि।' पुनश्च मूर्च्छितदुर्योधनमपवाहयता सूतेनोक्तम्— कथामासन्न एवायं दुरात्मा कौरवद्रुमोत्पातमारुतो मारुतिः! अनुपलब्धसंज्ञश्च तावदत्र महाराजः! भवतु, सुदूरमपहरामि स्यन्दनम्। इत्येवं प्रयोग एव दर्शितम्।

४९.(४.१०) **ह्रीर्य**था— तापसवत्सराजे पद्मावती प्रत्याख्यानदुःखादुद्धृत्यात्मानं व्यापादयन्ती वत्सराजेन निवारिता ह्रिया युक्ता। तत्र हि— (ताव. ४.२०/२१)

विदूषकः—भोदि! अअं दाव धोअगुग्गुल्लनिबद्धाओ उण्होदएण्ण जडाओ विच्छोलिअ तारिसो एव्व। अहं पुण अणवराधमुंडिदो कुदो तारिसे चंडु x x x x लहिसं। {भवति! अयं तावद् x x x x गुग (?) x x x x उष्णोदकेन x x x x}

पद्मावती— (लज्जावनतमुखी स्मितं करोति।) पुनश्च कञ्चुकिविज्ञापनया अनुज्ञाता राज्ञा सलज्जा अधोमुखी कञ्चुकिना सह निष्क्रान्ता।

तथा पुंसोऽपि ह्रीर्यथा पार्थविजये— गन्धर्वैः पराजित्य बध्यस्य अर्जुनेन विक्रम्य मोचितस्य दुर्योधनस्य।

तत्र हि दुर्योधनमर्जुन आह— 'न चाहमस्मिन् काले पाण्डवेनाहूत इति मनसि सम्भावनीयम्। यस्माद् अभिन्नमेव आर्ययुधिष्ठिरमहाराजमवगच्छामः, विशेषतोऽस्मिन् काले। पश्यतु महाराजः—

**स्वैर्वैरे कुरुपाण्डवान्तरकृतो यस्मिन् विशेषोऽस्ति न—**
**स्तस्मिंस्तत् किमसाधु साधु कथमित्यार्या विजानन्ति तत् ।**
**यत्रैकाभिजनान्वये त्वभिभवः क्षत्रस्य तस्मिन् पुन—**
**र्भ्रातॄणां पुरतोऽभियोगसमये पञ्चोत्तरं नः शतम् ॥१३६॥'**

दुर्योधनः— (सवैलक्ष्यमात्मगतम्) हृदय, शिक्षयोत्तरम्। कथमिवैनमालपामि?

**भ्राताहमित्यसदृशं मम दुष्कृतैस्तै—**
**र्द्वेष्टा भवानिति तदत्र दशाविरुद्धम् ।**
**यद्यद् ब्रवीमि वचनं लघु तत्तु तत्र**
**कामं भवेच्छरणमप्रतिपत्तिरेव ।।१३७।।**

तदत्र वैलक्ष्यम् लज्जानिमित्तमेव।

५०.(४.११) **माया** यथा देवीचन्द्रगुप्ते— चन्द्रगुप्तस्य कृतकोन्माद इति मानुषी माया। कृत्यारावणादिषु— कनकमृगादिरचनात्मिका त्वमानुषी।

५१.(४.१२) **क्रोधो** यथा— श्रीविशाखदेवकृते अभिसारिकावञ्चिते वत्सराजः सम्भावितपुत्रवधायै पद्मावत्यै क्रुद्धः, तथा चाभ्यधात्—

**प्रदुष्टोग्रग्राहां सरितमवगाढः श्रमवशा—**
**दुपालीनः शाखां फलकुसुमलोभाद् विषतरोः ।**
**फणालीढेनार्थी च्युतपरिचयां क्रौर्यनिरतां**
**विषज्वालागर्भां चिरमुरगकन्यामनुसृतः ।।१३८।।**

योऽसौ पुरुषार्थसिद्धिहेतुः क्रोधः स्थायिभावः, सोऽयं न भवतीत्युदाहृतम्। पुरुषार्थसिद्धिहेतुस्तु स्थायिभावः, न सन्ध्यन्तरम्।

५२.(४.१३) **ओजो** यथा देवीचन्द्रगुप्ते विदूषकः शकपतेः शिबिरमभिप्रस्थितं नायकमाह— भो कह दाणिं तुमं सुबहुआणं अमच्चाणं मज्झे संचरिस्ससि? (भोः, कथमिदानीं त्वं सुबहूनाम् अमात्यानां मध्ये एकाकी संचरिष्यसि?)

नायकः — अलं मूर्ख, सत्त्वमृत्सृज्य सङ्ख्यायां बहुमानो भवतः। पश्य—

**सद्वंशान् पृथुवर्ष्मविक्रमबलान् दृष्ट्वाद्भुतान् दन्तिनो**
**हासस्मेरगुहामुखादभिमुखं निष्क्रामतः पर्वतात् ।**
**एकस्यापि विधूतकेसरसटाभारस्य भीता मृगा**
**गन्धादेव हरेर्द्रवन्ति बहवो, वीरस्य किं संख्यया ।।१३९।।**

एतदोजसाभिहितम्।

५३.(४.१४) **संवरण** यथा तापसवत्सराजे— पद्मावत्या स्विकायां वत्सराजप्रतिकृतौ दर्शितायां

वासवदत्ता स्वगतमाह— कहं अय्यउत्तो! अइ हदहिअअ आलिअं महाणुभावं अत्तअ चे(पे)क्खस्सं तं खिव्वंतं मन्दभाइणिं आआसेसि। (कथमार्यपुत्र:! अयि हतहृदय! आलिखितं महानुभावम् x x x x (?) मन्दभागिनीमायासयसि?) इति ससंवरणमास्ते।

पद्मावती— पिअसहि, किं भणामि ण लज्जावेदि पिअसही एस (मि?) जडापरिग्गहो। (प्रियसखि! किं भणामि, लज्जयति प्रियसखि, एष जटापरिग्रह:।)

वासवदत्ता—कहं ते एसा आकिदी अणणुरूपे अभिरमदि। (कथं तव एषा आकृति: अननुरूपे अभिरमते?)

सांकृत्यायनी—(सखेदमात्मगतम्) अहो धैर्यं वत्साया:, येनेयम्—(ताप. ३.७)

**दयितं विलोकयन्ती तद्गतमनसोऽपि हस्तगतमस्या: ।**
**अन्तर्नियमितदु:खा न मनागपि विकृतिमायाति ॥१४०॥**

५४.(४.१५) **भ्रान्तिर्यथा रत्नावल्यां**— रात्रावुद्यानसङ्केतस्थानस्थितेन राज्ञा नैपथ्यसादृश्यनिमित्तया भ्रान्त्या सागरिकेति तन्नाम्ना वासवदत्ता समाभाषिता, वासवदत्तानाम्ना सागरिका।

५५.(४.१६) **हेत्ववधारणं** यथा **मुद्राराक्षसे** नेपथ्ये— वैतालिकाभ्यां देवतारूपकेण प्रवृत्तशरद्गुण— प्रख्यापकाशीर्वचने पठितेऽनन्तरं श्लोकद्वयं पठितम्—

**सत्त्वोत्कर्षस्य धात्रा निधय इव कृता: केऽपि कस्यापि हेतो—**
**र्जेतार: स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।**
**दंष्ट्राभङ्गं मृगाणामधिपतय इव त्यक्तमानावलेपा:**
**नाज्ञाभङ्गं सहन्ते नृवर! नृपतयस्त्वादृशास्सार्वभौमा: ॥१४१॥**

अपि च—**भूषणाद्युपभोगेन प्रभुर्भवति न प्रभु: ।**
**परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥१४२॥**

एतदाकर्ण्य चाणक्यश्चन्द्रगुप्तेनादिष्टस्य कौमुदीमहोत्सवस्य स्वयं कृतं प्रतिषेधमनुसन्धाय चन्द्रगुप्तसमुत्तेजनपरमेतदित्यवधारयन् तथा हि स्वगतमाह— प्रथमं तावद् विशिष्टदेवता (स्तुतिरूपेण प्रवृतशरद्गुणप्रख्यापनमाशीर्वचन)म्,

अपरं किमित्यवधारयामि? (विचिन्त्य) आः, भवतु ज्ञातम्। राक्षसस्यायं प्रयोगः। (आकाशे लक्ष्यं वद्ध्वा) राक्षस राक्षस! दृश्यसे भोः! (दृश्यसे) जागर्ति खलु कौटिल्यः (इति) राक्षसप्रयुक्ते हेतोरवधारणम्।।

५६.(४.१७) **दूतो** यथा **पार्थविजये**—भगवान् वासुदेवो दुर्योधनस्य दूतो गतः।

५७.(४.१८) **लेखो** यथा **तापसवत्सराजे**— प्रद्योतेन वासवदत्तायाः प्रहिते लेखे, वत्से त्वां स्वजनाशिषामविषयं पत्युः ।

५८.(४.१९) **स्वप्नो** यथा **स्वप्न वासवदत्ते** पद्मावतीमस्वस्थां दृष्ट्वा राजा समुद्रगृहकं गतः। पद्मावतीरहितं च तदवलोक्य तस्या एव शयनीये सुष्वाप। वासवदत्तां च स्वप्नवदस्वप्ने ददर्श। स्वप्नायमानश्च वासवदत्ता— माबभाषे। स्वप्नशब्देन चेह स्वापो वा स्वप्नदर्शनं वा स्वप्नायितं वा विवक्षितम्; सर्वत्रेदमेवोदाहरणम्, सर्वेषां सम्भवात्।।

५९.(४.२०) **चित्रं** यथा **रत्नावल्यां** चित्रगतां सागरिकां दृष्ट्वा वत्सराजस्य कामः।

६०.(४.२१) **मदः** मानिनो भवस्य (?) चेतिहासेषु दर्शितम्; रावणस्यापि नाटकेषु कविभिर्निबन्धः(द्धः)। यथा **कृत्यारावणे** विमानस्थो रावणो मदादाह—

**भीताः स्थ भोः किममरास्समराभिमान—**
**मुत्सृज्य तिष्ठति रिपौ न हि मेऽस्ति वैरम् ।**
**स्वस्थोऽरुण—व्रज—विकृष्टखलीनपाशः**
**प्रेष्येषु किं दशशिराः प्रहिणोति शस्त्रम्? ।।१४३।।**

अथ **पाननिमित्तो** यथा **मालविकाग्निमित्रे**। तत्र हि इरावती युक्तमदा (प्रविश्य) चेटी च—

इरावती — हंजे निउणिए, सुणोमि बहुसो मदो किल विसेसमंडणं इत्थिआअणस्स त्ति। अवि सच्चो लोअप्पवादो? (हञ्जे निपुणिके, श्रृणोमि बहुशः मदः किल विशेषमण्डनं स्त्रीजनस्येति। अपि सत्यो लोकप्रवादः?)

चेटी— पडमं लोअप्पवादो एव्व, अज्ज उण सच्चो संउत्तो। (प्रथमं लोकप्रवाद एव; अद्य पुनः सत्यः संवृत्तः।)।।१४४।।

**(५. पताकास्थानम्—४)**

अथ पताकास्थानानि चत्वारि। तत्र च–(नाशा. १९.३०)

**यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।**
**आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥१४५॥**

तच्चतुर्धा– (नाशा. १९.३१)

६१.(५.१) **सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः ।**
**पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥१४६॥**

केवतिना (शकपतिना) परं कृच्छ्रमापतितं रामगुप्तस्कन्धावारमनुजिघृक्षु–रुपायान्तरागोचरे प्रतीकारे निशि वेतालसाधनमध्यवस्यति कुमारचन्द्रगुप्ते आत्रेयेण विदूषकेणोक्तम्–

विदूषकः– भो ण सक्कं दाणिं भवदा इमाए वेलांमभण्डागारिआणं) सआसादो पदादो पदं वि गंतुं? (भोः! न शक्यमिदानीं भवता अस्यां वेलायां भाण्डागारिकाणां सकाशात् पदात्पदमपि गन्तुम्?)

नायकः– (स्वगतम्) अत्रोपायश्चिन्तनीयः। (प्रविश्य पटलकहस्ता चेटिका)

चेटी–जअदु जअदु कुमारो। कुमार! कहिं अज्जुआ . . . अज्ज खु अज्जुआ केण वि कारणेण अअं विमणा कुमारं पेक्खामि त्ति भणंती राउळादो णिक्कंता। इमं च से देवीए धुपदेवीए ससरीरपरिभुत्तं वसाहणअं पसादीकिदं गह्णिअ कुमारस्स समीपे अज्जुअ . . . मण्णा आगदत्थिअ वत्तेअखोअि इमं जाव अज्जुअं अण्णेसामि। (निष्क्रान्ता।)

(जयतु जयतु कुमारः। कुमार! कुत्राज्जुका? X X X X अद्य खलु अज्जुका केनापि कारणेन अहं विमनाः कुमारं प्रेक्षे इति भणन्ती राजकुलान्निष्क्रान्ता। इदं च तस्या देव्याः ध्रुवदेव्याः स्वशरीरपरिभुक्तं प्रसाधनकं प्रसादीकृतं गृहीत्वा कुमारस्य समीपेऽज्जुका गता। यावदज्जुकामन्वेषयामि।)

विदूषकः– आ दासीएधीए! किं तव अहं भंडागारिओ? गच्छ वेच्छि आ दास्याः पुत्रि! किं तवाहं भाण्डागारिकः? गच्छ इति यवनिकान्तरितः स्त्रीवेषं कृत्वा निष्क्रान्तः ॥१४७॥

तदेवमन्यथा निर्गमनोपाये चिन्त्यमाने स्त्रीवेषः साधनमुपगतमिति सामान्यलक्षणानुगमात्तद्भेदश्चेटीवचनप्रयुक्त**मेकं पताकास्थानकमिति।**

६२.(५.२) **वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।**
**पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥१४८॥**(नाशा.१९.३१)

यथा **रामाभ्युदये**– तृतीयेऽङ्के सुग्रीवः संदिशति–

**बहुनात्र किमुक्तेन पारेऽपि जलधेः स्थिताम् ।**
**अचिरादेव देवि त्वामार्यः प्रश्वासयिष्यति ॥१४९॥**

अत्र जलधेः पारस्य दुर्गत्वात् दुष्करं प्रश्वासं मन्यमानो रामपराक्रमस्य तत्राप्रतिघातादतिशयमुपवर्णयंश्चिन्त्यमानेषु देशान्तरेषु सुकरतां प्रश्वासने भाविनीं ख्यापयति, न तु जलधेः पारे स्थितां ज्ञात्वैव।

६३.(५.३) **अर्थोपक्षेपणं यत्र हीनं/लीनं सविनयं भवेत् ।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥१५०॥**(नाशा. १९.३२)

यथा मुद्राराक्षसे– चाणक्येन स्वचरितात् प्रयोगाद्राक्षसग्रहणे सन्देहादाशंसिते सिद्धार्थवचनसङ्घटनया निश्चय उपक्षिप्तः। तत्र

चाणक्यः– अपि नाम दुरात्मा राक्षसो गृह्येत?

सिद्धार्थकः– अयं गण्हिओ। (अयं गृहीतः।)

चाणक्यः– (सहर्षमात्मगतम्) हन्त, गृहीतो दुरात्मा राक्षसः! (प्रकाशम्) भद्र अथ कोऽयं गृहीतः?

सिद्धार्थकः– गहीदो अय्यसंदेसो त्ति। (गृहीत आर्यसन्देश इति।)**॥१५१॥**

६४.(५.४) **द्व्यर्थो वचनविन्यासः सुश्लिष्टः कार्ययोजितः ।**
**उपन्याससुयुक्तत्वं तच्चतुर्थमुदाहृतम् ॥१५२॥** (नाशा. १९.३३)

यथा **रत्नावल्यां** राजा नवमालिकोपन्यासादाह– (रत्ना. २.४)

**उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा–**
**दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः ।**
**अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं**
**पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥१५३॥**

अत्र वत्सराजस्य वासवदत्तया सह नवमालिकामाधवीलतयो: प्रथमकुसुमोद्गमनिमित्ते समाह्वये विषयसुखमभिलषत: सागरिकासंदर्शनं सुखनिमित्तं द्वितीयार्थाभिधानादागामि प्रयुक्तम्; अयं च वचनविन्यास: सुश्लिष्टो नितरामुपक्षेपणार्थेनालिङ्गित: प्रसङ्गादुक्त:। सेयं **द्वितीया चतुष्षष्टि:॥**

## (३. तृतीया चतुष्षष्टि:)

(सन्ध्यङ्गचतुषष्टि:)

अथ तृतीया सन्ध्यङ्गचतुष्षष्टिरित्याचक्षते।

**सन्धीनां यानि वृत्तानि प्रदेशेष्वनु पूर्वश: ।**
**सुसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥१५४॥**
**इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षय: ।**
**रागप्राप्ति: प्रयोगस्य गुह्यानां च निगूहनम् ॥१५५॥**
**आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।**
**अङ्गानां षड्विधं ह्येतद् दृष्टं शास्त्रे प्रयोजनम् ॥१५६॥**
**अङ्गहीनो नरो यश्च नैवारम्भक्षमो भवेत् ।**
**अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् ॥१५७॥** (नाशा.१९.४७)
**काव्यं यदपि हीनार्थं सम्यगङ्गै: समन्वितम् ।**
**दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशय: ॥१५८॥** (नाशा. १९.४८)
**उदात्तमपि यत् कार्यं/काव्यं स्यादङ्गै: परिवर्जितम् ।**
**हीनत्वाद्धि प्रयोगस्य न सतां रञ्जयेन्मन: ॥१५९॥**(नाशा.१९.४९)
**तस्मात् सन्धिप्रयोगेषु यथाकाव्यं यथारसम् ।**
**कार्याण्यङ्गानि तेषां तु प्रविभाग: प्रदृश्यते ॥१६०॥** (नाशा. १९.५०)

उपक्षेप:, परीकर्म/परिकर:, परिन्यासो, विलोभनम्, युक्ति:, प्राप्ति:, समाधानं, विधानं, परिभावना, उद्भेद:, करणं, भेद: इति **मुखसन्धौ द्वादशाङ्गानि।**

विलास:, परिसर्प:, विधूतं, तापनं, नर्म, नर्मद्युति:, प्रगमनं, विरोध:(निरोध:), पर्युपासनं, पुष्पं, वज्रं, वर्णसंहार इति **प्रतिमुखसन्धावपि द्वादशाङ्गानि।**

अभूताहरणं, मार्गः, रूपम्, उदाहरणं, क्रमः, सङ्ग्रहः अनुमानं, प्रार्थना, आक्षिप्तिः(संक्षिप्तिः), तोटकम्, अधिबलम्, उद्वेगः, विद्रवः इति **गर्भसन्धौ त्रयोदशाङ्गानि।**

अपवादः, संस्फोटः, द्रवः, शक्तिः, व्यवसायः, प्रसङ्गः, कान्तिः, खेदः, प्रतिषेधः, विरोधनम्, आदानं, साधनं/छादनं, प्ररोचनेति **विमर्शसन्धावपि त्रयोदश।**

सन्धिः, निरोधः, ग्रथनं, निर्णयः, शेषणं/परिभाषणम्, कान्तिः(द्युतिः), प्रसादः, आनन्दः, समयः, उपगूहनं, भूषणं, पुनर्वाक्यं, काव्यसंहारः, प्रशस्तिः इति **निर्वहणसन्धौ चतुर्दशाङ्गानि।**

सैषा सन्ध्यङ्गचतुष्षष्टिर्नाटकादिषु महाकाव्यादिषु च पूर्णसन्ध्यादिषु निबन्धनीया। प्रतिसन्धि च यान्यङ्गानि पठितानि तावतामेव क्रमेण निबन्धः कार्य इत्येष प्रचुरः प्रयोगः। संविधानवशाच्च न्यूनाधिकभावेन व्युत्क्रमेण च प्रयोग इत्येतदप्यवगन्तव्यमिति॥ **१६१**॥ तेषु –

**(१. मुखसन्धौ द्वादशाङ्गानि)**

**मुखाङ्गानि** (१२) तावत्–

१. (**१.१ उपक्षेपः**)

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः॥१६२॥** (नाशा. १९.६५)

यथा **रत्नावल्यां** यौगन्धरायणः सूत्रधारानन्तरम्– एवमेतत्। कस्सन्देहः?

**'द्वीपादन्यस्मादपि'** इत्यादि पठति।

यथा च **वेणीसंहारे** सूत्रधारः–

**निर्वाणवैरदहनाः प्रशमादरीणां**
**नन्दन्तु पाण्डुतनयाः सह माधवेन।**
**रक्तप्रसाधितभुवः क्षतविग्रहाश्च**
**स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥१६३॥**

२. (**१.२ परिकरः**)

**समुत्पन्नार्थबाहुल्याज्ज्ञेयः परिकरस्तु सः॥१६४॥** (नाशा. १९.६५)

यथा **रत्नावल्याम्**— अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनम् रत्नमालाचिह्नायाः परिज्ञायेहानयनम्, इति यावत्।।

यथा च **वेणीसंहारे** भीमः— सहदेव, उच्यतां मद्वचनादार्यः— (वेसं. १.११)

**युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं**
**प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।**
**क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा—**
**नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ।।१६५।।**

३. (१.३ परिन्यासः)

**तन्निष्पत्तिः परिन्यासो विज्ञेयः कविभिः सदा ।।१६६।।** (नाशा. १९.६६)

यथा **रत्नावल्यां** यौगन्धरायणः — तदेवं निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहतीति कष्टोऽयं खलु भृत्यभावः भर्तुः इति यावत्। यथा च **वेणीसंहारे**—(वेसं. १.२०)

**चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य।**
**स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ।।**

४. (१.४ विलोभनम्)

**गुणनिर्वर्णनं चैव विलोभनमिति स्मृतम् ।।१६८।।** (नाशा. १९.६६)

यथा **रत्नावल्यां** यौगन्धरायणः रत्नावलीतो विलोभनार्थमाह—

**'विश्रान्तविग्रहकथः'** इत्युपक्रम्य,

**'वत्सेश्वरः कुसुमचाप इवाभ्युपैति' ।।१६९।।** (रत्ना. १.८) इति।

यथा च **वेणीसंहारे**—(वेसं. १.२१)

**मन्थायस्तार्णवाम्भःप्लुतकुहर—वलन्मनदरध्वानधीरः**
**कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः।**
**कृष्णाक्रोधाग्रदूतः कुरुशतनिधनोत्पातनिर्घातवातः**
**केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ।।१७०।।** इति।

५. (१.५ युक्तिः)

**सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते ।।१७१।।** (नाशा. १९.६७)

यथा **रत्नावल्यां** राजा—(रत्ना. १.९)

**राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः**
**सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।**
**प्रद्योतस्य सुता बसन्तसमयस्त्वं चेति नाम्ना धृतिं**
**कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥१७२॥**

यथा **वेणीसंहारे** —

सहदेवः —आर्य किं महाराजस्य सं)देशोऽयमार्येणापि अव्युत्पन्न इव गृहीतः।

भीमः— का पुनरस्य व्युत्पत्ति?

सहदेवः— एवमार्येण सन्दिष्टं सुयोधनस्य—(वेसं. १.१५)

**कुशस्थलं वृकस्थलं माकन्दीं वारणावतम् ।**
**प्रयच्छ चतुरो ग्रामान् कंचिदेव तु पञ्चमम् ॥१७३॥** इति।

तदनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाह—द्यूतसमाद्यपकारोद्घाटनमेवेदं मन्यामहे इति॥

६. **(१.६ प्राप्तिः)** (नाशा. १९.६७)

**सुखार्तस्योपगमनं प्राप्तिरित्यभिधीयते ॥१७४॥**

यथा **रत्नावल्यां** वसन्तकेन मदनमहोत्सवे वर्णि x x x दधद्वसन्तकेनानेकविधं मदनिकां नृत्यन्तीं पश्यन् सुखातिशयमनुभूतवान्।

यथा च **वेणीसंहारे** —

चेटी— (सानन्दं) भट्टिणि! परिकुविदो विअ कुमालो लक्खीअदि। (भट्टिणि! परिकुपित इव कुमारो लक्ष्यते।)

द्रौपदी— हञ्जे! जदि एव्वं ता अवहीरणा वि एसा समासासेदि। ता इह एव्व उपविसिअ (सुणामो) दाव णाहस्स ववसिदं। {हञ्जे! यद्येवं तदवधीरणाऽप्येषा समाश्वासयति। तत् इहैव उपविश्य शृणुगस्तावन्नाथस्य व्यवसितम्।}

भीमः—

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।**
**सञ्चूर्णयामि गदया न सुयोधनोरू**
**सन्धिं करोतु भवतां नृपतिः पणेन ॥१७५॥** (वेसं. १.१४)

द्रौपदी– अस्सुदपुव्वं क्खु दे एदिसं वअणं। णाह! पुणो वि भण। (अश्रुतपूर्वं खलु ते ईदृशं वचनम्। नाथ! पुनरपि भण) इति।।

७. (१.७ समाधानम्)

**बीजार्थस्योपगमनं समाधानमिति स्मृतम् ।।१७६।।** (नाशा. १९.६८)

यथा– **रत्नावल्यां**–

चेट्यौ– णहि णहि विण्णवेदि। (नहि नहि, विज्ञापयति।)

राजा– (विहस्य, सादरम्) मदनिके! नन्वाज्ञापयतीत्येतदेव रमणीयम्, विशेषतोऽद्य मदनोत्सवे। तत् किमाज्ञापयति देवी?।

चेट्यौ– जहा अज्ज मए मअरंदुज्जाणे रत्तासोअणअवट्ठिअस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा x x x सं(?) अय्यउत्तेण होदव्वं त्ति। (यथा अद्य मया मकरन्दोद्याने रक्ताशोकपादपस्थितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या आर्यपुत्रेण सन्निहितेन भवितव्यम् इति।)

विदूषकः– भो! उट्ठेहि लहु गच्छह्माबंहणस्स मे सोत्थिवाअणं भविस्सिदि त्ति। (भो! उत्तिष्ठ, लघु तत्र गच्छावः। ब्राह्मणस्य मे स्वस्तिवायनं भविष्यति इति)।। रत्ना. १.१६

यथा च **वेणीसंहारे**–

द्रौपदी– णाह! मा क्खु जण्णसेणीपरिभवुद्दीविदकोवाणला सरीरणिरवेक्खं परिक्कामिस्सथो। जदो अप्पमत्तसंचरणीआणि रिउबलाणि सुणीअंति। (नाथ! खलु याज्ञसेनीपरिभवोद्दीपितकोपानला शरीरनिरपेक्षं परिक्रामिष्यथ। यतोऽप्रमत्तसञ्चरणीयानि रिपुबलानि श्रूयन्ते।)

भीमः– **अयि सुक्षत्रिये!।।१७७।।** (वेसं. १.२६)

**अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के**
**मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।**
**स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे**
**सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ।।१७८।।**इति।

**८. (१.८ विधानम्)**

**सुखदुःखान्वितो योऽर्थस्तद् विधानमिति स्मृतम्॥१७९॥** (नाशा. १९.६८)

यथा **रत्नावल्याम्**—

काञ्चनमाला— देवि! अअं सो रत्तासोअपाअवो जहिं देवी अणंगस्स पूआं णिव्वत्तइस्सिदि। (देवि! अयं स रक्ताशोकपादपः यत्र देवी अनङ्गस्य पूजां निर्वर्तयिष्यति।)

वासवदत्ता— तेण हि उवणेहि मे पूआणिमित्तउपअरणाई। (तेन हि उपनय मे पूजानिमित्तोपकरणानि।)

सागरिका— देवि! ऊणइं (देवि! उपनीतम्।)

वासवदत्ता— (निरूप्यात्मगतम्) अहो पमादो परिअणस्स। जस्स जेव्व दंसणपधादो पअत्तेण रक्खीअदि, तस्स जेव्व अज्ज दिट्ठिगोअरगदा। (प्रकाशम्) हला साअरिए! कीस तुमं मअणवराहिण्ण परिअणे मअणमहूस्सवे सारिअं मोत्तूण इध आगदा? ता तहिं एव्व गच्छ। एअं सव्वं कंचणमालाए समप्पेहि। {अहो प्रमादः परिजनस्य! यस्य एव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्यैवाद्य दृष्टिगोचरगता। हला सागरिके! कस्मात् त्वं मदनपराधीने परिजने मदनमहोत्सवे? शारिकां मुक्त्वा इहागता? तत् तत्रैव गच्छ। एतत् सर्वं काञ्चनमालायै समर्पय।}

सागरिका— जं देवी आणवेदि (यद् देवी आज्ञापयति) (इति कतिचित् पदानि गत्वा) सारिआ दाव मए सुसंगदाए समप्पिदा। एदं वि अत्थि पेक्खिदुं मे कौदूहलं। तं जहा नातादस्स अंतेउरे भअउ अणंगो अच्चीअदि इहापि(वि) तह एव्व, आदु अण्णह ता अलक्खिदा भविअ पेक्खिस्सं। {शारिका तावत् मया सुसङ्गतायै समर्पिता। (एतदप्यस्ति) प्रेक्षितुं मे कौतूहलम् — तद् यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, इहापि तथैव। अथवा अन्यथा इति। तदलक्षिता भूत्वा प्रेक्षिष्ये।}॥१८०॥

यथा च **वेणीसंहारे**

द्रौपदी– णाह! पुणो तुए अहं आअच्छिअ समासासइदव्वा।

(नाथ! पुनस्त्वयाऽहमागत्य समाश्वासयितव्या।)

भीम:! ननु पञ्चालराजतनये! किमद्याप्यलीकाश्वासनादिभि:।

**भूय: परिभवक्षान्तिलज्जाबन्धुरिताननम् ।**

**अनिश्शेषितकौरव्यं न पश्यसि वृकोदरम् ॥१८१॥** (वेसं.१.२५) इति।

९. (१.९ **परिभावना)**

**कुतूहलोत्तरावेध:(गा) प्रोक्ता तु परिभावना ॥१८२॥** (नाशा. १९.६९)

यथा **रत्नावल्यां**

सागरिका–कहं पच्चक्खो एव्व भअवंत सुमाउगो पच्चीअदि? (कथं प्रत्यक्ष एव भगवान् सुमाशुग: प्रतीच्छति?)

यथा (च) **वेणीसंहारे–**

द्रौपदी– किं दाणिं एसो पलअजल (किमिदानीमेष: प्रलयजल०।)

१०. (१.१० **उद्भेद:)**

**(बीजार्थस्य) प्ररोहो य उद्भेद: स तु कीर्तित: ॥१८३॥** (नाशा. १९.६९)

यथा **रत्नावल्यां** नेपथ्ये वैतालिक:–(रत्ना. १.२३)

**अस्तापास्तसमस्तभासि नभस: पारं प्रयाते रवा–**
**वास्थानीं समये समं नृपजनस्सायन्तने सम्पतन् ।**
**सम्प्रत्येव सरोरुहद्युतिमुष: पादांस्तवासेवितु**
**प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ १८४॥**

सागरिका– (सहर्षं परिवृत्य सस्पृहं पश्यन्ती) कहं अअं सो राआ (उदअणो जस्स अहं तादेण दिण्णा। (कथमयं से राजा उदयनो यस्याहं तातेन दत्ता?)

यथा च **वेणीसंहारे** भीम: – रणयज्ञ:। तथाहि– (वेसं. १.२४)

**चत्वारो वयमृत्विज: स भगवान् कर्मोपदेष्टा हरि:**
**संग्रामाध्वरदीक्षितो नरपति: पत्नी गृहीतव्रता ।**
**कौरव्या: पशव: प्रियापरिभवक्लेशोपशान्ति: फलं**
**राजन्योपनिमन्त्रणाय रसति स्फीतं यशो/हतो दुन्दुभि: ॥१८५॥**

११. (१.११ करणम्)

**प्रकृतार्थसमारम्भं करणं परिचक्षते ॥१८६॥** (नाशा. १९.७०)

यथा **रत्नावल्यां**

सागरिका—कहं अअं सो राजा उदअणो जस्स अअं तादेण दिण्णा। ता परप्पेसणदूसिदं वि मे सरीरं एदस्स दंसणेण अज्ज बहुमदं संवुत्तम्।) (कथमयं स राजा उदयनो यस्याहं तातेन दत्ता? तत् परप्रेषणदूषितमपि मे शरीरमेतस्य दर्शनेनाद्य बहुमतं संवृत्तम्।)

यथा च **वेणीसंहारे**—

सहदेवः—आर्य, गच्छामो वयमिदानीं गुरुजनेनानुज्ञाता विक्रमानुरूपमा–चरितुम्।

भीमः—वत्स, एते वयमुद्यता एव (आर्यस्य) आज्ञामनुष्ठातुम्। (उत्तिष्ठति।)। (उत्थाय) देवि, गच्छामो वयमिदानीं कुरुकुलक्षयाय इति।

१२. (१.१२ भेदः)

**सङ्घातरूपभेदो यः स भेद इति कीर्तितः ॥१८७॥** (नाशा. १९.७०)

यथा **रत्नावल्यां** —

सागरिका— दिट्ठं जं दिट्ठव्वं (दृष्टं यद् द्रष्टव्यम्) इत्यादि भणित्वा निर्गता।

यथा च **वेणीसंहारे** वासुदेवोपक्रान्तः सन्धिः x x x x (वेसं. १.२३)

**यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं**
**यद् विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।**
**तद् द्यूतारणिसम्भृतं नृपवधूकेशाम्बराकर्षणैः**
**क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥१८८॥**

भीमः— जृम्भतामप्रतिहतकोपमार्यस्य ज्योतिरिति। (वेसं. १.२२–२४)

(२. **प्रतिमुखसन्धौ द्वादशाङ्गानि**)

अथ **प्रतिमुखाङ्गानि** द्वादश।

१३. (२.१ विलासः)

समीहा रतिभोगार्था विलासः परिकीर्तितः॥ (नाशा. १९.७१)

यथा **रत्नावल्यां** चित्रितेनापि नायकेन सह सम्भोगसुखमवगच्छन्त्या सागरिकया।

यथा च **वेणीसंहारे** राजा— विनयन्धर, प्रातरेव वासभवनान्मामनामन्त्र्यैव भानुमती निष्क्रान्तेति व्याक्षिप्तं मे मनः।

**१४. (२.२ परिसर्प)**

**दृष्टनष्टानुसरणं परिसर्पः॥१८९॥** (नाशा. १९.७१)

यथा **रत्नावल्यां** मदनपरवशां सागरिकां राजानमालिखन्तीं दृष्ट्वा सुसङ्गतया— भ्यधायि — किं पुण एसा गुरुआणुराओक्खित्तहिअआ आलिहंती मं पि ण पेक्खदि। होदु। तो जाव इमाए दिट्ठिवहं से परिहरिअ णिरूवइस्सं किं एसा आलिहदि त्ति। {किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया आलिखन्ती माम् अपि न प्रेक्षते? भवतु। तद्यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि किमेषाऽऽलिखति इति।}

यथा च **वेणीसंहारे** कञ्चुकी— साधु पतिव्रते साधु! स्त्रीस्वभावेऽपि वर्तमाना वरं भवती, न पुनर्महाराजः, योऽयमुद्यतेषु बलवत्सु, अथवा किं बलवत्सु वासुदेवसहायकेषु रिपुषु अद्याप्यन्तःपुरक्रीडासुखमभिलषति। इदं चापरमयथायथं स्वामिनश्चेष्टितम्। (वेसं. २.२)

**आशस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने—**
**स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।**
**प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो**
**बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥** इति।

**१५. (२.३ विधूतम्)**

**कृतस्य विनय(स्यानुनय)स्यादौ विधूतं ह्यपरिग्रहः ॥१९१॥** (नाशा. १९.७२)

यथा **रत्नावल्यां** —

सुसङ्गता— (सागरिकाहृदये हस्तं दत्त्वा), सहि समस्सस समस्सस। जाव इमाए दिग्घिआए णलिणीपत्ताइं मुणालोअइं अ गेण्हिअ आअच्छामि। {सखि, समाश्वसिहि समाश्वसिहि! यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकां च गृहीत्वा आगच्छामि। (उत्थाय परिक्रम्योपसृत्य नलिनीपत्राणि मृणालिकाश्च नाट्येन हृदयेऽस्या ददाति।)}

सागरिका— (पत्राणि विक्षिपन्ती) सहि, अवणेहि णलिणीपत्ताइं मुणालिआ अ। अलं एदेहिं। कीस अआरणे अत्ताणं आआसेसि त्ति। (सखि, अपनय नलिनीपत्राणि मृणालिकाश्च। अलमेतेन। किमकारण आत्मानमायासयसि इति।)॥१९२॥

यथा च **वेणीसंहारे** (द्वितीयेऽ)ङ्के — (वेसं. २.१६)

राजा— **विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः**
**परिजनपदवर्तिन्यत्र किं सम्भ्रमेण ।**
**स्मितमधुरमुदारं देवि! मामालपोच्चैः**
**प्रभवति मम पाण्योरञ्जलिः त्वं स्पृशाऽस्मिन् ॥१९३॥**

भानुमती— अय्यउत्त! कस्सिंचि णिअमे अहिप्पाओ। तो अणुमण्णदु मं अय्यउत्तो त्ति। (आर्यपुत्र! कस्मिंश्चिन्नियमेऽभिप्रायः। तदनुमन्यतां मामार्यपुत्रः इति।)

**१६. (२.४ तापनम्) अपायदर्शनं यत्तु तापनं नाम तद्भवेत्॥१९४॥**(नाशा.१९.७२)

यथा **रत्नावल्यां** सागरिका—

**दुल्लहजणेऽणुराओ लज्जा गुरुई परव्वसो अप्पा ।**
**पिअसहि विसमं प्पेम्म मरणं सरणं णु वरमेकम् ॥१९५॥**
(दुर्लभजनेऽनुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि! विषमं प्रेम मरणं शरणं नु वरमेकम् ।।) (रत्ना. २.१)

यथा च **वेणीसंहारे—**

सुवदना— सहि भाणुमदि! कीस दाणीं तुमं सिविणअदंसणमेत्तकस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअत्थिरभावा अणिमित्तं संतप्पसि। (सखि भानुमति! कस्मादिदानीं त्वं स्वप्नदर्शनमात्रकस्य कृते अभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वा एवं विगलितस्थिरभावा अनिमित्तं सन्तप्यसे?)

भानुमती—एव्वं णेदम्। किं उण तं(?) मे सिविणअणिमित्तं आउइ (आउल)दंसणं पडिभादि। (एवं नु एतत्। किं पुनस्तत् में स्वप्ननिमित्तमाकुलदर्शनं प्रतिभाति?)॥१९६॥

१७. (२.५ नर्म)

**क्रीडाविलोभनार्थं च हास्यं नर्मेति कीर्तितम्।।१९७।।** (नाशा. १९.७३)

यथा **रत्नावल्यां**

विदूषकः—(कर्णं दत्त्वा, ससम्भ्रमं राजानं हस्ते गृहीत्वा) भो वयस्स! एहि पलाअह्म। एस्सिं बउलपाअपे किं वि भूदं पडिवसदि। जइ मं ण पत्तिआअसि, ता अग्गदो भविअ सअं ए(व्व) आअण्णेहि। {भो वयस्य! (एहि प)लायावः। अस्मिन् वकुलपादपे किमपि भूतं प्रतिवसति। यदि मां न प्रत्याययसि, तदग्रतो भूत्वा स्वयमेवाकर्णय।}

राजा—(आकर्ण्य) वयस्य! शारिकेयम् इति।।

यथा च **वेणीसंहारे**

राजा कृतावकुण्ठनश्चेट्या हस्ताद् गृहीत्वा भानुमत्या अर्घ्यपात्रमुपनयति।

भानुमती—{स्पर्शमभिनीय सोत्कम्पमर्घ्यपात्रं धारयति। ससाध्वसाया हस्तात् पुष्पाणि पतन्ति। (राजानमवलोक्य) अहो पमादो परिअणस्स। (अहो प्रमादः परिजनस्य!)} इत्यत आरभ्य—

राजा—(सपरिहासं) निपुणः परिजनस्ते एवंविधे सेवावकाशे इति।।**१९८।।**

१८. (२.६ नर्मद्युतिः)

**दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिः स्मृता।।१९९।।** (नाशा. १९.७३)

यथा **रत्नावल्यां**

विदूषकः— (ऊर्ध्वं विलोक्य) कहं सच्चं एव्व सारिआ। (दण्डकाष्ठमुद्यम्य) दासीएधीए, किं तुए जाणिदं जहा स सच्चं एव्व वसन्तओ भाअदि। ता चिठ्ठ मुहुत्तअं, जाव इमिणा रत्तकामिणीहिअअभंगुरेण दंडकठ्ठएण पडिपक्के विअ कइत्थफलं इमादो वउळपाअवादो पाडइस्सं इति। (कथं सत्यमेव शारिका! दास्याःपुत्रि, किं त्वया ज्ञातं यथा स सत्यमेव वसन्तको बिभेति? तत्तिष्ठ मुहूर्तं यावदेतेन रक्तकामिनीहृदयभङ्गुरेण दण्डकाष्ठेन परिपक्वमिव कपित्थफलमस्माद् वकुलपादपात् पातयिष्यामि इति।)

यथा च **वेणीसंहारे**

राजा— (सपरिहासं) देवि! श्रुतविस्तार एवास्मि भवत्याः स्वप्नवृत्तान्तस्य; तदलमत्यन्तसुकुमारमात्मानं खेदयितुम् इति॥ २००॥

**१९. (२.७ प्रशमनम्)**

**उत्तरोत्तरवाक्यं तु भवेत् प्रशमनं तथा॥ २०१॥** (नाशा. १९.७४)

यथा **रत्नावल्यां**

विदूषकः— भो एसा खु सारिआ चउवेदी विअ ब्रह्मणो रिआओ पठिदुं आरद्धा। (भो एषा खलु शारिका चतुर्वेदी इव ब्राह्मणः ऋचः पठितुमारब्धा।)

राजा— मित्राऽन्यचेतसा मया नावधारितं, किमनयोक्तम्?

विदूषकः— भो एआए मंतिदं— (भो एतया मन्त्रितम्)— दुळहजणेऽणुराओ (दुर्लभजनेऽनुरागो) इत्यादि पठति।

राजा— (सहासं) महाब्राह्मण, भवन्तं मुक्त्वा कोऽन्य एवमृचामभिज्ञः?

विदूषकः— किं खु दाणि एदं। (किं खल्विदानीमेतत्?)

राजा— वयस्य, ननु गाथा। इदं कयापि श्लाघ्यमनासादयन्त्या जीवितनिरपेक्षयोक्तम्।

विदूषकः— किं एदेहिं वक्कभणिदेहिं? उज्जुअं एव्वं किं ण भणसि जह मं णासाअअंतीए त्ति। अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिण्हवीअदि। {किमेतैर्वक्रभणितैः? ऋजुकमेवं किं न भणसि यथा माम् अनासादयन्त्या इति। अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते?} (इत्युच्चैर्हसति।।)

यथा च **वेणीसंहारे** (प्रविश्य)

कञ्चुकी— भग्नम्।

दुर्योधनः— केन?

कञ्चुकी— भीमेन।

दुर्योधनः— कस्य?

कञ्चुकी— भवतः।

दुर्योधनः— किमुद्धतं प्रलपसि?

कञ्चुकी—(सभयं) देव,

**भग्नं भीमेन भवतो मरुता रथकेतनम्** ॥ **२०२**॥ (वेसं. २.२३) इति॥

२०. (२.८ निरोधः)

**सुखानां सन्निवेशो यः स निरोधः प्रकीर्तितः** ॥ **२०३**॥ (नाशा.१९.७४)

यथा **रत्नावल्यां**

राजा— धिङ्मूर्ख! किमुच्चैर्हसता त्वयेयं त्रासिता? येनोड्डीयान्यतः क्वापि गता इति।

यथा(च) **वेणीसंहारे** (भानुमत्या सह सुखासीने राजनि प्रविश्य जयद्रथमाता दुःशला च।)

माता— परित्ताअदु परित्ताअदु कुरुणाहो। (परित्रायतां परित्रायतां कुरुनाथः।)

दुर्योधनः — समाश्वसिहि। कुशलं समराङ्गणेष्वप्रतिहतरथस्य महाराजजयद्रथस्य।

माता— कुदो कुदो कुसलम्? (कुतः कुतः कुशलम्?) इत्यादि॥ **२०४**॥

२१. (२.९ पर्युपासनम्)

**क्रुद्धस्यानुनयो यस्तु[१] भवेत् तत् पर्युपासनम्**॥ **२०५**॥ (नाशा. १९.७५)

यथा **रत्नावल्यां**

विदूषकः—भो एसा खु कअलीघरपेरंतेण गदा। ता एहि तुरिअं अणुसरह्म। (भो एषा खलु कदलीगृहपर्यन्तेन गता! तदेहि, त्वरितमनुसरावः।)

यथा च **वेणीसंहारे**

राजा—(कञ्चुकिनमुद्दिश्य) विनयन्धर! किमाह भवान्? एकाकी बहुभिर्बालो लूनशरासनश्च हत इति। पश्य—(वेसं. २.३)

**हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।**
**या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति** ॥ **२०६**॥

२२. (२.१० पुष्पम्)

**विशेषवचनं यत्तु तत् पुष्पमिति संज्ञितम्** ॥ **२०७**॥ (नाशा. १९.७५)

यथा **रत्नावल्यां**

विदूषकः—भो एदं खु तं जं मए भणिदं तुमं एव्व एत्थं आलिहिदो। अण्णहा को अण्णो कुसुमचापव्ववदेसेण णिण्हवीअदि इति। (भो, एतत्खलु

१. स्याननुयोगस्तु इति रा.

तत् यन्मया भणितं त्वमेवेतिमालिखित:। अन्यथा कोऽन्य: कुसुमचापव्यपदेशेन निह्नूयत इति।)

यथा च **वेणीसंहारे**

राजा—अलं विकल्पेन। स्वप्नदर्शनमनया वर्णितम्। मया पुनर्मन्द—धिया(ऽन्)यथैव संभावितम् इति।। २०८।।

२३. (२.११ **वज्रम्**)

**प्रत्यक्षरूक्षं यद् वाक्यं तद् वज्रमिति कीर्तितम्** ।। २०९।।(नाशा. १९.७६)

यथा **रत्नावल्यां**

राजा—सुसङ्गते, कथमहमिहस्थो भवत्या विज्ञात:?

सुसङ्गता—भट्टा! ण केवलं तुमं, समं चित्तफलएण सव्वो मए वुत्तन्तो विण्णादो। ता गदुअ देवीए णिवेदइस्सं इति। (भर्त:! न केवलं त्वं, समं चित्रफलकेन सर्वो मया वृत्तान्तो विज्ञात:। तद् गत्वा देव्यै निवेदयिष्ये।) इति।।

यथा च **वेणीसंहारे**

राजा कञ्चुकिनमाह—आ वृद्धापसद, मरुता रथस्य केतुर्भग्न:। तत्किमाकुलं प्रलपसि इति।। २१०।।

२४. (२.१२ **वर्णसंहार:**)

**वर्णितार्थतिरस्कारो वर्णसंहार उच्यते** ।। २११।। (नाशा. १९.७७)

यथा **रत्नावल्यां**

विदूषक:—(अपवार्य), भो सव्वं संभाविअदि। मुहरा खु एसा गब्भदासी। ता परिओसेहि णं। (भो:, सर्व सम्भाव्यते। मुखरा खल्वेषा गर्भदासी। तत् परितोषयैनाम्।)

राजा— युक्तमभिहितम्। सुसङ्गते! क्रीडामात्रमेवैतत्। तथा नाकारणं त्वया देवी खेदयितव्या। तद् गृहाण कर्णाभरणम्।

सुसङ्गता—इदं भट्टिणो पसादेण मए कीलिदं एव्व। ता किं कण्णाभरणेण। अदो वि मे गुरुओ पसादो जं किस्स तए अहं चित्तफळए आळिहिदा त्ति परिकुविदा मे पिअसही साअरिआ। सा पसादिअदु इति।

१. 'चातुर्वर्ण्योपगमनंम्' इति नाशा. १९.७७

(इदं भर्तुः प्रसादेन मया क्रीडितमेव। तत् किं कर्णाभरणेन? अयमपि मे गुरुः प्रसादः यत् किमिति त्वया अहं चित्रफलके आलिखितेति परिकुपिता मे प्रियसखी सागरिका। सा प्रसाद्यताम् इति।)

यथा च **वेणीसंहारे** कञ्चुकिना रथकेतनपतनम् आवेदिते।

(भानुमती)— अंतरिअदु दाव एदं समत्थपणाणं (बंमणाणं) वेअपथभणि मंगळग्घोसेण इति। (अन्तरीयतां तावदेतत् समर्थब्राह्मणानां वेदध्वनिमङ्गलोद्घोषेण इति।)॥ **२१२**॥

**(३. गर्भसन्धौ त्रयोदशाङ्गानि)**

अथ **गर्भाङ्गानि** त्रयोदश। तेषु—

२५. **(३.१ अभूताहरणम्)—**

**अभूताहरणं तत् स्याद् वाक्यं यत् कपटाश्रयम् ॥ २१३॥**(नाशा. १९.७७)

यथा **रत्नावल्यां**

विदूषकः — सुसङ्गदे! ण हु साअरिअं वज्जिअ अण्णं पिअवअस्सस्स असत्थदाए कारणं। ता चिंतेहि एत्थ को उवाओ त्ति। अज्जए चित्तफळअवुत्तंतसंकिदाए साअरिअं मप(म) रक्खिदु समप्पअंतीए जहावण . . . (जं णेवत्थं मे) पसादीकिदं ता तेण एव्व विरइदभट्टिणीवेसं साअरिअं गेह्णिअ अहं वि कंचणमालावेस (धा)रिणी भविअ पदोसे आगमिस्सं। तुमं पि इध एव्व पडिवालइस्ससि। तदो माहवीलदामंडवे भट्टिणो तए सह समाअमो हविस्सदि। (सुसङ्गते! न खलु सागरिकां वर्जयित्वा अन्यत् प्रियवयस्यस्यास्वस्थतायाः कारणम्। तत् चिन्तयात्र क उपाय इति। आर्यया चित्रफलकवृत्तान्तशङ्कितया सागरिकां मम रक्षितुं समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं ततस्तेनैव विरचितभट्टिनीवेषां सागरिकां गृहीत्वा अहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोषे आगमिष्यामि। त्वमपि इहैव प्रतिपालयिष्यसि। ततो माधवीलतामण्डपे भर्तुः तया सह समागमो भविष्यति।}

यथा च **वेणीसंहारे** द्रौपदीमुद्दिश्य सूतोऽश्वत्थामानमाह--(वेसं. ३.१०)

**अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा**
**स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।**
**तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात् तस्य राज्ञः**
**शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ २१४॥**

२६. (३.२ मार्गः)

**तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ २१५॥** (नाशा. १९.७८)

यथा **रत्नावल्यां** तृतीयेऽङ्के काञ्चनमालया सर्वोऽसौ सुसङ्गतावसन्तकयोः कपटप्रपञ्चो राज्ञश्चास्वस्थास्थताप्रच्छादनं तत्त्वत उपलभ्य मदनिकायै पुनश्च वासवदत्तायै निवेदितम् इति।

यथा च **वेणीसंहारे**

राजा— कथं पुनराचार्यः शस्त्रग्रहणसमये सस्त्रमुज्झितवान्?

कर्णः-- अयमभिप्रायः तत् (तस्य?) स्यात्— अश्वत्थामा मया पृथिवीराज्ये अभिषेक्तव्य इति। तस्यैवाभावाद् वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान्।

राजा— साधु, निपुणमुपलक्षितम्। अत एव समर्थोऽपि कुरुकुलक्षय—मुपेक्षितवान् इति।

२७. (३.३ रूपम्)

**चित्रार्थसमवाये तु वितर्को रूपमुच्यते ॥ २१६॥** (नाशा. १९.७८)

यथा **रत्नावल्यां** तृतीयेऽङ्के

राजा—अहो महदाश्चर्यम्!

**मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे।**
**कामेनैतत् कथं विद्धं समं सर्वैश्शिलीमुखैः ॥ २१७॥** (रत्ना ३.२) इति॥

यथा च **वेणीसंहारे**

राजा— (वेसं. ३.२६)

**तेजस्वी रिपुहतबन्धुदुःखपारं बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम्।**
**आचार्यः सुतनिधनं निशम्य संख्ये किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २१८॥**

२८. (३.४ उदाहरणम्)

**यच्चातिशयवद् वाक्यं तदुदाहरणं स्मृतम् ॥ २१९॥** (नाशा. १९.७९)

यथा **रत्नावल्यां**

विदूषकः—ही ही! कोसंबीरज्जलाहेण वि ण तादिसो पिअवअस्सस्स मणपरिओसो आसी जादिसो अज्ज मम सआसादो पिअवअणं सुणिअ भविस्सदि त्ति तक्केमि। (ही ही! कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य मनःपरितोषः आसीद् यादृशोऽद्य मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि।)

यथा च **वेणीसंहारे**

अश्वत्थामा—अङ्गराज! किमाह भवान्—किमत्र क्रियत इति? श्रूयतां यद् यत् क्रियते—(वेसं. ३.३१)

**यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां**
**यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।**
**यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः**
**क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ २२०॥**

२९. (३.५ क्रमः)

**भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते ॥ २२१॥** (नाशा. १९.७९)

यथा रत्नावल्यां तृतीयेऽङ्के —

विदूषकः—(उपसृत्य) भो वअस्स! दिट्ठिआ वड्ढसि समीहितब्भदिआए कज्जसिद्धीए। (भो वयस्य, दिष्ट्या वर्धसे समीहिताभ्यधिकया कार्यसिद्ध्या।)

राजा— वयस्य, अपि कुशलं प्रियायाः?

विदूषकः— अइरेण पेक्खिअ सअं एव्व जाणिस्सिदि भवं।
(अचिरेण प्रेक्ष्य स्वयमेव ज्ञास्यति भवान्।)

राजा—(सपरितोषं) कथं दर्शनमपि भविष्यति, इति।

यथा च **वेणीसंहारे** तृतीयेऽङ्के, . . .

राजन् दुर्योधन! महा(न्) x x x x x भवता च कृतपरिकरोऽयं

लोकत्रयमुच्छेत्तुं समर्थः, किं पुनरेतद् युधिष्ठिरबलम्? तदभिषिच्यतां सैनापत्ये।

राजा— सुष्ठुं युज्यमानमभिहितम्; किं तु प्राक्प्रतिपन्नोऽयमर्थो मयाऽङ्गराजस्य, इति॥ २२२॥

३०. (३.६ संग्रहः)

**सामदानार्थसम्पन्नः संग्रहः परिकीर्तितः ॥ २२३॥** (नाशा. १९.८०)

यथा **रत्नावल्यां** तृतीयेऽङ्के

राजा— (सहर्षं) (साधु) वयस्य, साधु। इदं च ते पारितोषिकम्। (हस्तादपसार्य कटकं प्रयच्छति)।

यथा च **वेणीसंहारे**

अश्वत्थामा— राजन् कौरवेश्वर! किमद्यापि युक्तायुक्तविचारणया?॥ २२४॥

**प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा—**
**मकेशवमपाण्डवं भुवनमद्य निस्सोमकम् ।**
**इयं परिसमाप्यते रणकथाऽद्य दोश्शालिना—**
**मपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥ २२५॥** (वेसं. ३.३३)

३१. (३.७ अनुमानम्)

**रूपानुरूपगमनमनुमानमिति स्मृतम् ॥ २२६॥** (नाशा. १९.८०)

यथा **रत्नावल्यां** —

विदूषकः—(निरूप्य) भो एदं खु (संस)त्तं (बहल)पत्तपादवदाए पिंडीकदंधआरं विअ उज्जाणं। ता कधं एत्थ मग्गो लक्खीअदि? (भो, एतत् खलु संसक्तबहलपत्रपादपतया पिण्डीकृतान्धकारमिव उद्यानम्। तत्कथमत्र मार्गो लक्ष्यते?)

राजा— वयस्य! सुज्ञातमेवैतत्। तथा हि—(रत्ना. ३.८)

**पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्धुवारः**
**सान्द्रा वीथी तथेयं बकुलविटपिनां पाटला पङ्क्तिरेषा ।**
**आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्**
**व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतोऽप्येष चिह्नैः ॥ २२७।**इति।

यथा च **वेणीसंहारे**

अश्वत्थामा— (अग्रतो विलोक्य), हा हा धिक्कष्टम्! भो भो:! प्रतिज्ञाभङ्गभीरु: किरीटी दुर्योधनराधेयौ शरवर्षैरभिद्रवति। सर्वथा पीतं शोणितं दु:शासनस्य भीमेन, इति।

**३२. (३.८ प्रार्थना)**

**अभ्यर्थनापरं वाक्यं प्रार्थनेत्यभिधीयते**[१]॥ २२८॥ (नाशा. १९.८१)

यथा **रत्नावल्यां** तृतीयेऽङ्के

विदूषक:—भोदि साअरिए! वीसद्धा भविअ आलव पिअवअस्सं। अज्ज वि दाव से णिच्चरुट्टाए देवीए वासवदत्ताए दुट्ठवअणेहिं कडुइदाइं सोत्ताइं संपदं सुहावेदु तुह महुरवअणोवण्णासो। (भवति सागरिके! विस्रब्धा भूत्वा आलप प्रियवयस्यम्। अद्यापि तावदस्या नित्यरुष्टया देव्या वासवदत्ताया: दुष्टवचनै: कटुकिते श्रोत्रे साम्प्रतं सुखयतु तव मधुरवचनोपन्यास:।)

यथा च **वेणीसंहारे**

अश्वत्थामा— राजन् दुर्योधन! अभीष्मद्रोणं च संप्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेन नैवंविधेनान्येन वा शक्येते निवारयितुम्। अत: स्वयं भ्रातु: प्रतीकारपरो भव, इति॥ **२२९**॥

**३३. (३.९ संक्षिप्ति:)**

**गर्भस्योद्भेदनं यत्तु [२]संक्षिप्तिरिति गीयते ॥ २३०॥** (नाशा. १९.८१)

यथा **रत्नावल्यां**

राजा— (मुखमुद्घाट्य, उन्नमय्य) विलोक्य च, सविषादं कथं देवी वासवदत्ता! (विदूषकमुद्दिश्य) मूर्ख, किमेतत्?

विदूषक:—(सभयं) भो अह्माणं जीविदसंसओ। (भो:, अस्माकं जीवितसंशय:!)

यथा च **वेणीसंहारे** चतुर्थेऽङ्के

सुन्दरक:—अह वा किं एत्थ देवं उवालहामि। तस्स क्खु एदं

---

१. रतिहर्षोत्सवादीनां प्रार्थना प्रार्थना भवेत्। नाशा. १९.८१ २. 'साऽऽक्षि'—इति नाशा. १९.८१

णिब्भच्छिअविउरवअणवीअस्स परिभूदपिदामहहिदोवदेसंकुरस्स सउणिप्पोच्छाहणावरूढमूलस्स जदुगेहजूदविससाहिणो पंचाली-केसग्गहणकुसुमस्स फलम्, इति। (अथ वा किमत्र दैवमुपालभे? तस्य खल्वेतद् निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामह-हितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनावरूढमूलस्य जतुगृह-द्यूतविषशाखिनः पाञ्चालीकेशग्रहणकुसुमस्य फलम्, इति।) ॥२३१॥

३४. (३.१० तोटकम्)

**संरम्भवचनं चैव तोटकं समुदाहृतम् ॥ २३२॥** (नाशा. १९.८१)

यथा **रत्नावल्यां**

राजा-(अञ्जलिं बद्ध्वा), प्रिये वासवदत्ते, प्रसीद।

वासवदत्ता-(अश्रूणि धारयन्ती), अय्यवुत्त! मा एवं भण। संकंताइ खु एदाइं अण्णस्सि अक्खराइं।

(आर्यपुत्र! मा एवं भण। संक्रान्तानि खल्विदानीमन्यस्यामक्षराणि।)

यथा च **वेणीसंहारे**

राजा-सुन्दरक, कच्चित् कुशलमङ्गराजस्य?

पुरुषः-कुसलं सरीरमेत्तएण। (कुशलं शरीरमात्रकेण।)

राजा-किञ्चास्य किरीटिना निहता धौरेयाः क्षतस्सारथिर्भग्नो वा रथः?

पुरुषः- देव ण भग्गो रहो। भग्गो दे मणोरहो। (देव! न भग्नो रथः। भग्नस्ते मनोरथः)

राजा-ससंरम्भं किमविस्पष्टवचनैराकुलमपि पर्याकुलयसि मे हृदयम्? इति।

३५. (३.११ अधिबलम्)

**कपटस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ॥ २३३॥** (नाशा. १९.८२)

यथा **रत्नावल्यां** तृतीयेऽङ्के (रत्ना. ३.१४)

राजा-एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि?

**आताम्रतामपनयामि विलक्ष एष**
**लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।**
**कोपोपरागजनितां तु मुखेन्दुबिम्बे**
**हर्तुं क्षमो यदिपरं करुणा मयि स्यात् ॥ २३४॥**

यथा च **वेणीसंहारे**

सुन्दरक:—तदो अ देव सत्तिखंडणामरिसिदेण गंडीविणा भणि(अ)—रे रे दुज्जोहणप्पमुहा कुरुकुल—अविणअ—णावाकण्णधार कण्ण! तुम्हेहिं बहुहिं महारहेहिं पडिवारिअ एआई मम पुत्तओ अहिमण्णु व्वावादिदो। अहं उण तुम्हाणं पेक्खन्ताणं एव्व विससेणं अज्ज सुमरिदव्वसेसं करोमि। (ततश्च देव! शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—रे रे दुर्योधनप्रमुखा:, कुरुकुलाविनय—नावाकर्णधार कर्ण! युष्माभि: बहुभिर्महारथै: परिवार्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादित:। अहं पुनर्युष्माकं प्रेक्षमाणानामेव वृषसेनमद्य स्मर्तव्यशेषं करोमि।)॥ २३५॥

३६. (३.१२ उद्वेग:)

**भयं नृपादिजनितमुद्वेगस्संप्रकीर्तित: ॥ २३६॥** (नाशा. १९.८३)

यथा **रत्नावल्यां** तृतीयेऽङ्के,

सागरिका—वरं दाणिं अहं सअं एव्व अत्ताणं उब्बंधिअ उवरदा, ण उण जाणिदसंकेदवुत्तंतए देवीए परिभूद ह्मि। ता जाव इह असोअपादवं गदुअ जधासमीहिदं करिस्सं।

{वरमिदानीमहं स्वयमेवात्मानमुद्बध्योपरता, पुनर्ज्ञातसंकेतवृत्तान्तया देव्या परिभूतास्मि। तद्यावदिह अशोकपादपं गत्वा यथासमीहितं करिष्ये।}

यथा च **वेणीसंहारे** चतुर्थेऽङ्के,

'भो भो: भयस्खलितकार्मुककृपाणतोमरशक्तय: कौरवचमूभटा: पाण्डवपक्षपातिनश्च योधा:! न भेतव्यं न भेतव्यम्' इत्यादि भीमसेनवचनं श्रुत्वा, (सभयम्) कथमासन्नो दुरात्मा कौरवराज—पुत्रमहावनोत्पातमारुत:! अनुपलब्धसंज्ञश्च महाराज:! भवतु। सुदूरमपहरामि स्यन्दनम्। कदाचिदयमनार्यो दुश्शासन इवास्मिन्नद्याप्यनार्यमाचरिष्यति, इति॥ २३७॥

३७. (३.१३ विद्रव:)

**शङ्का भयत्रासकृतो विद्रव: समुदाहृत: ।। २३८।।** (नाशा. १९.८५)

यथा **रत्नावल्यां**

विदूषक:— उच्चै: भो वअस्स, परित्ताहि परित्ताहि। एसा क्खु देवी वासवदत्ता अप्पाणं उब्बंधिअ वावादिअदि। (भो वयस्य, परित्रायस्व, परित्रायस्व! एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति।)

राजा— (ससम्भ्रममुपसृत्य) वयस्य, क्वासौ क्वासौ?

विदूषक:— हो एसा। (अहो एषा!)

राजा—अयि किमिदमकार्यं क्रियते?।। २३९।।

**मम कण्ठगता: प्राणा: पाशे कण्ठगते तव ।**

**अनर्थार्थ: प्रयासोऽयं त्यज्यतां साहसं प्रिये ।। २४०।।**(रत्ना. ४.१) इति।

यथा (च) **वेणीसंहारे** पञ्चमेऽङ्के,

सूत:—देव!

**प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्तत: ।**

सर्वे— कश्च कश्च?

सूत:— **स कर्णारि: स च क्रूरो वृककर्मा वृकोदर: ।। २४१।।**(वेसं. ५.२५)

गान्धारी— (सभयम्) जाद! किं एत्थ पडिवज्जिदव्वं? (जात! किमत्र प्रतिपत्तव्यम्?)

राजा—ननु सन्निहितैवेयं गदा, इति।

## (४. विमर्शसन्धौ त्रयोदशाङ्गानि)

अथ **विमर्शाङ्गानि त्रयोदश**। (तेषु)—

३८. (४.१ अपवाद:)

**दोषप्रख्यापनं यत् स्यात् सोऽपवाद: प्रकीर्त्तित:।। २४२।।** (नाशा. १९.८४)

यथा **रत्नावल्यां** तृतीयेऽङ्के राज्ञि प्रियं वदत्यपि

सागरिका—अय्यउत्त! किं एदिणा अलीअदाक्खिण्णेण जीविदादो वि वल्लहतराए देवीए अत्ताणअं अवराहिणं करेसि? (आर्यपुत्र! किं एतेन अलीकदाक्षिण्येन जीवितादपि वल्लभतरायाः देव्याः आत्मानमपराधिनं करोषि?।)

राजा—अयि! मिथ्यावादिनी खल्वसि। कुतः—(रत्ना. ३.१७)

**श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं**
**वक्त्रेऽस्याः कुटिलीकृतभ्रुणि रुषा यातं मया पादयोः।**
**इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः, परं**
**प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ २४३॥**

यथा च **वेणीसंहारे** युधिष्ठिरः—(वेसं. ६.१)

**तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते**
**कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।**
**भीमेन प्रियसाहसेन रभसादल्पावशेषे जये**
**सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ २४४॥**

**३९. (४.२ संस्फोटः)**

**रोषग्रथितवाक्यं तु संस्फोट इति कीर्तितम् ॥ २४५॥** (नाशा. १९.८४)

यथा **रत्नावल्यां** तृतीयेऽङ्के तदेव सागरिका—वत्सराजयोर्वाक्यमलक्षिता निशम्योपसृत्य च देवी सरोषमाह—

जज्जउत्त! जुत्तं एदं, सरिसं एदं। (आर्यपुत्र! युक्तमेतत्! सदृशमेतत्!)

राजा—(सागरिकां मुक्त्वा ससम्भ्रमम्) देवि! न खल्वकारणे मामुपालब्धुमर्हसि। सत्यं त्वामेव मत्वा वेषसादृश्याद् विप्रलब्धा वयमिहागताः। तथापि क्षम्यताम्। (इति पादयोः पतति।)

वासवदत्ता—अय्यउत्त! उट्ठेहि। किं अज्जे वि अहिजाई सेवादुक्खं अणुभवीअदि?। (आर्यपुत्र! उत्तिष्ठ। किमद्यापि अभिजातया सेवादुःखमनुभाव्यते?)

राजा—कथमिदमपि श्रुतं देव्या? इति।

यथा च **वेणीसंहारे**

युधिष्ठिरः—पाञ्चालक! कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी?

पाञ्चालकः—न केवलं पदवी, स एव दुरात्मा देवीकेशाम्बराकर्षणमहापातक–प्रधानहेतुरुपलब्धः, इति ॥ **२४६** ॥

४०. (४.३ द्रवः)

**गुरुव्यतिक्रमो यस्तु स द्रवः परिकीर्तितः ॥ २४७ ॥** (नाशा. १९.८५)

यथा **रत्नावल्यां** तृतीयेऽङ्के—

विदूषकः—होदि! तुमं एव्व उब्बंधिअ अत्ताणअं विवज्जिहिसि त्ति करिअ वेससारिस्समोहिदेण मए वयस्सो इह आणीदो। (भवति! त्वमेव उद्बध्यात्मानं विपत्स्यसे इति कृत्वा वेषसादृश्यमोहितेन मया वयस्य इहानीतः)। लतापाशं दर्शयति। किं ण पेक्खदि होदि इमं। (किं न प्रेक्षते भवती इदम्?)

वासवदत्ता—कंचणमाले एदेण एव्व लदावासेण बंधिअ आणेहि बंहबंधुअं। (अङ्गुल्या तर्जयन्ती) एदं वि दुव्विणीअं अग्गदो करेहि। काञ्चनमाले! एतेनैव लतापाशेन बद्ध्वा आनय ब्रह्मबन्धुम्। एतामपि कन्यकां दुर्विनीताम् अग्रतः कुरु।

काञ्चनमाला—जं भट्टिणी आणवेदि। यद् भट्टिनी आज्ञापयति। इति विदूषकं बध्नाति।

यथा वा **वेणीसंहारे**

युधिष्ठिरः—(द्रौपदीमवलोक्य, मुखादस्याः बाष्पमपनीय) अयि सुक्षत्रिये! ॥ **२४८** ॥

**गुरूणां बन्धूनां क्षितिपतिसहस्रस्य पुरतः**
**पुराऽभूदस्माकं नृपसदसि योऽयं परिभवः ।**
**प्रिये! प्रायस्तस्य द्वितयमपि पारं गमयिता**
**क्षयः प्राणानां वा कुरुपतिपशोर्वाऽद्य समरे ॥ २४९ ॥** (वेसं.६.४५)

४१. (४.४ शक्तिः)

**विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता ॥ २५० ॥** (नाशा. १९.८५)

यथा **रत्नावल्यां** चतुर्थेऽङ्के—

विदूषकः—प्रविश्याह— ही ही भो अज्जे क्खु पिअवअस्सप्पसादिआए देविए बंधणादो मोइअ सहत्थदिण्णेहिं मोदएहिं चिरस्स कालस्स मे उदरं पूरिदं। अण्णच्च एदं पट्टंसुअजुअलं कण्णाहरणं च दिण्णं। ता जाव पिअवयस्सं पेक्ख, इति। (ही ही भोः! अद्य खलु प्रियवयस्यप्रसादितया देव्या बन्धनात् मोचयित्वा स्वहस्तदत्तैः मोदकैः चिरस्य कालस्य मे उदरं पूरितम्। अन्यच्च, एतत् पट्टांशुकयुगलं कर्णाभरणं च दत्तम्। तद् यावत् प्रियवयस्यं प्रेक्षे, इति}

यथा च **वेणीसंहारे**

पाञ्चालको युधिष्ठिरमाह— अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः। आह च देवो देवकीनन्दनः— अपर्युषितप्रतिज्ञे मारुतौ प्रनष्टे कौरवेश्वर महान् आसीन्नो विषादः। सम्प्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकल्पयतु देवः, इति॥२५१॥

४२. (४.५ **व्यवसायः**)

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥२५२॥** (नाशा. १९.८६)

यथा **रत्नावल्याम्** –

ऐन्द्रजालिकः—देव!

**किं धरणिए मिअंको आआसे महिअरो जले जलणो ।**
**मज्झण्हमि पओसो दाविज्जइ देहि आणत्तिं ॥२५३॥**

(किं धरण्यां मृमाङ्क आकाशे महीधरो जले ज्वलनः ।
मध्याह्ने प्रदोषो दर्श्यतां देह्याज्ञप्तिम् ॥) (रत्ना. ४.८)

अवि अ(अपि च)— (रत्ना. ४.१०,९)

**हरिहरबह्मप्पमुहे देवे दावेमि देवराअं अ ।**
**गअणे वि सिद्ध-विज्जाहर-वहु-सत्थं च णच्चंतं ॥२५४॥**

(हरिहरब्रह्मप्रमुखान् देवान् दर्शयामि देवराज च ।
गगने सिद्धविद्याधरवधूसार्धं च नृत्यन्तम् ॥)

---

१. 'बहुणा महमहनिमणेणवि अं पियं दट्ठुं'—इति HOS. द्र. परिशिष्टेऽपि

**किं जप्पिएण बहुणा जं जं हिअए समीहिदं[1] पियं दट्ठुं ।**
**तं तं दंसेमि अहं गुरुणो मंतप्पहावेण ।। २५५।।** इति।
(किं जल्पितेन बहुना यद् यद् हृदये समीहितं द्रष्टुम् ।
तत्तद् दर्शयाम्यहं गुरोर्मन्त्रप्रभावेण ।।}
**ईदिसोअवस्टम्भो जेण सव्वं संभावीअदि ।**
{ईदृशोऽवष्टम्भो येन सर्वं संभाव्यते।} इति।

यथा च **वेणीसंहारे**

युधिष्ठिरः—(अश्रूणि विमुञ्चन्)
**सर्वथा कथय ब्रह्मन् संक्षेपाद् विस्तरेण वा ।**
**वत्सस्य किमपि श्रोतुमेतद्दत्तं मनो [1] मया ।। २५६।।** (वेसं.६.१५)

राक्षसः—श्रूयताम्—
**तस्मिन् कौरवपार्थयोर्गुरुगदाघोरध्वनौ संयुगे ।। २५७।।**

द्रौपदी—(लब्धसंज्ञा) तदो किं? (ततः किम्?)

राक्षसः—(आत्मगतम्) कथं पुनरप्यनया लब्धा संज्ञा? अयमपहराम्यस्याः प्राणान्।
**सीरी तत्क्षणमागतश्चिरमभूत् तस्याग्रतः सङ्गरः ।। २५८।।**

कञ्चुकी—नूनं तत्कुतोऽत्र कश्चिदपराद्धो भविष्यति?

राक्षसः— (वेसं.६.१६)
**आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता**
**यामासाद्य कुरूत्तमः प्रतिकृतिं दुश्शासनारौ गतः ।। २५९।।**

**४३. (४.६ प्रसङ्गः)**

**अप्रस्तुतार्थवचनं[2] प्रसङ्गः परिकीर्तितः ।। २६०।।** (नाशा. १९.८६)

यथा **रत्नावल्यां**

वासवदत्ता—हला कंचणमाले! उज्जइणीए आअदो त्ति अत्थि मे एदस्सिं इंदजालिए वक्खवादो। (हला काञ्चनमाले, उज्जयिन्या आगत इत्यस्ति मे एतस्मिन् ऐन्द्रजालिके पक्षपातः।)

---

१. मेतद्दत्तं मनोमेष दत्तः क्षणो—जो., मूलं HOS.
२. प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्त्तनम्। नाशा. १९.८६

काञ्चनमाला—भट्टिणि, णाइकुलवहुमाणो खु एसो।
(भट्टिनि, ज्ञातिकुलबहुमानः खलु एषः।)

यथा च **वेणीसंहारे—**

युधिष्ठिरः—हा तात भीम हा कान्तारबान्धव, हा जतुगृहसमुद्रतरणयानपात्र, हा किर्मीरजटासुरजरासन्धप्रतिमल्ल, हा कीचकसुयोधनानुज—शतकनलिनीवनप्रालेयवर्ष!।। २६१ ।।

**निर्लज्जस्य दुरोदरव्यसनिनो वत्स! त्वया सा तदा**
**भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता ।**
**किं नामापकृतं मयाऽधिकमतस्त्वय्यद्य यद् गम्यते**
**मुक्त्वाऽनाथमबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना ।।** (वेसं. ६.१७)

द्रौपदी—महाराअ, किं णेदं? (महाराज, किं न्विदम्?)

युधिष्ठिरः—(वेसं. ६.१८)

**स कीचकनिषूदनो बककिहिडिम्बकिर्मीरहा**
**मदान्धमगधाधिपद्विरदसन्धिभङ्गाशनिः ।**
**गदापरिघशोभिना भुजयुगेन तेनान्वितः**
**प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ।। २६३ ।।** इति।

४४. (४.७ द्युतिः)

**वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृता ।। २६४ ।।** (नाशा. १९.८७)

यथा **रत्नावल्यां** चतुर्थेऽङ्के,

विदूषकः—(अपवार्य) आः दासीएउत्त, इंदआलिअ, किं देवेहिं, किं वा अच्छराइहिं? जइ इमिणा परितुट्ठेण दे पओअणं ता साअरिअं से दंसेहि। (आः दास्याःपुत्र, ऐन्द्रजालिक, किं देवैः, किं वाऽप्सरोभिः? यदि अनेन परितुष्टेन ते प्रयोजनं सागरिकां तस्य दर्शय।)

यथा च **वेणीसंहारे** षष्ठेऽङ्के,

युधिष्ठिरः—भगवन् कामपाल, कृष्णाग्रज, सुभद्राभ्रातः!।। २६५ ।।

**ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो**
**रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।**

**तुल्यः कामं भवतु भवतश्शिष्ययोस्स्नेहबन्धः**
**कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ।। २६६ ।।**(वेसं.) इति।

४५. (४.८ खेदः)

**मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ।। २६७ ।।** (नाशा. १९.८७)

यथा **रत्नावल्यां**

राजा—आर्य वसुभूते! अपि कुशलं तत्रभवतः सिंहलेश्वरस्य?

वसुभूतिः—(ऊर्ध्वमवलोक्य, निःश्वस्य च) देव! न जाने किं विज्ञापयामि।

वासवदत्ता— (सविषादमात्मगतम्) हद्धि, किं दाणीं वसुभूदी कथइस्सदि, किं भविस्सिदि त्ति संसए वट्टामि।
(हा धिक्, किमिदानीं वसुभूतिः कथयिष्यति? किं भविष्यति इति संशये वर्ते।)

राजा—कथय, किमिति पर्याकुलोऽसि?

बाभ्रव्यः— (अपवार्य) अमात्य, सुचिरमपि स्थित्वा कथनीयमेवैतत्। कथ्यताम्।

वसुभूतिः—देव, शक्यते कथयितुम्। तथाप्येष मन्दभाग्यः कथयामि। या सा तत्रभवता सिंहलेश्वरेण स्वदुहिता रत्नावली नाम आयुष्मतीं देवीं दग्धां वासवदत्तामुपश्रुत्य देवाय पूर्वं प्रार्थिता सती दत्ता—

विदूषकः— तदो ताए किं संउत्तं? (ततस्तस्याः किं संवृत्तम्?)

वसुभूतिः— सा युष्मदन्तिकमस्माभिरानीयमाना प्रवहणभङ्गात् सागरे निमग्ना।

वासवदत्ता— (सास्रम्) हा बहिणिए, कहिं सि। देहि मे पडिवअणं। (हा भगिनिके, क्वासि? देहि मे प्रतिवचनम्।) इति।

यथा च **वेणीसंहारे**— (वेसं. ६.२१)

युधिष्ठिरः—युक्तमाह पाञ्चाली। कञ्चुकिन्, क्रियतामियं तपस्विनी चितासंविभागेन सह्यवेदना। ममापि धनुरुपनय। अलमथवा धनुषा।। २६८।।

**तस्यैव देहरुधिरोक्षणपाटलाङ्गीम्**
**आदाय संयति गदामपविध्य चापम् ।**
**भ्रातृप्रियेण कृतमद्य यदर्जुनेन**
**श्रेयो ममापि हि तदेव जयेन किं मे ।। २६९ ।।**

४६. (४.९ **प्रतिषेधः)**

**ईप्सितार्थप्रतीघातः प्रतिषेध इति स्मृतः ।। २७०।।** (नाशा. १९.८८)

यथा **रत्नावल्यां** चतुर्थेऽङ्के

राजा— देवि, समाश्वसिहि समाश्वसिहि। दुरवबोधा गतिर्दैवस्य। नन्वेतावेव वहनभङ्गेऽप्यभग्नौ बाभ्रव्यवसुभूती निदर्शनम्।

वासवदत्ता— अय्यउत्त, जुज्जइ एदं। कुदो उण मम एत्तिआ भाअधेया। (आर्यपुत्र, युज्यत एतत्। कुतः पुनः ममैतावद्भागधेयम्?)

राजा— (वसुभूतिमपवार्य) बाभ्रव्य, किमेतत्? सर्वं नावगच्छामि।

बाभ्रव्यः— देव, श्रूयताम्।। २७१ ।।

(नेपथ्ये)

**हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः**
**सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।**
**कुर्वन् क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै–**
**रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ।। २७२।।** (रत्ना.)

(सर्वे ससम्भ्रममुत्तिष्ठन्ति।)

यथा च **वेणीसंहारे** युधिष्ठिरे दुर्योधनमभियोजयितुं जिगमिषति—

राक्षसः (उपगम्य)— राजन्, रिपुजयविमुखं यदा ते चेतः तदा यत्र तत्र प्राणत्यागः क्रियताम्। वृथा तु तत्र गमनम्, इति।

४७. (४.१० **विरोधनम्)**

**कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ।। २७३।।** (नाशा. १९.८८)

यथा **रत्नावल्यां**

वासवदत्ता— न खु अहं? अत्तणो कारणेण एव्वं भणामि। एसा खु मए णिग्घिणाए इह संजदा साअरिआ विवज्जदि। ता परित्ताअदु परित्ताअदु अज्जउत्तो। (न खल्वहमात्मनः कारणेनैवं भणामि। एषा खलु मया निर्घृणयेह संयता सागरिका विपद्यते। तत्परित्रायतां परित्रायतामार्यपुत्रः!) इति।

यथा च **वेणीसंहारे,** (प्रविश्य सम्भ्रान्तः),

कञ्चुकी— महाराज! परित्रायताम्! एष दुरात्मा कौरवापसदः क्षतजजला—भिषेकपाटलिताम्बरः समुच्छ्रितरक्तभीषणगदाशनिरुद्यतकालदण्ड इव अन्तकोऽत्रभवतीं पाञ्चालतनयामितस्ततः परिमार्गमाणः इत एवाभिवर्तते, इति॥ **२७४**॥

**४८. (४.११ आदानम्)**

**बीजकार्योपगमनमादानमिति संज्ञितम् ॥ २७५॥** (नाशा. १९.८९)

यथा **रत्नावल्यां** 'सागरिका विपद्यते, तां परित्रायतां राजपुत्रः' इति वासवदत्तयोक्ते,

राजा— एष गच्छामि।

वसुभूतिः—किमयमकारणे पतङ्गवृत्तिः क्रियते?

कञ्चुकी— युक्तमाह वसुभूतिः।

विदूषकः— (राजानमुत्तरीये गृहीत्वा) भो मा खु मा खु साहसं करइस्ससि। (भोः, मा खलु मा खलु साहसं कुरु!)

राजा— (उत्तरीयमुत्सृज्य)—'मूर्ख, सागरिका दह्यते। अहं प्राणान् बिभर्मि' इत्यारभ्य सर्वेष्वग्निप्रवेशं नाटयत्सु, राजा—'नन्वियमासन्ना वर्तते सागरिका। तत् त्वरितमेनां सम्भावयामि' इति यावत्।

यथा च **वेणीसंहारे**

कञ्चुकी बुद्धिमतिकामाह— कष्टम्! इदानीमयं दुरात्मा यथेष्टं प्रवर्तते। सर्वथाऽयं सम्प्रति देशकालोचितः प्रतीकारः। चितासमीपं नयाम्यत्रभवतीं पाञ्चालराजतनयाम्। त्वमपि भद्रे! देव्याः भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ सम्भावय, इति। एतदवस्थे (महा)राजेऽस्तमितयोः भीमार्जुनयोरियमत्र परित्राणाशा, इति॥ २७६॥

**४९. (४.१२ छादनम्)**

**अपमानकृतं वाक्यं कार्यार्थं छादनं भवेत् ॥२७७॥** (नाशा. १९.८९)

यथा **रत्नावल्यां**

सागरिका— (दिशो विलोक्य, सहर्षम्) समंतदो पज्जलिदो भअवं हुदासणो। दिट्ठिआ अज्ज मे करइस्सिदि दुःखावसाणं। (समन्ततः प्रज्वलितो भगवान् हुताशनः। दिष्ट्या अद्य मे करिष्यति दुःखावसानम्) इति।

यथा च **वेणीसंहारे** (नेपथ्ये)—'भो भोः समन्तपञ्चकसञ्चरिणः!' इत्याद्युपक्रम्य

**ऊरू करेण परिघट्टयतः सलीलं दुर्योधनस्य पुरतोऽपहृताम्बरा या ।**
**दुश्शासनाग्रकरकर्षणभिन्नमौलिः सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥** इति।

(वेसं. ६.३५)

५०. (४.१३ **प्ररोचना**)

**प्ररोचना सा विज्ञेया संहारार्थप्रदर्शिनी ॥२७९॥** (नाशा. १९.९०)

यथा **रत्नावल्यां**

राजा—अहो आश्चर्यम्!

**क्वासौ ज्वलद्धुतवहस्तदवस्थमेत—**
**दन्तःपुरं कथमवन्तिनृपात्मजेयम् ।**
**बाभ्रव्य एष वसुभूतिरयं वयस्यः**
**स्वप्ने मतिर्भ्रमति किं त्विदमिन्द्रजालम् ॥२८०॥** (रत्ना. ४.१९)

विदूषकः— भो मा संदेहं करेहि। भणिदं खु तेण दासीएउत्तेण इंदआलिएण एक्को उण खेलओ अवस्सं देवेण पेक्खिदव्वो त्ति। (भोः, मा सन्देहं कुरु। भणितं खलु तेन दास्याःपुत्रेण ऐन्द्रजालिकेन—एकः पुनः खेलकोऽवश्यं देवेन प्रेक्षितव्य इति।)

यथा च **वेणीसंहारे**

कञ्चुकी—(सहर्षं) महाराज, वञ्च्यसे। अयं खल्वायुष्मान् कुमारभीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः। तदलमधुना सन्देहेन, इति॥ २८१॥

(५. **निर्वहणसन्धौ चतुर्दशाङ्गानि**)

अथ **निर्वहणाङ्गानि** चतुर्दश। तेषु—

५१. (५.१ **सन्धिः**)

**मुखबीजोपगमनं सन्धिरित्यभिधीयते ॥२८२॥** (नाशा. १९.९२)

यथा **रत्नावल्यां** चतुर्थेऽङ्के

वसुभूतिः अग्निविद्रवानन्तरं रत्नावलीं विलोक्याह — बाभ्रव्य, सदृशीयं राजपुत्र्याः।

बाभ्रव्यः— ममाप्येतदेव मनसि वर्तते।

यथा (च) **वेणीसंहारे**

चेटी— (द्रौपदीमालिङ्ग्य) णिवत्तदु देवी इमादो मअणववसाआदो। अअं क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुवं एव्व अण्णेसेदि। {(निवर्ततां देवी अस्मान्मरणव्यवसायात्। अयं खलु पूरितप्रतिज्ञाभा रो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति)।}॥ २८३॥

५२. (५.२ **निरोधः**)

**अन्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः ॥ २८४॥** (नाशा. १९.९२)

यथा **रत्नावल्यां** चतुर्थेऽङ्के

वसुभूतिः— देव, कुत इयं कन्यका?

राजा— देवी जानाति।

यथा च **वेणीसंहारे**

युधिष्ठिरः— (स्वैरमुक्त्वा भीमसेनमवलोकयन्नंसे परामृश्य) जयंधर, सत्यं कथयामि। नायमनुजवैरी। वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम्, इति॥ २८५॥

५३. (५.३ **ग्रथनम्**)

**उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् ॥ २८६॥** (नाशा. १९.९२)

यथा **रत्नावल्यां** चतुर्थेऽङ्के,

वासवदत्ता— अमच्च! एसा खु सागरदो पाविदेत्ति भणिअ जोअन्धराअणेण मम हत्थे समप्पिदा। अदो एव्व साअरिअ त्ति सद्दाईदि। (अमात्य! एषा खलु नागरतः प्राप्तेति भणित्वा यौगन्धरायणेन मम हस्ते समर्पिता। अत एव सागरिकेति शब्दायते।)

वसुभूतिः— (जनान्तिकम्) बाभ्रव्य, यथा वसन्तकस्य कण्ठे रत्नमाला, (सागरिकां निर्दिश्य) यथा चास्याः सागरात् प्राप्तिस्तथा व्यक्तमेवेयं सिंहलेश्वरदुहिता रत्नावली, इति।

यथा (च) **वेणीसंहारे**

भीमः— देव अजातशत्रो! अद्यापि दुर्योधनहतकः!॥ २८७॥

**भूमौ क्षिप्त्वा शरीरं निहतमिदमसृक्चन्दनाभं मयाङ्गे**
**लक्ष्मीरार्ये नियुक्ता चतुरुदधिपयस्सीमया सार्धमुर्व्या ।**
**भृत्या मित्राणि योधाः कुरुकुलमनुजैर्दग्धमेतद् रणाग्नौ**
**नामैकं यद् ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ।।** (वेसं. ६.३९) इति।

५४. (५.४ निर्णयः)

**अनुभूतार्थकथनं निर्णयः समुदाहृतः ।। २८९ ।।** (नाशा. १९.९३)

यथा **रत्नावल्यां**

वसुभूतिः—आयुष्मति अयि रत्नावलि! त्वमेतामवस्थां प्राप्तासि?

सागरिका—(सप्रत्यभिज्ञम्) तुमं पि किं अमच्चवसुभूदी? (त्वमपि किम् अमात्यवसुभूतिः?)

वसुभूतिः—स एवाहं मन्दभाग्यः।

सागरिका—सा क्खु अहं मंदभाइणी। (सा खल्वहं मन्दभागिनी।)

वसुभूतिः—हा हतोऽस्मि! (इति भूमौ पतति।)

सागरिका—हा ताद, हा (हा, तात! हा,)

(वासवदत्ता)—किचुलआ किं एसा मे बहिणिआ रअणावली। (कञ्चुकिन्, किमेषा मे भगिनिका रत्नावली!)

कञ्चुकी— देवि, एवम्।

वासवदत्ता— रत्नावलि! समस्सुदु मे बहिणिआ। (रत्नावलि! समाश्वसितु मे भगिनिका।)

राजा— कथमुष्णांशुराजवंशप्रसूतस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम्!

विदूषकः— (आत्मगतम्) षडमं एव्व मए जाणिदं (रत्नमालां परामृश्य) ण हु ईदिसो सामण्णजणस्य विहवो होदि त्ति। (प्रथममेव मया ज्ञातम्, न खलु ईदृशः सामान्यजनस्य विभवो भवतीति।)

यथा च **वेणीसंहारे**

युधिष्ठिरः— वत्स, अनवरतं कथय कच्चिज्जीवति . . .?

भीमसेनः— निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च।

युधिष्ठिरः— पुनर्गाढमालिङ्ग्य तात!।। **२९०।।**

**रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः**
**प्रियो भ्राता भीम त्वमसि मम योऽसौ बलरिपुः ।**
**जरासन्धस्योरस्सरसि रुधिरागाधसलिले**
**तटाघातक्रीडाललितमकरोत् संयति भवान् ।।**२९१।।(वेसं. ६.४०)

५५. (५.५ **परिभाषणम्**)

**परिवादकृतं यत् स्यात् तदाहुः परिभाषणम् ।। २९२।।** (नाशा. १९.९३)

यथा **रत्नावल्यां** चतुर्थेऽङ्के

वसुभूतिः— आयुष्मति, समाश्वसिहि। नन्वियं ज्यायसी ते भगिनी दुःखमास्ते। तत् परिष्वजस्वैनाम्।

रत्नावली— {(समाश्वस्य, राजानं तं निरीक्षमाणा, स्वगतम्) किआवराहा खु अहं देवीए। ण सक्कुणोमि से मुहं दंसिदुं। (कृतापराधा खल्वहं देव्याः। न शक्नोमि तस्याः मुखं दर्शयितुम्।)} इति।

यथा च **वेणीसंहारे**

भीमः— मुञ्चतु मामार्यः क्षणमेकम्।

युधिष्ठिरः— किमपरमवशिष्टम्?

भीमः— सुमहदवशिष्टम्। संयमयामि तावदनेन दुश्शासनदुर्योधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुश्शासनसमाकृष्टं केशहस्तम्, इति।। **२९३।।**

५६. (५.६ **द्युतिः**)

[१]**ईर्ष्याकोपप्रशमनं द्युतिमाचक्षते बुधाः ।। २९४।।** (नाशा. १९.९४)

यथा **रत्नावल्यां** चतुर्थेऽङ्के,

वासवदत्ता— (वसुभूतिमपवार्य), अय्यउत्त, लज्जामि क्खु अहं इमिणा णिसंसत्तणेण। ता अवणेहि से बंधणं। (आर्यपुत्र, लज्जे खल्वहमनेन नृशंसत्वेन। तदपनयास्या बन्धनम्।)

राजा— (सपरितोषम्) यथाह देवी। (इति मोचयति।)

वासवदत्ता—(वसुभूतिमुद्दिश्य) अय्य, जोअन्धराअणेण अत्तिअं कालं दुज्जणीकिद ह्मि। जेण मे जाणिअ णाचक्खिदं। (आर्य, यौगन्धरायणेनैतावन्तं कालं दुर्जनीकृतास्मि। येन मे ज्ञात्वा नाख्यातम्।)

---

१. लब्धस्यार्थस्य शम. नाशा. १९.९४

यथा च **वेणीसंहारे**

भीमः—राजपुत्रि, अलं मामालोक्य त्रासेन॥ **२९५**॥

**कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन**
**स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि।**
**कान्ते राज्ञः कुरूणामपि सरसमिदं मद्गदाचूर्णितोरो–**
**रङ्गेऽङ्गेऽसृङ्निषक्तं तव परिभवजस्यानलस्यास्तु शान्त्यै** ॥(वेसं. ६.४१)

५७. (५.७ प्रसादः)

**शुश्रूषाद्युपसम्पन्नः प्रसाद इति कीर्तितः** ॥ **२९७**॥ (नाशा. १९.९५)

यथा **रत्नावल्याम्** –

वासवदत्ता– इअइ(?) एहि एत्तिअं वि दाव मे बहिणीत्तणस्स अणुरूवं होदु। (एहि, एतावदपि तावन्मे भगिनीत्वस्य अनुरूपं भवतु।) (इत्युक्त्वा रत्नावलीं स्वैरमाभरणैरलङ्कृत्य हस्ते गृहीत्वा राजानमुपसृत्य), अय्यउत्त एदं। (आर्यपुत्र . . एनाम्।) इति।

यथा च **वेणीसंहारे**–

भीमः– (वेणीं बध्नन्), भवति, संयम्यतामिदानीं क्षत्रियकालरात्रिः कुरुपतिविघटिता वेणी।

द्रौपदी– णाह! विसुमरिद ह्मि एदं वावारम्। ता णाहस्स प्पसादेण पुणो वि सिक्खिस्सं। (नाथ, विस्मृतास्म्येतं व्यापारम्। तन्नाथस्य प्रसादेन पुनरपि शिक्षिष्ये।) इति॥ **२९८**॥

५८. (५.८ आनन्दः)

**समागमस्तथार्थानामानन्दः परिकीर्तितः** ॥ **२९९**॥ (नाशा. १९.९४)

यथा **रत्नावल्यां** चतुर्थेऽङ्के,

राजा–(हस्तौ प्रसार्य) को देव्याः प्रसादं न बहुमन्यते? इति।

यथा (च) **वेणीसंहारे** षष्ठेऽङ्के, नेपथ्ये, समरानलशेषाय स्वस्ति तत्रभवतो राज्ञः

**क्रोधान्धैर्यस्य मोक्षात् क्षतनरपतिभिः पाण्डुपुत्रैः कृताभि(नि)**
**प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि।**
**कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां**
**दिष्ट्या बद्धः प्रजाभ्यो विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः** ॥३००॥

५९. (५.९ समयः) (वेसं. ६.४२)

**दुःखस्योपशमश्चैव समयोऽथ निगद्यते ॥ ३०१॥** (नाशा. १९.१०१)

यथा **रत्नावल्यां**

वासवदत्ता— अय्यउत्त, दूरे क्खु एदाए ण्णादिउलम्। तानि तह करेदु जह एसा बन्धुजणं ण सुमरेदि। (आर्यपुत्र, दूरे खल्वेतस्या ज्ञातिकुलम्। तत्तथा कुरु यथा एषा बन्धुजनं न स्मरति।)

राजा— यथाह देवी। इति।

यथा च **वेणीसंहारे** —

युधिष्ठिरः—भगवान् पुण्डरीकाक्षः, वत्सः किरीटी च। भगवन्! कुतस्तस्य विजयादन्यत्, यस्य भगवान् पुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते?॥ **३०२**॥ (वेसं. ६.४३)

**कृतगुरुमहदादिक्षोभसम्भूतमूर्तिं**
**गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।**
**अजममरमचिन्त्यं चिन्तयित्वापि न त्वां**
**भवति जगति दुःखं, किं पुनर्देव दृष्ट्वा ॥ ३०३॥** इति।

६०. (५.१० उपगूहनम्)

**अद्भुतस्य च संप्राप्तिर्भवेत् तदुपगूहनम् ॥ ३०४॥** (नाशा. १९.९६)

यथा **रत्नावल्यां**

विदूषकः— ही ही भोः, हत्थगद एव्व संपदं वअस्सस्स। (हस्तगत एव सांप्रतं वयस्यस्य)

सुमति (वसुभूतिः) . . . .

यथा च **वेणीसंहारे** (कृष्णः)— एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्य–जाबालिप्रभृतयो महर्षयः कल्पिताशेषमङ्गलाः नकुलसहदेवौ धृष्टद्युम्नप्रमुखाश्च सेनापतयः यादवमत्स्यमागधपाल कुलसम्भवाश्च राजन्यकुमाराः स्तम्भोत्तम्भिततीर्थवारिकलशाः तथा(?) अभिषेकं धारयन्तः तिष्ठन्ति॥ **३०५**॥ . . .

चास्माकंचार्वाकनाम्ना राक्षसेन विप्रकृतं भवन्तमुपलभ्य भगवतो व्यासाद् अर्जुनेन सह त्वरितमागत इति।

६१. (५.११ भाषणम्)

**सामदानादिसम्पन्नं भाषणं ब्रुवते बुधाः ॥ ३०६॥** (नाशा. १९.९६)

यथा **रत्नावल्यां**

वसुभूतिः—देवि, स्थाने देवीशब्दमुद्वहसि।

यथा च **वेणीसंहारे**

भीमः— क्वासौ धार्तराष्ट्रसखः पुण्यजनापसदो येनार्यस्य महान् अयं चित्तविभ्रमः कृतः?

कृष्णः—निगृहीतः स दुरात्मा नकुलेन, इति।

६२. (५.१२ आक्षेपः)

**पुनर्वाक्यं तु विज्ञेयं यथोक्ताक्षेपदर्शनम् ॥ ३०७॥** (नाशा. १९.९७)

यथा **रत्नावल्यां**

बाभ्रव्यः—देवि, इदानीं सफलपरिश्रमोऽस्मि संवृत्त इति।

यथा च **वेणीसंहारे**

युधिष्ठिरः—भगवन्, किं नाम चार्वाकेण रक्षसा वयं विप्रलब्धाः?

कृष्णः—अथ किम्। इति॥ ३०८॥

६३. (५.१३ काव्यसंहारः)

**वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ॥ ३०९॥** (नाशा. १९.९७)

यथा **रत्नावल्यां**

यौगन्धरायणः—देव, तदुच्यतां किं ते भूयः प्रियमुपकरोमि?

राजा—अतःपरमपि प्रियमस्ति?

**यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले**
**सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।**
**देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः**
**किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥ ३१०॥**इति।

(रत्ना. ४.२१)

यथा च **वेणीसंहारे**

कृष्णः—तत्कथय महाराज, किमस्मत्तः प्रियमिच्छसि?

युधिष्ठिरः—किमतः परमपि प्रियमस्ति?

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षताः पाण्डवाः
पाञ्चाल्या मम दुर्नये पतितया तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे (वेसं. ६.४५)
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ ३११ ॥ इति।

६४. (५.१४ प्रशस्तिः)

नृपदेवादिशक्ति(शस्ति)श्च प्रशस्तिरभिधीयते ॥ ३१२ ॥ (नाशा. १९.९८)

यथा रत्नावल्यां

राजा—तथपीदमस्तु—(रत्ना. ४.२२)

उर्वीमुद्दामसस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टा—
मिष्टैस्त्रविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः ।
आकल्पान्तं कृषीष्ट क्रमसमुपचितं सङ्गतं सज्जनानां
निर्विश्लेषावकाशं पिशुनजनवचोवर्जनावज्रलेपाः(?) ॥ ३१३ ॥

यथा (च) वेणीसंहारे

युधिष्ठिरः—प्रीतश्चेद्भगवांस्तदिदमस्तु—(वेसं. ६.४६)

अकृपणमरुक् कान्तं जीव्याज्जनः पुरुषायुषं
भवतु भगवन् भक्तिर्द्वैधं विना पुरुषोत्तमे ।
कलितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥ ३१४ ॥

## (४. चतुर्थी चतुष्षष्टिः)

### (लक्षणानि)

लक्षणानि चतुष्षष्टिरिति यत् प्रागुदीरितम् ।
नाटकादेस्स्फुटं लक्ष्म तदिदानीं विविच्यते ॥ ३१५ ॥
भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्तिराशय एव च ॥ ३१६ ॥
निदर्शनं निरुक्तं च सिद्धिश्चापि विशेषणम् ।
गुणातिपातोऽतिशयस्तुल्यतर्कः पदोच्चयः ॥ ३१७ ॥

दिष्टं चैवोपदिष्टं च विचारोऽथ विपर्ययः ।
भ्रंशश्चैवानुनीतिश्च माला दाक्षिण्यगर्हणे ॥ ३१८॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च संक्षोभो गुणकीर्तनम् ॥
आख्यानमभिमानश्च याच्ञा प्रोत्साहनं स्पृहा ॥ ३१९॥
पश्चात्तापोऽनुवृत्तिश्च युक्तिर्निर्भासनं क्षमा ।
गुणानुवाद आक्रन्दः कपटं परिवादनम् ॥ ३२०॥
उपपत्तिश्च कार्यं च प्रतिषेधो मृषोद्यमः ।
छलोक्तिः काकुरुन्मादः/थः परिहासो विकत्थनम् ॥ ३२१॥
यदृच्छायोगवैषम्यप्रतिज्ञानप्रवृत्तयः ।
आशीरनुक्तसिद्धिश्च प्रियं वचनमेव च ॥[1]
लक्षणानि चतुष्षष्टिं काव्येष्वेतानि निर्दिशेत् ॥ ३२२॥

तत्र च—

(१. भूषणम्)

अलङ्कारैर्गुणैश्चैव बहुभिर्यदलङ्कृतम् ।
भूषणैरिव विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥ ३२३॥ (नाशा. १६.५)

यथा **रत्नावल्यां** प्रथमेऽङ्के यौगन्धरायणः—

विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन् प्रियवसन्तक एष साक्षात् ।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥ ३२४॥ (रत्ना. १.८)

अत्र श्लेषोपमाप्रत्यक्षादिभिरलङ्कारैः श्लेषप्रसादसौकुमार्यादिभिश्च गुणैरुपेतता द्रष्टव्या। एवं वक्ष्यमाणेष्वपि गुणालङ्कारा यथासम्भवमूहनीयाः, कारैश्च नियमेनारभ्यन्ते; सन्ध्यङ्गेषु तु गुणालङ्कारयोगो नापेक्ष्यत इति।

---

१. 'आशीरुक्तिश्च सिद्धिश्च' इति राघवः। सिद्धिरिति पुनरुक्तम् १२.३१७कारिकायां पठितचरत्वात्, अनुक्तसिद्धेः त्यागाच्च रा.पाठोऽमान्यः । १२.४५७

(२. अक्षरसङ्घातः)

**यत्रार्थैरक्षरैः श्लिष्टैर्विचित्रार्थोपवर्णनम् ।**
**तमत्राक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥ ३२५॥** (नाशा. ६.६)

यथा **अभिज्ञानशाकुन्तले** सप्तमेऽङ्के,

(प्रविश्य मृन्मयूरहस्ता तापसी)– सव्वदमण! सउंदलावण्णं पेक्ख। (सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व।)

बालः–(सदृष्टिक्षेपम्), कहिं सा अज्जू। (कुत्र सा अम्बा?)

(उभे प्रहसिते) (उभे) णामसारिच्छेण छळिदो माउवच्छलो।

(नामसादृश्येन छलितो मातृवत्सलः।)

(द्वितीया) वच्छ इमस्स मित्तिआमोरअस्स रम्मत्तणं पेक्ख त्ति भणिसो। (वत्स! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि।)

राजा–(आत्मगतम्), किं शकुन्तलेति तस्य मातुराख्या?॥ ३२६॥

(३. शोभा)

**सिद्धैरर्थैस्समं कृत्वा यत्रासिद्धं प्रसाध्यते ।**
**श्लिष्टा श्लक्ष्णा विचित्रार्था सा शोभेत्यभिधीयते ॥ ३२७॥** (नाशा. १.६)

यथा **रत्नावल्यां** प्रथमेऽङ्के,

यौगन्धरायणः–एवमेतत्, कः सन्देहः?

**द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।**
**आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ३२८॥**(रत्ना. १६.७)

अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनं, क्व च कौशाम्बेनैव वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः सम्भावनं सरत्नमालाचिह्नायाश्च परिज्ञायेहानयनम्? सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः, इति।

(४. उदाहरणम्)

**यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।**
**साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥ ३२९॥** (नाशा. १६.११)

यथा **रत्नावल्यां,** द्वितीयेऽङ्के, राजा विदूषकश्च शारिकावचनं निशमयतः। ततो

विदूषकः— (आकाशे) किं . . . . . अयं कामदेवो आलिहिदो मह वि तादिसी रइ त्ति। भो वअस्स, किं णेदं। {किम् (अकारणे कुप्यसि। यादृशस्त्वया) अयं कामदेव आलिखितो तादृशी मयाऽपि रतिरिति। भो वयस्य, किं न्विदम्?}

राजा—वयस्य, एवं तर्कयामि। कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामव्यपदेशेन निह्नुतस्तत्सख्यापि प्रत्यभिज्ञाय वैदग्ध्यादप्रतिभिन्दानया सापि तत्रैव लिखिता, इति॥ **३३०**॥

(५. हेतुः)

**यत्प्रयोजनसामर्थ्याद् वाक्यमिष्टार्थसाधकम् ।**
**समासोक्तमनोग्राहि स हेतुरिति संज्ञितः ॥ ३३१ ॥** (नाशा.१६.१४अ)

यथा **रत्नावल्यां**, द्वितीयेऽङ्के

विदूषकः—सच्चं सबामि बम्हसुत्तेण, जइ अम्हेहिं ईदिसी कदा वि पुरा (दिठ्ठपुव्वा)। (सत्यं शपे ब्रह्मसूत्रेण, यदि अस्माभिरीदृशी कदापि दृष्टपूर्वा।)

काञ्चनमाला—भट्टिणि, घुणक्खदं वि संवददि एव्व। (भट्टिनि, घुणाक्षरमपि संवदत्येव)

वासवदत्ता—अयि उज्जिए, अय्यवसन्तओ एसो। ण आणासि एदस्स वक्कभणिदीओ। (अयि ऋजुके, आर्य वसन्तक एषः। न जानासि एतस्य वक्रभणितीः।)॥ **३३२**॥

(६. संशयः)

**अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते ।**
**सोऽनेकत्वाद् विचाराणां संशयः परिकीर्तितः ॥ ३३३ ॥** (नाशा.१६.२७)

यथा **रत्नावल्यां** चतुर्थेऽङ्के

वसुभूतिः—(सागरिकां निर्वर्ण्य) बाभ्रव्य! सुसदृशीयं राजपुत्र्याः।

बाभ्रव्यः—ममाप्येतदेव मनसि वर्तते।

(७. दृष्टान्तः)

**सर्वलोकमनोग्राही यस्तु पक्षार्थसाधकः ।**
**हेतोर्निदर्शनकृतस्स दृष्टान्त इति स्मृतः ।। ३३४।।** (नाशा.१६.१२अ)

यथा(च) **वेणीसंहारे** प्रथमेऽङ्के,

चेटी—अइ जण्णसेणि! उ (?) पंच गामा पत्थीअन्ति त्ति अज्ज वि एदे केसा ण संजमीअंति, इति। (अयि याज्ञसेनि! पञ्च ग्रामाः प्रार्थ्यन्त इति अद्यापि एते केशा न संयम्यन्ते।) (इति भानुमतीवचसि बुद्धिमतिकयाऽऽख्याते)

भीमसेनः—सहदेव, श्रुतम्?

सहदेवः—आर्य, दुर्योधनकलत्रं सा।

**स्त्रीणां हि साहचर्याद् भवन्ति चेतांसि भर्तृसदृशानि ।**
**मधुराऽपि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ।।** (वेसं. १.२०) इति।

(८. प्राप्तिः)

**दृष्ट्वैवावयवान् कांश्चिद् भावो यत्रानुमीयते ।**
**प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम् ।। ३३६।।** (नाशा. १६.३२)

यथा **रत्नावल्यां** द्वितीयेऽङ्के, कदलीगृहे चित्रगतां सागरिकां निर्वर्णयति राजनि—

विदूषकः—भो वअस्स, कीस उण एसा ओरुण्णमुही आलिहिदा। (भो वयस्य, कस्मात् पुनरेषा रुदितमुख्यालिखिता?)

(एतच्छ्रुत्वाऽऽह सुसङ्गता) सहि, जह अय्यवसंतिओ मंतेदि तह तक्केमि भट्टिणा वि इह एव्व होदव्वं ति। (सखि, यथा आर्यवसन्तको मन्त्रयते तथा तर्कयामि भर्त्रापीहैव भवितव्यम्, इति)

(९. अभिप्रायः)

**अभूतपूर्वोऽप्यर्थो यस्सादृश्यात् परिकल्पितः ।**
**लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः ।। ३३७।।** (नाशा.१६.१४अ)

यथा मुद्रावेदे(**विद्धसालभञ्जिकायां** द्वितीयेऽङ्के)—

**विलीयेन्दु: साक्षादमृतरसवापी यदि भवेत्**
**कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।**
**ततस्स्नानक्रीडाजनितजडभावैरवयवै:**
**कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥ ३३८॥** (विसा. २.२)

**(१०. निदर्शनम्)**

**यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।**
**परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥ ३३९॥** (नाशा.१६.१५अ)

यथा **मालतीमाधवे**

कामन्दकी—अयि सरले, किमत्र शक्यं भगवत्या? प्रभवति हि प्राय: कुमारिकाणां जनयिता दैवं च। यच्च किल कौशिकी शकुन्तला दुष्यन्तम्, उर्वशी चाप्सरा: पुरूरवसमैलकं चकम इत्याख्यानविद आचक्षते, तदपि साहसकल्पमित्यनुपदेष्टव्यम्, इति॥ **३४०॥**

**(११. निरुक्तम्)**

**निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये ।**
**यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥ ३४१॥** (नाशा.१६.१६अ)

यथा **अभिज्ञानशकुन्तलायाम्**

प्रियंवदा—हला सउंदले, इध एव्व दाव मुहुत्तअं चिट्ठ। तुए समीपट्ठिदाए ळदासणाहो विअ अअं केसररुक्खओ पडिभाइ। (सखि शकुन्तले, अत्रैव तावन्मुहूर्तकं तिष्ठ। त्वया समीपस्थितया लतासनाथ इव अयं केसरवृक्ष: प्रतिभाति।)

शकुन्तला—अदा खु सि पिअंवदा। (अत: खल्वसि प्रियंवदा।)

राजा—प्रियमपि तथ्यमाह सा॥ **३४२॥**

**अधर: किसलयराग: कोमलविटपानुकारिणौ बाहू ।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ ३४३॥**(शाकु. १.२१)

**(१२. सिद्धि:)**

**बहूनां तु प्रधानानां नाम यत्राभिकीर्त्यते ।**
**अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरिति कीर्तिता ॥ ३४४॥** (नाशा. १६.१७अ)

यथा **रत्नावल्यां** चतुर्थेऽङ्के,

राजा—

**क्वासौ जलं हुतवहः + + किं न्विदमिन्द्रजालम् ॥ ३४५॥**

**(१३. विशेषणम्)**

**सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते ।**
**विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ ३४६॥**(नाशा.१६.१८अ)

यथा **अभिज्ञानशाकुन्तले—**

**प्राणानामनिलेन वृत्तिरुचिता सङ्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।**
**ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो**
**यद् वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ ३४७॥**(शाकु.७.१२)

**(१४. गुणातिपातः)**

**गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।**
**गुणातिपातो मधुरैर्निष्ठुरार्थैर्भवेदथ ॥ ३४८॥** (नाशा. १६.१९अ)

यथा **उत्तरचरिते**

लवः राममुद्दिश्य (उराच. ५.३४)

**वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते**
**सुन्दस्त्रीदमनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।**
**यानि त्रीण्यकुतोमुखान्यपि पदान्यासन् खरायोधने**
**यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४९॥**

**(१५. अतिशयः)**

**बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् ।**
**विशेषः कीर्त्यते यस्तु ज्ञेयस्सोऽतिशयो बुधैः ॥ ३५०॥**(नाशा. १६.२०अ)

यथा **रत्नावल्यां** द्वितीयेऽङ्के

राजा चित्रलिखितां सागरिकां दृष्ट्वाऽऽह—

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुस्स्थितः ॥ ३५१॥ (रत्ना. २.८)

(१६. तुल्यतर्कः)

रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितः ।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥ ३५२॥ (नाशा. १६.२१अ)

यथा **उत्तरचरिते** रामः—

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिव शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो—
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥३५३॥(उराच. ६.२६)

(१७. पदोच्चयः)

बहूनां तु प्रयुक्तानां पदानां बहुभिः पदैः ।
उच्चयस्सदृशार्थो यस्स विज्ञेयः पदोच्चयः ॥ ३५४॥ (नाशा. १६.२२अ)

यथा **रत्नावल्यां** प्रथमेऽङ्के
राजा वासवदत्तां प्रत्याह—(रत्ना. १.१९)

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ ३५५॥

(१८. दिष्टं वर्णकः) (नाशा. १६.२३अ)

यथादेशं यथाकालं यथापात्रं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दिष्टं तद्वर्णकोऽपि वा ॥ ३५६॥

यथा **राघवानन्दे**—

अङ्के न्यस्योत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वयि/चि कनकमृगस्याङ्गशेषं निधाय ।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात् तीक्ष्णमक्ष्णः
कोणेनावेक्षमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥ ३५७॥

(१९. **उपदिष्टम्**) (नाशा. १६.२४अ)

**परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते ।**
**विद्वन्मनोहरं स्वन्तमुपदिष्टं प्रकीर्त्यते ॥ ३५८॥**

यथा **अभिज्ञानशाकुन्तले**—(शाकु. ४.१८)

**शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।**
**भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ३५९॥**

(२०. **विचारः**) (नाशा. १६.२५अ)

**पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः ।**
**अनेकोपायसंयुक्तो विचारः परिकीर्तितः ॥ ३६०॥**

यथा **उत्तरचरिते** लवचन्द्रकेतू परस्परं सस्नेहानुरागं निर्वर्ण्य,

**यदृच्छासंवादः किमु गुणगणानामतिशयः**
**पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।**
**निजो वा सम्बन्धः किमु विधिवशात् कोप्यविदितो**
**ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥ ३६१॥**

(उराच. ५.१६)

(२१. **विपर्ययः**) (नाशा. १६.२६ अ)

**विचारस्यान्यथाभावस्तथा दिष्टोपदिष्टयोः ।**
**सन्देहाज्जायते यत्र स विज्ञेयो विपर्ययः ॥ ३६२॥**

यथा **रत्नावल्यां** तृतीयेऽङ्के,

वासवदत्ता—हळा कंचणमाले, सच्चं एव्व मम वेसं करिअ साअरिआ अय्यउत्तं अहिसारइस्सिदि। (हला काञ्चनमाले! सत्यमेव मम वेषं कृत्वा सागरिका आर्यपुत्रं अभिसरिष्यति।)

काञ्चनमाला—कधं अण्णथा भट्टिणीए णिवेदिआणि। अहवा चित्तसालादुवारम्मि उवविट्ठो वसंतओ एव्व दे पच्चअं उप्पादइस्सदि। कथमन्यथा

भट्टिन्यै निवेदयानि? अथवा चित्रशालाद्वारे उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति।

(तत: प्रविशति कृतावकुण्ठनो वसन्तक:।)

वसन्तक:—(कर्णं दत्त्वा) जहा चित्तसालाआ दुवारे पअसद्दो विअ सुणीअदि तहा तक्केमि आअदा साअरिआ त्ति। (यथा चित्रशालाया द्वारे पदशब्द इव श्रूयते तथा तर्कयाम्यागता सागरिकेति।)

काञ्चनमाला—भट्टिणी, एअं चित्तशालिआदुवारं। ता जाव वसंतअस्स सण्णं करेमि। (भट्टिनि एतत् चित्रशालिकाद्वारम्। तद्यावद्वसन्तकस्य संज्ञां करोमि।) (इति छोटिकां ददाति।)

विदूषक:—(उपसृत्य, अपवार्य), सुसङ्गदे! सुसरिसो खु दे किदो कंचणमालाए वेसो साअरिआ एव्व वासवदत्ते त्ति। (सुसदृश: खलु त्वया कृत: काञ्चनमालाया वेष: सागरिका एव वासवदत्तेति।)

यथा चात्रैवाग्रत:—

विदूषक:—(ससम्भ्रमं, दृष्ट्वा) भो वअस्स, परित्ताअहि। एसा खु देवी वासवदत्ता। अत्ताणं उब्बद्धीअ विवज्जइ। (भो वयस्य, परित्रायस्व। एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति।)

राजा—(ससम्भ्रममुपसृत्य) वयस्य, क्वासौ?

विदूषक:—भो एसा। (भो एषा।)

राजा—(उपसृत्य, कण्ठात् पाशमपनयन्) अयि, किमिदमकार्यं क्रियते?॥३६३॥

**मम कण्ठगता: प्राणा: पाशे कण्ठगते तव ।**
**अनर्थार्थप्रयासोऽयं त्यज्यतां साहसं प्रिये ॥ ३६४॥** (रत्ना. ३.१६)

**(२२. भ्रंश)** (नाशा. १६.२७ अ)

**वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा ।**
**अन्यस्मिन्नेव पतनादाशु भ्रंशस्स उच्यते ॥ ३६५॥**

यथा— **वेणीसंहारे** द्वितीयेऽङ्के, दुर्योधन:—(वेसं. २.५)

**सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।**
**सबलेन निहन्ति संयुगे नचिरात् पाण्डुसुतस्सुयोधनम् ॥ ३६६॥**

कञ्चुकी—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम्!

राजा—कञ्चुकिन्! किं वा मयोक्तम्?

कञ्चुकी—(दुर्योधनोक्तं पठित्वा) तदेतद्विपरीतमभिहितं देवेन।

राजा—कञ्चुकिन्, प्रातर्मामनाभाष्यैव भानुमती व्याक्षिप्तं मे चेत इति।

(२३. अनुनयः) (नाशा. १६.२८अ)

**उभयोः प्रीतिजननो विरुद्धाभिनिवेशयोः।**
**अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥ ३६७॥**

यथा **रत्नावल्यां** तृतीयेऽङ्के

राजा सागरिकावृत्तान्तापराधे वासवदत्तायाः पुरो बद्धाञ्जलिस्तामनुनयन्नाह—

प्रिये वासवदत्ते देवि, एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि?

**आताम्रतामपनयामि विलक्ष एष**
**लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना।**
**कोपोपरागजनितां तु मुखेन्दुबिम्बे**
**हर्तुं क्षमो यदिपरं करुणा मयि स्यात् ॥ ३६८॥** (रत्ना. ३.१४)

(२४. माला)

**अभिप्रेतार्थसिद्ध्यर्थं कीर्त्यते यत्र सूरिभिः।**
**प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥ ३६९॥** (नाशा. १६.२९अ)

यथा **मालतीमाधवे**—

मकरन्दो मालतीमुद्दिश्य कामन्दकीं प्रति—भगवती,

**श्लाघ्यान्वयेति नयनोत्सवकारिणीति**
**निर्व्यूढसौहृदगुणेति गुणोज्ज्वलेति।**
**एकैकमेव हि वशीकरणं गरीयो**
**युष्माकमेवमियमित्यथ किं ब्रवीमि ॥ ३७०॥** (मामा. ६.२७)

(२५. दाक्षिण्यम्)

**हृष्टैः प्रसन्नवदनैर्यत्परस्यानुनुवर्तनम्।**
**क्रियते वाक्यचेष्टाभिस्तद् दाक्षिण्यमुदाहृतम् ॥ ३७१॥** (नाशा. १६.३०अ)

यथा **रत्नावल्यां** द्वितीयेऽङ्के,

वासवदत्ता—अय्यउत्त, मम पि किं एदं चित्तकम्म पेक्खन्तीए सीसवेअणा समुप्पण्णा। ता गमिस्सं अहं। {आर्य(पुत्र), ममापि किं एतत् चित्रकर्म प्रेक्षमाणायाः शीर्षवेदना समुत्पन्ना। तद्गमिष्याम्यहम्।}

राजा—(वासवदत्तां पटान्ते गृहीत्वा) प्रिये!

**प्रसीदेति ब्रूयामिदमसति कोपे न घटते**
**करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।**
**न मे दोषोऽस्तीति त्वमिदमपि विज्ञास्यसि मृषा**
**किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ।। ३७२ ।।** (रत्ना. २.१८)

विदूषकः— भोदि पसीएउ। (भवति, प्रसीद।)

वासवदत्ता— सहापेहि सच्चं एव्व मे सीसवेअणा समुप्पण्णा। ता गमिस्सं। {सम्भावय सत्यमेव मे शीर्षवेदना समुत्पन्ना। तद्गमिष्ये।} (इति निष्क्रान्ता सपरिवारा वासवदत्ता।)

विदूषकः—भो दिट्ठिआ वड्ढसि, (भोः, दिष्ट्या वर्धसे।)

राजा— मूर्ख, अलं परिहासेन। आभिजात्याद् विनिगूढो न लक्षितस्त्वया कोपो देव्याः।। ३७३ ।।

**भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता—**
**मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।**
**अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं**
**कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ।।** (रत्ना २.१९)

**(२६. गर्हणम्)**

**यत्र सङ्कीर्तयेद् दोषं गुणमर्थेन दर्शयेत् ।**
**गुणातिपाताद् दोषाद्न वा गर्हणं नाम तद्भवेत् ।। ३७५ ।।** (नाशा. १६.३१अ)

यथा **उत्तरचरिते**

चन्द्रकेतुः सैनिकैरभियुज्यमानं लवमुद्दिश्य,

भो भो राजानः!

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता–
वत्रैकस्मिन् कवचनिबिडैर्नद्धचर्मोत्तरीये ।
कालज्येष्ठैरपरवयसि कीर्त्तिकामैर्भवद्भि–
र्योऽयं बद्धो युधि समभरस्तेन धिग् वो धिगस्मान् ॥३७६॥ (उराच. ५.१२)

(२७. अर्थापत्तिः)

अर्थान्तररस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसम्पन्ना साऽर्थापत्तिरुदाहृता ॥ ३७७॥(नाशा.१६.३२अ)

यथा **राघवानन्दे**–

कुम्भकर्णो रावणमुद्दिश्य–

रामोऽसौ जगतीह विक्रमगुणैर्यातः प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्ययाद् यदिपरं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति–
श्रेणीभूतविशालसालविवरोद्गीर्णैस्स्वरैस्सप्तभिः ॥ ३७८॥

(२८. प्रसिद्धिः) (नाशा. १६.३३)

वाक्यैस्सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकैः ।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥ ३७९॥

यथा **महावीरचरिते** रामः परशुराममुद्दिश्याह–(मवीच. २.३६)

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः ।
त्यागस्सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधि–
र्ब्रह्मक्षत्रतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥ ३८०॥

(२९. पृच्छा)

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिधीयते ॥ ३८१॥ (नाशा. १६.३४अ)

यथा **रामचरिते** हनुमान् सीतां दृष्ट्वा–(राच. १९.५१)

**स्थानेऽवसीदसि रघूद्वह! किं विधातर्**
**अस्यास्त्वयेक्षितमलक्षणमङ्गकेषु ।**
**अद्यापि जीवसि दशानन! हे हनूमन्!**
**केयं तवाभिमुखवर्तिरिपोः प्रतीक्षा ॥ ३८२ ॥**

(३०. सारूप्यम्)

**दृष्टश्रुतादिभूतार्थकथनादिसमुद्भवम् ।**
**सादृश्यं क्षोभजननं सारूप्यमिति संज्ञितम् ॥ ३८३॥** (नाशा. १६.३५अ)

यथा **छलितरामे** षष्ठेऽङ्के–हिरण्मयीं सीताप्रतिकृतिमवलोक्य

लवः–(सक्षोभसम्भ्रमं) कथमम्बा इहानीता! जानीम ० ० ० ०।

यथा (**वेणीसंहारे**) दुर्योधनेन (भीमार्जुनौ) हताविति चार्वाकादाकर्ण्य शोकाच्चिताप्रवेशं अभिलषति सद्रौपदीके युधिष्ठरे, (नेपथ्ये कलकलानन्तरं) भो भोः स्यमन्तपञ्चकसञ्चारिणः प्रवीरपुरुषाः कृतं कृतं वो मद्दर्शनत्रासेन। कथयन्तु भवन्तः,

**ऊरू करेण परिघट्टयतस्सलीलं**
**दुर्योधनस्य पुरतोऽपहताम्बरा या ।**
**दुःशासनाग्रकरकर्षणभिन्नमौलिः**
**सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ ३८४॥** (वेसं. ६.३५)

कञ्चुकी–हा देवि यज्ञवेदिसंभवे, परिभूयसे संप्रत्यनेन दुरात्मना कुरुकुलकलङ्केन।

युधिष्ठिरः–(ससंभ्रममुत्थाय) देवि याज्ञसेनि, न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः! सनिषङ्गं मे धनुरुपानयत। दुरात्मन् दुर्योधनहतक! आगच्छागच्छ। अयमपनयामि ते गदाकौशलसंभूतं भुजदर्पं शिलीमुखासारेण। पश्य रे मूढ!॥ ३८५॥

**प्रियमनुजमपश्यंस्तं जरासन्धमल्लं**
**कुपितहरकिरातद्वेषिणं तं च वत्सम् ।**
**भवतु कठिनचेताः प्राणितुं नास्मि शक्तो**
**न नु पुनरपहर्तुं बाणवर्षैस्तवासून् ॥ ३८६॥** (वेसं. ६.३६)

(ततः प्रविशति यथानिर्दिष्टो भीमः।)

भीमः—(वेसं. ६.३७)

**भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः कृतं व–**
**स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्।**
**नाहं रक्षो न भूतो रिपुरुधिरजलह्लादिताङ्गः प्रकामं**
**निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ॥ ३८७॥**

देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ।

द्रौपदी—कहं पि अज्ज वि ण संभावेमि चिदासमीवं।

(कथमपि अद्यापि न संभावयामि चितासमीपम्।)

युधिष्ठिरः—कः कोऽत्र भोः! सनिषङ्गं धनुरुपनयत। कथं न कश्चित् परिजनः। भवतु। बाहुयुद्धसम्भावनया विहस्तमेनं गाढमालिङ्ग्य ज्वलनमभिपतामि। (इति परिकरं बध्नाति।)

कञ्चुकी—देवि पाण्डुस्नुषे! संयम्यन्तामिदानीं नयनपथरोधिनो दुःशासनाकृष्टा मूर्धजाः। अस्तमिता संप्रति प्रतीकाराशा।

युधिष्ठिरः—न खल्वनिहते अस्मिन् दुरात्मनि दुर्योधनहतके संहर्तव्यः केशहस्तः।

भीमः—पाञ्चालि, न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना। तिष्ठ तिष्ठ। स्वयमेवाहं संहरामि। (केशेषु ग्रहीतुमिच्छति।)

युधिष्ठिरः—(भीममालिङ्ग्य) दुरात्मन् भीमार्जुनशत्रो, दुर्योधनहतक!॥ ३८८॥

**आशैशवादनुदिनं जनितापराधो क्षीबो मदेन भुजयोर्हतराजपुत्रः।**
**आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य जीवन् प्रयासि न पदात् पदमद्य मूढ! ॥**

(वेसं. ६.३८)

भीमः—कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति?

कञ्चुकी—(उपगम्य सहर्षं) महाराज, दिष्ट्या वर्धसे। अयं खल्वायुष्मान् कुमारभीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरतया दुर्लक्षव्यक्तिः। तदलमधुना संरम्भेण, इति॥ ३९०॥

(३१. मनोरथ:)

**हृदयस्थस्य भावस्य सुश्लिष्टार्थप्रकाशकम् ।**
**अन्यापदेशकथनं मनोरथ इति स्मृत: ।। ३९१ ।।** (नाशा. १६.३६अ)

यथा **रत्नावल्यां** द्वितीयेऽङ्के

सुसङ्गता—सहि जस्स किदे तुमं आअदा अअं सो जिट्ठदि। (सखि, यस्य कृते त्वमागता, अयं स तिष्ठति।)

सागरिका—(सासूयं) सहि कस्स किदे अहं आअदा? (सखि, कस्य कृतेऽहमागता?)

सुसङ्गता—अइ अण्णसंकिदे, णं चित्तफलअस्स। (अयि अन्यशङ्किते, ननु चित्रफलकस्य।)।। ३९२।।

(३२. लेश:)

**यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते ।**
**सादृश्यार्थाभिनिष्पत्त्या स लेश इति कीर्तित: ।। ३९३।।** (नाशा. १६.३७अ)

यथा **अभिज्ञानशाकुन्तले**

सख्यौ—(शकुन्तलादुष्यन्तयोराकारं विदित्वा जनान्तिकं) हळा सउंदळे, जइ अज्ज तादो सण्णिहिदो भवे। (सखि शकुन्तले, यद्यद्य तातस्सन्निहितो भवेत्—)

शकुन्तला—(सरोषं) तदो किं भवे। (तत: किं भवेत्?)

सख्यौ—तदा इमं जीवितसव्वस्सेण वि अदिहिं किदत्थं करेइ। (तदा इमं जीवितसर्वस्वेनाप्यतिथिं कृतार्थं करिष्यति।)

शकुन्तला—अपेथ। किं वि हिअए करिअ मंतेथ। ण वो वअणं सुणिस्सं। (अपेत। किमपि हृदये कृत्वा मन्त्रयेथे। न वां वचनं श्रोष्यामि।)।। ३९४।।

**(३३. क्षोभ:)** (नाशा. १६.३८ अ)

**परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते ।**
**अदुष्टोऽन्योऽपि वा कश्चित् स तु क्षोभ इति स्मृत: ।। ३९५।।**

यथा **रत्नावल्यां** तृतीयेऽङ्के,

राजा— (अञ्जलिं बद्ध्वा) प्रिये वासवदत्ते, प्रसीद।

वासवदत्ता— अज्जउत्त, मा एव्वं भण। संकंता खु एदे अण्णहि अक्खरा(इ)। {आर्यपुत्र, (मा) एवं भण। संक्रान्तानि खलु एतानि अन्यत्र अक्षराणि}

विदूषकः—भोदि, महाणुभावा खु तुमं। ता खमीअदु एक्को अवराहो। (भवति, महानुभावा खलु त्वम्। तत् क्षम्यतां एकोऽपराधः।)

वासवदत्ता— पढमसंकेअस्स विग्घं करंतीए मए एव्व एअस्स अवरद्धं। {प्रथमसङ्केतस्य विघ्नं कुर्वन्त्या मयैवैतस्यापराद्धम्।}॥ ३९६॥

## (३४. गुणकीर्त्तनम्)

**कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः ।**
**दोषा न परिकल्प्यन्ते तज्ज्ञेयं गुणकीर्तनम् ॥ ३९७॥** (नाशा.१६.९३)

यथा **रत्नावल्यां** द्वितीयेऽङ्के, राजा—(रत्ना. २.१५)

**दृष्टिं रुषा क्षिपसि यद्यपि भामिनीमां**
**स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।**
**त्यक्त्वा त्वरां व्रज तव स्खलितैरयं तु**
**खेदं करिष्यति गुरुर्नियतं नितम्बः ॥ ३९८॥**

## (३५. आख्यानम्)

**पृष्टैरपृष्टैरथवा निर्णयः (क्रियते तु यः) ।**
**तदाख्यानमिति ज्ञेयं लक्षणं नाटकाश्रयम् ॥ ३९९॥** (नाशा. १६.२१३)

यथा **उत्तरचरिते,** चतुर्थेऽङ्के,

कौसल्या—अम्महे एदाणं मज्झे को एस रामभद्दकोमारलिहि (लच्छी)सावट्ठंभेहिं मुद्धळळिदेहिं अङ्गकेहिं दारओ अम्हाण (ख) लोअणाइं सीलळावेइ।

(अहो एतेषां मध्ये क एषः रामभद्रकौमारलक्ष्मीसावष्टम्भै– र्मुग्धललितैरङ्गकैर्दारकोऽस्माकं लोचने शीतलयति?)

अरुन्धती—(अपवार्य, सहर्षोत्कण्ठम् इदं नाम तद्भागीरथीनिवेदितं रहस्यकर्णामृतम्। न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति।)॥ ४००॥

**(३६. अभिमानः)** (नाशा. १६.८३)

**वा/धार्यमाणाः सुबहुभिर्वचनैः कार्ययुक्तिभिः ।**
**नार्यो यन्नानुतिष्ठन्ति/नयः पर्यवतिष्ठेत सोऽभिमानः प्रकीर्तितः ॥ ४०१॥**

यथा **रत्नावल्यां,** तृतीयेऽङ्के,

काञ्चनमाला—भट्टिणी करेहि से पसादं। एअं चरणपडिअं उज्झिअ गदाए वअस्सं अवस्सं पच्चादावेन होदव्वं। (भट्टिनी! कुरुष्व अस्मै प्रसादम् एवं चरणपतितमुज्झित्वा गताया अवश्यं पश्चात्तापेन भवितव्यम्।)

वासवदत्ता—अइ अपेहि। को पच्चादावसरो इति। (अयि, अपेहि। कः पश्चात्तापावसर इति।)॥ ४०२॥

**(३७. याच्ञा)**

**लाभोपपत्तिमाख्याय स्वयं दूतमुखेन वा ।**
**प्रार्थ्यते यत्र कन्यादिस्सा याच्ञेत्यभिधीयते ॥ ४०३॥**(नाशा. १६.२२टि.)

यथा **महा वीरचरिते**—(मवीच. १.३०)

**कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो**
**रत्नं यत् क्वचिदस्ति तत् परिणमत्यस्मासु शक्रादपि ।**
**कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं**
**बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः ॥ ४०४॥**

**(३८. प्रोत्साहनम्)**

**उत्साहजननैस्स्पष्टैर्गुणैरौपम्यसंश्रयैः ।**
**प्रसिद्धैरुपगूढं च ज्ञेयं प्रोत्साहनं बुधैः ॥ ४०५॥** (नाशा. १६.१०३)

यथा **रत्नावल्यां** चतुर्थेऽङ्के विजयवर्मा प्राग्वृत्तयुद्धवर्णनायां प्राह—

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागान्
विन्ध्येनेवापरेण द्विपपतिपृतनापीठबन्धेन रुन्धन् ।
वेगाद् बाणान् विमुञ्चन् समदकरिघटोत्पिष्टपत्तिर्निपत्य
प्रत्यैच्छद् वाञ्छिताप्तिद्विगुणितरभसस्तं रुमण्वान् क्षणेन ॥ (रत्ना. ४.५)

(३९. स्पृहा) (समा नाशा. १६.८ टि.)

दृष्टे श्रुतेऽनुभूते वा वस्तुनो रामणीयके ।
अभिलाषो भवेद् यस्तु सा स्पृहेति प्रकीर्तिता ॥४०७॥

यथोत्तरचरिते जनकः—(उ.रा.च. ४.१९)

कुवलयदलस्निग्धश्यामश्शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरिव शिशुर्भूत्वा वत्सस्स मे रघुनन्दनो
झटिति कुरुते दृष्टः सोऽयं दृशोरमृताञ्जनम् ॥४०८॥

(४०. पश्चात्तापः)

अकार्यं सहसा कृत्वा(ऽ)कृत्वा कार्यमथापि वा ।
सन्तापो मनसो यस्तु पश्चात्तापस्स उच्यते ॥४०९॥ (नाशा. १६.३३)

यथा रत्नावल्यां तृतीयेऽङ्के,

वासवदत्ता— कंचणमाळे, तं तहा चळणपडि(दमय्य)उत्तमवधीरअंतीए अदिणिठ्ठुरं एव्व मए किदं, इति। (काञ्चनमाले, तं तथा चरणपतितमार्यपुत्रं अवधीरयन्त्या अतिनिष्ठुरमेव मया कृतम्। इति।) (रत्ना. ३.१७—१८)

(४१. अनुवृत्तिः) (नाशा. १६.३४)

प्रश्रयेणार्थसंयुक्तं यत् परस्यानुवर्तनम् ।
स्नेहाद् दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥४१०॥

यथा रत्नावल्यां तृतीयेऽङ्के

राजा—कथं दर्शनमपि भविष्यति?

विदूषकः—भो कहं ण भविस्सिदि जस्स रा(दे)ओहसितच्चुहत्थदि(विहप्पदि)

बुद्धिविहवो अमच्चो। (भोः कथं न भविष्यति यस्य त
उपहसितबृहस्पतिबुद्धिविभवोऽमात्यः।)

राजा—न खलु किञ्चिन्न संभाव्यत इति॥४११॥

(४२. **युक्तिः**) (नाशा. १६.३६)

**साध्यते योऽर्थसम्बन्धो महद्भिस्समवायतः।**
**परस्परानुकूल्येन सा युक्तिः परिकीर्तिता॥४१२॥**

यथा **मालतीमाधवे,**

कामन्दकी—तदिदानीं विदर्भराजमन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षकीश्रवणाय कुण्डिनपुराद् इमां पद्मावतीं प्रति प्रेषयता सुविहितम्।

**अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च।**
**अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च॥** (मामा. १.१३)

अन्यच्च, मकरन्दोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि। वकुलावलीचित्रफलकसंविधानव्यतिकरश्च कमप्यद्भुतं प्रमोदमुल्लासयति, इति।

(४३. **निर्भासनम्**) (नाशा. १६.२६)

**अनेकयुक्तिमद् वाक्यमनेकार्थप्रसाधकम्।**
**अनेकवाच्यसंयुक्तं ज्ञेयं निर्भासनं तु तत्॥४१४॥**

यथा **मालतीमाधवे**

मकरन्दः—वयस्य माधव,

**अन्योन्यसम्भिन्नदृशां सखीनां तस्या अपि प्रागनुरागचिह्नम्।**
**कस्यापि कोऽपीति निवेदितं च धात्रेयिकायाश्चतुरं वचश्च॥** (मामा. १.३६)

कलहंसकः—(उपसृत्य) एदं च। (एतच्च) (चित्रफलकं दर्शयति।)

(४४. **क्षमा**)

**प्रतिक्रियासमर्थस्य पात्रौचित्यवशेन यः।**
**अपकारेऽप्युपशमः सा क्षमेति प्रकीर्तिता॥४१६॥**[१] (नाशा. १६.३१)

---

१.—२. भोजोपज्ञमिदं द्वयम्।

यथा **उत्तरचरिते**

लवः— (आत्मगतम्) ईदृशो मां प्रत्यमीषामकारणस्नेहः। मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन, यदायुधपरिग्रहो विहितः (प्रकाशम्) मृष्यन्तामिदानीं लवस्य बालिशतां तातपादाः।

रामः—किमपराद्धं वत्सेन?

चन्द्रकेतुः—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन।

रामः—नन्वयमलङ्कारः क्षत्रस्य। इति।। ४१७।।

**(४५. गुणानुवादः)** (नाशा. १६.१३अ)

**गुणानुवादः स ज्ञेयो यत्राऽभेदोपचारतः ।**
**गौणीं वृत्तिमुपाश्रित्य वस्तुनो रूपमुच्यते ।। ४१८।।**[१]

यथा **शाकुन्तले** राजा—(शाकु. २.१०)

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—**
**रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ।। ४१९।।**

**(४६. आक्रन्दः)**

**आत्मभावमुपन्यस्य परसादृश्ययुक्तिभिः ।**
**तीव्रार्थभाषणं यत् स्यादाक्रन्दस्स तु कीर्तितः ।। ४२०।।** (नाशा. १६.१९)

यथा **मालतीमाधवे**

(प्रविश्य) बुद्धरक्षिता—परित्ताअध परित्ताअध। एसा खु णो पिअसही अमच्चणंदणस्स भइणीआ मदअंतिआ एदिणा दुट्ठशद्दूलेण भयविद्दविअपरिअणा अब्भिद्दवीयदि। (परित्रायध्वं, परित्रायध्वम्! एषा खलु नः प्रियसख्यमात्यनन्दनस्य भगिनिका मदयन्तिका एतेन दुष्टशार्दूलेन भयविद्रावितपरिजना अभिद्रूयते।)।। ४२१ ।।

---

१. भोजोपज्ञमिदम्।

**(४७. कपटम्)** (नाशा. १६.३०)

**अदिव्यं दिव्यमपि वा कृत्वा रूपविपर्ययम् ।**
**अविद्वान् वञ्च्यते यत्र कपटं तदुदाहृतम् ॥४२२॥**[1]

यथा **मालतीमाधवे**

कामन्दकी–वत्स मकरन्द, अनेनैव मालतीनैपथ्येनापवारितः प्रवर्तस्व परिणयायात्मानं नन्दनेन। इति।

**(४८. परिवादनम्)**

**यद् दोषैरन्यनामोक्तैः प्रसिद्धार्थप्रयोजनम् ।**
**अन्यत्रार्थेन सम्बद्धं ज्ञेयं तत् परिवादनम् ॥४२३॥** (नाशा. १६.३९)

यथा **रत्नावल्यां** तृतीयेऽङ्के,

वासवदत्ता . . . . .

राजा विदूषकश्च . . . . .

भाषते– अज्ज वि दाव से णिच्चरुट्ठाए देवीए वअणेहिं कडुईकदा कण्णा तुहालापेहि सुहाविअन्तु। (अद्यापि तावद् अस्या नित्यरुष्टाया देव्या वचनैः कटुकीकृताः कर्णाः तवालापैः सुख्यन्तु।)

ततो ज्ञातायां राजा परिवदन्नाह–धिङ् मूर्ख! त्वत्कृतोऽयमनर्थोऽ–स्माकमापतितः, इति॥ **४२४॥**

**(४९. अभ्युपपत्तिः)** (नाशा. १६.३५)

**प्राप्ता(प्रोक्ता)नां यत्र दोषाणां क्रियते शमनं पुनः ।**
**ज्ञेया साऽभ्युपपत्तिस्तु लक्षणं नाटकाश्रयम् ॥४२५॥**

यथा **रत्नावल्यां** द्वितीयेऽङ्के;

वासवदत्ता– कंचणमाले! अअं अय्यउतो। इअं उण साअरिआ। ता किं एदं?। (काञ्चनमाले, अयमार्यपुत्रः। इयं सागरिका। तत् किमेतत्?)

काञ्चनमाला– अहं पि एव्वमेव्व तक्केमि। (अहमपि एवमेव तर्कयामि।)

(राजा)– (अपवार्य), वयस्य त्वमेवास्या उत्तरं प्रयच्छ।

विदूषकः – होदि, अप्प किल दुक्करं आलिहिदुं ति मम वअणं सुणिअ पिअवअस्सएण एदं विण्णाणं दंसिदम्। (भवति, आत्मा किल

दुष्करं आलिखितुमिति मम वचनं श्रुत्वा प्रियवयस्येनैतद् विज्ञानं दर्शितम्।)

राजा– देवि, यथाह वसन्तकः।

वासवदत्ता–एसा पि जा तुह समीपे आलिहिदा, एदं किं वसंदअस्स विण्णाणं। (एषापि) या तव समीपे आलिखिता, एतत् किं वसन्तकस्य विज्ञानम्?

राजा– (सविलक्षस्मितः) देवि, अलमन्यथा सम्भावितेन। इयं हि मया स्वचेतसैव विकल्प्यालिखिता। न तु दृष्टपूर्वा। इति॥ ४२६॥

**(५०. कार्यम्)**

**यत्र(१)सङ्कीर्तयन् दोषं गुणमर्थेन योजयेत् ।**
**गुणाभिवादं दोषाद् वा कार्यं तदिह कीर्तितम् ॥ ४२७॥** (नाशा. १६.३७)

यथा वा **रत्नावल्यां** प्रथमेऽङ्के यौगन्धरायणः–(१.७)

**प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ**
**दैवेनेत्थं दत्तहस्तावलम्बे ।**
**सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि**
**स्वेच्छाकारी भीत एवास्मि भर्तुः ॥ ४२८॥**

**(५१. प्रतिषेधः)**

**कार्येषु विपरीतेषु यदि कश्चित् प्रवर्तते ।**
**निवार्यते च कार्यज्ञैः प्रतिषेधः स कीर्तितः ॥ ४२९॥** (नाशा. १६.२३)

यथा **वीरचरिते** दशरथः (जनकमुद्दिश्य)–(मवीच. ३.३०)

**विरम नरपते! कथं द्विजेऽस्मिन्नविरतयज्ञवितीर्णगोसहस्रः ।**
**तव पलितनिरन्तरः पृषत्कं स्पृशति पुराणधनुर्धरस्य बाहुः ॥ ४३०॥**

**(५२. मृषोद्यमः)**

**प्रयुक्तार्थविधानाय मोहाद् यत्र प्रवर्तते ।**
**निवर्तते वृथा क्लेशस्स विज्ञेयो मृषोद्यमः ॥ ४३१॥**[1]

१–२. भोजोपज्ञमिदं द्वयम्।

यथा **वीरचरिते**—(मवीच. ३.२४)

**तपो वा शस्त्रं वा व्यपदिशति यः कश्चिदिह वो**
**स दर्पादुद्दामं द्विषमसहमानः स्खलयतु ।**
**अरामां निस्सीरध्वजदशरथीकृत्य वसुधा—**
**मतृप्तस्तत्कुल्यानपि परशुरामश्शमयति ।।४३२।।**

(५३. छलोक्तिः)

**काक्वा श्लेषेण वा यत्र पदं द्व्यर्थे प्रयुज्यते ।**
**प्रधानमतिसन्धातुं सा छलोक्तिः प्रकीर्तिता ।।४३३।।**[१]

यथा **रत्नावल्यां**

विदूषकः—होदि, सबामि बह्मसुत्तेण जइ अह्मेहिं ईदिसी कापि दिट्ठपुव्वा। (भवति! शपामि ब्रह्मसूत्रेण, यदि . . . अस्माभिरीदृशी कापि दृष्टपूर्वा।)

काञ्चनमाला—भट्टिणि! घुणक्खदं वि संवददि एव्व। (भट्टिनी! घुणाक्षरमपि संवदत्येव।)

वासवदत्ता—अइ उजुए, वसंदओ खु एसो। ण आणासि तुमं एदस्स वक्कभणिदीओ। अय्य मम वि एदं चित्तअं पेक्खंतीए सीसवेअणा समुप्पण्णा। ता गमिस्सं अहं, इति। (अयि ऋजुके, वसन्तकः खल्वेषः। न जानासि त्वं एतस्य वक्रभणितीः। आर्य! ममापि एतच्चित्रकं प्रेक्षमाणायाः शीर्षवेदना समुत्पन्ना तद्गमिष्याम्यहम्, इति।)

यथा च **मालतीमाधवे** प्रभवति निजस्य कन्यकाजनस्य महाराजः, इति।

(५४. काकुः)

**वाक्येऽभिधीयमानोऽर्थो येनान्यत्वं प्रपद्यते ।**
**भिन्नकण्ठध्वनिर्धीरैस्स काकुरिति कथ्यते ।।४३४।।** [१]

यथा च **वेणीसंहारे,** भीमः सहदेवमुद्दिश्य — सन्धेयास्ते भ्रातरो युष्माकम्।

यथा चात्रैव

---

१. भोजोपज्ञमिदम् ।

**लाक्षागृहानलविषान्नसभाप्रवेशैः**
**प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।**
**आकृष्टपाण्डववधूपरिधानकेशाः**
**स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥४३५॥** (वेसं. १.७)

**(५५. उन्माथः)**

**असाधुकारिणं कश्चित् पश्यतस्साधुमानिनः ।**
**सोत्प्रासं वचनं यत् स्यात् तमुन्माथं प्रचक्षते ॥४३६॥**[1]

यथा **रत्नावल्यां** तृतीयेऽङ्के,

काञ्चनमाला– साहु रे अमच्च वसन्तअ साहु। (अदिसइदो तु) ए अमच्चजोअंधराअणो इमाए संधिविग्गहपीताए(चिंताए)। (साधु रे अमात्य वसन्तक साधु। अतिशयितस्त्वया अमात्य–यौगन्धरायणोऽनया सन्धिविग्रहचिन्तया।) इति।

**(५६. परिहासः)**

**यदग्राम्यं भवेद् वाक्यं गुरूणामधिकेष्वपि ।**
**तथावसरमासाद्य परिहासस्स कथ्यते ॥४३७॥** [2]

यथा **उत्तरचरिते,**

रामः–अस्ति चेदानीमश्वमेधसहचारिणी हिरण्मयी सीताप्रतिकृतिः। तत्रापि तावद्बाष्पदग्धं चक्षुर्विनोदयामि।

सीता–धण्णा खु सा जा अय्यवुत्तेण एव्वं बहुमण्णीअदि। जा अय्यवुत्तं विणोदअंती आसाणिबंधण जादा जीवळोअस्स। (धन्या खलु सा या आर्यपुत्रेणैवं बहुमन्यते। या आर्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य।)

तमसा– (सस्मितस्नेहास्त्रं परिष्वज्य) अयि वत्से, एवमात्मा स्तूयते।

सीता– (सलज्जम्), परिहसिदम्मि भअवदीए। (परिहसितास्मि भगवत्या।) (इति।)

**(५७. विकत्थनम्)**

**सगुणोत्कर्षतो वापि कर्मणो वाऽपदानतः ।**
**आत्मश्लाघापरं वाक्यं विकत्थनमिहोच्यते ॥४३८॥**[3]

---

१-३. भोजोपज्ञमिदं त्रितयम्।

यथा च **वेणीसंहारे** (भीम:)–

**सकलरिपुजयाशा यत्र बद्धा सुतैस्ते**
**तृणमिव परिभूतो यस्य गर्वेण लोक: ।**
**रणशिरसि निहन्ता तस्य राधासुतस्य**
**प्रणमति पितरौ वां मध्यम: पाण्डवोऽयम् ।।४३९।।** (वेसं. ५.२७)

अपि च,

**चूर्णिताशेषकौरव्य: क्षीबो दु:शासनासृजा ।**
**भङ्क्त्वा सुयोधनस्योर्वोर्भीमो वां शिरसाऽञ्चति ।।४४०।।** (वेसं. ५.२८)

(५८. यदृच्छायोग:)

**यदृच्छया भवेद् योगो यत्राभीष्टेन केनचित् ।**
**अचिन्तितस्स धीमद्भिर्यदृच्छायोग उच्यते ।।४४१।।**[१]

यथा **मालतीमाधवे**

मालती–णाह तुह्मे उण कहं। (नाथ, यूयं पुन: कथम्?)

माधव:–(सलज्जम्)

**त्वत्पाद/पाणिपङ्कजपरिग्रहपुण्य/धन्यजन्मा**
**भूयासमित्यभिनिवेशकदर्थ्यमान: ।**
**भ्राम्यन् नृभांसपणनाय परेतभूमा–**
**वाकर्ण्य भीरु! रुदितानि तवागतोऽस्मि ।।४४२।।** (मामा. ५.२७)

(५९. वैषम्यम्)

**प्रत्यक्षमिति यत्रैक: परोक्षमिति चापर: ।**
**मन्यतेऽभिमतं वस्तु तद् वैषम्यमिति स्मृतम् ।।४४३।।** [१]

यथा **उत्तरचरिते**

(वासन्ती)–कथमद्यापि नोच्छ्वसिति रामभद्र:? हा प्रियसखि सीते! विपत्तिदु:खदग्धामपि पुन:पुनर्मन्दभागिनीं दहसि।

सीता–अपसर्तुमिच्छामि। एष पुनश्चिरप्रणयसंभारसौम्यशीतलेन आर्यपुत्र–स्पर्शेन दीर्घदारुणमपि झटिति सन्तापं लघयता वज्रलेपोपनद्ध इव पर्यस्तव्यापार आसञ्जितो मे हस्त:।।४४४।।

---

१. भोजोपज्ञमिदम्।

रामः—सखि, कुतः प्रलापः?।

**गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः**
**सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः।**
**स एवायं तस्यास्तदितरकरौपम्यसुभगो**
**मया लब्धः पाणिर्ललितलवलीकन्दळनिभः ॥४४५॥** (उराच. ३.४०)

सीता—हद्धि, अय्यउत्तप्परिसमोहिदाए पमादो खु से संवुत्तो। (हा धिक्! आर्यपुत्रस्पर्शमोहितायाः प्रसादः खलु अस्याः संवृत्तः!)

रामः—सखि वासन्ति, आनन्दनिमीलितः प्रियास्पर्शसाध्वसेन परवानस्मि। तत् त्वमपि धारय।

वासन्ती—कष्टमुन्माद एव।

सीता—{ससम्भ्रमं हस्तमाक्षिप्यापसर्पति}।

रामः—हा धिक्, प्रमादः!॥४४६॥

**करपल्लवस्स तस्यास्सहसैव जडात्मनः परिभ्रष्टः।**
**परिकम्पिनः प्रकम्पी करो (कराद्) मम स्विद्यतस्स्विद्यन् ॥४४७॥**
(उराच. ३.४१)

तमसा—(सस्नेहकौतुकस्मितं निर्वर्ण्य) (उराच. ३.४२)

**सस्वेदरोमाञ्चितकम्पिताङ्गी**
**जाता प्रियस्पर्शसुखेन वत्सा।**
**मरुन्नवाम्भःप्रविधूतसिक्त—**
**कदम्बयष्टिस्स्फुटकोरकेव ॥४४८॥**

सीता—(स्वगतम्) अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए। किं ति किल एसा तमसा एस मण्णिस्सिदि एसो परिचयो(च्चायो) एसो आसंहो त्ति। (अवशेनैतेनात्मना लज्जापितास्मि भगवत्या तमसया। किमिति किलैषा तमसा मंस्यते एष परित्यागः, एष आसङ्ग इति।)

रामः—(सर्वमवलोक्य) हा कथं नास्त्येव। नन्वकरुणे वैदेहि! न मामेवं परित्यक्तुमर्हसि।

---

१.–२. भोजोपज्ञमिदं द्वयम्।

वासन्ती—देव! प्रसीद। स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयात्मानम्। कुतोऽत्र मे प्रियसखी?

रामः—व्यक्तं नास्ति। कथमन्यथा वासन्त्यपि न पश्येत्? एष खलु स्वप्न एव स्यात्। न चास्मि प्रसुप्तः। कुतो रामस्य निद्रा? इति॥४४९॥

**(६०. प्रतिज्ञानम्)**

**न साधयामि यद्येतदेवं कर्तास्म्यहं तदा।**
**इत्युद्धवादेर्वाक्यस्य तत् प्रतिज्ञानमुच्यते॥४५०॥**[१]

यथा मकुटताडिते भीमः—

**ध्वस्ताः क्षुब्धा धार्तराष्ट्रास्समस्ताः पीतं रक्तं स्वादु दुश्शासनस्य।**
**पूर्णा कृष्णाकेशबन्धप्रतिज्ञा तिष्ठत्येकः कौरवस्योरुभङ्गः॥**
**ऊरू निपीड्य गदया यदि नास्य तस्य**
**पादेन रत्नमकुटं शकलीकरोमि।**
**देहं निपीतनिजधूमविजृम्भमाण—**
**ज्वालाजटालवपुषि ज्वलने जुहोमि॥४५२॥**

**(६१. प्रवृत्तिः)**

**एवं मयात्र कर्तव्यमिति यन्निश्चितं वचः।**
**स्नेहाद् दाक्षिण्यतो वापि प्रवृत्तिस्सा निगद्यते॥४५३॥**[२]

यथा **मालतीमाधवे** कामन्दकी—(मामा. ४.५)

**मा वां सपत्नेष्वपि नाम तद् भूत्**
**पापं यदस्यां त्वयि वापि शक्यम् विशंक्यम्।**
**तत् सर्वथा सङ्गमनाय यत्नः**
**प्राणव्ययेनापि मया विधेयः॥४५४॥**

**(६२. आशीः)** (नाशा. १६.२८ पाठभेदेन)

**यदाशास्त्यर्थसम्पन्नं मनोरथसमुद्भवम्।**
**अप्रार्थनीयमन्यद् वा विदुस्तामाशिषं बुधाः॥४५५॥**

यथा **मालतीमाधवे** कामन्दकी—(मामा. ६.७)

**विधाता भद्रं नो वितरतु मनोज्ञाय विधये**
**क्रियासुर्देवा (नः) परमरमणीयां परिणतिम् ।**
**कृतार्था भूयासं प्रियसुहृदि यत्नैरभिमतः**
**प्रयासः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥४५६॥**

**(६३. अनुक्तसिद्धिः)** (नाशा. १६.४० पृ.३६१)

**प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।**
**वचनेन विनाऽनुक्तस्सिद्धिस्सा परिकीर्तिता ॥४५७॥** (नाशा. १६.४०)

यथा **शाकुन्तले**

राजा—भगवान् खलु काश्यपश्शाश्वते ब्रह्मणि स्थित इति प्रकाशः। इयं च वस्सखी तदात्मजेति कथमेतत्?

अनसूया—सुणादु अय्यो। अत्थि कोसिओ त्ति गोत्तनामदो महप्पहावो राएसी। (शृणोत्वार्यः। अस्ति कौशिक इति गोत्रनामतो महाप्रभावो राजर्षिः।)

राजा—श्रूयते

अनसूया—तं सहीए पहवं अवगच्छदु महाराओ। उज्झिदसरीरसंवढ्ढणादिहिं तादकस्सपो से पिदा। {तं सख्याः प्रभवमवगच्छतु महाराजः। उज्झितशरीरसंवर्धनादिभिः तातकाश्यपः अस्याः पिता।}

राजा—उज्झितशब्देन पुनर्जनितं कुतूहलम्। आमूलाच्छ्रोतुमिच्छामि।

अनसूया—पुरा तस्स किल राएसिणो उग्गे तवसि वट्ठमाणस्स किं पि जादसंकेहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घकारिणी अणुप्पेसिदा। (पुरा तस्य किल राजर्षेः उग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैः मेनका नामाप्सरा नियमविघ्नकारिणी अनुप्रेषिता।)

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम्। ततस्ततः?

अनसूया—तदा वसन्तोदारसमए तए उन्मादयित्तअं रूवं पेक्खिअ . . . (ततो वसन्तोदारसमये तस्या उन्मादयितृकं रूपं प्रेक्ष्य) (इत्यर्धोक्ते लज्जां नाटयति।)

राजा—भवतु, परस्तादवगम्यत एव। सर्वथा अप्सरस्सम्भवैवैषा, इति॥४५८॥

**(६४. प्रियवचनम्)**

**आदौ यत् क्रोधजननमन्ते हर्षविवर्धनम् ।**
**तत्प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् ॥ ४५९ ॥** (नाशा. १६.२९)

यथा **रत्नावल्यां**, चतुर्थेऽङ्के,

विदूषकः अपवार्यैन्द्रजालिकमाह—आ दासीएपुत्त इंदजालिअ! किं वा देवेहिं? जदि दे एदिणा परितुट्ठेण कज्जं ता साअरिअं से दंसेहि। (आः दास्याःपुत्र, ऐन्द्रजालिक! किं वा देवैः? यदि ते एतेन परितुष्टेन कार्यं तत् सागरिकामस्य दर्शय।) तत एतद्वचनानन्तरमग्निसम्भ्रमादुत्थितः **राजा, न वसुभूत्यादय आवृता वह्निना॥ ४६०॥**

**एतानि काव्यस्य विभूषणानि [१]प्रायश्चतुष्षष्टिरुदाहृतानि ।**
**प्रबन्धशोभाकरणाय तज्ज्ञैस्सम्यक् प्रयोज्यानि यथारसानि ॥ ४६१ ॥**

**उदाहृता नाटकनाटिकादावियं चतुष्षष्टिचतुष्टयी या ।**
**रसाविरोधेन निबन्धनीया कथासु काव्येषु च सा महद्भिः ॥ ४६२ ॥**

**भक्तीर्द्वादश ताः पृथक्पृथगिमास्सञ्चिन्त्य शब्दार्थयोः**
**साहित्यस्य च शब्दशासनविदा कार्यः प्रबन्धे श्रमः ।**
**कीर्त्तिर्यावदनश्वरी हि विदुषां रोदोगृहं गाहते**
**ब्राह्मं लोकललामधाम तदमी तावत् किलाध्यासते ॥ ४६३ ॥**

**इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रबन्धाङ्गचतुष्षष्टिचतुष्टयप्रकाशो नाम**
**॥ द्वादशः प्रकाशः॥ १२ ॥**

नेदृशी स्पष्टताऽन्यत्र दृश्यते नाट्यलक्षणे ।
सनातनोऽस्य लब्ध्या स्वं साहित्यं पूर्णमीक्षते ॥



१. प्रायःपदेन सूचितो लक्षणानां न्यूनाधिकभावोऽपि। अभिनवगुप्तोऽप्याह—'लक्षणानि अनियत-संख्यानी'—ति। लक्षितानि स्वयं नूतनानि २८।

अथ

## शृङ्गारप्रकाशे त्रयोदशः प्रकाशः

रतिप्रकाशनो नाम

तत्त्वज्ञानान्निश्श्रेयसाधिगतौ **मोक्षः**[1]। तमीहमानस्य गार्हस्थ्येऽपि तदधिगमयोग्यताभिमानो मोक्षशृङ्गारः।

**धर्मशृङ्गारे** भारती वृत्तिः, पौरस्त्या प्रवृत्तिः, पाञ्चाली रीतिः, स्वकीया नायिका, धीरोदात्तश्च नायकः, इति।

**अर्थशृङ्गारे** गौडीया रीतिः, औढ्रमागधी प्रवृत्तिः, आरभटी वृत्तिः, सर्वा नायिका, धीरोद्धतश्च नायक इति।

**कामशृङ्गारे** वैदर्भी रीतिः, दाक्षिणात्या प्रवृत्तिः, कैशिकी वृत्तिः, सर्वा नायिका, धीरललितश्च नायक इति।

**मोक्षशृङ्गारे** लाटीया रीतिः, आवन्त्या प्रवृत्तिः, सात्त्वती वृत्तिः, स्वकीया नायिका, धीरशान्तश्च 'नायकः इति।

एतेषामपि नायकविशेषाणां चतुर्णामपि च नायिकाविशेषाणां वक्ष्यमाणोत्तमादिस्वभेदोपभेदयोगिनां यथायोगमुत्पद्यते रत्यादिः, स च विभावानुभावव्यभिचारिसंयोगैरभिव्यज्यते।। तत्र[2]—

१. **रतेर**भीष्टजनोपवनवरमन्दिरादय आलम्बनविभावाः। ऋतुमाल्यविलेपनादयोऽनुभावाः। व्यभिचारिणस्तु सम्भोगे हर्षधृतिस्मृतिमतिस्वेदरोमाञ्चगद्गदहासादयः; विप्रलम्भे ग्लानिचिन्तौत्सुक्यावेगविस्मयदैन्यासूयादयो भवन्ति।

२. **प्रीते**रभीष्टरूपरसगन्धस्पर्शशब्दपुत्रमित्रादय आलम्बनविभावाः। तदुपभोगसमागमसुखस्मरणादय उद्दीपनविभावाः। सर्वेन्द्रियाणां रोमाञ्चस्वेदस्वरभेदादयो व्यभिचारिणः।।

३. **हर्षस्य** मनोरथलाभेष्टजनसमागमदेवगुरुभर्तृराजप्रसादादय आलम्बनविभावाः। भोजनाच्छादनादय उद्दीपनविभावाः। नयनवदनप्रसादप्रियभाषणालिङ्गनललितताडनादयोऽनुभावाः। हासधृतिस्मृतिमतिगर्वौत्सुक्यावेगचपलतोत्साहजडतादयो व्यभिचारिणः।।

---

१. प्रकाश एष पदे पदे नष्टमातृकांशः राघवे। २. द्र. पृ. ६१४ एकादशप्रकाशारम्भः।

४. **रोमाञ्चस्य** स्पर्शभयशीतहर्षक्रोधरोगादय: आलम्बनविभावा:। प्रिया–लिङ्गनायादर्शनादयोऽभिषेकगुणकीर्तनोपकारस्मरणादय उद्दीपनविभावा:। प्रियागात्रस्पर्शनविलोकनादयोऽनुभावा:। हासत्रासविस्मयवितर्कावेगशङ्काऽबहित्थ–व्रीडास्तम्भस्वेदवेपथुस्वरभेदादयो व्यभिचारिण:।।

५. **धृते**रष्टैश्वर्यकुलरूपयौवनविद्याबलादय आलम्बनविभावा:। श्रुतविज्ञान–शौचाचारदेवगुरुभक्त्यादय: उद्दीपनविभावा:। प्राप्तविषयोपभोगाप्राप्ताननुशोचना[१]–दयोऽनुभावा:। तृप्तिहर्षादयो व्यभिचारिण:।

६. **गर्वस्य** [२] ऐश्वर्यकुलरूपयौवनधनविद्याबलादय आलम्बनविभावा:। भर्तृसम्भावनोत्तमादरानुरूपनारीप्रार्थनागुणप्रशंसादय उद्दीपनविभावा:। . . . . . प्रश्नोत्तरादानाभाषणोपहसनवाक्पारुष्यधर्षणाधिक्षेपव्यतिक्रमादयोऽनुभावा:। हासोत्साहक्रोधचपलतामर्षादयो व्यभिचारिभावा:।।

७. **हासस्य** प्रतिज्ञासंप्रलापसौख्यधाष्टर्यकुहकपरचेष्टानुकरणपौरोभाग्यादय आलम्बनविभावा:। नायकसान्निध्यादय उद्दीपनविभावा:। भजनदर्शनसन्दर्शनास्य–रागपार्श्वग्रहणादयोऽनुभावा:। स्मितहसितविहसितोपहसितातिहसितापहसितादयोऽ–नुभावविशेषा:। प्रेमाश्रुचपलतादयो व्यभिचारिण:।।

८. **मदस्य** मद्योपभोगादय आलम्बनविभावा:। मनोरथावाप्तीष्टदर्शनगीतवाद्य–नृत्तवर्णनादय उद्दीपनविभावा: परुषाभिभाषणव्याकुलवचनमधुरमुखरागहृष्टतनुत्रास–सुकुमाराविष्ट/ललितस्खलितनयनघूर्णनादयोऽनुभावा:।अङ्गग्लान्यसूयाश्रममोहहर्ष–धृतिस्मृतिचपलताश्रुगर्वौत्सुक्यनिद्रामर्षस्तम्भवेपथुरोमाञ्चपुलकादयो व्यभिचारिण:।।

९. **मोहस्य** [३] अवलोकनावस्थावधारणादय आलम्बनविभावा:। संस्कृ/स्तुतप्रदेश–दर्शनेष्टगुणाकर्णनर्तुमाल्यानुलेपनोपनतिप्रभृतय उद्दीपनविभावा:। गुणग्रहण–काकलीगीतादयोऽनुभावा:। निर्वेदग्लानिशङ्काऽऽवेगश्रमदैन्यचिन्तामतिस्मृति–चपलताव्रीडाऽवहित्थजडताविषादोन्मादादयो व्यभिचारिण:।।*

११. **चिन्ताया:** परद्रव्यापहारदारिद्र्येष्टजनवियोगादय आलम्बनविभावा:। प्रारब्धा–सिद्धिसमीहितानवाप्तिदेशभ्रमणादय उद्दीपनविभावा:। श्वसितसन्तापध्यानाधो–मुख्यतनुभावादयोऽनुभावा:। शोकभयविस्मयविषादनिद्रानिर्वेदग्लानिशङ्का–श्रमदैन्यमोहस्मृतिवैवर्ण्यादयो व्यभिचारिण:।।

---

१. ०ननु० = ०नु० रा.। २. गर्वस्य रा., स्वेदस्य जो.। ३. जोशेरसंस्करणे मोहो द्विर्निरूपित:। प्रथमं मदचिन्तयोर्मध्ये द्वितीयं वारं च वितर्कक्रोधयोर्मध्ये। द्र. पृ. ७९९। *१०. उत्कण्ठा नोपलभ्यते।

१२. **स्मृते:** स्वास्थ्यापररात्रप्रबोधसमानदर्शनोदाहरणदैवादय आलम्बनविभावा:। पूर्वानुभूतविषयज्ञानादय उद्दीपनविभावा:। शिर:कम्पनभ्रूसमुन्नमनशून्यावलोकना– ङ्गुलिविभङ्गादयोऽनुभावा:। हासशोकक्रोधोत्साहभयजुगुप्साविषादौत्सुक्यासूयोग्रता– गर्वत्रासवितर्करतिस्तम्भस्वेदरोमाञ्च वेपथुवैवर्ण्याश्रुस्वरभेदादयो व्यभिचारिण:।।

१३. **मते:** शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणादय आलम्बनविभावा:। विद्यावृद्धसंयोगाध्ययना– ध्यापनतद्विद्यावित्सम्भाषणादय उद्दीपनविभावा:। तत्त्वाभिनिवेशदेशकाला– नुसारणादयोऽनुभावा:। ग्रहणशक्तिविकासादय: सर्वे व्यभिचारिण:।।

१४. **वितर्कस्य** सन्देहविमर्शविप्रतिपत्त्यादय आलम्बनविभावा:। समानानेक– धर्मोपपत्तिप्रतिपत्तिविशेषादय उद्दीपनविभावा: भ्रूविक्षेपमन्त्रसंग्रहणादयोऽनुभावा:। निर्वेदग्लानिशङ्काश्रमविषादविस्मयदैन्यचिन्तामोहस्मृतिमतिव्रीडाऽऽवेगजडतास्तम्भ– स्वेदादयो व्यभिचारिण:।।

१५. **उत्साहस्य** विस्मयासंमोहाविषादाध्यवसायविशयसाहसादय आलम्बनविभावा:। विनयबलपराक्रमदेशकालशक्तिसम्पत्प्रतापादय उद्दीपनविभावा:। गाम्भीर्यादयोऽ– नुभावा:। क्रोधासूयामर्षचिन्तास्मृतिगर्वावेगरोमाञ्चस्वेदोग्रतौत्सुक्यादयो व्यभिचारिण:।।

१६. **क्रोधस्य** आक्षेपानृतवचनोपघातवाक्पारुष्याभिद्रोहमात्सर्यादय आलम्बन– विभावा:। ताडनपीडनपाटनभेदच्छेद्यप्रहरणादय उद्दीपनविभावा:। नयनरागभ्रुकुटिदन्तोष्ठपीडनगण्डस्फुरणहस्तनिष्पेषादयोऽनुभावा:। संमोहोत्साहा– मर्षवेगचपलतागद्गदादयो व्यभिचारिण:।।

१७. **अमर्षस्य** विद्यैश्वर्यधनबलाधिकाराधिकैरधिक्षेपावमानादय आलम्बनविभावा:। स्वावस्थालोकनमधुरालापश्रवणकामिनीप्रोत्साहनादय उद्दीपनविभावा:। शिर:कम्पाधोमुख्यध्यानाध्यवसायोपायसहायान्वेषणादयोऽनुभावा:। क्रोधासूया– तापोग्रताऽऽवेगवैवर्ण्यास्रादयो व्यभिचारिण:।।

१८. **असूयाया:** परैश्वर्यसौभाग्यमेधाविद्यादय आलम्बनविभावा:। दोषख्यापनगुणो– पघाताच्चक्षु:प्रणिधानाधोमुख्यभ्रुकुटिक्रियादय उद्दीपनविभावा:। अवज्ञापराध– द्वेषवेषकुत्सनादयोऽनुभावा:। हास्यक्रोधाज्ञोपहसितस्वरभेदादयो व्यभिचारिण:।।

१९. **ईर्ष्याया:** समानकुलशीलरूपविद्यावयोविभवबलपराक्रमेषु सपत्नीषु च क्रमेण प्रीतिप्रासादस्थानदानमानादय आलम्बनविभावा:। अमर्षादवलोकनादय उद्दीपन–

विभावाः। मन्युव्यलीकविप्रियप्रणयकलहोपालम्भादयोऽनुभावाः। क्रोधोत्साह–विस्मयवितर्कदैन्यजुगुप्सामोहनिर्वेदासूयामर्षवेपथुवैवर्ण्याश्रुस्वेदगद्गदादयो व्यभिचारिणः।।

२०. **उग्रतायाः** चौर्याभिग्रहनृपापराधासम्बद्धप्रलापादय आलम्बनविभावाः। द्रव्यापहारभाराभिनिवेशाऽसहिष्णुतादय उद्दीपनविभावाः। ताडनपीडनवधबन्ध–भर्त्सनास्यरागादयोऽनुभावाः। क्रोधोत्साहविस्मयजुगुप्साऽसूयास्मृतिमतिमोह–चपलताहर्षामर्षमदावेगौत्सुक्यवैवर्ण्या श्रुगद्‌गदादयो व्यभिचारिणः।।

२१. **जुगुप्सायाः** सुहृद्यप्रियवाच्यानिष्टश्रवणदर्शनपरिकीर्तनादय आलम्बनविभावाः। तत्स्वरूपविकारक्रियाविपरिणामपरिणामादय उद्दीपनविभावाः। सर्वाङ्गसंहाराक्षि–सङ्कोचमुखविकूणनहृल्लेखनिष्ठीवनोद्वेजनादयोऽनुभावाः। विस्मयनिर्वेदभय–ग्लानिशङ्कामोहस्मृतिजडताऽऽवेगविषादापस्मारव्याधिरोमाञ्चमदवेपथुस्वरभेद–वैवर्ण्याश्रुमूर्च्छाप्रलापादयो व्यभिचारिणः।।

२२. **विस्मयस्य** असम्भाव्यमानकौतुकमाहेन्द्रजालमानुषकर्मचित्रपुस्तशिल्पविद्याति–शयादय आलम्बनविभावाः। दिव्यजनभाषणोपवनदेवकुलविहारदर्शनादय उद्दीपनविभावाः। नयनविस्तारानिमेषप्रेक्षणभ्रूविक्षेपसाधुवादप्रबन्धहाहाकाराङ्गुलि–भ्रमणादयोऽनुभावाः जडतामोहमूर्च्छादयो व्यभिचारिणः।।

२३. **निद्राया** दौर्बल्यमुदश्रमक्लमालस्यचिन्ताऽत्याहारस्वभावाभ्यासादय आलम्बन–विभावाः। मनस्सन्तोषनिश्चिन्तताविविक्तस्थानलाभानुकूलोपकरणप्राप्त्यादय उद्दीपनविभावाः। शिरोवेदनगौरवशरीरलोलननेत्रघूर्णनजृम्भणगात्रमर्दनिःश्वसितो–च्छ्वसितस्रस्तगात्रताक्षिनिमीलनसर्वाङ्गक्रियादयोऽनुभावाः । दैन्यमोहजडता–ऽपस्मारस्तम्भस्वेदस्वरभेदवेपथुवैवर्ण्यास्रादयो व्यभिचारिणः।।

२४. **स्वप्नस्य(/सुप्तम्)** निद्रादय आलम्बनविभावाः। निद्रादिकारणान्येवोद्दीपनविभावाः। अक्षिनिमीलनोत्स्वप्नायितादयोऽनुभावाः। प्रायेण तु सर्वे रत्यादयो व्यभिचारिणः।।

२५. **प्रबोधस्य** निद्राच्छेदाहारपरिणामस्वप्नान्ततीव्रशब्दस्पर्शादय आलम्बनविभावाः। प्राग्दृष्टपदार्थावलोकनारब्धस्मरणमित्रादिकार्यगौरवाचारपरिपालनादय उद्दीपन–विभावाः। जृम्भणोन्मेषनिमेषाक्षिमर्दनशयनमोक्षाङ्गवलनादयोऽनुभावाः। उत्साहचिन्तास्मृतिमतिस्वरभेदास्रादयो व्यभिचारिणः।।

२६. **चपलतायाः** रागद्वेषमात्सर्येर्ष्यामर्षप्रातिकूल्यादय आलम्बनविभावाः। पदार्थरामणीयकमानोत्कर्षप्रोत्साहनापकारस्मरणादय उद्दीपनविभावाः। वाक्पारुष्य–

दण्डपारुष्यार्थदूषणादयोऽनुभावाः। हासक्रोधोत्साहविस्मयजुगुप्साहर्षा-वेगविषादोग्रतात्रासारोमाञ्चवेपथुस्वेदस्वरभेदादयो व्यभिचारिणः।।

२७. **आलस्यस्य** गर्वमदमान्द्यनैराश्यश्रमक्लमगर्भस्वाभाव्यादय आलम्बनविभावाः। स्रस्तगात्रतादयोऽनुभावाः। निर्वेदश्रमविषादनिद्रादैन्यमोहजडताव्याधिस्वेदवेपथु-स्तम्भादयो व्यभिचारिणः।।

२८. **भयस्य** मतिव्रीडाविषादावहित्थत्रासवितर्करोमाञ्चस्वरभेदवेपथुवैवर्ण्यादयो व्यभिचारिणः।।*

३६. **स्वेदस्य** धर्मसम्पीडनादय आलम्बनविभावाः। क्रोधभयहर्षादिकारणान्येव उद्दीपनविभावाः। व्यजनग्रहणादयोऽनुभावाः।

३७. **व्याधेः** उभयानुरागादिकारणसमानी (?) कोपनिपातसन्निपातवातपित्तश्लेष्म-प्रकोपादय उद्दीपनविभावाः। वेपनालस्यप्रभृतयोऽनुभावाः। ग्लानिशङ्कानि-र्वेदमदश्रमदैन्यमोहचिन्ताऽऽवेगजडतावैवर्ण्याश्रुप्रलयादयो व्यभिचारिणः।।

३८. **उन्मादस्य** इष्टजनवियोगविभवनाशव्यसनाभिघातालाभापथ्यसेवनादय उद्दीपनविभावाः। अनिमित्तहसितरुदितोत्क्रुष्टप्रलयगर्वरत्यादयो व्यभिचारिणः।।

३९. **श्रमस्य** अतिव्यायामातिभारोत्क्षेपणादय आलम्बनविभावाः। जृम्भणाङ्गमर्दन-मन्दपदोत्क्षेपणालस्यादयोऽनुभावाः[1]। निर्वेदग्लानिदैन्यचिन्ता व्यभिचारिणः।।

४०. **शोकस्य** शापक्लेशविनिपातेष्टजनवियोगविभवनाशवधबन्धनदुःखानुभव-विद्रवोपद्रवादय आलम्बनविभावाः। अश्रुपातालस्यविलपितस्रस्तगात्रताभूमि-पाताक्रन्दितवेष्टितदीर्घनिःश्वसितमुखशोषमदादयोऽनुभावाः। स्तम्भवेपथुवैवर्ण्या-श्रुस्वरभेदादयो व्यभिचारिणः।।

४१. **विषादस्य** आरम्भानिस्तरणो उपायचिन्तनोत्साहविघातवैमनस्यालस्यादयो-ऽनुभावाः। स्तम्भस्वेदगद्गदवैवर्ण्यवेपथुप्रभृतयो व्यभिचारिणः।।

४२. **वैवर्ण्यस्य** शीतक्रोधादय आलम्बनविभावाः। ००कारणान्येवोद्दीपनविभावाः। नयनमुखरागवृत्ति वैमनस्यालस्यादयोऽनुभावाः। ००व्यभिचारिणः।।

४३. **दैन्यस्य** मनस्तापदौर्गत्यादय आलम्बनविभावाः। सर्वोपायभ्रंशोपभेदजुगुप्सानिर्वेद-ग्लानिचिन्तामोहजडताविषादनिद्रास्तम्भगद्गदवेपथुवैवर्ण्याश्रुप्रभृतयो व्यभिचारिणः।।

---

१. ०लस्या० = ०लब्धा(?)० रा.। *२९. 'शङ्का, ३०. त्रासः, ३१. वेपथुः, ३२. व्रीडा, ३३. अबहित्था, ३४. स्तम्भः, ३५. ग्लानिः' इत्येतेषां विभावादीनां वर्णनं मातृकासु त्रुटितम्।

४४. **स्वरभेदस्य** कारणान्येवोद्दीपनविभावा:। तारमन्द्रमध्यघर्घरगद्गदविस्वर–स्वनादयोऽनुभावा:। हा . . .(व्यभिचारिण:)।।

४५. **आवेगस्य** विद्युदुल्कानिर्घातपतनचन्द्रसूर्योपरागकेतुदर्शनभ्रमणवातवर्षा–निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणदुस्स्वप्नदुर्निमित्तदर्शनव्यसनाभिघातादय आलम्बन–विभावा:। उक्तविषयकीर्तनानुभवनसम्प्रधारणादय उद्दीपनविभावा:। सर्वाङ्गस्रस्तताविकुण्ठनाक्षिमर्दनत्वरितगमनाङ्गपीडनप्रधावनच्छन्नाश्रयणधूमा–कुलनेत्रताङ्गविधूननत्वरितापसरणपश्चादवलोकनाभ्युत्थानालिङ्गनभूमिशयन–परिदेवितविलापाक्रन्दितदेवतानुस्मरणादयोऽनुभावा:। शोकभयविस्मयशङ्का–श्रमचिन्तामोहवितर्कस्तम्भस्वेदवेपथुवैवर्ण्याश्रुप्रलयादयो व्यभिचारिण:।।

४६. **अश्रुण:** शोकक्रोधहर्षधूमाञ्जनजृम्भणभयानिमेषप्रेक्षणशीतरोगादय आलम्बन–विभावा:। कार्यकारणानुबन्धप्रबन्धादय उद्दीपनविभावा:। नेत्रसम्मार्जनबाष्पमोक्ष–त्रिविधरोदनादयोऽनुभावा:। तत्रोत्फुल्लकपोलाङ्गनिमीलितास्रमपर्याप्तमुक्तास्रम् अस्वस्थगात्रं स्वनवद्गतचेष्टं संभ्रमिपातविचेष्टितविलापदु:खजं प्रस्फुरितोष्ठकपोलं सनि:श्वासं सशिर:कम्पभ्रूकटाक्षादयो रोदनं चानुभावा:। भयनिर्वेदग्लानिश्रमदैन्य मोहौत्सुक्य त्रासवितर्कस्वेदस्वरभेदस्तम्भरोमाञ्चवेपथुवैवर्ण्यादयो व्यभिचारिण:।।

४७. **(मोहस्य / स्नेहस्य)**[१] अवलोकनावस्थावधारणव्यसनाभिघातभयावेगवैरस्मरणादय आलम्बनविभावा:। [२]संस्तुतप्रदेशदर्शनेष्टगुणाकर्णनर्त्तुमाल्यानुलेपनोपनतिप्रभृतय: उद्दीपनविभावा:। निश्चैतन्यभ्रमणपतनघूर्णनादर्शनादयोऽनुभावा:। ग्लानिप्रलयादयो व्यभिचारिण:।।)

४८. **प्रलयस्य** मूर्च्छाश्रमाभिघातनिद्रामोहमदादय आलम्बनविभावा:। श्रमादि–कारणान्येवोद्दीपनविभावा:। निश्चेष्टतादयोऽनुभावा:। ग्लानिजडतास्तम्भवैवर्ण्यादयो व्यभिचारिण:।।

४९. **जडताया:** इष्टानिष्टश्रवणदर्शनव्याध्यादय आलम्बनविभावा:। तद्रामणीय–कोद्वेजनीय(उद्दीप)नविभावा: कार्याप्रतिपत्त्यकथनाभाषणतूष्णीम्भावानिमेषनिरीक्षणा–दयोऽनुभावा:। निर्वेदग्लानिश्रमदैन्यमोहविषादनिद्रास्तम्भ वैवर्ण्यादयो व्यभिचारिण:।।

---

१. द्र. सरस्वतीकण्ठाभरणे। २. राघवपाठस्तु—प्रकृतधर्माधर्मक्रोधाशावज्ञादय: इति। मुद्रितस्तु पाठो जोशेरपठित:। जोशेरेण मोहो द्वि: प्रदत्त:। स्नेहस्तु स्यात् ।

५०. **निर्वेदस्य** अधिक्षेपक्रोधताडनेष्टजनवियोगवैराग्यादय आलम्बनविभावाः। स स(?) x x x x x रताविभावन शास्त्राभ्यासतत्त्वज्ञानादय उद्दीपनविभावाः। रुदितनिःश्वसि(त) x x x x जुगुप्साश्रमजडतानिद्रास्तम्भशमादयो व्यभिचारिणः॥

५१. **शमस्य** तत्त्वज्ञानादय आलम्बनविभावाः। योगाभ्यासादय उद्दीपनविभावाः। परं ब्रह्मोपास्तिमतिरोमाञ्चहर्षधृत्यादयो व्यभिचारिणः, इति॥

उक्तः सोऽयं विभावानुभावसञ्चारिसङ्करः।
क्रमेण सर्वभावानां शृङ्गारेषु चतुर्ष्वपि ॥१॥
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।
सम्भोगो विप्रलम्भश्च शृङ्गारोऽपि द्विधा मतः ॥२॥
समवाये य उद्भूतश्चिरं यश्चावतिष्ठते।
भावः स्थायीति स ज्ञेयो व्यभिचारी ततोऽन्यथा ॥३॥
अभीष्टालिङ्ग(न—प्रीत—प्रहृष्ट—चिर—सं)—गते।
सोऽस्मिन् सम्भोगशृङ्गारो विप्रलम्भो विपर्यये ॥४॥
विभावो द्विविधश्चात्रालम्बनोद्दीपनात्मकः।
एकोऽनुभवसंस्कारे जनकोऽन्यस्तु स द्विधा/बोधकः ॥५॥
(रजस्तमोभ्यां सत्त्वस्य)प्रभवेऽभिभवे द्विधा।
अन्तर्बहिश्च भावोऽत्र सहैव व्यभिचारिभिः ॥६॥
स्मृतीच्छाद्वेषयत्नानामन्तस्सन्तान इष्यते।
मनोवाग्बुद्धिवपुषां बहिरारम्भ एव तु ॥७॥
जन्मानुबन्धाऽतिशयानुषङ्गानुगमप्रसूः।
विभावश्चानुभावश्च व्यभिचारीव पूर्वके ॥८॥
विभावाज्जन्म भावानां उद्दीपनविभावतः।
अनुबन्धोऽनुभावेभ्यः प्रकर्ष उपजायते ॥९॥
भावान्तरानुषङ्गस्तु स्थायिनोपद्रवे सति।[1]
सम्पर्कस्तु तयोस्तुल्यबलभावोत्तरो(ऽनुगः) . . ॥१०॥
जन्मानुबन्धातिशयानुषङ्गात् ततः परं सानुगमात् क्रमेण।
भावेषु तल्लक्षणलक्ष/क्ष्ययोगात् पञ्च प्रपञ्चान् उपवर्णयामः ॥११॥

१. इतः परं 'सम्पर्कस्तु०० उपवर्णयाम' इति पादषट्कं जोशेरसंस्करणे न दृश्यते।

## जोशेर–राघवयोः ४९–भावक्रमः

| | | जोशेरः | राघवः | | | जोशेरः | राघवः |
|---|---|---|---|---|---|---|---|
| १. | अमर्षः | १६ | १९ | २६. | मदः | ८ | ९ |
| २. | अश्रु | २७ | ४४ | २७. | मोहः | ९ | ४५ |
| ३. | असूया | १७ | २० | | | १४ | xx |
| ४. | आलस्यम् | २५ | ३० | २८. | रतिः | १ | १ |
| ५. | आवेगः | २६ | ४२ | २९. | रोमाञ्चः | ४ | ४ |
| ६. | ईर्ष्या | १८ | २१ | ३०. | वितर्कः | १३ | १५ |
| ७. | उग्रता | xx | २२ | ३१. | विषादः | xx | ३८ |
| ८. | उत्साहः | xx | १६ | ३२. | विस्मयः | २० | २४ |
| ९. | उन्मादः | xx | ३४ | ३३. | वैवर्ण्यम् | xx | ३९ |
| १०. | क्रोधः | १५ | १८ | ३४. | व्याधिः | xx | ३३ |
| ११. | गर्वः | xx | ६ | ३५. | शमः | ३२ | ४९ |
| १२. | ग्लानिः | xx | १० | ३६. | शोकः | xx | ३७ |
| १३. | चपलता | २४ | २८ | ३७. | श्रमः | xx | ३६ |
| १४. | चिन्ता | १० | १२ | ३८. | स्मृतिः | १० | १३ |
| १५. | जडता | २९ | ४७ | ३९. | स्वप्नः | २२ | २६ |
| १६. | जुगुप्सा | १९ | २३ | ४०. | स्वरभेद | xx | ४१ |
| १७. | दैन्यम् | xx | ४० | ४१. | स्वेद | ६ | ३३ |
| १८. | धृतिः | ५ | ५ | ४२. | हर्षः | ३ | ३ |
| १९. | निद्रा | २१ | २५ | ४३. | हासः | ७ | ८ |
| २०. | निर्वेदः | xx | ४८ | ४४. | मोहः | १४ | xx |
| २१. | प्रबोधः | २३ | २७ | ४५. | अस्पष्ट | xx | ७ |
| २२. | प्रलयः | २८ | ४६ | ४६. | ’’ | xx | ११ |
| २३. | प्रीतिः | २ | २ | ४७. | ’’ | xx | १७ |
| २४. | भयम् | xx | ३१ | ४८. | ’’ | xx | २९ |
| २५. | मतिः | १२ | १४ | ४९. | ’’ | xx | ४३ |

शृङ्गारविभावहेतवः – शृङ्गारप्रभवा एव। ते रत्यादयो भावा एकोनपञ्चाशदिति यदुक्तं (पृ. ६१४) नाधिकाः, न न्यूनाः' इति; तत्र–

**(१. रतिः –८)**

**मनोऽनुकूलेष्वात्मनः सुखानुभवो रतिः।**

सा चाष्टधा– **नैसर्गिकी, सांसर्गिकी, आभियोगिकी, आध्यात्मिकी, औपमानिकी, वैषयिकी, साम्प्रयोगिकी, आभिमानिकी** चेति।

**(१.१ नैसर्गिकी)**

**जन्मान्तरवासना निसर्गः, तदुत्था नैसर्गिकी।**

सा च **जाता, अनुबन्धिनी प्रवृद्धा, संवृत्ता, अनुवर्तिनी** चेति पञ्चधा।

तत्रालम्बनविभावादुत्पन्नमात्रा **जाता**। यथा–

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।**
**अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥** (कुसं. ५.५३)

उत्पत्तेरनन्तरमुद्दीपनैरुद्दीप्यमाना सानुबन्धत्वा**दनुबन्धिनी**; यथा–(कुसं. ५.६४)

**यथाश्रुतं वेदविदां वर! त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥१३॥**

सत्यनुबन्धे संस्कारस्यानवरतप्रबोधात् स्मरणेच्छाद्वेषप्रयत्नजन्मभिर्मनोवाग्बुद्धि–शरीराङ्गै(रम्भै)रनुभावैस्सञ्चारिभिस्संसृज्यमाना प्राप्तप्रकर्षावस्था **प्रवृद्धा**; यथा–

**अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु वः ।**
**ममात्र भावैकरसं मनस्स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥१४॥**

अथ पृथगालम्बनाऽनुभवसंस्कारोद्दीपनस्मृत्यादिजन्मानुभवसञ्चारिसंभवे तुल्यबल–भावान्तरसंपर्किणी **संपृक्ता;** यथा–

**सन्तापसन्ततिमहाव्यसनाय तस्यामासक्तमेतदनपेक्षितहेतु चेतः ।**
**प्रायश्शुभं च विदधात्यशुभं च जन्तोस्सर्वङ्कषा भगवती भवितव्यतैव ॥१५॥**

बलीयसा भावान्तरेणाभिभूतापि संस्कारमात्रेणानुवर्तत इत्य**नुवर्तिनी**; यथा–

**शैलात्मजापि पितुरुच्छिरसोऽभिलाषं**
**व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च ।**

सख्योस्समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥१६॥ (कुसं. ४.७५)

(१.२ सांसर्गिकी)

संसर्गे भवा सांसर्गिकी।

सा च पूर्ववदेव जातादिभेदात् पञ्चधा। तत्र–

जाता यथा–(मेघ.१०४)

भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः।
आलिङ्ग्यन्ते गुणवति! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥१७॥

अनुबन्धिनी यथा–(कुन्द. ४.२०)

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
क्रीडापरिश्रमहरं व्यजनं रतान्ते।
शय्या निशीथकलहे हरिणेक्षणायाः
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥१८॥

प्रवृद्धा यथा–

आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घतां
गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे।
दत्त्वा पीलुशमीकरीरकवलं चेलाञ्चलेनादरा–
दुन्मृष्टं करभास्यकेसरसटाभाराग्रलग्नं रजः ॥१९॥

संपृक्ता यथा–(उराच. २.२८)

यस्यां ते दिवसास्तया सह तथा नीताः पुनः/यथा स्वे गृहे
यत्संबन्धकथाभिरेव नियतं दीर्घाभिरस्थीयत।
एकस्संप्रति नाशितप्रियतमस्तामेव पापः कथं
रामः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाष्य/व्य वा ॥२०॥

अनुवर्तिनी यथा–(किराता. ८.३७)

प्रियेण संगृह्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद् विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥२१॥

(१.३ आभियोगिकी)

**अभियोगप्रभवा आभियोगिकी।** सापि पञ्चधा। तत्र

**जाता** यथा—(मामा.१.३०)

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ २२॥

**अनुबन्धिनी** यथा—(मामा. १.३१)

अलसवलितमुग्धस्निग्धनिस्स्पन्दमन्दै—
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै—
रपहृतमपविद्धं पीतमुन्मूलितं च ॥२३॥

**प्रवृद्धा** यथा—(मामा. १.४३)

पश्यामि तामितइतः पुरतश्च पश्चा—
दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती—
मासङ्गतिर्यगपवर्तितदृष्टिवक्त्रम् ॥२४॥

**संपृक्ता** यथा—(मामा. १.३२)

यान्त्या मुहुर्विलुलिताधरमाननं तद्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥२५॥

**अनुवर्तिनी** यथा—(मामा. ४.१)

यद् व्यालव्रणितसुहृत्प्रमोहमुग्धं
सौजन्याद् विहितवती गतव्यथ माम् ।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च ॥२६॥

(१.४ आध्यात्मिकी)

अध्यात्मभवा **आध्यात्मिकी**। आत्मैव तामनुभवति, न चक्षुरादय इत्यर्थः। सापि पञ्चधा। तत्र–

**जाता** यथा–(शाकु. ५.१३)

**का स्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥२७॥**

**अनुबन्धिनी** यथा–(विक्रमो. ४.३९)

**तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः**
**शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।**
**नूनं मौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते**
**चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥२८॥**

**प्रवृद्धा** यथा–(शाकु. ५.२३)

**मय्येवमस्मरणदारुणचित्तवृत्तौ वृत्तं रहःप्रणयमप्रतिपद्यमाने ।**
**भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २९॥**

**संपृक्ता** यथा–(शाकु. ५.१९)

**इदमुपगतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।**
**भ्रमर इव विभाते कुन्दमन्तस्तुषारं न च खलु परिभोक्तुं नापि शक्नोमिहातुम् ॥**

**अनुवर्तिनी** यथा–(शाकु. ५.३१)

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।**
**बलवत्तु दूयमानं प्रत्याययतीव मां चेतः ॥ ३१॥**

(१.५ औपमानिकी)

. . . . **औपमानिकी**। सापि पञ्चधा। तत्र

**जाता** यथा–(मेघ. १०१)

**श्यामास्वङ्गं, चकितहरिणीप्रेक्षिते दृष्टिपातं**
**वक्त्रच्छायां शशिनि, शिखिनां बर्हभारेषु केशान् ।**
**उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्**
**हन्तैकस्मिन् क्वचिदपि न ते चण्डि! सादृश्यमस्ति ॥ ३२॥**

**अनुबन्धिनी** यथा–(मेघ. १०२)

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलाया–
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ३३॥

**प्रवृद्धा** यथा–(उराच. ६.२६)

अपि जनकसुतायास्तच्च तच्चानुरूपं स्फुटमिव शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णोरभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥

**संपृक्ता** यथा–(शाकु. २.३)

न नमयितुमधिज्यमस्मि शक्तो धनुरिदमाहितसायकं मृगेषु ।
सह वसतिमुपेत्य यैः प्रियायाः कृत इव मुग्धविलोकितोपदेशः ॥ ३५॥

**अनुवर्तिनी** यथा–(रामाभ्युदये)

यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गताः
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ३६॥

## (१.६. वैषयिकी)

**विषयेभ्यो भवा वैषयिकी।** सापि प्रञ्चधा शब्दस्पर्शरूपरसगन्धभेदात्। तत्र–
**शब्दे जाता** यथा–

विलासमसृणोल्लसन्मुसललोलदोःकन्दली–
परस्परपरिस्खलद्वलयनिस्स्वनोद्दन्तुराः ।
हरन्ति कलहुंकृतिप्रसभकम्पितोरस्स्थल–
त्रुटद्गमकसंकुलाः कलमकण्डनीगीतयः ॥ ३७॥

**अनुबन्धिनी** यथा–(रत्ना. २८)

दुर्वारां मदनशरव्यथां वहन्त्या कामिन्या यदभिहितं पुरस्सखीनाम् ।
तद्भूयः शुकशिशुशारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥ ३८॥

प्रवृद्धा यथा—(मामा. ६.८)

म्लानस्य जीवकुसुमस्य विकासनानि संतर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि (दिष्ट्या मया)परिगतानि वचोऽमृतानि ॥३९॥

संपृक्ता यथा—(मामा. ६.९)

नैराश्यकातरधियो हरिणेक्षणायाः श्रुत्वा निकामकरुणं च मनोहरं च ।
वात्सल्यदे/मोहपरिदेवितमुद्वहामि चिन्ताविषादविपदं च महोत्सवं च ॥४०॥

अनुवर्तिनी यथा—(कुसं. ३.३८)

गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रशोभं (लेखम्) ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुम्ब ॥४१॥

स्पर्शे जाता यथा—(काव्याद. २.११)

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥४२॥

अनुबन्धिनी यथा—(मामा. ४.८)

तन्मे मनः क्षिपति यत्सरसप्रहारमालेक्य मामगणितस्खलदुत्तरीया।
त्रस्तैकहायनकुरङ्गविलोलदृष्टिराश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥४३॥

प्रवृद्धा यथा—(उराच. १.३५)

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमादो प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥४४॥

संपृक्ता यथा—(विक्रमो. ४.६८)

समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः ॥४५॥

अनुवर्तिनी यथा—(विक्रमो. ३.१३)

यदयं रथसंक्षोभादंसेनांसो निपीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥४६॥

रूपे जाता यथा—(कुसं. ३.६७)

हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ ४७॥

अनुबन्धिनी यथा—(मामा. १.३९)

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ४८॥

प्रवृद्धा यथा—(मामा. ५.९)

संभूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्राप्नोति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादपचितैः सारैरिवोत्पादितं
तत् पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ ४९॥

संपृक्ता यथा—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिबृढः ॥ ५०॥

अनुवर्तिनी यथा—(मामा. २.२४)

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक् कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥ ५१॥

रसे जाता यथा—

अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नो कुरुते मुग्धे पिपासाकुलितं मनः ॥ ५२॥

अनुबन्धिनी यथा—(शाकु. ३.२१)

अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि! गृह्यते रसोऽस्य ॥५३॥

प्रवृद्धा यथा—(शाकु. ३.२२)

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लबाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥५४॥

संपृक्ता यथा—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत् तपः ।
तरुणि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥५५॥

अनुवर्तिनी यथा—

निरानन्दः कौन्दे मधुनि विधुरो बालवकुले
न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥५६॥

गन्धे जाता यथा—(मामा. ७.५)

प्रासादानामुपरि वलभीजालवातायनेभ्यो
भ्रान्तावृत्तिः परिणतसुरागन्धसम्पर्कहृद्यः ।
माल्यामोदी मुहुरुपचितस्स्फारकर्पूरवासो
वायुर्यूनामभिमतवधूसन्निधानं व्यनक्ति ॥५७॥

अनुबन्धिनी यथा—(रघु. ३.३)

तदाननं मृत्सुरभि क्षितीश्वरो रहः समाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥५८॥

प्रवृद्धा यथा—(माघ. ६.१२)

सुरभिणि श्वसिते दधतस्तृषं नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू मम न सौमनसौ मनसो मुदे ॥५९॥

संपृक्ता यथा—(कुसं. ८.७६)

आर्द्रकेसरसुगन्धि ते मुखं मत्तमत्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि! मदः करिष्यति ॥६०॥

अनुवर्तिनी यथा—

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूभ्यः ॥ ६१ ॥

(१.७ साम्प्रयोगिकी)

संप्रयोगप्रयोजना साम्प्रयोगिकी। सापि पञ्चधैव। तत्र

जाता यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ६२ ॥

अनुबन्धिनी यथा—

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं विमुञ्च म म मेति च मन्दं जल्पितं जयति मानवतीनाम् ॥ ६३ ॥

प्रवृद्धा यथा—

धन्यास्स्थ याः कथयथ प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि यदि किञ्चिदपि स्मरामि ॥ ६४ ॥

संपृक्ता यथा—

अद्यापि तत् कनककुण्डलघृष्टगण्ड—
मास्यं स्मरामि विपरीतरताभियोगे ।
आन्दोलनश्रमजलस्फुटघर्मबिन्दु—
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ६५ ॥

अनुबन्धिनी यथा, उत्तरचरिते चित्रदर्शनानन्तरं रामस्य—(उराच. १.२७)

किमपि किमपि मन्दं मन्दमासत्तियोगा—
दविरलितकपोलं जल्पतोरक्रमेण ।
सपुलकपरिरम्भव्यापृतैकैकदोष्णो—
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ ६६ ॥

(१.८ आभिमानिकी)

**अभिमानप्रभवा आभिमानिकी।** सापि पञ्चधा। तत्र

**जाता** यथा—(उराच. २.१९)

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत् तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ।।६७।।

**अनुबन्धिनी** यथा—

यदेव रोचते मह्यं तदेव कुरुते प्रिया ।
इति वेत्ति न जानाति तत् प्रियं यत् करोति सा ।।६८।।

**प्रवृद्धा** यथा—(उराच. १.३९)

अद्वैधं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्
विस्रम्भो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ।।६९।।

**सम्पृक्ता** यथा—(उराच. १.३८)

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो—
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदिपरमसह्यस्तु विरहः ।।७०।।

**अनुवर्तिनी** यथा—(रघु. १५.६१)

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेरासीद् यत् सैव जाया हिरण्मयी ।।७१।।

(२. प्रीतिः —८)

रतिरेव असंप्रयोगप्रयोजना **प्रीतिः**। सापि साम्प्रयोगिकीं विना आभ्यासिक्या सह रतिवदष्टप्रकारैव। पुनश्च जातादिभेदात् प्रत्येकं पञ्चधा। अत्र

(२.१) नैसर्गिकी

**जाता** यथा— (शाकु. ७.१७)

आलक्ष्यदन्तमुकुलाननबद्धहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्कागतान् प्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा परुषीभवन्ति ॥ ७२॥

अनुबन्धिनी यथा—(विक्रमो. ५.१२)

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ ७३॥

प्रकृष्टा यथा—(रघु. ३.२६)

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसम्मीलितलोचनो नृपश्चिरात् सुखस्पर्शरसज्ञतां ययौ ॥ ७४॥

सम्पर्किणी यथा—

अपरिष्वज्य भरतं नास्ति मे गच्छतो धृतिः ।
अस्मद्वियोगदुःखान्तं न त्वेनं द्रष्टुमुत्सहे ॥ ७५॥

अनुगामिनी यथा—(विक्रमो. ५.१४)

अहं हि पुत्रिणामग्र्यः सत्पुत्रेण तवामुना ।
पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः ॥ ७६॥

(२.२) सांसर्गिकी

जाता यथा—(उराच. १.३२)

दिष्ट्या सैष महाबाहुरञ्जनानन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ७७॥

अनुबन्धिनी यथा—(उराच. १.९)

विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां येषां कुलेषु सविता च गुरुर्वयं च ॥

प्रकृष्टा यथा—(मवीच. १.२१)

उत्पत्तिर्देवयजनाद् ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे ॥ ७९॥

संपृक्ता यथा—(विक्रमो. १.१४)

यावत् पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति संयोगं लताभिश्श्रीरिवार्तवी ॥ ८०॥

**अनुबन्धिनी** यथा–(रघु. १३.७२)

**लङ्केश्वरप्रणति/यभङ्गदृढव्रतं तद् वन्द्यं युगं चरणयोर्जनकात्मजायाः ।**
**ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधोरन्योन्यपावनमभूदुभयं समेत्य ॥ ८१॥**

**(२.३) आभियोगिकी**

**जाता** यथा–(शाकु. ७.२६)

**पुत्रस्य ते रणशिरस्ययमग्रयायी दुष्यन्त इत्यभिमतो भुवनस्य भर्ता ।**
**चापेन यस्य विनिवर्तितकर्मजातं तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ ८२॥**

**अनुबन्धिनी** यथा–(रघु. १३.७२)

**दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरः प्रहर्ता ।**
**इत्यादरेण कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ८३॥**

**प्रकृष्टा प्रवृद्धा** यथा–(उराच. ३.२४)

**ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः**
**स्फुटितकमलामोदप्रायाः प्रया/वान्तु वनानिलाः ।**
**कलमविरलं रजयत्कण्ठाः क्वणन्तु शकुन्तयः**
**पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ ८४॥**

**संपृक्ता** यथा–(वारा. ७.४०.२३)

**तदङ्गेषु जरां यातु यत् त्वयोपकृतं मम ।**
**नरः प्रत्युपकाराणामापत्सु लभते फलम् ॥ ८५॥**

**अनुगामिनी** यथा–(शाकु. ७.२)

**अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।**
**आमृष्ट–वक्षो–हरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ ८६॥**

**(२.४) आध्यात्मिकी**

**जाता** यथा–(किराता. ११.८)

**परितस्तं पृथासूनुर्लोभेन परितस्तरे ।**
**अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मनः ॥ ८७॥**

**अनुबन्धिनी** यथा–(विक्रमो. ५.९)

**बाष्पान्विता निपतिता मम दृष्टिरस्मिन् वात्सल्यबन्धि हृदयं मनसः प्रमोदः ।**
**सञ्जातवेपथुभिरुज्झितधैर्यवृत्तिरिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ ८८॥**

**प्रकृष्टा** यथा—(शाकु. ७.१९)

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैतत् ।
कां निर्वृतिं चेतसि तस्य कुर्याद् यस्यायमङ्गात् कृतिनः प्रारूढः ॥ ८९॥

**संपृक्ता** यथा—(उराच. ६.११)

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन—
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ९०॥

**अनुगामिनी** यथा—(उराच. ५.१६)

यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥ ९१॥

(२.५) औपमानिकी

**जाता** यथा—(उराच. ५.३)

मुनिजनशिशुरेकः सर्वतः संप्रकोपान्नव इव रघुवंशस्याप्रसिद्धः/द्धि-प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः कौतुकं मे करोति ॥

**अनुबन्धिनी** यथा—(उराच. ४.१९)

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकश्श्रियैव सभाजयन् ।
पुनरिव शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ ९३॥

**प्रकृष्टा** यथा—(उराच. ४.२२)

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पृक्तिः प्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा देवि! किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ ९४॥

संपृक्ता यथा—(उराच. ५.४)

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥९५॥

अनुगामिनी यथा—(उराच. ५.१७)

तदाकाराधिकाकारामालिङ्ग्य त्वां सुदुर्लभम् ।
वत्सच्छद्मा पुनर्वत्सस्स एवालिङ्ग्यते मया ॥९६॥

(२.६) वैषयिकी पुनः पञ्चधा। तत्र—

शब्दे जाता यथा—(उराच. ५.१७)

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालिङ्गिततुङ्गनीलशिखराः क्षोणीभृतो दक्षिणाः ।
अन्योन्यप्रतिघातसंकुलदलत्कल्लोलकोलाहलै—
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥९७॥

अनुबन्धिनी यथा—

नाधन्यैः क्षणदाविराममधुराः किञ्चिद्विनिद्रालस—
श्रोत्रैकव्रणमुग्धचारणवधूदन्तच्छदायासिनः ।
श्रूयन्ते मृदुपीतवक्त्रमरुतः पौराणरीतिक्रम—
व्यालोलाङ्गुलिरुद्धमुक्तसुषिरश्रोणीरवा वेणवः ॥९८॥

प्रकृष्टा यथा—

अव्यात् स्वर्लोकचूडामणिपटलशिखाश्रेणिशोणीकृताङ्घ्रौ
क्षोणीभारं विनेतुं जठरजुषि जगद्बान्धवे देवकी वः ।
राज्ञामुद्दामदोष्णां रणशिरसि लसत्कीकसच्छेदभीमाः
शस्त्राणां क्वाणकाराः प्रतिहतिगुरवो यच्छ्रुते/र्दोहदो/नोऽभूत् ॥९९॥

संपृक्ता यथा—(उराच. ६.१७)

अथ कोऽयमिन्द्रमणिमेचकच्छविर्ध्वनिनैव बद्धपुलकं करोति माम् ।
नवनीलनीरधरधीरगर्जितक्षणलब्धकुट्मलकदम्बदन्तुरम् ॥१००॥

अनुगामिनी यथा—(मामा. ६.४)

अस्माकमेकपद एव मरुद्विकीर्णजीमूतजालरसितानुकृतिर्निनादः ।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा शब्दान्तरग्रहणशक्तिमपाकरोति ॥१०१॥

स्पर्शे जाता यथा—(कुसं. १.१५)

भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥१०२॥

अनुबन्धिनी यथा—(माघ. १३.१६)

इह/भ—तुङ्गकुम्भघटितेतरेतरस्तनभारदूरविनिवारितोदरम्/राः ।
परिफुल्लेगण्डफलकाः परस्परं परिरेभिरे कुकुरकौरवस्त्रियः ॥१०३॥

प्रकृष्टा यथा—(उराच. ६.८)

दिनकरकुलचन्द्र चन्द्रकेतो! सरभसमेहि दृढं परिष्वजे त्वाम् ।
तुहिनशकलशीतलैस्तवाङ्गैः शममुपयातु ममापि चित्तदाहः ॥१०४॥

संपृक्ता यथा—(मामा. ९.३८)

तदेतदसितोल्लसद्द्युति शरीरमस्मिन्नभू—
न्ममापि दृढपीडनैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितविभ्रमाञ्चितनिपीतवत्यः पुरा
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥१०५॥

अनुगामिनी यथा—(शाकु. ४.११)

रम्यान्तरः कमलिनीभरितैस्सरोभिश्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥

रूपे जाता यथा—(मामा. ७.५)

अयमभिनवमेघश्यामलोत्तुङ्गसानु—
र्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबलनीलानोकहस्निग्धवर्षा/र्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥१०७॥

अनुबन्धिनी यथा—(विसा.१.२५, बारा.५.३८)

साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै—
र्बाह्लीकीदशनव्रणारुणदलैः पुष्पैरशोकोऽर्चितः ।
हूणीनां कुरुते मधूककुसुमं लावण्यलुण्टाकतां
लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरः ॥१०८॥

**प्रकृष्टा** यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥१०९॥

**संपृक्ता** यथा—

अभीकपीतान्तिकधूसरेभ्यो गर्भस्थताम्बूलरसारुणेभ्यः ।
परिश्रमं कर्षति काञ्चनारं पाञ्चालनारीदशनच्छदेभ्यः ॥११०॥

**अनुगामिनी** यथा—

तिक्ताविलासान्यधुना पुराणमाञ्जिष्ठचेलच्छविधूसराणि ।
अलम्बुसायाः कुसुमानि सीम्नि लोलन्ति मन्दं मरुदाहतानि ॥१११॥

**रसे जाता** यथा—

उच्छ्वस्योच्छ्वस्य दीर्घं कथमपि शनकैः पाटलागन्धगम्यं
प्रभ्रष्टं कर्करीतः स्फुटसितसिकतासेकसत्कर्णिकायाः ।
दूराद् धारानिपातप्रविततकणिकासिच्यमानाननेन
स्वच्छं धन्येन वारि द्रुततुहिनजडं पीयते पाणिनैव ॥११२॥

**अनुबन्धिनी** यथा—

इक्षुदण्डस्य मद्य/ण्डस्य दध्नः पिष्टकृतस्य च ।
वराहस्य च मांसस्य सैष गच्छति फाल्गुनः ॥११३॥

**प्रकृष्टा** यथा—(मवीच. ३.२)

संज्ञप्यते वत्सतरी सर्पिष्यन्नं च पच्यते ।
श्रोत्रिय! श्रोत्रियगृहानागतोऽसि जुषस्व नः ॥११४॥

**संपृक्ता** यथा—(माघ. ३.८१)

लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमापुः ॥११५॥

**अनुगामिनी** यथा—(रघु. ४.६५)

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ११६॥

गन्धे जाता यथा—(कुसं. १.९)

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥११७॥

अनुबन्धिनी यथा—

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥११८॥

प्रकृष्टा यथा—

असेसइह्लादं सदरुंमिइ अणेहिं मुहेहिं ।
अङ्ग आहरपुरओणअअ वसागंधगब्भिमा सिहिचाळ(?) ॥११९॥

संपृक्ता यथा—

मूले वृन्तं तदनु चिपिटं कुब्जपृष्ठं च किञ्चिद्–
व्यावृत्तान्तच्छदमथ ततः श्लिष्टमुत्पिञ्जलाग्रम् ।
वातोद्धूतादवनतमुखं बन्धिनीमुक्तसन्धे–
र्गन्धान्धा‌ऽऽलिस्खलितकुसुमं पाटलं पाटलायाम्(?) ॥१२०॥

अनुगामिनी यथा—

शून्यग्रामटिकोपकण्ठरचितक्षुद्रैककूपीपयः–
पर्यासाहितसेकशाकिकहरित्कच्छप्रदेशोद्भवाः ।
अस्मिन् हन्त! हरन्ति हालिकरतक्रीडाविमर्दस्फुटत्–
पक्वोर्बारुकगन्धगन्धितजरद्गोमायवो वायवः ॥१२१॥

(२.७) आभ्यासिकी(/साम्प्रयोगिकी)

जाता यथा—(शाकु. २.५)

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामुपलक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥१२२॥

अनुबन्धिनी यथा—(रघु. ९.६३)

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् ।
शिक्षाविशेषलघुहस्ततया निमेषात् तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥

प्रकृष्टा यथा–(रघु. ९.६९)

इति विस्मृतान्यकरणीयमात्मन: सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबद्धसेवया मृगया जहार चतुरेव कामिनी ॥१२४॥

संपृक्ता यथा–(रघु. ९.६७)

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियाया: ॥१२५॥

अनुगामिनी यथा–(शाकु. २.६)

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षति: पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनु: ॥१२६॥

(२.८) अभिमानिकी

जाता यथा–(उराच. ५.२)

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री–
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना–
मुपरि शरतुषारं कोऽप्ययं वीरपोत: ॥१२७॥

अनुबन्धिनी यथा–

हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशालविशिखव्रणलाञ्छितं मे ।
रोमाञ्चकञ्चुकितमद्‌भुतवीरलाभात्
सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम् ॥१२८॥

प्रकृष्टा यथा–(उराच. ६.१८)

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो–
र्दृप्तानां दमनाय दीपितनिजक्षात्रप्रतापाग्निभि: ।
आदित्यैर्यदि विग्रहो नृपतिभि: सद्यो ममैतत् ततो
दीप्ताग्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनु: ॥१२९॥

संपृक्ता यथा—(वेसं. ४.१)

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः ॥१३०॥

अनुगामिनी यथा—(विक्रमो. २.१६)

मया नाम जितं यस्मात् त्वयाऽयं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥१३१॥

सैष भावो रतिर्नाम कामकल्पद्रुमाङ्कुरः ।
सौहृदाङ्कुरकन्दश्च द्विप्रकारोऽपि दर्शितः ॥१३२॥

भावान्तरेभ्यः सर्वेभ्यो रतिभावः प्रकृष्यते ।
कविवर्गः समग्रोऽपि तमेनमनुधावति ॥१३३॥

निसर्गसंसर्गमुखैः प्रभेदैर्जन्मानुबन्धातिशयादिभिश्च ।
इदं विनिश्चित्य निवेशयन्तः कवीन्द्रभावं कवयो लभन्ते ॥१३४॥

## इति श्रीमहाराजाधिराजभोजदेवविरचिते शृङ्गारप्रकाशे रतिप्रकाशनो नाम
## ॥ त्रयोदशः प्रकाशः॥१३॥

कामपत्न्यावुभे ह्येते रतिप्रीती तयोरसौ ।
प्रकाशो भोजदेवेन हन्त गाढं प्रकाशितः ॥
सनातनस्य मे पुण्यं महदेव न संशयः ।
यस्याग्रे भोजकोशोऽयं विवृतात्माऽवतिष्ठते ॥



अथ

## श्रृङ्गारप्रकाशे चतुर्दशः प्रकाशः

हर्षादिभावप्रपञ्चपञ्चकप्रकाशः

### (३. हर्षः)*

**मनोरथावाप्तौ मनःप्रसादो हर्षः।** स

**जन्मनि** यथा—(मवीच १.१३)

**रक्षोघ्नानि च मङ्गलानि सुदिने कल्प्यानि दारक्रिया**
**वैदेह्याश्च रघूद्वहस्य च कुले दीक्षाप्रवेशश्च नः।**
**आस्थाप्यानि च तानि तानि जगतां क्षेमाय रामात्मनो**
**दैत्यारेश्चरिताद्‌भुतान्यथ खलु व्यग्राः प्रमोदामहे ॥१॥**

**अनुबन्धे** यथा—(रघु. ३.१६)

**जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसम्मिताक्षरम्।**
**अदेयमासीद् द्वयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥२॥**

**प्रकर्षे** यथा—(उराच. ५.२४)

**जातस्य ते पितुरपीन्द्रजितो निहन्तु—**
**र्वत्सस्य वत्स! कति नाम दिनान्यमूनि।**
**तस्याप्यपत्यमनुतिष्ठति वीरधर्मं**
**दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥३॥**

**संपृक्ते** यथा—(विक्रमो. ५.१६)

**आश्वासितस्य मम नाम सुतोपलब्ध्या**
**सद्यस्त्वया सह कृशोदरि! विप्रयोगः।**
**व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या**
**वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥४॥**

**अनुवृत्तौ** यथा—(रत्ना. ४.१३)

**विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा—**
**दविस्पष्टां दृष्टिं तिरयति मुहुर्बाष्पसलिलैः।**

---

* ६१४ पृष्ठगतमुद्देशक्रममनुसृत्य भावा अत्र नोपस्थाप्यन्ते मुद्रितेषु संस्करणेषु व्युत्क्रमेणोपस्थापितत्वात्।

स्खलद्वर्णां वाणीं जडयतितरां गद्गदितया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥५॥

(४. रोमाञ्चः)

आत्मनो विक्षोभजन्मा अन्तश्शरीरोच्छ्वासो रोमाञ्चः। तस्य जन्मनि यथा—(शाकु. ३.१२)

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥६॥

अनुबन्धे यथा—(रघु. ६.८१)

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥७॥

प्रकर्षे यथा—(कुसं. ३.६८)

विवृण्वती शैलसुताऽपि भावमङ्गैः क्वचित्/स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥

सम्पर्के यथा—(उराच. ३.४२)

सस्वेदरोमाञ्चितकम्पिता सा जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥९॥

अनुबन्धे यथा—(जाह. १०.८६)

एकस्मिन् शयने मया मयसुतामालिङ्ग्य निद्रालसा—
मुन्निद्रं शयितेन मच्चरणयोः संवाहनव्यापृता ।
पादाग्रेण तिलोत्तमा स्तनतटे सस्नेहमापीडिता
हर्षवेगसमर्पितानि पुलकान्यद्यापि नो मुञ्चति ॥१०॥

(५. धृतिः)

अभीष्टप्राप्तेरधिकाऽस्पृहा धृतिः।

तज्जन्मनि यथा—(किराता. ६.१८)

अनुसानु पुष्पितलतावितितिः फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरेस्तपसेऽधिवस्तुमचलामचलः ॥११॥

अनुबन्धे यथा—

विषयपतिरलब्धो धेनुभिर्धातुपूतं
कतिचिदभिमतायां सीम्नि सीरा वहन्ति ।
शिथिलयति न भार्यां चातिथेयीं सपर्या—
मिति सुकृतमनेन व्यञ्जितं नः फलेन ॥१२॥ (?)

प्रकर्षे यथा—(रत्ना. ४.१९)

यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥१३॥

संपर्के यथा—(मामा. २.३)

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्तिश्शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा—
मियं नः कल्याणी रमयति मनो मोहयति च ॥१४॥

अनुगमे यथा—

अभ्युष्णात् सघृतादन्नादच्छिद्राद् वाससः सितात् ।
अपरप्रेष्यभावाच्च भूरि वाञ्छन् विनश्यति ॥१५॥

## (६. हासः)

हर्षादिभिर्मनोविकासविशेषो हासः।

तज्जन्म यथा—

एतत् किं शिरसि स्थितं मम पितुः? खण्डः सुधादीधितेः
लालाटं किमिदं? विलोचनमिदं; हस्तेऽस्य किं? पन्नगः ।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः
प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः ॥१६॥

अनुबन्धो यथा—

मातर्जीव! किमेतदञ्जलिगतं तातेन गोपाय्यते?
वत्स! स्वादु फलं; प्रयच्छति न मे; गत्वा गृहाण स्वयम् ।

गौर्येत्थं गदिते गुहे विघटयत्याकृष्य सन्ध्याञ्जलिं
शम्भोर्भिन्नसमाधिरुद्धरभसो हासोद्गमः पातु वः ॥१७॥

प्रकर्षो यथा—

स एष भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्ति वपुषाऽधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥१८॥

संपर्को यथा—(खण्डयशस्तिः ३०)

वपुर्दलनसम्भ्रमात् स्वनखरं प्रन/विष्टे रिपौ
क्व यात इति विस्मयात् प्रहितलोचनः सर्वतः ।
वृथेति करधूतिभिर्निपतितं पुनर्दानवं
निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥१९॥

अनुगमो यथा—(रत्ना. १.२)

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽऽभिमुख्यं पुनः ।
पश्यन्ती परमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसताऽऽश्लिष्टा शिवायास्तु वः ॥२०॥

(७. गर्वः)

आत्मोत्कर्षसम्भावनया परावज्ञानं गर्वः।

तज्जन्म यथा—(उराच. २.३९)

यः प्रापत् प्रसभं पुराऽमृतहृतौ वह्निप्रभाभासुरैः
पक्षालीकलिता परप्रहरणैर्धैर्योचितं मण्डनम् ।
तेनास्मद्भुजपञ्जरेऽत्र विफलोत्फालान् मुहुः कुर्वता
व्यालोलेन गरुत्मताऽपि सुचिरं क्रीडाशकुन्तायितम् ॥२१॥

अनुबन्धो यथा—(वेसं. ३.७)

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण, व्रज कृप! समरं, मुञ्च हार्दिक्य! शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः? ॥२२॥

**प्रकर्षो** यथा—(वेसं. ३.४६)

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ॥ २३॥

**संपर्को** यथा—

चक्रं वा मधुहा कृतान्तगृहिणीदत्ताग्रपञ्चाङ्गुलं
वज्रं भूधरपक्षशोणितसुरापानोन्मदं वा वृषा ।
शूलं वाऽन्धकरक्तबिन्दुनिचितं गृह्णातु शूलायुधो
धृष्टद्युम्नमहं निहन्मि समरे कश्चित् परित्रायताम् ॥ २४॥

**अनुगमो** यथा—(उराच. २.३१)

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः? स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः? सोऽपि समं निजेन विभुना जानाति मां रावणम्
आः; ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥ २५॥

## (८. मदः)

मदिराद्युपयोगान्मनस्सम्मोहानन्दसंभेदो मदः।

**तज्जन्म** यथा—(कुसं. ८.७८)

पार्वती तदुपयोगसम्भवां विक्रियां गतवती मनोहराम् ।
अप्रतर्क्यविधियोगनिर्मितामाम्रतेव सहकारतां ययौ ॥२६॥

**अनुबन्धो** यथा—(कुसं. ८.८०)

घूर्णमाननयनं स्खलत्पदं स्वेदबिन्दुम—दकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ २७॥

**संपर्को** यथा—(किराता. ९.७३)

शीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुष्षु ।
ईहितं रतिरसाहितभावं वीतलक्ष्यमपि कामिषु रेजे ॥ २८॥

**अनुगमो** यथा—(किराता. ९.७७)

आमोदवासितचलाधरपल्लवेषु निद्राकषायितविपाटललोचनेषु ।
व्यामृष्टपत्रलतिकेषु विलासिनीनां शोभां बबन्ध वदनेषु मदस्य शेषाः ॥ २९॥

## (९. उत्साहः)

पुरुषार्थेष्वापरिसमाप्तेः प्रयत्नविशेष उत्साहः।

तज्जन्म यथा—(राच. १५.६७)

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापतीन्
आश्वास्याश्रुमुखान् मुहुः प्रियसखान् प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन् मारुतिः ॥ ३० ॥

अनुबन्धो यथा—(रघु. ६.७६)

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद् विभूतिम् ॥ ३१ ॥

प्रकर्षो यथा—

दिङ्नागातङ्कघटाविभक्तचतुराघाटा मही साध्यते;
सिद्धा सापि; वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते; किमपरं; रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ ३२ ॥

सम्पर्को यथा—(रघु. ५.२८)

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितमस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ ३३ ॥

अनुगमो यथा—(उराच. ६.१३)

शक्त्या वक्षसि मग्नया सह मया मूढे प्लवङ्गाधिपे
विद्राणेषु च विद्रवत्सु कपिषु प्राप्तावकाशे द्विषि ।
मा भैष्टेति निरुन्धतः कपिबलान् यस्योद्भटभ्रूस्थिते
मर्मच्छेदविसंस्थुलाक्षरजडा वाचस्त्वया न श्रुताः ॥ ३४ ॥

## (१०. मतिः)

शास्त्रपरिभावनयाऽर्थनिर्धारणं मतिः। तस्या

जन्म यथा—(शाकु. ५.२)

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः ।

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थितानि/स्थिराणि जननान्तरसौहृदानि ॥ ३५॥

**अनुबन्धो** यथा—(उराच. ६.१२, मामा. १.२७)

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ३६॥

**प्रकर्षो** यथा—(उराच. ३.४७)

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिव श्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव हि तत् समग्रम् ॥ ३७॥

**सम्पर्को** यथा—(मामा. ८.१४)

याता नु तद् भगवती भवनं सखी नो
जीवन्त्युपैष्यति न वेत्यथ शङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि
सौदामनीस्फुरणचञ्चलमेष सौख्यम् ॥ ३८॥

**अनुगमो** यथा—

तदेतत् तर्काणामपथमपदं विश्ववचसा-
मनाधारं बुद्धेर्नियतकरणग्रामसुहृदः ।
यदालोके यूनां कनकफलकस्फारजघना
घना लोका तन्वी किमपि कमनीयं जनयति ॥ ३९॥

## (११. वितर्कः)

**अर्थेषु यथामति ऊहो वितर्कः।** तस्य

**जन्म** यथा—(कुसं. १.४१)

शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशो मकरध्वजेन ॥ ४०॥

अनुबन्धो यथा–(शाकु. २.९)

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन विधिना मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्या ॥ ४१ ॥

प्रकर्षो यथा–(विक्रमो. १.१०)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२ ॥

संपर्को यथा–(कुसं. ७.६७)

न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ४३ ॥

अनुगमो यथा–(शाकु. १.१९)

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ ४४ ॥

## (१२. विस्मयः)

अतिशयितपदार्थदर्शनाच्चित्तविस्तारो विस्मयः। तस्य

जन्म यथा–

इमौ रम्भास्तम्भावुपरि विपरीतौ कमलयो–
स्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि तत् ।
ततः कुम्भौ पश्चाद् बिसकिसलये कन्दलमथो
तदन्विन्दाविन्दीवरमधुकराः; किं पुनरिदम्? ॥ ४५ ॥

अनुबन्धो यथा–(नीति. ६७)

इतो वसति केशवः कुलमितस्तदीयद्विषाम्
इतश्च शरणार्थिनः शिखरिणां गणाः शेरते ।
इतोऽपि बडबानलः सह समस्तसंवर्तकै–
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ४६ ॥

**प्रकर्षो** यथा–

कृष्णेनाद्य/म्ब! गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण! क एवमाह? मुसली, मिथ्याऽम्ब! पश्याननम् ।
व्यादेहीति विदारितेऽथ वदने दृष्ट्वा समग्रं जगद्
माता यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥४७॥

**संपर्को** यथा–(उराच. ६.३१, मामा. ९.१२)

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥४८॥

**अनुगमो** यथा–

वीचीव्याप्तवियन्निरुद्धवसुधं क्वागाधरन्ध्रं पयो
गोलाङ्गूलसलीलपाणितुलिताः क्षुद्राः क्व ते क्ष्माभृतः ।
बद्ध्वा दाशरथिस्तथापि जलधिं प्रत्याजहार प्रियां
ग्रावाणोऽपि तरन्ति वारिणि यदा पुंसोऽनुकूलो विधिः ॥४९॥

## (१३. वैक्लब्यम्)

रौद्रादिदर्शनान्मनसो वैक्लब्यं भयम्।

**तज्जन्म** यथा–

मन्त्रान् मृत्युजितो जपद्भिरसकृद् ध्यायद्भिरिष्टान् सुरान्
शुष्यत्तालुभिराकुलाकुलपदैर्निर्वाग्भिरुत्कम्पिभिः ।
अध्वन्यैरिह जीवितेशमहिषव्याधूम्रधूमाविला
लङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥५०॥

**अनुबन्धो** यथा–(मवीच. २.२०)

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तैः क्षणं वेत्रिभि–
र्दृष्टो दृष्टिविघातजिह्मितमुखैरव्याहतप्रक्रमः ।
रामान्वेषणतत्परः परिजनैरुन्मुक्तहाहारवः
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥५१॥

**प्रकर्षो** यथा—

वराहः कल्याणं वितरतु स वो यस्य शशभृ—
त्कलाकोटीकान्तं क्रमविगलदभ्युद्धतिभया ।
मिथस्संमूर्च्छद्भिश्चतुरुदधिकल्लोलपटलै—
रनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥५२॥

(१४. त्रासः)

**रौद्रादिजन्मा चित्तचमत्कारः त्रासः।** तस्य

**जन्म** यथा—(किराता. ८.४५)

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥५३॥

**अनुबन्धो** यथा—

किं मुग्धे! शुकपञ्जरेण रसिके! किं शारिकान्वेषणे
स्वच्छे! मुञ्चसि किं न चित्रफलकं किं वीणया रागिणि! ।
नायं भूषणसंग्रहस्य समयो लीलावति! त्वर्यता—
मित्यासन् पुरविद्रवे भवदरिस्त्रीणां वयस्यागिरः ॥५४॥

**प्रकर्षो** यथा—(ध्व.लो. २.५/६)

स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥५५॥

**संपर्को** यथा—(तिम. ४६)

श्रुत्वा यं सहसा गतं निजपुरात् त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दताम्यत्पुटाः ।
शुभ्रे वेश्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च मुहुर्मुहुर्विवलितग्रीवैर्विमुक्ता दृशः ॥५६॥

**अनुगमो** यथा—

अज्ज वि हरी चमक्कइ कह कह वि ण मंदरेण दलिआइं ।
चन्दकलाकंदलकोमलाइ लच्छीए अंगाइ ॥५७॥

(अद्यापि हरिश्चमत्कृतः कथं कथमपि न मन्दरेण दलितानि ।
चन्द्रकलाकन्दलकोमलानि लक्ष्म्या अङ्गानि ।।)

## (१५. शङ्का)

**अनिष्टागमोत्प्रेक्षणं शङ्का।** तस्या

**जन्म** यथा—(मवीच. २.१)

**दूराद्दवीयो धरणीधराभं यस्ताटकेयं तृणवद् व्यधूनोत् ।**
**हन्ता सुबाहोरपि ताटकारिः स राजपुत्रो हृदि बाधते माम् ।।५८।।**

**अनुबन्धो** यथा—(मामा. ८.१३)

**किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्**
**विरमतु परिहासश्चण्डि! पर्युत्सुकोऽस्मि ।**
**कलयसि परि/कलितोषं वल्लभे! देहि वाचं**
**भ्रमति हृदयमन्तर्विह्वलं निर्दयाऽसि ।।५९।।**

**प्रकर्षो** यथा—(मामा. ८.१२)

**मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे—**
**रविरतमनुबन्धोत्कम्प एवान्तरात्मा ।**
**स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं**
**वचनमिह भवत्योः सर्वथा हा हतोऽस्मि ।।६०।।**

**संपर्को** यथा—(मवीच. ४.११)

**हा वत्साः! खरदूषणत्रिशिरसो वध्यास्स्थ पापस्य मे**
**हा हा वत्स विभीषण! त्वमपि मे कार्येण हेयः स्थितः ।**
**हा मद्वत्सल वत्स रावण! महत् पश्यामि ते सङ्कटं**
**वत्से केकसि! हा हताऽसि नचिरात् त्रीन् पुत्रकान् द्रक्ष्यसि ।।६१।।**

**अनुगमो** यथा—(बारा. ९.५५)

**हेलाखण्डितचण्डहेमहरिणैर्बाणैः कुलं विद्विषां**
**शेषीभूतविभीषणं गुणनिधौ कृत्वा तु रामे स्थिते ।**
**प्रत्युज्जीवनशङ्कया यदचितो लङ्कापतेः कातरै—**
**र्नो मुक्ताः कुसुमस्रजो न च सुरैरास्फालितो दुन्दुभिः ।।६२।।**

(१६. स्तम्भः)

भयानुरागादिजन्मा चेष्टाप्रतिघातः स्तम्भः। तस्य

जन्म यथा—(रघु. २.३१)

वामेतरस्तम्य भुजः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ६३॥

अनुबन्धो यथा—(सेब. २.४२)

साअरदंसणहित्था अक्खित्तोवसरिअवेवमाणसरीरा ।
सहसा लिहिअ व्व ठिआ णिप्पंदणिराअलोअणा कइणिवहा ॥ ६४॥
(सागरदर्शनत्रस्ताः आक्षिप्तापसृतवेपमानशरीराः ।
सहसा लिखिता इव स्थिताः निस्स्पन्दनिरायतलोचनाः कपिनिवहाः ॥)

प्रकर्षो यथा—(उराच.५.१३)

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतमजितवीर्ये जृम्भते जृम्भकास्त्रम् ॥ ६५॥

संपर्को यथा—(कुसं. ५.८५)

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेप एव पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥

अनुगमो यथा—(रघु. २.३२)

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रप्रतिबद्धवीर्यः ॥ ६७॥

(१७. स्वेदः)

श्रमानुरागाद्यपेक्षमनःक्षोभजन्मा वपुर्जलोद्भेदः स्वेदः। तस्य

जन्म यथा—(कुसं. ३.३६)

हिमव्यपायाद् विशदाधराणामापाण्डरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ६८॥

अनुबन्धो यथा—(किराता. १७.८)

तस्याहवायासविलोलमौलेः संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतस्तं प्रस्नापयामास मुखं निदाघः ॥ ६९॥

**प्रकर्षो** यथा—(सूमु. १०)

करस्पर्शानन्दात् पुलकितपृथूरोजकलशे
श्रमाम्भो वामार्धे वमति मदनाकूतसुलभम् ।
विभोर्वारं वारं कृतसमधिकोद्धूलनविधि:/धे—
स्तनौ भस्मस्नानं कथमपि समाप्तं विजयते ॥७०॥

**सम्पर्को** यथा—(माघ. १०.८०)

प्राप्य मन्मथमदादतिभूमिं दुर्वहस्तनभरा: सुरतस्य ।
शश्रमु: श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्य: ॥७१॥

**अनुगमो** यथा—(रघु. ८.५१)

सुरतश्रमवारिबिन्दवो न तु तावद् विरमन्ति ते मुखे ।
स्वयमस्तमितास्यहो! बत क्षयिणां देहभृतामसारता ॥७२॥

## (१८. स्वरभेद:)

**हर्षादिजन्मा वाग्भङ्ग: स्वरभेद:।** तस्य

**जन्म** यथा—

वासिष्ठै: सुकृतोद्भवोऽध्वरशतैरस्त्यग्निकुण्डोद्भवो
भूपाल: परमार इत्यधिपति: सप्ताब्धिकाञ्चेर्भुव: ।
अद्याप्युद्गतहर्षगद्गदगिरो गायन्ति यस्यार्बुदे
विश्वामित्रजयोज्झितस्य भुजयोर्विस्फूर्जितं गुर्जरा: ॥७३॥ (तिम.)

**अनुबन्धो** यथा—(रघु. ८.४३)

विललाप स बाष्पगद्गद: सहजामप्यवधूय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते; कैव कथा शरीरिषु ॥७४॥

**प्रकर्षो** यथा—(उराच.१.१२)

आनन्दाश्रुतरङ्गलोचनयुगं मार्गार्पितं बिभ्रती
हर्षाद् गद्गदया गिरा परिजनं व्यापारयन्ती मुहु: ।
सैषा स्वाशयनिर्विकल्पहृदया सौख्याच्चिरप्रार्थिता—
दम्बा निष्करुणेन दग्धविधिना दूरं विसंवादिता ॥७५॥

**संपर्को** यथा—(सूमु. ३)

**पि पि प्रिय स स स्वयं मु मु मुखासवं देहि मे**
**त त त्यज दु दु द्रुतं भ भ भ भाजनं काञ्चनम् ।**
**इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः**
**प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥७६॥**

**अनुगमो** यथा—(किराता. ९.५०)

**पाणिपल्लवविधूननमन्तस्सीत्कृतानि नयनार्धनिमेषाः ।**
**योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥७७॥**

## (१९. वेपथुः)

**भयानुरागाद्यपेक्षचित्तविक्षोभजः कम्पो वेपथुः।**

**तज्जन्म** यथा—(दअ. २.२३)

**मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति ।**
**अन्याऽपि किं सखि! न भाजनमीदृशानां वैरी न चेद् भवतु वेपथुरन्तरायः ॥७८॥**

**अनुबन्धो** यथा—(मामा. ७.२)

**रम्भोरु! संहर भयं क्षमते विकारमुत्कम्पितस्स्तनभरस्य न मध्यभागः ।**
**इत्थं त्वयैव कथितप्रणयप्रसादः सङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥७९॥**

**प्रकर्षो** यथा—(मवीच. २.२१)

**आतङ्कश्रमसाध्वसव्यतिकरोत्कम्पः कथं सह्यता—**
**मङ्गैर्मुग्धमधूकपुष्परुचिभिर्लावण्यसारैरयम् ।**
**उन्नद्धस्तनकुम्भकुड्मलगुरुश्वासावभुग्नस्य ते**
**मध्यस्य त्रिवलीतरङ्गकजुषो भङ्गः प्रिये! मा च भूत् ॥८०॥**

**सम्पर्को** यथा—(मामा. १.३८)

**वारंवारं तिरयति दृशावुद्गतो बाष्पपूर—**
**स्तत्सङ्कल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।**
**सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः**
**पाणिर्लेखाविधिषु नितरां वर्तते; किं करोमि ॥८१॥**

**अनुगमो** यथा—

**पप्फुरिअ उट्ठदलअं** (अत्रैव पृ. १०.३६५)

## (२०. व्रीडा)

वर्णनानुरागादिजन्मा मनस्सङ्कोचो व्रीडा। तस्या

**जन्म** यथा—(रघु. ७.२३, कुसं. ७.७५)

तयोरपाङ्गप्रतिसारितानि किञ्चिद् व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ।। ८२।।

**अनुबन्धो** यथा—(वेसं. ४.१५)

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुश्शासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ।। ८३।।

**प्रकर्षो** यथा—(उराच. ५.६)

द्विषन्निहतरक्षसां सुतसुहृद्वधूबान्धव—
प्रलापमतिदुस्सहं प्रथितखेदमाकर्णयन् ।
निजान्यपि मुखान्यहो नमितकन्धरो दुर्मना
न संप्रति दशाननः सुचिरमीक्षते लज्जया ।। ८४।।

**सम्पर्को** यथा—(सूमु. १६)

प्रत्यग्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयः ।
पार्थस्याकृतशात्रवप्रतिकृतेरन्तश्शुचा मुह्यतो
हा वत्सेति गिरस्स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद् बहिः ।। ८५।।

**अनुगमो** यथा—(सूमु. १०)

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृत—
व्यालोलालकपद्धतिः पथि पुरो बद्धाञ्जलिः पृच्छति ।
यावत् किञ्चिदुदन्तमात्मकमितुस्तावत् स एवेत्यथ
व्रीडावक्रितकण्ठनालमबला कैः कैर्न भिन्ना रसैः ।। ८६।।

## (२१. अवहित्थम्)

इङ्गिताकारगोपनमवहित्थम्। तस्य

**जन्म** यथा—(शाकु. २.१८)

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः ।। ८७।।

**अनुबन्धो** यथा—(कुसं. ६.८४)

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ।।८८।।

**प्रकर्षो** यथा—(गास. २.९९)

पाअडिअ—सणेहसब्भाव—विब्भमं तीए जह तुमं दिट्ठो ।
संवरण—वावडाए अण्णो वि जणो तह च्चेअ ।। ८९।।
(प्रकटितस्नेहसद्भावविभ्रमं तया यथा त्वं दृष्टः ।
संवरणव्यापृतयाऽन्योऽपि जनस्तथैव ।।)

**संपर्को** यथा—(शाकु. २.११)

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ।। ९०।।

**अनुगमो** यथा—

प्रम्लानोत्पलकोमले सखि! दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके संवर्धितः पाण्डिमा ।
श्वासाः सन्तु च कन्दुकभ्रमिभुवः किं तु प्रभा—वाहिना—
मङ्गानां क्रशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ।। ९१ ।।

## (२२. चपलता)

**मनसोऽस्थैर्यं चपलता।** तस्या

**जन्म** यथा—(रघु. ७.६, कुसं. ७.५७)

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि च केशपाशः ।। ९२।।

**अनुबन्धो** यथा—(रघु. ७.७, कुसं. ७.५८)

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ।। ९३।।

**प्रकर्षो** यथा—(रघु. ७.८, कुसं. ७.५९)

**विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती ।। ९४।।**

**संपर्को** यथा—(रघु. ७.९, कुसं. ७.६०)

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ।। ९५।।**

**अनुगमो** यथा—(रघु. ७.११, कुसं. ७.६२)

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ।। ९६।।**

## (२३. आलस्यम्)

**शृङ्गारादिभिर्मानसः क्रियाविद्वेष आलस्यम्।** तस्य

**जन्म** यथा—(गास. २.४८)

**णिद्दालस—परिघुम्मिर—तंस—वलंतद्ध—तारआलोआ ।**
**कामस्स वि दुव्विसहा दिट्ठि—णिवाआ ससिमुहीए ।। ९७।।**
(निद्रालस—परिघूर्णन—शील—तिर्यग्वलदर्धतारकालोकाः ।
कामस्यापि दुर्विषहा दृष्टिनिपाताः शशिमुख्याः ।।)

**अनुबन्धो** यथा—

**आर्द्राः स्रजो मलयजोदकमच्छमेकं वासश्च वासवरिपुर्ममृषेऽलसाङ्गः ।**
**सञ्चिक्लिशे कलितरुद्रनिकेतनाद्रिभरिण तत्क्षणमसौ मणिभूषणानाम् ।। ९८।।**

**प्रकर्षो** यथा—(गास. ३.६१)

**घरिणि—घणत्थण—पेळ्ळण—सुहेल्लि—पडिअस्स होंतपहिअस्स ।**
**अवसउणंगारअ—वारविट्ठिदिअहा सुहावेन्ति ।। ९९।।**
(गृहिणीघनस्तनप्रेरणसुखकेलिपतितस्य भविष्यत्पथिकस्य ।
अपशकुनाङ्गारकवारविष्टिदिवसाः सुखापयन्ति ।।)

**सम्पर्को** यथा—(मामा. १.३१)

**अलसलुलितमुग्धस्निग्धनिस्स्पन्दमन्दैरधिक—विकसदन्तर्विस्मयस्मेरतारैः ।**
**हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ।।१००।।**

**अनुगमो** यथा— **उत्तिष्ठन्त्या रतान्ते०** (अत्रैव १०.२१, १३.६२)

## (२४. निद्रा)

इन्द्रियाणां निमीलनं निद्रा। तस्या

जन्म यथा—

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना—
न्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलः पातु वः।
यत्संस्कारकलानुवर्तनवशाद् वेलाच्छलेनाम्भसां
यातायातमहर्निशं जलनिधेर्नाद्यापि विश्राम्यति ॥१०१॥

अनुबन्धो यथा—(किराता. १६.२७)

आसादिता तत्प्रथमं प्रसह्य प्रगल्भतायाः पदवीं हरन्ती।
सहे/भेव भीमा विदधे गणानां निद्रा निरासं प्रतिभागुणस्य ॥१०२॥

प्रकर्षो यथा—(रघु. ७.६२)

ततो धनुष्कर्षणमूढस्तमेकान्तपर्यस्तशिरस्त्रजालम्।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥१०३॥

सम्पर्को यथा—(किराता. १६.३०)

अंसस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेषवतां तरूणाम्।
मदेन मीलन्नयनाः सलीलं नागा इव स्रस्तकरा निषेदुः ॥१०४॥

अनुगमो यथा—(माघ. ११.४)

प्रहरकमपनीय स्वं निनिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥१०५॥

## (२५. सुप्तम्)

निद्रादिकार्यं सुप्तम्। तस्य

जन्म यथा—

आश्लेषिणः पृथुतरक्लमपीतशीतमायामिनीं घनमदो रजनीर्युवानः।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥१०६॥

**अनुगमो** यथा—(गास.७.१७)

**ओसुअइ दिण्णपडिवक्खवेअणं पसिढिलेहि अंगेहिं ।**
**णिव्वत्तिअ-सुरअ-रसाणुबंधसुहणिब्भरं सुण्हा ॥१०७॥**
(अवस्वपिति दत्तप्रतिपक्षवेदनं प्रशिथिलैरङ्गैः ।
निर्वर्तितसुरतरसानुबन्धसुखनिर्भरं स्नुषा ॥)

**प्रकर्षो** यथा—(सूमु. १५)

**लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकलमपलालस्रस्तरे सोपधाने ।**
**परिहरति सुषुप्तिं हालिकद्वन्द्वमारात् कुचकलशमहोष्माबद्धरेखस्तुषारः ॥१०८॥**

**सम्पर्को** यथा—(कुसं. ५.५७)

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसाऽप्यबुध्यत ।**
**क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥१०९॥**

**अनुगमो** यथा—(गास. १.२६)

**ण कुणंतो चिअ माणं णिसासु सुह-सुत्त-दर-विबुद्धाणं ।**
**सुण्णइअ-पास-परिमूसण-वेअणं जइ सि जाणंतो ॥११०॥**
(नाकरिष्य एव मानं निशासु सुखसुप्तदरविबुद्धानाम् ।
शून्यीकृतपार्श्वपरिमोषणवेदनां यद्यज्ञास्यः ॥)

## (२६. प्रबोधः)

**निद्रात्ययेषु चेतनालाभः प्रबोधः।** तस्य

**जन्म** यथा—(कुसं. ८.८५)

**स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।**
**मूर्च्छनापरिगृहीतकैशिकैः किन्नरैरुषसि गीतमङ्गलः ॥१११॥**

**अनुबन्धो** यथा—(मुरा. ३.२१)

**प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्न/कल्यदीपप्रभाणा—**
**मात्मव्यापारगुर्वी जनितजललवा जृम्भितैः स्वाङ्गभङ्गैः ।**
**नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवाळोपधानं**
**निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥११२॥**

**प्रकर्षो** यथा—(माघ. ११.६)

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगान्
उदधिमहति राज्ये काव्यवद् दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥११३॥

**सम्पर्को** यथा—(रघु. ९.७१)

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विधूतनिद्रः ।
अरमत मधुरस्वराणि शृण्वन् विहगविकूजितवन्दिमङ्गलानि ॥११४॥

**अनुगमो** यथा—

विस्रम्भादुपसृज्य पीडन—नमत्प्रोत्तुङ्गपीनस्तने
श्वासावेग विकम्पिना स्तनयुगेनापीडिते वक्षसि ।
ईषन्मीलितनेत्रया श्लथभुजापाशं चिरादागतो
नाधन्यः परिरभ्यते दयितया जाग्रत्स्वपत्या निशि ॥११५॥

चतुर्विंशतिरित्येते भावा हर्षादिसंज्ञकाः!
*(संप्रयोगाश्रयाः प्रोक्तास्तैस्तैर्युक्तैर्निदर्शनैः)* ॥[1]
अतः परं प्रवक्ष्यन्ते विप्रलम्भसमाश्रयाः ।
चतुर्विंशतिरुत्कण्ठाचिन्तास्मृत्यादयोऽपरे ॥११६॥

## (२७. उत्कण्ठा)

तत्र प्रायेण विप्रलम्भाश्रयभावचतुर्विंशादिकं उदाह्रियन्ते। तत्र **मनसोऽशान्तिरुत्कण्ठा**। तस्या

**जन्म** यथा—(अमरु. ९९)

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै—
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाऽश्रुपूर्णे दृशौ
तामाशां पथिकस्तथाऽपि किमपि ध्यायन् मुहुर्वीक्षते ॥११७॥

**अनुबन्धो** यथा—(कुसं. ६.९५)

पशुपतिरपि तान्यहानि कृच्छ्राद‍गमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥११८॥

---

१. इदमस्माभिरपूरि

प्रकर्षो यथा—(मामा. ९.४६)

प्रयान्तीव प्राणाः सुतनु! हृदयं ध्वंसत इव
जवलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय—
स्तदक्ष्णोरानन्दं वितर मयि मा भूरकरुणा ।।११९।।

सम्पर्को यथा—(मामा.१.१८)

भूयो भूयस्सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात् कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ।।१२०।।

अनुगमो यथा—(शाकु. ४.६)

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृष्टिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लब्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ।।१२१।।

## (२८. चिन्ता)

दृष्टश्रुतानुमितेषु प्राप्तिपरिहारार्थमुपायपरिभावना मनसश्चिन्ता। तस्या जन्म यथा—

सन्ध्या रागवती स्वभावकुटिला गङ्गा द्विजिह्वः फणी
वक्रोऽन्तर्मलिनः शशी च सततं जात्यैव मूर्खो वृषा ।
इत्थं दुर्जनसङ्कुले पतिगृहे वासः कथं सह्यतां
देव्याः पाणिनिविष्टमास्यमसकृच्चिन्तान्वितं पातु वः ।।१२२।।

अनुबन्धो यथा—(मेघ. १००)

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रवम् अविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ।।१२३।।

प्रकर्षो यथा—(मामा. ५.१०)

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि—
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥१२४॥

संपर्को यथा—(महानाटकं ३.२४)

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम! गतोऽसीति सन्तापादनुमीयसे ॥१२५॥

अनुगमो यथा—

व्रीहिः स्तम्बकरिः प्रभूतपयसः प्रत्यागता धेनवः
प्रत्युज्जीवितमिक्षुणा भृशमिति ध्यायन्नपेतान्यधीः ।
सान्द्रोशीरकुटुम्बिनीस्तनभरव्यालुप्तघर्मक्लमो
देवे नीरमुदारमुज्झति सुखं शेते निशि ग्रामणीः ॥१२६॥

## (२९. स्मृतिः)

मनसि अनुभूतार्थप्रतिबिम्बनं स्मृतिः। तस्या

जन्म यथा—(रघु. १३.३५)

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तिम्/सुप्तः ॥१२७॥

अनुबन्धो यथा—(रघु. १३.२८)

पूर्वानुभूतं स्मरता च रात्रौ कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथञ्चिद् घनगर्जितानि ॥१२८॥

प्रकर्षो यथा—(उराच. १.१८)

समयस्स वर्तत इहैष मां समनन्दयत् सुमुखि! गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कणस्तव मूर्तिमानिव महोत्सवः करः ॥१२९॥

संपर्को यथा—(उराच. २.२७)

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशश्शैलानां तदिदमिति बुद्धिं द्रढयति ॥१३०॥

अनुगमो यथा–(शाकु. ६.९)

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
गृहे तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥१३१॥

(३०. क्रोधः)

मनःप्रतिकूलेषु तैक्ष्ण्यप्रतिबन्धः(प्रबोधः) क्रोधः। तस्य जन्म यथा–(कुसं. ३.७१)

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्य/क्षमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥१३२॥

अनुबन्धो यथा–(वेसं. ३.३२)

यो यश्शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥१३३॥

प्रकर्षो यथा–(वेसं. ३.४७)

कृष्टा येन विलोलकेशनिवहा पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरस्स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥१३४॥

सम्पर्को यथा–(उराच. २.१३)

इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चायं दुष्टात्मा स्वसुरपकृतं येन मम तत्।
इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कृतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥१३५॥

अनुगमो यथा–(मवीच. २.४६)

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
कुठारः कम्बुकण्ठस्य कष्टं कण्ठे लुठिष्यते ॥१३६॥

## (३१. अमर्षः)

कृतापराधेषु क्रोधाप्रशान्तिरमर्षः। तस्य

जन्म यथा—(मवीच. २.९)

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
दुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षं च परस्य मानयशसोर्विस्त्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ॥१३७॥

अनुबन्धो यथा—(ध्वन्यालोक ३)

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनपरैः पीनैः किमेभिर्भुजैः ॥१३८॥

प्रकर्षो यथा—(वेसं. ३.२३)

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु निदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना—
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥१३९॥

सम्पर्को यथा—(मवीच. २.२९)

यत्क्षत्रियेष्वपि पुनस्स्थितमाधिपत्यं तैरेव संप्रति धृतानि पुनर्धनूंषि।
उन्माद्यतां भुजमदेन मयाऽपि तेषामुच्छृङ्खलानि चरितानि पुनश्श्रुतानि ॥१४०॥

अनुगमो यथा—(वेसं. १.८)

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः स्वस्था भवन्ति/न्तु मयि जीवति धार्तराष्ट्राः॥१४१॥

## (३२. असूया)

परर्द्ध्यसहनमसूया। तस्या

जन्म यथा—(रघु. ९.६४)

निर्घातोग्रैः कुञ्जलीनान् जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान्।
नूनं तेषामभ्यसूयापरोऽभूद् वीर्योदग्रे राजशब्दे मृगाणाम् ॥१४२॥

अनुबन्धो यथा—(रघु. ३.४९)

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयश्शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥१४३॥

प्रकर्षो यथा—(रघु. ७.३४)

प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
ततो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥१४४॥

संपर्को यथा—(उराच. ५.३४)

वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥१४५॥

अनुगमो यथा—(रघु. ३.६३)

असक्तमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमाद् वरं वृणीष्वेति तमाह वासवः ॥१४६॥

## (३३. ईर्ष्या)

समानेषु दानमानाद्यमर्षणमीर्ष्या। तस्या

जन्म यथा—

गोत्राद् गोत्रमुपैति या चलतया, या पादमूलात् प्रभो—
र्भ्रष्टा, या च पितुर्ममैव कटके दृष्टा वहन्ती ज(ड)लम् ।
सेयं सागरिका त्वया पशुपते! मूर्धानमारोपिते—
त्युक्तः कोपकषायपाटलदृशा गौर्या हरः पातु वः ॥१४७॥

अनुबन्धो यथा—

कुविआ अ सच्चहामा समे वि वहुआण णवर माणक्खलणे ।
पाअडिअ-हिअअ-सारो पेमासंघसरिसो पअट्टई मण्णू ॥१४८॥
(कुपिता च सत्यभामा समेऽपि वधूनां केवलं मानस्खलने ।
प्रकटितहृदयसारः प्रेमाशंसासदृशः प्रवर्तते मन्युः ॥)

**प्रकर्षो** यथा—(वेसं. ३.४५)

अयं यावत् पापो न निधनमुपेयादरिशरैः
परित्यक्तं तावत् प्रियमपि मयाऽस्त्रं रणमुखे ।
बलानां नाथेऽस्मिन् परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे ॥१४९॥

**संपर्को** यथा—(अमरु. ६०)

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसः
क्रीडातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥१५०॥

**अनुगमो** यथा—(कुसं. ८.४९)

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥१५१॥

## (३४. उग्रता)

**दोषतो वाग्दण्डपारुष्यमुग्रता।** तस्या

**जन्म** यथा—(विक्रमो. ५.१)

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥१५२॥

**अनुबन्धो** यथा—(राच. १९.८९)

तेनाथ नाथ दुरुदाहरणातपेन सौम्याऽपि नाम परुषत्वमभिप्रपन्ना।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती वागार्चिषाषस्तपनकान्तशिलेव सीता॥१५३॥

**प्रकर्षो** यथा—(वेसं. ३.२४)

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि बलिं दिशाम् ॥१५४॥

**सम्पर्को** यथा—(मामा. ५.३१)

**प्रणयसखीसलीलपरिहासरसाधिगतै—**
**र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।**
**वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः**
**पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥१५५॥**

**अनुगमो** यथा—(मामा. ८.८)

**क्व त्वत्प्रियः क्व च तपस्विजनस्य हन्ता**
**कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।**
**श्येनावपातचकिता वनवर्तिकेव**
**किं चेष्टसे ननु चिरात् कबलीकृताऽसि ॥१५६॥**

**(३५. उन्मादः)**

**कामाद्यभिषङ्गातिशयादसम्बद्धप्रलाप उन्मादः।** तस्य

**जन्म** यथा—(मवीच. १.५५)

**एह्येहि वत्स रघुनन्दन! पूर्णचन्द्र चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।**
**आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥१५७॥**

**अनुबन्धो** यथा—(विक्रमो. ४.३३)

**तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना**
**विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।**
**यदाविद्धं याति स्खलितमभिसन्धाय बहुशो**
**नदीभावेनेयं ध्रुवमसहना सा परिणता ॥१५८॥**

**प्रकर्षो** यथा—(मामा. ९.२७)

**नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गेषु गजेषु यातम् ।**
**लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रियाऽस्मिन् ॥१५९॥**

**संपर्को** यथा—(विक्रमो. ४.३३)

**हंस! प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।**
**सम्भावितैकदेशेन देयं यदभियुज्यते ॥१६०॥**

**अनुगमो** यथा—(मामा. ९.४२)

**भ्रमय जलदानम्भोगर्भान् प्रमोदय कोकिलान्/चातकान्**
**कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान् ।**

विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा—
मकरुण! पुनस्संज्ञाव्याधिं विहा/धाय किमीहसे ॥१६१॥

(३६. व्याधिः)

भयानुरागादिजन्मा मनश्शरीराभिषङ्गो व्याधिः। तस्य जन्म यथा—(मामा. ३.९)

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं (तदयमति)धीरोऽपि विषमम् ।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि वा (चा)पाण्डुमधुरं
वपुः क्षामं क्षामं वहति रमणीयञ्च(श्च) भवति ॥१६२॥

अनुबन्धो यथा—(मामा. २.१)

मनोरोगस्तीव्रो विषमिव विसर्पन्नविरतं
प्रमाथी निर्धूमं जवलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं जवर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति, नचाऽम्बा, न भवती ॥१६३॥

प्रकर्षो यथा—(कुसं. ५.५५)

तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसङ्घातशिलातलेष्वपि ॥१६४॥

संपर्को यथा—(रत्ना. २.१२)

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथाऽन्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापम्लापिताभ्यां यथाऽस्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥१६५॥

अनुगमो यथा—(मामा. ६.६)

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव—
श्रियमुदयिनीमत्यर्थं च व्यनक्ति मनोरुजम् ॥१६६॥

(३७. ग्लानिः)

मनःपीडादिजन्मा शरीरावसादो ग्लानिः। अस्या
जन्म यथा—

प्रकृत्या रमणीयोऽपि क्षीयमाणः प्रतिक्षणम् ।
दुःखमावहति प्रातः शशीवापाण्डुरच्छविः ॥१६७॥

अनुबन्धो यथा—(उराच. ३.५)

किसलयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥१६८॥

प्रकर्षो यथा—(मामा. १.२५)

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी—
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥१६९॥

सम्पर्को यथा—(शाकु. ३.७)

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्षामतरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥१७०॥

अनुगमो यथा—(किराता. १८.६)

निपतितेऽधिशिरोधरमायते सममरन्त्रि(त्नि)युगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना लुलितमौलि मदादिव चस्खले ॥१७१॥

(३८. श्रमः)

निरतिशयप्रयासजन्मा (म)नःशरीरायासः श्रमः। तस्य
जन्म यथा—

तनुरियं तरलायतलोचने श्वसितकम्पितपीनघनस्तनी ।
श्रममपास्य गता तपसे पुनः किमिति सम्भ्रमकारिणि खिद्यते ॥१७२॥

**अनुबन्धो** यथा—(मामा. ३.८)

**स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं**
**जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।**
**मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद—**
**स्त्वयि विलसति तुल्यं वल्लभालोकनेन ।।१७३।।**

**प्रकर्षो** यथा—(शाकु. १.२६)

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्**
**अद्यापि स्तनवेपथुं न जहति श्वासः प्रमाणाधिकः ।**
**बद्धं कर्णशिरीषरोधि वदने धर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ।।१७४।।**

**संपर्को** यथा—(शाकु. ५.६)

**औत्सुक्यमात्रमवसाययति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।**
**नैव श्रमापनयनाय न च श्रमाय राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ।।१७५।।**

**अनुगमो** यथा—(किराता. ८.३)

**निवृत्तवृत्तोरुपयोधरक्लमः प्रवृत्तिनिर्ह्रादिविभूषणारवः ।**
**नितम्बिनीनां भृशमादधे धृतिं नभःप्रयाणादवनौ परिक्रमः ।।१७६।।**

## (३९. विषादः)

**दैवादिभिस्संरम्भविघातो विषादः।** तस्य

**जन्म** यथा—

**हेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं**
**यो यो यत्नः कथमपि समाधीयते तन्नमन्तः (तं तमन्तः?) ।**
**भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार—**
**स्तोयस्येवाप्रतिहतरवः सैकतं सेतुमोघः ।।१७७।।**

**अनुबन्धो** यथा—(उराच. ३.४५)

**व्यर्थं यत्र कपीन्द्रसख्यमपि मे, क्लेशः कपीनां वृथा**
**प्रज्ञा जाम्बवतो न यत्र, न गतिः पुत्रस्य वायोरपि ।**
**मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः**
**सौमित्रेरपि पत्रिणामविषये तत्र प्रिया क्वापि मे ।।१७८।।**

**प्रकर्षो** यथा—(वेसं. ५.१२)

हते द्रोणे च भीष्मे च यदासीदवलम्बनम् ।
वत्सस्य मे सुहृत् प्रेयान् राधेयः सोऽप्ययं हतः ॥१७९॥

**संपर्को** यथा—(वेसं. ६.१)

तीर्णे भीष्ममहोदधौ, कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते, शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥१८०॥

**अनुगमो** यथा—(मामा. ४.३)

चिरादाशातन्तुस्त्रुटतु (बिसिनीसूत्र)भिदुरो
महान् आधिर्व्याधिर्निरवधिरिदानीं प्रसरतु ।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वास्थ्यं धत्तां, भवतु कृतकृत्यश्च मदनः ॥१८१॥

## (४०. मोहः)

इतिकर्तव्यतायामनालोको मोहः। तस्य

**जन्म** यथा—(मामा. ९.८)

न यत्र प्रत्याशामनुपतति नो वा रहयति
प्रतिक्षिप्तं चेतः प्रविशति च मोहान्धतमसम् ।
अकिञ्चित्कुर्वाणाः पशव इव तस्यां वयमहो
विधातुर्वामत्वाद् विपदि परिवर्तामह इमे ॥१८२॥

**अनुबन्धो** यथा—(उराच. ३.१७)

पिहितनयनो बाष्पाम्भोभिर्मुहुस्त्वतिसम्भृतै—
र्धनुषि विनमन्मध्ये स्विन्नां निधाय तनुं ततः ।
शिथिलचरणोद्धारः कृच्छ्रात् पदात् पदमावहन्
कथमयमहो! चिन्ताशून्यो न याति न तिष्ठति ॥१८३॥

**प्रकर्षो** यथा—(उराच. १.३५)

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमादो निद्रा वा किमु विषविसर्पः किमु मदः ।

तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ।।१८४।।

सम्पर्को यथा—(उराच. २.२३)

वत्सस्याभयवारिधेः प्रतिभयं शङ्के कुतो राक्षसात्
त्रस्तश्चैष मुनिर्विरौति मनसोऽप्यस्त्येव मे सम्भ्रमः ।
मा हासीज्जनकात्मजामिति गुरुस्नेहान्मुहुर्याचते
न स्थातुं न च गन्तुमाकुलतया मूढस्य मे निश्चयः ।।१८५।।

अनुगमो यथा—(रघु. ६.१२)

ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तदा हि सर्वेन्द्रियवृतिरासां सर्वात्मना चक्षुरिव प्रविष्टा ।।१८६।।

### (४१. शोकः)

इष्टविरहादिभिर्मनोवैधुर्यं शोकः। तस्य

जन्म यथा—(उराच. ३.३८)

हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ।।१८७।।

अनुबन्धो यथा—(रघु. ८.५७)

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गभर्पितम् ।
तदिदं विसहिष्यते कथं तव वामोरु! चिताधिरोहणम् ।।१८८।।

प्रकर्षो यथा—(मवीच. ४.५५)

प्राणाः प्रयान्ति परितस्तमसावृतेऽस्मिन् मर्मच्छिदो मम रुजः प्रसरन्त्यपपूर्वाः ।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि हा पुत्र! मय्यकरुणः सहसैव मा भूः ।।१८९।।

सम्पर्को यथा—(रघु. ९.८०)

शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ।।१९०।।

**अनुगमो** यथा—(रघु. ८.९३)

**तस्य प्रसह्य हृदयं किल शोकशंकुः**
**प्लक्षप्ररोह इह सौधतलं बबाधे ।**
**प्राणान्तहेतुमपि तं भिषजामसाध्यं**
**लाभं प्रियानुगमनत्वरया स मेने ॥१९१॥**

## (४२. दैन्यम्)

**सत्त्वत्यागादनुत्कर्षो दैन्यम्।** तस्य
**जन्म** यथा—(रघु. १४.६७)

**नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः ।**
**निर्वासिताऽप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥१९२॥**

**अनुबन्धो** यथा—(शाकु. ४.१७)

**अस्मान् साधु विचिन्त्य संयमधनानुच्चैःकुलं चात्मन—**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।**
**सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया**
**भाग्यायत्तमतः परं न खलु तद् वाच्यं वधूबन्धुभिः ॥१९३॥**

**प्रकर्षो** यथा—(वेसं. ५.५)

**दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ**
**कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फल्गुनात् ।**
**वत्सानां निधनेन मे (रिपु)रसौ शेषप्रतिज्ञस्त्वया**
**मानं वैरिषु मुञ्च तात! पितरावन्धाविमौ पालय ॥१९४॥**

**सम्पर्को** यथा—(वेसं. ५.१३)

**अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः शोच्यां दशामुपगतः स तु भार्ययाऽहम् ।**
**तस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे दुर्योधने(ऽपि हि कृतो) भवता निराशः ॥**

**अनुगमो** यथा—(भल्लटशतकं ७)

**माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां हि मां**
**स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।**
**तृष्णे! त्वामनुबध्नता फलमियत् प्राप्तं मया यावता**
**यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥१९६॥**

## (४३. वैवर्ण्यम्)

**विषादादिजन्म कान्तेरन्यथात्वं वैवर्ण्यम्।** तस्य

**जन्म** यथा—(मामा. १०.४)

**उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।**
**मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥१९७॥**

**अनुबन्धो** यथा—(रघु. ६.६७)

**सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥१९८॥**

**प्रकर्षो** यथा—

**सहि! साहसु तेण समं अहं पि किं णिग्गआ पहाअंमि ।**
**अण्ण च्चिअ दीसइ जेण दप्पणे का वि सा सुमुही ॥१९९॥**
(सखि! साधय तेन सममहमपि किं निर्गता प्रभाते ।
अन्यैव दृश्यते येन दर्पणे काऽपि सा सुमुखी ॥)

**सम्पर्को** यथा—(मामा. ४.४)

**समानप्रेमाणं जनमसुलभं प्रार्थितवतो**
**विधौ वामारम्भे मम समुचितैषा परिणतिः ।**
**तथाऽप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगलत्—**
**प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥२००॥**

**अनुगमो** यथा—(किराता. १०.६३)

**स्वयं संराध्येशं शतमखमखण्डेन तपसा**
**परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते ।**
**मनोभिः सावेगैः प्रणयविहतिध्वस्तरुचयः**
**सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रतिययुः ॥२०१॥**

## (४४. आवेगः)

**प्रतीकाराशया मनोव्याकुलताऽऽवेगः।** तस्य

**जन्म** यथा—(माघ. १०.८२)

**प्रेक्षणीयकमिव क्षणमासन् ह्रीतभङ्गुरविलोचनपाताः ।**
**सम्भ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥२०२॥**

**अनुबन्धो** यथा—(माघ. १०.८३)

**अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु ।**
**क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ २०३॥**

**प्रकर्षो** यथा—

**शून्या दिशः सपदि वीक्ष्य शुचा वराकी**
**मृत्योर्मुखं विशति वा शमयन्निराशाः ।**
**एता मता श्वपचपातकदीपरोगा—**
**दागच्छ x x x परंपरिक्षया वः ॥ २०४॥**

**संपर्को** यथा—(रत्ना. ३.१७)

**अलमलमतिमात्रं साहसेनामुना ते**
**त्वरितमयि! विमुञ्च त्वं लतापाशमेनम् ।**
**चलितमिव निरोद्धुं जीवितं जीवितेशे**
**क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ २०५॥**

**अनुगमो** यथा—(रघु. ५.४९)

**स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।**
**रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ २०६॥**

## (४५. अश्रु)*

**दुःखक्रोधानन्दजं नयनजलमश्रु।** तस्य

**जन्म** यथा—(शाकु. ४.१५)

**उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।**
**अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति ॥ २०७॥**

**अनुबन्धो** यथा—(विक्रमो. ५.१५)

**किं सुन्दरि! प्ररुदितासि ममोपपन्ने वंशस्थितेरधिगमान्महति प्रमोदे ।**
**पीनोन्नतस्तननिपातिभिरानयन्ती मुक्तावलीविरचनां पुनरुक्तमस्त्रैः ॥ २०८॥**

**प्रकर्षो** यथा—

**ततः कैरप्युक्ते परिणयविधौ काष्ठमुनिभिः**
**पुराणैरातङ्कग्लपितहृदयेन क्षितिभृता ।**

---

*मोहः(/स्नेहः) द्विरुपात्तः उद्देशे (द्र. पृ. ६१४)

विना वाचं नैतत् क्षममिति विधायाननमधः
पतद्वाष्पाम्भोभिर्लिखितमिव दत्तं प्रतिवचः ॥ २०९॥

सम्पर्को यथा—(उराच. १.२९)

अयं तावद् बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्झरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्यातहृदयः ॥ २१०॥

अनुगमो यथा—(सूमु. २)

अकृतकबलारम्भैर्वक्त्रैर्भयस्थगितेक्षणैः
किमपि वलितग्रीवं स्थित्वा मुहुर्मृगपङ्क्तयः।
गगनमसकृत् पश्यन्त्येतास्तथाश्रुघनैर्मुखैः—
र्निपतति यथा शृङ्गाग्रेभ्यो भ्रमन्नयनोदकम् ॥ २११॥

(४६. प्रलयः)

सर्वेन्द्रियास्तमयः प्रलयः। तस्य

जन्म यथा—(कुसं. ३.७३)

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ २१२॥

अनुबन्धो यथा—(रघु. १४.५४)

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ २१३॥

प्रकर्षो यथा—(वेसं. ४.१०)

पर्याप्तनेत्रमचिरोद्गतचन्द्रकान्तमुद्भिद्यमाननवयौवनरम्यचिह्नम् ।
प्राणापहारिपरिवर्तितदृष्टि दृष्टं कर्णेन तत् कथमिवाननपङ्कजं ते ॥ २१४॥

सम्पर्को यथा—(रघु. ३.६१)

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः।
मुहूर्तमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥ २१५॥

**अनुगमो** यथा—(विक्रमो. १.९)

**आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः**
**नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।**
**मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा**
**गङ्गा रोधःप्रसरकलुषा गृह्णतीव प्रसादम् ।। २१६।।**

**(४७. जाड्यम्)**

**मनसः क्रियास्वपाटवं जाड्यम्।** तस्य

**जन्म** यथा—(सूमु. ३८)

**आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा**
**नासाग्रे नयनं यदेतदपरं यच्चैकनिष्ठं मनः ।**
**मौनं चेदमिदं च शून्यमखिलं यद् विश्वमाभाति ते**
**तद् ब्रूयाः सखि! योगिनी किमसि भोः किं वा वियोगिन्यसि ।। २१७।।**

**अनुबन्धो** यथा—(महानाटक ५.३)

**शिथिलशिथिलं न्यस्य स्वैरं धनुश्शिखरे शिरो**
**नयनसलिलैः कुर्वन् मौर्वीलतामपरामिव ।**
**अहह विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिं**
**किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ।। २१८।।**

**प्रकर्षो** यथा—(शाकु. ४.१)

**विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम् ।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमोदितामिव ।। २१९।।**

**सम्पर्को** यथा—(मामा. १.३३)

**परिच्छेदातीतः सकलवचनानामविषयः**
**पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।**
**विवेक—प्रध्वंसादुपचित—महामोह—गहनो**
**विकारः कोऽप्यन्तर्जडयति च तापं च तनुते ।। २२०।।**

**अनुगमो** यथा—(मामा. ३.५)

**आश्चर्यमुत्पलदृशो वदनामलेन्दुसान्निध्यतो मम मुहुर्जडिमानमेत्य ।**
**जात्येन चन्द्रमणिनेव महीधरस्य सन्धार्यते द्रवमयो मनसो विकारः ।। २२१ ।।**

## (४८. जुगुप्सा)

पदार्थनिन्दनं जुगुप्सा। तस्या

जन्म यथा—(उराच. २.१०)

रे हस्त! दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते? ॥२२२॥

अनुबन्धो यथा—(उराच. १.४९)

विस्रम्भादुरसि निपत्य जातनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं क्रव्याद्भ्यो बलिमिव दारुणः क्षिपामि ॥२२३॥

प्रकर्षो यथा—(उराच. ३.२६)

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण ॥२२४॥

सम्पर्को यथा—(वेसं. ३.१३)

धिक् सानुजं कुरुपतिं धिगजातशत्रुं
धिग् भूपतीन् विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजायाः
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥२२५॥

अनुगमो यथा—(मवीच. १.३८)

सर्वदोषानभिष्वङ्गदाम्नायसमतां गताः ।
युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः ॥२२६॥

## (४९. निर्वेदः)

वैराग्यादिभिर्मनःखेदो निर्वेदः। तस्य

जन्म यथा—

शीतेनोद्धुषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्निंस्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा का(क्वा)ऽपि विमानितेव दयिता सन्त्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥२२७॥

अनुबन्धो यथा—(वैश. ९३)

मातर्लक्ष्मि! भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भू—
र्भोगेभ्यः स्पृहयालवो तव वशे; का निस्स्पृहाणामसि ।

सद्यस्स्यूतपलाशपत्रपुटिकापात्रीपवित्रीकृतैः
भिक्षासक्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥ २२८॥

**प्रकर्षो** यथा–(उराच. ६.३३)

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः
क्व तेऽन्योन्यं यत्र क्वचन गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो–
स्तथाप्येष प्राणः स्फुरति न तु तापो विरमति ॥ २२९॥

**संपर्को** यथा–(सूमु. ६)

अयं शून्यो ग्रामः सुरसदनमेतच्च पतितं
पुरः शुष्का वापी तरुरयमितः शीर्णविटपः ।
वयं चैते पान्थाः परिकृशदशाभाग्यगतयः
समानैः संयोगः कटुरपि मनो मे रमयति ॥ २३०॥

**अनुगमो** यथा–

जरामरणदौर्गत्यव्याधयस्तावदासताम् ।
मन्ये जन्मैव धीराणां भूयोभूयस्त्रपाकरम् ॥ २३१॥

## (५०. शमः)

**तत्त्वज्ञानादिभिर्मनःकषायोपरमश्शमः।** तस्य

**जन्म** यथा–

स्थितिः पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मूलैर्वृत्तिः प्रतिनदि च तल्पानि दृषदः ।
इतीयं सामग्री भवति विरतिं संस्पृहयतां
नं वा गेहं वा सदृशमुपशान्तस्य मनसः ॥ २३२॥

अनुबन्धो **यथा**–(वैश. १२)

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः
वियोगे को भेदस्त्यजति न जनो यत् स्वयभिमान् ।
व्रजन्तः स्वातन्त्र्यात् परमपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ २३३॥

**प्रकर्षो** यथा—(भल्लटशतकं ६९)

यदाऽऽसीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टिं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ।।२३४।।

**संपर्को** यथा—

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम—
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ।। २३५।।

**अनुगमो** यथा—(बारा. १.३५)

यन्मीमांसयतः श्रुतीः शतपथाः साक्षात्कृतब्रह्मणो
विश्वामित्रमहामुनेरपि च यद् वर्तामहे चेतसि ।
अप्युल्लीढकषायपालनधियां सद्यः समाधिश्लथं
तत् सङ्गीतकमन्तरेण हृदयं हर्षान्नरीनर्तितम् ।। २३६।।

एते रत्यादयो भावाः शृङ्गारव्यक्तिहेतवः ।
कात्स्न्यदिकोनपञ्चाशद् भेदा एषां प्रकाशिताः ।। २३७।।
जन्मानुबन्धातिशयसम्पर्कानुगमा इति ।
युञ्जीत सर्वभावेषु वर्गयोरुभयोरपि ।। २३८।।
यदपि च गदितं प्रकर्षगामी भवति रसो रतिविस्मयादिरेव ।
तदपि न समञ्जसं प्रकृष्टाः प्रतिनिजभेदममी हि सर्व एव ।। २३९।।

## इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे हर्षादिभावप्रपञ्चको नाम

## ।। चतुर्दशः प्रकाशः।।१४।।

एतत्प्रकाशत्रितयं प्रकाशचतुष्टयात्मेति विभावनीयम् ।
षट्त्रिंशता हन्त यतोऽत्र रक्षां प्रकाशचक्रे सुखमश्नुवीत ।।
इति रेवाप्रसादस्य काश्यपस्य द्विवेदिनः ।
सनातनस्य मे प्राज्ञवर्येषु प्रणयाञ्जलिः ।।



परिशिष्टम् –

परिशिष्टम्—१

Appendix -I to the Sringaraprakasa Part-I

# ग्रन्थशास्त्रकाव्यतत्कृन्नामानि

## परिशिष्टम्—२

Appendix - II to the Sringaraprakasa Part - I

# शृङ्गारप्रकाशप्राकृतपाठभेदाः (१—१४ प्रकाशाः)

अत्र प्रथमं ज्योशेर—पाठः प्रविलोकनीयः, यत्र पदानि विविक्तानि न सन्ति। राघवाचार्यः पुनः प्रतिलिपिमाश्रित्य पदान्यनुसंदधे। जोशेरलेखमेवाश्रित्य वामनमहादेवकुलकर्णिमहाशयोऽपि पदानां कल्पनां चक्रे "Prakrit Verses in Sanskrit Works on Poetics"[१] इत्यस्मिन् ग्रन्थे।

ते इमे द्वे पदकल्पने। ते इमे वाक्यार्थसङ्गतिमाधारीकृत्य यथाव्याकरणमत्राश्रिते। अत्र कुलकर्णिपाठ एव समादृत्य मूले दत्तः। राघवपाठस्य क्वचित् विकल्पचिह्नद्वारा मूल एव निर्देशः, शिष्टस्य चाऽत्र परिशिष्टे समुल्लेखः।

राघवीयस्य शृङ्गारप्रकाशस्याऽमेरिकादेशीय—**हार्वर्डविश्वविद्यालय**स्थिताया संस्कृतग्रन्थमालाया(HOS) ५३—तमग्रन्थतया १९९८खीष्टाब्दे प्रथमतमाश्चंतुर्दश प्रकाशाः प्राकाश्यं लम्भिताः। १५&३६प्रकाशानां प्रतिलिपिरत्र समाश्रिता। जोशेरपाठोऽपि दिल्लीतः साम्प्रतं पुनर्मुद्रणां लम्भितः, किन्तु श्लोकसूची HOS इव तत्रापि नास्ति।

अपभ्रंशगाथानामपि डॉ०भायाणीमहोदयेन साधितः पाठः कुलकर्णिमहोदयेन स्वकीये ग्रन्थे पृथक् प्रदत्तः, १६गाथानां मुम्बईतः प्रकाशितायाः JASपत्रिकायाश्च १९९३ वर्षीयेऽङ्के।

अत्र **'जो.'** इति प्रतीको जोशेरस्य कृते दत्तः, **'रा.'** इति प्रतीको डॉ०वे.राघवमहोदयस्य कृते, **'कु.'** इति प्रतीको डॉ०वामनमहादेवकुलकर्णिमहोदयस्य कृते **'भा.'** इति प्रतीकश्च डॉ०भायाणीमहोदयस्य कृते।**'खंअ.'** खण्डितास्पष्टार्था/ Corrupt and obscure इति **कु.**। *अत्र पाठान्तरगाथा एव दीयन्ते।*

| | | |
|---|---|---|
| १.१३ | **अत्थविसे** | विसेसा कु., णिवेसा रा.; णहि कु., ण वि रा.; उण ते कु., णूण रा.; उम्मिलंता(उन्मिलन्तः) इति वयम्, उम्मिलंति कु.रा.। |
| ३.४० | **कडुए** | कह दे अब्भुत्तण कु., अब्बुत्तण रा.; चुंबणालेहडम्मि कु., चुब्बणलेहम्मि रा.। |

१. Published by the B.L.Institute of Indology, Delhi, 1988, pages 43-338.

३.४५ **सुण्णम्मि** विसाण कु., विताअ रा.; धूआ दंसमणेहरा कु., धूआदंसण–मणोरहो रा.; मं पसाएइ कु., मंन सावेइ रा.।

३.५९ **विप्प अपि** This prakrit passage defies restoration इति कु.। छायार्थौ दुर्बोधौ इति रा.।

३.६१ **पनमथ** पैशाची। पनमथ कु., पनमत रा.; पनअप्प रा., पनयप कु.; कुवित कु., कुविअ रा.; गोली कु., कोली रा.; 'चलनग्गलग्ग' कु., चलणक्क रा.; लग्ग कु., पटिअ रा.; पडिबिंबं=पतिबिंबं कु., पटिपिंपं रा.; नेसु रा., नेसुं कु.; तनुतलं रा., तनुथलं कु.; रुत्तं रा., लुड्डं कु.।

३.६२ **हदमाणु** भोअणे कु., भोयणं रा.; शहश्शं वशाहि कु., शहश्शवशा-हिं रा.; शंचिदे कु., शंवि(चि)दे रा.; हुवीअदु कु., हुवीयदु रा.।

३.६३ **एकदू अ** (अपभ्रंश:)। एकदू अस कु., एकदूअ स रा.; अल आह कु. ,अलआह रा.; हरणसु कु. हरण सु. रा.; अच्छि उपलंपटं कु. अच्छिउ पलंपटं रा.; वीवउकहिम्मलं भट्टएवटपि अमइए उणजाणिउं कु., वीवउ कहिंम लंभट्टएवट। पिअ मइं एउ ण जाणिउं रा.।

३.६४ **हिरउ ह** (अपभ्रंश:)। कु.'हिरउ हर' यथा मूले मुद्रितम्। रा.पाठस्त्वेवं-विधाक्षर: - हिरउ हरन्तहो चोरहो एभुजि दन्दु हलेजं पिउपणव्वसच्छिलेविलोइअउ गणे (ले?)।

एहू पुण, पीणघणत्थणि संथट्टउक्कपणु जं चन्दाणणे दिज्जइ अहरहो दन्तपणा।।(?)

३.६५ **लविय** (अपभ्रंश:)। कु. पाठो मूलम्। रा. पाठस्त्वेवमक्षरविन्यासक:–
लवि पप्फड वीउदुद्वडाकउहहाण एच्छासि ।
पुत्तहोमत्थजिभु जलदहि उजंमेपि जवि आआसि ।।

३.६६ **अव अख्खो** (अपभ्रंश:)। कु. पाठो मूलम्। रा. पाठ: –
अव अख्खोञ्ची समुद्रुतरिसि लदुहिडां गरुकाणि ।
मन्दोहिए पि लहिअउउ जं परुच्चइ तेव्व अणि ।।

३.६७ **कंवलि आ** (अपभ्रंशः)। कु. पाठो मूलम्। रा. पाठ एवमक्षरकः— कंवलिआलए कत्ते कु—आलसी। लत्ति सवअंगापिदुसम सहि खवाचि दुं च फलिनन्तेकी००आई दसि'

३.६८ **महणाहि** (अपभ्रंशः)। महणाहि कु., महणाडि रा.; अकुटुंबि कु., अकुडुंबि रा.; सामइन्दीहिरेरेभाउ कु. 'सामइन्दीठि रेरेभाउ' रा.; जपिहुरि कु., अपिहुरि रा.; विण्ण कु., विण्ह रा.; वव्हरि कु., इवरि रा.; हावाथि कु., हावथि रा.; कणां सहुं कु., कणास्सहुं रा.; उदूकराए कु., उदूकरुए रा.; आच्छइणी कु., आच्छइण्णी रा.।

३.१२१a **वाउ न** जो. पाठाश्रितः कु. विकल्पितः (अपभ्रंशांशगते ५ पृष्ठे) पाठोऽत्र मूलम्। वाउ...वहइ कु.,भा.; वणे न कयंबु न अंबु न पाडल महमहइ भा., वणे न....न...न....महमहइ कु.। रा.पाठस्तु HOS १९४ पृष्ठगतो नितान्तमनीदृशः अदर्शिताकरः अदत्तसंस्कृतच्छायश्चेदृशः—

'वाओनवुन्नुवुपजिमु नविदक्खिणुवहइवणेनकब्बुन— पाधनपाद- मम्हहइ।'

३.१२१b **कोइल** कोइलमोरमरालव्हकीलनवाहरइ माएन—
जाणं इमाहहे केव विरहिणी मरइ।। (?)

मरालहं कु., मरालव्ह रा.; कोई न वाहरइ कु., कोलनवाह- रइ रा.; माए न जाणउं कु., माएनजाणं रा.; माहहे कु., इमाहहे रा.; केवं कु., केव रा.; विरहिणि कु. विरहिणी रा.।

३.१२२ **दिणहदि** कु. अपभ्रंशांशे पृ.६। रा. अदत्तच्छायः। उप्पिज्जइऊ रा. उप्पिव्जइउ कु.; लव्च कु., लव्व रा.।

३.१२३ **जइविग्ग** कु. अपभ्रंशांशे पृ.६। विग्गव्डही कु., विग्गड्डही रा. ; वव्डु कु., वड्डु रा.; दुग्ग रा., दुग्ग कु.; धुवठ्ठहरहप रा., धुवव्ठहरहब कु.; अट्ठ दि रा., अठ्ठदि कु.।

३.१३३ **एसो(क)खु** गद्यांशस्यास्य कु.पाठो मूलम्। रा.पाठः HOSपृ.१९६ दृश्यः।

| | | |
|---|---|---|
| ०६.९५ | **आहट्टि** | वि तहसंठिए कु., वि तह (तह) संठिए रा.। |
| ०७.०४ | **थोरत्थ** | पृ.३३५ णीएँ कु., णीए रा.; हलाएँ कु., हलाए रा.; सामाए कु., सामाए रा.; पहुप्पए कु., वहुप्पए रा.। |
| ०७.१५ | **अइ दिअ** | पुलोएसि कु., पु(प)लोएसि रा.; मूलम्मि कु., मूलेमि रा.; अद्धअंदाणपरिपाडी(वाडिं) रा. (पृ.३५५HOS), कु.पाठो मूलम्। |
| ०७.३० | **कत्तो सं** | संपडइ कु., संवडइ रा.; रखिक्खिरि कु.,रकं(खिं)खिरि रा.। |
| ०७.३४ | **पडिवक्ख** | उडे कु., कुडे रा.। |
| ०७.३५ | **ववसाअ** | दासरहिणो कु., दासरइणो रा.। |
| ०७.३७ | **ताला जाअंति** | एहि कु., एण्हि रा.। |
| ०७.४७ | **चआवल** | कु. रा. छाया नास्ति। |
| ०७.४८ | **छित्तो चल** | छित्तो(?) चलणेण कु., सजेहणौ रा.; हला मओ कु., हलामओ रा.; वि कण्हस्स कु., विकह्वस्स रा.; 'को ण जीवेज्ज' कु., कोणजीपेज्ज रा.; 'सो उ ण' कु., सोउण रा.; मओ रिट्ठो कु., मओरिटे रा.; सच्चं चिअ बइल्लो कु., ठोसज्ज विअबइललो रा.। |
| ०७.४९ | **सच्चं चि** | छित्तो कु., चिक्को रा.। |
| ०७.५५ | **उच्चिण** | राघवः उत्तरार्द्धमेव अच्छायं दत्ते। |
| ०७.५७ | **पल्लविअं** | पिव/विअ कु., पिवअ(विअ) रा.; अज्जाएँ कु.,अज्जाए रा.; लावण्णं कु., लाअण्णम् रा.। |
| ०७.५९ | **अवऊहि** | पुव्व कु., पुप्प(पुव्व) रा.; माइ ण झिज्जउ कु., माइ (ण) रझिन्तउ(झिज्झउ) रा.; हुत्त कु., मुं(हु)त्त रा.। |
| ०७.१०० | **सूईवेहे** | विच्छुहमाणेण कु., विच्छुहमाणेन रा.; अच्छीहि वि ण कु., अच्छिंहि विअ ण रा.। |
| ०७.१०१ | **चुंबिज्ज** | अवरुंडिज्जइ कु., अपवाहिज्जइ रा.; सहस्सहुत्तं वि कु., सहस्ससअहुत्तं रा.। |
| ०७.१०२ | **दूई तुमं** | णिउणा/कुसला कु., णिउणा रा.; कक्कस रा.; कक्कस/कक्खड कु.; कुणिज्जासु रा., कुणिज्जासु/करेज्जासु कु.। |

०७.१०४ **अण्णं लड** काविं व कु., अंग रा.; वत्तण कु., वट्ठण रा.; पआवइस्स/ पआवइणो कु., आवइअस्स रा.।

०७.१०५ **अगणिअ** णउणाआसं मारिस लोइज्जंत तं को होसि कु., नअणाआसा इस मालिपुलोइज्जत गन्त को होसि रा.।

०७.११४ **वअस्स** तुमं पि कु., तुमंपि रा.; थेव—चंदण—रसेण कु., थेव चंदणरसेण रा.; समासिसिज्जासि कु., साममा...ज्जसि रा.।

०७.११५ **एक्कहि** (अपभ्रंश)। माहउ महिअलसत्थरि गंड कु., 'माहउ महिअल सत्थरि गण्ड' रा.।

०७.११६ **अगिहि** अगिहि गि कु., अङ्गिहिं गिह्मं रा.; सुहच्छिइ तिलवण रा., सुहच्छीतिलवण कु.।

०७.१२८ **ठिअमट्ठि** पडिहाइ कु., पडिभाइ रा.; पयईओ कु., पअईओ रा.।

०७.१६६ **भम धम्मिअ** वीसद्धो/वीसन्धो कु., वीसद्धो रा.; कुडंग कु., कुडुंग रा.।

०७.१६७ **अत्ता एत्थ** णुमज्जइ कु., सइज्जइ रा.; पलोएसु कु., पलोएहि रा.; महणुमज्जिहिसि कु., महँण मज्जिहिसी रा.।

०७.१६८ **बहलतमा** जग्गिज्ज कु., जग्गेसु रा.; 'सअज्झिअ/सअज्जिअ' कु., सअज्जिअ रा.; अम्हे कु., अंमे रा.।

०७.१६९ **आसाइअं** अणाएण कु, अण्णाएण रा.; जेत्तियं कु., जेत्तिअं रा.; तेत्तिएण कु., तेत्तिण रा.; दिहिं कु., धिहिं रा.; वसह कु., वुसह रा.; रक्खिज्जइ कु., रखिखज्जह रा.; गहवईछित्तं कु., गहवइच्छेत्तं रा.।

०७.१७० **महुएहि** किंव कु., 'किं व' रा.; णिअंवाओ कु., णिअंबाओ रा.।

०७.१७२ **णिअदइ** णक्खित्त रा., णुक्खित्त/णूसुअ(=नोत्सुक) कु.; इह रा., ठाइ(=तिष्ठति) कु.।

०७.१७४ **सणिअं** पए पअत्तेण कु., वहिवअत्तेण रा.; ठवसु महिवट्ठे कु., ववसुमहि पट्टेदि रा.।

०७.१७५ **दे आ** अण्णाण कु., अह्णाण रा.।

०७.१७६ **वच्च मह** तुज्झ वि तीए कु., 'तुज्जं वि तीअ' रा.।

०७.१७७ **गोलाणई** तूहे/कच्छे कु., कच्छे रा.; उप्फडइ कु., उप्पडइ रा.।

०७.१८० **अण्णत्त** अण्णत्त/अण्णत्थ कु., अण्णत्त रा.; पुलोएसि कु., पलोएसि अएं रा.; एअं भो जाआ कु., हो जाया रा.। अत्र पूर्वार्द्धस्यान्तिमशब्दतयोत्तरार्द्धप्रथमशब्दो घटितो रा.पाठे।

०७.१८३ **कस्स व** कमल/पउम कु., कमल रा.।

०८.०४ **सच्चं धन्ना** सण्णा धण्णा कु., धन्नाधन्ना रा.; वावडेण कु., पावडेण रा.; वि, अज्जुअच्छं (?तंसवलिअच्छं) कु.। विअ अज्जुअअच्छं रा.।

०८.०५ **सा उप्पडी** (अपभ्रंशः) पृ.८ विसगंठि कु., विसगण्ठि रा.।

०८.०६ **वाणिध** (अपभ्रंशः) अत्र

कु. वाडि न मोडिअ सरु न सुउ(?) दारे एंतु न दिइदु।
माए न जाणउँ केम लहु ढोल्ला हिअइ पइट्ठु।।
मन्येऽत्र प्रश्नचिह्नमनावश्यकम्।
(वृतिर्न भग्ना, स्वरो न श्रुतः(?) द्वारि आयान् न दृष्टः।
मातर्न जानामि कथं लघु प्रियः(ढोल्ला) हृदये प्रविष्टः।।)
कु. (Appendix-I पृ.९)

रा. वाणिधमोडिअच्चरुणखओ दारेएँ तु न दिठ्ठ।
माएणजहुके मलडोल्लाहिअ इवइठ्ठ।। पृ.४२२HOS।
राघवश्छायां न ददाति।

०८.०७ **अंबरुखो** (अपभ्रंशः) अत्र

कु. अंबरु अंचि समुद्दु तरि भमडहि(?) डोंगरुआणि।
सहि महु पिउ गउ कलहियउ जेंव रुच्चइ तेंव अणिं।।
(अम्बरं गच्छ समुद्रं तर, भ्रम दारुवनानि।
सखि! मम प्रियो गतः कलहायितः यथा रोचते तथाऽऽनय।।) पृ.४

रा. अंबुरुखोच्चिअसमुद्दुतरेसिलदुहिडोग्गरुकाणि ।
तहिमोहिपतयीओकलहिओजेवरुच्चइतें वअणि।।
राघवश्छायां नास्पृशत्।

०८.०८ **हिअइ खु** अपभ्रंशः। कु. मूलम्।

रा. हि अइ खु(डु)क्कइ गोडरी गअणे हुडूक्कइमो(मे)हु।
वासारत्त(णं)पवासअछं(त्ति)ह(वि)समा संकडु एहु।।

०८.०९ **हिअअ** (अपभ्रंशः)। रा. पाठो मूलम्। रा. सरस्वतीकण्ठाभरणमनुसरत्यत्र।
कु. reconstructs it as follows:
हिअइ तिरिच्छी पहि समुह पच्छइ गहिअकडच्छ ।
पहिअह एक्क जि गोरडी णं चउहट्टअ रच्छ(?)।।

०८.१० **महिलत्त** (अपभ्रंशः)। कु. पाठो मूलम्।
रा. महिलत्ताणणिव्वाहि उअएकलविज्जप्पिआइ।
णेहक्क उविअविर हुनम्मे विदट्टणजाइ।।(?)(पृ.४२२HOS)
आकरो मृग्यः, अशुद्धः पाः, छाया न पूर्णतया स्फुटा। रा.

०८.११ **सावस** (अपभ्रंशः)
अहरहो कु., अहो रा.; महुरउ साउ कु., महुरइसाओ(?) रा.; 'तिक्खअप्पपलोअंवणएविरडुजिकडि अकसाउ' जो., तिक्ख अप्पप (अम्ल) लोव्वण एविरहुजि(महुर?) कडि(डु)अ कसाओ रा.। राघवश्छायां न दत्ते। मूलं कु.।
'सॉवलीसलोनी'—ति सुन्दर्या आवन्त्यं प्राकृतं कृते।

०८.२२ **चंदणिहि** णिहुणु कु., णि हिणु रा.; अणु(? णह) कु., अणु रा.।
आकरो मृग्यः पाठश्छाया च दुरवसेयः इति रा.।

०८.२४ **तुह अस** वासारत्तस्तद्धद्धरत्तो कु., ता(वा)सारत्त(त्तो)द्ध(त्त)रत्तो रा.।

०८.२८ **लइ वप्पु** (अपभ्रंश)। वप्पुल पिउ दुद्धं कत्तो रा., वप्पुड पिउ दुद्धडा कउ कु.; अम्हाणहुं रा., अम्हाणए कु.; पुत्तहुमत्थे हत्थो रा., पुत्तहो मत्थइ हत्थु कु.; जअ असि रा., जिमिआ सि कु.।

०८.२९ **ते पुच्छि** (अपभ्रंशः)। वत्तडी कु., प(व)त्तडि रा.; गोरडी कु., गोरधी(डी) रा.।

०८.३१ **किं तस्स** हरएण कु., घरएण रा.।

०८.३२ **वे वावल्ल** कण्णुप्पलि कु., कण्णप्पलि रा.।

०८.३३ **स च्चिअ** कुवलयविलो कु., कुवलयलो रा.।

०९.०८ **णोक्खी** कु. गाथामिमाम् अपभ्रंशे पठति पृ.१२।

| | | |
|---|---|---|
| ०९.१७ | **सीसे सेह** | (अपभ्रंश:)। पालंबु किदु कु., 'पालंपु किं(कि)दु रइए।' रा.; रइए विहिदु कु.; रइं(इ)दु रा.; मुंडमालिए कु., मं(मुं)डमालिअ जं रा.; जं पणएण तं कु., पणं(ण)एण क (तं) रा.; णमहु कु., णमह रा.। अत्र स्फुट: परवर्त्तिन: पादस्य प्रथमानां पदानां पूर्ववर्त्तिनि पादे गणना। |
| ०९.१८ | **जं जं पुलो** | लिहिअ व्व कु., लिहिओ व्व रा.। |
| ०९.३० | **तं दइआ** | वूढो कु., ऊढो रा.। |
| ०९.३८ | **चंद्रहव** | (अपभ्रंश:)। चंद्रहवपि/जं(?)द्रहि कु., चं(जं?)द्रहि वपि(?) रा.; वाविहिकूपि कु.,वाविहि कूपि रा.,सरिपल्ललि कु., सरि पल्लति रा.; चंदह कय कु., चंदहकं(कय) रा.; चक्कोडिआ कु., चकोडिआ रा.। |
| ०९.७० | **जं तुज्झ** | फुट्टउ कु., पुट्टउ रा.; पिल्लं रा., बीअं कु.। |
| ०९.७३ | **जोण्हाए** | कित्तीएँ कु., कित्तीअ रा.; सुअरिसं कु., सुउरिसं रा.। |
| ०९.१६१ | **काअं खा** | काअं कु.रा.; फेल्लेइ कु., खल्लेइ रा.; हक्केइ अ कु., हक्केइअ रा.; ठेरो कु., थेरो रा.। |
| ०९.१६३ | **आउज्झि** | (छाया) कर्कुरी कु., कुक्कुरो रा.। |
| ०९.१६५ | **संहअच** | संछण्णा कु., संछन्ना रा.। |
| ०९.१६६ | **अहिणव** | परिलिंत कु., परिलेंत रा.। |
| ०९.१८३ | **काराविऊ** | खऊरं कु., खउरं रा.। |
| ०९.१८६ | **खाहि वि** | मुत्तं पिव/पिअ कु., मुत्तं पिव रा.। |
| ०९.१९२ | **कोला ख** | वाअंति कु., वाहंति रा.। |
| ०९.१९७ | **सुरहिम** | बंधं कु., बद्धम् रा.; पुट्ठट्ठि कु., पुट्टट्ठि रा.। |
| ०९.१९८ | **पट्टंसु** | परिमुसह कु., वरिमुसह रा.। |
| ०९.२६६ | **अम्हारिसा** | हरि–सप्पसिंहा कु., हरी सप्पसींहा रा.। |
| ०९.३०० | **जह ण्हाउं** | ण ण्हाओ सि कु. (पृ.६१), अ ण्हाआ ओसि रा.। |
| ०९.३१५ | **हो तो जो** | (अपभ्रंश: पृ.१४) पच्छा ए किललेउ कु.,ए दूए किअलेउ रा., हस्तकटक: किं दर्पणेनेक्ष्यते (९.३१५)। |

| | | |
|---|---|---|
| १०.०४ | **अकटगुमटी** | अकटगुमटी कु., अकट गुमटी रा.; न कज न कजं कु., नकजनकजं रा.। |
| १०.०७ | **मुद्धे गह** | (अपभ्रंश: पृ.१५) गहणउं कु., गहणअ रा.; गेण्ह कु., गेण्हउ रा.; तुइ कु., तं रा.; णिअहत्थि कु., णिए हत्थे रा.; णिच्छिउ कु., णिच्चउ रा., सुरअप्पिह कु., सुरअप्पहा रा.। 'गहणउ'—पदमद्यापि गॅहनेत्याभूषणार्थ आवन्त्येषु जनेषु प्रचलति। |
| १०.७६ | **एद्दहमेत्त** | द्र.७.१५६, कु. पृ.६३। |
| १०.८६ | **पअपीडि** | वससिले कु., वअ(स)सि रा.। |
| १०.८७ | **उच्चिउ** | (अपभ्रंश: पृ.१६)। पालि पिउ कु., 'वाली यि(पि)'रा.; हत्थु कु., हत्थं रा.। |
| १०.८८ | **सुअ—वह** | (अपभ्रंश:)। वइअरु कु., वइअर रा.; णिसुणिउ कु., णिसुणिअ रा.। |
| १०.८९ | **णिसुणि** | (अपभ्रंश:)। भुंडि...सत्ति कु., भुण्डिहिं सिहसन्ति(सहसत्ति?) रा.; दाढजुअलि कु., डाढजुअलेहिं रा.। |
| १०.९० | **वीहेसि** | (अपभ्रंश: पृ.१७)। रिठ्ठासुरमारिउ कु., रिठ्ठासुर मारिउ रा.। |
| १०.९२ | **चंदण धू** | आउलि कु., आहुलि रा.; दुम्मण—दुम्मणअं कु., दुम्मण दुम्मणअं रा.; संकामिअमंडणअं कु., सङ्कामिअमण्डणअं रा.; तुह्म/तुज्झ कु., तुह्म रा.; करट्ठिअं कु., करट्ठिअम् रा.। |
| १०.९३ | **अइ दुम्मण** | तुमं कु., तुमम् रा.। |
| १०.१८७ | **छण्णवि** | कण्णकअचूअमञ्जरि रा., कस्स कएँ चूअमंजरि (कण्ण—कअ/गअ—चूअमंजरि) कु.। |
| १०.२०१ | **वाहित्ता** | एक्कमेक्कस्स रा., 'एक्कमेक्कम्मि/एक्कमेक्कस्स'—कु.; असई रा., अज्झा/असई कु.। |
| १०.२०५ | **पोढमहि** | जं जं कु., जज्जं रा.; जं जं कु. जज्जं रा.। |
| १०.२१३ | **भद्द/गेण्ह** | भद्द रा., गेण्ह कु.। |

१०.२१५ **सालिवण** सव्वंगसुंदरीएं कु., सव्वङ्गसुन्दरीए रा.।
१०.२१६ **हिअए** रोसुग्गिण्णं रा., रोसुग्गिण्णं/रोसुग्घुण्णं कु.।
१०.२२६ **गज्जंत्ते** पणच्चिआ कु., पणट्ठिआ रा.।
१०.२४० **सा उपडी** द्र.३९८।
१०.२४३ **ण उ ण** ण उ णवर कु., ण उव वर रा.; पुत्ति कु., युति(?) रा.।
१०.२४४ **हिअअ** द्र. पृ.३९९(८.९)।
१०.२५४ **उद्धच्छो** पावालिआ कु., पाआवलिआ रा.।
१०.२५५ **गोलावि** मुवऊढा कु., मुअऊढा रा.।
१०.२५९ **जो तीअ** उव्वा कु., उब्बा रा.; संकंतो कु., सङ्कन्तो रा.।
१०.२६५ **एंतो वि** एंतो कु., एन्तो रा.; पसरंत कु., पसरत्त रा.।
१०.२६६ **पिअदंस** होंति णअणाइं कु., होन्ति णअणाइम् रा.।
१०.२६७ **पअडिअ** विब्भमं तीअ कु., विब्भमंतीए रा.।
१०.२६८ **दिट्ठाइ जं** दिट्ठाइ जं ण कु., दिट्ठा इ जण्ण रा.; आलविओ कु., आलत्तो रा.; जं ण कु., जण्ण रा.; छइल्लेहिं कु., छइल्लेहिम् रा.।
१०.२६९ **गारंगो त** (अपभ्रंश:)। तरुणीअणु कु., तरुणीअणो रा.; जोण्हइ कु., जोहणाइं रा.; तच्छाअहि कु., उ कु., पुण रा.; गत्तु तहिं कु., गत्तो तह रा.; मंतिअहिं कु., मन्ति अहिम् रा.।
१०.२८४ **हसिअं** पूसवंदम्मि कु., पूसविंदस्सिं रा.।
१०.२८६ **सो मुद्ध** दूमिओ हआसाहिं कु., दूमि तुह आसाहिम रा.।
१०.२९४ **विरहिणि** (अपभ्रंश:) जणह कु., जणण रा.; दअंतेण कु., दयन्तेण रा.; चेत्तेण कु., चैत्तेण रा.; अह कु., तह रा.; मअरंदेहि कु. मअरन्देहिं रा.; कलंबु ण अंबु कु. कलम्ब ण अम्ब रा.।
१०.३०८ **दीसइ ण** 'गंध, संत, कंठि, चेअं' कु., 'गन्ध, सन्त, कण्ठि, चेअम्' रा.।
१०.३०९ **अइ सहि** गाथेयं छाया चास्या जोशेरसंस्करणपठिते कु.—ग्रन्थदत्त एव मूल आदृते अत्र। द्रष्टव्यो जो. पृ. ४०७ ।
१०.३३१ **कमलकरा** रंभोरू कु., रम्भोरू: रा.; मिअंक कु., मिअङ्क रा.; चंपअंगी कु., चम्पअङ्गी रा.।

| | | |
|---|---|---|
| १०.३६५ | **पप्फुरि** | उक्खडि कु., अक्खडि रा.। |
| १०.३६९ | **सोहइ** | संपुडविमुक्को कु., सम्पुडमुक्को रा.। |
| १०.३७२ | **रइ—अर** | णिवहं कु., णिअहं रा.; पंकअं कु., पङ्कअं रा.। |
| १०.३७३ | **दीहो दिअओ** | समुद्दमुवगओ कु., समुद्दमइगओ रा.। |
| १०.३८८ | **वाली** | (अपभ्रंश:) पृ.२०१। उल्लसिअणिअं कु., उल्लसिअ णिअं रा.; राहुवि कु., राहु वि रा.। |
| १०.३८९ | **मुहे मअ** | (अपभ्रंश:)। चिहुरे कु., चिउरे रा.; वेणिणिअंस कु., वेणीअंस रा.; मअणु कु., मअणु(ण)रा.; माहए कु., माहदु(उ)रा.; थण गूडरे कु., त्थणगुडरे रा.। गूडरेति गह्वरापभ्रंश:। |
| १०.३९० | **अवऊहि** | अवर—दिसाहुत्त कु., वरदिसाइत रा.। |
| १०.३९१ | **वल्लहे** | (अपभ्रंश:)। एतइ कु., एत्तइ रा.; चिरहु कु., बहु बलि रा.; बलिकिज्जमि कु., किज्जमि रा.; वसिन्निअ कु., वसित्ति रा.; पुलुट्ठ तणु कु. पुलुट्ठतनु रा.। |
| १०.३९३ | **पल्लविअं** | द्र. ७.५७, १०.४१७। |
| १०.३९८ | **धीरं व** | णिवहमिव रा., णिवहं मिव जो.कु., सआइँ कु., सआइ रा.। |
| १०.३९९ | **धीरेण** | जामा रा., जामा/णिसा—आमा कु.। |
| १०.४१० | **गिम्हे दव** | विंझसि कु., विज्झसि रा.। |
| १०.४१७ | **पल्लवि** | द्र. १०.३९३ इहैव। |
| १०.४२४ | **जो जस्स** | सुहं देइ कु., तहा तस्स रा.। |
| १०.४२५ | **ते विरला** | घडंति कु., घडअन्ति रा.; कज्जालावे कु., कज्जकलावे रा.। |
| १०.४२६ | **विरला** | आरि च्चिअ कु., आरिच्चिअ रा.; जलहर व्व कु., जलहरव्व रा.; वट्टंति कु., वच्चन्ति रा.; झिज्जंति कु., झिज्जन्ति रा.। |
| १०.४३० | **इमिणा** | सोहए कु. हसइ रा.। |
| १०.४३५ | **पडिआ** | 'पंड, संत' इति कु. 'पण्ड, सन्त' इति रा.। |
| १०.४४२ | **पंकअ** | दहइ कु., हदहिं रा.। |
| १०.४५१ | **सच्चं गु** | णत्थि कु., ण त्थि रा.। |

१०.४५२ **किं जंपि** जंपिएण कु., जम्पिएण रा.।
१०.४६३ **आसाइअ** मणाएण कु., मण्णाएण रा.; विहिणं कु., विहीण रा.।
११.०६ **दुक्खं दे** देंतों कु., दन्तो रा.; वड्ढइ कु.(पृ.१०३), वि वड्ढइ रा.।
११.९४ **कस्स भरि** उव्विग्ग/उव्विण्ण कु., उव्वेग्ग रा.।
११.१०९ **णवपल्ल** वलइ रा., चलइ/वलइ कु.; घवइ(ठवइ) कु., थवइ रा.।
११.१६७ **पुलअं** जणेंति कु., जणेन्ति रा.; दहकंध कु., दसकंध कुपा., दहकन्ध रा.; सरीरअडंता कु., सरीरम्मि रा.; सुआ रा., तणआ कु.; पओहरप्फंसमहघविअकरजुअलणिव्वूढा कु., फंसमहग्घा विअ करअलाअट्ठिअविमुक्का रा.।
११.१७० **कह मा** झिज्जउ रा.कु., छिज्जउ कुपा.; इमीअ कु., इमाइ रा.।
११.३६५ **सअलं चे** च कु., प(च) रा.।
१२.४३ **सिहिपिंछ** सिहिपिंछकण्णऊरा कु., सिहिपेहुणावअंसा रा.।
१२.४७ **गोरङ्गउ** पडिच्छिउ कु., पडिच्छेओ रा.; मन्तिअहिं कु., मन्ति अहिम् रा.।
१२.५७ **मलिणव** आपंडुगंडपालीणं कु., 'आवंडुगण्डणवासाणपालीण(?)' रा.; कआउहो कु., कआउ(हा) रा.।
१२.१०५ **सिअकुसु** खण्डित।
१२.१३३ **जदिच्छसे** कु. न लब्धा।
१२.२५३ **किं धरि** धरणिए कु., धरणीए रा.।
१२.२५४ **हरिहर** गअणे वि कु., गअणंमि रा.।
१२.२५५ **किं जप्पि** 'बहुणा—हिंद' कु., बहुणा महमहनिमणेण वि(?) रा(HOS)
त्रयोदशे प्राकृतगाथा न सन्ति।
१४.९७ **णिद्दालस** तंस—वलंतद्ध कु., तंसवलन्तद्ध रा.।
१४.११० **ण कुणं** सि जाणंतो कु., सिजाणंतो रा.।
१४.१४८ **कुविआ** पेम्मासंघ कु., पेमासङ्घ रा.।
१४.१९९ **सहि साह** सा सुमुही रा., साममुही सा सुमुही कु.।



परिशिष्टम्—३

Appendix -III to the Sringaraprakasa Part-I

# शृङ्गारप्रकाशस्थ १—१४ प्रकाशपद्यानुक्रमः

श्रीशृङ्गारप्रकाशस्थपद्यानुक्रम एषकः ।
सनातनेन ग्रथितोऽपूर्वं साहित्यमीक्षितुम् ॥

वामनाद् धनिकं यावद् यावदुद्धृतमत्र तु ।
ततोऽपि भूयः साहित्यमुत्तरङ्गायतेऽद्भुतम् ॥

| | | | |
|---|---|---|---|
| अंशुकानि | ११.५२ | अखण्डम | ०९.३२२ |
| अंसस्थलैः | १४.१०४ | अखण्डमे | ०९.१०५ |
| अइ दिअर | ०७.१५ | अङ्कच्छेदं | ११.१९६ |
| अइ दुम्म | १०.९३ | अङ्कमङ्क | ०५.१० |
| अउज्झिअ | ०९.१६३ | अङ्कमुखं | ११.२०५, २०६ |
| अकटगु | १०.०४ | अङ्कान्तरा | ११.१९८, २२० |
| अकमल | १४.२०३ | अङ्कान्तरे | ११.२०७ |
| अकर्मकत्वे | ०२.१७ | अङ्कुरिते | ०७.५६ |
| अकस्मादे | १०.३५८ | अङ्केऽङ्के स | ११.२४१ |
| अकार्यं स | १२.४०९ | अङ्के न्यस्यो | १२.३५७ |
| अकार्य सु | ०९.१४२ | अङ्के प्रवे | ११.२२१ |
| अकिञ्चिद | ११.०५; १३.५७ | अङ्कोऽत्र स | ११.२३८ |
| अकृतक | १४.२०९ | अंगहि गि | ०७.११६ |
| अकृपण | १२.३१४ | अङ्गहीनो | १२.१५७ |
| अक्षुद्रारि | ०७.१५१ | अङ्गाङ्गिभाव | ११.०९,४६ |
| अगोव्याधृ | ०५.१६२ | अङ्गानि ज्ञा | ०९.५२ |
| अग्निदत्ते | ०९.४२९ | अङ्गुलीभि | १०.४२१ |
| अग्नीषोमा | ०९.४२८ | अङ्गुल्यः प | १०.३५४ |
| अग्रशालि | ०५.११३ | अङ्गेनाङ्गं | ०८.०१; १४.१२२ |
| अग्रे गते | १०.१०८ | अच्छिन्नमे | ०१.०१, पृ.३७५ |
| अग्रे स्त्रीन | ०९.२३२ | अजननि | ११.१३८ |
| अखण्डः सै | ०८.११० | अजन्मा पु | ०२.६१ |

*

# परिशिष्टम्—४

Appendix -IV to the Sringaraprakasa Part-I

## श्रृङ्गारप्रकाशे पाठभेदा:

(१—१४ प्रकाशेषु)

Abbreviations :

| | | |
|---|---|---|
| **B 13724** | - | Baroda Oriental Institute, Vadodara (1-9 Prakasa). |
| **HOS** | - | Harvard Oriental Series-53, USA, 1998, |
| **R 3252** | - | Manuscript Library, Madras, Chennai. |
| **T 1079** | - | Sanskrit College Library, Tripunithura (Keral). |
| **JO.** | - | Josyer Edition. |

| पृष्ठ | पंक्ति | कालिदाससंस्थान | |
|---|---|---|---|
| १ | ५ | ०प्रकाश: । | R 3252 |
| | | ०प्रकाशे | B 13724 |
| | | प्रकृत्यादिप्रकाशो नाम | HOS |
| Slokas | | In two lines | In four lines |
| | | | R 3252 |
| | | | B 13724 |
| | | | HOS |
| श्लोक | १ | ०दृढोपगूढमप्राप्त० | ०दृढोपगूढमप्राप्त०HOS,B13724 |
| | | | ०दृप्त R 3252 |
| | | पातु वपु: | पातु वपु: B 13724, HOS |
| | | | पा व R 3252 Not noted in HOS |
| | ३ | महङ्कृत | अहङ्कृत HOS |
| | | | अहंकृत R 3252, B 13724 |
| | | श/रक्ति | शक्ति R.B.H. |
| | | | रक्ति Tripunithura 1079 |
| | | | Raghavan mentioned रक्ति in F.N. |
| | ४ | अमलधर्म/जन्म | अमलधर्म All but in ch. VII जन्म is also mentioned in HOS |
| | | हेतुर्ज्जा | हेतु: जा B 13724 |
| | | | हेतुर्जा R 3252, HOS |
| | | मानमयो/वतो वि | मानवतो R 3252 |
| | | | ,, B 13724 |
| | | | मानमयो वि HOS T., |
| | | | मानवतो HOS F.N. M1, T1, T3 |
| | ५ | लावण्यमेव वपु | लावण्यमेव वपु B 13724, HOS |
| | | | लाव०. . . . .वपु R 3252 |

| | | | |
|---|---|---|---|
| | | शृङ्गार एव हृदि मानवतो | HOS,शृङ्गारमेव बहु दि म जनाख्यB13724 |
| | | | शृङ्गार एव हृदि म... तो 3252 |
| श्लोकः | ७ | द्धिः सिद्धा | द्धिः सिध्या B 13724 |
| | | | द्धिस्सिद्धा R 3252 |
| | | | द्धिः सिद्धा HOS |
| | ८ | कूलिकतया | HOS |
| | | | कूलिततया R 3252 |
| | | | B 13724 |
| | | | T 1079 |
| | | | HOS does mention it. |
| | | मुदादेर्यः | मुदादेः यः B 13724 |
| | | | मुदादेर्यः R 3252, HOS |
| | | शक्ते/रक्ते: | शक्तेः M.B. HOS, रक्तेः in fn. HOS |
| | | रत्यादिभूमनि | रत्यादिभू R 3252 |
| | | | रत्यादि भू. B 13724 |
| | | पुनर् | पुतर् B 13724 |
| | ९ | विवर्जिता हि | विवर्जितानि Tripunithura1079, B13724, R3252 |
| | | | विवर्जिता हि HOS with note |
| | | | *केरललिपौ नि–हि अक्षरयोः भ्रान्तिः सुलभा* |
| | | सप्तार्चि० | सप्तर्चि० B 13724 |
| | १० | यो भाव्यते | संभाव्यते B 13724, R 3252 यो भा०HOS |
| | | साहङ्कृते | साहंकृतो B 13724 |
| | | | साहंकृतौ R 3252 |
| | | | साहङ्कृतौ HOS |
| | ११ | किमपराद्धमतद्विभिन्नैः | किमु परार्धमताद्वि B 13725 |
| | | | किमपरार्धमतद्वि R 3252 |
| | | वद/बत | वद B 13724, R 3252, HOS |
| | १२ | स्थायित्वमत्र वि. | स्थायित्वम....वि B 13724 |
| पृष्ठ २ | १७ | शृङ्गारप्रभवा एकोन–पञ्चाशद् भावाः | शृङ्गारप्रभवा इति एकोनपञ्चाशद् भावा B13724 |
| | | | शृङ्गारप्रभावा इति एकोन पंचाशद् भावाः R3252 |
| | | | शृङ्गारप्रभवा एव एकोनपञ्चाशद् भावाः HOS |
| | १८ | कारणं रस इति। | कारणं सरस इति B 13724, R 3252 |
| | | | कारणं स रस इति। HOS |
| | | स चानुभवैक | स चाब्रुभवै B 13724 |
| | | सामाजि००तत्र | सामाजिकैरवधार्यते प्रबन्धेषु वा००तरति। |

| | | | |
|---|---|---|---|
| | | | तत्र B 13724, R 3252 |
| श्लोक १ | १३ | अत्थणिवेसा ण हु तह | अत्थणिदेसायाथा वितह चित्तवि<br>आच–सच B 13724<br>अत्थणिवेसाण वि तह चिन्त वि R 3252<br>अत्थ णि वेसा HOS |
| श्लोक १२ | | थायित्वमत्र वि | स्थायित्वम वि B 13724 |
| पृष्ठ ३ | ८ | अतोऽभिनेतृभ्य | अतोभिव्य विनेतृभ्यः B 13724<br>अतोऽभिन्य (नय) विनेतृभ्यः R 3252<br>HOS अबद्धम् M1 |
| | | मन्यामहे | मत्यामहे B 13724 |
| | ९ | तत् (काव्यं) पुनः | तत्पुनः B13724, R3252, तत् पुनः HOS |
| पृष्ठ २३१ | १२ | प्नोति। चक्षुषा | प्नोति। बाह्याभ्यन्तरं यथा चक्षुषा R3252<br>B 13724, HOS, JO. |
| २३९ | २ | साधनभेदान्। न पुनरा० | साधनभेदानपुनःआश्र B 13724<br>साधनभेदा न पुनरम HOS |
| | | शक्तयः। संत्यक्तैवेति शक्तिः | साधनभेदा न्र पुराश्र०००शक्तयः<br>सन्यस्ता वेति। शक्तिःR3252,HOS(पृ.251) |
| २५१ | १० | शश्वच्चकारेति, शश्वत्<br>करोति। प्रश्ने (प्रमाणपरोक्षम्<br>यथा 'भुक्ता मया हि गिरय'<br>इत्यादि) | शश्वच्चकारेति प्रश्ने B 13724<br>R 3252<br>शश्वच्चकार, इति ह शश्वच्चकारेति<br>HOS 265 |
| २५६ | १० | प्रकृतिनिमित्तः परस्मैपदयोगे<br>यथा व्यतिलुनन्ति (प्रकृत्यर्थ<br>निमित्तप्रत्ययनिमित्तौ) | व्यति।। प्रत्ययार्थिनि।। B 13724<br>व्यति। R 3252<br>'प्रकृत्यर्थप्रत्ययनिमित्त' भेदौ न दत्तौ। |
| ४५० | | वध्रिका<br>With F.n. वध्रिका चर्मकृतः<br>पुस्त पुरुषः | वर्धिका B 13724, R 3252<br>HOS वध्रिका |
| ४६१ | ९.४७ | दुच्चरितोऽपवादः | दुच्चरितोऽपिवाद B 13724 Text<br>दुच्चरितोऽपवाद B 13724 fn. |
| ४६१ | पं.१६ | सदृशस्य | सदृशस्य Text B 13724<br>सादृश्यस्य fn. B 13724 |
| | पं.१८ | प्राप्ताः | प्राप्ताः Text, प्राप्तौ fn. B 13724 |
| | पं.२१ | नीवारादीनां | नीवारादिनां B 13724 |
| | | अयज्ञीयानि | अयज्ञियानि B 13724 |
| | | शास्त्रेणाऽपर्युदस्तस्य | शास्त्रेणोपर्युदेस्तस्य B 13724 |

| | | | |
|---|---|---|---|
| | | | शास्त्रेणापर्युदासस्तस्य HOS |
| | | व्रीह्यादिनियमै | व्रीह्यादिनियमैः B 13724 |
| | | | व्रीह्यादिभिर्नियमै HOS |
| | | यजेतेति योगे (अ)पर्युदस्ते | यतेतेत्प्रतित्यागे पर्युदस्ते B 13724 |
| | | | यजेतेति यागे पर्युदस्ते R 3252 |
| | | | यजेतेति यागे अपर्युदस्ते HOS |
| | | | 'अ' इति नास्तीति HOS fn. |
| ४६५ | ९.५५ | मृत्यो! | मृत्युः/मृत्योः B 13724 |
| | | | मृत्यो! R 3252 |
| | | मर्त्तुं | कर्त्तु/मर्त्तु B 13724 |
| | | | मर्त्तु R 3252 |
| | | | कर्त्तु HOS |
| | | शक्र! चक्री वार्यो | नात्र शक्रश्चक्री वार्यो B 13724 |
| | | | शक्र! चक्री वार्यः R 3252 |
| | | | शक्र चक्री वार्या(र्य)कार्यो HOS |
| | | कार्यो न पूषन्नसदृश | कार्यो न पूषन्नसदृशकलहो B 13724 |
| | | | कार्यो न पूषन्! न सदृशकलहो R 3252 |
| | | | न पूषन्नसदृशकलहो HOS |
| | | करगरग्रास | करपुटग्रास B 13724 |
| | | | करगरग्रास R 3252, HOS |
| | ९.५६ | सुप्ता | सप्ता R 3252 |
| | | काठाध्ययन | कठाध्ययन R 3252, HOS |
| | ९.५७ | शपथिकायाम् | शतपथिकायाम् B 13724 |
| | | | शतपथिका R 3252, HOS |
| | | जेष्वनेकचेतनं वाद्यः | जेष्वनेक चेतनं(तेजनं) वाद्य B 13724 |
| | | | जेष्वनेक वाद्य R 3252 |
| | | | जेष्वनेक....वाद्य HOS |
| | | प्रश्ने तु बहुत्वसंख्या | B13724, R 3252 |
| | | | प्रश्ने तु बहुत्वसंख्या पूर्वे पूर्वे संख्ये HOS |
| | | पूर्वसंख्याम्। यथा कलि | पूर्व संख्या B 13724 |
| | | | पूर्वसंख्यासु R 3252 |
| | | यदि तु गवां स्वामी व्रजतीति | यदि तु भवान् स्वामी क्रामतीति B 13724 |
| | | | यदि तु गवां स्वामी व्रजतीति R 3252 |
| | | | यथा कति HOS |

एवमादिकं पाठान्तरं सार्वत्रिकमेव।।

शृङ्गारप्रकाशे शास्त्रसन्दर्भाः कविसन्दर्भाश्च— पृष्ठम्



सर्वेऽपि कालिदाससन्दर्भाः द्वितीयभागान्ते पञ्चमे परिशिष्टे द्रष्टव्याः।

परिशिष्टम् —५

## शृङ्गारप्रकाशे भरतनाट्यशास्त्रसन्दर्भाः

(१—३६ प्रकाशाः)

| संकेतः | नाशा. | शृ.प्र. | विषयः |
|---|---|---|---|
| अकार्यं सहसा | १६.३३ | १२.४०९ | पश्चात्तापः |
| अङ्गहीनो नरो | १९.५० | १२.१५७ | सन्ध्यङ्गचतुष्षष्टिः |
| अथ रौद्रस्य | ६.३९ | ११.७९ | रौद्रान् न करुणोत्पत्तिः |
| अदिव्यं दिव्य | १६.३० | १२.४२२ | कपटम् |
| अद्भुतस्य च | १९.९६ | १२.३०४ | उपगूहनम् |
| अनिष्ठुरश्ल | १९.१९ | १२.७० | त्रिमूढकम् |
| अनुभूतार्थ | १९.९३ | १२.२८९ | निर्णयः |
| अनेकयुक्ति | १६.२६ | १२.४१४ | निर्भासनम् |
| अन्तर्यवनिका | १९.१०७ | ११.३९३ | चूलिका |
| अन्यस्यान्वेषणं | १९.९२ | १२.२६४ | निरोधः |
| अन्यार्थमेव | १८.११५ | १२.९४ | छलम् |
| अपमानकृतं | १९.८९ | १२.२७७ | छादनम् |
| अपरिज्ञात | १६.२७ | १२.३३३ | संशयः |
| अपश्यतः फल | १९.९ | १२.१७, २९.२१२ | प्रसवः, प्रयत्नः |
| अपश्यद्भि | २०.४९ | १२.१३१ | संघात्मकः |
| अपायदर्शनं | १९.७२ | १२.१९४ | तापनम् |
| अप्रस्तुतार्थ | १९.८६ | १२.२६० | प्रसङ्गः |
| अभिप्रेतं समग्रं | १९.१२ | १२.१९, २९.२१५ | प्रतिरूपम्, फलयोगः |
| अभिप्रेतार्थ | १६.२९अ. | १२.३६९ | माला |
| अभूतपूर्वो | १६.१४अ. | १२.३३७ | अभिप्रायः |
| अभूताहरणं | १९.७७ | १२.२१३ | अभूताहरणम् |
| अभ्यर्थनापरं | १९.८१ | १२.२२८ | प्रार्थना |
| अर्थान्तरस्य | १६.३२ | १२.३७७ | अर्थापत्तिः |
| अर्थोपक्षेप | १९.३२ | १२.१५० | पताकास्थानकम् |
| अल्पमात्रं | १९.२१ | ११.३८०,१२.७,२९.१९१ | बीजम् |
| आकाङ्क्षते | १८.११० | १२.८७ | अवस्यन्दितम् |
| आत्मभाव | १६.१९ | १२.४२० | आक्रन्दः |
| आदौ यत् क्रोध | १६.२९ | १२.४५९ | प्रियवचनम् |

| | | | |
|---|---|---|---|
| गुणाभिधानैः | १६.१९अ. | १२.३४८ | गुणातिपातः |
| गुरुव्यतिक्रमो | १९.८५ | १२.२४७ | द्रवः |
| चित्रार्थसम | १९.७८ | १२.२१६ | रूपम् |
| तत्त्वार्थवचनं | १९.७८ | १२.२१५ | मार्गः |
| तन्निष्पत्तिः परि | १९.६६ | १२.१६६ | परिन्यासः |
| तस्मात् सन्धि | १९.५३ | १२.१६० | सन्ध्यङ्गचतुषष्टिः |
| दृष्टनष्टानुसरणं | १९.७१ | १२.१८९ | परिसर्पः |
| दृष्टश्रुतादि | १६.३५अ. | १२.३८३ | सारूप्यम् |
| दृष्टे श्रुतेऽनु | १६.८टि. | १२.४०७ | स्पृहा |
| दुःखस्योप | १९.९५ | १२.३०१ | समयः |
| दृष्ट्वैवाव | १६.३२ | १२.३३६ | प्राप्तिः |
| दोषप्रख्यापनं | १९.८४ | १२.२४२ | अपवादः |
| दोषप्रच्छादना | १९.७३ | १२.१९९ | नर्मद्युतिः |
| द्व्यर्थो वचन | १९.३३ | १२.१५२ | पताकास्थानकम् |
| नियतां तु | १९.११ | १२.१९ | अवस्थाः |
| नियतात्/नियोगात् तु | १९.११ | २९.२१४ | नियताप्तिः |
| निरवद्यस्य | १६.१६अ. | १२.३४१ | निरुक्तम् |
| नृपदेवादि | १९.९८ | १२.३१२ | प्रशस्तिः |
| पदानि त्वगता | १८.१०८ | १२.८२ | उद्घात्यकम् |
| परदोषैः | १६.३८अ. | १२.३९५ | क्षोभः |
| परिगृह्य तु | १६.२४अ. | १२.३५८ | उपदिष्टम् |
| परिवादकृतं | १९.९३ | १२.२९२ | परिभाषणम् |
| पुनर्वाक्यं तु | १९.९७ | १२.३०७ | पुनर्वाक्यम् |
| पुस्तावपात | २०.५३टि. | १२.३३, १७.४०, १९.१४ | आरभटी |
| पूर्वाशयसमा | १६.२५अ. | १२.३६० | विचारः |
| प्रकृतार्थसमा | १९.७० | १२.१८६ | करणम् |
| प्रच्छेदकस्स | ९.११८ | १२.६९ | प्रच्छेदकः |
| प्रतिक्रिया | १६.३१ | १२.४१६ | क्षमा |
| प्रत्यक्षरूक्षं | १९.७६ | १२.२०९ | वज्रम् |
| प्रत्यक्षवृत्ति | १८.११६ | १२.९५ | व्याहारः |
| प्रयोजनानां | १९.२२ | १२.८,२९.१९२ | बिन्दुः |
| प्ररोचना सा | १९.९० | १२.२७९ | प्ररोचना |

